॥ श्रीजिनाय नमः ॥

# ॥ श्रीउपदेशचिंतामणिः सटीकः ॥

( कर्त्ता–श्रीजयशेखरसूरिः )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज. ( जामनगरवाळा )

वीरसंवत्—२४४५. विक्रमसंवत्—१९७५. सने—१९१८.

किं रु.-३-१२-०

श्रीजैनभास्करोदय प्रिन्टिंग प्रेस. जामनगर.

॥ श्रीजिनाय नमः ॥

॥ श्रीचारित्रविजयगुरुभ्यो नमः ॥

## ॥ अथ श्रीउपदेशचिंतामणिः सटीकः प्रारभ्यते ॥

( कर्ता—श्रीजयशेखरसूरिः )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज. ( जामनगरवाला )

॥ अथ प्रथमोऽधिकारः प्रारभ्यते ॥

प्राचीमेकां पुनानामिह सुरसरितं वीक्ष्य कारुण्यधाम्ना । धृत्वा मूर्तीश्चतस्रः परमहिममवता येन गंगाचतुष्कं ॥ आविश्चक्रे चतुर्दिक्समुदितजनताशुश्रूषये शुद्धवर्ण—व्याख्यावाणीविलासैः स दिशतु कुशलं श्रीयुगादीशदेवः ॥ १ ॥ सम्यक् पश्यंतमंतःसमवसृतिजुषो यस्य रूपस्वरूपं । शक्रं लेखा अशेषा दृग्शतनयनं नन्वमन्यंत धन्यं ॥ द्रष्टुं दृष्टिद्वयेनाखिलमपि युगपन्नैव तत्पारयंतः । स श्रीमान् शांतिनाथः प्रथयतु भविनां भूयसीं सौख्यलक्ष्मीं

॥ १ ॥ सध्ध्यानज्ज्वलने ज्वलत्यविकलं यस्येंद्रनीलछवे—र्देहस्य च्युत एव केवलवधूपाणिग्रहं कुर्वतः ॥ तन्वंतिस्म समंततः प्रसृमरा मांगल्यदुर्वांकुर—श्रेणीकार्यमसौ मुदं वितनुतां श्रीपार्श्वनाथः प्रभुः ॥ ३ ॥ सिध्ध्यंगनोद्वाहविधौ सतृष्णो । निष्णातचेतस्तुरगाधिरूढः ॥ प्रौढाप्सरःसंहतिगीयमान—गुणः श्रिये वीरवरो जिनोऽस्तु ॥ ४ ॥ नवाब्धिजाताः सुगुणावदाता । वृत्तस्वभावा हृदि पुण्यभाजां ॥ ये हारमुक्ता इव संवसंति । दिशंतु तेऽन्येऽपि जिनाः सुखानि ॥ ५ ॥ ये बीजमात्रां त्रिपदीं निधाय । मनोऽवनौ बुद्धिजलेन सिक्त्वा ॥ चित्रं क्षणात्कोटिगुणामकार्षु—स्तन्वंतु तोषं गणधारिणस्ते ॥ ६ ॥ जेष्टछदे दशनदीप्तिमृणालजाले । सर्वज्ञवक्त्रकमले विमले लुलंती ॥ या राजते कलरवा किल वारलेव । धत्तां प्रबोधपटुतां श्रुतदेवता सा ॥ ७ ॥ यत्पाणिपद्मपरिशीलनया कयाचि—दश्मोपमोऽप्यहमुपेत्य सदाकृतित्वं ॥ पूजां जनादधिगतोऽस्मि धृतप्रतिष्ट—स्तस्मै नमः स्वगुरवे वरसूत्रधर्त्रे ॥ ८ ॥ बालोऽपि यद्वाक्यकरावलंबात् । प्रगल्भगम्येऽध्वनि मंदमंदं ॥ पदं दधानोऽस्मि दिशंतु नात—प्रायाः प्रियं प्राक्तनसूरयस्ते ॥ ९ ॥ परापवादेषु भृशं सशंका । मनोवचःकर्मसु निष्कलंकाः ॥

अपि त्रिलोकीमधमर्णयंतः । स्वीयोपकारैर्विलसंतु संतः ॥ १० ॥ यद्वा—ये निस्सारमपास्य
दूषणगणं गृह्णंति सारान् गुणां—स्ते लोभोपहताशया मतिमतां स्तुत्याः कथं साधवः ॥ ल-
ब्ध्वा ये परवृत्तमुज्झितगुणा गाढाग्रहाद् दूषणं । ते संतोषसमुज्ज्वलाः खलु खलाः खेलंति
चित्ते सतां ॥ ११ ॥ संतोऽप्यसंतोऽपि कृतिं परस्य । श्रुत्वा शिरः स्वं परिधूनयंति ॥ पूर्वेऽत्र
चिवादपरे त्वरुच्या । कथं त्विदं चर्मदृशो विदंति ॥ १२ ॥ तस्मादसाधुष्वपि मुक्तरोषः । शां-
ताशिवो देवगुरुप्रसादात् ॥ प्रस्तौमि वृत्तिं स्वकृतोपदेश—चिंतामणिग्रंथवरस्य सोऽहं ॥ १३ ॥
इह किल सकलकलावज्जनमनःकमनीयं तत्तत्त्रिभुवनैश्वर्यादिसंपन्निबंधनतयात्यंतरमणीयं
दुरुत्तारसंसारकांतारसंचारजनितापत्तापनिर्वापणनिपुणछायं सामग्रीसमग्रतया प्रतिहतप्रत्य-
वायं कल्पद्रुममिव कथंचिन्मानवजन्ममधिगम्य सम्यक्तत्फलस्वादकल्पे निर्विकल्पेन मनसा
धर्मकर्मण्येव प्रवर्तंते संतः. तच्च दूरितदुरंतदुरितावेशान्निवारितनरकादिक्लेशान् गुरूपदे-
शान् विना मेधाविनापि नाधिगम्यते. उक्तं च—विना गुरुभ्यो गुणनीरधिभ्यो । ज़ानाति
धर्मं न विचक्षणोऽपि ॥ निरीक्षते कुत्र पदार्थसार्थं । विना प्रकाशं शुभलोचनोऽपि ॥ १ ॥

ते चोपदेशा विप्रकीर्णतया बहुशः श्रुता अपि प्रायः श्रोतृभिरग्रथितकुसुमानीव न संग्रही-
तुं शक्यंत इति श्रोतॄणामध्येतॄणां चोपकाराय स्वस्य च स्मरणाय चतुरधिकारोपनिबद्धं पर-
स्परसुसंबद्धं धर्मोपदेशरूपमुपदेशचिंतामणिनामप्रकरणं प्रारभ्यते, तत्प्रारंभे च संबंधाभिधेय-
प्रयोजनमंगलानि वाच्यानि. यदाहुः—संबंधभिधेयपउ—यणाइं तह मंगलं च सव्वंमि ॥
सीसपवित्तिनिमित्तं । निव्विग्घत्थं च चिंतिज्जा ॥ १ ॥ तत्रापि प्रथमं मंगलमभिधातव्यं त-
न्मूलत्वाच्छास्त्रप्रवृत्तेः. इह यद्यपि निस्तुषसुखप्रदानप्रत्यलं सकलमपि धर्मशास्त्रं स्वयं मंगलं,
तथापि प्रकृतिपेशलः सहकारफलरसः शर्कराक्षोदमिव विशेषतो मंगलाभिधानमर्हत्येव. य-
दाह महाभाष्यं—तं मंगलमाईए । मज्झे पज्जंतए य सत्थस्स ॥ पढमं सुत्तत्थाविग्घ—पारग-
मणाय निद्दिट्ठं ॥ १ ॥ तस्सेव य थिरत्थं । मज्झिमयं अंतिमंपि तस्सेव ॥ अव्वोच्छित्तिनिमि-
त्तं । सिस्सपसिस्साइवंसस्स ॥ २ ॥ तत्र प्रथमं शिष्टसमयपरिपालनाय श्रोतृप्रवृत्तिनिमि-
त्तं च विघ्नसंघातघातनघनतरोन्मादमादिमंगलमाह—

॥ मूलम् ॥—तित्थयरे जयवंते । परमगुरुगुरुयअइसयसमिद्धे ॥ धम्मपहपत्तवरसिरि—

महिंदवंदियगुणे वंदे ॥ १ ॥ व्याख्या—वंदे नमामि. उत्तमपुरुषैकवचननिर्देशादहमिति कतृपदमयुक्तमपि गम्यते. कान् कर्मतापन्नानित्याह—तीर्यते संसारवारिधिरनेनास्मादस्मिन्निति वा तीर्थं, यद्वा त्रिषु सम्यग्दर्शनज्ञानचारित्रेषु तिष्ठतीति त्रिस्थं, अथवा कोपतापोपशमतृष्णोच्छेदकर्ममलापगमरूपा द्रव्यतीर्थापेक्षया त्रयोऽर्थाः प्रयोजनानि यत्र तत् त्र्यर्थं, सर्वत्रापि चतुर्विध एव संघः, यथोत्पादव्ययध्रौव्यरूपा अर्था अभिधेया यत्र तदर्थं द्वादशांगं, तदर्थत्वात्संघोऽपि त्र्यर्थमित्युच्यते. तद्धेतुताच्छील्यानुलोम्यतः कुर्वंतीति तीर्थकरास्त्रिस्थकरास्त्र्यर्थकरा वा, हेतुतच्छीलानुकूलेति सूत्रेण टक्प्रत्ययः. तत्र हेतुत्वमर्हतां तीर्थस्य करणे स्फुटमेव, यथा यशस्करी विद्येति. तथा विपाकावस्थाप्राप्ततीर्थकरनामकर्मोदयात्केवलज्ञानमासाद्य सुरासुरनरेश्वरनिकरपूरितायां पर्षदि सर्वैरपि जिनेश्वरैरवश्यं धर्मदेशनां विधाय तीर्थं प्रवर्तितव्यमिति. ताच्छील्यमप्युपपन्नमेव, आनुकुल्यं तु भगवतां तीर्थविषयं, तथा कथंचन प्रवर्तंते यथा कृतकृत्या अपि धर्मदेशनासदसि नमस्तीर्थायेत्युक्त्वा न सिंहासनं समाध्यासते, न चानुकुल्यं विना पुंस्त्रीतरुणवृद्धसहासहसत्त्वानुगुणोत्सर्गापवादविधिना तीर्थप्रवर्ति-

नी धर्मदेशनाप्युपपद्येत. तीर्थकरानिति बहुवचनं भूतभवद्भाविभारतैरावतादितीर्थकरसंग्रहा-
र्थं. तीर्थकरत्वं स्वस्वतीर्थप्रवर्तनात्परतीर्थिकानामप्यस्तीति व्यवच्छेदार्थमाह. ' भयवंतेत्ति, '
उक्तं च—भगोऽर्कज्ञानमाहात्म्य—यशोवैराग्यमुक्तिषु ॥ रूपवीर्यप्रयत्नेच्छा—श्रीधर्मैश्वर्ययोनि-
षु ॥ १ ॥ इत्यर्कयोनिवर्जं संगतेऽपि द्वादशार्थत्वे विशेषणस्य व्यवच्छेदकत्वान्यथानुपपत्तेरिह
भगशब्दो ज्ञानार्थो ग्राह्यः, भगो ज्ञानं विद्यते येषां तान् भगवतः केवलज्ञानिन इत्यर्थः. अ-
त्राह—ननु भगशब्दस्य ज्ञानमात्राभिधायकत्वाद्विशेषस्य सामान्यतो ज्ञानित्वमवगच्छामः,
न पुनः केवलज्ञानित्वं, सामान्यज्ञानं हि कया कयाचित्कलया परतीर्थिकाणामपि विद्यत एव.
ततस्तद्व्यवच्छेदयोपादीयमानमेतद्विशेषणं न स्वसाध्यं साधयितुमीष्टे इति. नैवं, इह नित्ययो-
गे मतुप् प्रत्ययस्य विधानात्. नित्ययोगश्चात्मना सह केवलज्ञानस्यैव संगच्छते, तद्धि स-
कलस्वावारककर्मनिर्मूलनेन लब्धात्मलाभं सन् न पुनः प्रतिपतति, प्रतिपतंति शेषाणि च
ज्ञानानि. क्षायोपशमिकत्वात्केवलिनोऽपि केचिन्मूकाः केचित्कालमंतकृतश्च भवंति, ते च
घटदीपवत्स्वात्मानमेव प्रकाश्य निःश्रेयसमाश्रयंतो नोपदेशदानादिना परानुग्रहक्षमा इत्याह.

' परमगुरुत्ति ' गृणंति सम्यक्तत्वमिति गुरवः, परमाश्च ते गुरवश्च परमगुरवस्तान् परमगुरून्. परमत्वं च सम्यग्जीवाजीवादिसत्स्वरूपतत्वप्ररूपणेन परतीर्थिकापेक्षया भव्याभव्यत्वादिसंदेहसंदोहापनोदेन छद्मस्थापेक्षया वा, एवंविधाश्च निरतिशयाः सामान्यकेवलिनोऽपि स्युः. लोके च प्रायः प्रकटातिशय एव वक्ता श्रोतॄणामादेयवचनो भवतीति तद्विशेषणमाह. ' गुरुयअइसयसमिद्धेत्ति ' गुरव एव गुरुका अत्यद्भुतत्वान्महांत अतिशयाश्छत्रचामरचामीकरप्राकारपरिषद्धर्मचक्रशक्रपूजादयस्तैः समृद्धान् संपन्नान्, न चैते सामान्यकेवलिनां संभवंति, तीर्थंकरकर्मविपाकावस्थायामेव तद्भावात्. यदुक्तं कल्पभाष्ये—तित्थयरनामगोयस्स । । खुयठा तह य चेव साभवा ॥ धम्मं कहेइ अरिहा । पूयं वा सेवए तं तु ॥ १ ॥ ननु धर्माधिकारे प्रस्तुते चित्रमात्रफलया परमार्थसाधनंप्रत्यकिंचित्कर्या किमनयातिशयवर्णनया? नैवं, सातिशयो वक्ता श्रोतॄणामादेयवचनः स्यादिति प्रागेव प्रतिपादितत्वात्. श्रूयते चचेतश्चमत्कारिणी महतामतिशयस्फातिमालोकमाना निविडाभिमाना अपि शिवेंद्रभूतिप्रभृतयो गलितगर्वग्रंथयः. सम्यक्त्वं प्रपन्नाः श्रीगौतमदीक्षिता च तापसानां पंचशती भगवदति-

शयवीक्षणादेव क्षणात्केवलज्ञानमानंच. किंच पुण्यप्रपंचप्राप्यानर्हदतिशयानाकर्णयंतः सकर्णा अहो! ईदृंशि धर्मकल्पद्रोः फलानीति प्रत्युत धर्मकृत्येषु व्याप्रियेरन्निति. ततः किमुच्यते? अतिशयवर्णनया किंचित्करीति. ननु यथाहं शास्त्रं करोमीत्युक्ते स एव वक्ता विवक्षितशास्त्रस्य कर्ता प्रतीयते, नान्यः कोऽपि, तथाहं तीर्थकरान् वंदे इति भवदुक्तयुक्त्या त्वमेव तीर्थकरान् वंदसे नापरः कश्चित्तानवंदिष्टेति बलादाकृष्टमिवायातमिति पराभिप्रायमाशंक्य तेषां त्रिभुवनवंद्यतासूचकं विशेषणमाह. ‘धम्मपहेत्यादि’ धरति दुर्गतौ पतंतं जंतुजातमिति धर्मः, तस्य प्रथया भावनाजनितेन विस्तारेण प्रभया वा प्राप्ता वरा सामानिकादिदेवापेक्षया प्रधाना श्रीः स्वर्गाधिपत्यलक्षणा यैस्ते धर्मप्रभाप्राप्तवरश्रियः, ते च महेंद्राश्च शक्रादयस्तैर्वंदिताः, वदुङ् स्तुत्यभिवादनयोरिति वचनात्. स्तुता गुणा धैर्यौदार्यस्वयंबुद्धत्वादयो येषां ते तथा तान्. इह यद्यपि त्रिजगतः स्वर्गप्रधानात् स्वर्गाधिपैश्च भगवद्गुणग्रामस्य स्तुत्वात् त्रिजगतापि स स्तूयत इति बलादाक्षिप्तं, तथापि यथा साक्षादुच्यमानं चारिमाणमावहति, न तथा क्षेपेणेति. इदमेव विशेषणं भंग्यंतरेण व्याख्यायते—

धर्मस्य सुकृतस्य धनुषो वा प्रजया प्राप्ता वरा प्रधाना श्रीः करितुरगादिरूपा यैस्ते च ते महेंद्राश्च नूपतयस्तैर्वंदितगुणान्. यद्वा धर्मप्रजया प्राप्ता वरा श्रीर्जवनाधिपत्यरूपा यैस्ते च तेऽहींद्राश्च नागपतयस्तैर्वंदितगुणान्. असुरकुमारादीनामप्यधोलोकवासित्वेऽहींद्रोपन्यासोऽधोलोकस्य नागलोक इति रूढिवशात्. मकारोऽत्राक्षणिकः. एवं च सुरासुरनरेंद्रवंदितान् तीर्थंकरान् विकटशकटगम्ये वर्त्मनि शकटिकासंचरणन्यायेनायमपि जनो वंद्यमानो न नोद्यतामापद्यतेति. इह सर्वमपि दैवतं चतुरतिशयोपेतमेव चतुराणां मनो धिनोतीत्यत्राप्यतिशयावतार एवं जावनीयः, तद्यथा—'जयवंते' इति विशेषणेन ज्ञानातिशयोऽजिहितः, 'परमगुरु' इत्यनेन वचनातिशयः, गुरुत्यः 'अइसए' इत्यादिनापायापगमातिशयः, घातिकर्मारातिध्वंसं विना जिनानामपि यथोक्तातिशयानामनुत्पादात्. धम्मपहेत्यादिना पुनः पूजातिशयः साक्षादुक्तः. अत्राह कश्चित्—नन्वर्हंत इव सिद्धादयोऽपि परमेष्ठिनो मंगलजूताः. यदाह—एसो पंचनमुक्कारो। सव्वपावप्पणासणो ॥ मंगलाणं च सव्वेसिं। पढमं होइ मंगलं ॥ १ ॥ ततः पंचस्वप्यमीषु स्वस्वस्थाने प्रधानेष्वपि कोऽयं हंत कदाग्रहो यत्पृथक्कृ-

त्यार्हत एव प्रणिधीयंते? अत्रोच्यते—अर्हद्ग्रहणे सिद्धादयोऽपि गृहीता एव तदनुयायि-
त्वात्तेषां. तथाहि—अर्हदुक्तैः सम्यग्दर्शनादिभिः सिध्ध्यंति स्मेति सिद्धाः. अर्हदुक्ते आ-
चारे साधव इत्याचार्याः. अर्हन्मूलस्य द्वादशांगस्याध्यापकत्वादुपाध्यायाः. अर्हदुक्तमेव क्रि-
याकलापं साध्नुवंतीति साधवः. एवं चार्हदनुवर्तकानामेषामर्हन्नमस्कारे नमस्कारः सिद्ध ए-
व. महाराजप्रसादने सकलतत्परिच्छदप्रसादनवत्. तथापि यदि पृथक्पृथक् सिद्धादिनमस्का-
राणां शुश्रूषाकुतूहलं तव चेतश्चटुलयति तदा शृणु सावधानीभूय? यथा भूय इमामेव गा-
थां शेषपरमेष्टिपक्षैर्व्याचक्ष्महे, तद्यथा—'भयवंतेति' शैलेशीकरणांत्यक्षणे भवः संसारो
वांतो यैस्तान् भववांतान् सिद्धान् वंदे, जातिकालसुखादेरिति सूत्रेण बहुव्रीहौ क्तांतेन सं-
मासः. कथंभूतान्? 'तिब्बयरेत्ति' तीर्थकराः संतो ये सिद्धास्ते तीर्थकरास्तान्, एतदती-
र्थकरादिसिद्धोपलक्षणं, तथा सुखायुर्ज्ञानरूपादिभिः शेषजीवापेक्षया परमा प्रकृष्टा, अनु-
त्तरविमानवासिनो देवास्तेभ्योऽपि गुरवो महांतस्तदुपरिवर्तित्वात्, तान् परमगुरून्. तथा
'गुरुएत्यादि' गुरुता प्रौढिमा, तया हेतुभूतयाऽविषयं छद्मस्थनामगोचरं शं सुखं तेन रूढान्

आढ्यान्. तथा ' धम्मपहेत्यादि ' धर्मप्रजाप्राप्तवराश्रियश्चते महेंद्राश्च धर्मप्रजाप्राप्तवरश्रीमहेंद्राः, प्रधानेनैव व्यपदेशो भवतीति महेंद्रग्रहणं. तैर्वंदिताः स्तुता गुणा अनंतज्ञानानंदत्वादयो येषां ते तथा तान्. लोके हि यस्याः श्रियो निश्रया श्रीमंतः सुखानि भुंजते, पूर्वं तावत्सैव विनश्वरी धर्मजनितत्वात्तत्क्षये च तस्याः क्षीयमाणत्वात्. सिद्धानां पुनः सुखं पुण्यपापक्षये जीवस्वरूपत्वादकृत्रिममिति न कदाचित्क्षीयते, ततो युक्तं महेंद्रा अपि तद्गुणान् स्तुवंतीति सिद्धपक्षः. अथाचार्यपक्षः—' परमगुरुत्ति ' परमाश्च ते गुरवश्चाचार्याः परमगुरवः, परमत्वं च सम्यक्त्वप्ररूपणेन कलागुर्वाद्यपेक्षं तान् परमगुरून् धर्माचार्यान् वंदे. कीदृशान्? तीर्थस्य प्रवचनस्य करा इव कराः, यथा हि करव्यापारेण पुरुषः परोपकारादिषु प्रवर्तते, एवमाचार्यबलेन तीर्थमपि परप्रबोधादिषु, अत एव भगवत ऐश्वर्ययुक्तान्, तीर्थकरस्थानीयत्वादीश्वरत्वे हि केनापि विशेषणेन भवितव्यमेवेत्याह, गुरुकाः सामान्यस्यापेक्षया महांतो येऽतिशया भक्तपानादयो विशेषास्तैः समृद्धान्. यदागमः—भत्ते पाणे थुवाण—पसंसणाहत्थपायसाए य ॥ आयरिए अइसेसा । अणइसेसा अणायरिए ॥१॥

भक्तपानाद्यतिशये हि देहे कश्चन शोभासंभारः समुज्जृंभत एवेत्याह—' धम्मपहेत्यादि ' धर्माय साधुधर्म्या, तां धर्म्यां प्रभां प्राप्ता वरा श्रेष्ठा श्रीः शारीरिकी शोभा येषां ते धर्म्यप्रभाप्राप्तवरश्रियः, लोका हि विशिष्टभक्तपानाद्यैरुद्भिन्नां शरीरशोभां प्राप्य कंदर्पदर्पोल्ललनादिपापेषु प्रवर्तंते. श्रीगुरवस्तु पुष्टवपुष्टया बहुविहारकारित्वादक्लेशदेशनादानाच्च धर्मप्रभामेव प्रथयेयुः, न चैतद्विशेषणमनुपपन्नं शरीरसंपदा षट्त्रिंशत्सूरिगुणांतः पठितत्वात्. यद्व्यवहारः—आरोहपरीणाहे । तह य अणोतप्पया सरीरम्मि ॥ पडिपुणइंदिएहिं । थिरसंघयणो उ बोधव्वो ॥ १ ॥ यत एवं सश्रीकदेहास्तत एव महेंद्रैर्भूपैरपि तद्रूपनिरूपणविकसितनयनैस्तद्वचनपीयूषपानप्रीणितश्रुतिपटलैः पाटलिपुत्रे श्रीवज्रस्वामिवद्वंदिता हृदयांतर्बंदीकृताः स्थापिता गुणा येषां ते महींद्रवंदितगुणाः, ततः पूर्वपदेन कर्मधारयस्तांस्तथा. अथोपाध्यायपक्षः—' जयवंतेति ' वाशब्दो विकल्पार्थः, ततो वेति विकल्पमंतयति मनःस्थैर्यनिष्ठां नयतीति वांताः साधवो भृताः पीयूषेण पूरिता वांता यैस्तान् भृतवांतानुपाध्यायान् वंदे. कीदृशान्? तीर्थेन द्वादशांगेन तरो बलं येषां ते तीर्थतरसस्तान्. तथा परमः

प्रकृष्टो गुरुराचार्य एव येभ्यस्तान्-परमगुरून्, आचार्येभ्योऽमीषां द्वितीयस्थानवर्तित्वात्. प्रवर्तकादिपदानां च तदधोनयनात्. यदुक्तं—आयरिअउवज्झाए. पवत्तथेरतहेव राय(णि)ए इति. तथा गुरुताया आचार्यत्वस्य योग्यैरतिशयैः सूत्रार्थविबोधकत्वाद्यैर्विशेषैः सम्भृतान्. यदागमः—सम्मत्तनाणसंयम—जुत्तो सुत्तत्थतदुभयविहिन्नू ॥ आयरियगणजो(ग्गो) । सुत्तं वाए उवज्झाउ ॥ १ ॥ तथा धर्मपथे धर्ममार्गे पात्राणि साधवो वराः प्रधानाः श्रियां लक्ष्मीनां ये महोत्सवास्तेषामिंद्रा नायका वरश्रीमहेंद्राः श्रीमंतस्तैः साधुभिः श्रीमद्भिश्चत्वर्थैः. वंदिताः स्तुता गुणा ज्ञाननयनोन्मीलकत्वादयो येषां ते तथा तान्, धर्मपथपात्रवरश्रीमहेंद्रवंदितगुणान्. अथ साधुपक्षः—भगो वैराग्यं तद्विद्यते येषां तान् भगवतः साधून् वंदे. कथंभूतान्? तीर्थेषु लोकरूढ्या स्थावरेषु जंगमत्वाद्भवतृत्वाच्च वरान् श्रेष्ठान्. यदाहुः—तीर्थं पुनाति कालेन । सद्यः साधुसमागम इति. तथा परमः प्रकृष्ट आराध्यत्वाद् गुरुर्येषां तान् परमगुरून्. तथा गुरुका अतिशया आमर्षौषध्याद्या लब्धयस्तैः सम्भृतान्. संजायते हि सम्यक्साधुत्वे लब्धिप्रादुर्भावः, तथा धर्मप्रथायाः पात्राणि धर्मप्रथापात्राणि, न तु क-

ष्टादिवत् केवलकीर्तिपात्राणीति नावः. तथा आस्तामितरैर्जैनैः, वरश्रीभिर्महेंद्रैरपि नंदिषेणादिवद्वंदिता गुणा येषां ते वरश्रीमहेंद्रवंदितगुणास्ततः पूर्वपदेन कर्मधारयस्तांस्तथा. एवं पंचपरमेष्टिपदैर्विवृतायामस्यां गाथायां कश्चिदाह—ननु यत्प्रसादादुपलब्धा अमी पंच परमेष्टिनः, समवगता जीवादयः पदार्थाः, आसादितं बोधिरत्नं, उन्मीलितं विवेकलोचनं तानंतरंगोपकारिणः स्वगुरूनप्रणिदधानेन किं नाम प्रणिहितं त्वया? अत्रोच्यते उत्तरं—परमबांधव! सत्यं वदन्नसि, शिष्याणां हि मुख्यवृत्त्या गुरव एव प्रणिधेयाः, न हि मम पितृन्यामधिकप्रसादाः सद्गुरुपादाः क्षणमपि मुंचंति चेतः, अत्रार्थे प्रकटगुरुनामधेया साक्षिणीयमेव गाथा, तद्यथा—'धम्मपहेत्यादि' धीरोदात्तचारित्राः श्रीधर्मप्रनसूरयस्तेन्यः प्राप्तवरा लब्धगणाधिपत्यप्रसादाः 'सिरिमहिंदित्ति' पदैकदेशे पदसमुदायोपचारात् श्रीमहेंद्रप्रनसूरयस्तैश्चिरसंचितत्वेन वंदिताः पुंजीकृता ये गुणा ज्ञानदर्शनादयस्तान् वंदे स्तवीमि. इह पदादिव्यतिरेकेण केवलगुणवंदनं शरन्निशावसरलब्धप्रसरशशधरकरनिकरनिर्मल। श्रीगुरूणां गुणाः परमां प्रौढिं प्राप्ता इत्यावेदनार्थं गुणा एव तत्वतः प्रणिधेयाः, न कस्यापि व-

पुरिति ज्ञापनार्थं च. कथंभूतान् तान्? सामान्येन त्रिषु ज्ञानदर्शनचारित्रेषु तिष्ठंतीति त्रिस्थाः, प्रकृष्टास्त्रिस्थास्त्रिस्थतरास्तान्, तथा भरंतिस्म प्रस्तावात्साधुमनांसि पूरयंतिस्मेति भृतवंतः. तथा परं प्रकृष्टं यथा भवति ज्वलज्ज्वलनकरालेऽपि कलिकाले स्वयशःपरिमलविस्तारणेनागुरूनिवागुरून्. तथा गुरुकाः प्रकर्षप्राप्ता अतिक्रांता शतमिति संख्या यैस्तेऽतिशताः, शमः कषायजयस्तेनेद्धाः प्रवृद्धाः, उपशमसमेता हि गुणा गरिमाणं दधति, तत्प्रधानत्वाद्ग्रामण्यस्य, ततो द्वंद्वः, तान् गुरुकातिशतशमेद्धान्. तत एवंविधान् परमगुरूणां श्रीमहेंद्रप्रभसूरिपादानां गुणान् स्तवीमीति संटंकः. अनेन स्वस्य तच्छिष्यपरमाणुता प्रतिपादिता द्रष्टव्या. ॥ १ ॥ एवमिष्टदेवगुरूनभिवंद्याथास्य शास्त्रस्योपदेशरूपत्वादुपदेशानां च वाङ्मयत्वादुचितं वाक्प्रणिधानमाह—

॥ मूलम् ॥—पुव्ववहा पुण्णपया । तिमग्गगा सायरे ठिया सम्मं ॥ अवणेउ पावपंकं । जिणवाणी तियससरियव्व ॥ २ ॥ व्याख्या—रागादिजेतृत्वाज्जिना अर्हंतस्तेषां वाणी पापं ज्ञानावरणाद्यसत्कर्म तदेव सद्गतिगमनविघ्नत्वान्निर्मलस्यात्मनः कलुषीकरणाच्च पंकः कर्ममल-

स्तं प्रकरणकर्तुः श्रोतुश्चापनयतु. आशिषोऽर्थेऽत्र पंचमी. वक्तुर्वीतरागत्वेन तद्वाचोऽपि तद्रूपत्वात्ततः पापपंकापनयनाशंसनं वृथैवेति चेन्न भक्तिवाक्यत्वादस्य तद्भक्तेश्च कर्मनिर्जराहेतुत्वेनेष्टकार्यसिद्धेरवश्यं भावित्वात्. यदागमः—भत्तीइ जिनवराणं । खिज्जंति पुव्वसंचिया कम्मा ॥ केव ? त्रिदशसरिदिव, तिस्रो जन्मयौवनच्यवनरूपा दशा अवस्था येषां ते त्रिदशा देवास्तेषां क्रीडाद्युपयोगित्वात्सरिन्नदी रूढ्या गंगा, यथा सा मज्जनादिना जनानां पंकमपनयतीति. कथंभूता जिनवाणी ? पूर्वाण्युत्पादादीनि पंथा मार्गो यस्या सा पूर्वपथा, द्वादशांगीगतत्वेऽप्यस्याः पूर्वपथत्वभणनं पूर्वाणां प्राधान्यख्यापनार्थं तथा पुण्यहेतुत्वात्पुण्यानि सर्वस्वलक्षणयोगात्पूर्णानि वा पदानि विभक्त्यंतानि यस्यां सा पुण्यपदा पूर्णपदा वा. त्रिभिः सम्यग्दर्शनज्ञानचारित्ररूपैरुत्पादव्ययध्रौव्यरूपैर्वा मार्गैर्गच्छतीति त्रिमार्गगा. तथा सम्यक्सामस्त्येन सादरेऽप्रमत्ते स्थिता. इयं ह्युच्चरणक्षणे क्षणमात्रं प्रमादिष्वप्यवतिष्ठते. न पुनः सामस्त्येन सर्वकालमिति सम्यग्ग्रहणं. त्रिदशसरित्तु पूर्वस्यां दिशि पंथा प्रवाहमार्गो यस्याः सा पूर्वपथा, पद्महृदान्निर्गतायास्तस्याः प्रथमं त्रयोविंशानि पंचयोजन-

शतानि यावत्पूर्वाभिमुखं प्रवृत्तेः, पुण्यानि जिनचक्रधराद्यभिषेकोचितत्वात्पवित्राणि पयांसि यस्याः सा पुण्यपया, त्रिभिर्मार्गैः स्वर्भूर्भुवो रूपैर्गच्छतीति त्रिमार्गगा, लोकरूढ्या विशेषणमिदं. सागरे समुद्रे सम्यक्सामस्त्येन स्थिता, यद्यपि तटासन्नशालेयादिसेकार्थं कुटुंबिभिरा- हृतं गंगाजलं क्वचित्क्षणं तिष्ठति, तथापि सामस्त्येन सागर एवेति भावः, ईदृग्विशेषणाः शीतादयोऽपि सरितः संति, बृहत्प्रमाणाश्च ताः, परं सन्निहितत्वाद्भारतानां जनानां गंगैवोपयोगिनीति गंगाग्रहणं कृतं. अनेन गाथाद्वयेनादिमं मंगलमभिहितं, मध्यमंगलं तु जिनपूजावसरे जिननामग्रहणेन, अंत्यमंगलं तु ' जाव सिरिवीरतित्थमिति ' गाथायां श्रीवीरजिननामग्रहणेन वक्ष्यते. एतच्चैवं त्रिषु स्थानेषु स्थितं गृहमिव समग्रमपि शास्त्रं द्योतयन्निर्विघ्नसूत्रार्थपारप्रापणादिप्रयोजनजातं साधयति. ॥ २ ॥ अथ काकदंतपरीक्षावन्निरभिधेयं शास्त्रं न श्रोतॄणां प्रवृत्तिनिमित्तं भवतीत्यभिधेयाभिधित्सयाह—

॥ मूलम् ॥—चिंतियसुहयं सुहयं । जणाण सुरसन्नसंगयं वोछं ॥ गुरुवयणाणं चिंतामणिव्व उवएससारमहं ॥ ३ ॥ व्याख्या—अत्र शास्त्रेऽहमुपदेशसारं वक्ष्ये भणिष्यामीत्यन्वि-

धेयनिर्देशः, तत्रोपदिश्यंते इत्युपदेशास्ते चार्थकामयोरसारत्वेनारंभबहुलत्वेन च साधूनामनधिकृतत्वान्मोक्षस्य च धर्ममूलत्वादिह धर्मविषया एव द्रष्टव्याः, तेषां सारं रहस्यं परमार्थमिति यावत्. किमिव? चिंतामणिमिव निर्दिष्टविशेषणवशाच्चिंतामणिसमानं, कथंभूतं? चिंतितानि कामिभिरध्यात्मिभिश्चाभिलषितानि सुखानि ददातीति चिंतितसुखदं. एवंविधमपि सर्वकामितकरतलकशिरोरत्नधारणवदशक्यानुष्ठानं स्यादत आह, शक्यानुष्ठानतया जनानां भव्यांगिनां सुभगं, तथा सरसा रसाढ्या येऽर्था अभिधेयास्तैः संगतं संपृक्तं, वाच्यनीरसत्वे हि तच्छ्रवणमपि श्रोतॄणां नोत्पद्येत, आस्तां तत्फलं प्रतिबोधाद्यं. चिंतामणिपक्षः सुबोधः, नवरं सुराणां व्यंतराणां सार्थेन संगतं, व्यंतराणां हि स्वल्पशक्तिमत्त्वादेकाश्रयणेन न चिंतामणेश्चिंतितसुखदत्वं संगच्छते इति तत्सार्थग्रहणं. कथं वक्ष्ये इत्याह—गुरुवचनेन गुर्वादेशेन. न तु स्वबुद्ध्या, स्वबुद्धिकल्पितस्य हि सतामनुपादेयत्वाद्रथ्यापुरुषवाक्यवत्. अनेनागमानुसारिणः संबंधः साक्षाद्दर्शितः, तर्कानुसारिणः प्रति प्रस्तुतं शास्त्रमुपायो धर्मावबोधस्तूपेय इत्यनयोरुपायोपेयलक्षणः प्रकरणार्थयोर्वाचकवाच्यरूपो वा संबंधः सुप्रतीत

एव. प्रयोजनं द्विधा—कर्तुः श्रोतुश्च द्वयमप्यनंतरपरंपरभेदाद् द्विविधं, तत्र कर्तुरनंतरं प्रयोजनं सत्वानुग्रहः. श्रोतुश्च सम्यग्धर्मावबोधः. परंपरं तु द्वयोरपि निःश्रेयसाधिगतिः, तच्चिंतितसुखदमिति विशेषणेन साक्षादेवोक्तं. इह शास्त्राणि द्विधा—कानिचिद्विप्रकीर्णाभिधेयानि, अनिबद्धगृहग्रामवासवत्. कानिचित्स्वस्वाधिकारस्थिताभिधेयानि पाटकबद्धनगरवासवत्. इदं च शास्त्रं स्वाधिकारस्थिताशेषाभिधेयमिति. ॥ ३ ॥ प्रथममधिकारानेवाह—

॥ मूलम् ॥—इह जिणधम्मपसंसा । तस्सामग्गी य देसविरई य ॥ सवविरई य तत्तो । एए चउरो अहीगारा ॥ ४ ॥ व्याख्या—स्पष्टा, नवरं जिनधर्मप्रशंसाप्रतिपादकत्वादधिकारोऽपि जिनधर्मप्रशंसेत्यभिधीयते. एवं सर्वत्र भावना कार्या. ' तस्सामग्गीत्ति ' तस्य जिनधर्मस्याधिगमोचिता सामग्री तत्सामग्री. ॥ ४ ॥ यथा प्रतिज्ञातमाह—

॥ मूलम् ॥—जयइ जगजीवहियउ । हेउ सवाण लद्धिरिद्धीणं ॥ उवसग्गवग्गहरणो । गुणमणिरयणायरो धम्मो ॥ ५ ॥ व्याख्या—धर्मः प्रागुक्तशब्दार्थो जयति सर्वपुरुषार्थेभ्य उत्कर्षेण वर्तते, कथंभूतः? जगति लोके ये जीवास्त्रसस्थावरास्तेषां हितो वत्सलः, सर्वे जी-

वा न हंतव्या इति घोषणात्. यदाचारांगसूत्रं—जे य अईया जे य पडुपन्ना जे य आगमिस्सा अरिहंता भगवंतो सव्वे ते एवमाइक्खंति, एवं भासंति, एवं पन्नवंति, एवं परूवंति, सव्वे पाणा सव्वे भूया सव्वे जीवा सव्वे सत्ता न हंतव्वेत्ति. प्राणा द्वित्रिचतुः प्रोक्ताः । भूताश्च तरवः स्मृताः ॥ जीवाः पंचेन्द्रियाः प्रोक्ताः । शेषाः सत्वा उदीरिताः ॥ १ ॥ हितोऽपि कश्चिद्दरिद्र इव न किंचिद्दातुं क्षमः स्यादित्याह. सर्वासां लब्धिऋद्धीनां हेतुः कारणं, धर्मजन्यत्वात्तासां. इह लब्धय आमर्षौषध्याद्याः, ऋद्धयस्तु करितुरगाद्या अनेकविधाः. दानशौंडोऽपि कश्चित्तथाविधेभ्यवन्न परस्यारिष्टभंजनः स्यादित्याह, उपसर्गवर्गं प्राणिनां स्वपरकृतपीडाकदंबं प्रणाममित्रवन्निरुपद्रवस्थानदानतो हरतीत्युपसर्गवर्गहरणः. एवंविधोऽपि कश्चित्स्वयं सौशील्यादिगुणहीनः स्यादित्याह—गुणाः शीलसत्यसत्वादयस्त एव परमरमणीयत्वान्मणयस्तेषामाधारत्वाज्जलकर इव रत्नाकरः, अनेन सर्वजगज्जंतुजातजीवातुः सर्वसमृद्धिहेतुः सर्वोपसर्गवर्गहरणः स्वयं च सर्वगुणाधारोऽयं धर्मः सार्वभौम इव शेषपुरुषार्थेषु विभ्राजते, तेषां सामस्त्येनैतल्लक्षणायोगात्. ॥ ५ ॥ न चैतन्मयैवोच्यते, किंतु समग्रैरपि विद्व-

ङ्गिरित्याह—

॥ मूलम् ॥—चउसुवि पुरिसढ्ढेसु । धम्मं चिय उवइसंति धुरि विबुहा ॥ जं अढ्ढकाममोक्खा । धम्मेण जणे जणिज्जंति ॥ ६ ॥ व्याख्या—विबुधा विद्वांसश्चतुर्ष्वपि पुरुषार्थेषु गणनायां धुर्यादौ धर्ममेवोपदिशंति, धर्मोऽर्थः कामो मोक्षश्चेति. कोऽत्र हेतुरिति चेदुच्यते यद्यस्मात्कारणाद्धेषा अर्थकाममोक्षास्त्रयः पुरुषार्था जने लोके एव शब्दस्य गम्यमानत्वाद्धर्मेणैव जन्यंते उत्पाद्यंते, यो हि यमुत्पादयति भवति स गणनायां तस्मादुपरिवर्ती दधिनवनीतादिगणनायां दुग्धवत्. अथ प्रथमं धर्मस्यार्थंप्रति जनकत्वे उपपत्तिमाह—

॥ मूलम् ॥—अलसत्तणेवि कस्सइ । होइ सिरी उज्जमेवि नन्नस्स ॥ अदिठ्ठसाहणं तो । धम्मो चिय जयइ तढ्ढेगो ॥ ७ ॥ व्याख्या—कश्चित्पुंसोऽलसत्वेऽपिव्यवसायमकुर्वतोऽपि श्रीर्लक्ष्मीर्भवति, अन्यस्य पुनरुद्यमेऽपि व्यवसायं कुर्वतोऽपि न भवति, प्रतिप्राणिप्रसिद्धमेतत्. एतावता धर्मस्य किमायातमित्याह—ततस्तस्मात्कारणात्तत्र श्रियो भवनेऽदृष्टसाधनमदृष्टहेतुरेकोऽसहायो धर्म एव जयतीति, व्यवसायमूला लक्ष्मीरिति तावज्जनश्रुतिः. य-

दाहुः—न हु मङ्गुमहस्स वङ्गे । मज्झे कमलाए नेव खीरोए ॥ ववसायसायरेस्सु । पुरिसाए लच्छी फुडं वसइ ॥ १ ॥ परं केषांचिद्व्यवसायं विनापि भवंती, अपरेषां च व्यवसायेनापि न भवंती लक्ष्मीः स्वस्य कमप्यन्वयव्यतिरेकानुविधायिनमदृष्टमपरमेव हेतुमपेक्षते, स च धर्म एवेति तात्पर्यं. यतः—उद्भवंती विना यत्न—मभवंती च यत्नतः ॥ लक्ष्मीरेव समाख्याति । विशेषं पुण्यपापयोः ॥ १ ॥ एवं धर्ममूलत्वमर्थस्योपदर्श्य कामस्यापि तदाह—

॥ मूलम् ॥—एगस्स कामियसुहं । बहुसमाणेति भोगसंयोगे । इअरस्स न तारिसयं । को इह हेउ विणा धम्मो ॥ ८ ॥ व्याख्या—इहैकस्य कस्यचिद्भूनः कामिकं वैषयिकं सुखं बहु प्रभूतं दृश्यते, इतरस्य पुनर्नतादृशमल्पमेवेत्यर्थः. ननु भोगसामग्र्या वृद्धिह्रासाभ्यां तस्यापि वृद्धिह्रासौ भविष्यत इत्याह—समाने भोगसंयोगे सदृश्यामपि धनवसनासनशयनभवनवनितावाद्यगेयगंधद्रव्यादिकायां यत एवं तत इह कामिकसुखस्य बहुत्वेऽल्पत्वे वान्वयव्यतिरेकाभ्यां धर्मं विना कोऽन्यो हेतुः? न कोऽपीति. अयं भावः—यदि भोगांगान्येव केवलं कामिकसुखंप्रति हेतवः स्युस्तदा तेषु तुल्येषु तदपि तुल्यमेवोपलभ्येत, न चोपलभ्यते त-

तोऽवसीयते, तस्याप्युपचयेऽव्यभिचारी हेतु धर्म एवेति स्थितं. ॥ ४ ॥ ननु भवतामर्थकामौ धर्महेतुकाविति, परं पुण्यपापक्षये मोक्ष इति वचनात्कथं मोक्षस्य तन्मूलत्वमिति परप्रश्नावकाशमाशंक्योपपत्तिपूर्वं तदाह—

॥ मूलम् ॥—धम्मझ्झाणं आलं-बिऊण जं सुक्कमोअरइ खवगो ॥ ता तेण निम्मिउ किर । मुक्कोवि णुअत्तए धम्मं ॥ ए ॥ व्याख्या—यद्यस्मात्कारणात् क्षपयति पूर्वबद्धं कर्मेति क्षपकः साधुर्धर्मध्यानमेवावलंब्य शुक्लध्यानमवतरति, नन्वेतावता मोक्षस्य किमायातमित्याह—ततस्तेन शुक्लध्यानेन निर्मितो निष्पादितो मोक्षश्चतुर्थः पुरुषार्थोऽपि प्राडुर्भवनं धर्ममेवानुवर्तते. इदमत्र हृदयं—मोक्षस्तावच्छुक्लध्यानं विना न भवतीति प्रसिद्धं सैद्धांतिकानां, ‘ सिद्धिगइ सुक्कझ्झाणेणेति ’ वचनात्. तस्य च क्षांत्यादीनि चत्वार्यालंबनानि. यदुक्तं स्थानांगे—सुक्कस्स णं झाणस्स चत्तारि आलंबणा पन्नत्ता, तं जहा—खंती १ मुत्ती २, मद्दवे ३, अज्जवे ४ क्षांत्यादयश्चैते धर्मस्यैव स्वरूपभूताः. यदागमः—खंती अज्जव मद्दव । मुत्ती तवसंयमे य बोधव्वे ॥ सच्चं सोअं आकिंचणं च । बंभं च होइ जइधम्मो ॥ १॥ ततश्च

यथा सोपानबलेन संजातः समुत्तुंगसौधशिखराध्यारोहः सोपानत्यागेऽपि सोपानहेतुक इति व्यपदिश्यते. तथा धर्मध्यानालंबनेनासादितशुक्लध्यानाद्बिना नावी मोक्षस्तद् व्युपरमेऽपि तद्धेतुक एवेति कथं न धर्मस्यापि मोक्षजनकत्वमाह? पूर्वं जिनधर्मप्रशंसां प्रतिज्ञाय किमेवं सामान्येन धर्म एव स्तूयते? अत्रोच्यते—नैवं, विशेषणबलेन जिनधर्मस्यैव प्रतीयमानत्वात्. शेषधर्मेषु स्थावरादिन्नेदैर्जीवापरिज्ञानेन तद्धितत्वायोगात्. एवं सर्वलब्धिहेतुत्वमपि तीर्थंकरलब्धेः सम्यक्त्वनिबंधनाद् द्वितीयगाथायामप्यर्थकाममोक्षजनकत्वं धर्मस्य न्यस्यता जिनधर्म एव साक्षादन्यधायि धर्मांतराणां मोक्षंप्रत्यजनकत्वात्. ननु कोऽयं कदाग्रहो यद्धर्मनाम्नि समानेऽपि जिनधर्मस्यैव प्राधान्यमुद्घुष्यते? अत्रोच्यते—नात्र कश्चित्कदाग्रहः, किंतु परीक्षाक्षमाणां गुणवत्स्वेवादरो युक्तो न निर्गुणेषु, गुणाश्च वक्ष्यमाणयुक्त्या जिनधर्म एव सामस्त्येनावतिष्ठंते. अतो निर्गुणधर्मपक्षविक्षेपेण तमेव श्लाघामहे वयं, न हि मध्यस्थोऽपि धूर्तैः कल्पितहेमनामां पित्तलामपि जात्यहेमबुद्ध्या गृह्णीयात्. गृह्णन् वाऽपायपात्रं स्यादित्येतदेवाह—

॥ मूलम् ॥—नामेण चिय धम्मं । गहिऊण जडा लहंति दोगच्चं ॥ ता कणयंव प-
रिक्खा–पुव्वं गिण्हंति तं धीरा ॥ ४० ॥ व्याख्या—जडा मंदमतयो सूत्रांतरीयकल्पितेन ना-
म्नैव नाममात्रेण धर्मोऽयमित्याकर्ण्य तं धर्मं गृहीत्वा दौर्गत्यं नारकादिभावमुपलक्षणाद्दु-
र्यशोऽपि लभंते, यत एवं ततो धिया राजंत इति धीरा मतिमंतः कनकमिव परीक्षापूर्वं तं
धर्मं गृह्णंति, तथा च न ते दौर्गत्यं लभंते, किंतु प्रत्युत सद्गतिभाजो भवंति. अयमर्थः—
यथा धूर्तेभ्यः कनकमिति नाम श्रुत्वा पित्तलं कनकधिया गृह्णंतो जडा दौर्गत्यं दारिद्र्यं कु-
यशश्च लभंते, धीमंतस्तु तत्तेन कनकं परीक्षासादाय काले संपन्नाखिलाभिलाषाः सुखिनो
भवंति, तथा धर्मविषयेऽपि भावना कार्या, सा च कृतैव परीक्षा कनकस्य धर्मस्य च. प्रायो
४६ जनानां दुरवबोधेति तामाह—

॥ मूलम् ॥—कणए हुंति परिक्खा । कसछेअणतावताडणाईहिं ॥ धम्मो उण समक-
१५५ णा–बंधच्छेअत्ताणाईहिं ॥ ४१ ॥ व्याख्या—इह कनके सुवर्णे शुद्धाशुद्धत्वपरिज्ञानाय प-
३० रीक्षाः कषादिभिः प्रकारैर्भवंति, तत्र कषः कषपट्टके घर्षणं, छेदनं छेणीकया, तापोऽग्निना-

गालनं ताडनं घनाद्यभिघातः, आदिशब्दाद्गंधस्पर्शादिपरिग्रहः. धर्मे धर्मविषये पुनः परीक्षोपशमादिभिः प्रकारैर्भवंति, तत्रोपशमः सत्यां शक्तौ सापराधेऽपि क्रोधनिग्रहः, करुणा सर्वसत्वेष्वहिंसाबुद्धिः. ब्रह्म मैथुनेच्छानिरोधः, अदंभत्वं निर्मायता सत्यव्यवहृतिरिति यावत्. आदिशब्दात्तपोध्यानादिपरिग्रहः. ॥११॥ एताश्च परीक्षा जिनधर्म एव प्राप्यंते नापरत्रेत्याह—

॥ मूलम् ॥—उवसमसारं चरणं । भणइ जिणो न उ परे मए तेसिं ॥ जं देवरिसी दिट्ठा । सवमाणा थोवकज्जेवि ॥ १२ ॥ व्याख्या—उपशमः प्रागुक्तार्थः, स एव सारं तत्वं यत्र तदुपशमसारं चरणं चारित्रं सर्वं वाक्यं सावधारणं भवतीति जिन एव भणति प्रतिपादयति, न तु परे शिवादयः, कथमेतदवसीयत इति चेदुच्यते तच्छास्त्रबलादेतदेवाह— यद्यस्मात्कारणात्तेषां तीर्थांतरीयाणां मते देवाश्च ऋषयश्चेति देवऋषयः, आस्तां भृशापराधे, स्तोककार्ये स्वल्पेऽप्यपराधे परं शपंत उपलक्षणत्वाद् घ्नंतश्च दृष्टाः, प्रज्ञाचक्षुषोपलब्धाः, श्रूयते च तदागमे—अहं तवोत्पत्तिं जानामीति वाङ्मात्रश्रवणाज्जातरोषो रुद्रस्तीक्ष्णया स्वकनिष्ठनखशिखया प्रजापतेः पंचमं शिरश्छिछेद. अयं यज्ञभागं न लभतामिति दक्षेणोत्युक्ते

स एव तन्मूलं तस्याध्वरध्वंसं चकार. तथा—ब्राह्मणातिक्रमे दोषे । द्वादश्यामप्यपारणे ॥ अंभसा केवलेनाद्य । करिष्ये व्रतपारणं ॥ १ ॥ इति ध्यात्वा मुहूर्तशेषायां द्वादश्यां नीरमात्रमुपभुंजानं परमभागवतमंबरीषं राजानं हंतुं कालिंद्यां स्नात्वा समागतः प्रागभिमंत्रितो दुर्वासाऋषिः कृत्यां निर्मितवानित्यादि कियदुच्यते? ये चैवं स्वल्पेऽपि कार्ये परस्मै क्रुध्येयुस्ते कथमुपदिशेयुः? यतः—गुणसुट्ठिअ चिय परं । ठावेइ गुणेसु सुपसिद्धमिणं ॥ न हि बुड्डुंतो सोएण । अप्पणा तारए अन्नं ॥ १ ॥ जिनाः पुनर्घोरोपसर्गकारिभ्योऽपि मनसाप्यकुप्यंतः परेषामुपशमं सम्यगुपदिशंतीत्युपशमपरीक्षा जिनधर्म एव प्राप्यते, नापरत्रेति स्थितं. ॥ १२ ॥ अथ जिनधर्मस्यैव द्वितीयपरीक्षाक्रमत्वमाह—सो धम्मो जह्थ दया । सा उ दया जह्थ जीवविन्नाणं ॥ जह जीवेसु जिणाणं । नाणं सन्नाण तह नह्थि ॥ १३ ॥ व्याख्या—धर्मः स उच्यते यत्र दया स्यात्, उक्तं च—रोमाली कूर्मपृष्टे चेद् । द्विजाली चेद् द्विकानने ॥ तमिस्रासु भवेज्ज्योत्स्ना । तदा धर्मो दयां विना ॥१॥ दया च वाङ्मात्रेण न भवतीत्याह—तुरेवकारार्थः, दया सैव प्रमाणं यत्र जीवानां प्राणिनां विज्ञानं त्रसस्थावरादिभेदेन विशेषाव-

बोधो भवति. ततश्च यथा जीवेषु पृथिव्यप्तेजोवायुवनस्पतित्रसेषु विषयभूतेषु निर्मलकेवलज्ञानोपलब्धसकलद्रव्यपर्यायाणां जिनानां ज्ञानमस्ति, न तथा विभंगज्ञानवशाद् वैपरीत्येन ज्ञातज्ञेयैकदेशानामन्येषां हरिहरादीनां. अत एव तेऽग्निहोत्रविधानतिलादिप्रदाननित्यस्नानसरःखननकूपारोपणादिनिःसारं बहुकुलानुष्ठानैर्धर्ममुपदिशंतिस्म. इदमुक्तं भवति — ते हि प्रथमं जीवमेव सम्यग्नोपलक्षयंति, ततस्तद्विषयां दयां कथमुपदिशंतीति. करुणापि तत्त्वतो जिनमत एवास्तीति प्रतिपत्तव्यं ॥ १३ ॥ अथ ब्रह्माधारत्वं जिनधर्मस्याह—

॥ मूलम् ॥—देवा रिसिणोवि परे । जं अविरामं रमंति रमणीहिं ॥ तम्हा बंभवयस्सवि । जिणमयमेयं अवठंभो ॥ १४ ॥ व्याख्या—यत्परे जैनेभ्यो भिन्ना देवा ऋषयश्चाविरामं निरंतरं रमणीभिः स्त्रीभिः सह रमंते क्रीडंति, तथा च श्रूयते - गिरीशस्य गौरी सदा सन्निहिता, हरेर्लक्ष्मीः, ब्रह्मणः सावित्री, तथात्रेरनसूया, वसिष्ठस्यारुंधती, गौतमस्याहल्या चेति. न चैवं स्त्रीपरिग्रहे सत्यजिह्मब्रह्मता तेषामुच्यमाना विचारचतुराणां चेतांसि चमत्करोति. यदुक्तमुत्तराध्ययने—विभूसा इत्थिसंसग्गो । पणीयं रसभोयणं ॥ नरस्सत्तगवेसिस्स ॥

विसं तालउडं जहा ॥१॥ अन्येऽप्याहुः—अग्निकुंभसमा नारी । घृतकुंभसमो नरः ॥ ये रक्तास्ते विलीयंते । विरक्तास्ते दिवं गताः ॥१॥ तथा च भागवतं वक्ति—मात्रा स्वस्रा दुहित्रा वा । न विविक्तासनो भवेत् ॥ बलवानिंद्रियग्रामः । पंडितोऽप्यत्र मुह्यति ॥१॥ ततश्चैवं स्वयं विषयविह्वलमनसस्ते विषयवैरस्यमुपदिश्य कथं श्रोतॄन् ब्रह्मव्रते स्थापयंति? प्रत्युत—गृहाश्रमपरो धर्मः । न भूतो न भविष्यति ॥ पालयंति नराः शूराः । क्लीबाः पाखंडमाश्रिताः ॥ १ ॥ अपुत्रस्य गतिर्नास्ति । स्वर्गो नैव च नैव च ॥ तस्मात्पुत्रमुखं दृष्ट्वा । पश्चाद्धर्मं समाचरेत् ॥ २ ॥ इत्याद्युक्तिभिर्विश्वमपि व्यामोहयंति, यत एवं ततो ब्रह्मव्रतस्याप्यन्यत्र निराधारस्य सत एतज्जगत्प्रसिद्धं, जिनमत एवावष्टंभ आधारो वर्तते. अत्र देवानामृषीणां च सर्वथा स्त्रीसंगाभावात्. ॥ १४ ॥ अथादंभताप्यत्रैव वर्तत इत्याह—

॥ मूलम् ॥—अन्नमए देवाणं । माया माया जयस्स जइ होइ ॥ तो भावकरणसच्चं । अदंभया जिणमयंमि ठिया ॥ १५ ॥ व्याख्या—यदीत्यभ्युपगमे, अन्यमतेऽपरशासने देवानां माया व्यामोहनात्मिका जगतो विश्वस्य माता प्रसवित्री भवति, आस्तां परवंचनादिकं

तेषां, ह्येषा देवनरनारकादिका विश्वसृष्टिरपि मायाप्रतीतिवेति तत्वं. तथा च तदूचः—अहं कृत्स्नस्य जगतः । प्रभवः प्रलयस्तथा ॥ मत्तः परतरं नान्य—त्किंचिदस्ति धनंजय ॥ १ ॥ ये चैव सात्त्विका भावा । राजसास्तामसाश्च ये ॥ मत्त एवेति तान् विद्धि । नन्वहं तेषु ते मयि ॥ २ ॥ ह्येषा गुणमयी देवी । मम माया दुरत्यया ॥ मामेव ये प्रपद्यंते । मायां मे तां तरंति ते ॥ ३ ॥ यद्येवं तत एव वयं वचमोऽदंभता निर्मायता जिनमत एव स्थिता विश्रांता, कासावदंभतेत्याह—' भावकरणसच्चंति ' भावसत्यं करणसत्यं च, तत्र भावश्चित्ताध्यवसायः, करणं क्रिया शरीरव्यापारः, तदंतर्गतत्वाद्वचनमपि. ततश्च मनोवचःकर्मभिरशठैर्भाव्यं न पुनर्बकोटवन्मनसि विसदृशमध्यवसायं बाह्यवृत्त्या जनमनरंजनपरैः स्थेयं. इत्येवंरूपा निर्दंभता जिनमत एवावतिष्टते, ' एसा जिणाण आणा कज्जे सच्चेण होअव्वमिति ' वचनात्. इत्युक्तश्चतसृणामपि परीक्षाणां जिनधर्म एव सम्यग्निर्वाहः. ॥ १५ ॥ अत्राह कश्चिन्मुग्धमतिः—ननु किमेताभिर्मुधा मनोऽस्वास्थ्यकारिणीभिः परीक्षाभिः? यावता योऽपि सोऽपि धर्मः प्रतिपत्तव्य एवेत्याह—

॥ मूलम् ॥—सुपरिक्खियंमि कणए । भवंति भवणंमि इक्कभवभोगा ॥ आमुक्कं सुक्खभरो । धम्मे सुपरिक्खिए होइ ॥ १६ ॥ व्याख्या—अगूढार्था, नवरमिह यद्येकभवभोगकारणमपि कनकं चतुरैः परीक्ष्याङ्गियते, ततो भवशतहितस्य मोक्षावधिविविधसुखप्रदानक्षमस्य धर्मस्य परीक्षा सुतरां कार्येति भावः. ॥ १६ ॥ मोक्षहेतुकत्वमेवास्य धर्मस्य युक्तिपूर्वमाह—

॥ मूलम् ॥—गुणरयणनाणवरजल—जलनिहिणा जो जिणेण भणिओ ॥ अभयंव देइ धम्मो । अइरा अयरामरत्तं से ॥ १७ ॥ व्याख्या—स धर्मः सेव्यमानः सन्नमृतमिवाचिरादल्पकालेन, जरा वयोहानिः, मरणं मरः स्वरांतत्वादल्, न विद्यते जरामरौ येषां तेऽजरामराः सिद्धास्तद्भावोऽजरामरत्वं तद्ददाति. कोऽसौ धर्म इत्याह—यो जिनेनार्हतोपदिष्टः, हेतुत्वेन विशेषणमिदं, कथंभूतेन जिनेन? गुणा मूलगुणादयस्त एव निर्मलत्वाद्रत्नानि, तथा ज्ञानेषु वरं प्रधानं केवलज्ञानं तदेवापरिमितत्वाज्जलं, तयोराधारत्वाज्जलनिधिः समुद्रस्तेन तथा, इदमपि विशेषणमुपदेष्टुर्जिनस्य हेतुत्वेन व्याख्येयं, गुणित्वात्केवलित्वाच्चेत्य-

र्थः. इदमुक्तं भवति—जिनो हि केवलज्ञानेन कर्मणां बंधमोक्षहेतून् सम्यग्जानाति, ज्ञात्वा च मोक्षोपायं जंतूनामुपदिशंति, गुणवांश्चासौ, ततस्तद्वाचि विश्वासं दधानास्ते तदुक्तमनुतिष्ठंतोऽचिरान्मोक्षं लभंते. ॥ १७ ॥ एतदेव दृष्टांतेन समर्थयति—

॥ मूलम् ॥—हुंति जहा अवरेहिं । जलेहिं पउराउ धन्नरासिउ ॥ मुत्ताहलनिप्पत्ती । होइ पुणो साइनीरेण ॥ १८ ॥ व्याख्या—स्पष्टा, नवरं स्वातिनक्षत्रं गते सूर्ये जलधरेण यज्जलं मुच्यते तत्स्वातिनीरमित्युच्यते. ॥ १८ ॥ उपनयमाह—

॥ मूलम् ॥—एवं सुरनररिद्धी । हवंति अन्नाण धम्मचरणेहिं ॥ अक्खयमोक्खसुहं पुण । जिणधम्माउ न अन्नत्तो ॥ १९ ॥ व्याख्या—एषापि सुबोधा, नवरं 'अन्नाणेत्यादि,' न विद्यते ज्ञानं येषां तेऽज्ञाना मिथ्यादृष्टयः सत्स्वपि मतिश्रुतावधिज्ञानेष्वज्ञानत्वमेषां ज्ञानफलस्याभावात्. यदाह—सदसदविसेसणाउ । भवहेउ जहिच्छिउवलंभाउ ॥ नाणफलाभावाउ । मिच्छदिट्ठिस्स अन्नाणं ॥ १ ॥ तेषां धर्मचरणैर्धर्मानुष्ठानैर्जलज्वलनप्रवेशभृगुपातपंचाग्निसाधनादिभिरिति. ॥ १९ ॥ ननु जिनधर्मो मोक्षप्रदानक्षम इत्यवगतं, परं मोक्षस्यांतरांतरा-

यकारिणी येयममेयदुःखप्रभवा भवाटवी वर्त्तते सा कथमस्माभिरुल्लंघ्यते? उच्यते—अस्यैव बलेन तदाह—

॥ मूलम् ॥—कोहदवग्गिपलित्तं । माणगिरिनिअडिवंसिसंजुत्तं ॥ लोहगुरुविवरगहणं । बहुविहआसापिसाइगणं ॥ २० ॥ मोहतमपूरभरियं । उल्लंघिउं भवाडविं तुरिउं ॥ जिणधम्मविहियरक्खो । सत्तो सत्तो महासत्तो ॥ २१ ॥ व्याख्या—जिनधर्मेण समस्तविपत्पूरदूरीकरणदक्षेण विहिता रक्षा तत्तदुपद्रवेभ्यो यस्य स जिनधर्मविहितरक्षः सत्वः प्राणी भवाटवीं त्वरितं शीघ्रमुल्लंघयितुं शक्तः समर्थो भवति. ननु केन गुणेन भवस्याटवीत्वमारोप्यत इत्याह—कोप एव दाहहेतुत्वाद्दवाग्निर्दवानलस्तेन प्रदिप्तां प्रज्ज्वलितां, तथा मान एव दुर्लंघ्यत्वाद्गिरिः पर्वतः, निकृतिर्माया सैवात्यंतगहनत्वाद्वंशी वंशाली ताभ्यां संयुक्तां, मानगिरीत्यत्र दीर्घो, नियडिवंसी इत्यत्र च ह्रस्वः, दीर्घह्रस्वौ मिथो वृत्ताविति प्राकृतलक्षणवशात्, लोभ एव दुःपूरत्वाद्गुरु पातालप्रायं विवरं, तेन गहनां व्याप्तां, सर्वत्र जातावेकवचनं. तथा बहुविधा धनार्जनपाणिग्रहणपुत्रोत्पादादिका आशा एव विश्वघस्मरत्वात्पिशाचीगणा य-

त्र तां, तथा मोहोऽज्ञानं स एव विवेकलोचनावारकत्वात्तमःपूरोंधकारप्रसरस्तेन भरितां पूरितां. न ह्येवंविधा भीषणा भवाटवी केवलं परस्यैव बलेन व्यत्येतुं शक्यते, यद्योरसं सत्वं न स्यादित्याह, महासत्व आपत्स्वप्यभीरुः. ॥ २०-२१ ॥ नन्वेवंविधापत्परित्राणे कथं नामधर्मस्य सामर्थ्यमुच्यते? वीरत्वावीरत्वं कथमिति चेदुच्यते, वीरजातत्वादित्याह—

॥ मूलम् ॥—घणसङ्घअङ्घकलिउ । पुरउवि ठिउ परेहिं दुग्गिज्झो ॥ सिरिवीराउ जाउ । धम्मोवि वहेइ वीरत्तं ॥ २२ ॥ व्याख्या—आस्तां वीरवंशे जाता मनुष्या एव वीरा भवंतीति, श्रीवीरादपश्चिमजिनाज्जातो धर्मोऽपि वीरत्वं वहति, यद्यपि सर्वेषामप्यर्हतां तुल्योपदेशत्वात्साधारण एव धर्मस्तथापि सांप्रतं श्रीवीरस्य तीर्थमित्येवमुच्यते. पक्षे वीरात्सुभटादिति. कथंभूतो धर्मः? घनैः सर्वसमुद्रोदकबिंदुभ्योऽप्यधिकैः शास्त्राणामाचारादीनामर्थैः कलितः, तथा पुरतोऽपि स्थितः पुस्तकादिन्यस्ततयाग्रतोऽपि स्फुरद्रूपः, परैः शाक्यादिभिर्दुर्ग्राह्योऽवधारयितुमशक्यो ज्ञेयगहनत्वात्. वीरपक्षे—घनैः शस्त्रैः खड्गादिभिरस्त्रैर्गारुडादिभिः कलितः पुरतोऽपि स्थितो न तु पलायमानः, परैः शत्रुभिर्दुर्ग्राह्यः. एवं चास्य वीरत्वे कथमा-

पत्परित्राणं दुर्घटमिति गाथार्थः. ॥ २२ ॥ अथ भंग्यंतरेणास्य विपक्षविक्षेपकत्वमाह—

॥ मूलम् ॥—जिणधम्मो गयराउ । सुबहुमउ असमसमरसंपत्तो ॥ विप्फुरियविविहआसं । महइमहामोहरायबलं ॥ २३ ॥ व्याख्या— अयं जिनधर्मो मोहो मोहनीयं कर्म, स एव सर्वकर्मसु प्रबलत्वाद्राजा, महांश्चासौ मोहराजश्च महामोहराजस्तस्य बलं सामर्थ्यं मथ्नाति, कीदृशं तत्? विस्फुरता विविधा आशा यत्र तत्तथा, आशासारत्वात्तस्य धर्मः कथंभूतः? गतरागो रागस्य द्वेषाविनाभावित्वाद्गतद्वेष इत्यपि द्रष्टव्यं, तथा सुबहूनां जीवानां मत इष्टोऽभयदत्वात्. तथाऽसमं निरुपमं समरसं प्राप्तः, निष्कषायत्वात्, अत्र 'गयराउ' इति विशेषणं प्राकृतव्युत्पत्त्या जिनधर्मस्य गजराजोपमां सूचयति, गजराज इवेत्यर्थः. स हि महान् माया लक्ष्म्या उहस्तको यस्य स महामोहः, स चासौ राजा च, तस्य बलं सैन्यं विस्फुरितविविधाश्वमपि मथ्नाति, एकेनापि गजराजेन बहवोऽप्यश्वा भज्यंत इति प्रतीतमेव. कथंभूतोऽसौ? सुबहुमदः, तथा असमं समरं संप्राप्तः, संग्रामांगणमागत इत्यर्थः ॥२३॥ एवं धर्मस्य परसामर्थ्यमुपदर्श्य संप्रति लोकंप्रति लोकोत्तरं तस्य वात्सल्यमाह—

॥ मूलम् ॥—जम्मजरमरणडुक्कं । हरेइ संकप्पियं पिअं देइ ॥ सहिआउपुत्तपणइणि—पिउमाऊहिं हिउं धम्मो ॥ २४ ॥ व्याख्या—धर्मः सख्यादिभ्योऽपि हितो वत्सल इति समासार्थः. व्यासार्थस्त्वयं—इह प्रथमं सखा सखायंप्रति वत्सलः कुलशीलादिभिः साम्यात्, ततोऽपि भ्राता भ्रातरंप्रत्येकोदरजातत्वात्. ततोऽपि पुत्रः पितरंप्रति ततो लब्धात्मलाभत्वात्, ततोऽपि प्रणयिनी प्रियंप्रति तं विना सर्वशृंगारत्यागात्. ततोऽपि पिता पुत्रंप्रति स्वांशरूपत्वात्, ततोऽपि माता पुत्रंप्रति वत्सलात्तस्य कुक्षौ धारणात्पोषणाच्च, न च ततोऽप्यधिकं वात्सल्यं कस्याप्यस्ति. तथा चाहुः—

उपाध्यायाद्दशाचार्या । आचार्याणां शतं पिता ॥ सहस्रं तु पितुर्माता । गौरवेणातिरिच्यते ॥१॥ पतिता गुरवस्त्याज्या । न तु माता कथंचन ॥ गर्भधारणपोषाभ्यां । येन माता गरीयसी ॥ २ ॥ धर्मः पुनरेभ्यः सर्वेभ्योऽपि जीवंप्रति वात्सल्येनातिरिच्यते, यतोऽयं धर्मो जन्मजरामरणदुःखं हरति, संकल्पितं च प्रियं च ददाति. अयं भावः—हितः स उच्यते यो दुःखं हर्तुं सुखं च दातुं क्षमः स्यात्, दुःखे च मुख्यं दुःखं जन्मजरामृत्यवस्तद्भावे शेषदुःख

न्नावात्, न चामून्निबिरुस्नेहा अपि मित्रादयः कस्यापि हरंति, धर्मः पुनरपुनर्नवं पदं प्रापयन् हरंत्येव. तथेष्टमपि सुखं प्रदातुं धर्म एव प्रजुर्न मित्रादयस्तेज्यस्तदासौ सर्वस्यापि जगतः सुखित्वप्रसंगात्. ननु संकल्पितं प्रियं चेत्युजयपदोपादानं कस्मादित्युच्यते—संकल्पितं विवक्षितजीवापेक्षया प्रियं सर्वजनापेक्षया, यदि संकल्पितमित्येतावदेवोच्यते तदा गर्तासूकरादीनां जगदनिष्टविष्टावाप्तिरिति धर्मजन्या स्यात्. प्रियमित्येवोच्यमानेऽजीर्णज्वरिणोऽपि सहसाकारादिना सर्वजगदयितघृतदध्याद्युपजोगो धर्मकर्तृकः स्यात्, न चैतदिष्टं शिष्टानां, तस्मादुजयपदोपादानं न व्यर्थमिति गाथार्थः. अथ धर्मस्य संकल्पितदातृत्वं स्पष्टयन्नाह—

॥ मूलम् ॥—जे नरसुरवरजोगा। जे जसबलरूवरिद्धिसंजोगा ॥ ते धम्मकप्पतरुणो। कुसुमाइं फलं पुणो सिद्धी ॥ २५ ॥ व्याख्या—उत्तानार्था, न हीदृशमत्यद्भुतमस्य धर्मकल्पद्रूमस्य माहात्म्यं दृष्टांतमंतरेणाभिधीयमानं प्रतीतिमावहतीति दृष्टांतमाह—

॥ मूलम् ॥—उवजुंजिऊण नरसुर—रिद्धिं सिद्धिं गएण किर तत्तो ॥ वरपुप्फफला-

सार्ध । पत्तो धणसत्थवाहेण ॥ २६ ॥ व्याख्या—कियेत्याप्तोपदेशो, नरसुरऋद्धिं मर्त्यामर्त्यसं पदमुपभुज्य त्रयोदशे भवे सिद्धिं गतेन धनसार्थवाहेन श्रीयुगादीशजीवेन तस्मादधिकृता-ऊर्मकल्पद्रुमाङ्कुराणां शेषजीवापेक्षया प्रकर्षवतां प्राग्गाथानिर्दिष्टानां पुष्पफलानामास्वादो र-सानुभवः प्राप्त इति गाथार्थः. व्यासार्थस्तु कथानकेनोच्यते—

तन्नन्नाचार्यकं दान—विद्यायां वृषभः श्रिये ॥ सुरधेनुमणिवृक्षा । यस्य शिष्या इवाभ-वुः ॥ १ ॥ जंबूरित्यस्त्ययं द्वीपो । नित्यदीपोपमां दधौ ॥ लक्षयोजनसंपत्ति-शालिनो यस्य मंदरः ॥२॥ तत्र प्रत्यग्विदेहेषु । वसुधाया विशेषकं ॥ क्षितिप्रतिष्ठितं नाम । पुरं नालीक-भाक् पुनः ॥ ३ ॥ यत्र प्रासादशृंगेषु । वैजयंत्यो विरेजिरे ॥ स्वर्गंगातरंगांतः । स्फुरच्छफरि-का इव ॥ ४ ॥ यस्मिन् कलावदालोक—मुदिता परमोदकाः ॥ अनतिक्रांतमर्यादा । अच्यु-तश्रीकृतास्पदाः ॥ ५ ॥ अनेकगुणरत्नाढ्याः । कुरुचित्यक्तदूषणाः ॥ वर्धिष्णवोऽनुवेलं च । ना-गराः सागरा इव ॥ ६ ॥ युग्मं ॥ तत्र प्रसन्नचंद्रोऽभू—द्भूपो यः सज्ज्ञानैर्धनैः ॥ पुराणि वा-सयामास । वनानि च विरोधिभिः ॥ ७ ॥ वीराणां न परीवारः । कारणं विजयश्रियः ॥ इ-

ति मुक्त्वा परीवारं । यस्यासिर्युयुधेऽरिभिः ॥ ८ ॥ संतोषरोषभूस्तन्व—न्निष्ठां वितरणे रणे ॥
अर्थिप्रत्यर्थिवर्गेऽभू—द्धनाय निधनाय यः ॥ ९ ॥ सार्थवाहोऽभवत्तत्र । धनः सुकृतसाधनः ॥
दानैर्यो भूषयामास । जगद्भूषामपि श्रियं ॥ १० ॥ भावितीर्थंकरत्वेन । यस्यात्माजनि निर्म-
लः ॥ स्वातिधाराधरस्येवा—सन्नमुक्तादृशं पयः ॥ ११ ॥ श्रियः प्रकृतिलोलायाः । क्षोभिका-
या असदृशां ॥ रक्षाकंचुकिनौ न्याय—व्यवसायौ व्यधत्त यः ॥ १२ ॥ समृद्धः क्षीयते चं-
द्रः । समृद्धः क्षीयतेंबुधिः ॥ समृद्धोऽपि न तु क्षीण—स्तावुभौ हसतिस्म सः ॥ १३ ॥ क-
मलोघं कदापीच्छु—र्जगदुज्जीवनक्षमं ॥ गंतुं सोऽब्द इवांभोधिं । वसंतपुरमैहत ॥ १४ ॥ या-
त्रार्थिनो जनान्नीवी—वाहनाशनदानतः ॥ सज्जः स सज्जयामास । नृपतिः सैनिकानिव ॥
॥ १५ ॥ सोऽभून्मंदमनाः सोपि । तद्वाग्माधुर्यरंजितः ॥ अन्वगच्छद्धनं गच्छ । इव प्रियगिरं
गुरुं ॥ १६ ॥ कुलवृद्धाशिषो गृह्णन् । स्नेहाब्धिलहरीरिव ॥ सूचयन्निव मूर्धस्थै—रक्षतैर-
क्षतां श्रियं ॥ १७ ॥ शुभेऽह्नि कृतमांगल्य—कर्मा निर्मापितोत्सवः ॥ सार्थमावासयामास ।
पुरः परिसरे धनः ॥ १८ ॥ युग्मं ॥ धर्मघोषगुरुः सार-परिवारस्तदा धनं ॥ बहुधा विस्मृतो

मूर्त । इव धर्मः सभायया ॥ १९ ॥ तस्मै प्रणमते दत्वा । धर्मलाभाशिषं गुरुः ॥ कृता भूतस-
रः स्नानै-रिव वर्षैरभाषत ॥ २० ॥ गंतुमीहामहे सार्थ-वाह साहाय्यकात्तव ॥ वसं-
तपत्तनं मेघा । इव दूरं नभस्वतः ॥ २१ ॥ स प्रोचे भाग्यवानस्मि । यत्प्रयाणामुखे मम ॥
यूयं शकुनसर्वस्व-मिवायासिष्ट दृक्पथं ॥ २२ ॥ एषां सपरिवाराणां । यदन्नाद्युपयुज्यते ॥
तत्संपाद्यं त्वयासर्व-मिति सूदं शशास सः ॥ २३ ॥ तावदाम्रफलैः पाक-पेशलैः परिपूरितं
॥ स्थालं कौशेलिकीचक्रे । कश्चित्तस्य नरः पुरः ॥ २४ ॥ तदेव स्थालमुद्धृत्य । फलैः कुर्वन्नि-
मंत्रणां ॥ प्रकृत्या दानशौंडीरो । न्यषेधि गुरुणा धनः ॥ २५ ॥ रसज्ञोल्लासिनी गंध-वासि-
नी तृड्विनाशिनी ॥ जगदानंदिनी साधु-माधुर्याधरितामृता ॥ २६ ॥ भवतामुचिता से-
यं । फलाली किं निषिध्यते ॥ हुं ज्ञातं कठिना भूरि-कषाया यदसौ हृदि ॥ २७ ॥ सो-
त्प्रासमिति जल्पाके । धने यतिपतिर्जगौ ॥ चारित्रे हि कृपा सौम्य । सारा तारेव लोचना
॥ २८ ॥ त्रिभिर्विशेषकं ॥ तद्रक्षा जीवरक्षार्थं । न गृह्णंति मुमुक्षवः ॥ फलं सबीजमन्नं चा
-राद्रं जीवमये हि ते ॥ २९ ॥ अहो सूक्ष्मेक्षिकामीषा-महो दुष्करकारिता ॥ शंसन्निति

मुनीशस्या—नुमेने स सहागमं ॥ ३० ॥ समं धनस्य सार्थेन । चलता प्राचलद्गुरुः ॥ शंखः प्रदक्षिणावर्त । इव नीरेण नीरधेः ॥ ३१ ॥ अश्वैरश्वेतरैः सौर—नेयैः करभसैरिभिः ॥ विषमेऽपि सुखं चेरुः । क्षुण्णे पथि पदातयः ॥ ३२ ॥ ग्रीष्मातपाकुले लोके । रथोध्धूतरजच्छलात् ॥ स्तोकालोकयितुं सूर्य—मिव धात्री विपद्ययौ ॥ ३३ ॥ सरित्खेला लतादोलाः । पुष्पमाद्याः फलावलीः ॥ विना यत्नं जनाः प्रापुः । सार्थे वनविहारिणि ॥ ३४ ॥ अंगनालिंगनावास—प्रमदाश्चंदनांचिताः ॥ रथस्थाः केऽपि न ग्रीष्म—भीष्मतां मेनिरे नराः ॥ ३५ ॥ लाजादखिलवस्तूनां । व्यासाच्च पटसद्मनां ॥ पांथानां जंगमद्रंग—रंगं सार्थो व्यधत्त सः ॥ ३६ ॥ तापाक्रांतास्तृषाक्रांता । गतिश्रांताश्च ये पथि ॥ व्यथां धनो धुनोतिस्म । तेषां स्ववचनामृतैः ॥ ३७ ॥ किमयं चंदनं किं वा । चंद्रः किं वा सुधाह्रदः ॥ दध्युर्लूकाहता लोका । इत्याप्तवचने धने ॥ ३८ ॥ क्रामंतिस्म क्रमं कष्टं । पथि यत्नातपाङ्गनाः ॥ चेरुस्तत्र सुखं धैर्या—त्पुष्पकीर्ण इवार्षयः ॥ ३९ ॥ न मुंचतिस्म यन्नीरं । क्षणमप्याननाज्जनः ॥ तस्मिन् शमसुधाध्माता । इव तेन मनोऽप्यद्भुः ॥ ४० ॥ एवं व्रजन्नसौ सार्थः । कतिचिद्भिः प्रयाणकैः ॥ प्राप

श्वापदजीवानां । रक्षादुर्गमिवाटवीं ॥ ४१ ॥ तदंतरा गतेर्विघ्नः । प्रादुरासीद् घनागमः ॥ धनागमस्य श्रीसूरेः । संगमायैव कौतुकी ॥ ४२ ॥ विद्युज्ज्वालामुखा गर्जा— ट्टहासाः श्यामलाः घनाः ॥ बलाका नृकपालौघा । दृष्टाः पांथैः पिशाचवत् ॥ ४३ ॥ झंझयांदोलिते देहे । पांथानां पतयालवः ॥ ययुर्नाराचसाचिव्यं । मेघस्योदकबिंदवः ॥ ४४ ॥ पदे पदे स्खलत्पादा । यष्टिलग्नाग्रपाणयः ॥ युवानोऽपि जरन्नावं । पंकिले पथि भेजिरे ॥ ४५ ॥ तन्वन् सरस्वतीपूरं । सत्वाधिक्यं प्रपंचयन् ॥ गुरुर्बभूव सार्थस्य । वनवासाय वारिदः ॥ ४६ ॥ रुद्धा मेघांबुधाराभि—स्तस्थुर्लोका वनांतरे ॥ पाठकस्येव कंबाभि—र्मठे छात्राश्चला अपि ॥ ४७ ॥ पाथोदरुद्धपांथानां । पाथेयानि दिने दिने ॥ हीयंतेस्म श्रुतानीव । प्रमादग्रस्तदेहिनां ॥ ४८ ॥ अश्नतां कंदमूलाद्यं । पिबतां निर्झरं पयः ॥ वसतां पर्णशालासु । गृह्णतां तारवीस्त्वचः ॥४९॥ स्वपतां गंडशैलेषु । पश्यतां पंकसंकटं ॥ पांथानां तापसानां च । नाभूत्कापि भिदास्तदा ॥ ॥ ५० ॥ युग्मं ॥ चेत्किंचिद्गुरवः प्रापुः । प्रासुकं जगृहुस्तदा ॥ नो चेत्समाधिना तस्थु—र्वर्धयंतस्तपोधनं ॥ ५१ ॥ सुखदुःखे स्वसार्थस्य । धनस्य ध्यायतोऽन्यदा ॥ यामिन्याश्चरमे

यामे । गुरवः स्मृतिमैयरुः ॥ ५२ ॥ कथं काले करालेऽत्र । ते भविष्यंति साधवः ॥ अप्रासु-
कं जितात्मानो । ये न गृह्णंति वार्यपि ॥ ५३ ॥ क्षुधिताः फलिते क्षेत्रे । पूर्णे सरसि तृष्णि-
नः ॥ असिधाराव्रतं तीव्र—तरं हंत चरंत्यमी ॥ ५४ ॥ यदेभ्यो दीयते दानं । तन्निदानं
शिवश्रियः ॥ विधेयैव मया चिंता । प्राप्तस्तेषां महात्मनां ॥५५॥ कुपितास्ते भविष्यंति । मयि
गाढापराधिनि ॥ यद्वा न तेषु कोपः स्या—दाहः शशिकरेष्विव ॥५६॥ एवं विमृशतस्तस्यो—
निद्रस्य तमसः क्षये ॥ इति स्तुतिव्रतोऽपाठी—ज्ञानन्निव तदाशयं ॥५७॥ पंचभिः कुलकं ॥ वसुभिः
पूरयन्नाशा द्विषन् दोषाकरद्युतः ॥ धन विश्वोपकाराय । त्वमिवोदेति भास्करः ॥५८॥ अथ प्रा-
भातिकं कृत्यं । विधाय विधिना धनः ॥ माणिभद्रेण मित्रेण । सहागाद्गुरुसन्निधिं ॥५९॥ समुद्र-
मिव गंभीरं । धीरं मेरुरिवाग्रतः ॥ आदर्शमिव मांगल्यं । सूरिराजं ददर्श सः ॥६०॥ कायो-
त्सर्गस्थिताः केऽपि । केऽपि स्वाध्यायतत्पराः ॥ सूत्रार्थचिंतकाः केऽपि । केऽभ्यासनविशेषिणः
॥ ६१ ॥ प्रसन्नवदना दांत—मदनास्तेन तोषिणः ॥ परितस्तमदृश्यंत । मुनयो विनयोज्ज्व-
लाः ॥ ६२ ॥ युग्मं ॥ लज्जातो जातसंकोच । इव नत्वा गुरूनथ ॥ ऊचे पतद्बाष्पधारा—

धौततच्चरणो धनः ॥ ६३ ॥ मया युष्माल् सहाहूय । भूयश्चिंता न यत्कृता ॥ प्रमादग्रहिलेनेव । तत्क्षमध्वं क्षमाकराः ॥ ६४ ॥ गर्जद्भिर्बहु वर्षद्भिः । स्तोकमस्तोकमंबरैः ॥ वर्षाकालेऽपि जातोऽहं । शारदैर्वारिदैः समः ॥ ६५ ॥ प्रत्यूचिरे क्षमावल्ली—तरवो गुरवस्ततः ॥ किमागस्ते महाभाग । येनैवं दुःखभागसि ॥ ६६ ॥ महाटवीमिमां तीर्णा । वयं साहाय्यकात्तव ॥ उपचक्रे च सार्थस्ते । भक्तदानादिना हि नः ॥ ६७ ॥ धनोऽप्यधत्त धन्यानां । जिह्वा पावित्र्यशालिनी ॥ न मालिन्यभियेवान्य—दोषपंकं स्पृशेद् ध्रुवं ॥ ६८ ॥ पंके पंकेरुहोद्भेद—मिव मय्यपि यद्गुणं ॥ प्रकाशयथ तद्यूयं । नूनमन्यगुणव्रताः ॥ ६९ ॥ ये सर्वभक्षिणस्तेषा—मपि संप्रति दुष्करं ॥ अन्वहं निर्वहंत्येते—ऽनारंभा ऋषयः कथं ॥ ७० ॥ सद्यः प्रसद्य साधूना—मनुज्ञां यत्र येन ते ॥ ममावासमुपागत्य । किमपि प्रतिगृह्णते ॥ ७१ ॥ भक्तस्नेहगुरुर्थं य—दकृतं यदाकरितं ॥ तदेव कल्प्यं साधूनां । धनमित्यन्वशाद्गुरुः ॥ ७२ ॥ व्यावृत्तेऽथ धने गुर्वा—देशवश्यं मुनिद्वयं ॥ तदावासमनासन्न—मनाकुलतया ययौ ॥ ७३ ॥ स तद् दृष्ट्वा चिदानंद—सुखमास्वादयन्निव ॥ घृतेन सुकृतेनैवो—ज्ज्वलेन प्रत्यलाभयत् ॥ ७४ ॥

मुदं मेडुरयामास । घृतधाराधरो धनः ॥ मुनिहंसेषु निध्यातृ— नेत्रांनोजेषु चाङ्कुतं ॥ ७५ ॥
वाग्दुग्धधारानेत्रांबु—धारा धारा घृतस्य च ॥ स्पर्धया वर्धयामासु—र्बोधिबीजं तदाशये ॥
॥ ७६ ॥ निवृत्तेऽस्मिन् व्रतिरूंढे । क्षणं स्थित्वा विचक्षणः ॥ धर्मेच्छुः स ययौ रत्ना—र्थीव र-
त्नाकरं गुरुं ॥ ७७ ॥ प्रणम्य तमुपासीनं । दंतदीधितिदंनतः ॥ ऊचे बोधिसुधांनोधि—लहरीं
दर्शयन् गुरुः ॥७७॥ विरला एव संसारे । कश्चिच्चिंतितार्थदं ॥ चिंतामणिमिवांनोधौ । लनं-
ते मानवं नवं ॥ ७ए ॥ डुःप्रापमपि मिथ्यात्व—निडामुड्रितदृष्टयः ॥ असाधितार्थमेवैतं ।
। हारयंत्यविवेकिनः ॥ ७० ॥ सम्यक्त्वांजनतः स्पृष्ट— दृष्टयो ये तु जानते ॥ सम्यग्देवादित-
त्वानि । तेषामेष फलेग्रहिः ॥ ७१ ॥ देवोऽष्टादशनिर्दोषै—र्मुक्तोऽर्हन्नुच्यते जिनः ॥ कुदेवः
पुनरुत्सर्पि—कंदर्पदर्पकल्मषः ॥ ७२ ॥ महाव्रती निरारंनो । गुरुगौरवमर्हति ॥ परिग्रहग्रहव्य-
ग्र—मतिः कुगुरुरेव सः ॥ ७३ ॥ दयादमशमब्रह्म—निर्मलो धर्म उच्यते ॥ अधर्मस्तद्विपर्यासे—
ऽनासेव्यः स सतां पुनः ॥ ७४ ॥ इदं सम्यक्त्वकमलं । स्मेरं चेच्चित्तपल्वले ॥ श्रेयःकदंब-
कादंब—रंबरस्तत्र दूरगः ॥ ७५ ॥ इति सूरीशितुर्वाचा । जातसम्यक्त्वनिश्चयः ॥ धनः सु-

प्रातमश्चेति । मन्वानः स्वाश्रयं ययौ ॥ ७६ ॥ दुर्दिने सुदिनं पंका—भावः कालेऽपि पंकिले ॥
अजाड्यं जलपूरेऽपि । धनस्याद्भुतकार्यभूत् ॥ ७७ ॥ वर्षंतं घृतधाराभि—र्धनं वीक्ष्येव लज्जि-
ते ॥ गतेऽथ जलदे दूरं । शरत्कालो व्यजृंभत ॥ ७८ ॥ धनस्य सह बोधेन । गते विमलतां
विधौ ॥ आचारेण समं प्राप्ते । तस्य निष्पंकतां पथि ॥ ७९ ॥ याते प्रसत्तिं नादेये । तस्य
चित्त इवांबुनि ॥ हंसीषु सावकाशासु । तस्मिन्नार्हतगीरिव ॥ ८० ॥ नीरे स्मेरेषु पद्मेषु । त-
त्वेष्विव तदाशये ॥ तस्य पुण्येष्विवासन्न—परिपाकेषु शालिषु ॥ ८१ ॥ सार्थश्चचाल चेलु-
श्च । सह श्रीगुरवोऽपि ते ॥ वैदेहानां हि साधूनां । ज्येष्टकल्पोऽनवस्थितः ॥ ८२ ॥ चतुर्भिः
कलापकं ॥ गुरुभ्यो गौरवं तन्व—न्नरण्यानि विलंघ्य स ॥ भवानिव शिवं भव्यो । लेभेऽ-
भीष्टं पुरं धनः ॥ ८३ ॥ तत्र प्राप्तमहीपाल—प्रसादः सादरं धनः ॥ विक्रीणानः स्वपण्यौघं।
नव्यपण्यान्युपाददे ॥ ८४ ॥ तत्रैव गुरवस्तस्थु—स्तदाज्ञां शिरसा वहन् ॥ आययौ मूलनग-
रं । धनः प्राप्तधनः पुनः ॥ ८५ ॥ संपूर्णं पालयित्वायु—रुदीचीनकुरुष्वथ ॥ शीतासरित्पूर्व-
तटे । स भेजे युग्मिधर्मतां ॥ ८६ ॥ कल्पद्रुमैर्दशविधैः । साधितानल्पकल्पनः ॥ पल्यत्रयी-

परिमितं । स स्वभापुरपूरयत् ॥ ए७ ॥ आद्येऽथ त्रिदिवे देवी—हृत्पद्मभ्रमरोऽमरः ॥ जूत्वा स जूरिजिर्जोगै—र्दिव्यमायुरतीतवान् ॥ ए८ ॥ इतश्च—

विजयी विजयः प्रत्य—ग्विदेहेष्वस्ति मंगलः ॥ तत्र वैताढ्यशैलस्थे । देशे गंधारनामनि ॥ एए ॥ पुरे गंधसमृद्धेऽजू—द्बली श तबलो नृपः ॥ चंद्रकांता प्रिया तस्य । चंद्रलेखेव निर्मला ॥ १०० ॥ युग्मं ॥ स सौधर्मसुरश्च्युत्वा । प्रपेदे पुत्रतां तयोः ॥ महाबल इति ख्यातः । क्षितौ नाम्ना गुणेन च ॥ १ ॥ कलाकलापं कलयन् । वर्धमानः शशीव सः ॥ आस्थानं रूपजूपस्य । तारं तारुण्यमासदत् ॥ २ ॥ धुरं धुर्य इव न्यस्य । राज्यं शतबलः सुते ॥ चारुचारित्रमादाय । शिश्राय स्वर्गसंपदं ॥ ३ ॥ पुण्यप्रमत्तोऽत्रुंक्त । राज्यं राजा महाबलः ॥ दोषदोषाचराराण्यं । तारुण्यं महतामपि ॥ ४ ॥ स्वयंबुद्धश्च संजिन्न—श्रोताश्चास्तिकनास्तिकौ ॥ तस्य द्वौ मंत्रिणावास्तां । धर्माधर्मविवांगिनौ ॥ ५ ॥ यदाद्यः सिषिचे गोजिः । पुण्यबीजं नृपेऽब्दवत् ॥ मूलादुन्मूलयामास । तत्तूकर इवापरः ॥ ६ ॥ स्वयंबुद्धोऽन्यदा दध्यौ । यद्यस्मास्वधिकारिषु ॥ जूपोऽयं दुर्गतिं गंता । वंचितास्म तदा वयं ॥ ७ ॥ यद्यप्युक्ता हिता

शिक्षा । नायकाय न रोचते ॥ तथापि भृत्यैः सा देया—ऽन्यथा स स्यादुपेक्षितः ॥ ७ ॥
ततः कदाचित्परिष—न्निषण्णस्य महीपतेः ॥ पुरतः प्रांजलीभूय । स्वयंबुद्धोऽब्रवीदिति ॥ ए ॥
ये न शृण्वंति शृण्वंति । सावज्ञं वा गुरोर्गिरः ॥ पृथ्वीपते न तेऽर्हंति । शिक्षां श्रियमिवाल-
साः ॥ १० ॥ कुलीनोऽसि विनीतोऽसि । तस्मात्त्वमनुशिक्ष्यसे ॥ सुपात्र एव तिष्ठंति । क्षीर-
वद्यद्गुरूक्तयः ॥ ११ ॥ नाथ सर्वेषु कार्येषु । निंदंति निपुणास्त्वरां ॥ पुनस्तामेव शंसंति ।
धर्मे लोकद्वयी हिते ॥१२ ॥ कलाकुलीनतारूपा—रोग्यसौभाग्यसंपदः ॥ स्वर्गापवर्गावपि तौ
। सर्वं धर्मैकहेतुकं ॥ १३ ॥ न रमा परमानापि । स्नेहला महिला अपि । आलंबनाय जा-
यंते । पततां नरकावटे ॥ १४ ॥ पूर्वं रागाग्निना दीप्ता । प्रांते विरहभस्मकाः ॥ उद्मूकानी-
व विषया—स्तापायैवातिसेविताः ॥ १५ ॥ ततस्त्वं तात्त्विकीं बुद्धिं । विधूय विषयव्रजे ॥ वि-
धेहि धर्मं भूपाल । पालय स्वकुलस्थितिं ॥ १६ ॥ तावत्तं स्माह संभिन्न—श्रोताः श्रोतरि भू-
भुजि ॥ अहो हितार्थिता मंत्रिं—स्तवत्स्वामिसुखद्विषः ॥ १७ ॥ नास्त्येव तावदात्मात्र। भू-
तेभ्यश्चेतनोद्भवात् ॥ तदभावात्कस्य पुण्य—पापे स्तस्तत्फलं तथा ॥ १७ ॥ पुण्यपापकृते हंत।

यदि सत्कृत्यसत्कृती ॥ तद्भो माणिक्यलोष्टुभ्यां । पुण्यं पापमकारि किं ॥ १९ ॥ भुक्तं विल-
सितं पीतं । हसितं स्वादितं च यत् ॥ तदेव सारं संसारे । केयं परभवस्य भीः ॥ २० ॥ त-
तो भूपाल बब्बूल—मिवैतद्भणितं त्यजन् ॥ स्निग्धान् विषयकल्पद्रून् । भज त्वं न कुतो भ-
यं ॥ २१ ॥ अथावदत्स्वयंबुद्धो । हंत धूर्तैर्भवादृशैः ॥ ऋजुर्विश्वस्तधी राजा । वंच्यते स्वा-
र्थलोलुपैः ॥ २२ ॥ जडानां न हि भूतानां । धर्मश्चैतन्यमिष्यते ॥ तस्यान्यथानुपपत्ते—रस्त्या-
त्मा पुण्यपापकृत् ॥ २३ ॥ पुण्यपापे विना सौख्य—दुःखे चेद्भवतोंऽगिनां ॥ स्यात्तन्नियामका-
भावात् । सुखि वा दुःखि वा जगत् ॥ २४ ॥ माणिक्यलोष्टुदृष्टांत—स्तद्भावेऽन्यधायि यः
॥ सोऽसन्न हि सुखं दुःखं। जानीतस्तावचेतनौ ॥२५॥ एवं तयोर्मिथस्तर्क—दोलांदोलितचेतसा
॥ राज्ञाऽवज्ञातधर्मेण । निन्यिरे कतिचित्समाः ॥ २६ ॥ दाक्षिणात्यैर्नटैः सम्य—क्तूर्यत्रय-
विचक्षणैः ॥ सभायां भूभुजोऽन्येद्यु—रारेभेऽद्भुतनाटकं ॥ २७ ॥ गीतसंगीतकाह्लाद—निर्निमेषं
नरेश्वरं ॥ अत्याकुलः सभामेत्य । स्वयंबुद्धस्तदा जगौ ॥ २८ ॥ आसीदिति प्रभो धाटी । व-
र्धतेऽस्या महाभयं ॥ मुंच प्रमादमादत्स्व । धर्मं मर्माविधं द्विषां ॥ २९ ॥ तदकस्माद्भयं श्रुत्वा

। व्याकुले सकले जने ॥ गतं गीतादिकुतर्कैः । सभायाः समयैरिव ॥ ३० ॥ आददानं धनुर्नृपं । मंत्र्यूचे मुंच संभ्रमं ॥ मृत्युर्हि धाटी धर्मोऽत्र । सुकृतं न पुनर्धनुः ॥ ३१ ॥ कर्करं शर्कराचूर्णं । इव संगीतके त्वया ॥ वैराग्यं तन्वता मंत्रि—न्नमंत्रितमिदं कृतं ॥ ३२ ॥ प्रस्तावविमुखो मध्ये । संसदं यो विवक्षति ॥ महाश्रमस्थो योगीव । स्वं हासयति सोऽपरैः ॥३३॥ भूपालमित्युपालंभ—वाचालं मंत्र्यवोचत ॥ पत्युरत्युत्तमैर्भूत्यै—र्वाच्यमेव सदा हितं ॥३४॥ त्रिभिर्विशेषकं ॥ सर्वं गीतं प्रलपितं । सर्वं नाट्यं विडंबना ॥ सर्वे भारा अलंकाराः । कामा दुःखावहा हहा ॥ ३५ ॥ त्वमिहत्यैः सुखैर्गृद्धो । मन्यसे न परं भवं ॥ संभिन्नश्रोतसो वाक्या—त्तत्र राजन्निशम्यतां ॥ ३६ ॥ पुरा पुरादतो नाथ । त्वमयासीर्मया सह ॥ रंतुं मेरुगिरौ नेत्रा—नंदनं नदनं वनं ॥ ३७ ॥ तत्राययुः शुभाकाराः । स्ववशा रुचिशालिनः ॥ तदा क्रीडापरा देवा । रेवावारीव वारणाः ॥ ३८ ॥ तान्निरीक्ष्यापसृत्यावां । यावद् दूरे बभूविव ॥ तावत्त्वामेत्य कोऽप्यूचे । देहश्रीभासुरः सुरः ॥ ३९ ॥ किमु वत्स न मां वेत्सि । यदन्य इव शंकसे ॥ दिष्ट्या जानीहि मां नाम्ना—तिबलं स्वपितामहं ॥ ४० ॥ राज्यं त्यक्त्वा सद-

न्यस्ताद् । भ्रताद्ध्वांतकवैजवं ॥ सोऽहं लोहं सुवर्णत्व—मिव सिद्धरसाद्गतः ॥ ४१ ॥ पुण्यैर्मा-मीदृशैश्वर्यं । वीक्ष्यमाणस्त्वमप्यहो ॥ संशयानः परजवे । माजूर्धर्मबहिर्मुखः ॥ ४२ ॥ इत्यु-क्त्वा स ययौ देव—स्तत्किं ते विस्मृतं प्रजो ॥ श्रुत्वेति तदनुध्याय । साधु साध्वित्यव-ग्नृप, ॥ ४३ ॥ संप्राप्तावसरः प्रोचे । सचिवः शुचिवाक्ततः ॥ एकमाकर्णयैतिह्यं । राजन्निर्व्या-जबोधये ॥ ४४ ॥ आसीद् ग्रसीकताराति—प्रतापो जूपतिः पुरा ॥ कुरुचंद्र इति ख्यातः । क्ष्मातले पूर्वजस्तथा ॥ ४५ ॥ चार्वाकमतकिंपाक—कीटः स कुटताभिधं ॥ बजार शर्करा-सारे-ष्वपि सद्धर्मकर्मसु ॥ ४६ ॥

न पुण्यपापे न स्वर्ग-नरकौ तन्निमित्तकौ ॥ दिवादोषे द्युतिध्वांतौ । जात्यंधवद्बोधि सः ॥४७॥ संयोगे पंचजूतानां । समुन्मीलति चेतना ॥ नास्त्यन्यः कश्चिदात्मेति । मत्तः प्रलपतिस्म सः ॥४८॥ नागम्यं पवनस्येव । नाजक्ष्यं जागृवेरिव ॥ नाहिंस्यमजवत्तस्य । कृतांतस्येव किंचन ॥४९॥ अधर्मकर्मठो जंतु-हिंसकः सकलं जवं ॥ अतीत्य प्राप वैचित्य-मंते कर्मवशादसौ ॥ ५० ॥ गीतं श्रुतिसुखं मेने । विलापवदीदृ्ग्पतिः ॥ रूपं दृशोः सुधासत्र-स्वरूपं पांशुवर्षवत् ॥५१॥

तस्य विष्टा श्वानिष्टा । आहाराः सरसा अपि ॥ मृद्व्योऽपि जज्ञिरे हंस-तूलिकाः शूलिका
इव ॥ ५२ ॥ स विपर्यस्तधीरेवं । सेहे देहेन वेदनां ॥ आसन्नायातनरका-दिव प्राप्तां सुदु-
स्सहां ॥ ५३ ॥ राज्ञी कुरुमती सूनु-र्हरिश्चंद्रश्च कोविदौ ॥ अष्टसंज्ञं नृपं क्रंदं । तमुपाचरतां
रहः ॥ ५४ ॥ आक्रंदत्येव पंचत्वं । प्राप्ते पितरि कातरे ॥ प्राप्य राज्यं हरिश्चंद्रो । न्यायेना-
पालयत्प्रजाः ॥ ५५ ॥ तं तादृशं पितुर्मृत्युं । वीक्ष्य स सदृक्षो बुधः ॥ धर्माधर्मफलं साक्षा-
द् । दृष्टेऽर्थे को मतिभ्रमः ॥ ५६ ॥ धर्मतत्वं स जिज्ञासु-रादिदेश विशांपतिः ॥ मित्रं क्षत्र-
कुलं नाम्ना । सुबुद्धिं परमार्हतं ॥ ५७ ॥ धर्म एव त्वया वाच्यो—ऽवसरेऽवसरे मम ॥ अय-
मेवाधिकारस्ते । लोकद्वयशिवंकरः ॥ ५८ ॥ उमित्युक्त्वा विमुक्तान्य-व्यापारः सोऽपि तत्सु-
जे ॥ गुरोः श्रुतां श्रुताद् दृष्टां । धर्म्यामेव धियं ददौ ॥ ५९ ॥ हंसेनेवावदातेन । सन्निहि-
तेन तेन सः ॥ पंकेरुहमिव प्राप । विपरीतः पितुः श्रियं ॥ ६० ॥ प्राप्तमन्येद्युरुद्यानं । नत्वा
केवलिनं मुनिं ॥ श्रुत्वा धर्मं ततो मित्र—वाचि प्रत्ययमाप सः ॥ ६१ ॥ पिता मे कां गतिं
प्राप-दिति पृष्टो महीभुजा ॥ प्रोचे स्फुटजगद्वृत्तो । वाचं वाचंयमाग्रणीः ॥ ६२ ॥ पिता

संतापितानंत—जंतुस्ते पाप्मन्निर्गुरुः ॥ अंजोधितलमश्मेव । सप्तमं नरकं ययौ ॥ ६३ ॥ तत्
श्रुत्वा नरकाज्जात—साध्वसः साधुसन्निधौ ॥ समं सुबुद्धिना पुत्रा—र्पितश्रीः सोऽन्नजद्
व्रतं ॥ ६४ ॥ तौ मिथः सुहृदौ पूर्वं । जगतः सुहृदौ ततः ॥ तपस्यंतौ वपुष्मंतौ । प्रांते मो-
क्षमवापतां ॥ ६५ ॥ हरिश्चंद्रात्ततः स्वामिन् । सत्सु जैनेषु राजसु ॥ संख्यातीतेष्वतीतेषु ।
। त्वमभूः पृथिवीपतिः ॥ ६६ ॥ सुबुद्धेश्चान्वये मंत्रि—ष्वेव धर्माधिकारिषु ॥ असंख्येयेष्व-
तीतेषु । सोऽहं ते सेवकोऽभवं ॥ ६७ ॥ तदेष धर्मकथना—धिकारो नः क्रमागतः ॥ यदकां-
डेऽधुना तूचे । धर्मस्तत्कारणं शृणु ॥ ६८ ॥ अद्य सन्नंदनोद्यानं । चरिष्णुश्चारणौ मुनी ॥
अप्राक्षं भवतः स्वामि—न्नायुर्ज्ञाननिधी अहं ॥ ६९ ॥ ताभ्यां भवत्प्रभोरायु—र्मासमेकमि-
तीरिते ॥ अहमेव रयादेत्य । पूच्चकार पुरस्तव ॥ ७० ॥ स्वभर्तुर्व्यालवेताल—वैरिवह्निविष-
व्यथाः ॥ वीक्ष्यासन्नो विलंबेत । हंत यः सेवकः स कः ॥ ७१ ॥ क्षणं गीतात्क्षणं नृत्या—
त्क्षणं तूर्याद्भवेध्धृतिः ॥ धृतिः सदातनी यस्मा—द्धर्मः स्मर्यते न सः ॥ ७२ ॥ अथोवाच नृपः
शोक—शंकुसंकुलिताशयः ॥ बंधो प्रमादनिद्रालुः । साध्वहं बोधितस्त्वया ॥ ७३ ॥ मम त्व-

या समः कोऽपि । नोपकारी नरः परः ॥ यद्धाग्रसायनैर्भृत्या—वासन्ने मामचेतयः ॥ ७४ ॥ अनल्पजीविताः संतः । पूर्वजाः प्राव्रजन्मम ॥ एकमासावसानायुः । करिष्ये किमहं पुनः ॥ ॥ ७५ ॥ एवं दुःखदवज्ज्वाला—विह्वायवदनं नृपं ॥ मंत्री प्रोचे महीशायुः । स्तोकमालोक्य मा मुहः ॥ ७६ ॥ दीक्षालताद्भुता स्वामि—न्नेकाहमपि रोपिता ॥ सूते स्वसौख्यपुष्पाणि । श्रेयःफलमपि क्वचित् ॥ ७७ ॥ सोऽथाष्टाभिर्दिनैश्चैत्ये—ष्वर्हतां विहितोत्सवः ॥ समं स्वमंत्रिणा भेजे । दिनान् द्वाविंशतिं व्रतं ॥ ७८ ॥ साधितानशनश्चांते । ललितांगसुरोऽजनि ॥ द्वितीयकल्पेऽनल्पश्री—र्विमाने श्रीप्रभाभिधे ॥ ७९ ॥ अभूद्रूपजितानंग—वल्लभामृदुभाषिणी ॥ देवी स्वयंप्रभा तस्य । स्नेहसर्वस्वभाजनं ॥ ८० ॥ शाश्वती प्रतिमा अंचन् । शृण्वन् जैनेश्वरीर्गिरः ॥ वनीशैवलिनीशैला—दिषु रेमे स सप्रियः ॥ ८१ ॥ काले याति तयोः प्रीत्या । मिथोऽनुस्यूतयोरिव ॥ श्लथा पताका सौधाग्रा—दिव देवी दिवश्च्युता ॥ ८२ ॥ क्व गतासि प्रिये मुंच । नैष्ठुर्यं देहि दर्शनं ॥ विबुधो विरह तस्या । विलापानकरोदिति ॥ ८३ ॥ दृढधर्मा सुहृत्तस्य । बभाषे मित्र मा क्लमः ॥ देवीभूतं व्रताद्विद्धि । मां स्वयंबुद्धमंत्रिणं ॥ ८४ ॥ सखे

सखेदं चेत्पत्न्या । विरहो दुःसहस्तव ॥ तदा वदामि तत्प्राप्ते—रुपायं शृणु तद्यथा ॥ ७५ ॥ द्वीपेऽस्ति धातकीखंडे । प्राग्विदेहेषु विश्रुते ॥ नंदिग्रामे जन्मदुःस्थो । गृहस्थो नागिलाभि-धः ॥ ७६ ॥ तपस्विन्यव्रतस्थापि । नागश्रीस्तस्य गेहिनी ॥ तयोः षष् जज्ञिरे कन्या । दारिद्र्यस्य भिदा इव ॥ ७७ ॥ अतःपरं दैववशाद् । दुहिता भविता यदि ॥ तद्गृहं मुखमादाय । ग्राह्यं देशांतरं मया ॥ ७८ ॥ एवं विमृशतस्तस्य । कन्या पुनरजायत ॥ परचक्रागममिव । तत् श्रुत्वाशु ननाश सः ॥ ७९ ॥ कन्याजन्मवियोगश्च । पत्युरित्याकुला शुचा ॥ न मातास्यै ददौ नाम । ख्याता निर्नामिकेति सा ॥ ८० ॥ मातुः क्रमादनिष्टास्ताः । सप्त श्वभ्रधरा इव ॥ प्रौढिं लता इव प्रापुः । सर्वा दुर्वाग्हता अपि ॥ ८१ ॥ ताः सप्त मातर इव । भ्रेजिरे तद्गृहाजिरे ॥ साक्षिण्यः खलु दारिद्र्य—क्षुधोरुपयेमे मिथः ॥ ८२ ॥ बालानन्येदुराढ्यानां । दृष्ट्वा मिष्टान्नभोजिनः ॥ निर्नामिकाप्ययाचिष्ट । मातरं मोदकादिकं ॥ ८३ ॥ त्यज वैरं भज स्वैरं । मोदकैस्तुलितोपलं ॥ अमुं पर्वतमित्येवं । चुक्रोश क्रोधतः प्रसूः ॥ ८४ ॥ इति मातुः कठोरोक्त्या । सा क्षुधार्तापि निर्ययौ ॥ कवयो ह्येव मन्यंते । मात्रालाघवमुत्सवं ॥

॥ ९५ ॥ सुधाकुंभाद्दाहकल्पं । मातुर्वाक्यमिवाप्रियं ॥ ययौ सांबरतिलकं । गिरिं तातमिवा-
तुरा ॥ ९६ ॥ मृत्यै तच्छृंगमारूढा । सा ददर्श दिशैकया ॥ तमारोहंतमस्तोकं । लोकं सुतसु-
हृद्युतं ॥ ९७ ॥ दृष्ट्वाढ्यबालान् कल्पद्रू—निव शृंगारितानसौ ॥ विषांकुरमिवात्मानं । नि-
निंदाजन्मदुर्जगं ॥ ९८ ॥ कुतूहलाकुला मृत्यौ । मंदीभूतमना मनाक् ॥ कायं जनः प्रयांती-
ति । पप्रच्छोपेत्य कंचनं ॥ ९९ ॥ वालेऽद्य निशि शैलेऽत्र । प्रतिमां प्रतिपेदुषः ॥ उत्पेदे केव-
लज्ञानं । युगंधरमुनीशितुः ॥ २०० ॥ तं नंतुं याति लोकोऽय—मित्युदित्वाशु सोऽचलत् ॥
निमेषमपि विज्ञाय । सत्कार्यैं मन्वते बुधाः ॥ १ ॥ म्रियमाणां न मां पश्चा—दपि कोऽपि नि-
षेत्स्यति ॥ ध्यायंतीति जनैः साकं । सापि गत्वानमन्मुनिं ॥ २ ॥ तद्व्याख्यानसुधापान—
प्रीता पप्रच्छ सा प्रभो ॥ आस्ते मत्तोऽपि संसारे । किं कश्चिद् दुःखभाजनं ॥ ३ ॥ वत्से कि-
मस्ति ते दुःखं । नारका नरके हि ये ॥ न तेषां कष्टमादेष्टु—मिष्टे स परमेष्ठ्यपि ॥ ४ ॥
तिर्यक्षु लक्षशो जीवा । वध्यंते धीवरादिभिः ॥ मार्यंते विविधैर्मारै—र्यत्तत्त्वमपि वीक्षसे ॥
॥ ५ ॥ वधबंधक्षिषन्मान—भंगरोगवियोगजाः ॥ विशोऽपि विवशा हंत । सहंते किं न वेद-

नाः ॥ ६ ॥ ईर्ष्याच्चियवनसंताप—वियोगाद्यापियोगतः ॥ लभंते दारुणं दुःख—वृंदं वृंदारका
अपि ॥७॥ तत्किंचिन्नास्ति संसारे । स्थानं यन्निरुपद्रवं ॥ अधर्मिणां पुनर्धर्म—भाजां सौख्य-
मयं जगत् ॥ ८ ॥ न जननी न पिता न च बांधवो । न तनया न च भर्तृसुहृद्वराः ॥ यदिह
दातुमलं सुखमंगिनां । तदपि यच्छति धर्मसुरद्रुमः ॥ ९ ॥ मातापि वैरितां याति । याति वै-
र्यपि मातृतां ॥ यस्याभावे च भावे च । तमेकं धर्ममाश्रय ॥ १० ॥ श्रुत्वा सत्वप्रियां वाच-
मेवं मुनिवरस्य सा ॥ दधौ धर्मे धियं दुःखा—क्रीता रोगादिवौषधे ॥ ११ ॥ मातुराक्रोशजं
दुःखं । क्षपयंती गुरूक्तिभिः ॥ आदाय धर्मं गार्हस्थ्यो—चितं सा ग्राममागमत् ॥ १२ ॥ अ-
त्यंतदुर्भगत्वेन । परिणीता न केनचित् ॥ धार्मिकैर्धर्मपुत्रीति । प्रपन्ना सा व्यधात्तपः ॥ १३ ॥
वर्तते सायुषि क्षीणे । गृहीतानशनाधुना ॥ स्वरूपदर्शनान्मित्र । तस्याः कुरु कुतूहलं ॥ १४ ॥
ललितांगस्तथाकार्षी—त्सापि तद्रूपविस्मिता ॥ तदेकचित्ता मृत्वाभू—त्तस्य देवी स्वयंप्रभा ॥
॥ १५ ॥ युगंधरं गुरुं भूय—स्तमेवागिरिमागतं ॥ स प्रणम्य समं देव्या—भुंक्त भोगान-
नारतं ॥ १६ ॥

अन्यदा कल्पवृक्षेषु । कंप्रेषु समये विव ॥ म्लायत्सु कंठमाल्येषु । ग्रीष्मर्तुकाहतेष्विव ॥१७॥
तत्वज्ञेष्विव नीरागी-भवत्सु वसनेषु च ॥ सुप्रोषित इवालस्ये । दैन्ये च परिवर्धिनि ॥१८॥
दूरीभवंत्यां लज्जायां । विरक्तायामिव स्त्रियां ॥ मत्वासन्नां च्युतिं स्वस्य । ललितांगो विषस-
वान् ॥१९॥ त्रिभिर्विशेषकं ॥ स्वागःशंकितया देव्या । पृष्टः खेदस्य कारणं ॥ आसीदच्यवनं
स्वस्य । निःस्वस्य वदतिस्म सः ॥२०॥ ततस्तया समं गछन् । यात्रार्थं दीपमष्टमं ॥ देवेशादेशतो
देवो । निर्वातिस्म स दीपवत् ॥ २१ ॥ अस्ति पूर्वविदेहेषु । विजयः पुष्कलावती ॥ लोहार्ग-
लं पुरं तत्रा-सतां लोहार्गलायते ॥२२॥ तस्मिन् सुवर्णजंघोऽभू-द्भूपतिर्दुर्दतिद्युतिः ॥ ददौ गि-
रिदरीवासं । यो घूकानामिव द्विषां ॥ २३ ॥ अभूल्लक्ष्मीवती तस्य । प्रिया लक्ष्मीरिवांगिनी
॥ तनूरुहस्तयोर्जज्ञे । ललितांगो दिवश्च्युतः ॥ २४ ॥ वज्रजंघाभिधानोऽसौ । दधानो निखि-
लाः कलाः ॥ रामाहृदयविश्राम- धाम भेजे क्रमाद्वयः ॥ २५ ॥ च्युत्वा स्वयंप्रभा सापि ।
श्रीमतीत्यभवत्कनी ॥ नगर्यां पुंडरीकिण्यां । वज्रसेनस्य चक्रिणः ॥ २६ ॥ पितृप्रीतिपयःपूरै-
र्वर्धमाना लतेव सा ॥ काले कलामधुकरी । केलिस्थानमजायत ॥ २७ ॥ सा कदापि गवा-

ढस्था । ददर्श नगराद्बहिः ॥ वंद्यमानं सुरैः साधुं । तत्कालोत्पन्नकेवलं ॥ २७ ॥ तदालोक-
नवजाति—स्मृतिः स्मृत्वा नवालुनौ ॥ स्नेहेनाकुलिता बाला । प्राग्जन्मपतिभैहत ॥२ए॥
न तं पतिं विनान्येन । वक्तुं युक्तमथो मम ॥ ध्यात्वेति सा गत्नातैव । तूष्णिका सहलाज-
वत् ॥ ३० ॥ जरज्जवीव तद्भाणी । निविष्टा नोदतिष्टति ॥ पितृभ्यां निर्मितैर्यत्नां— न्मंत्रतंत्रौष-
धैरपि ॥ ३१ ॥ रहस्तां पंमिता धात्री । प्रोचे पुत्रि सहेतुकं ॥ चेत्तूष्णिकासि तज्जल्प । सं-
कल्पं पूरयामि ते ॥ ३२ ॥ अथ विश्वस्य विश्वं सा । तस्यै निर्नामिकादिकं ॥ वामिनीव स-
माचख्यौ । प्राग्नवोदंतमात्मनः ॥ ३३ ॥ वरश्चेत्त्वलितांगात्मा । मातः संगछते मम ॥ कन्या-
म्यपि तदैवाहं । विवाहस्य तु का कथा ॥ ३४ ॥ इति तन्निश्चयं ज्ञात्वा । पटुचित्रकृता प-
टे ॥ तत्पूर्वजन्मवृत्तांतं । लेखयामास पंमिता ॥ ३५ ॥ धात्री धात्रीशचक्रस्य । चक्रिसेवार्थमी-
युषः ॥ पटं प्रकटयामास । सिंहद्वारमुपेत्य सा ॥ ३६ ॥ पटस्य श्लक्ष्णतां केऽपि । कलां चि-
त्रकृतः परे ॥ अपरे वर्णयामासु—र्वर्णकानेव नूनुजः ॥ ३७ ॥ कुमारस्तत्र दुर्दांतो । दुर्मर्ष-
णनृपांगजः ॥ लीलाचक्रक्रमन्यास—कोविदस्तावदाययौ ॥ ३७ ॥ पटं वीक्ष्य क्षणं मूर्छा—श-

व्यथामाजगाम सः ॥ किमेतदिति पृष्टश्चा—नुचरैरूचिवानिदं ॥ ३९ ॥ पूर्वजन्मव्यतिकरं । ऊहापोहादिदानीं नो । जातिस्मृतिरजायत ॥ ४० ॥ विलोक्यते विश्वमत्र मम पश्यतः ॥ ऊहापोहादिदानीं नो । जातिस्मृतिरजायत ॥ ४० ॥

मानस्थो । योऽसौ चित्रपटे नरः ॥ सोऽहं प्राग्त्रिदशोऽभूवं । देव्येषा तु मम प्रिया ॥ ४१ ॥ सोऽथ ग्रामादिनामानि । पृष्टः पंडितयाभजत् ॥ विद्वानप्यश्रुतग्रंथ—व्याख्यायामिव जिह्मतां ॥ ४२ ॥ तथापि धैर्यमालंब्य । स प्रोचे शृणु पंडिते ॥ पुः पुंडरीकिणी सेयं । शैलोऽयं त्रिदशाचलः ॥ ४३ ॥ नंदनं वनमेतद्धि । सूरयः सुस्थिताभिधाः ॥ येयं तपस्विनी तस्या । विस्मृतं नाम मेऽधुना ॥ ४४ ॥ तं घूकमिव मार्तंड—मंडलोदंतवाग्मिनं ॥ ध्यात्वा धूर्ततरा धात्री । विस्मिता सस्मितं जगौ ॥ ४५ ॥ यद्वक्षि वत्स तत्सत्यं । सा प्राग्जन्मप्रिया तव ॥ दिवश्च्युता कनीनंदि—ग्रामे पंगुरजायत ॥ ४६ ॥ सा च जातिस्मरा पूर्व—भवभर्तरि रागिणी ॥ इमं चक्रे स्वयं चित्र—पटं स्वानुभवांचितं ॥ ४७ ॥ गताया धातकीखंडं । प्रयोजनवशान्मम ॥ सामुं समर्पयामास । प्राग्प्रियप्राप्तये पटं ॥ ४८ ॥ तदद्य वत्स चिरादद्य । पश्यंत्या निलितोसि मे ॥ एहि तत्र नयामि त्वां । तां स्वीकुरु कृपाकर ॥ ४९ ॥

इति व्याख्यां ब्रुवाणायां । पलायत बलादसौ ॥ उत्ताललालिकादाना—त्कुमारैर्हसितोऽ-
परैः ॥ ५० ॥ जगल्लंघनजंघाल—यशा मूर्त इव स्मरः ॥ वज्रजंघस्तदा तत्रा—ययौ लोहार्गला-
त्पुरात् ॥५१॥ स पटालोकमात्रेण । जातजातिस्मृतिर्जगौ ॥ पंडितेऽसौ कुतोऽलेखि । प्राग्भवानु-
भवो मम ॥ ५२ ॥ अमंस्त सा समीचीन—मपि तस्य वचो मृषा ॥ न साधुष्वपि विश्वासो । वंचि-
तानां ह्यसाधुभिः ॥५३॥ मंरूपे क्वचन कृत्रिमैः सुमै—र्वंचिता मधुकरांगना तथा ॥ सत्यपुष्पनि-
वहेऽपि कानने । नाननं क्षिपति जातु सा यथा ॥ ५४ ॥ पृष्टस्तत्र तयाचष्ट । कृत्वा पाणि-
पुटे पटं ॥ स यथानुभवं चित्र—ग्रामगिर्यादिनिर्णयं ॥ ५५ ॥ च्युतचिंतामणिप्राप्ते—रिव प्री-
ताथ पंडिता ॥ श्रीमतीं वर्धयामास । प्रार्थितप्रियसंगमात् ॥ ५६ ॥ स्त्रीत्वान्मंदा तदा ह-
र्षा—दगुर्वीभूतापि पंडिता ॥ पवनाद्भवनीभूय । ययौ सा भूभुजः सभां ॥ ५७ ॥ लेभेऽहं ल-
लितांगाख्यं । श्रीमत्याः प्राग्भवप्रियं ॥ तया सोन्मादमित्युक्ते । सस्मितं चक्र्यूवोचत ॥५८॥
त्वं प्रयत्नेन लब्धैक—ललितांगा हि माद्यसि ॥ जाने मानिनि तानष्टा—दशाहं लीन-
या पुनः ॥ ५९ ॥ अस्ति प्रत्यग्विदेहेषु । विजयः सलिलावती ॥ यथार्थनामा तत्राभू—द्वी-

तशोकाभिधा पुरी ॥ ६० ॥ जितशत्रुर्नृपस्तत्र । नीत्या राज्यमपालयत् ॥ मनोहरी च कैकेयी।
चेति द्वे तस्य वल्लभे ॥ ६१ ॥ तयोः क्रमाच्चतुःसप्त-स्वप्नसंसूचितौ सुतौ ॥ अभूतां भूतलख्या-
तौ । नाम्नाचलविभीषणौ ॥ ६२ ॥ पितर्यस्ते दधौ राज्यं । वासुदेवो विभीषणः ॥ प्राप्तार्ध-
विजयैश्वर्यो-ऽवार्यदोर्दंडवीर्यतः ॥ ६३ ॥ बिभ्राणं बलदेवत्व-मचलं निश्चलौजसं ॥ मनो-
हरी स्थिरीभूत-वैराग्यावोचदन्यदा ॥ ६४ ॥ तेन भर्त्रा त्वया पुत्रे-णैहिकं सुखमीयुषी ॥
तदामुष्मिकमिच्छामि । वत्स संप्रति दीक्षया ॥ ६५ ॥ क्रीडया शैशवे ग्रस्ते । ग्रस्तेऽनंगेन यौ-
वने ॥ वार्धकेऽपि न यो धर्मे । स्पृहयालुः स बालिशः ॥ ६६ ॥ सोऽवग्मातस्तातपादैः । सा-
पराधानिवोज्झितान् ॥ चेदुज्झसि त्वमप्यस्मां-स्तदा हंत हता वयं ॥ ६७ ॥ भुंजीमहि त्व-
या दत्तं । त्वदायत्तं मनोऽस्ति नः ॥ तीर्थप्राया त्वमस्माकं। किं मातर्व्रतकाम्यसि ॥ ६८ ॥ नि-
षेधिताया अप्येवं । न मुमोच व्रताग्रहं ॥ यदा मनो मनोहर्या-स्तदा स प्रत्यभाषत ॥६९॥
देवभुवं गता चेन्मां । व्यसने बोधयस्यलं ॥ तत्त्वां मुंचेऽन्यथा नैव । सापि तत्प्रत्यपद्यत ॥
॥ ७० ॥ अथोपात्तव्रताधीतै-कादशांगा समाधिना ॥ वर्षकोटिं तपस्तप्त्वा । लांतकेंद्रो ब-

भूव सा ॥ ७१ ॥ अन्यदा भास्कररथा—दिवानीतौ वपुःश्रिया ॥ केनापि ढौकितौ राम—
हरी आरोहतां हरी ॥ ७२ ॥ तौ विपर्यस्तमभ्यस्ता—वाकृष्टावपि चेरतुः ॥ तथा यथा यथा-
र्थत्व—मवहन्नाशुगद्वयं ॥ ७३ ॥ सैनिकैरनुधावद्भि—रप्राप्तौ गरुडाविव ॥ वनीं निन्यतुरश्वौ
तद् । द्वयं शोकातुरे जने ॥ ७४ ॥ क्षणात्तयोः पदपंक्ति—र्भूपट्टे वर्णपंक्तिवत् ॥ अमार्जि
चपलभ्रात्रे—णेव प्रबलवायुना ॥७५॥ तृषाक्रांतो हरिर्नीरं । सीरध्वजमयाचत ॥ स निर्विण्णो-
ऽपि तल्लब्ध—कामो बभ्राम काननं ॥ ७६ ॥ यावदायात्यसौ पद्म—पुटोपात्तपयो रयात् ॥ ता-
वत्यक्तोऽसुभिर्विष्णुः । सतृष्णं को न मुंचति ॥ ७७ ॥ बंधो पयः पिबेत्युक्तो । न यदावोचद-
च्युतः ॥ तदा तं मूर्छितं ज्ञात्वा । निन्ये तरुतलं हली ॥ ७८ ॥ इतश्च बोधमाधातुं । तस्य
लांतकनायकः ॥ बिभीर्बिभीषणवपु—र्भूत्वा प्रादुरभूत्पुरः ॥ ७९ ॥ एकं मूर्छालमपरं । पुर-
स्थं च बिभीषणं ॥ बलो विलोक्य संदिग्ध— मनास्तेनैव भाषितः ॥ ८० ॥ शंकसे निर्विशे-
षेण । मनसा किं हलध्वज ॥ त्वय्यंबुने गते खेटा । मया योद्धुमिहागताः ॥ ८१ ॥ ते म-
याभेत्य विजिता—स्तावत्कश्चन खेचरः ॥ मां मृतं दर्शयित्वा ते । व्यामोहमुपपादयन् ॥८२॥

शवं तदेतं संस्कार्य । पुनीवः स्वां पुरीं पुनः ॥ माभूदस्मदनालोक—शोकसंकुलिता प्रजा ॥
॥ ७३ ॥ शवं तदग्निसात्कृत्वा । प्रापतुस्तौ निजां पुरीं ॥ शोकांधानां नृणां वामा—वामदृग्ला-
भसन्निभौ ॥ ७४ ॥ सर्वतः कुर्वति जन—व्राते नवनवोत्सवान् ॥ स्वां सभामेत्य तौ प्रीत्या ।
निविष्टावेकविष्टरे ॥ ७५ ॥ विष्णुना सह वाग्गोष्टीं । यावदारभते बलः ॥ तावन्न तं पुरोऽङ्गा-
ङ्गी—दद्राक्षीच्च मनोहरीं ॥ ७६ ॥ मातः कुतस्त्वमत्रेति । नत्वोक्ता तेन सा जगौ ॥ न किं
स्मरसि यद्वत्स । त्वया वाचास्मि यंत्रिता ॥ ७७ ॥

तदा वत्साहमुत्साह—पूर्व मादृत्य संयमं ॥ प्राप्ता लांतकनाथत्वं । त्वां बोधयितुमागमं
॥ ७८ ॥ वने विनष्टेऽवरजे । विषादविषविह्वलः ॥ मायाविभीषणीभूय । मयैव त्वं प्रमोदितः
॥ ७९ ॥ तत्तस्य भूरिभूपाल—मौलिमौलीभवत्पदः ॥ विष्णोर्वीक्ष्य तथा मृत्युं । वत्स बुध्यस्व
मा मुह ॥ ८० ॥ नामर्त्या मर्त्यलोकेऽस्मि—न्नशुचौ स्थातुमीशते ॥ यास्यामि तदहं वत्स । त्वं
तु माभूः प्रमादभूः ॥ ८१ ॥ अथ तस्यामदृश्यायां । पुत्रविन्यस्तवैभवः ॥ रामो रामावचोवी-
ची—निक्षोभः सोऽभजद्व्रतं ॥ ८२ ॥ पुण्यप्रभावादीशाने । विमाने श्रीप्रभाभिधे ॥ स देवो

ललितांगोऽभू—द्देवी चास्य स्वयंप्रभा ॥ ९३ ॥ स्वांतिके लांतकेशेन । नीयतेस्मांतरांतरा ॥ प्राक्स्नेहात्सप्रियोऽप्येष । स्नेहः प्रायेण दुस्त्यजः ॥ ९४ ॥ सप्तांश्चान्नवधा भक्त— स्याब्धेरायुः प्रपूर्य सः ॥ ललितांगश्च्युतः स्वर्गा— त्तत्रान्यस्तूदपद्यत ॥ ९५॥ यस्तत्रोत्पद्यते देवो । ललितांगः स उच्यते ॥ युक्ताः स्वयंप्रभादेव्या । सर्वेऽप्येते समायुषः ॥९६॥ स्वपुत्रनामसाधर्म्या—त्सोऽप्यनीयत लांतकं ॥ बिभौजसैवमन्यान्य—ललितांगेषु रज्यता ॥ ९७ ॥ अतीता सप्तदश ते । तेनैषोऽष्टादशः पुनः ॥ अंगजः स्वर्णजंघस्य । यो बुधो बुबुधे त्वया ॥ ९८ ॥ च्युतश्चतुर्दशाब्ध्यायु—र्भुक्त्वा लांतकनायकः ॥ चक्री च तीर्थनाथश्च । जातो जातिस्मरोऽस्म्यहं ॥ ९९ ॥ इत्युक्त्वा चक्रभृद्वज्र—जंघमाह्वयतिस्म सः ॥ मत्पुत्रीं श्रीमतीमंगी—कुरुष्वेत्यादिदेश च ॥३००॥ सोऽप्यूचे चक्रवर्तिन् किं । विद्मो वैदेशिका वयं ॥ यूयमेव प्रमाणं नः । किमत्रार्थे बहूच्यते ॥ १ ॥ चक्र्यथो भूभुजां चक्रं । साक्षीकृत्य महोत्सवैः ॥ वज्रजंघकुमारेण । श्रीमतीं पर्यणाययत् ॥ २ ॥ दिनानि कानिचित् स्थित्वा । चक्रिणा दत्तगौरवः ॥ प्राप्तः प्रियान्वितो वज्र—जंघो लोहार्गलं पुरं ॥ ३ ॥ तनये भाग्यसौभाग्य—कलाभिश्चाधिके स्वतः ॥ राज्यं सुवर्णजंघेन । संक्रमय्याददे व्रतं

॥ ४॥ विलसन् वज्रजंघोऽपि। श्रीमत्या सह कांतया ॥ दिनानानंदनिःस्पंद—मयानिव सदात्यगा-
त् ॥ ५ ॥ अन्यदासन्नसत्वा सा। स्वप्ने श्रीमत्यवेक्षत ॥ स्वकुक्षिजेन सर्पेण। स्वं दष्टं सह भूभु-
जा ॥ ६ ॥ कृतदुःस्वप्नघाताग्र्य—प्रायश्चित्तापि तापभूः ॥ समयेऽसूत सा वज्र—गुप्तं नाम तनूरु-
हं ॥ ७ ॥ वितीर्य वार्षिकं दानं । चिदानंदाय चक्र्यपि ॥ पुत्रे पुष्कलपालाख्ये । न्यस्तराज्यो-
ऽभवद्यतिः ॥ ८ ॥ क्रमादुत्पन्नकैवल्ये । प्राप्ते तत्रार्हतीं श्रियं ॥ रुद्धः कर्मनिरात्मेव । सामंतै-
रेव पुष्कलः ॥ ९ ॥ तमुद्वेष्टयितुं वज्र—जंघोऽचालीत्प्रियान्वितः ॥ अर्धमार्गं गतश्चायं । वि-
ज्ञो व्यज्ञप्यताध्वगैः ॥ १० ॥ विश्वव्याप्तिमुदा नृत्य—त्स्वकीर्तिभ्रमकारणं ॥ यदिदं दृश्यते
देव । पुरः शरवनं महत् ॥ ११ ॥ अस्यांतरस्त्यहिर्दृष्टि—विषः काल इवापरः ॥ वर्त्मैव विल-
सच्चौरं । दूरतस्तदिदं त्यज ॥ १२ ॥ अथान्येन पथा प्राप्तः । स पुरीं पुंडरीकिणीं ॥ पुष्कलं
लीलया शत्रु—संकटादुदवेष्टयत् ॥ १३ ॥ व्यावृत्तः स पथा तेन । पुंसा केनचिदोच्यत ॥
यद् दृग्विषस्त्वयात्याजि । राजन्नागच्छता त्वया ॥ १४ ॥ उत्पन्ने केवलज्ञाने । तत्रैकस्य वने मु-
नेः ॥ वंदनायातदेवाना—मुद्योतोऽभूत्समंततः ॥ १५ ॥ तेन प्रतिहताः शांता । व्यालदृष्टि-

विषद्धटाः ॥ श्रुत्वेति संचचारासौ । मध्ये शरवणं नृपः ॥ १६ ॥ गच्छंस्तदंतरा गच्छा—न्वितौ
स्वावेव सोदरौ ॥ गुरून् ननाम नाम्ना यौ । सेनांतौ मुनिसागरौ ॥ १७ ॥ भक्तो भक्ता-
दिदानेनो—पकृत्य स महात्मनः ॥ प्रतस्थे पथि सोदर्य—भावनां भावयन्निति ॥ १८ ॥ मो-
हस्य बंधादुत्तीर्णौ । सोदरौ मम सुंदरौ ॥ अहं तु हंत बद्धोऽस्मि । कथं राज्यादिबंधनैः ॥१९॥
न हि दूरेऽनयोर्मुक्ति—र्वासश्चरणसारयोः ॥ मया त्वचरणेनेयं । कथं लंघ्या भवाटवी ॥
॥ २० ॥ अतः परं पुरं प्राप्ते—नांगजे न्यस्य वैभवं ॥ भूत्वा सहोदरद्वुणो । पथि पेयं पयो म-
या ॥ २१ ॥ वज्रजंघो विचार्येति । सत्वरं स्वपुरं गतः ॥ श्वो मुमुक्षुरयं राज्यं । निशि सुष्वा-
प सप्रियः ॥ २२ ॥ प्रातः शमिष्यति मनो—मोहस्तिमिरवन्मम ॥ विवेकः पंकविच्छेदी । वि-
वस्वद्वुदेष्यति ॥ २३ ॥ प्रस्थास्येऽहं ततः पुण्य—पथे पथिकवद् ध्रुवं ॥ ध्यायन्निति स ता-
मीहां । चक्रे रंहस्विनीं निशां ॥ २४ ॥ राज्यगृध्नेन पुत्रेण । परमार्थमजानता ॥ सुप्ते पितरि
विश्वस्ते । विषधूमो व्यतायत ॥ २५ ॥ पूर्वं कृष्णागुरुस्तोम—धूपानुभवसाक्षिभिः ॥ विषधूमा-
दिव त्रस्तै—स्तदा स मुमुचेऽसुभिः ॥ २६ ॥ अथोत्तरकुरुष्वासी—दसौ दयितया सह ॥ यु-

र्मिधर्मा मनुष्योऽपि । सुरेभ्योऽधिकभोगभाक् ॥ २७ ॥ तावथायुःक्षयेऽभूतां । सौधर्मे त्रिद-
शोत्तमौ ॥ जन्मांतरानुगप्रेम्णा । प्रासावद्वैततामिव ॥ २७ ॥ कच्छावतीति विजयः ।प्राग्विदे-
हेषु विद्यते ॥ अतिमात्रं श्रियां पात्रं । पुरी तत्र प्रभंकरा ॥ २९ ॥ तत्राभूद्भगवज्जीवो । वै-
द्यस्य सुविधेः सुतः ॥ सोल्लासः सर्वविद्यासु । केशवः क्लेशवर्जितः ॥ ३० ॥ श्रीमत्यात्मा दिव-
श्च्युत्वा । तत्रैवाभूत्पवित्रधीः ॥ ईभ्यस्येश्वरदत्तस्या—भयघोषाख्ययांगजः ॥ ३१ ॥ ईशानचं-
द्रभूभर्तुः । पुत्रो नाम्ना महीधरः ॥ सुबुद्धिर्नाम तनयः । सुनासीरस्य मंत्रिणः ॥ ३२ ॥ पूर्ण-
भद्रस्तु सागर—दत्तसार्थेशितुः सुतः ॥ धनस्य श्रेष्ठिनः सूनु—र्गुणाकर इति श्रुतः ॥ ३३ ॥
एते पंचापि सौहार्दं । भेजिरे वैद्यसूनुना ॥ इंद्रियाणीव मनसा । भूतानीव शरीरिणा ॥३४॥
त्रिभिर्विशेषकं ॥ अन्यदा तस्थुषां तेषां । सर्वेषां वैद्यवेश्मनि ॥ आजगाम तपःक्षामः । कोऽपि सा-
धुरकोपनः ॥ ३५ ॥ अकालपारणात्पुष्ट—कुष्टप्लुष्टतनुं मुनिं ॥ तमालोक्यावदद्वैद्य—नंदनं नृपनंद-
नः ॥ ३६ ॥ सर्वथा व्यथितोऽर्हद्भि—र्मुनींद्रैरपि दूरितः ॥ लोकोऽयं शरणीचक्रे । वैद्येनैवेति
मे मतिः ॥ ३७ ॥ दृशापि न स्पृशंत्येते । यदीदृशमकिंचनं ॥ जिघ्रंति श्रीमतां वर्चो—मूत्रे अपि

धनाशया ॥ ३८ ॥ नाडीपरीक्षकाः केऽपि । केऽपि मूत्रपरीक्षकाः ॥ पुनः पात्रपरीक्षायां । प्रायो
नायुर्विदः क्षमाः ॥ ३९ ॥ पृथ्वीपाल महीपाल–पुत्रमेतं गुणाकरं ॥ उपचर्य जगन्मित्रं । मित्र
धर्मधनं चिनु ॥ ४० ॥ केशवस्तं जगादाथ । साधु बंधो वदन्नसि ॥ परं चिकित्सा न विनौ–
षधं युद्धमिवायुधं ॥४१॥ औषधैस्तु लिन्निस्तैल–रत्नकंबलचंदनैः ॥ चिकित्सास्य नवेल्लक्ष–त्र-
यद्रव्यव्ययोद्भवैः ॥ ४२ ॥ तेषु तैलं ममाप्यस्ति । मंदिरे लक्षपाकिकं ॥ गोशीर्षचंदनं रत्न—
कंबलं पुनरानय ॥ ४३ ॥ ततः कस्यचिदिन्यस्या–पणं गत्वा सनैपुणं ॥ ते तद् द्वयमयाचंत ।
वदंतः साधुकारणं ॥ ४४ ॥ धनलक्षद्वये मूल्ये । ढौकिते श्रेष्ठ्यवोचत ॥ धन्या यूयं युवत्वे-
ऽपि । येषामेषान्नवन्मतिः ॥ ४५ ॥ प्रायो न जायते यूनां । सुबुद्धिर्जायतेऽथवा ॥ ततो या-
ति मरुक्षेत्रे । कदलीवदलीकतां ॥ ४६ ॥ तत्संप्रत्यान्नवं गृह्णो । मूल्योऽयमनुगृह्यतां ॥ पुण्य-
स्यास्य प्रदानेन । कुमारैः करुणापरैः ॥ ४७ ॥ इत्युदित्वा मुधा दत्वा । तेन्यश्चंदनकंबले ॥ त-
त्कालोद्भूतवैराग्यः । स प्रव्रज्य शिवं ययौ ॥ ४८ ॥ ततस्ते सुहृदः सर्वे । जग्मुरात्तौषधत्रयाः
॥ कायोत्सर्गनिलीनात्मा । यत्रास्ते स मुनिर्वने ॥ ४९ ॥ प्रागनुज्ञाप्य तैलेन । ततोऽन्यज्य

भिषग्मुनिं ॥ दक्षो विक्षोभयामास । कृमीनंतर्गतानपि ॥ ५० ॥ कृमयस्तैलतापार्त्ता । वेष्टिता-
खिलवर्ष्मणि ॥ व्यलगन्निर्गता श्लक्ष्ण—शीतले रत्नकंबले ॥ ५१ ॥ न्यधात्कृपानिधिर्धेनु—
शवे शूकोज्झितस्ततः ॥ स्थलसंतापितान्नीरे । तिमीनिव कृमीनसौ ॥ ५२ ॥ अशीतयत्कृमि-
क्षोभ—वेदनाविह्वलं वपुः ॥ विलिप्य व्रतिनो वैद्य—नंदनश्चंदनद्रवैः ॥ ५३ ॥ त्रिर्विधाय क्रि-
यामेवं । त्वग्मांसास्थिगतानपि ॥ कृमीन् क्रमात्समाकृष्य । सोऽक्षिपद्गोकलेवरे ॥ ५४ ॥ एवं
शुश्रूषमाणस्तैः । कियद्भिरपि वासरैः ॥ जातस्वर्णसदृग्वर्ण—शरीरो व्यहरन्मुनिः ॥ ५५ ॥
तेऽपि कंबलगोशीर्ष—शेषविक्रयजैर्धनैः ॥ विहारं कारयामासु—र्यशोराशिमिव ध्रुवं ॥ ५६ ॥
इत्यादि पुण्यनिर्माण—निर्मलीभूतचेतसः ॥ सर्वेऽपि भेजिवांसस्ते । समये संयमश्रियं ॥५७॥
तपसातितनूभूत—तनवो लाघवादिव ॥ दिवमच्युतमारूढाः । प्रांते षडपि ते सुखं ॥ ५८ ॥
इतश्च—

विजये पुष्कलावत्यां । प्राग्विदेहेषु विद्यते ॥ पुरी पौरयशःपूर—पांडुरा पुंडरीकिणी ॥ ५८ ॥
वज्रसेनोऽत्र भूपोऽभू—दभूमिः सकलापदां ॥ यस्य तीर्थकृतोऽभूव—न्नमरा इव किंकराः ॥ ५९ ॥

तस्य स्वादूक्तिपीयूष—सारणी धारिणी प्रिया ॥ आनशे मानसे भर्तुः । कलहंसीतुला यया ॥ ६१ ॥
भिषग्जीवो दिवश्च्युत्वा । वज्रनाभस्तयोः सुतः ॥ अभूच्चतुर्दशस्वप्न ख्यातचक्रित्ववैभवः ॥ ६२ ॥
ते चाभूवन्नृपामात्य—सार्थेशश्रेष्ठिनंदनाः ॥ तस्य कल्पद्रुमस्येव । पारिजातादयोऽनुजाः ॥६३॥
बाहुः सुबाहुः पीठोऽथ । महापीठ इति क्रमात् ॥ तेषां समानशीलानां । रूढिमानशिरेऽभिधा
॥६४ ॥ तेषामुपकलाचार्यं । कला अभ्यस्यतां सतां ॥ स्पर्धयेव श्रियो भेजे । वाग्देवी वदनांबु
जं ॥६५॥ न्यस्य स्वतनये राज्यं । दानं सांवत्सरं ददौ ॥ लोकांतिकानां देवानां । विज्ञप्त्या स
नृपस्ततः ॥६६॥ यदा गृहीतचारित्रः । केवलज्ञानमापसः ॥ दीप्रं तदा तदाभास—मिव चक्रं
च नंदनः ॥ ६७ ॥ वज्रनाभोऽखिलांस्तेन । चक्रेणाक्रम्य भूभुजः ॥ आससाद स्थिरां धर्म—वि
जयी विजयश्रियं ॥ ६८ ॥ चतुर्भिर्मंडलाधीशैः । सोदरः सोदरैः सह ॥ देवेंद्र इव दिक्पालै—र
न्वभून्निस्तुषं सुखं ॥६९॥ दिवश्च्युत्वाभयघोषो । राजसूः सुयशा इति ॥ बभूव प्राग्भवस्नेहा—
च्चक्रिणोऽस्यैव सारथिः ॥ ७० ॥ अन्यदा विहरन् वज्र—सेनस्तीर्थकृदाययौ ॥ अदूरे पुंडरी-
किण्या । नलिनीगुल्मकाननं ॥ ७१ ॥ तातं तीर्थंकरं नंतुं । वज्रनाभः सबांधवः ॥ समवसर-

णं गत्वा । ह्यशृणोद्देशनामिति ॥ ७१ ॥ मानुष्यं कल्पवृक्षांकुरकरणि चिरात्प्राप्य नाग्यैरनंगैः । संसाराराभभूमौ विषयविषरसैर्हंत सिंचंत्यसंतः ॥ यद्येतच्चेतनाढ्याः कथमपि लजते पुण्यपीयूषधारा—सेकं दत्ते तदेकं किमपि शिवफलं येन भूयो न दुःखं ॥ ७२ ॥ प्रबुद्धो वज्रनाभोऽथ । न्यस्तराज्यतनूरुहे ॥ सह स्वबंधुभिः सूते । द्रुतं जग्राह संयमं ॥ ७४ ॥ दधानः पूर्वरत्नानि । ब्रह्मगुप्तिनिधीनपि ॥ ऊज्जन्नासौ व्रतस्थोऽपि । साधुचक्रेशतां निजां ॥ ७५ ॥ ईहंतेस्म निरीहं तं । स्पर्धयेव वुवूर्षवः ॥ अरविंदमिवालिन्यः । सर्वदा सर्वलब्धयः ॥ ७६ ॥ संप्राप्तेऽर्हति निर्वाणं । वज्रनाभो गणं दधौ ॥ सहस्रदीधितेरस्ते । प्रकाशं चंद्रमा इव ॥ ७७ ॥ अर्हत्सिद्धप्रवचना—चार्यवृद्धतपस्विनां ॥ सुश्रुतानां च वात्सल्या—न्नित्यं ज्ञानोपयोगतः ॥७७॥ तपोविनयसम्यक्त्व—शीलावश्यकदानतः ॥ वैयावृत्त्यसमाधिभ्यां । मनागप्यप्रमादतः ॥७९॥ अपूर्वज्ञानग्रहणा—च्छासनोन्नत्यनिर्मितेः ॥ श्रुतभक्तेश्च राजर्षि-स्तीर्थकृत्कर्म सोऽचिनोत् ॥ ॥ ७० ॥ त्रिभिर्विशेषकं ॥ एकादशांगपारीणे—ष्वथ शेषेषु पंचसु ॥ बाहुर्भोगफलं वैया—वृत्त्यं चक्रे महात्मनां ॥ ७१ ॥ सुबाहुर्बाहुबलकृत् । कृतिकर्म च निर्ममे ॥ निर्ममेशोऽपि सूरींद्र—

स्तेने तदुपबृंहणं ॥ ८२ ॥ न समर्था भवंत्येके । सामर्थ्ये वालसाः परे ॥ धन्यौ बाहुसुबाहू यौ । कर्मठौ गष्ठकर्मणि ॥ ८३ ॥ ततः पीठमहापीठौ । दधतुः कलुषं मनः ॥ अपि सदृत्तपालीकौ । प्रावृषीवांबुपल्वलौ ॥ ८४ ॥ यो दत्ते तं स्तुवन्नेष । गुरुर्लोकानुवर्तकः ॥ नोचेत्किमच्युताचारा—वपि नौ न प्रशंसति ॥ ८५ ॥ लोकैर्हि मेघा वर्षंतो । वर्षासु मलिना अपि ॥ स्तूयंते न त्वदातारः । शारदा विशदा अपि ॥ ८६ ॥ इत्यनालोच्य तौ माया— शल्यं मत्सरिणौ मुनी ॥ योषिजान्मफलं कर्म—दृढबंधं बबंधतुः ॥ ८७ ॥ अंते षडपि ते कालं । विधायाधिविवर्जिताः ॥ सर्वार्थसिद्धमानंचु—र्विमानं लक्षयोजनं ॥ ८८ ॥ इतश्च—अस्ति प्रत्यग्विदेहेषु । विजवाटोपराजिता ॥ पराजितामरापुरी—मदा पूरपराजिता ॥ ८९ ॥ भूमानीशानचंद्रोऽत्र । जन्ययात्रामुपेयुषा ॥ स्वीकृतासिलता येन । चित्रं सूता कृणाद्यशः ॥ ९० ॥

तत्र चंदनदासोऽभू—दिभ्यः श्रीद इव श्रिया ॥ तस्य सागरचंद्राख्य—स्तनयो विनयोज्ज्वलः ॥ ९१ ॥ पूर्णेंदुवत्प्रसन्नास्यो । गंगाजलवदुज्ज्वलः ॥ स कस्य सिद्धविद्याया । लाभवन्नाभवत्प्रियः ॥ ९२ ॥ इभ्येनाशोकदत्तेन । कठिनेन स्वभावतः ॥ बब्बुलेनेव रंभाद्रोः । सांगत्यं तस्य प-

प्रथे ॥ ९३ ॥ रहः स शिक्षितः पित्रा । विप्रत्रांथिकया गिरा ॥ योऽयं वत्स वयस्यस्ते । स मे न जाति सुंदरः ॥ ९४ ॥ उज्ज्वलेन बहिः शंखे—नेवांतः कुटिलात्मना ॥ आहतेन सुवाचापि । संख्या जिह्वाकता नृणां ॥९५॥ क्षीयंते मृदुला नूनं । संपर्के कर्कशात्मनां ॥ कोशेयतंतोः कुशलं । मिलितस्योर्णया कियत् ॥ ९६॥ न क्रूरा मृदुवाचोऽपि । कदाचन सुखावहा ॥ सारंगरंगजंगाय । गायन्नपि हि लुब्धकाः ॥९७॥ ददतोऽपि न तोषाया । प्रायो मुग्धधियां खलाः ॥ मांसपेशीं ददानोऽपि । धीवरो हंति यत्तिमीन् ॥ ९८ ॥ सोऽप्यूचे तत्परास्तात । परप्रीतिच्छिदे खलाः ॥ तदुक्त्या मास्म शंकिष्टाः । सुहृदं मे सदूषणं ॥ ९९ ॥ यादृक्तादृगसावस्तु । किं तया चिंतया मम ॥ रक्ष्यः स्वात्मैव दोषाब्धौ । मज्जंश्छेकैः प्रयत्नतः ॥ ४०० ॥ तातं प्रत्युत्तरय्यैवं । न स्वमित्रं मुमोच सः ॥ गत्यागत्यादिचेष्टासु । संबंधं पूर्वकर्मवत् ॥ १ ॥ अन्यदा सारशृंगारः । समं मित्रेण तेन सः ॥ वसंततौ वनं प्राप । रंतुं रतिपतिद्युतिः ॥ २ ॥ तदा च पूर्णजउन्य—दुहिता प्रियदर्शना ॥ पुष्पाण्यवचिनोतिस्म । तत्र सांद्रद्रुमांतरे ॥ ३ ॥ सा स्वर्णाजरणालोका—नंदिजिर्वंदिजिर्धृता ॥ त्रायतां कोऽपि मां वीरो—ऽधुनैवं तारमारटीत् ॥ ४ ॥ तस्या अमंद

माकंदं । श्रुत्वा सत्वाधिकाग्रणीः ॥ कृपाणीं पाणिनादाय । दधावे सागरो रयात् ॥ ५ ॥ स ब-
लान्मोचयामास । बंदिनां बाहुपंजरात् ॥ जयक्रांतददर्श कन्यां । मृगीं व्याघ्रमुखादिव ॥ ६ ॥
ततः प्राणपणात्ताया । दयितोऽस्त्वयमेव मे ॥ ध्यायंतीति ययौ कन्या । सद्य तन्मयतां गता
॥ ७ ॥ सागरोऽपि वहन्नेतां । हृदा हारलतामिव ॥ तदंगचंगिमाक्रांत — चेताः स्वस्थानमी-
यिवान् ॥ ८ ॥ नाभुंक्त नापिबन्नापि । व्याहरन्नत्वसेत सः ॥ किंत्वेकतानस्तामेव । सिद्धवि-
द्यामिवास्मरत् ॥ ए ॥ उद्वेलतां दधानोऽपि । तन्मुखेंदुनिरीक्षणात् ॥ सागरः केवलं स्वस्थः ।
कुलमर्यादया स्थितः ॥ १० ॥ ज्ञात्वा कथंचित्तज्ज्ञावान् । जनकः प्रियदर्शनां ॥ पूर्णचन्द्रः स्वपु-
त्राय । ययाचे सोऽप्यदान्मुदा ॥ ११ ॥ अथ मिथो मनोवृत्त्या । पूर्वं संयुक्तयोस्तयोः ॥ वपु
षाप्यजवद्योगः । पितृक्लृप्तविवाहयोः ॥ १२ ॥ तयोः परप्रियासक्ति—मुक्तयोर्युभिनोरिव ॥
अन्योन्याव्यभिचारित्व — मनूद्भिश्रंजकारणं ॥ १३ ॥ अशोकः शठधीः सक्त— मना मित्र-
स्य योषिति ॥ व्यक्तं वक्तुं क्षणं नाप—त्तत्पुण्यैरिव कीलितः ॥ १४ ॥ कदापि सागरे गेहा—
द्बहिर्याते प्रविश्य सः ॥ संप्राप्तावसरश्चैवं । बजाषे प्रियदर्शनां ॥ १५ ॥ मुग्धे पत्युर्न जानासि

। त्वं स्वरूपं यतोऽसकौ ॥ अद्य श्वो धनदेवस्य । वध्वा मंत्रयते रहः ॥ १६ ॥ क्रयविक्रयदि-
ग्यात्रा—राजसेवादिकर्मसु ॥ न मंत्र्यते नरैः स्त्रीभिः । सह सर्वोऽपि वेत्त्यदः ॥ १७ ॥ तन्म-
न्ये चिरदृष्टत्वा—ज्ञातोऽयं त्वय्यरोचकी ॥ तां वल्लभयति प्रायो । दुःप्रापेऽग्रे नृणां स्पृहा ॥
॥ १८ ॥ स चेत्त्वां बाह्यवृत्त्यैव । रमयन् रमते तया ॥ जड़े तन्मां पत्तीकृत्य । भव त्वमपि
तादृशी ॥ १९ ॥ न स्वभर्तृसमाचारा । दूष्यंते हि कुलांगनाः ॥ पश्चादपीति जल्पंती । त्वं
न केनापि दंड्यसे ॥ २० ॥ श्रुत्वेति तद्वचः कर्ण—कटु सा रोषतोऽभ्यधात् ॥ निजां जिह्वा-
मसंभाव्य । किं रे वातुल जल्पसि ॥ २१ ॥ यद् दुःशील सुशीलेऽपि । दोषं वक्षि मम प्रिये
॥ तत्ते युक्तं यतो भ्रांतो । भ्रांतं विश्वमपीक्षते ॥ २२ ॥ तद्याहि याहि वीक्षापि । पापहेतुः
सुहृद्‌द्रुहः ॥ इत्याकृष्टस्तया मंक्षु । स ध्वांक्ष इव निर्ययौ ॥ २३ ॥ विछायवदनो भ्राम्यन् । द-
दृशे सागरेण सः ॥ पृष्टो दुःखस्य हेतुं च । ससूत्कारमवोचत ॥ २४ ॥ कथ्यते कति दुःखस्य
। हेतवो भववासिनां ॥ शिवाफेत्कृतयः प्रेत—भवनस्थायिनामिव ॥ २५ ॥ शिलाक्रांतेव
जिह्वा मे । जिह्वा यद्यपि जल्पितुं ॥ तथापि न हि किंचित्ते । गोप्यमस्तीति कथ्यते ॥२६॥

यावदत्र स्त्रियो लोके । नृणां तावत्कुतः सुखं ॥ यतो जल्पति यत्किंचि—न्मित्र मां तव प-
त्न्यपि ॥ २७ ॥ स्वयं स्थास्यत्यसौ ह्रीणा । प्रत्युक्त्या वर्धते कलिः ॥ इत्यश्लीलं ब्रुवाणापि ।
सा मयोपेक्षिता चिरं ॥ २८ ॥ ततःप्रभृत्यहं न त्वां । विनागच्छं गृहं तव ॥ त्वत्परोक्षं च ना-
जल्पं । प्रियदर्शनया सह ॥ २९ ॥ नियतिप्रेरितोऽद्याहं । त्वां द्रष्टुं त्वद्गृहं गतः ॥ बाह्वौ-
धृतस्तया कामा—र्तया स्वोचितकर्मणे ॥ ३० ॥ ततोऽवधूय तां बालां । बलादस्मि पलायितः ॥
अपि वह्निशिखारूढ—मदग्धं स्वं विचिंतयन् ॥ ३१ ॥ म्रिये वा यामि दूरे वा । ..रे नद्याः
पतामि वा ॥ इत्यनल्पविकल्पस्थो । भ्राम्यन्मित्र त्वयेक्षिषि ॥ ३२ ॥ एतदुक्तं न मे वक्तुं ।
तथाप्यूचे हितैषिणा ॥ कुकलत्रकृतोऽनर्थो । माभूत्तव ऋजोरिति ॥ ३३ ॥ नैतत्तस्यास्त्वया
वाच्यं । भाव्यं गंभीरचेतसा ॥ प्राणानपि तृणीयंते । रोषिताः खलु योषितः ॥ ३४ ॥ प्रिया-
वृत्तमिति श्रुत्वा । दुःश्रवं दुःखभूरभूत् ॥ सागरो हृदि विक्षिप्तां—गारभार इव क्षणं ॥३५॥
ऊचे च मित्र मा खेदं । कृ..स्त्वं भाग्यवानसि ॥ व्यसने पातयंत्येताः । स्त्रियो ... न
किं ॥ ३६ ॥ स्नेहेन वर्धि... ...म—श्रीकर्यः कनकच्युतः ॥ आसेदुषां हि तापा... ...ो

दीपिका इव ॥ ३७ ॥ व्यवसाये प्रवर्त्तस्व । मास्मार्षीस्तद्वचः पुनः ॥ एवं प्रसादितस्तेन । स-
मायी मुदमादधौ ॥ ३८ ॥ किंचिदाकुंचितप्रीति—रपि मित्रद्रुरुक्तिभिः ॥ समं दयितया पू-
र्वं—रीत्या निर्वहतिस्म सः ॥ ३९ ॥ विच्छेदो मज्जिरा माभू—दनयोर्बालमित्रयोः ॥ इत्यशो-
कस्य वृत्तांतं । कांतमश्रावयन्न सा ॥ ४० ॥ ऋजुत्वाद्दानशीलत्वा—द्बद्धयुग्मिनरायुषौ ॥ सम-
ये तौ विपेदाते । युगपद्युग्मिनाविव ॥ ४१ ॥ सुसंस्थानस्य निःशेष द्वीपमदच्छिदः ॥ य-
ज्जंबूद्वीपयोधस्य । धत्तेऽधिज्यधनुश्श्रियं ॥ ४२ ॥ तत्राभूद्भरतक्षेत्रे । सुखदुःखमारकः ॥ अ-
स्या एवावसर्पिण्याः । समतीतेऽरकद्वये ॥ ४३ ॥ एकक्रोशसमुच्छ्राया । एकपल्योपमायुषः ॥ ए-
काहांतरिताहाराः । पूरिताशाः सुरद्रुमैः ॥ ४४ ॥ असद्दृज्ञातेयसंबंधाः । प्रायः पृथ्वीफलाशि-
नः ॥ असेव्यसेवकन्यायाः । यत्रासन् युग्मिनो जनाः ॥ ४५ ॥ युग्मं ॥ पल्याष्टमांशशेषेऽस्मि-
न्नरके युग्मरूपतः ॥ गंगासिंध्वंतरे जज्ञे । जायया सह सागरः ॥ ४६ ॥ स्वर्णवर्णसुसंस्था-
नो । मेरुः क्षितिधरेष्विव ॥ महिम्ना महसा चासौ । रेजे शेषेषु युग्मिषु ॥ ४७ ॥ विपद्याशो-
कदत्तोऽपि । जातः श्वेतश्चतुरदः ॥ मायित्वाद्धस्तैरश्चा—युष्कस्तत्र सिंधुरः ॥ ४८ ॥ अ-

अन्यदर्शनोद्भूत—प्रेम्णोः प्राग्भवयोगतः ॥ तयोरूहादभूज्जाति—स्मृतिर्युगलहस्तिनोः
॥ ४९ ॥ आलिंग्य शुंडादंडेन । दंती तं युग्मिनं मुदा ॥ इंद्रमैरावण इव । स्कंधमारोपयन्नि-
जं ॥ ५० ॥ चतुर्दंतद्विपारूढं । वनं स्वैरं विहारिणं ॥ तमन्ये यु नश्चक्रुः । नाम्ना विमल-
वाहनं ॥ ५१ ॥ ततः कालानुमानेन । प्रभावे कल्पभूरुहां ॥ अ भवति गृध्या च । कलिं
कुर्वत्सु युग्मिषु ॥ ५२ ॥ तच्छासनाय हाकार—दंडं वितनुतेस्म सः ॥ एवं कुलकृतामाद्यो—
भवद्विमलवाहनः ॥ ५३ ॥ खड्गघातादिव त्रस्ता । हाकारादपि युग्मिनः ॥ तत्कृतां कल्पवृक्षा-
दि—मर्यादां नातिचक्रमुः ॥ ५४ ॥ षण्मासावशेषायुः । पत्न्यां चंद्रयशस्यसौ ॥ चक्षुष्मच्चंद्र-
कांताख्य—मुत्पाद्य मिथुनं मृतः ॥ ५५ ॥ द्वैतीयिकः कुलकर—श्चक्षुष्मानथ पप्रथे ॥ तद्भू-
र्यशस्वी कुलकृत् । सुरूपावल्लभोऽभवत् ॥ ५६ ॥ तज्जन्माथाभिचंद्रोऽभू—त्प्रतिरूपाप्रियान्वि-
तः ॥ प्रसेनजित्ततश्चक्षुः—कांतया कांतया युतः ॥ ५७ ॥ तत्सूनुर्मरुदेवोऽभू—त्पत्न्या श्रीकां-
तया सह ॥ द्वौ द्वावेषौ क्रमाज्जातौ । हामाधिक्कारदंडकौ ॥ ५८ ॥ तुर्यः शुक्लो द्वितृतीय—पं-
चमाः श्यामलद्युतः ॥ द्वौ शेषावेषु हेमाभौ । श्यामाः सर्वा अ स्त्रियः ॥ ५९ ॥ नवाष्टस-

सकोदंड— शतानि वपुरुच्छ्रयः ॥ ततः पंचाशदूनानि । क्रमादेषां स्त्रियामपि ॥ ६० ॥ अमीषु
प्रथमस्यायुः । पल्यस्य दशमोंशकः ॥ असंख्येयानि शेषाणां । पूर्वाणि क्रमहानितः ॥ ६१ ॥
सुपर्णवारिधिद्वीप—कुमारेषु द्वयं द्वयं ॥ उत्पन्नमेषां नागेषु । स्त्रियः सर्वांगजश्च सः ॥ ६२ ॥
अथाभूत्कुलकृन्नाभि-मरुदेवस्य नंदनः ॥ आयुस्त्रायहीनोऽपि । पूर्वेभ्यो यशसाधिकः ॥ ६३ ॥
निन्यिरे सत्पथं काल—दोषादुन्मार्गगाः प्रजाः ॥ येन धिक्कारदंडेन । गोपालेनेव धेनवः ॥
॥ ६४ ॥ संख्येयपूर्वलक्षायुः । कांत्या कनकजित्वरः ॥ सपादपंचकोदंड-शतोच्चा [illegible] ज यः
॥ ६५ ॥ मरुदेवा प्रिया तस्या—नवक्षतृसमोच्चया ॥ जगत्प्रभोः प्रसूर्नित्यं । वं [illegible]
गाय या ॥ ६६ ॥ कादंबिनीव शैलेशं । स्वर्णांबुजमिवालिनी ॥ प्रियं प्रियंगुरुक्प्राप्य । परत्ना-
गं पुपोष या ॥ ६७ ॥ त्रयस्त्रिंशत्सागरायुः । पूरयित्वा महासुखं ॥ देवः स वज्र[illegible]नात्मा ।
च्युत्वा सर्वार्थसिद्धितः ॥ ६८ ॥ तस्मिंश्चतुर्युताशीति—पूर्वलक्षोनकेऽरके ॥ आष[illegible]
स्य । चतुर्थ्यां वैश्वगे विधौ ॥ ६९ ॥ मरुदेव्या अलंचक्रे । मध्यमर्धनिशाचरे ॥ [illegible] न जग-
द्वंद्यो । रत्नं रत्नखनेरिव ॥ ७० ॥ वृषत्तासिंहलक्ष्मीस्र-क्चंद्रार्ककलशध्वजाः ॥ सरोव[illegible]धिविमा-

नोच्च—रत्नच्चयद्दविर्भुजः ॥ ७१ ॥ एवं चतुर्दशालोक्य । स्वप्नान्नुद्रिलोचना ॥ उपेत्य पत्युरूचे सा । रहो दृष्टान्निधीनिव ॥ ७२ ॥ युग्मं ॥ यावत्कंचन स ब्रूते । विचारं तावदाययौ ॥ कंप्रे स्वसिंहासने दत्तो—पयोगस्त्रिदशेश्वरः ॥ ७३ ॥ प्रणम्य प्रणयप्रह्व—स्तां प्रोवाच पुरंदरः ॥ स्वप्नैरेन्निर्जगन्नाथो । भावी मातः सुतस्तव ॥ ७४ ॥ सारं यद्दैवतं यच्च । यद्ध्येयं यत्परापरं ॥ तत्तत्त्वं दधानाद्य । गर्न्ने केन न गीयसे ॥ ७५ ॥ एवं स्तुत्वा गते तस्मि—न्नपरेऽपि सुरेश्वराः ॥ एत्य नत्वा तथैवोक्त्वा । स्वप्नार्थं स्वपदं ययुः ॥ ७६ ॥ नान्नेः पत्नी ददाना तं । गर्न्नं निरब्भ्र विक्रमं ॥ गिरेर्गुहेव हर्यक्ष—मधृष्या जगतोऽप्यन्नूत् ॥ ७७ ॥ मुखमापांडु विपुला । श्रोणी द्रोणीयिते दृशौ ॥ आस्तां तस्याः स्तनौ पीनौ । सुतरां गर्न्नगे प्रन्नौ ॥ ७८ ॥ यियासितं शिवपुरं । वीक्ष्येवासन्नमात्मनः ॥ बन्नूव मंदगमना । देवी गर्न्नन्नरालसा ॥ ७९ ॥ दीपगर्न्नान्नपेटाव—न्नास्वद्गर्न्नान्नपंक्तिवत् ॥ स्वामिनी न्नगवद्गर्न्ना । तेजःपुंजमयी बन्नौ ॥ ८० ॥ दिनेषु परिपूर्णेषु । चैत्रकृष्णाष्टमीतिथौ ॥ चंद्रमस्युत्तराषाढां । प्राप्ते मध्यनिशान्तरे ॥ ८१ ॥ स्वामिनी सुषुवे पुत्रं । सपुत्रिकं समाधिना ॥ वनावनी सवल्लिक—मिव कृतक्क्रमं द्रुमं ॥ ८२ ॥ युग्मं ॥

सोल्लासा भूरनौद्धत्यः । पवनो निर्मलं जलं ॥ एकालोकं जगज्जात—मात्रेऽप्यासीज्जिनेश्वरे
॥ ७३ ॥ दिवि दुंदुभयो नेदुः । प्रसत्तिं भेजिरे दिशः ॥ उच्चस्थानं ग्रहाः प्रापु-स्तदा भव्या
अपि क्रमात् ॥ ७४ ॥ तत्रैयुरष्टदिक्कन्या । विज्ञायासनकंपतः ॥ मुक्त्वा मानं विमानं चा-ध्या-
स्य लोकादधस्तनात् ॥ ७५ ॥ भोगंकरा भोगवती । सुभोगा भोगमालिनी ॥ तोयधारा विचि-
त्रा च । पुष्पमाला त्वनिंदिता ॥ ७६ ॥ ता जिनं जननीं नत्वा । स्वनामानि प्रकाश्य च ॥
उक्त्वा चागमने हेतुं । ततो वायुं वितेनिरे ॥ ७७ ॥ आयोजनं जिनोत्पत्ति—भवनाद्भुवि वा-
युना ॥ उत्सार्य तास्तृणाद्यर्ह—द्गुणमानोद्यताः स्थिताः ॥ ७८ ॥ मेघंकरा मेघवती । सुमे-
घा मेघमालिनी ॥ सुवत्सा वत्समित्रा च । वारिषेणा बलाहिका ॥ ७९ ॥ दिक्कन्याष्टाविमाः
प्राग्व—दूर्ध्वलोकादुपागताः ॥ नत्वा जिनं जिनांबां च । विचक्रुर्मेघमंडलं ॥ ८० ॥ ईषद्गं-
धोदकैः सिक्त्वा । पुष्पवृष्टिं वितत्य च ॥ तारजः शमयामासुः । पृथिव्याः स्वात्मनोऽपि च ॥
॥ ८१ ॥ नंदोत्तरा च नंदा चा—नंदाथो नंदिवर्धना ॥ विजया वैजयंती च । जयंती चाप-
राजिता ॥ ८२ ॥ एताः पौरस्त्यरुचका-दष्टौ पूर्ववदागताः ॥ नत्वा जिनजनन्यौ च । तस्थुः

पाणिस्थदर्पणाः ॥ ९३ ॥ समाहारा सुप्रदत्ता । सुप्रबुद्धा यशोधरा ॥ लक्ष्मीवती शेषवती ।
चित्रगुप्ता वसुंधरा ॥ ९४ ॥ एता अष्टावववाचीन—रुचकात्प्राग्वदागताः ॥ सारभृंगारशृंगार—
पाणयः प्रणताः स्थिताः ॥ ९५ ॥ इलादेवी सुरादेवी । पृथ्वी पद्मावती तथा ॥ एकनाशा न-
वमिका । भद्रा सीता तथाष्टमी ॥ ९६ ॥ इमा अष्टौ तदागत्य । प्रत्यग्रुचकभूभृतः ॥ ताल-
वृंतकरास्तस्थु—र्नत्वा मात्रा समं जिनं ॥ ९७ ॥ अलंबुसा मितकेशी । पुंडरिका च वारुणी
॥ हासा सत्यप्रभा चैव । ह्रीस्तथा श्रीश्च देवता ॥ ९८ ॥ उदीच्यरुचकादेताः । समेता अ-
ष्टकन्यकाः ॥ भक्तिं जिने जनन्या च । चक्रुश्चालितचामराः ॥ ९९ ॥ इतेरा चित्रकनका ।
चित्रा सौत्रामणीति च ॥ विदिग्रुचकवासिन्य—श्चतस्रो दिक्कुमारिकाः ॥ ५०० ॥ प्राग्वदे-
त्य जिनांबे च । नत्वा विधृतदीपिकाः ॥ निशः स्वस्यापि च व्यापि । शमयांचक्रिरे तमः ॥
॥ १ ॥ सुरूपारूपिकावत्यौ । रूपारूपांशिके इति ॥ कुमार्यो मध्यरुचका—च्चतस्रः समुपागमन्
॥ २ ॥ चतुरंगुलवर्जं ता—श्छित्वा नालं जिनेशितुः ॥ विवरं शुचिभूभागे । कृत्वा तन्निधिव-
न्यधुः ॥ ३ ॥ दक्षिणोत्तरपूर्वासु । विचक्रुः कदलीगृहान् ॥ ताः प्रत्येकचतुःशाल—सिंहास-

नसमन्वितान् ॥ ४ ॥ मात्रा सह जिनं नीत्वा । चतुःशालेऽथ दक्षिणे ॥ सिंहासने निवेश्यैता
—स्तैलैरभ्यंजिषुर्वरैः ॥ ५ ॥ ततः प्राच्यचतुःशाल—सिंहासननिवेशितं ॥ ता एव स्नपया-
मासु—स्तद्द्वयं निर्मलैर्जलैः ॥ ६ ॥ ता औदीच्यचतुःशाल-सिंहासननिषादिनौ ॥ वस्त्रभूषण-
माल्यैस्तौ । परिचस्करिरे ततः ॥ ७ ॥ क्षणाच्च वैक्रिये वह्नौ । हिमवच्चंदनैर्हुतैः ॥ रक्षापो-
ट्टलिकां चक्रु—र्जगद्रक्षतयोस्तयोः ॥ ८ ॥ पर्वतायुर्भवेत्युक्त्वा । ताः प्रभुश्रवणांतिके ॥ आ-
स्फाल्य वज्रगोलौ तौ । शयनीये व्यमुंचतां ॥ ९ ॥ सौधर्माधिपतेस्ताव—त्सिंहासनमकंपत ॥
असासहीव नैश्वर्यं । जाते तीर्थेश्वरे हरेः ॥ १० ॥ क्षणं क्रुद्धोऽवधिज्ञानाद् । ज्ञातजन्मा जि-
नस्य सः ॥ क्रियासमभिहारेण । स्वं निनिंदापराधिनं ॥ ११ ॥ प्रणम्य स्वामिनं कर्तु—काम-
स्तज्जननोत्सवं ॥ वासवोऽवीवदद् घंटां । सुघोषां नैगमेषिणा ॥ १२ ॥ नेदुः सर्वविमानानां
। घंटा नादितया तया ॥ देवा अवदधुर्नादा—द्दैतात्केलिपरा अपि ॥ १३ ॥ घंटानादेऽल्प-
तां याति । क्रमेणाध्येतृघोषवत् ॥ ऊर्ध्वीकृत्य भुजामुच्चै—र्नैगमेषीत्यघोषयत् ॥ १४ ॥ भो भोः
श्रृणुत गीर्वाणा । मंदराद्रिं पुरंदरः ॥ जिनजन्मोत्सवं कर्तुं । गच्छन्नाह्वयतीह वः ॥ १५ ॥ के-

षुचित्स्वामिनिर्देशा—त्परेषु सुहृदाग्रहात् ॥ आर्यमर्यादयान्येषु । धर्मबुद्ध्येतरेषु च ॥ १६ ॥
प्रस्थितेषु समं दारै—र्मित्रैः सर्वसुपर्वसु ॥ पालकः पालकं यानं । चक्रे शक्रेछया सुरः ॥१७॥
पंचयोजनशत्युच्चं । लक्षयोजनविस्तृतं ॥ तदारोहडुदारोहः । सादरो हर्षितो हरिः ॥ १८ ॥
एत्य नंदीश्वरं द्वीपं । विमानं संक्षिपन्नथ ॥ जिनजन्मभुवं प्राप । वासवः स्थिरवासनः ॥१९॥
प्रदक्षिणय्य तत्स्थानं । विमानादवरुह्य च ॥ अभिगम्य प्रभुं मात्रा । साकं पाकभिदानमत्
॥ २० ॥ नमस्ते त्रिजगद्दीप—दायिके परमेश्वरि । तव सूनोः करिष्येऽहं । स्नात्रं सौधर्मना-
यकः ॥ २१ ॥ इत्युदित्वा हरिर्मातु—र्दत्वावस्वापिनीमथ ॥ चचाल बालमादाय । मुक्त्वा त-
त्प्रतिरूपकं ॥ २२ ॥ पाणिस्थभगवानेके—नैकेनाग्रे दधत्यविं ॥ धुन्वानश्चामरे द्वाभ्या—मे-
केन छत्रधारकः ॥ २३ ॥ रूपैः पंचभिरित्यस्य । कृतभक्तिः शतक्रतुः ॥ ययौ मंदरमूर्धानं ।
स एकत्र सलीलया ॥ २४ ॥ युग्मं ॥ पांडुकवनेऽतिपांडु—कंबलाख्ये शिलातले ॥ सिंहास-
नं स शिश्राय । क्रोडीकृत्य जगद्गुरुं ॥ २५ ॥ एवं सिंहासनाकंप—घंटानिर्घोषबोधिताः ॥ त्रि-
षष्टिरपरेऽपींद्रा—स्तत्रागुः सपरिछदाः ॥ २६ ॥ रत्नजान् हेमजान् रौप्यान् । रत्नहेममयानपि

॥ रत्नरौप्यहेमरौप्य—हेमरौप्यमणिमयान् ॥ २७ ॥ प्रत्येकं कलशानष्ट—सहस्रं पार्थिवानपि ॥ अथाभियोगिका देवा । अच्युतेंद्राज्ञया व्यधुः ॥ २८ ॥ युग्मं ॥ भृंगारछत्रपात्र्यादि—न्यपि निर्माय ते ततः ॥ क्षीरोदप्रभृतीनब्धीन् । मंदाकिन्यादिका नदीः ॥ २९ ॥ पद्मादींश्च नदांस्तीर्थान् । प्रभासप्रभृतीन् गताः ॥ संगृहीतैस्ततो मृत्सां—भोभिः कुंभानलीभरन् ॥३०॥ युग्मं ॥ चंदनौषधिसिद्धार्थ—पुष्पादीन्याभियोगिकाः ॥ आत्तानि नंदनादिभ्यो । वनेभ्यस्तत्र चिक्षिपुः ॥ ३१ ॥ पद्मछन्नाननैः क्लृप्त—मुखकोशैरिवाभितः ॥ नदद्भृंगछलादर्ह— द्गुणानां गायनैरिव ॥ ३२ ॥ स्वशिरो विनयेनेव । नामयद्भिः शनैः शनैः ॥ कुंभैरस्नपयन्नाथ—मच्युतेंद्रः सुरैः सह ॥ ३३ ॥ युग्मं ॥ पूजोपकरणैरेव—माभियोगिकढौकितैः ॥ क्रमेण स्नपयामासु—स्तमन्येऽप्यमरेश्वराः ॥ ३४ ॥ प्रमार्ज्य गंधकाषाय्या । विलिप्य वरचंदनैः ॥ अमानं जिनमानंचु—स्ते पुष्पैः सारसौरभैः ॥ ३५ ॥ निवेश्यांके स्थितवति । प्रभुं पंचवपुष्मति ॥ ईशानेशोऽथ चतुरः । सौधर्मेंद्रो व्यधाद् वृषान् ॥ ३६ ॥ तदष्टरत्नशृंगाग्र—निर्गतैः संगतैर्मिथः ॥ वैक्रियैर्वारिधारौघैः । स्नपयामास स प्रभुं ॥ ३७ ॥ तेनुस्तूर्यत्रिकं केऽपि । पुष्पाद्यं ववृषुः परे ॥

पातोत्पातादिकाश्चेष्टा—श्चक्रुः केऽपि सुरस्तदा ॥ ३८ ॥ विलेपनादिभिः पूजा—प्रकारैर्धूपनि-
ष्टितैः ॥ प्रभुमभ्यर्च्य तुष्टाव । मघवानघवागपि ॥ ३९ ॥ जय त्वं जगदानंद—कंदकंदलनां-
बुद ॥ जय त्वं जंतुसंघात—पातकोत्पातघातक ॥ ४० ॥ आगछतां तव स्नात्रे । सुराणां व्यो-
मचारिता ॥ जिनेश पश्यतां त्वां च । कुलिता निर्निमेषता ॥ ४१ ॥ दधतः स्वर्णवर्णं त्वां ।
किरीटमिव मूर्धनि ॥ शैलराज इति ख्याति—र्मेरोर्मे रोचतेऽधुना ॥ ३२ ॥ त्वया विरहिणीवा-
द्य । नीता नाथ सनाथतां ॥ भारती अधिके धत्ते । भारतीयं चिरान्मही ॥ ४३ ॥ न माति
जातमात्रेऽपि । त्वयि मे हृदि संमदः ॥ नाथ तत्वार्थजल्पाके । न जाने स क मास्यति ॥
॥ ४४ ॥ यथा त्वद्दर्शनात्प्राच्यैः । पुण्यैरंकुरितं मम ॥ पंफुल्यतामपि तथा । सेवाहेवाकतस्त-
व ॥ ४५ ॥ इति स्तुत्वा गृहीत्वा चे—शानेशात्परमेश्वरं ॥ प्राग्वत्पंचवपुर्भूत्वा । न्यवर्तत दि-
वस्पतिः ॥ ४६ ॥ जन्ममंदिरमागात्य । संहृत्य प्रतिरूपकं ॥ मातुः प्रत्यर्पयामास । न्यासव-
द्वासवः स्वयं ॥ ४७ ॥ कृतार्भदृष्टिविश्रामं । तत्र श्रीदाम सोऽमुचत् ॥ दिव्ये वस्त्रे प्रभाबद्ध-
मंडले कुंडले अपि ॥ ४८ ॥ तत्र द्वात्रिंशतं स्वर्ण—रत्नकोटीर्हरेर्गिरा ॥ ववर्ष हर्षतः श्रीदो ।

वारिधारा इवांबुदः ॥ ४९ ॥ सारं सारेण संयोग—मुपैत्विति धियेव सः ॥ विश्वविश्वोङ्गवं
सार—वस्तु तन्मंदिरेऽक्षिपत् ॥ ५० ॥ ध्यास्यत्यमंगलं योऽत्र । जिनमातुर्जिनस्य वा ॥ तच्छिरः
शतधा भावी—त्यघोष्यत बिडौजसा ॥ ५१ ॥ विन्यस्यांगुष्ठचूलायां । सुधामस्तन्यपायिनः ॥ मु-
मोचाप्सरसः पंच । स धात्रीकर्मणे प्रभोः ॥ ५२ ॥ नंदीश्वरार्हच्चैत्येषु । कृत्वाष्टाहमहोत्सवं ॥
ययुर्यथागतं सर्वे । प्रीता अथ पुरंदराः ॥ ५३ ॥ प्राक्प्रैक्षि ऋषभः स्वप्नो । मात्रास्य स च लां-
छनं ॥ तस्माद्दृषभ इत्याख्या । पप्रथे त्रिजगद्गुरोः ॥ ५४ ॥ या कन्या सहजाताभू—त्सापि
नाम्ना सुमंगला ॥ सहैव ववृधे तेन । कौमुदीव सुतद्युता ॥ ५५ ॥ अचिंत्यमहिमा स्वामी
। स्वयमेव व्यवर्धत ॥ धात्र्यस्तु तस्य शुश्रूषां । स्वं पवित्रयितुं व्यधुः ॥ ५६ ॥ पूरयमास स-
र्वेषां । सर्वा आशा जिनः पुनः ॥ स्तन्यार्पणवपुःक्षाल—नाशां मातुर्न जातुचित् ॥ ५७ ॥ दे-
शोनवर्षदेश्यं तं । नाभेरंकस्थमन्यदा ॥ वास्तोष्पतिरुपेयाय । वंशस्थापनकौतुकी ॥ ५८॥ त-
देक्षुदंडं तत्पाणि—पद्मस्थं जगृहे जिनः ॥ ततस्तद्वंशमीक्ष्वाकु—संज्ञमस्थापयद्धरिः ॥ ५९ ॥
स्पृशन् हसन् भ्रमन् गायन् । स्वपंस्तिष्ठन् रुदन् वदन् ॥ मातुः सर्वासु चेष्टासु । स निदानं

मुदामभूत् ॥ ६० ॥ निमील्य नयने नाभिः । परिरेभे जगत्प्रभुं ॥ स्वीयसंतोषदृग्दोषं । निराकर्तुमिवांगजे ॥ ६१ ॥ तदव्यक्तवचः शून्य— गतिं वीक्ष्यामृतार्थिनः ॥ देवास्तं विविधै रूपैः । पुनः पुनररीरमन् ॥ ६२ ॥ स धूलिधूसरांगोऽपि । दिदीपे जात्यरत्नवत् ॥ भारभुग्नफणं चक्रे । भोगींद्रं मंदगाम्यपि ॥ ६३ ॥ निःश्वासवायुनाप्यद्रीन् । स तूलवदचालयत् ॥ स्पृशन्नपि विनोदेन । मघवंतमलोकयत् ॥ ६४ ॥ पुष्टिमंगुष्ठपीयूषै—रादत्त प्रथमं प्रभुः ॥ ततश्च त्रिदशानीतैः । फलैः कल्पमहीरुहां ॥ ६५ ॥ बाल्येऽथोपरते नृत्य । इव प्रस्ताववेदिनि ॥ आदत्त स्वांगसेवार्थे । वारकं यौवनस्य सः ॥ ६६ ॥ पंचचापशतोत्सेधः । स्वामी चामीकरच्छविः ॥ वयोविशेषतो रूपं । टंकोत्कीर्णमिवावहत् ॥ ६७ ॥ गतेर्गजः पदोः पद्मे । माणिक्यानि नखत्विषां ॥ ऊर्वो रंभाः कटेः श्रोत-स्तटी नाभेर्नदः पुनः ॥ ६८ ॥ वज्रमध्यं च मध्यस्य । वक्षसः पुरगोपुरं ॥ कल्पद्रुशाखा भुजयो—र्मुखस्येंदुः सुधा गिरः ॥६९॥ एवं यद्यत्प्रत्यूपांगो—पमायै विदधे विधिः ॥ तत्तत्तस्योपमेयत्वं । प्राप्तं वीक्ष्य स खिन्नवान् ॥ ७० ॥ त्रिभिर्विशेषकं ॥ कांतशांततनुं वीक्ष्य । भोगिनो योगिनोऽपि तं ॥ स्वाध्यानकोटिं कंदर्प—परब्रह्मधिया ययुः ॥

॥ ७१ ॥ भगवानविकारोऽभू—दपि संप्राप्तयौवनः ॥ यादःपतिर्न मर्यादा—मुद्वेलोऽपि विलोपयेत् ॥ ७२ ॥ सौधर्मेंद्रधृतछत्र—श्चमरोत्क्षिप्तचामरः ॥ ईशानभर्त्रविष्टब्धो । बलिसंवाहितक्रमः ॥ ७३ ॥ गीयमानगुणो विश्वा—वसुतुंबरुनारदैः ॥ रंभाविष्कृतनाट्योऽर्हन् । कुमारस्थितिमन्वभूत् ॥ ७४ ॥ युग्मिधर्मा तदा कोऽपि । बालस्तालतरोस्तले ॥ पतता तत्फलेनाशु । कीनाशसदनं ययौ ॥ ७५ ॥ विना तं सहजन्मानं । सुनंदा लोललोचना ॥ प्रत्यक्षा वनदेवीवा—भ्रमदेकाकिनी वने ॥ ७६ ॥ एषान्यैर्युग्मिभिर्नाभि—नृपायाढौकि सोऽप्यमूं ॥ योग्या ननु वधूरेषा । ऋषभस्येत्युपाददे ॥ ७७ ॥ अथाजगाम सुत्रामा । जानन् भोगक्षमं प्रभुं ॥ भ्रश्यंत्यवसरान्नैव । स्वामिनो हि सुसेवकाः ॥ ७८ ॥ विद्वान् विपक्किमं स्वस्य । कर्मभोगफलं प्रभुः ॥ विवाहहेतुं विज्ञप्तिं । शतमन्योरमन्यत ॥ ७९ ॥ स्वर्णस्फीतकदशालि—शालिनं शालिवप्रवत् ॥ घनस्तंभं नवोढावत् । सच्चंद्रोदयमभ्रवत् ॥ ८० ॥ नानारत्नौघखचित—क्षोणीपीठं विमानवत् ॥ मंरूपं वासवादेशा—च्चक्रिरे किंकराः सुराः ॥ ८१ ॥ युग्मं ॥ तत्रार्द्रवंशावष्टब्धा—श्चतस्रः कलशालयः ॥ स्वर्णवेदिगृहस्यांत—र्मणिमय्यो विरेजिरे ॥ ८२ ॥ त्व-

रयाप्सरसां नाम—प्राहं वैवाहिकीं क्रियां ॥ अन्योन्यं कारयंतीना—मुत्तस्थे तुमुलं तदा ॥
॥ ७३ ॥ तैलैरभ्यज्य पिष्टातै—रुद्वर्त्यामर्त्ययोषितः ॥ सुमंगलां सुनंदां च । वर्णके चिक्षिपुः
क्षणं ॥ ७४ ॥ विहितोद्वर्णके ते च । स्नपयित्वोज्ज्वलैर्जलैः ॥ प्रमार्ज्य गंधकाषाय्या । व्यलिं-
पन् कुंकुमादिना ॥ ७५ ॥ पारिणेयाणि वस्त्राणि । परिधाप्य विभूष्य च ॥ तास्ते मातृगृहं
नीत्वा—ध्यासयन् कनकासने ॥ ७६ ॥ जगन्नाथोऽपि हरिणा । संस्नपय्य विलिप्य च ॥ वि-
भूष्यारोपितो दिव्यं । यानं प्रस्थितवानथ ॥ ७७ ॥ उत्तार्यमाणलवणः । पार्श्वयोरप्सरोजनैः ॥
शचीभिर्दत्तधवल—स्त्रिदशैरन्वितो वृतः ॥ ७८ ॥ हरिणा दर्श्यमानध्वा । जय जीवेति वादि-
ना ॥ मंडपद्वारमागत्य । कृत्यज्ञः स क्षणं स्थितः ॥ ७९ ॥ युग्मं ॥ कृततटत्रटत्कार—लव-
णानलगर्भितं ॥ शरावसंपुटं कांचि—द्देवी तस्य पुरोऽमुचत् ॥ ८० ॥ रूप्यस्थालस्थदूर्वाद्यै—र्वै-
रायार्घं ददौ परा ॥ कौसुंभवसना कापि । त्रिस्तं भालमथास्पृशत् ॥ ८१ ॥ तयैवाकर्षितः कं-
ठ—क्षिप्तकौसुंभवासना ॥ शरावसंपुटं वाम—चरणेनाभिनज्जिनः ॥ ८२ ॥ प्राप्य मातृगृहं त-
स्य । निविष्टस्योरुविष्टरे ॥ अबध्नन्मदनं देव्यः । सवधूकस्य हस्तयोः ॥ ८३ ॥ हस्तालेपेऽथ सं-

जाते । पिष्टाश्वब्रशमीत्वचा ॥ विभुः शुभ्रक्षणेऽगृह्ण—द्वध्वोः पाणी स्वपाणिना ॥ ९४ ॥ तत्का-लं हरिणा हस्त—पुटांतर्निहितोर्मिकः ॥ रीतिज्ञः स्वदृशौ स्वामी । वधूदृग्भिरमेलयत् ॥९५॥ वरेषु गीयमानेषु । धवलेष्वप्सरोगणैः ॥ वधूवराणां मघवा । बध्नातिस्मांचलान्मिथः ॥ ९६ ॥ इंद्रः स्वामिनमारोप्य । कट्यां वध्वौ शची पुनः ॥ मध्ये वेदिगृहं पूर्व—द्वारेणाविशतां ततः ॥ ९७ ॥ कुंडस्थमनलं त्राय—स्त्रिंशदेवविनिर्मितं ॥ तत्र प्रदक्षिणीचक्रे । वधूद्वययुतः प्रभुः ॥ ॥ ९८ ॥ गीयमानेषु धवल—मंगलेष्वप्सरोजनैः ॥ विदधे विबुधाधीश—स्तत्पाण्यंचलमोक्षणं ॥ ९९ ॥ अनृत्यत्कृतनृत्योऽथ । प्रमोदेन पुरंदरः ॥ तमन्वनृत्यन्नपरे । सदेवीका दिवौकसः ॥ ॥ ६०० ॥ वल्लीभ्यामिव कल्पद्रु—र्वधूभ्यां शोभितोऽभितः ॥ यथागतं गतः स्वामी । देवदेवी-कृतोत्सवः ॥ १ ॥ देवा आमंत्रिता याता । इव स्थानं निजं ययुः ॥ तदापि प्रावृतल्लोके । सोऽयं वैवाहिको विधिः ॥ २ ॥ जगत्त्रयविजेतापि । वशीभूते जगत्प्रभौ ॥ चापव्यापारपारी-णं । स्वं मेने मीनकेतनः ॥ ३ ॥ भुंजाने भूरिशो भोगान् । नाथेऽनुबद्धलेंद्रिये ॥ किंचिदू-नेष्वतीतेषु । पूर्वलक्षेषु षट्सु च ॥४॥ तौ बाहुपीठयोर्जीवौ । च्युत्वा सर्वार्थसिद्धितः ॥ ब्राह्मी

सुमंगलादेव्या । युग्मरूपेण जग्मतुः ॥ ५ ॥ युग्मं ॥ चतुर्दशमहास्वप्न–वीक्षाख्यातमहोदयं ॥ समये भरतब्राह्मी–नामयुग्ममसूत सा ॥ ६ ॥ तौ सुबाहुमहापीठौ । सुनंदोदरमागतौ ॥ जातौ ख्यातौ बाहुबली—सुंदरी चेति नामतः ॥ ७ ॥ पुनरेकोनपंचाश—द्युगलानि सुमंगला ॥ पुत्राणां सुषुवे भूरि । कन्या न ह्युत्तमाः स्त्रियः ॥ ८ ॥ कालेन कृपणीभूते–ष्वशेषेषु सुरद्रुषु ॥ विवृद्धगृद्धयः स्वैरा । वैरायन्तेस्म युग्मिनः ॥ ९ ॥ मानाद्धिवदमानास्ते । नाभेयं न्यायमिश्रवः ॥ उपाययुः सरो नीरं । काम्यंतः पथिका इव ॥ १० ॥ धर्मतत्वं गुरुरिव । क्ष्मापतिर्दर्शयेन्नयः ॥ स तातस्तातदिष्टो वा । भवेत्तत्तं प्रयात भोः ॥ ११ ॥ इत्युक्ताः प्रभुणा नाभिं । प्रापास्तेनापि वः प्रभुः ॥ अथो ऋषभ एव स्ता–दित्युक्तास्तं पुनर्ययुः ॥ १२ ॥ उच्चासनाभिषेकाभ्यां । राजा स्यादिति तद्गिरा ॥ उच्चभूमौ निवेश्यैनं । जग्मुस्ते वारिणे सरः ॥ १३ ॥ आसनाकंपविज्ञाता—वसरः सुरनायकः ॥ प्रभो राज्याभिषेकाय । विमायस्तूर्णमाययौ ॥ १४ ॥ सुधर्मामिव सौधर्मा–धिपतिर्विदधे सभां ॥ तदंतश्च चतुःशालं । रत्नसिंहासनान्वितं ॥ १५ ॥ निवेश्य तत्र तीर्थांबु—धाराभिरभिषिच्य तं ॥ रुचुक्ता भूषयामास । दिव्यांशुकविभूषणैः ॥

तत्रागता निरैक्षंत । परावृत्तमिव प्रभुं ॥
॥ १६ ॥ पयः पयोजिनीपत्र—पुटैरादाय युग्मिनः ॥ नीरं नीरंध्रधाराभि-रिति ते चि-
॥ १७ ॥ निर्विवेकोऽभिषेकोऽस्य । मूर्ध्न्यलंकारशालिनः ॥ विनीतां नाम नीति-
क्षिपुः पदोः ॥ १८ ॥ अहो विनीततामीषा—मिति जल्पन् पुरंदरः ॥ अयोध्यापरप-
ज्ञो । नगरीं तत्र निर्ममे ॥ १९ ॥ द्वादशयोजनायामां । नवयोजनविस्तृतां ॥ बभूव न-
र्यायां । धनदोऽपूरितां धनैः ॥ २० ॥ जन्मतः परिपूर्णासु । पूर्वलक्षासु विंशतौ ॥ संगृह्य
रतक्षेत्रे । नाभेयः प्रथमो नृपः ॥ २१ ॥ गजोक्षाश्वनरादींश्च । चतुरंगां चमूं च सः ॥ अ-
मंत्रिसामंता-रक्षादीनप्यतिष्ठिपत् ॥ २२ ॥ कल्पद्रुमाणां कार्पण्या-त्कंदमूलाद्यभुंजत ॥ रौषधीनामुग्रा-
कृष्टपच्यान् शालींश्च । युग्मिनः पशुवत्क्षुधा ॥ २३ ॥ तदजीर्णं बोधितस्तै । वंशत्रषादु-
दिशत् ॥ मर्दनं स्तेमनं पत्र—पुटादिस्वेदनं जिनः ॥ २४ ॥ कालेनातिस्निग्धरुक्षे । क्षिपंतो वीक्ष्य ते दीप्ति-
नेऽनलः ॥ तदोत्पेदे विरोधो वाक्—कलेरिव कुटुंबके ॥ २५ ॥ तस्य दाहाप-
मंतं रत्नधिया करं ॥ बाला इव भृशं मुग्धा । दग्धा युगलिनो जनाः ॥ २६ ॥ तै-
राधं तै—विज्ञप्तः प्रभुरूचिवान् ॥ नो अयं वह्निरस्मिंश्च । प्रक्षिप्य पचतौषधीः ॥ २७ ॥

स्तथा विहितेऽप्लोष—दौषधीर्दहनोऽखिलाः ॥ तदपि द्विपमारूढं ।.ते स्वामिनमजिज्ञपन् ॥
स्तथा विहितेऽप्लोष—दौषधीर्दहनोऽखिलाः ॥ तदपि द्विपमारूढं । ते स्वामिनमजिज्ञपन् ॥
॥ २७ ॥ जलार्द्रां मृदमानाय्य । कुंभे चास्फाल्य कुंभिनः ॥ उपज्ञानीयसंकाशं । वितेने पि-
ठरं विभुः ॥ २९ ॥ पात्रेष्वेवंविधेष्वग्नि-विपक्वेष्विंधनादिभिः ॥ यत्पच्येत सचेतस्कैः । स्वा-
दन्नं तन्न दुर्जरं ॥ ३० ॥ एवं कुंभकृतां शिल्प-माविष्कृत्य क्रमेण तु ॥ अयस्कारकुविंदादि-
शिल्पान्यप्यादिदेश सः ॥ ३१ ॥ कलाश्चित्रादिकाः काश्चि—द्भरतायोपदिश्य च ॥ गजादि-
लक्षणान्यूचे । सुनंदानंदनाय सः ॥ ३२ ॥ निविष्टां दक्षिणांकेऽसौ । ब्राह्मीं ब्रह्माऽलिपं लिपीः ॥
वामांके वामहस्तेन । गणितं सुंदरींप्रति ॥ ३३ ॥ निष्कलंका निरातंका । अक्षीणविभवव्रजाः
॥ प्रजाः सुप्रजसश्चासं-स्तस्मिन्नेतरि भूतले ॥ ३४ ॥ ददुर्भूरि पयो गावः । शस्यं भू रत्नमा-
कराः ॥ पुष्पं लताः फलं वृक्षा । दात्रा तेनैव शिक्षिताः ॥ ३५ ॥ कविष्वेव पराॅंऽहा । सी-
रेष्वेव कुशीलता ॥ वनेष्वेव कलिस्फाती । राज्ञि श्रीसुषभेऽभवत् ॥ ३६ ॥ स निनाय गुणा-
रोहं । सेवकान्न पुनर्धनुः ॥ आज्ञामात्रवशीभूत—सुरासुरनरेश्वरः ॥ ३७ ॥ इत्थं पालयतः प्रा-
ज्यं । राज्यं तस्यैकभूभुजः ॥ त्रिषष्ट्या पूर्वलक्षाणि । व्यतीये लवलीलया ॥ ३८ ॥ अथास-

भीभवद्बोधि-विवस्वद्द्युतिसोदरी ॥ भावनाविरभूत्तस्य । भोगकर्मतमःक्षये ॥ ३९ ॥ आत्मन् मोहमहीपस्य । पश्य प्राग्भवमद्भुतं ॥ विद्वांसोऽपि विजृंभंते । यद्बलाद्बालिशा इव ॥ ४० ॥ साक्षाद्विषयवैषम्यं । मृत्युं चांहितलस्थितं ॥ मोहांधतमसा ध्वस्त-दृशः पश्यंति नांगिनः ॥ ॥ ४१ ॥ हृदोपगूढया लोह-शिलयेव महेलया ॥ निमज्जंते जडास्त्यक्त—ब्रह्मपोता भवोदधौ ॥ ४२ ॥ चित्रमात्रा बहिः सारा । असाराश्चांतरा स्त्रियः ॥ चेतो हरंति बालानां । ही गोमयहया इव ॥ ४३ ॥ स्यादेकद्विदृशामेव । रात्रिरालोकघातिनी ॥ नवा नारीनिशा यत्र । सहस्राक्षोऽपि मुह्यति ॥ ४४ ॥ जडयोगेन हृद्भूमे—रुद्भूतादतिकश्मलात् ॥ स्खलना पुण्यपांथानां । ध्रुवा विषयपंकतः ॥ ४५ ॥ अथ क्रंथंति संसारा—रण्ये धन्येतरानमी ॥ उत्ताला विषयव्याला । मूर्छालान् मोहनिद्रया ॥ ४६ ॥ गजगर्जितहयहेषित—सुभटभुजास्फोटतूर्यनिर्घोषैः ॥ वनितावाग्भिः कुतुकं । भृशायते मोहनिद्रेयं ॥ ४७ ॥ भुक्तवानपि सर्वार्थ—सिद्धसौख्यमनारतं ॥ मग्नो मनुष्यकामेषु । सोऽहं मोहं विना कथं ॥ ४८ ॥ तदस्य मोहयोधस्य । यद्धत्ते प्रतिमल्लतां ॥ आदातुं तद्धि चारित्रं । सांप्रतं सांप्रतं मम ॥ ४९ ॥ समुन्मी-

लब्धिदानंद— निःस्पंदनयनं जिनं ॥ देवा लोकांतिका ईयु—स्तावत्प्रस्ताववेदिनः ॥ ५० ॥ ते प्रोचुरिति पंचांग—प्रणामस्पृष्टभूतलाः ॥ नाथ लोकोपकाराय । धर्मतीर्थं प्रवर्तय ॥ ५१ ॥ लब्धिज्ञप्तिरियं दीक्षा—लोलुपं तमतत्वरत् ॥ यियासुं मानसं हंसं । प्रत्युतांभोदगर्जिव [ ॥ ॥ ५२ ॥ अथाहूय सदारंभ—रतं भरतमंगजं ॥ वत्स राज्यं गृहाणेति । जगाद जगदीश्वरः ॥ ५३ ॥ अनुजैरन्वितो भक्त्या । भरतः पुरतः प्रभोः ॥ उवाच शोकसंकीर्ण—गलस्खलितवाक् ततः ॥ ५४ ॥ अनिष्टो दुर्विनीतो वा । तात कोऽयं जनस्तव ॥ ददासि यदिदं राज्य—मसारत्वात्स्वयं त्यजन् ॥ ५५ ॥ यद्वालं पितृदत्तेऽर्थे । सारासारत्वाचिंतया ॥ परं तव वियोगाग्नि—भीरुत्वादिदमुच्यते ॥ ५६ ॥ त्वदास्यदर्शने दास्य—मपि मे कुर्वतो धृतिः ॥ त्वां विना सार्वभौमत्व—मपि भ्राष्टानलायते ॥ ५७ ॥ बलादेवमनिच्छंत—मपि तं ग्लपितं शुचा ॥ आगृह्य श्रीयुगादीशो । मूलराज्ये न्यवेशयत् ॥ ५८ ॥ दिदेश देशमेकैक—मितरेषां तनुरुहां ॥ विभुर्विभज्य पुष्पौघं । वैशाखः शाखिनामिव ॥ ५९ ॥ ततो दानं ददौ देवः । संवत्सरममत्सरः ॥ प्राक्पृथ्व्यां कृपणन्यस्तै—स्तदा श्रीदाहृतैर्धनैः ॥ ६० ॥ कोटिमेकां सुवर्णस्य लक्षा अ-

ष्टौ च सोऽन्वहं ॥ दत्वाब्दमुपचिराज्यस्त—मर्थिनामर्थनाव्रतं ॥ ६१ ॥ वस्त्राश्वादिदानस्य ।
तस्य संख्यां करोतु कः ॥ वर्षतः पुष्करावर्त—स्यांभोबिंदून् मिमीत कः ॥ ६२ ॥ विज्ञाया-
वधिना दीक्षा—वसरं त्रिदशेश्वराः ॥ नभावतेरुराकृष्टा । इव तद्भाग्यरज्जुभिः ॥ ६३ ॥ कृत-
षष्ठतपाः स्वामी । क्लृप्तस्नानादिमंगलः ॥ चैत्राष्टम्यां शितौ चंद्रे । चोत्तराषाढयान्विते ॥६४॥
स दिव्याभरणो दत्वा—वष्टंभो जृंभविद्विषा ॥ शिबिकां सिद्धिसोपान—मिवारोहत्सुदर्शनां ॥
॥ ६५ ॥ युग्मं ॥ कादंबिनीव पवनैः । प्रभांभोभरवर्षिणी ॥ शिबिका मनुजैः पूर्वं । ततो देवै-
रवाहिता ॥ ६६ ॥ उपर्युपरि तिष्ठद्भिः । प्रभूतोद्भूतकौतुकैः ॥ भुवो मर्त्यैर्दिवोऽमर्त्यै—र्धृद्धन्
विपुलतामदं ॥ ६७ ॥ हृत्सुधाकुल्ययालोक—वल्ली पल्लवयन्निव ॥ दिव्यातोद्यस्वनैर्नृणां । मोह-
निद्रां हरन्निव ॥ ६८ ॥ अप्सरोविसरोन्नीत—गीतसंगीतकोत्सवः ॥ सिद्धार्थं प्राप सिद्धार्थी—
भविष्यन्निव काननं ॥६९॥ त्रिभिर्विशेषकं ॥ समुत्तीर्य ततो याप्य—यानान्मानादिवांगिनः ॥
अशोको भगवांस्तस्या—वशोकस्य तरोस्तले ॥ ७० ॥ भारमालफलैरेभिः । किं शीलालंकृतस्य मे
॥ इतीव सर्वालंकारान् । विकारानिव सोऽमुचत् ॥ ७१ ॥ स्वर्णाब्जे भृंगमालेव । कांताकुंतल-

वल्लरी ॥ तवांशदेशे खेलंती । नाथ नोद्धारमर्हति ॥ ७२ ॥ विज्ञप्त्येति हरेर्नेत्री । चतुर्मुष्ट्या समुध्धृतान् ॥ केशानृजुका चिक्षेप । क्षणेन क्षीरनीरधौ ॥ ७३ ॥ उत्तुंगहिमवच्छृंग—लुठद्गंगानुकारि सः ॥ दिव्यांशुकं दधौ स्कंध—न्यस्तं वृत्रभिदा ततः ॥ ७४ ॥ स्वर्भुजां भुजमुत्[illegible] निषिद्धे तुमुलेऽखिले ॥ नमः सिद्धेभ्य इत्युक्त्वा । निर्लोभः सोऽभवद् व्रती ॥ ७५ ॥ तुर्यमुजेस्विनस्तस्य । ज्ञानमाविरभूत्तदा ॥ इव स्वावसरं ज्ञातुं । प्रहितं केवलश्रिया ॥ ७६ ॥ भेजे कच्छमहाकच्छ—मुख्यानामनुगामिनां ॥ चतुःसहस्री भूपानां । तदानीं सह संयमं ॥ ७७ ॥ स्तावं स्तावं जगद्देवं । देवेंद्राः सपरिच्छदाः ॥ जग्मुर्यथागतं सर्वे । पुत्रास्तु भरतादयः ॥ ७८ ॥ समं तैर्मुनिभिर्मौन—भाजो विहरतः प्रभोः ॥ अन्नदानानभिज्ञत्वा—ल्लोकः स्वर्णाद्यढौकयत् ॥ ॥ ७९ ॥ वर्षं बभ्राम भिक्षायै । भुवि त्रिभुवनप्रभुः ॥ न पुनः क्वापि तां प्राप । तद्भियेव पलायितां ॥ ८० ॥ क्षुत्तृषोरवशीभूत—स्तपस्तेपेतरां प्रभुः ॥ न चाहारविधिं प्रोचे । कच्छादीनपि पृच्छतः ॥ ८१ ॥ तस्य भावमजानानैः । क्षुत्तृषाविह्वलैर्विभुः ॥ तैरालोच्य मिथोऽमोचि । क्षीणः स्वामीव सेवकैः ॥ ८२ ॥ वल्कचीराश्चिराबद्ध—जटाः फलजलाशिनः ॥ गंगापारेऽथ ते त-

स्थुः—जंगमा इव नूरुहः ॥ ८३ ॥ तदा कच्छमहाकच्छ—पुत्रौ प्रभुनिदेशतः ॥ देशांतरं गतः चरौ । निवृत्तौ तद्वनाध्वना ॥ ८४ ॥ वीक्ष्य स्वपितरौ वन्य—वेषौ तावित्यपृच्छतां ॥ आः केयं वा दशा तातौ । शत्रुत्रासितयोरिव ॥ ८५ ॥ तौ प्रभुदानदीक्षे च । स्वं वनस्थितिकारणं ॥ ऊचतुस्तत्समाकर्ण्य । तौ प्रभुंप्रत्यधावतां ॥ ८६ ॥ नाथं नमिविनम्याख्यौ । नत्वा तावित्यवोचतां ॥ आकिंचनोऽपि किंचिन्नो । देहि देहि सुरद्रुम ॥८७॥ यदावर्षः स्वधारान्नि—स्तदानीमास्व द्भूरतः ॥ तद्भवोऽपि हि तृट्पूर—मधुना विधुनोतु नौ ॥ ८८ ॥ धिक्कातौ क्षुत्तृषाक्रांतौ । जातौ यौ ते पराङ्मुखौ ॥ सुखे दुःखेऽपि हे देव । त्वमेव गतिरावयोः ॥ ८९ ॥ अपि कांचनकोटिभिः । परस्माद्यो दुरासदः ॥ आलापेनापि ते नाथ । तमानंदं भजामहे ॥ ९० ॥ इत्यर्थितोऽपि नादत्त । वाचं वाचंयमो हि सः ॥ तथाप्युपासयतः खड्ग—पाणी तौ भेजतुः प्रभुं ॥९१॥ तत्खड्गदंडयुगलप्रतिबिंबितेन । प्रत्यक्षलक्षिततनुत्रितयः स रेजे ॥ सद्ज्ञानदर्शनपवित्रचरित्रलक्ष्मीः । प्रीत्यागता हि परिरब्धुमिवैककालं ॥ ९२ ॥ तौ द्वौ चलत्यचलतां । नाथे तिष्ठत्यतिष्ठतां ॥ स्थितस्यास्य पुरः सिक्त्वा । भुवं पुष्पाण्यवर्षतां ॥ ९३ ॥ उपागतो जिनं नंतुं । ध-

रणेंद्रो धरातलात् ॥ कदाचित्तौ निरेक्षिष्टा—भीतस्तातमिवार्भकौ ॥ ९४ ॥ ऊचे च कौ यु-
वां क्वत्यौ । हेतोः कस्यागताविति ॥ ताभ्यामपि निजे वृत्ते । प्रोक्ते स प्रत्यवोचत ॥ ९५ ॥
भो भवंतौ किमु भ्रांतौ । श्रांतौ वा निजसौख्यतः ॥ यदेवं निर्धनं देवं । सेवेते विभवाशया
॥ ९६ ॥ वचोऽपि यस्य संदेहा—स्पदं तस्माद्धनं कुतः ॥ आसारः क नु संदिग्ध—तुषारे
शारदांबुदे ॥ ९७ ॥ तद्यातं भरतं भूपं । युवां यदि धनार्थिनौ ॥ विमुच्य शाद्वलां भूमिं । न
गौरप्येति जंगलं ॥ ९८ ॥ तावूचतुरहो भ्रांति—र्यद्येवं तव भर्तरि ॥ तत्किमागमनायासं । नं-
तुमेनं वृथा कृथाः ॥ ९९ ॥ अधनानपि कल्पद्रून् । वीक्ष्य कल्पितदायिनः ॥ आवां सेवावहे
देव—ममुमेव स्वसिद्धये ॥ ७०० ॥ सत्यस्मिंस्त्रिजगन्नाथे । विनीतापतिमेति कः ॥ कः स्ना-
तुं गोस्पदं याति । जागरे क्षीरसागरे ॥ १ ॥ इति तद्वचनैः प्रीतो । जगाद भुजगाधिपः ॥
भो परीक्षाक्षमा साधु । भवतो भक्तिरर्हते ॥ २ ॥ अस्य प्रसादतः सर्वाः । संपदो न दुरास-
दाः ॥ अहमप्यस्य भक्तोऽस्मि । भक्तानामिष्टदायकः ॥ ३ ॥ इति गौरवतः पाठ—सिद्धा विद्या
ददौ मुदा ॥ सहस्रनष्टचत्वारिं— ताभ्यामहीश्वरः ॥ ४ ॥ पंचाशन्नगरां श्रेणिं । दक्षिणां

नमये ददौ ॥ वैताढ्यस्योत्तरां षष्टि–पुरां विनमयेऽपि च ॥ ५ ॥ अनुज्ञाप्य स्वपितरौ । समं परिजनेन तौ ॥ वैताढ्यं निन्यतुर्लोकं । लोभयित्वाशु भारतं ॥ ६ ॥ अवाप्य वासं वैताढ्ये । विद्याभिः कामचारिणः ॥ भूमिष्ठा अपि ते लोका । नाकिलीलायितं दधुः ॥ ७ ॥ विद्याबलोद्धला एते । माकार्षुर्विक्रियामिति ॥ धरणेंद्रो व्यधात्तेषां । मर्यादां शाश्वतीमिमां ॥ ८ ॥ जिनं वा जिनचैत्यं वा । संघं वा योऽवमंस्यते ॥ रंस्यते वा बलात्कारा–दनिछंत्या परस्त्रिया ॥९॥ हनिष्यति नरं यो वा । सात्मस्त्रीकं कदाचन ॥ त्यक्ष्यतेऽखिलविद्याभिः । स स्त्रीभिरिव दुर्भगः ॥ १० ॥ युग्मं ॥ प्रतिमामृषभेशस्य । संस्थाप्य प्रतिपत्तनं ॥ साम्राज्यं नमिविनमी । तावपालयतां चिरं ॥ ११ ॥ विहरन्नथ नाथोऽपि । तपःपाथोधिपारगः ॥ क्रमाद्गजपुरं द्वीप–मिव प्रापदपापधीः ॥ १२ ॥ तत्र बाहुबलिसुवः । सोमप्रभनरेशितुः ॥ निजवंशसरोहंसः । श्रेयांसो नाम नंदनः ॥ १३ ॥ समाधिशयितः स्वप्ने । मंदरं मंदरोचिषं ॥ सिक्त्वा पीयूषकुंभेन । सद्यो व्यद्योतयन्निशि ॥ १४ ॥ युग्मं ॥ स प्रभाते सभामेत्य । स्वप्नमेतं प्रजल्पति ॥ यावत्तावन्नृपः सोम–प्रभः क्षिप्रमभाषत ॥ १५ ॥ प्राग्भूमौ पतितैः पश्चा–च्छ्रेयांसेन नियोजितैः

॥ किरणैर्दिद्युतं स्वप्ने । दिवाकरमलोकयं ॥ १६ ॥ स्वप्नेऽपश्यं द्विषत्कोटि—संकटे पतितं ज-
टं ॥ श्रेयांसस्य बलाल्लब्ध—जयं श्रेष्ठीत्यवोचत ॥ १७ ॥ सर्वं स्वप्नफलं भावि । श्रेयांसस्येति
वादिनः ॥ परमार्थमविद्वांसो—ऽप्यमी जग्मुः स्वमंदिरं ॥ १८ ॥ जगवानपि नैक्षाय । ज्यहर-
त्प्रहरद्वये ॥ प्रत्योकः प्रतिपाथोजं । मरंदायेव षट्पदः ॥ १९ ॥ गजं कोऽप्यंगजां चान्यो ।
हेमकोटिं हयं परः ॥ इष्टमिष्टतरायास्मै । सर्वं लोका अढौकयन् ॥ २० ॥ अनाददाने तद्भ्रां-
त—मिवांतर्निश्चयात्प्रजौ ॥ संजूय तुमुलं तेनुः । पौराः सायं खगा इव ॥ २१ ॥ स्कंधसंधि-
लसत्केश—कलापविपिनं जिनं ॥ निजतन्वा वितन्वानं । चलत्स्वर्णाचलभ्रमं ॥ २२ ॥ श्रेयांसः
श्रेयसां राशि—रासन्नाघ्वविहारिणं ॥ गवाक्षस्थस्तमालोक्य । सस्मार प्राच्यजन्मजः ॥ २३ ॥
युग्मं ॥ [illegible]देषु बभूवासौ । वज्रसेननांजिगजः ॥ वज्रनाभाभिधश्चक्री । तस्यैवाहं तु सा-
रथिः ॥ २४ ॥ पितुरीदृग्गमुद्रस्य । समुद्रस्येव सन्निधौ ॥ सोऽयं मेघ इवादत्त । चारित्रं वारि-
वत्तदा ॥ २५ ॥ वज्रसेनजिनेशेन । तदादिष्टमिति स्वयं ॥ जरते वज्रनाभोऽयं । जविष्यत्या-
दिमो जिनः ॥ २६ ॥ एष तत्तुल्यवेषस्त—न्निरस्तवृजिनो जिनः ॥ जाग्ययोगान्मयालोकि ।

नं ॥ तावद्वायुरिव प्रात–र्व्यहार्षीदन्यतः प्रभुः ॥ ५० ॥ युग्मं ॥ निःसोमं व्योम निर्नीर्थं ।
कटकं निर्णसं मुखं ॥ यथा तथा वनं वीक्ष्य । निःस्तातं खिद्यतेस्म सः ॥ ५१ ॥ जानन्मां ता-
त सोत्कंठं । यत्क्षणं न विलंबितः ॥ तत्पुरः कस्य पूत्कुर्वे । सर्वथा विधिना हतः ॥ ५२ ॥
निशामुखं प्रदोषो न । यत्र नाथ त्वसमागमः ॥ अन्ये प्रदोषं त्वद्दीक्षा–बहिर्मुखमहर्मुखं ॥५३॥
त्याषध्वं भूरुहा मौनं । मुंचध्वं वनदेवताः ॥ वीक्षध्वं विहगाः स्वामी । विजहार कया दिशा
॥ ५४ ॥ एवं विलापिनं क्ष्मापं । वृद्धामात्या बभाषिरे ॥ चित्रं व्योम्नीव नीरागे—ऽनुरागः को-
ऽयमत्र ते ॥ ५५ ॥ सहोपभुज्य जीवेन । प्रांते वैरस्यमीयुषि ॥ अमित्रयति देहेऽपि । जिनोऽयं
किं पुनः परे ॥ ५६ ॥ स्थितोऽस्ति तव हृद्येव । देवस्तत्किं विषीदसि ॥ यद्वा तच्चरणन्यासै–
र्दृष्टैर्दृष्टो न किं पुनः ॥ ५७ ॥ स्तोकीकृत्य ततः शोकं । तातपादांकितां भुवं ॥ न स्पृशंति प-
दैरन्ये । यथा नाथ तथा कुरु ॥ ५८ ॥ ततो व्यधापयत्तत्र । रत्नपीठं नरेश्वरः ॥ तत्तेजसाधि-
कं दृष्टुं । सूर्यबिंबमिवागतं ॥ ५९ ॥ योजनोन्नितदंडस्थं । तत्र स्थापयतिस्म सः ॥ सर्वरत्न-
मयं धर्म—चक्रं योजनवर्तुलं ॥ ६० ॥ अनार्यदेशान् विचरन् । म्लेच्छानाप्यसौ प्रभुः ॥ अ-

वीवृधन्मुदं यद्वा । कौमुदीशः क नो मुदे ॥ ६१ ॥ व्रताद्वर्षसहस्रांते । विहरन् भगवान् य-
यौ ॥ शाखापुरमयोध्यायाः । पुरं पुरिमतालकं ॥ ६२ ॥ तस्मादुत्तरपूर्वस्यां । कानने शाकटा-
नने ॥ शिश्राय श्रीयुगादीशो । मूले न्यग्रोधभूरुहः ॥ ६३ ॥ फाल्गुने मासि कृष्णैका—द-
श्यां वैश्वर्क्षगे विधौ ॥ स प्राप केवलज्ञानं । पूर्वाह्णे विहिताष्टमः ॥ ६४ ॥ यत्तस्य निश्रया ज्ञा-
न—मुत्पेदे परमेशितुः ॥ ततो मन्ये तरुष्वासी—द्विस्तारेणाधिको वटः ॥ ६५ ॥ तत्क्षणा-
देव हींद्राणां । सर्वेषां सुदृढान्यपि ॥ तद्ज्ञानहर्षान्नृत्यंती—वासनानि चकंपिरे ॥ ६६ ॥ त-
तो दत्तोपयोगास्ते । जानाना ज्ञानमर्हतः ॥ आययुः सपरीवारा । मनसा समरंहसः ॥६७॥
विधातुं समवसृतिं । क्षितिं तत्रैकयोजनं ॥ मभृजुर्वायुकुमाराः । सिषिंचुर्मेघमालिनः ॥ ६८ ॥
रत्नस्वर्णमयं पीठ—माबद्ध्य व्यंतराः सुराः ॥ पुष्पाणि ववृषुर्जानु—प्रमाणानि समंततः ॥ ६९ ॥
पीठाच्चतुर्दिशि बभु—र्नानारत्नौघतोरणाः ॥ अर्हन्मेघस्य वाग्वारि—वृष्टाविंद्राधनूयितः ॥७०॥
तेष्वभूवन् ध्वजछत्र—पांचालीचामरोच्चयाः ॥ सतां प्रविशतां धर्म—पुरे शकुनहेतवः ॥७१॥
अथ वैमानिका ज्योति—ष्पतयो भवनाधिपाः ॥ प्राकारांस्त्रींस्त्रिजगती—रक्षार्थमिव चक्रिरे ॥

लोकलोचनचंद्रिका ॥ २७ ॥ अकृताकारितं भिक्षा—मात्रमस्य हि कल्पते ॥ ददानः स्वर्णर-
त्नाद्यं । वृथा ताम्यत्यसौ जनः ॥ २८ ॥ एवं चिंतयतस्तस्य । मंदिरे प्रभुराययौ ॥ न हि भा-
ग्यवतां कार्य—सिद्धौ कालो विलंबते ॥ २९ ॥ श्रेयांसस्तातमायातं । जातरोमांचकंचुकः ॥
ननाम तत्पदांभोज—द्वंद्वे स्वं भृंगयन् शिरः ॥ ३० ॥ वीचिरिव स हर्षाब्धे—रश्रुधाराः क्ष-
रन् जिनं ॥ केनापि ढौकितैरीक्षु—रसकुंभैरुपास्थितः ॥ ३१ ॥ दानवद्ग्रहणस्यापि । विधिर्द-
र्श्यस्त्वया खलु ॥ इतीव प्रतिबोध्य स्वं । पाणिं प्रासारयत्प्रभुः ॥ ३२ ॥ आरादैक्षुरसीधारा ।
कुंभांभोदमुखादथ ॥ प्रभोः पपात पूरेण । प्रसृते पाणिपल्वले ॥ ३३ ॥ श्रेयांसपुण्यप्रासाद—
चूलेव क्रमवर्धिनी ॥ नीरंध्रभगवत्पाणि—पीठस्था तच्छिखा लभौ ॥ ३४ ॥ मागधा इव कुर्वाणाः
। स्तवं दानस्य वास्तवं ॥ पुष्पौघं ववृषुर्देवा । आघ्नंतो दुंदुभीन् दिवि ॥ ३५ ॥ कृत्वा गंधांबु-
वृष्टिं च । चेलोत्क्षेपं च तेऽमुचन् ॥ अर्धत्रयोदशस्वर्ण—कोटीरकुटिलाशयाः ॥ ३६ ॥ वत्स वे-
त्सि कथं पात्र—दानमित्युदितस्तदा ॥ पित्रा पौरैश्च स प्रोचे । प्राग्भवोदंतमात्मनः ॥ ३७ ॥
शय्यासिक्पिंडपात्राद्यं । यथा कल्प्यं महात्मनां ॥ तथा गुरुरिवादिक्ष—दसौ दक्षजनाग्रतः

॥ ३७ ॥ स्वप्नत्रयार्थसंदेह–दहनो गहनोऽपि सः ॥ राजादीनां ययौ नाथ–पारणाया स्वयं क्ष-
यं ॥ ३७ ॥ माभूदाशातना लोक–पादघट्टनयानयोः ॥ इति प्रभुपदोः स्थाने । रत्नपीठं बबं-
ध सः ॥ ४० ॥ अन्यैरपि जगद्भर्तुः । पारणाकारिभिर्जनैः ॥ श्रेयांसवत्प्रभुपदोः । पादपीठं
व्यधीयत ॥ ४१ ॥ परमर्थमजानानैः । कालेन कियताप्यथ ॥ तदादिपीठमादित्य–पीठाख्यं
स्थापितं जनैः ॥४२॥ एवं वर्षोपवासांते । जातप्रथमपारणः ॥ जिनेशो बहुलीदेशं । विहरन्नन्य-
दा ययौ ॥४३॥ प्राप्य बाहुबले राज–धानीं तक्षशिलामसौ ॥ सायं प्रतिमया तस्थौ । वने स्व-
पदपावने ॥ ४४ ॥ चिरादालोक्य लोकेशं । पक्षिणोऽपि विचक्षणाः ॥ तस्य स्तुतिपराः सांध्य
—कूजितव्याजतः स्थिताः ॥ ४५ ॥ विज्ञप्तो वनपालेना—वनीपालस्तदागमं ॥ दध्यौ नंस्या-
म्यहं तातं । प्रातरेवोत्सवैर्नवैः ॥ ४६ ॥ चिरायातं जगन्नाथं । तातं सामान्यसाधुवत् ॥ एव-
मेव कथं ग्राम्य । इव नूमान्नमाम्यहं ॥ ४७ ॥ वाङ्मात्रसिद्धसर्वार्थः । शोभां निर्माय गागरीं
॥ कथंचिदतिचक्राम । यामिनीं युगवन्नृपः ॥ ४७ ॥ आरूढो वारणं वार—वनितोध्धृतचाम-
रः ॥ धृतछत्रो नदद्वाद्यः । पठन्मंगलपाठकः ॥ ४९ ॥ समं समस्त सामंतै–र्नृपो यावद्ययौ व-

नं ॥ तावद्वायुरिव भ्रांत–र्व्यहार्षीदन्यतः प्रभुः ॥ ५० ॥ युग्मं ॥ निःसोमं व्योम निर्नीथं । कटकं निर्णसं मुखं ॥ यथा तथा वनं वीक्ष्य । निःस्तातं खिद्यतेस्म सः ॥ ५१ ॥ जानन्मां ता- त सोत्कंठं । यत्क्षणं न विलंबितः ॥ तत्पुरः कस्य पूत्कुर्वे । सर्वथा विधिना हतः ॥ ५२ ॥ निशामुखं प्रदोषो न । यत्र नाथ त्वमागमः ॥ मन्ये प्रदोषं त्वद्दीक्षा–बहिर्मुखमहर्मुखं ॥५३॥ त्यजध्वं भूरुहा मौनं । मुंचध्वं वनदेवताः ॥ वीक्षध्वं विहगाः स्वामी । विजहार कया दिशा ॥ ५४ ॥ एवं विलापिनं क्ष्मापं । वृद्धामात्या बभाषिरे ॥ चित्रं व्योम्नीव नीरागे—ऽनुरागः को- ऽयमत्र ते ॥ ५५ ॥ सहोपभुज्य जीवेन । प्रांते वैरस्यमीयुषि ॥ अभिन्नयति देहेऽपि । जिनोऽयं किं पुनः परे ॥ ५६ ॥ स्थितोऽस्ति तव हृद्येव । देवस्तत्किं विषीदसि ॥ यद्वा तच्चरणन्यासै - र्दृष्टैर्दृष्टो न किं पुनः ॥ ५७ ॥ स्तोकीकृत्य ततः शोकं । तातपादांकितां भुवं ॥ न स्पृशंति प- दैरन्ये । यथा नाथ तथा कुरु ॥ ५८ ॥ ततो व्यधापयत्तत्र । रत्नपीठं नरेश्वरः ॥ तत्तेजसाधि- कं द्रष्टुं । सूर्यबिंबमिवागतं ॥ ५९ ॥ योजनोन्नितदंडस्थं । तत्र स्थापयतिस्म सः ॥ सर्वरत्न- मयं धर्म—चक्रं योजनवर्तुलं ॥ ६० ॥ अनार्यदेशान् विचरन् । म्लेछानामप्यसौ प्रभुः ॥ अ-

वीवृधन्मुदं यद्धा । कौमुदीशः क नो मुदे ॥ ६१ ॥ व्रताद्वर्षसहस्रांते । विहरन् जगवान् य-
यौ ॥ शाखापुरमयोध्यायाः । पुरं पुरिमतालकं ॥ ६२ ॥ तस्मादुत्तरपूर्वस्यां । कानने शाकटा-
नने ॥ शिश्राय श्रीयुगादीशो । मूले न्यग्रोधजूरुहः ॥ ६३ ॥ फाल्गुने मासि कृष्णैका—द-
श्यां वैश्वर्क्षगे विधौ ॥ स प्राप केवलज्ञानं । पूर्वाह्णे विहिताष्टमः ॥ ६४ ॥ यत्तस्य निश्रया ज्ञा-
न—मुत्पेदे परमेशितुः ॥ ततो मन्ये तरुव्रासी—द्विस्तारेणाधिको वटः ॥ ६५ ॥ तत्क्षणा-
देव हींद्राणां । सर्वेषां सुदृढान्यपि ॥ तद्ज्ञानहर्षान्नृत्यंती—वासनानि चकंपिरे ॥ ६६ ॥ त-
तो दत्तोपयोगास्ते । जानाना ज्ञानमर्हतः ॥ आययुः सपरीवारा । मनसा समरंहसः ॥६७॥
विधातुं समवसृतिं । क्षितिं तत्रैकयोजनं ॥ ममृजुर्वायुकुमाराः । सिषिंचुर्मेघमालिनः ॥ ६८ ॥
रत्नस्वर्णमयं पीठ—माबध्य व्यंतराः सुराः ॥ पुष्पाणि ववृषुर्जानु—प्रमाणानि समंततः ॥ ६९ ॥
पीठाच्चतुर्दिशि बभु—र्नानारत्नौघतोरणाः ॥ अर्हन्मेघस्य वाग्वारि—वृष्टाविंद्राधनूयिताः ॥७०॥
तेष्वजूवन् ध्वजछत्र—पांचालीचामरोच्चयाः ॥ सतां प्रविशतां धर्म—पुरे शकुनहेतवः ॥७१॥
अथ वैमानिका ज्योति—ष्पतयो जवनाधिपाः ॥ प्राकारांस्त्रींस्त्रिजगती—रक्षार्थमिव चक्रिरे ॥

॥ ७२ ॥ रत्नस्वर्णरूप्यमया—स्ते क्रमात्प्रथमादिकाः ॥ मणिरत्नस्वर्णमयैः । कपिशीर्षैर्विरेजिरे ॥ ७३ ॥ मध्ये समवसरणं । पीठिका रत्नराशिभिः ॥ आबध्य विदधे तत्र । व्यंतरैश्चैत्यपादपः ॥ ७४ ॥ सपादपीठं तस्याधो । रत्नसिंहासनं च तैः ॥ व्यधीय तौत्तराधर्य—स्थितछत्रत्रयान्वितं ॥ ७५ ॥ द्वारे द्वारे धूपघटीः । प्रतिवप्रं विमुच्यते ॥ देवछंदकमैशान्या—माद्यवप्राद्बहिर्व्यधुः ॥ ७६ ॥ प्राग्द्वारेण विवेशाथ । नाकिनाथपरिछदः ॥ भगवान् देशनागारे । हेमपद्मार्हितक्रमः ॥ ७७ ॥ प्रदक्षिणय्य चैत्यद्रुं । नत्वा तीर्थं च तीर्थकृत् ॥ भेजे सिंहासनीं हंस । इवाब्जं प्राङ्मुखः प्रभुः ॥ ७८ ॥ शेषे दिक्त्रितये रत्न—सिंहासनगतान्यथ ॥ भगवत्प्रतिरूपाणि । व्यंतरास्त्रीणि चक्रिरे ॥ ७९ ॥ प्रविश्य पूर्वद्वारेण । दत्वा तिस्रः प्रदक्षिणाः ॥ नत्वा च नाथमाग्नेय्यां । तस्थुर्वैमानिकस्त्रियः ॥ ८० ॥ प्रविश्य दक्षिणद्वारा—नैरुत्यां विधिनामुना ॥ अतिष्ठन् भवनपति—ज्योतिर्व्यंतरयोषितः ॥ ८१ ॥ आगत्य पश्चिमद्वारा । पूर्वरीत्यावतस्थिरे ॥ वायव्यां भवनाधीश—ज्योतिष्कव्यंतराः सुराः ॥ ८२ ॥ उदग्द्वारा प्रविश्याथ । नाथमानम्य पूर्ववत् ॥ वैमानिका नरा नार्य—श्चैशान्यां दिश्यवस्थिताः ॥ ८३ ॥ मध्ये द्वि-

तीयवप्रस्य । मुक्त्वा जातिविरोधितां ॥ न्यषीदन् पशवः स्वामि—वाक्पीयूषपिपासवः ॥८४॥
इतश्च भगवद्दीक्षा—दिनमारभ्य नित्यशः ॥ अवादि भरतो दुःख—भरतो मरुदेवया ॥८५॥
वत्स त्वं भजसे राज्यं । पुरंदर इव श्रिया ॥ पुलिंद्रक इवैकाकी । वन्यामास्ते स ते पिता ॥
॥ ८६ ॥ क तत्तपः कर्कशदेहसाध्यं । सुतः क सोऽत्यंतमृदुर्मदीयः ॥ लुकाभिघातं किमु जा-
तिपुष्पं । मुक्ताफलं वा सहतेऽग्निहेतिं ॥ ८७ ॥ त्यजन्नेकपदे लक्ष्मीं । भजंस्तत्तादृशं तपः
॥ पिता घोरव्रताढ्यस्ते । त्वयापि न निवारितः ॥ ८८ ॥ संकल्पमात्रसुत्रामो—पनीतद्विपवा-
हनः ॥ स कथं पत्तिवत्पद्भ्यां । विहरिष्यति संप्रति ॥ ८९ ॥ न शय्या न निषद्या वा । न
स्नानं न च भोजनं ॥ सूनोः संभाव्यते हंत । जनन्यद्यापि जीवति ॥ ९० ॥ एवं हृद्रोगवि-
ध्वस्त—धैर्यां तां भरतोऽभ्यधात् ॥ मातः किं कातरासि त्वं । जिनेंद्रस्य जनन्यसि ॥ ९१ ॥
कोऽयं यत्तत्प्रलापस्ते । पुत्रवात्सल्यहेतुकः ॥ मनुष्यमात्रं मा मात—स्तातं मम विचारय ॥
॥ ९२ ॥ मन्ये महेभ्यस्तातो मे । लिप्सुर्लोकोत्तरां श्रियं ॥ स्वं क्लेशयति न क्लेश—भीरूणाम-
द्भुताः श्रियः ॥ ९३ ॥ पितामहि महैश्वर्यं । तस्य वीक्षिष्यसेऽचिरात् ॥ यत्पुरः पुरुहूताद्याः ।

न्यां । प्राप व्याख्यासदः प्रनोः ॥ १७ ॥ उत्सृज्य राजचिह्नानि । पदातिर्विहितांजलिः ॥ तत्र प्रविश्य चक्रेऽसौ । नतुस्तिस्रः प्रदक्षिणाः ॥ १८ ॥ केवलज्ञानविज्ञात—वस्तूत्पत्तिस्थितिव्यय ॥ जय त्वं स्वर्महीनाथ–नमस्कृतपदद्वय ॥ १९ ॥ दुंदुभिध्वनितछत्र–त्रयशक्रध्वजादिकः ॥ बाह्योऽपि महिमा सोऽयं । तव कस्य न चित्रकृत् ॥ २० ॥ कर्माभ्रपटलाभावे । दधत्स्वाभाविकं महः ॥ देदीप्यसे दिनाधीश । इव त्वमधुनाधिकं ॥ २१ ॥ तात त्वं परमैश्वर्यं । संप्राप्तो देशचर्यया ॥ मिलिताय चिरान्मह्यं । देहि सद्बोधिभूषणं ॥ २२ ॥ इति स्तुत्वा च नत्वा च । नरनाथे निषेदुषि ॥ जगौ जगद्गुरुर्भेरी–ध्वानमानभिदा गिरा ॥ २३ ॥ हंहो मुक्तिपुरीपांथा । रत्नत्रितयशालिनः ॥ सचेतनाः स्थ संसारा—रण्ये संचारिणो जनाः ॥ २४ ॥

यत्र पल्लीपतिर्मोहः । सहस्राक्षादिकानपि ॥ कषायान् यामिकीकृत्य । नित्यबंदीकरोत्यलं ॥ २५ ॥ यत्र चौरा इव क्रूरा । विषयाः स्वार्थजागराः ॥ अमुष्टं नैव मुंचंति । जातु पुण्यधनं जनं ॥ २६ ॥ कुर्वंति चारुचारित्र—प्राणमुक्तान् शरीरिणः ॥ यत्र प्रकृतिसोन्मादाः । प्रमादाः श्वापदा इव ॥ २७ ॥ प्राणिनो भ्रष्टचरणान् । क्षिपंति भववारिधौ ॥ हास्येन फेनिला

वक्राः । स्त्रियो यत्रापगा इव ॥ २७ ॥ अतिक्रामंत्यविश्राम—मीदृशीं ये भवाटवीं ॥ तेषां मो-
क्षपुरप्राप्त्या । न दूरं शाश्वतं सुखं ॥ २ए ॥ श्रामण्यं श्रावकत्वं च । द्वौ पंथानौ जिनेश्वरैः
गंतुं सिद्धिपुरं प्रोक्तौ । दुःखावहसुखावहौ ॥ ३० ॥ तत्रासिधारासदृश—श्रामण्यपथगत्वराः ॥
सत्वरं सत्वरंगेण । निर्वृतिं यांति जंतवः ॥ ३१ ॥ द्वैतीयिकोऽनृजुः पंथाः । श्रावकत्वमिहोच्य-
ते ॥ उपासते शिवपुरं । यं प्रपन्नाः शनैः शनैः ॥ ३२ ॥ अल्पीकृतामृतामेता—मापीय भग-
वद्गिरं ॥ हर्षोत्फुल्ला गलत्तृष्णा—स्तनया भरतेशितुः ॥३३॥ शतानि पंचऋषभ—सेनाद्या ज-
गृहुर्व्रतं ॥ शतानि सप्त नप्तारो । गोप्तारश्चाखिलांगिनां ॥ ३४ ॥ युग्मं ॥ ब्राह्म्यां तदात्त
दीक्षायां । सुंदरीं समतिष्ठिपत् ॥ स्त्रीरत्नं भवतादेषा । ममेति भरतेश्वरः ॥ ३५ ॥ क्रतुभुक्क्-
तकैवल्य—महिमालोककौतुकात् ॥ जातबोधिः प्रवव्राज । मरीचिर्भरतांगजः ॥ ३६ ॥ भर-
ताद्यैर्नरैर्भेजे । गृहिधर्मः स्वशक्तितः ॥ बभूवुः श्राविका नार्यः । सुंदरीप्रमुखास्तदा ॥ ३७ ॥
एवं चतुर्विधं संघं । जगत्प्रभुरतिष्ठिपत् ॥ आसनं धर्मराजस्य । चतुष्पादिव निश्चलं ॥३७॥
विपाकप्राप्तगणभृ—त्कर्माणो मुनिपुंगवाः ॥ चतुर्भिरधिकाशीति—रसंशीतिपदव्रताः ॥ ३ए ॥

संपदस्तृणसन्निभाः ॥ ९४ ॥ भरतेनैवमुक्तापि । तापं पुत्रवियोगजं ॥ अधीरा नैव सामुंच-
दुंचनामात्रमानिनी ॥ ९५ ॥ निरंतरकरन्नीर—पूरोन्मीलितनीलिका ॥ दृशोरनंजनच्छेद्य—मां-
ध्यं सा रुदती ययौ ॥ ९६ ॥ तदा संजातकैवल्ये । प्रभावुद्यानपालकः ॥ भरतं वर्धयामास ।
विनीतामेत्य तत्क्षणं ॥ ९७ ॥ हर्षादुच्छ्वसिते देहे । नैव मास्यंत्यमूनि मे ॥ इतीव भरतस्त-
स्मै । भूषणान्यखिलान्यदात् ॥ ९८ ॥ एत्य विज्ञपयामास । तावदायुधशालिकः ॥ शस्त्रागा-
रे सहस्रारं । चक्रमाविरभूदिति ॥ ९९ ॥ ततो नरपतिर्दध्यौ । दोलारूढमना इव ॥ कातर-
त्पूजयाम्येव । पूर्वं श्रीतातचक्रयोः ॥ १०० ॥ यद्वाजेनेव देवेभं । खद्योतेनेव भास्करं ॥ कुरं-
गेणेव पारींद्रं । सेवकेनेव भूभुजः ॥ १ ॥ करीरेणेव कल्पद्रुं । गोष्पदेनेव नीरधिं ॥ चक्रेण
तुलयंस्तात—महं मूर्खेषु शेखरः ॥ २ ॥ युग्मं ॥ क्व तातो वासवासेव्य— स्त्रिलोकैश्वर्यकार-
णं ॥ क्व चक्रं संगतक्रुद्ध—व्यंतरं भूमिखंडदं ॥ ३ ॥ तात एव ततः पूर्वं । सेव्यश्चक्रमपि क्र-
मात् ॥ निश्चित्येति समाह्वातुं । मरुदेवीं नृपो ययौ ॥ ४ ॥ पौत्रस्त्वां वंदते ज्याया—नित्यु-
क्त्वा तां ननाम सः ॥ संप्रति प्रभुतां पश्य । तातस्येति जगाद च ॥ ५ ॥ सहसोद्भिन्नहर्षा-

श्रु—पूरदूरितदृग्मला ॥ आससाद प्रसादं सा । शारदीव शशिप्रभा ॥ ६ ॥ अथारोप्य गज-
स्कंधं । महीनाथः पितामहीं ॥ प्रतस्थे प्रभुमानंतु—मनंतज्ञानशालिनं ॥ ७ ॥ आसन्नीभूत-
समव—सरणस्तां जगाद सः ॥ पुरतः परमैश्वर्यं । मातस्तातस्य दृश्यतां ॥ ८ ॥ रूप्यकांचनमा-
णिक्य—मयं वप्रत्रयं व्यधुः ॥ तव सूनोरवस्थातुं । देवाः सेवागता इदं ॥ ९ ॥ नंतुं तवां-
गजन्मान—मागच्छद्भिः सुरासुरैः ॥ एभिर्नभोऽपि संकीर्ण—मिव पश्य विधीयते ॥ १० ॥ च-
लाचलांचलः शक्र—ध्वजः सूनोः पुरस्तव ॥ दूरायातजनव्रात—घर्मघातं तनोत्ययं ॥ ११ ॥
व्योमाध्वनि ध्वनन्नेष । दुंदुभिस्त्वत्सुताग्रतः ॥ असमानैः स्वप्रतिध्वानै—र्मुखरीकुरुते दिशः ॥
॥ १२ ॥ सूनोस्तदेतदैश्वर्यं । पश्यंती विस्मयाकुला ॥ प्रभस्यदपि नाबुरू । जरती सा निजं म-
नः ॥ १३ ॥ स्वादयंती चिदानंद—मात्मानुभवगोचरं ॥ ढौकितं तनयेनेव । केवलज्ञानमाप
सा ॥ १४ ॥ तदैव परिपूर्णायु—र्ययौ सा शिवपत्तनं ॥ वत्सं विवत्सुं विज्ञाय । तत्र सोध्धुमि-
वालयं ॥ १५ ॥ तस्या अत्रावसर्पिण्यां । प्राक्सिद्धस्य वपुः सुरैः ॥ चंदनादिभिरभ्यर्च्य । न्य-
धायि क्षीरसागरे ॥ १६ ॥ भरतस्तापवर्षाभ्या—मिव प्रोष्टपदो दिनः ॥ व्याप्तो विषादहर्षा-

न्यां । प्राप व्याख्यासदः प्रनोः ॥ १७ ॥ उत्सृज्य राजचिह्नानि । पदातिर्विहितांजलिः ॥ तत्र प्रविश्य चक्रेऽसौ । नर्तुस्तिस्रः प्रदक्षिणाः ॥ १८ ॥ केवलज्ञानविज्ञात—वस्तूत्पत्तिस्थितिव्यय ॥ जय त्वं स्वर्महीनाथ-नमस्कृतपदद्वय ॥ १९ ॥ दंदुनिध्वनितब्रत्र-त्रयशक्रध्वजादिकः ॥ बाह्योऽपि महिमा सोऽयं । तव कस्य न चित्रकृत् ॥ २० ॥ कर्माभ्रपटलानावे । दधत्स्वानाविकं महः ॥ देदीप्यसे दिनाधीश । इव त्वमधुनाधिकं ॥ २१ ॥ तात त्वं परमैश्वर्यं । संप्राप्तो देशचर्यया ॥ मिलिताय चिरान्मह्यं । देहि सद्बोधिन्नूषणं ॥ २२ ॥ इति स्तुत्वा च नत्वा च । नरनाथे निषेदुषि ॥ जगौ जगद्गुरुर्भेरी-ध्वानमानभिदा गिरा ॥ २३ ॥ हंहो मुक्तिपुरीपांथा । रत्नत्रितयशालिनः ॥ सचेतनाः स्थ संसारा—रण्ये संचारिणो जनाः ॥ २४ ॥

यत्र पल्लीपतिर्मोहः । सहस्राक्षादिकानपि ॥ कषायान् यामिंकीकृत्य । नित्यबंदीकरोत्यलं ॥ २५ ॥ यत्र चौरा इव क्रूरा । विषयाः स्वार्थजागराः ॥ अमुष्टं नैव मुंचंति । जातु पुण्यधनं जनं ॥ २६ ॥ कुर्वंति चारुचारित्र—प्राणमुक्तान् शरीरिणः ॥ यत्र प्रकृतिसोन्मादाः । प्रमादाः श्वापदा इव ॥ २७ ॥ प्राणिनो भ्रष्टचरणान् । क्षिपंति नववारिधौ ॥ हास्येन फेनिला

वक्राः । स्त्रियो यत्रापगा इव ॥ २८ ॥ अतिक्रामंत्यविश्राम—मीदृशीं ये नवाटवीं ॥ तेषां मो-
क्षपुरप्राप्त्या । न दूरं शाश्वतं सुखं ॥ २९ ॥ श्रामण्यं श्रावकत्वं च । द्वौ पंथानौ जिनेश्वरैः
गंतुं सिद्धिपुरं प्रोक्तौ । दुःखावहसुखावहौ ॥ ३० ॥ तत्रासिधारासदृश—श्रामण्यपथगत्वराः ॥
सत्वरं सत्वरंगेण । निर्वृतिं यांति जंतवः ॥ ३१ ॥ द्वैतीयिकोऽनृजुः पंथाः । श्रावकत्वमिहोच्य-
ते ॥ उपासते शिवपुरं । यं प्रपन्नाः शनैः शनैः ॥ ३२ ॥ अल्पीकृतामृतामेता—मापीय जग-
वद्गिरं ॥ हर्षोत्फुल्ला गलत्तृष्णा—स्तनया भरतेशितुः ॥३३॥ शतानि पंचऋषभ-सेनाद्या ज-
गृहुर्व्रतं ॥ शतानि सप्त नप्तारो । गोप्तारश्चाखिलांगिनां ॥ ३४ ॥ युग्मं ॥ ब्राह्म्यां तदात्त
दीक्षायां । सुंदरीं समतिष्टिपत् ॥ स्त्रीरत्नं भवतादेषा । ममेति भरतेश्वरः ॥ ३५ ॥ क्रतुभुक्त-
तकैवल्य—महिमालोककौतुकात् ॥ जातबोधिः प्रवव्राज । मरीचिर्भरतांगजः ॥ ३६ ॥ भर-
ताद्यैर्नरैर्भेजे । गृहिधर्मः स्वशक्तितः ॥ बभूवुः श्राविका नार्यः । सुंदरीप्रमुखास्तदा ॥ ३७ ॥
एवं चतुर्विधं संघं । जगत्प्रभुरतिष्टिपत् ॥ आसनं धर्मराजस्य । चतुष्पादिव निश्चलं ॥ ३८ ॥
विपाकप्राप्तगणभृ—त्कर्माणो मुनिपुंगवाः ॥ चतुर्भिरधिकाशीति—रसंशीतिपदव्रताः ॥ ३९ ॥

प्राप्योत्पादव्ययध्रौव्य—त्रिपदीं परमेशितुः ॥ अंगानीव श्रुतपुंसो । द्वादशांगानि ते व्यधुः ॥
॥ ४० ॥ दिव्यचूर्णभृतं स्थालं । समयज्ञः पुरंदरः ॥ तदादाय पुरो भर्तु—रुपतस्थे सुरैः सह
॥ ४१ ॥ वासक्षेपं प्रकुर्वाणे । तेषां मूर्ध्नि जिनेश्वरे ॥ वाद्यान्यवीवदन् देवा । वासवृष्टिवि-
धायिनः ॥ ४२ ॥ दत्वा तीर्थानुयोगाज्ञा—नुपदं गणभृत्पदं ॥ वितेने देशनां नाथः । पुरतो
गणधारिणां ॥ ४३ ॥ अत्रांतरे चतुःप्रस्थ—प्रमाणैः कलमैर्नवैः ॥ संपृक्तसुरभिद्रव्यः । कारि-
तश्चक्रिणा बलिः ॥ ४४ ॥ आनीय पूर्वद्वारेण । स्त्रीभिरुद्गीतमंगलः ॥ लीलयोल्लालयांचक्रे ।
त्रिः पौरैः पुरतः प्रभोः ॥ ४५ ॥ युग्मं ॥ तस्य पतत एवार्धं । देवा अर्धार्धकं नृपः ॥ जंतुं
सर्वापदः शेषं । जगृहुः प्राकृता जनाः ॥ ४६ ॥ सिंहासनादथोत्थाय । देवछंदं गते प्रभौ ॥ च-
क्रे द्वैतीयपौरुष्यां । देशनां प्रथमो गणी ॥ ४७ ॥

प्रभुं कच्छमहाकच्छ—वर्जास्तेऽपि तपस्विनः ॥ पुनः पल्लवितं वृक्षं । प्रपन्ना विहगा इव ॥४८॥
दीक्षां प्रभोः पुनः प्राप्य । तेनिरे ते निरेनसः ॥ त्रुटितं संहितं तादृग् । न स्यादिति मृषा श्रु-
तिः ॥ ४९ ॥ गोमुखो यक्षराट् चक्रे—श्वरी देवी च शासने ॥ तस्य सन्निहितौ जातौ । भ-

क्तजातेप्सितप्रदौ ॥ ५० ॥ नामं नामं निवृत्तेषु । निर्जरेषु नरेषु च ॥ अयोध्यां जरतः प्राप-
दनुज्ञाप्य जिनेश्वरं ॥ ५१ ॥ प्रविश्यायुधशालायां । दिनान्यष्ट महोत्सवं ॥ चक्रे चक्रस्य स
द्रोणि—चक्रे चिक्रमिषुर्द्विषः ॥ ५२ ॥ हास्तिकाश्वीयरथ्यालो । रथ्याः संकीर्णयन्नयं ॥ शुभे-
ऽहनि दिशं प्राचीं । प्रतस्थे कृतमंगलः ॥ ५३ ॥ दुर्दांतध्वांतघाताय । जास्वद्बिंबविडंबकं ॥
तच्चक्रमचलत्तस्य । वर्त्मकर्षकवत्पुरः ॥ ५४ ॥ रंगत्तुरंगकल्लोलै—र्मिलद्भिः पथि पार्थिवैः ॥ वा-
हिनी ववृधे तस्य । वाहिनीव नवैः प्लवैः ॥ ५५ ॥ प्रयाणमकरोच्चक्र—मेकं योजनमन्वहं ॥ यो-
जनानां व्यवस्थाभू—त्ततोऽत्र जरते नृणां ॥ ५६ ॥ आक्रम्य स क्रमात्प्राच्यान् । विषयान्
वरविक्रमः ॥ तीरं नीरनिधेः प्राप । संसारस्येव संयमी ॥ ५७ ॥ आसूत्र्य तत्र सैन्यानां । वा-
सवेश्मानि वर्धकिः ॥ चकार पौषधागारं । स्फुरन्नानामणिद्युतिः ॥ ५८ ॥ अजिह्मब्रह्मभूर्दर्ज-
स्रस्तरे दुस्तरोर्जितः ॥ उपवासत्रयं तत्र । चक्रे चक्रेश्वरः सुखं ॥ ५९ ॥ तुरीये च दिने प्रात
—रात्तसर्वायुधो रथं ॥ आरुरोह हतक्लेशः । शैलेशमिव केसरी ॥ ६० ॥ स्थिरीकृत्य रथं ना-
नि—दघ्ने वारिधिवारिणि ॥ रथस्थ एव कोदंडं । कुंडलीकृतवान्नृपः ॥ ६१ ॥ नीतांष्टंकार·

तो मध्ये । वार्धिनक्रान्निमज्जयन् ॥ बाणं मागधतीर्थेश-मुद्दिश्य विससर्ज सः ॥ ६२ ॥ राजि-
लैरहिवैरीति । शेषैरुल्केति वीक्षितः ॥ अंजोधेः क्षोभयन्नंजः । पक्षसूत्कारमारुतैः ॥ ६३ ॥ बा-
णः प्राणहरोऽरीणां । गत्वा द्वादशयोजनीं ॥ सजायां मागधेशस्य । कालदंड इवापतत् ॥६४॥
युग्मं ॥ ततः कोपेन कंप्रोष्ठः । खड्गे व्यापारयन् करं ॥ विकटभृकुटीभीष्म-भालः कालक-
रालदृक् ॥ ६५ ॥ अरे को निर्विवेकोऽद्य । यियासुर्यममंदिरं ॥ क्षिपन्ममाग्रतः कांड-मकांडे
मृत्युमिच्छति ॥ ६६ ॥ जल्पन्ननल्पमेवं स । ध्वंसकः प्रतिपंथिनां ॥ लुलोके शायके तत्र । सौ-
वर्णीं वर्णसंहतिं ॥ ६७ ॥ त्रिभिर्विशेषकं ॥ भो भजध्वमिह मां यदि राज्ये । जीविते च व-
रीवर्त्यभिलाषः ॥ एवमादिशति चक्रधरो वः । श्रीयुगादिजिनभूर्भरतेशः ॥ ६८ ॥ वर्णैर्निव-
र्णितैरेतै—र्निरस्यत्तस्य मत्सरः ॥ सुवर्णैरिव दारिद्र्यं । द्रुमपर्णैरिवातपः ॥ ६९ ॥ नत्वा तं बा-
णमादाय । निरपायमुपायनं ॥ एत्य चक्रिणमस्तावी-न्मागधो मागधो यथा ॥ ७० ॥ जयंति
नाथ तेजांसि । विश्वविश्वोत्तराणि ते ॥ अस्मादृशाः कृशा लोकाः । यत्पुरो ज्योतिरंगणाः ॥
॥ ७१ ॥ नवास्मि किंकरोऽनंकः । किं करोम्यहमादिश ॥ इत्युक्त्वाढौकयत्तस्मै । सद्वस्त्राभरणा-

नि सः ॥ ७२ ॥ प्रत्यंचाया धनुर्नीरा—द्ग्रं च विनिवर्त्य सः ॥ चकार पारणं सारै—राहारैः
सपरिच्छदः ॥ ७३ ॥ चक्री मागधमुद्दिश्य । चक्रेऽष्टाहं महोत्सवः ॥ शक्तिर्जक्ती हि कार्यस्य ।
संसिद्ध्यै भिक्षिते सतां ॥ ७४ ॥ ततश्चक्रानुगामित्व—दक्षो दक्षिणया दिशा ॥ चलन् प्रा-
वेशयच्चक्रं । चक्री पाथोधिरोधसि ॥ ७५ ॥ वरदामाभिधं तत्र । देवं प्राग्वन्निगृह्य सः ॥ तेन
ढौकितमादत्त । मुक्तामंकलमंकनं ॥ ७६ ॥ तमुद्दिश्य विशांनाथः । कृत्वाष्टदिनमुत्सवं ॥ चक्र-
सूचितवर्त्मासौ । प्रतीच्यां प्रस्थितो दिशि ॥ ७७ ॥ तत्र प्रभासतीर्थेशं । कृत्वा प्राग्वद्वशंवदं
॥ चूडामण्यादिकं तस्य । प्राभृतं भरतोऽग्रहीत् ॥ ७८ ॥ सोऽथ प्रभासदेवस्य । विधायाष्टाह्नि-
कामहं ॥ प्रजापोषाय पूषेवा—चालीदुत्तरया दिशा ॥ ७९ ॥ प्राप्य सिंधुनदीं सिंधु—देवी-
मुद्दिश्य तत्तटे ॥ नृपस्तपोऽष्टमं भेजे । निविष्टः कुशविष्टरे ॥ ८० ॥ स्थितिज्ञा सिंधुदेवी सा ।
स्वांभोभिरभिषिच्य तं ॥ वस्तुसारं ददौ रत्न—कुंभभद्रासनादिकं ॥ ८१ ॥ कृत्वाष्टाहमहं त-
स्या । स चक्रानुपदं चलन् ॥ नितंबे दक्षिणे सेनां । वैताढ्यस्य न्यवेशयत् ॥ ८२ ॥ तत्राष्ट-
मेन बैताढ्य—देवादाशु वशीकृतात् ॥ आदाय प्राभृतं भूप—स्तस्याष्टाहमहं व्यधात् ॥ ८३ ॥

ततश्चक्रसमाकृष्टः । स तामिस्रगुहां गतः ॥ कृतमालं गुहानाथं । ध्यात्वा चक्रेऽष्टमं तपः ॥ ॥ ७४ ॥ सोऽपि कोपपरित्यागा—दात्तस्त्रीरत्नभूषणः ॥ कृतमालस्तमालस्य—मुक्तोऽन्येत्यानज-न्नृशं ॥ ७५ ॥ तस्याष्टाह्नमहं कृत्वा । चक्री सेनान्यमादिशत् ॥ सिंधुवैताढ्यवार्ध्यंतान् । देशांस्त्वं विजयस्व नोः ॥ ७६ ॥ सेनानाथः सुषेणोऽथ । चक्रेशस्य निदेशतः ॥ नावेव चर्मरत्नेनो—त्तीर्णस्सिंधुः समं बलैः ॥ ७७ ॥ आरूढः सिंधुरं सर्वान् । सिंधुनिष्कुटवासिनः ॥ देशानप्लावयन्नीर—पुरः सुप्तव्रजानिव ॥ ७८ ॥ तस्मै सिंहलकालास्य— शकाद्यैर्देशनायकैः ॥ विश्वं रत्नाश्वसर्वस्वं । स्वात्मेव समढौक्यत ॥ ७९ ॥ तानाज्ञायाहितांश्चक्र—वर्तिनः स्वस्वमंडले ॥ जत्वायारोपयद्वीर्य—शाली शालीन् हलीव सः ॥ ८० ॥ तथैव सिंधुमुत्तीर्य । समायातो नमन्नयं ॥ साधु साध्वसि योध त्व—मित्यानंद्यत चक्रिणा ॥ ८१ ॥ तेनादिष्टो गुहाद्वार—कपाटोद्घाटनाय सः ॥ आत्तपूजोपकरण—स्तत्र गत्वाष्टमं व्यधात् ॥ ८२ ॥ अश्वरत्नमथारुह्य । तुर्येह्नि कृतपारणः ॥ अभ्यर्च्य दंडरत्नेन । कपाटौ त्रिर्जघान सः ॥ ८३ ॥ कपाटे दंडघातेनो—द्घटेतां क्षणादुभे ॥ दिदृक्षोश्चक्रिणः सैन्यं । गुहाद्वाः पद्मणी इव ॥ ८४ ॥ गुहाबाष्पन्निया

पश्चा–त्पदैर्व्यावर्त्य वाजिनं ॥ कपाटपुटविश्लेष–मेष राज्ञे व्यजिज्ञपत् ॥ ९५ ॥ आरुह्य कुं-
भिनं कुंभ—जृंभमाणमणिं नृपः ॥ प्रविवेश गुहां ध्वस्त—ध्वांतस्तत्तेजसा पुरः ॥ ९६ ॥ द्व-
योर्भित्त्योरथैकोन–पंचाशन्मंडलानि सः ॥ काकिण्या सैन्यलोकाना— मालोकाय विनिर्ममे ॥
॥ ९७ ॥ तरत्यश्मापि यस्यांता—मुन्मग्नेति श्रुतां नदीं ॥ तूलस्यापि तले क्षेप्त्री । निम्नगेत्य-
पुरां पुनः ॥ ९८ ॥ क्रमेण पद्ययोत्तीर्य । सद्यो वर्धकिक्लृप्तया ॥ अवापदुत्तरद्वारं । चक्री चक्रपु-
रः सरः ॥ ९९ ॥ युग्मं ॥ निर्ययासौ नृपे तत्रा–ररी प्रोद्घटितौ स्वयं ॥ सुश्लिष्टावपि वाक्पू-
रे । सूरेर्दंतच्छदाविव ॥ ९०० ॥ भरतोत्तरखंडस्थान् । देशांश्चक्रिचमूचराः ॥ उपाद्रवन् वनत-
रू–नुत्पातपवना इव ॥ १ ॥ वर्ष्मणा कर्मणा चापि । काला व्याला इवोन्मदाः ॥ आपाता
इति विख्याताः । किरातास्तत्र नायकाः ॥ २ ॥ जालाध्वनेव सूर्यांशू–नुद्भूतान् कंदरेण ते ॥
वीक्ष्याहंकारिणश्चक्रि–सैन्यान् योध्धुं दुढौकिरे ॥ ३ ॥ तैः शस्त्रपाणिभिः स्फार–फणैरिव भुजं-
जंगमैः ॥ सूरा अपि सकृत्कंपं । प्रापिताश्चक्रिसैनिकाः ॥ ४ ॥ व्योम्नि दंडाधिपः खड्ग—शुं-
डां तांडवयन्नथ ॥ हस्तीव मर्दितुं वैरि—शशकानुदतिष्ठत ॥ ५ ॥ ते सेनापतिना रुद्धा । वृ-

केनेवोरणा रणे ॥ भ्रष्टाः केऽपि मृताः केऽपि । जवात्केऽपि पलायिताः ॥ ६ ॥ संभूयाथ ग-
ल्लन्माना । उत्ताना मुक्तवाससः ॥ बाला मातुरिवोत्संगे । सिंधो रोधस्यशेरत ॥ ७ ॥ गोत्रा-
धिदैवतं ध्यात-मात्रास्तैर्दुःखपूरितैः ॥ विज्ञायासनकंपेन । समीयुर्मेघमालिनः ॥ ८ ॥ ते तैर-
भिहिते दुःख-हेतौ हितधियो जगुः ॥ वत्सास्तुब्धधियो यूयं । चक्रिणं यज्जिगीषवः ॥ ए ॥
सिंहो ध्रियेत खन्येत । गिरिस्तीर्येत सागरः ॥ वह्निः पीयेत जीयेत । न चक्री केनचित्पुनः
॥ १० ॥ नष्टे रोध्धुममुं शैल—कंपनः किं पुनः परे ॥ तथापि वत्सा वः स्नेहा—द्विघ्नमात्रं
विदध्महे ॥ ११ ॥ इत्युक्त्वा चक्रिसैन्यस्यो—परि ते परितो नभः ॥ मेघसंघातमातत्या—व-
र्षन्मुशलधारया ॥ १२ ॥ औद्धत्यं गिरिशृंगाणां । स्थिरत्वं धरणीरुहां ॥ दुःपूरत्वं स्थलीनां च
। मम्रृजे वारिदैस्तदा ॥१४॥ पाणिस्पर्शेन विस्तारं । प्राप्ते द्वादशयोजनं ॥ स कुट्टिम इव स्कं-
धा—वारं तत्र न्यवेशयत् ॥ १५ ॥ तथैवोपरि विस्तार्य । छत्रं तद्दंडमूर्धनि ॥ न्यस्तेन मणि-
रत्नेन । तमः शमयतिस्म सः ॥ १६ ॥ उप्तानि गृहिरत्नेन । प्रातः सायं विपेचिरे ॥ शस्यशा-
कफलान्यत्र । पुण्यानीव मनस्विनां ॥ १७ ॥ काले संपन्नसर्वार्थो । द्यूतगीतादिसादराः ॥ व-

संतः संपुटे तत्र । लोकाः स्त्रौकोऽपि नास्मरत् ॥ १७ ॥ एवं व्यतीतसप्ताह—श्चक्रेशो दध्यिवा-
निति ॥ अरे दैवहतः कोऽयं । मयि तोयं विमुंचति ॥ १९ ॥ नेतुश्चेतोऽनुवृत्त्याथ । देवास्त-
स्यांगसेवकाः ॥ अधावन् बद्धकवचा । गुरुमुद्गरपाणयः ॥ २० ॥ ते मेघमालिनः प्रोचु—रसं-
कोचमिदं वचः ॥ रे मूढाश्चक्रिसैन्येऽस्मि—न्नंत्नःसंरंत्नमुज्झत ॥ २१ ॥ वचं देवज्ञवप्रीत्या ।
वदामः क्षेमकांक्षिणः ॥ हरेरेकासनसखं । द्विषतां नास्ति वः सुखं ॥ २२ ॥ एष द्रुविवनीदा-
वं । यावच्चक्रं दधाति न ॥ गलद्दलाः प्रलायध्वं । तावन्नो चेन्मृता मृताः ॥ २३ ॥ इति यक्ष-
वचः श्रुत्वा । ते नेशुर्जलदैः सह ॥ आपाता इति तैरुक्ता । नेजिरे नरतेश्वरं ॥ २४ ॥ नमं-
तस्तेऽपि तं सार—रत्नोपायनपाणयः ॥ पुनः प्रापुः स्वराज्योनि । न हि नम्रेष्वसौ खलः ॥२५॥
सुखेनाथ सुषेणेन । सिंधोः पश्चिमनिष्कुटे ॥ विजिते नरतश्चक्रा—नुगः प्राप हिमालयं ॥ २६ ॥
देवं हिमवतोऽधीशं । प्रति कृत्वाष्टमं तपः ॥ रथमारुह्य तत्तुंडे—नाद्रिं त्रिः स्पृष्टवानसौ ॥
॥ २७ ॥ विक्षिप्तस्तेन हिमव—त्कुमारंप्रति सायकं ॥ द्वासप्ततिमतीयाय । योजनान्यूर्ध्वदि-
ग्मुखः ॥ २८ ॥ यः पुरः पतता तेन । वर्धितो हिमवत्पतेः ॥ पुंखस्थैरक्षरैस्तस्य । क्रोधः स

विधुरीकृतः ॥ २ए ॥ गोशीर्षौषधिपुष्पाणि । पाणिस्थानि विधाय सः ॥ उपेत्य नरतं नूपं । नेजे नर्तृधिया रयात् ॥ ३० ॥ नूनाथस्तं विसृज्याथ । चकाराष्टमपारणं ॥ अकारयच्च तत्रैन—मुद्दिश्याष्टाह्निकामहं ॥ ३१ ॥ ततः स ववले जाता—वलेपः स्वनुजोजसि ॥ लिलिखे च निजं नाम । काकिण्या रुषनाचले ॥ ३७ ॥ अतीतनारताधीश—नामौघं तत्र पश्यतः ॥ तस्यैकप्रनुतागर्वं—पर्वतः प्राप खर्वतां ॥ ३३ ॥ सोऽथ प्रचलितश्चक्रा—दिष्टवर्त्मन्यवीविषत् ॥ वैताढ्यनूधरोदीच्य—कटके कटकं स्वकं ॥ ३४ ॥ व्यक्तवर्णमुखो दूत । इव तत्प्रहृतः शरः ॥ आपत्य ज्ञापयामास । खेचरेशौ तदागमं ॥ ३५ ॥ तौ शूकलौ कशाघाता—दिव दृष्टात्ततः शरात् ॥ प्रहर्तुमाकुलौ नमि—विनम्याख्यौ बनूवतुः ॥ ३६ ॥ तावेत्य वैक्रियैर्यानैः । समं खेचरैर्युयुत्सुनिः ॥ चक्राते चक्रिणः सेनां । शांतवैवस्वतातपां ॥ ३७ ॥ विद्याधरैर्व्योमचरै—र्नूमिष्ठाश्चक्रिणो नटाः ॥ अयुध्यंत द्विषो हंतु—मुत्पतंत इवोत्कटाः ॥ ३७ ॥ ताज्यां सह रणक्रीमां । कुर्वन् द्वादशवार्षिकीं ॥ चक्री ममर्द मृत्पिंमा—निव निःशेषखेचरान् ॥ ३ए ॥ आस्तां तौ खेचरैस्त्यक्त—सन्निधी खेचरेश्वरौ ॥ दंतैरिव गतोदंतै । राजदंतावशक्तिकौ ॥ ४० ॥

अढौकयच्चिरन्नानि । रत्नान्यस्मै नमन्नमिः ॥ मर्यादां रूपशिल्पस्य । स्त्रीरत्नं विनमिः पुनः ॥
॥४१॥ अथाभिमानिनौ चक्रि–सेवायास्तावकामुकौ ॥ तनयन्यस्तसाम्राज्यौ । प्रव्रज्यामजतां जि-
नं ॥ ४२ ॥ अथ त्रिपथगातीरे । सैन्यं न्यस्य नरेश्वरः ॥ असाधयत्सुषेणेन । तस्याः पौरस्त्यनि-
ष्कुटं ॥ ४३ ॥ गंगामष्टमभक्तेन । प्रत्यक्षीकृत्य कृत्यवित् ॥ आस्तामुपायनं तस्या–श्चेतोऽ-पि व्य-
धितात्मसात् ॥ ४४ ॥ विष्णोः पादावधः कायः । क्षारोऽब्धिः स्थाएकरीश्वरः ॥ इत्येषु प्रेमतो
मंदा । मंदाकिनी चकांक्ष तं ॥ ४५ ॥ गंगामनंगतप्तांगी–मेषस्वाश्लेषचंदनैः ॥ सिंचन्नजीग-
मदूर्ष–सहस्रं घस्रलीलया ॥ ४६ ॥ अथ खंरूप्रपाताख्यां । गुहामेत्याष्टमेन सः ॥ चक्रेतत्स्वा-
मिनं नाट्य—मालं देवं वशंवदं ॥ ४७ ॥ तदुपायनमादाय । कृत्वाष्टाह्महोत्सवं ॥ गुहाद्वा-
रोद्घाटनाय । सुषेणं निर्दिदेश सः ॥ ४८ ॥ सुषेणोद्घाटितेनाथ । गुहाद्वारेण पर्वतं ॥ सोऽ-
तीत्य दक्षिणं प्राप । नितंबमविलंबतः ॥ ४९ ॥ साधिते दंरूपालेन । गुहायाः पूर्वनिष्कुटे ॥ नि-
धीनुद्दिश्य चक्रेश—स्तस्थौ त्र्यहमुपोषितः ॥ ५० ॥ गंगातीरेऽस्य नैसर्पि–प्रमुखा निधयो नव
॥ प्रादुरासन्मते जैने । तत्वार्था इव धीमतः ॥ ५१ ॥ अक्षय्यकमलान्नीर–निधीनिव निधी-

चलितोऽथ चलस्रोथ–सहर्षहृय-
न्नव ॥ स्वीकृत्य विदधे चक्री । तेषामष्टाह्निकामहं ॥ ५२ ॥ नादैर्मंगलतूर्याणां । लोकानां
हेषितैः ॥ चित्कारै रथचक्राणां । गजेंद्राणां च गर्जितैः ॥ ५३ ॥ प्रतिप्रयाणमासर्स्तिः । जजं-
तुमुलैरपि ॥ विश्वं शब्दमयं तन्वं–श्चक्री निजपुरीं गतः ॥ ५४ ॥ नृत्यध्ध्वजभुजा प्रीति-
तीमपि तां नृपः ॥ दूराद्दूरतरं यांती–मिवौत्सुक्यादमन्यत ॥ ५५ ॥ विहितारात्रिको
विकाशिविशिखामुखा ॥ दृष्टमात्रास्य मातेव । सा पुरापूरयन्मुदं ॥ ५६ ॥ वंद्यमानपदः प्री-
मंचा–ग्रस्थैर्वारिवधूजनैः ॥ प्रतीष्टमंगलोऽगार–द्वारस्थकुलयोषिता ॥ ५७ ॥ भंक्त्वा द्वात्रिंश-
ति—गौरैः पौरैः पदे पदे ॥ कुशलप्रश्नतस्तेषु । किरन्निव सुधारसं ॥ ५८ ॥ त्रिभि-
तं बत्र–सहस्रानेकमेव तत् ॥ धारयन्नात्मनो मूर्ध्नि । विनीतां विशतिस्म सः ॥ ५९ ॥ अ-
विंशेषकं ॥ तत्प्रवेशे द्रुमा आसन् । अध्वजा अपि सध्वजाः ॥ प्रत्योकः स्वस्तिकैर्बद्धा ।
पि मुक्ता विराजिरे ॥ ६० ॥ प्राप्तः स्वभवनं वेत्रि—दत्तहस्तावलंबनः ॥ द्विपादुत्तीर्य संदसि ।
प्राङ्मुखो निषसाद सः ॥ ६१ ॥ बंधूनिव विवाहांते । विसृज्यामरखेचरान् ॥ सेनान्यादीन्
यथास्थानं । प्रजिघाय नृनायकः ॥ ६२ ॥ कुर्वाणः परिवारस्य । चिंतां चक्री चिरागतः ॥

ददर्श सुंदरीं क्षामां । ग्रीष्मतौं मालतीमिव ॥ ६३ ॥ पृष्टास्तत्क्षामताहेतुं । साक्षेपं मंत्रिणो जगुः ॥ देव दिग्विजयाय त्वं । प्रस्थितोऽसि पुरा यदा ॥ ६४ ॥ षष्टिं वर्षसहस्राणि । तदाद्येषा विनिर्ममे ॥ आचामाम्लानि तेनासौ । म्लानिमाप व्रतार्थिनी ॥ ६५ ॥ तव पुत्रेषु पौत्रेषु । ब्राह्म्या च विधृते व्रते ॥ यूथच्युता मृगीवेयं । देव दोहूयते सदा ॥ ६६ ॥ ततो राज्ञान्यनुज्ञाता । जातानुशयचेतसा ॥ साग्रहा साग्रहित्तात–पादांते मुदिता व्रतं ॥ ६७॥ देवविद्याधरक्ष्मापै–स्तीर्थाम्भोभिरथार्षभेः ॥ चक्रे द्वादशवर्षाणो–ऽभिषेकश्चक्रवर्तिनः ॥ ६८ ॥ आगतानागतक्ष्माप–चिंतां कुर्वन्नसौ तदा ॥ अबुध्यत स्वबंधूना–मनुजानामनागमः ॥६९॥ मनाग्मनसि कालुष्यं । दधानस्तत्प्रमादतः ॥ तानष्टानवतिं दूत–मुखेनैवं जगाद सः ॥७०॥ भजध्वं भरतं सार्व–भौमं राज्येऽस्ति चेन्मनः ॥ नो चेद्भयातुरा दुर्ग–मिव गृह्णीत संयमं ॥ ॥ ७१ ॥ सेविष्यध्वे न भरतं । व्रतं वा यदि बालिशः ॥ धृत्वा पाणौ कृपाणं तद् । ढौकध्वं योद्धुमुद्यताः ॥ ७२ ॥ भारतीं भारतीं दूता–दिति श्रुत्वाभ्यधायि तैः ॥ तस्यास्माकं च तातेन । दूत दत्ता विभज्य भूः ॥ ७३ ॥ वयं तयैव संतुष्टा । भरतं किं भजामहे ॥ भजामहे वा

अथ नैति तदा दंड—नीतिरप्युपयुज्यते ॥ व्याधावौषधसाध्ये हि । विधत्ते शस्त्रकर्म कः
॥ ९५ ॥ इत्यमात्यस्य वचसा । सुवेगं वेगवत्तरं ॥ दूतं नृपुरुहूतः स्वं । विससर्जानुजंप्रति ॥
॥ ९६ ॥ अभ्रछायेव वेगेन । वारितोऽशकुनैरपि ॥ प्रतस्थे लंघमानोऽसौ । शैलस्रोतस्विनीव-
नीः ॥ ९७ ॥ कल्पद्रुकल्पवृक्षालि-शालि नंदनकाननं ॥ पदे पदे सुधासार-वारिपूरितपल्व-
लं ॥ ९८ ॥ मखजुग्मिथुनस्पर्धि-नरनारीगणाकुलं ॥ विमानमानभिन्नैक—गृहग्राममनोहरं ॥
॥ ९९ ॥ छायातरुतले सुप्तै—रगुप्तस्वर्णभूषणैः ॥ निश्चीयमानसौराज्यं । पथि पांथवधूजनैः ॥
॥ १००० ॥ प्रतिग्रामं च दीनार्थं । स्थलीकृतकणोत्करं ॥ प्रतिद्रुमं गीयमान—श्रीनाभेयगुणं शु-
कैः ॥ १ ॥ बाहुबल्याज्ञया खंजी—भवत्केसरिचित्रकं ॥ भरतेशितुराज्ञया—मनभिज्ञजनव्रजं ॥२॥
आसाद्य बहलीदेशं । क्रमादेष विशेषवित् ॥ स्वर्गं गतमिवात्मानं । मेने मानवलोकतः ॥ ३ ॥
षड्भिः कुलकं ॥ योध्यमानद्विपां कार्य-माणश्रमतुरंगमां ॥ शिक्ष्यमाणधनुर्वेद-क्षत्रियांगरुहां
बहिः ॥ ४ ॥ सोऽथ तक्षशिलां प्राप्य । नगरीं नागरीं श्रियं ॥ पश्यन्नूर्ध्वमुखः कैश्चि-द्ग्रा-
म्य इत्यूहितो जनैः ॥ ५ ॥ श्रीबाहुबलिमभ्येति । गृहीतविविधोपदः ॥ भरतस्य प्रधानोऽय

—मिति विज्ञैर्विचारितः ॥ ६ ॥ ईर्ष्यान् विनिर्मितानेक— रूपश्रीदानुकारिणः ॥ वीक्ष्यमाणः
प्रतिहट्टं । घंटापथमतीयिवान् ॥ ७ ॥ चतुर्भिः कलापकं ॥ सिंहद्वारे क्षणं स्थित्वा । भटैरुद्र-
यतो वृते ॥ स विवेश विशांपत्युः । सभां वेत्रिनिवेदितः ॥ ८ ॥ कुमाराः पंक्तिशो यत्र । नि-
विष्टा न व्यतीयिरे ॥ दीपका इव दीपस्य । मनागपि पितुस्तुलान् ॥ ए ॥ श्रीबाहुबलिनिर्मा-
णा—वसिष्टेनैव तेजसा ॥ निर्मिता यत्र सामंता । दशाप्यक्षोभयन् जगत् ॥ १० ॥ यत्रान्य-
नृपतेर्नाम्नि । श्रुतमात्रेऽपि हुंकृतीः ॥ मुमुचुः सायुधा योधाः । सिंहा इव घनध्वनौ ॥ ११ ॥
तत्र संसदि स स्वर्ण—सिंहासननिषादिनं ॥ छत्रचामररोचिष्णुं । राज्यश्रीसमलंकृतं ॥
१२ ॥ सूर्यबिंबादिवोत्कीर्णं । वह्निकुंभादिवोत्थितं ॥ जगत्खलप्रजाजालं । महीपालं व्यलोकत
॥ १३ ॥ तं प्रणम्य तदादेशा—दद्भूतराजे निषेदुषि ॥ स्निग्धगंभीरया वाचा—चख्यौ तक्षशि-
लेश्वरः ॥ १४ ॥ कच्चित्स कुशली भ्राता । निर्व्याघाता पुरी च सा ॥ कच्चिदस्ति समस्तोऽपि ।
शुभंयुस्तत्परिच्छदः १५ कच्चित्तस्याक्षयाः कोशा । व्याकोशाब्जमुखश्रियः ॥ कच्चिद्धर्मार्थकामास्तं
। भजंत्यव्याहता मिथः । १६ । अथ प्रथितधीर्बाहु—बलिनं प्रत्यवोचत ॥ सुवेगस्त्रिदशश्रोतो—

यद्येष । मृत्योः सरंक्षतिक्षितिं ॥ ७४ ॥ रुणद्धि वाखिलान् व्याधी—न्निगृह्णात्यथवा जरां ॥ नो
चेत्तत्कर्तुमीष्टेऽसौ । तर्हि किं तस्य सेवया ॥ ७५ ॥ गुरुर्दीक्षोपदेशस्य । तातो न भरतः पुनः ॥
यदसौ याचते युद्धं । तत्र किं कृपणा वयं ॥ ७६ ॥

एत्वसौ वयमप्येते । पितुस्तस्यैव सूनवः ॥ सौरीया हि समोद्योताः । सहस्रमपि भानवः
॥ ७७ ॥ परं तातमनापृच्छ्य । नैते भरतवद्वयं ॥ स्वैरिणो वैरिणेवाग्र—जेन योद्धुं यतामहे
॥ ७८ ॥ इत्युक्त्वाष्टापदगिरिं । गत्वा नत्वा जिनेश्वरं ॥ भरतस्य पराभूतिं । जगुस्ते साश्रुलो-
चनाः ॥ ७९ ॥ तरूनिवातपक्रांता—नंबुदः सलिलैः प्रभुः ॥ असिक्त बंधुदुर्वाक्य—दग्धांस्ता-
न् बचनैरिति ॥ ८० ॥ वत्सा विज्ञायता केयं । भवतां विभवेच्छया ॥ न श्रीर्निःश्रीकृतानेक
—लोकेयं क्वापि तिष्ठति ॥ ८१ ॥ सगोत्रा अपि युध्यंते । यत्कृते फेरवा इव ॥ अधर्मजीवं त-
द्राज्यं । कुणपं कोऽभिलष्यति ॥ ८२ ॥ राज्ञः सद्गुणचित्रमंबुकलशैः सिक्तस्य निर्णश्यति । छ-
त्रं लब्धवतो लगंति न गुरोर्मेघस्य वाग्विप्रुषः ॥ आसीदंति न नित्यचामरमरुद्धूताः शुभा बु
द्धयः । स्यान्निस्त्रिंशकरस्य राज्यसमये चित्तेऽपि निस्त्रिंशता ॥ ८३ ॥ स्वल्पमेव सुखं यत्र । भू-

यसी तु विमंबना ॥ तद्राज्यं त्यज्यतां बह्व—पायं श्वानव्यवायवत् ॥ ७४ ॥ यद्भुज्यत स-
र्वार्थ—विमाने निस्तुषं सुखं ॥ वत्सा विस्मृतिशीलास्त—त्संप्रति स्मर्यते न किं ॥ ७५ ॥ या
चांधुसिंधुपाथोधि—पानेनापि न निष्ठिता ॥ किं सा शाम्यति दर्जाग्र—जाग्रज्जलकणैस्तृषा ॥
॥ ७६ ॥ एवं देवभवात्यस्त—नोगान्नोगान्न निष्ठिता ॥ आकांक्षा नेष्यते नोगै—र्मानवैस्तान-
वं न वः ॥ ७७ ॥ श्वं प्रबोध्य निःशेषान् । दीक्षयामास तान् प्रभुः ॥ तत् श्रुत्वा भरतस्ते-
षां । मंक्षु राज्यानि जग्रसे ॥ ७८ ॥ तथाप्यायुधशालाया—श्चक्ररत्ने बहिश्चरे ॥ चरेन्यो ज्ञा-
तवृत्तांतः । सचिवः प्रोचिवान्नृपं ॥ ७९ ॥ नानुजस्ते जगन्मान्या—माज्ञामद्यापि मन्यते ॥ ब-
हलीमंडले बाहु—बली बाहुबलोर्जितः ॥ ८० ॥ अजिते तत्र डुर्जेये । किं जितं नवता प्रभो
॥ अकृते ग्रंथिभेदे हि । किं भिन्नं मोहकर्मणः ॥ ८१ ॥ एकोऽपि सह्यसह्योजा । दारुणे रण-
सागरे ॥ ग्रसते भूभुजां कोटी—स्तिमीनिव तिमिंगलः ॥ ८२ ॥ यावत्तव न वश्यः स्या—दसौ
स्फुरदसौहृदः ॥ तावदायात्यदश्चक्र—मायुधावसथं कथं ॥ ८३ ॥ तत्पूर्वं तन्मुखछायां । दूतं
प्रेष्य निरीक्ष्यतां ॥ दूतेनामंत्रितोऽन्येति । स चेत्त्वां तज्जितं जितं ॥ ८४ ॥

अथ नैति तदा दंरू—नीतिरप्युपयुज्यते ॥ व्याधावौषधसाध्ये हि । विधत्ते शस्त्रकर्म कः
॥ ९५ ॥ इत्यमात्यस्य वचसा । सुवेगं वेगवत्तरं ॥ दूतं नृपुरुहूतः स्वं । विससर्जानुजंप्रति ॥
॥ ९६ ॥ अभ्रछायेव वेगेन । वारितोऽशकुनैरपि ॥ प्रतस्थे लंघमानोऽसौ । शैलश्रोतस्विनीव-
नीः ॥ ९७ ॥ कल्पद्रुकल्पवृक्षालि—शालि नंदनकाननं ॥ पदे पदे सुधासार—वारिपूरितपल्व-
लं ॥ ९८ ॥ मखद्रुग्मिथुनस्पर्धि—नरनारीगणाकुलं ॥ विमानमानभिन्नैक—गृहग्राममनोहरं ॥
॥ ९९ ॥ छायातरुतले सुप्तै—रगुप्तस्वर्णभूषणैः ॥ निश्चीयमानसौराज्यं । पथि पांथवधूजनैः ॥
॥ १००० ॥ प्रतिग्रामं च दीनार्थं । स्थलीकृतकणोत्करं ॥ प्रतिद्रुमं गीयमान—श्रीनाभेयगुणं शु-
कैः ॥ १ ॥ बाहुबल्याज्ञया खंजी—भवत्केसरिचित्रकं ॥ भरतेशितुराज्ञाया—मनभिज्ञजनव्रजं ॥ २ ॥
आसाद्य बहलीदेशं । क्रमादेष विशेषवित् ॥ स्वर्गं गतमिवात्मानं । मेने मानवलोकतः ॥ ३ ॥
षड्भिः कुलकं ॥ योध्यमानद्विपां कार्य—माणश्रमतुरंगमां ॥ शिक्ष्यमाणधनुर्वेद—क्षत्रियांगरुहां
बहिः ॥ ४ ॥ सोऽथ तक्षशिलां प्राप्य । नगरीं नागरीं श्रियं ॥ पश्यन्नूर्ध्वमुखः कैश्चि—दूचा-
न्य इत्यूहितो जनैः ॥ ५ ॥ श्रीबाहुबलिमन्येति । गृहीतविविधोपदः ॥ भरतस्य प्रधानोऽय

—मिति विज्ञैर्विचारितः ॥ ६ ॥ ईक्ष्यान् विनिर्मितानेक— रूपश्रीदानुकारिणः ॥ वीक्ष्यमाणः
प्रतिहट्टं । घंटापथमतीयिवान् ॥ ७ ॥ चतुर्भिः कलापकं ॥ सिंहद्वारे क्षणं स्थित्वा । भटैरुद्ध-
यतो वृते ॥ स विवेश विशांपत्युः । सभां वेत्रिनिवेदितः ॥ ८ ॥ कुमाराः पंक्तिशो यत्र । नि-
विष्टा न व्यतीयिरे ॥ दीपका इव दीपस्य । मनागपि पितुस्तुलान् ॥ ए ॥ श्रीबाहुबलिनिर्मा-
णा—वसिष्टेनैव तेजसा ॥ निर्मिता यत्र सामंता । दृशाप्यद्योतयन् जगत् ॥ १० ॥ यत्रान्य-
नृपतेर्नाम्नि । श्रुतमात्रेऽपि हुंकृतीः ॥ मुमुचुः सायुधा योधाः । सिंहा इव घनध्वनौ ॥ ११ ॥
तत्र संसदि स स्वर्ण—सिंहासननिषादिनं ॥ छत्रचामररोचिष्णुं । राज्यश्रीसमलंकृतं ॥
१२ ॥ सूर्यबिंबादिवोत्कीर्णं । वह्निकुंडादिवोत्थितं ॥ उच्छृंखलप्रभाजालं । महीपालं व्यलोकत
॥ १३ ॥ तं प्रणम्य तदादेशा—दुपूतराजे निषेदुषि ॥ स्निग्धगंभीरया वाचा—चख्यौ तक्षशि-
लेश्वरः ॥ १४ ॥ कच्चित्स कुशली भ्राता । निर्व्याघाता पुरी च सा ॥ कच्चिदस्ति समस्तोऽपि ।
शुभंयुस्तत्परिछदः १५ कच्चित्तस्याकृशाः कोशा । व्याकोशाब्जमुखश्रियः ॥ कच्चिध्धर्मार्थकामास्तं
। भजंत्यव्याहता मिथः । १६ । अथ प्रथितधीर्बाहु—बलिनं प्रत्यवोचत ॥ सुवेगस्त्रिदशश्रोतो—

वेगदुर्धरया गिरा ॥ १७ ॥ यः क्षमः क्ष्मातलं पातुं। स्यात्तस्याकुशलं कुतः ॥ तस्मिन्नेतरि
विघ्नौघै—र्विनीतानपि ताप्यते ॥ १८ ॥ परिच्छदं तदादेश—वश्यं को बाधितुं क्षमः ॥ पद्मं किं
बाधितुं ध्वांतो । ध्वांतारिकरगोचरं ॥ १९ ॥ स्वर्मणिदक्षिणावर्त— शंखशृंखलिताः ख-
लु ॥ कोशास्तस्य न हीयंते । पयांसीव पयःपतेः ॥ २० ॥ धर्ममर्थं च कामं च । परस्परमबा-
धया ॥ सेवते देव ते भ्राता । ऋतुत्रयमिवायनं ॥ २१ ॥ षष्ट्या सहस्रैर्वर्षाणां । स जित्वा रा-
जकुंजरान् ॥ अधुना स्वां पुरीं प्राप। मृगारातिर्गुहामिव ॥ २२ ॥ संजाते चक्रवर्तित्वा—भिषेके
द्वादशाब्दिके ॥ न के देवा नृदेवाश्च । तमुपेयुरुपायनैः ॥ २३ ॥ प्रभूतैरपि तैरेतै—श्चेतो ने-
तुर्न तृप्यति ॥ निजानुजानजय्यौजा । यावदग्रे न पश्यति ॥ २४ ॥ प्रैषीद्दूतानथाह्वातुं । सा-
दरः सोदरानसौ ॥ नेजुर्जगत्प्रभोर्दीक्षां । किमप्यालोच्य ते पुनः ॥ २५ ॥ एकेनैव त्वया सो-
ऽथ । मन्यते स्वं सबांधवं ॥ शक्तः शक्तेन खड्गीव । शृंगेणैकेन शृंगिणं ॥ २६ ॥ तदेहि देहि
सौहित्यं । भ्रातुरातुरयोर्दृशोः ॥ त्वय्यनायाति यत्किंचि—द्भाषते मुखरो जनः ॥ २७ ॥ भ्रा-
तासि भर्तुरित्येष । कठोरमपि वच्मि ते ॥ अहो बाहुबले कोऽपि । प्रमादस्तव दुःस्तवः ॥२८॥

चिरागतं जगन्मान्य—मकुंठोत्कंठमग्रजं ॥ यत्त्वं तमपि संगंतु—मेवमाह्वानमीहसे ॥ २९ ॥ प्रमादेनेदृशेनान्यो । भृशं कुप्यति भूपतिः ॥ पुनः स्मरति न द्रूणं । भरतो गुरुतोदधिः ॥३०॥ सांप्रतं नैषि चेत्तर्हि । सोऽपि कोपमुपेष्यति ॥ निजेऽपि देहावयवे । शटिते कोऽनुरज्यति ॥ ॥ ३१ ॥ माज्ञासीर्भरतो भ्राता । मां न हि व्यथयिष्यति ॥ ज्ञातेयमनुवर्तंते । नाज्ञासारा हि भूभुजः ॥ ३२ ॥ लुठंति परितः पाद—पीठं यस्य सुरासुराः ॥ अग्रजं भजमानस्य । तं ते किं शंकते मनः ॥ ३३ ॥ प्रणाममात्रसंतुष्टं । तं प्रणम्य प्रसादय ॥ नामयिष्यति चेद्भक्त्या । स त्वां तर्हि त्रपाकरं ॥ ३४ ॥ वद संख्यातिगेभाश्व—रथपत्तिसमाकुलं ॥ बलं जलधिवत्तस्य । प्रसरत्केन रोत्स्यते ॥ ३५ ॥ आस्तामन्यद्बलाध्यक्ष—स्तस्यैकोऽपि रणांगणे ॥ घरटवत्पिनष्ट्येव । शेषान्माषानिव द्विषः ॥ ३६ ॥ मुंच मुंच तदावेशं । तं सेवस्व नरेश्वरं ॥ असेव्यमाने शक्तेऽस्मिन् । क त्वं क्वेदं च वैभवं ॥ ३७ ॥ श्रुत्वेति वीक्षमाणः स्वं । स क्षणं दक्षिणं भुजं ॥ वाचा वारिधिकल्लोल—कल्पया प्रोचिवान्नृपः ॥ ३८ ॥ साधु साध्वसि दूत त्वं । यदेवं वक्षि मत्पुरः ॥ साध्वसौ भरतो यस्य । त्वादृशाः संति वाग्मिनः ॥ ३९ ॥ दूत हृष्य-

सि किं तेन। मृदितैः पार्थिवैश्चिरात् ॥ क्षणेन कुंभकृच्चक्री। पिंडान् मृद्नाति पार्थिवान् ॥४०॥
ईयुर्यद्वा मनुष्याश्च । यत्तं तच्चित्रकृन्न नः ॥ षष्टिं वर्षसहस्त्रान् हि । भ्रमतां किं न सिध्यति
॥ ४१ ॥ दिदृक्षतेऽनुजानेष । यत्तद्धि गुरुतोचितं ॥ गरियान्निति पित्रा हि । मूलराज्ये न्यय-
वेशि सः ॥ ४२ ॥ तातदत्तैकदेशेशा–न्न सेहे सोदरानपि ॥ यस्तस्य गुरुतां वच्मः । किमहो
अग्रजन्मनः ॥ ४३ ॥ यवीयोनिर्जितो ज्येष्ठ । इति माभूज्जनश्रुतिः ॥ इत्यालोच्य ध्रुवं नेजु–
र्दीक्षां ते मम बांधवाः ॥ ४४ ॥

तेषां ग्रसित्वा राज्यानि । नवंतं प्रजिघाय सः ॥ यन्मामाह्वातुमत्रापि । यत्किंचिद्भाषते
जनः ॥ ४५ ॥ जिघृक्षुर्भरतैश्वर्य—मयमायातवानिति ॥ वक्ष्यत्युच्छृंखलो लोको । दूत तत्रा-
गते मयि ॥ ४६ ॥ सत्यमेष प्रमाद्यस्मि । यत्तं यत्तत्प्रलापिनं ॥ सत्यां शक्तौ मदाध्मातं । क्ष-
ष्यामि स्वामिनं तव ॥ ४७ ॥ मम प्रमादमालोक्य । स चेत्कुप्यति कुप्यतु ॥ खद्योते कुपिते
ज्योतिः—पतिः पतति किं दिवः ॥ ४८ ॥ सोऽनागते मयि क्रोध —मेवाप्स्यत्यागते पुनः ॥
नयातिसारं कुर्यात–राज्यापन्हुतिशंकया ॥ ४९ ॥ जानेऽहं कठिनस्यास्य । सौभ्रात्रं कोपगुज्य-

ते ॥ किंत्वेष शक्तिवैकल्या—न्नैव मां व्यथयिष्यति ॥ ५० ॥ तस्य तातस्य पुत्रोऽय—मिति चे-
न्मानितः सुरैः ॥ एतावताप्यनात्मज्ञः । सोऽभूदहह दुर्मदः ॥ ५१ ॥ नामितास्तेन ये तेऽन्ये ।
भूभुजो विभुजौजसः ॥ मम नामयतो मौलिं । यदि पादौ जगत्प्रभोः ॥ ५२ ॥ सत्यं समुद्रस-
मतां । धत्ते तस्याखिलं बलं ॥ पुनरेष कृपाणो मे । बलवान् वडवानलः ॥ ५३ ॥ तातदत्ताधि-
कां क्षोणीं । सामर्थ्येऽप्यजिघृक्षतः ॥ ममैवोपेक्षया राज्यं । भुंजानोऽस्ति स भूपतिः ॥ ५४ ॥
मुंच मुंच तदावेश—मित्यादिसन्मतिप्रदः ॥ स्वामिभक्तस्य पुरस्त । श्लोकः सोऽयमधीयतां
॥ ५५ ॥ मन्ये दूत तवैवोक्ति—रेषा न भरतेशितुः ॥ स हि मां वेत्ति बाल्येऽपि । खुरलीष्व-
सकृज्जितः ॥ ५६ ॥ विद्वानपि स चेदूक्ति । तत्कालेन कटाक्षितः ॥ विजिगिषोर्भुजंगेशं । भे-
कस्य कुशलं कियत् ॥ ५७ ॥ तद्याहि दूत धर्मत्वा—त्त्वमवध्योऽसि भूभुजां ॥ स एवैत्ववि-
नीतत्व—फलं येनास्य दर्शये ॥ ५८ ॥ इत्युक्तवति भूपाले । क्षयकालानलायते ॥ सामंतेष्वी-
क्षमाणेषु । कोपपाटलया दृशा ॥ ५९ ॥ प्रवर्तयत्सु विविधा—युधानि सुभटेषु च ॥ सुवेगः स-
दसो मृत्यु—मुखादिव विनिर्ययौ ॥ ६० ॥ युग्मं ॥ कोऽयं यात्यपराधीव । चलद्दक्चंचलैः पदैः

सि किं तेन। मृदितैः पार्थिवैश्चिरात् ॥ क्षणेन कुंभकृच्चक्री। पिंडान् मृद्नाति पार्थिवान् ॥४०॥ ईयुर्यद्वा मनुष्याश्च। यत्तं तच्चित्रकृन्न नः ॥ षष्टिं वर्षसहस्रान् हि। भ्रमतां किं न सिद्ध्यति ॥ ४१ ॥ दिदृक्षतेऽनुजानेष। यत्तद्धि गुरुतोचितं ॥ गरियानिति पित्रा हि। मूलराज्ये न्यवेशि सः ॥ ४२ ॥ तातदत्तैकदेशेशा-न्न सेहे सोदरानपि ॥ यस्तस्य गुरुतां वच्मः। किमहो अग्रजन्मनः ॥ ४३ ॥ यवीयोभिर्जितो ज्येष्ठ। इति माभूज्जनश्रुतिः ॥ इत्यालोच्य ध्रुवं भेजुर्दीक्षां ते मम बांधवाः ॥ ४४ ॥

तेषां ग्रसित्वा राज्यानि। भवंतं प्रजिघाय सः ॥ यन्मामाह्वातुमत्रापि। यत्किंचिद्भाषते जनः ॥ ४५ ॥ जिघृक्षुर्भरतैश्वर्य—मयमायातवानिति ॥ वक्ष्यत्युच्छृंखलो लोको। दूत तत्रागते मयि ॥ ४६ ॥ सत्यमेष प्रमाद्यस्मि। यत्तं यत्तत्प्रलापिनं ॥ सत्यां शक्तौ मदाध्मातं। कृष्यामि स्वामिनं तव ॥ ४७ ॥ मम प्रमादमालोक्य। स चेत्कुप्यति कुप्यतु ॥ खद्योते कुपिते ज्योतिः—पतिः पतति किं दिवः ॥ ४८ ॥ सोऽनागते मयि क्रोध—मेवाप्स्यत्यागते पुनः ॥ भयातिसारं कुर्यात-राज्यापन्हुतिशंकया ॥ ४९ ॥ जानेऽहं कठिनस्यास्य। सौभ्रात्रं कोपगुह्य·

ते ॥ किंत्वेष शक्तिवैकल्या—न्नैव मां व्यथयिष्यति ॥ ५० ॥ तस्य तातस्य पुत्रोऽय—मिति चे-
न्मानितः सुरैः ॥ एतावताप्यनात्मज्ञः । सोऽभूदहह दुर्मदः ॥ ५१ ॥ नामितास्तेन ये तेऽन्ये ।
भूभुजो विभुजौजसः ॥ मम नामयतो मौलिं । यदि पादौ जगत्प्रभोः ॥ ५२ ॥ सत्यं समुद्रस-
मतां । धत्ते तस्याखिलं बलं ॥ पुनरेष कृपाणो मे । बलवान् वडवानलः ॥ ५३ ॥ तातदत्ताधि-
कां क्षोणीं । सामर्थ्येऽप्यजिघृक्षतः ॥ ममैवोपेक्षया राज्यं । भुंजानोऽस्ति स भूपतिः ॥ ५४ ॥
मुंच मुंच तदावेश—मित्यादिसन्मतिप्रदः ॥ स्वामिभक्तस्य पुरस्त । श्लोकः सोऽयमधीयतां
॥ ५५ ॥ मन्ये दूत तवैवोक्ति—रेषा न भरतेशितुः ॥ स हि मां वेत्ति बाल्येऽपि । खुरलीष्व-
सकृज्जितः ॥ ५६ ॥ विद्वानपि स चेदूक्ति । तत्कालेन कटाक्षितः ॥ विजिगिषोर्भुजंगेशं । भे-
कस्य कुशलं कियत् ॥ ५७ ॥ तथाहि दूत धर्मत्वा—त्त्वमवध्योऽसि भूभुजां ॥ स एवैत्वद्वि-
नीतत्व—फलं येनास्य दर्शये ॥ ५८ ॥ इत्युक्तवति भूपाले । क्षयकालानलायते ॥ सामंतेष्वी-
क्षमाणेषु । कोपपाटलया दृशा ॥ ५९ ॥ प्रवर्तयत्सु विविधा—युधानि सुभटेषु च ॥ सुवेगः स-
दसो मृत्यु—मुखादिव विनिर्ययौ॥ ६० ॥ युग्मं ॥ कोऽयं यात्यपराधीव । चलद्दक्चंचलैः पदैः

॥ भरतस्य दूतोऽसौ हि । सक्रश्चक्रधरः किल ॥६१॥ किं कुलालो न हि न हि । भ्राता बा-
हुबलेरसौ ॥ न ज्ञातः किमियत्कालं । ज्ञायंते कति तादृशाः ॥ ६२ ॥ किं प्रैषी दूतमाह्वातु-
मेनं हंत स किं पशुः ॥ स्वतंत्रो ह्येष नान्येन । प्रेरितः क्रामति क्रमं ॥ ६३ ॥ आस्तामाह्वान-
मात्रं स । संसिषेवयिषत्यमुं ॥ तस्यामात्या न किं संति । हंत तैर्वारितोऽसकौ ॥ ६४ ॥ ततः
किमेतदारेभे । बलिनी भवितव्यता ॥ विचेष्टतां यथेष्टं त—त्तत्फलं लप्स्यते स्वयं ॥ ६५ ॥ इ-
ति पौरकथाः शृण्वं—स्ततः पुर्या विनिर्गतः ॥ पुनर्जातमिवात्मानं । मुदितो मन्यतेस्म सः ॥
॥ ६६ ॥ षड्भिः कुलकं ॥ श्रीबाहुबलिना दूतो । भरतस्याप मानितः ॥ हयारूढेव वार्तेति । सं-
चचाराशु मंरूले ॥ ६७ ॥ ग्रामेयकान् प्रतिग्रामं । प्रतिगोष्ठं च गोदुहः ॥ प्रत्यद्रि भिल्लान् सो-
ऽपश्य—द्योद्धुं सन्नह्यतः स्वयं ॥ ६८ ॥ भूपाला इव गोपाला । अपि यस्य युयुत्सवः ॥ ग्राम्या
विनापि राजाज्ञां । यस्य संग्रामकामुकाः ॥ ६९ ॥ यस्य देशगुणेनेव । शूराः सीमधरा अपि ॥
भर्तुः प्राणप्रदानेऽपि । शंकंते यस्य न प्रजाः ॥ ७० ॥ अनुजेनाङ्कितस्तेन । भरतो जितकाश्य-
पि ॥ भंक्ष्यतेऽद्रिशिलालग्न—तीर्णाभःपतिपोतवत् ॥ ७१ ॥ तस्याविमर्शकारित्वं । किं ब्रूमो भ-

रतेशितुः ॥ यः प्राप्तप्राज्यसाम्राज्यो–ऽप्यमुना विग्रहिष्यति ॥ ६६ ॥ धिक्तानमात्यमिषतो । द्वि-
षतः पारिपार्श्वकान् ॥ यैर्व्यालचालनामेवं । कुर्वन्नयमुपेक्षितः ॥ ६३ ॥ इत्यंतश्चिंतयन् वर्त्म
। सुवेगोऽतीत्य वेगतः ॥ विनीतामेत्य नत्वा च । भरतेशं व्यजिज्ञपत् ॥ ६४ ॥ स्वामिन्न मनुजः
किंतु । दनुजः स तवानुजः ॥ त्रपते नृपते ह्येष । भ्रातृभावादपि त्वयि ॥ ६५॥ न साम्ना न
खरोक्त्या च । तव सेवां स मन्यते ॥ किं वज्रं शक्यते भेत्तुं । वारिणा वह्निनापि वा ॥ ६६ ॥
इयताप्यस्य सौभ्रात्रं । यद्राज्यं नाच्छिनत्ति ते ॥ व्यग्रास्य तद्धि साहाय्यं । यत्स्थानस्थोऽवति-
ष्टते ॥ ६७ ॥ सहेत प्रकरं सिंहः । पादक्षोभं च पावकः ॥ न पुनः परतंत्रत्वं । तव क्ष्माधव
बांधवः ॥ ६८ ॥ तव दिग्विजयं श्रुत्वा । सेनान्यस्यास्य विक्रमं ॥ दृशौ विकूणिते कृत्वा । स-
भायां हसतिस्म सः ॥ ६९ ॥ कुमारास्तस्य ये संति । सामंता वा समंततः ॥ तच्चित्तमनुवर्त-
ते । तेऽपि वायुमिवाग्नयः ॥ ७० ॥ मम चक्रिजयेऽन्येन । न भाव्यं संविभागिना ॥ इति त-
स्य भुजाध्माताः । प्राहुरेकैकशो भटाः ॥ ७१ ॥ धुरं दधाति वीराणां । तस्य पिंगोलिभोज्य-
पि ॥ मन्ये वीरसुवस्तत्र । देशे सर्वा अपि स्त्रियः ॥ ७२ ॥ आस्तामाज्ञा न नामापि । तव त-

त्र प्रवर्तते ॥ ज्ञुवं प्राप्त इव स्वर्गः । स देशः प्रतिज्ञाति मे ॥ ७३ ॥ स सम्राट् त्वं च राजासि ।
स स्वामी त्वं च सेवकः ॥ स ज्येष्ठस्त्वं कनिष्ठोऽसी—त्यूह्यते वीक्ष्य तं मया ॥ ७४ ॥ बंधोरौद्धत्य-
माकर्ण्य । सुवेगस्य मुखादिति ॥ वहन् हर्षमहर्षं च । युगपन्नृपतिर्जगौ ॥ ७५ ॥ वयमग्रेऽपि
जानीमो । यन्नाहूत उपेत्यसौ ॥ संति सर्वे गुणा अस्मि—न्नेकं तु विनयं विना ॥ ७६ ॥ प्रावृड्
विपक्का सुरत्नि । स्वर्णं कस्तूरिकोज्ज्वला ॥ अयं च सुविनीतः स्या—त्तत्प्राथ्यं किमतः परं
॥ ७७ ॥ एकतो गोत्रकलहो । दुर्यशोद्गमदोहृदः ॥ अन्यतो मन्यते नाज्ञा—मनुजेऽपीति हा-
स्यकृत् ॥ ७८ ॥ इतो व्याघ्रो दुस्तटीत । इतोंधुः पन्नगस्त्वितः ॥ इतो रक्षो दवश्चेतः । संकटे
पतितोऽस्म्यहं ॥ ७९ ॥ स जीवतु चिरं तस्य । सहिष्यामोऽखिलं वयं ॥ स चेद्बलाधिकस्तर्हि
। मम प्रत्युत गौरवं ॥ ८० ॥ यद्ययोग्यमिदं ज्ञाति । तत्सभ्या वारयंतु मां ॥ सभ्या हि ज्ञूप-
पाथोधा—वुद्वेले सीमभूमयः ॥ ८१ ॥ अथाभ्यधत्त सेनानीः । मर्मविद्ध इवाकुलः ॥ देव ही-
रार्थिन इव । क्षमा क्षत्रस्य नोचिता ॥ ८२ ॥ चेद्धीतरागजातत्वा—त्तवाभूदीदृशी क्षमा ॥ त-
दाद्वात्रिंशतं ज्ञूप—सहस्राण्यग्रहीः किमु ॥ ८३ ॥ निगृह्याल्पबलान् ज्ञूपा—नस्मिन् बाहुब-

लौ कृता ॥ क्षमा देव तव क्लीव—भाव एव निमंक्ष्यति ॥ ९४ ॥ अस्तमेति यतस्तेजः । स
क्षत्राणां पुरो रिपुः ॥ यत्तस्मिन्नपि सौभ्रात्रं । सा भस्मनि घृताहुतिः ॥ ९५ ॥ राज्ञां रीति-
रिति भ्राता । ह्यविनीतोऽनुशिष्यते ॥ तत्सज्जीभव मा मांक्षी—रब्धिमुत्तीर्य गोष्पदे ॥ ९६ ॥
अश्वेभशिक्षणायासः । सादिनां च निषादिनां ॥ साफल्यं भजतादद्य । योधानां च परिश्रमः
॥ ९७ ॥ मंत्रिणोऽप्यन्ववर्तंते । वाणीं सेनापतेरिमां ॥ सानुमंत इव क्ष्वेडां सिंहस्य प्रतिशब्दि-
तैः ॥ ९८ ॥ प्रयाणभेरीं भरता—धिनाथोऽवीवदत्ततः ॥ आहूता इव तद्ध्वाने—र्मिमिलुः को-
टिशो भटाः ॥ ९९ ॥ ग्राहैरिव गजैर्लोलैः । कल्लोलैरिव वाजिभिः ॥ कूर्मैरिव रथैर्नक्रै—रिव
शौर्योत्कटैर्भटैः ॥ ११०० ॥ फेनैरिव सितछत्रै—र्मुञ्जरैर्मुञ्जरैरिव ॥ प्रतस्थे भरतो भीष्म—क-
ल्पांत इव वारिधिः ॥ १ ॥ चिरात्समागतश्चक्री । पुनः क्व चलितोऽधुना ॥ विज्ञो दिशानुसा-
रेण । बहलीमंडलंप्रति ॥ २ ॥ केसरीव वने तत्र । नास्ति बाहुबली स किं ॥ तमेव जेतुका-
मोऽसौ । स ह्यजय्यः सुरैरपि ॥ ३ ॥ चक्रस्यास्य बलं भूयो । गोत्रे न प्रभवत्यदः ॥ हारयि-
ष्यति तन्नूनं । नोच्यते राजविप्रियं ॥ ४ ॥ प्रतिग्रामं प्रजालापं । शृण्वन्नेवं सविस्मयं ॥ म-

दुर्ग्रह्या अपि तस्याहो । स्तावका ग्राहयन्निति ॥ ५ ॥ अदैन्यः सैन्यसंमर्द—संकीर्णितधरातलः
बह्लीदेशसीमांतं । प्राप्य तस्थौ नरेश्वरः ॥ ६ ॥ पंचभिः कुलकं ॥ नर्तये रणरंगेऽद्य । ख-
ड्गतालैर्यशोनटं ॥ इति हृष्टस्तमुद्दिश्या—चलत्तक्षशिलेश्वरः ॥ ७ ॥ स्फुरद्भिः सारसन्नाहैः ।
हस्त्यश्वरथपत्तिभिः ॥ चकंपे चलिते तस्मि—न्नतिभाराकुलेव भूः ॥ ८ ॥ चक्रिचक्रनिवेशस्य
। संवेशे स न्यवेशयत् ॥ स्वां चमूं नाविको नावं । तीरे नीरनिधेरिव ॥ ९ ॥ सैन्यद्वये स्थ-
लोध्थ्वस्थ—स्वर्णकुंभध्वजच्छलात् ॥ अंकुरितः पल्लवित । इव शौर्यद्रुमो बभौ ॥ १० ॥ चमू-
द्वयहयोध्धूत—रजःपटलकश्मलः ॥ तदा स्नातुमिवामज्ज—दर्यमा पश्चिमांबुधौ ॥ ११ ॥ द्व-
यानामपि योधानां । कुर्वतां शस्त्रजागरं ॥ प्राच्यवीरचरित्राणि । शृण्वतां मागधाननात् ॥
॥ १२ ॥ स्वस्वस्वामिप्रसादस्य । प्राणैरानृण्यमिच्छतां ॥ कथंचन विनिद्राणा—मतिचक्राम या-
मिनी ॥ १३ ॥ ध्वांते शांतेऽथ सुप्राते । जाते बालार्करश्मिभिः ॥ लिप्ता जयश्रिया जात—रा-
गा इव भटा बभुः ॥ १४ ॥ कल्पांतभ्रांतपाथोधि—समानध्वानभांज्यथ ॥ युगपद्रणतूर्याणि
। प्रणेदुः सैन्ययोर्द्वयोः ॥ १५ ॥ अथादिदेवमभ्यर्च्या—रुह्य सानाह्यदंतिनं ॥ हस्तन्यस्तधनुः

पृष्ट—निविष्टाक्षयतूणकः ॥ १६ ॥ वज्रांगकवचछन्न—वपुर्भरतभूपतिः ॥ आसन्नोद्वाहवत्प्री-
तः । प्रविवेश रणांगणे ॥ १७ ॥ युग्मं ॥

तदा वीररसोंगीव । सुनंदानंदनोऽपि सः ॥ प्रविवेश रणक्षोणौ । सन्नद्धो युद्धकौतुकी ॥
॥१८॥ विनोदं वीक्षितुं व्योम्नि । संगतास्त्रिदिवौकसः ॥ स्वं निर्निमेषनेत्रत्वं । शशंसुः खेचरा-
ग्रतः ॥ १९ ॥ एकतो बांधवप्रीति—रन्यतो रणकौतुकं ॥ दोलारूढमिवाधत्तां । क्षणं बाहुब-
लेर्मनः ॥ २० ॥ सैन्यद्वितययोधानां । पुरः परभटावलीं ॥ पश्यतां नयनानीयु—र्जाग्रत्कोपाग्नि-
कुंडतां ॥ २१ ॥ कवचछन्नवष्माणः । शिरोविधूतशीर्षकाः ॥ राजाज्ञया समपदं । चलंतः स-
त्वरा अपि ॥ २२ ॥ चिरप्रदीप्तवैराग्नि—धूमकल्पासिधारिणः ॥ यावद्योद्धुमढौकंत । योधाः
स्वस्वामिनो पुरः ॥ २३ ॥ युग्मं ॥ तावन्निर्हेतुकानेक—लोकप्रलयशंकिनः ॥ सुधाभुजो भुजा-
दंड—मुत्तभ्येत्युदघोषयन् ॥ २४ ॥ योधा युष्माकमाज्ञास्ति । योद्धुं श्रीऋषभप्रभोः ॥ बोध्ये-
ते यावदस्माभि—र्भरतो बाहुबल्यपि ॥ २५ ॥ अथेत्य दत्ताशीर्वादा—स्त्रिदशा भरतं जगुः ॥
बंधुना युध्यमानस्य । कोऽयं मोहस्तवार्षभे ॥ २६ ॥ अपि द्वात्रिंशता देश—सहस्रैर्या न नि-

दृग्ग्राह्या अपि तस्याहो । स्तावका नावयन्निति ॥ ५ ॥ अदैन्यः सैन्यसंमर्द—संकीर्णितधरातलः
बहलीदेशसीमांतं । प्राप्य तस्थौ नरेश्वरः ॥ ६ ॥ पंचभिः कुलकं ॥ नर्तये रणरंगेऽद्य । ख-
ड्गतालैर्यशोनटं ॥ इति हृष्टस्तमुद्दिश्या—चलत्तक्षशिलेश्वरः ॥ ७ ॥ स्फुरद्भिः सारसन्नाहैः ।
हस्त्यश्वरथपत्तिभिः ॥ चकंपे चलिते तस्मि—न्नतिभाराकुलेव भूः ॥ ८ ॥ चक्रिचक्रनिवेशस्य
। संवेशे स न्यवेशयत् ॥ स्वां चमूं नाविको नावं । तीरे नीरनिधेरिव ॥ ९ ॥ सैन्यद्वये स्थ-
लोद्धर्वस्थ—स्वर्णकुंभध्वजबलात् ॥ अंकुरितः पल्लवित । इव शौर्यद्रुमो बभौ ॥ १० ॥ चमू-
द्वयहयोद्धूत—रजःपटलकश्मलः ॥ तदा स्नातुमिवामज्ज—दर्यमा पश्चिमांबुधौ ॥ ११ ॥ द्व-
यानामपि योधानां । कुर्वतां शस्त्रजागरं ॥ प्राच्यवीरचरित्राणि । शृण्वतां मागधाननात् ॥
॥ १२ ॥ स्वस्वस्वामिप्रसादस्य । प्राणैरानृण्यमिच्छतां ॥ कथंचन विनिद्राणा—मतिचक्राम या-
मिनी ॥ १३ ॥ ध्वांते शांतेऽथ सुप्राते । जाते बालार्करश्मिभिः ॥ लिप्ता जयश्रिया जात—रा-
गा इव भटा बभुः ॥ १४ ॥ कल्पांतभ्रांतपाथोधि—समानध्वानभांज्यथ ॥ युगपद्रणतूर्याणि
। प्रणेदुः सैन्ययोर्द्वयोः ॥ १५ ॥ अथादिदेवमभ्यर्च्या—रुह्य सानाह्यदंतिनं ॥ हस्तन्यस्तधनुः

पृष्ट—निविष्टाक्षयतूणकः ॥ १६ ॥ वज्रांगकवचछन्न—वपुर्भरतभूपतिः ॥ आसन्नोद्वाहवत्प्री-
तः । प्रविवेश रणांगणे ॥ १७ ॥ युग्मं ॥
तदा वीररसोंगीव । सुनंदानंदनोऽपि सः ॥ प्रविवेश रणक्षोणौ । सन्नद्धो युद्धकौतुकी ॥
॥१७॥ विनोदं वीक्षितुं व्योम्नि । संगतास्त्रिदिवौकसः ॥ स्वं निर्निमेषनेत्रत्वं । शशंसुः खेचरा-
ग्रतः ॥ १९ ॥ एकतो बांधवप्रीति—रन्यतो रणकौतुकं ॥ दोलाहढमिवाधत्तां । क्षणं बाहुब-
लेर्मनः ॥ २० ॥ सैन्यद्वितययोधानां । पुरः परभटावलीं ॥ पश्यतां नयनानीयु—र्जाग्रत्कोपाग्नि-
कुंकृतां ॥ २१ ॥ कवचछन्नवष्माणः । शिरोविधृतशीर्षकाः ॥ राजाज्ञया समपदं । चलंतः स-
त्वरा अपि ॥ २२ ॥ चिरप्रदीप्तवैराग्नि—धूमकल्पासिधारिणः ॥ यावद्योद्धुमढौकंत । योधाः
स्वस्वामिनो पुरः ॥ २३ ॥ युग्मं ॥ तावन्निर्हेतुकानेक—लोकप्रलयशंकिनः ॥ सुधाभुजो भुजा-
दंड—मुत्तम्येत्युदघोषयन् ॥ २४ ॥ योधा युष्माकमाज्ञास्ति । योद्धुं श्रीऋषभप्रभोः ॥ बोध्ये-
ते यावदस्माभि—र्भरतो बाहुबल्यपि ॥ २५ ॥ अथेत्य दत्ताशीर्वादा—स्त्रिदशा भरतं जगुः ॥
बंधुना युध्यमानस्य । कोऽयं मोहस्तवार्षभे ॥ २६ ॥ अपि द्वात्रिंशता देश—सहस्रैर्या न नि-

ष्टिता ॥ बुभुक्षा नंद्यते सा किं । देशेनैकेन तेऽमुना ॥ २७ ॥ पुरापि सौदरैश्वर्य—ग्रासेऽभू-
त्तव दुर्यशः ॥ वैमात्रेयममित्रीयं—स्तत्र दत्सेऽधुना ध्वजं ॥ २८ ॥ विधाय कलहोद्रेक—मेका-
मिषजिघृक्षया ॥ भूरयंति सगोत्रं ये । शुनास्ते न तु सज्जनाः ॥ २९ ॥ यादृशस्तादृशो वा-
पि । भ्राता नोच्छेदमर्हति ॥ अपि वक्रं निजं वक्त्रं । किं छिंद्येत सचेतनाः ॥ ३० ॥ वीरावतंस
राज्यार्थं । गोत्रवैरं वितन्वतः ॥ तातस्यापि न लज्जा ते । जाता धिग्लोभविप्लवं ॥ ३१ ॥ अ-
थ ह्रीभारनम्रास्य । इत्याभाषत भूपतिः ॥ अविज्ञैरपि विज्ञैर—प्यूचे देवाः किमीदृशं ॥३२॥
राज्यलोभो न मे भ्रात्रा । सह विग्रहकारणं ॥ किंत्वस्य चक्ररत्नस्या—प्रवेशः शस्त्रमंदिरे ॥३३॥
चिरं जीवतु मे भ्राता । चिरं पालयतु क्षितिं ॥ वदत त्रिदशा सोऽहं । चक्रे वक्रे करोमि किं
॥ ३४ ॥ सकृद्यद्येष नकाग्र—नतिमात्रं करोति मे ॥ तद्याम्येष निवृत्येति । वक्त बाहुबलेरपि ॥
॥ ३५ ॥ देवाः प्रोचुः कदाप्येषो—ऽस्मदुक्तमवमन्यते ॥ तथापि नास्त्रैर्योद्धव्यं । किंतु दृग्वाग्भु-
जादिभिः ॥ ३६ ॥ ॐमित्युक्तवति क्ष्मापे । सैन्यांतरमुपेत्य ते ॥ दत्वाशिषमभाषंत । सौनं-
देयं दिवौकसः ॥ ३७ ॥ शृणु वीर कुतोऽधीतः । सोऽयं दुर्विनयस्त्वया ॥ यदग्रजं पितृप्रायं । न-

मनू मनसि शंकसे ॥ ३८ ॥ पित्रा ते निर्जितौ कोप—मानौ विश्वविजित्वरौ ॥ वैरेणेवाधिकं
धीर । किं त्वां व्यथयतोऽधुना ॥ ३९ ॥ भुवने संति भूयांसः । सुरविद्याधरेश्वराः ॥ तान् मु-
क्त्वा ज्यायसा युद्ध—कृतो धिक् तव पौरुषं ॥ ४० ॥ नम तद्भरतं भक्त्या । नास्त्येवं कापि
ते क्षतिः ॥ गुरुभ्यः प्रणमन्नेव । पुमान्नुब्रूयमश्नुते ॥ ४१ ॥ अथ बाहुबली प्रोचे । देवाः किं
मम दूषणं ॥ भरतो भ्रातृभावेन । न मे प्रणतिमिच्छति ॥ ४२ ॥ किंत्वन्यनृपसामान्य—मसौ
दिग्जयपुष्टया ॥ मां नामयति शक्त्याद्य । तदहं न हि शासहि ॥ ४३ ॥ यद्याक्रांतः परैर्बाहु
—बली वितनुते नतिं ॥ तद्व्रजेते पितादीशो । भ्रातापि भरतश्च सः ॥ ४४ ॥ निवर्ततामयं
पश्चा—न्निवृत्तोऽस्मि रणादहं ॥ यांतं चेदनुयाम्ये तं । तन्मे दद्यात दूषणं ॥४५॥ स्वामी मे श्री·
युगादीशो । नान्यो भवितुमर्हति ॥ ममास्य च प्रसविता । पालकः पोषकश्च यः ॥४६॥ अथोचु-
रमरा बाहु—बले सत्यं वदन्नसि ॥ आक्रांता हि परैर्वीरा । वज्रंस्तंभंति निश्चितं ॥४७॥ न दोषो भरत
स्यापि । यश्चक्रमनुवर्तते ॥ चक्रं हि नांचति स्थान—मजित्वा सर्वभूभुजः ॥४८॥ यांचामहे तदेतत्त्वा
—मलं मारांकया युधा ॥ कार्यो दृष्ट्यादियुद्धैस्तु । स्वबलाबलनिर्णयः ॥४९॥ एवमस्त्विति तेनोक्ते ।

तस्थुर्दिवि दिवौकसः ॥ मध्यस्थाः साक्षिण इव । कर्तुं तज्जयनिश्चयं ॥ ५० ॥ विश्रमय्य धनुर्दंडान् । क्षिप्त्वा कोशेष्वसीनपि ॥ शपंतस्त्रिदशानस्थु—र्दूरे सैन्यद्वयीभटाः ॥ ५१ ॥ वीराणां चिरसंप्राप्त—रणरंगोत्सवच्छिदे ॥ केनामी निर्मिता देवा । वेधसा मंदमेधसा ॥ ५२ ॥ गजाश्वशिक्षाशस्त्रास्त्र—संग्रहप्रमुखोऽखिलः ॥ दुर्भगायौवनमिवा—रंभोऽस्माकं वृथाभवत् ॥ ॥ ५३ ॥ आयातं रणपर्वेह । को मुंचति सचेतनः ॥ परं किं कुर्महे देवा । देवस्याज्ञा बलीयसी ॥ ५४ ॥ भटेषु प्रलपत्स्वेवं । मुष्टेष्विव हृतेष्विव ॥ भ्रत्तेरतुरहंकारा—दिवेभात्तौ महीपती ५५ भ्रभावभिमुखं यांतौ । कल्पांत इव वारिधी ॥ वीक्ष्य क्षणं ययुर्देवा । आकंपं किं पुनः परे ॥ ५६ ॥ तौ प्राप्य खुरक्षिदेशं । तस्थतुः संमुखौ मिथः ॥ प्रथमं दृष्टियुद्धाय । निर्निमेषदृशौ चिरं ॥ ५७ ॥ तौ वीक्ष्य निर्निमेषाक्षौ । विबुधाः समसेरत ॥ किमस्माकं प्रभुश्चक्रे । द्वैरूप्यं कुतुकादिति ॥ ५८ ॥ अक्षमे सोढुमुष्णासो—रिव बाहुबलेर्महः ॥ बाष्पधारा अमुंचंतां । भरतस्याक्षिणी क्षणात् ॥ ५९ ॥ मारोदीर्भ्रातरद्यापि । वज्र न ध्रियसे मया ॥ इति बाहुबलौ जल्प—त्यहसन्नमरा अपि ॥ ६० ॥

तस्योपरि सुरैः पुष्प-वर्षे हर्षेण निर्मिते ॥ दुढौके भरतः सज्जी-भूय वाग्वादसादरः ॥
॥६१॥ ततान सिंहनादं स । शैलरंध्रप्रसृत्वरं ॥ येनाजागरिषुः सिंहाः । प्रतिसिंहाभिशंकया
॥ ६२ ॥ तत्रसुस्तुरगास्तेनासर्पताहर्पतेरपि ॥ सोऽश्वं तदाष्टमं भ्रष्टं । मन्ये नाद्यापि विंदति ॥
॥६३ ॥ निःस्नेहदीपवत्तस्मिन् । हीयमाने शनैर्ध्वनौ ॥ तेने बाहुबली सिंह-नादं सिंहपराक्र-
मः ॥ ६४ ॥ त्रस्यंतिस्माद्रिशृंगाणि । क्षुभ्यंतिस्म पयोधराः ॥ त्रस्यंतिस्मोरुचक्रं च । तन्नादे-
न विसारिणा ॥ ६५ ॥ भोगिनो नाभविष्यंश्चे-दकर्णास्तत्ततो ध्वनेः ॥ जाने भोगिपतौ त्रस्य
-दभ्रसिष्यद्धरातलं ॥ ६६ ॥ नादेऽस्मिन् भारतान्नादा-च्चिरं दूरं च विस्तृते ॥ स्माहुर्बाहुबले-
दैवा । जयवादं स्फुटाक्षरैः ॥ ६७ ॥ चक्रयूथो भुजयुद्धार्थी । निजं विस्तारयद्भुजं ॥ दक्षिणं श-
त्रुवित्रस्त-लोकरक्षणदक्षिणं ॥ ६८ ॥ चतुर्युताशीतिहस्ति—लक्षैरकलितौजसं ॥ बाहुं बाहु-
बली तस्या-नामयन्नाललीलया ॥ ६९ ॥ अथ विस्तारयामास । निजं बाहुबली भुजं ॥ वज्रदं-
डमिवाशेष—भूमीभृद्गर्वभूभृतां ॥ ७० ॥ व्यधत्त भरतो भूरि—स्थाम्ना तन्नामनोद्यमं ॥ अ-
नंस्त न तु स स्वामि-गुणादिव मनागपि ॥ ७१ ॥ दोलालीलां भुजोत्क्षेपा—द्भरते तेन लंभि-

ते ॥ त्रिदशास्तेनिरे लोल—लोलाः कोलाहलं दिवि ॥ ७१ ॥ अथापासरतां दूरं । शूरंमन्यावुभा-
वपि ॥ विशिष्टमुष्टियुध्धेन । युयुत्सू मौष्टिकाविव ॥ ७२ ॥ भरतेनाहतो मुष्ट्या । तमसा प-
स्पृशेऽनुजः ॥ भित्वा तमः क्षणेनासौ । तिग्मांशुरिव दिद्युते ॥ ७४ ॥ बध्नन्नथाश्लथां मुष्टि—
मजिहासुः श्रियं निजां ॥ कृपणार्भकयोरासी—त्तृतीयो भरतानुजः ॥ ७५ ॥ तेन वज्रमयेनेव
। मुष्टिना मूर्ध्नि ताडितः ॥ दुःखविस्मारणसखीं । मूर्छनां भरतो ययौ ॥ ७६ ॥ मया किमेत-
दारेभे । निषिध्धेनापि नाकिभिः ॥ क्षत्रियाणां ह्यनर्थांतो । विग्रहस्य कदाग्रहः ॥ ७७ ॥ जी-
वत्विदानीं भरतो । विरतोऽस्मि रणादहं ॥ मृतश्चेत्तर्हि नौ नून—मेकैव भविता चिता ॥ ७८ ॥
ध्यायन्निति सनिर्वेदं । सौनंदेयोऽग्रजं निजं ॥ उपाचरत्स्वहस्तेन । वारिचंदनवीजनैः ॥ ७९ ॥
त्रिभिर्विशेषकं ॥ व्यावृत्तचेतने तस्मिन् । क्षणेनोद्घाटितेक्षणे ॥ भ्रातृहत्याकलंकाब्धे—रुत्ती-
र्णं स्वममंस्त सः ॥ ८० ॥ स्वस्य शुश्रूषकं पश्यन् । पुरतो भरतोऽनुजं ॥ ह्रणीयमाणो व्यमृश
—ज्जीवितान्मरणं वरं ॥ ८१ ॥ तस्मिन् भृशायितक्रोधे । दंडाहतभुजंगवत् ॥ दंडरत्नं दधा-
नेऽधा—ह्दंडं श्रीबाहुबल्यपि ॥ ८२ ॥ दंडयुध्धार्थिनौ दंड—पाणी दंडधराविव ॥ अन्योन्यं वी-

त्य धावंतौ । तौ नैसुस्त्रिदशा अपि ॥ ७३ ॥ चक्रधीर्भरतो दंडे–नाजघान तथानुजं ॥ यथा
ऽयथाभरताद्भूमा—वाजानु निममज्ज सः ॥ ७४ ॥ हेलया स स्वमुद्धृत्य । रोषदष्टौष्टपल्लवः ॥
भरतं मूर्ध्नि दंडेना—ताडयत्कणमूढवत् ॥ ७५ ॥ स्फुटन्मुकुटकोटिस्थ—हीरतारकितांबरः ॥
विविक्षुरिव पाताल—माकंठं सोऽविशद्भुवि ॥ ७६ ॥ स्थलांभोजभ्रमं तन्वन् । भरतः प्रकटा-
ननः ॥ वंशकंद इवाकृष्य । भटैः कष्टाद्बहिः कृतः ॥ ७७ ॥ जय त्वं विश्वसौमीर—धुरीणे-
त्यभिलापिनः ॥ देवा बाहुबलेर्मौलौ । पुष्पवृष्टिं वितेनिरे ॥ ७८ ॥ दिवापि भरतस्येंदौ । ध्वां-
तेन विधुरीकृते ॥ तद्वर्ग्येतरचक्षुर्भिः । कैरवांभोरुहायितं ॥ ७९ ॥ द्वौ चक्रिणौ समं नास्तां
। मत्तोऽयं च बलाधिकः ॥ चक्र्येष एव तन्मन्ये । क्लेशमात्रफलोऽस्म्यहं ॥ ८० ॥ इत्यातुरं
चिंतयत—श्चक्रवर्तित्वसूचकं ॥ तस्य पाणिमलंचक्रे । चक्रं व्योमेव भास्करः ॥ ८१ ॥ युग्मं ॥
भृत्येनेवातिभक्तेन । ध्यातायातेन तेन सः ॥ प्रीतः प्रत्यर्थिनमिव । भ्रातरं हंतुमैहत ॥८२॥
पाणिस्थचक्रपाशेन । नृत्यंतमिव वीक्ष्य तं ॥ चेष्टाज्ञाततदाकूतो—ऽज्ज्वलद्बाहुबली क्रुधा ॥
॥ ८३ ॥ सचक्रं चक्रिणं चूर्णी—कर्तुमेष क्षमोऽस्म्यहं ॥ इत्यसौ मुष्टिमुत्पाट्य । दधावे भरतंप्र-

ति ॥ ९४ ॥ अत्रांतरे भूतः सैष । चक्रीति तुमुलादिव ॥ प्रसुप्तेन विवेकेन । तस्य जागरितं हृदि ॥ ९५ ॥ तत्संपर्कपरावृत्त—चित्तोऽसौ दध्यिवानिति ॥ तृष्णानार्याजितेऽमुष्मिन् । जिगीषां धिक्वृथा मम ॥ ९६ ॥ ममापि वीरमानित्वं । किं दांतस्यांतरारिभिः ॥ मन्येऽहं तातमेवैकं । वीरं तन्निग्रहक्षमं ॥ ९७ ॥ तस्य सूनोर्ममाप्येषां । युक्तो भावद्विषां जयः ॥ तावत्कु वसंत्येते । हुं ज्ञातं देहपत्तने ॥ ९८ ॥ निश्चित्येति तया मुष्ट्या । तेषां नीलध्वजानिव ॥ पुरस्योपरि रोचिष्णूं—श्चिकुरानुद्दधार सः ॥ ९९ ॥ निरुध्य तत्र नीरान्न—प्रवेशं तस्थिवानसौ ॥ निश्चलीभूय भक्त्या च । तद्दुर्गमिव दुर्मनः ॥ १२०० ॥ पापान् व्यापारिणस्तेषां । रुध्ध्वा पंचेंद्रियाणि सः ॥ तत्प्रासादं प्रमादाख्यं । मौलं मूलादपातयत् ॥ १ ॥ तातांतिकं प्रयातेन । मया वंद्या महर्षयः ॥ भ्रातरस्तेऽनुजा अष्टा—नवतिर्जातकेवलाः ॥ २ ॥ तव्यास्यास्यहमुत्पन्न—कैवल्यः पितुरंतिके ॥ ध्यात्वेति निश्चलस्तस्थौ । कायोत्सर्गेण तत्र सः ॥ ॥ ३ ॥ युग्मं ॥

तं शांतस्वांतमालोक्य । लज्जमानः स्वकर्मणा ॥ द्विधापि प्रांजलीभूय । चक्री साश्रुमभाषत

॥ ४ ॥ संग्रामानुचितं कर्म। किमारेभे त्वयेदृशं ॥ तस्मै त्वन्मुष्टिघाताय । भ्रातरुत्कंठितोऽस्म्यहं ॥ ५ ॥ चक्रभीरुरयं दीक्षां । जग्रहे जीवनौषधं ॥ त्वां वीरमपि लोकोक्ति–रेषा बाधिष्यते न किं ॥६ ॥ गृहाण सकलं राज्यं । त्वमेव वरविक्रम ॥ अन्वहं निर्वहिष्येऽहं । पुरतः पत्तिवत्तव ॥ ७ ॥ पुरापि मुमुचे सोऽहं । द्रोहीवाखिलबंधुभिः ॥ चेन्मुंचसि त्वमप्येवं । सर्वथा हा हतोऽस्मि तत् ॥ ८ ॥ सुतः सत्योऽसि तातस्य । त्वमेकः सुविवेकधीः ॥ के वयं तस्य भूभार–वाहिकाः किंकरा इव ॥ ए ॥ सांप्रतं न रमया न रामया । नांगजैर्न च गजैर्न सेवकैः ॥ निर्वृतिं मम विधीयते विना । भ्रातरं विरहकातरं मनः ॥ १० ॥ भ्रातर्जानामि रुष्टोऽसि । ममागः क्षम्यतामिदं ॥ यदि क्षमां प्रपन्नस्तद्देहि वाचं सुधामुचं ॥ ११ ॥ एवं विलापिनं क्ष्मापं । वृध्धामात्या बभाषिरे ॥ स्वामिन् मतिविपर्यासः । कोऽसौ विद्यावतोऽपि ते ॥ १२ ॥ गंभीरवीरधीराणां । धुरीणोऽयं तवानुजः ॥ प्रपन्नं न त्यजत्येव । देव किं खिद्यसे वृथा ॥ १३ ॥ लोभक्षोभवचोघातै–रचाल्योऽसौ सुमेरुवत् ॥ तायतां तनयस्यास्य । विशेषाद्गौरवं पुनः ॥ १४ ॥ इत्यमात्यवचोवीची–शुचीकृतमना नृपः ॥ पुनः पुनर्ननामाश्रु–धाराधौतो मुनेः क्रमौ ॥ १५ ॥

श्रीसोमयशसं तस्य । तनयं नयशालिनं ॥ दक्षस्तक्षशिलाराज्ये—ऽभ्यषिक्त भरतेश्वरः ॥ १६ ॥ ध्यायन् बाहुबलेर्वीर्यं । वैराग्यं च तदद्भुतं ॥ अयोध्यां भरतः प्राप । चक्रं चायुधमंदिरं ॥ ॥ १७ ॥ गजाश्वनार्यो वैताढ्य—गिरौ निजपुरेऽपि च ॥ सेनापतिर्गृहपति—र्वर्धकिश्च पुरोहितः ॥ १८ ॥ चक्रं छत्रमसिर्दंड—श्चत्वारीत्यायुधौकसि ॥ काकिणीचर्ममणयः । श्रीगृहे तस्य जज्ञिरे ॥ १९॥ युग्मं ॥ एवं चतुर्दशास्यासन् । रत्नानि निधयो नव ॥ सहस्राः षोडशाभ्यर्णे । देवास्तद्द्विगुणा नृपाः ॥ २० ॥ सहस्राणि चतुःषष्टि—रंतःपुरपुरंध्रयः ॥ सहस्रा नाट्यदेशानां । द्वात्रिंशच्च पृथक्पृथक् ॥ २१ ॥ लक्षाश्चतुरशीतिश्च । महेभरथवाजिनां ॥ पृथक्पृथक् षण्णवतिः । कोटयो ग्रामपत्तयः ॥ २२ ॥ सहस्राण्यष्टचत्वारिं—शत्पत्तनवराणि च ॥ सहस्रा नवनवति—स्तथा द्रोणमुखान्यपि ॥ २३ ॥ कर्बटानां मडंबानां । सहस्राश्चतुर्विंशतिः ॥ संबाधानां च खेटानां । चतुर्दश च षोडश ॥ २४ ॥ पुराणामाकराणां चा—सन् द्वासप्ततिविंशती ॥ सहस्राणि कुराज्यान्ये—कोनपंचाशदेव च ॥ २५ ॥ श्रेणिप्रश्रेणयस्तस्या—ष्टादशाचारकोटयः ॥ शतानि रूपकाराणां । त्रीणि षष्ट्यधिकानि च ॥ २६ ॥ एवं प्राक्तनपुण्यर्द्धि—पू-

र्णाखिलमनोरथः ॥ भरतोऽपालयन्नीत्या । षट्खंडं क्षोणिमंडलं ॥ २७ ॥ अथ बाहुबलेस्तत्र ।
कायोत्सर्गेण तस्थुषः ॥ आजगाम क्षुधाक्राम—वामः शीतर्त्तुरर्तिदः ॥ २८ ॥ हैमन्यामपि या-
मिन्यां । न शीतार्तिं विवेद सः ॥ सदा सन्निहितध्यान—कृशानुः सानुनिश्चलः ॥ २९ ॥ त-
स्य शीतव्यथां हर्तु-मिवोष्णर्तुर्व्यजृंभत ॥ प्रदीप्तभानुभीत्येव । यत्रास्तुवन्निशाः [illegible] ॥ ३० ॥
चिदानंदसुधास्पंद—मंदीकृततृषोदयः ॥ सुखं लूकाकुलं काल—मतिचक्राम सोऽखिलं ॥ ३१ ॥
तं तपस्विषु साम्राज्ये—ऽभिषेक्तुमिव वारिभिः ॥ गार्जिमंत्रान् गृणन् वर्षा—कालः प्रादुरभूदथ
॥ ३२ ॥ उद्भिन्नदर्भशूचीभिः । संददर्भ मुनेः पदौ ॥ अक्रमेव क्षमा स्वेन । सोढुं तद्विरह-
व्यथां ॥ ३३ ॥ भ्रेमुस्तं परितो वल्ल्यो । विलोलनवपल्लवाः ॥ प्रदक्षिणाक्षणे रक्त—वसना
श्राविका इव ॥ ३४ ॥ नीरपूरप्लुतबीला—स्त्यक्तपंकिलभूतलाः ॥ उत्फणाः फणिनो मूर्ध्नि ।
तस्य तस्थुस्तरोरिव ॥ ३५ ॥ एवं धाराधरोद्धूता—धारानाराचवीचयः ॥ जिनाज्ञाविधृतछत्रं
। कंपयांचक्रिरे न तं ॥ ३६ ॥ आसन्नं तस्य कैवल्यं । ज्ञात्वा संवत्सरात्यये ॥ प्रदत्तवाचिके
ब्राह्मी—सुंदर्यौ प्रेषयद्विभुः ॥ ३७ ॥ साध्व्यौ तत्रागते भूत्वा—विव ते केवलश्रियः ॥ सोब्रा

वासं पुरुषाकारं । लतागुल्ममपश्यतां ॥ ३८ ॥ ज्ञात्वा तत्रानुमानेन । ते बांधवमवोचतां ॥ सिं-
धुरादुत्तर भ्रात—रिति तातस्य वाचिकं ॥ ३९ ॥ श्रुत्वेति वचनं बाहु—बली शब्दानुसारतः ॥
ते भगिन्यौ परिज्ञाय । चिंतयामासिवानिति ॥ ४० ॥ मम निर्ममयोः स्वस्रो—रेषोक्तिस्तत्कि-
मीदृशी ॥ नूनं प्राणात्ययेऽप्येते । न भाषेते मृषा वचः ॥ ४१ ॥ वदतो भगवद्वाचा । नाग-
त्यागमिमे मम ॥ अभूत्यक्तैवतस्तं च । वत्सरः किमिदं ततः ॥ ४२ ॥ हुं ज्ञातं मानमत्तेभ—मा-
रूढोऽस्म्यहमन्वहं ॥ अमानं मानसंपर्के । ज्ञानमुत्पद्यते कथं ॥ ४३॥ मयि मत्तेऽप्यहो कापि
कृपा तातस्य दृश्यते ॥ यदेवमुपदेशेना—चेतयन्मामचेतनं ॥ ४४ ॥ कनिष्ठा अपि ते ज्ये-
ष्ठा । यैः पूर्वं जगृहे व्रतं ॥ नमंस्तानपि शंकेऽहं । धिग् मां मुख्यममेधसां ॥ ४५ ॥ गत्वाथ
तान् प्रणंस्यामी—त्युत्तीर्णो मानकुंजरात् ॥ पुरस्थयेव तत्कालं । वव्रेऽसौ केवलश्रिया ॥ ४६ ॥
वंद्यमानः सुरव्रातैः । सपुष्पव्यूहवर्षिभिः ॥ ययौ समवसरणं । शरणं सर्वदेहिनां ॥ ४७ ॥ प्र-
दक्षिणय्य तीर्थेशं । केवलज्ञानिपर्षदि ॥ अनुजानमनात्पूर्ण—प्रतिज्ञः स निविष्टवान् ॥ ४८ ॥
इतश्चैकादशांगज्ञो । विहरन् विभुना सह ॥ ग्रीष्मे मध्यंदिने भ्राम्यन् । मरीचिर्गोचरक्षणे ॥

॥ ४ए ॥ जानोर्भरीचिसूचीनि–र्विद्धः प्रस्वेदपंकिलः ॥ लूकाभिरग्निज्वालानि—रिवाक्रांतो
व्यचिंतयत् ॥ ५० ॥ सुकुमारेण देहेन। यदेतद्व्रतपालनं ॥ तत्कौसुमेन सन्नाहे–नारिनाराच-
वंचनं ॥ ५१ ॥ गलिनेव मया ताव—द्वीढाचारो दुरुद्वहः ॥ न लज्जातः कुलीनेन । गंतुं
पश्चाच्च शक्यते ॥ ५२ ॥ ईदृशे पथि संकीर्णे । पतितस्तत्करोमि किं ॥ एवं चिंतयतस्तस्य ।
कापि प्रादुरभून्मतिः ॥ ५३ ॥ विजितोऽस्मि त्रिभिर्दंडै—रिति सोऽभूत् त्रिदंडभृत् ॥ क्षुरमुंडः
शिखाभृद्वा । लोचकर्मण्यशक्तितः ॥ ५४ ॥ व्रतानि देशतो दध्रे । सर्वथा वोढुमक्षमः ॥ चक्रे
परिग्रहं किंचि—दाकिंच्यादनिर्वहन् ॥ ५५ ॥ व्यधत्ताशीलदुर्गंधः । स चंदनविलेपनं ॥ मो-
हेनाछादितोऽस्मीति । छत्रकं मूर्ध्न्यधत्त च ॥ ५६ ॥ दृषत्कंटकभीरुत्वा–द्दधौ पदभ्यां स पा-
दुके ॥ कषायकलुषत्वाच्च । काषायान्यंशुकान्यपि ॥ ५७ ॥ अतितिक्षुर्मलक्लेदं । सस्नौ किंचि-
ज्जलेन सः ॥ ईदृग्लिंगं च बिभ्राणो । विजह्रे स्वामिना सह ॥ ५७ ॥ साधुष्वसदृशं दृष्ट्वा ।
धर्मं पप्रछ तं जनः ॥ स्वमशक्तं वदन् साधु–धर्मं सम्यग्दिदेश सः ॥ ५ए ॥ यो यस्तद्वचसा
जात—वैराग्यः प्रत्यबुध्यत ॥ प्रहित्य स्वामिपादांते । तेन प्रव्राजितः स सः ॥ ६० ॥ उपे·

ह्नितस्य चारित्र—च्युतत्वात्सर्वसाधुभिः ॥ अन्यदा जग्रसे तस्य । विषमव्याधिना वपुः ॥
॥ ६१ ॥ यथा तथा वा निर्वाहः । स्वास्थ्ये जायेत जन्मिनां ॥ सहायविकलानां तु । न कां-
तार इवामये ॥ ६२ ॥ युक्तं मा यतयो हीना—चारं न प्रतिकुर्वते ॥ तैर्थीको मया मृग्य
—स्ततः कोऽपि स्वसन्निभः ॥ ६३ ॥ एवं भावयतस्तस्य । विलीने स्वयमामये ॥ कोऽप्युग्रकर्मा
कपिलः । दात्रो जिनमुपेयिवान् ॥ ६४ ॥ त्रिभिर्विशेषकं ॥ निपीतमपि जैनेशं । तस्मै नैवारु-
चद्वचः ॥ क्षाराब्धिसफरायेव । सरसं सारसं पयः ॥ ६५ ॥ स वातकीव मरिचं । मरीचिं वी-
क्ष्य हर्षितः ॥ धर्मं जन्मांतरप्रीत्ये—वापृच्छदतिवत्सलः ॥ ६६ ॥ तव मोक्षाध्वदीपेन । चेद्धर्मे-
ण प्रयोजनं ॥ जिनं तदाश्रयेत्युक्त—स्तेन सोऽगाज्जिनांतिकं ॥ ६७ ॥ सूर्यालोक इवोलूकः ।
प्रभोर्वचसि निःस्पृहः ॥ पुनर्मरीचिमभ्येत्य । धर्मं सोऽपृच्छदुत्सुकः ॥ ६८ ॥ धर्मार्थिन् याहि
सर्वज्ञ—मित्युक्तोऽसौ मरीचिना ॥ किं सर्वथाप्यधर्मासि । त्वमिति प्रत्यभाषत ॥ ६९ ॥ ग्रा-
म्यसभ्य इव ग्राम्य—नटस्यायं ममोचितः ॥ ध्यात्वेत्यत्रापि तत्रापि । धर्मोऽस्त्येवेति सोऽप्य-
वक् ॥ ७० ॥ स बभ्राम महामिथ्या—गर्जाद् दुर्भाषितात्ततः ॥ कोटाकोटिं स[illegible]णां । म-

रीचिर्भवसागरं ॥ ७१ ॥ दीक्षयित्वाथ कपिलं । स्वसाहाय्यं चकार सः ॥ परिव्राजकपाखंडं ।
तदादि भुवि पप्रथे ॥ ७२ ॥ विहरन् वसुधापीठे । श्रीयुगादिजिनोऽन्यदा ॥ विनीतां नगरीं
प्राप । पापपंकदिवाकरं ॥ ७३ ॥ प्रणम्य भरतस्तात—मित्यचिंतयदुन्मनाः ॥ निरीहान्निरहं-
कारा—न्वीक्षमाणो निजानुजान् ॥ ७४ ॥ असंविभज्य भुंजानं । भ्रातृभ्यः परमां रमां ॥ अ-
हं मन्ये मनुष्योऽपि । स्वं निःस्वं वायसादपि ॥ ७५ ॥ एककुल्या जले तुल्या—भिक्षाशास्तरवो
वरं ॥ नाहं पुनः समुत्सार्य । भ्रातॄन् श्रीभोगलोलुपः ॥ ७६ ॥ किमहं भस्मकी किं वा । धू-
मः किं वा दवानलः ॥ ग्रस्तेषु बंधुराज्येषु । यदिच्छाद्यापि तादृशी ॥ ७७ ॥ बंधूनामप्यभोग्या या
। सा भार्येव सतां मता ॥ पतित्वे सदृशोऽपि श्रीः । श्लाघ्या सर्वोपयोगिनी ॥ ७८ ॥

यद्यमी गृह्णते कांचि—द्भोगाद्भोगाशया श्रियं ॥ तद्ददामीति निश्चित्य । जिनेंद्रं स व्य-
जिज्ञपत् ॥ ७९ ॥ न हि वांताशिनः श्वान । स्वामी तव बांधवाः ॥ कामयंते परित्यक्तान् ।
भोगानेव जिनो जगौ ॥ ८० ॥ तत् श्रुत्वा स परां प्रीतिं । दधानः स्वपुरीं गतः ॥ सज्जयामास
विविधा—हारानननुजभुक्तये ॥ ८१ ॥ आपूर्य खंडखाद्यैस्तै—र्भूजानिः शकटानि सः ॥ ययौ

जंभारिणा साकं । देशनामंदिरं विभोः ॥ ७२ ॥ व्याख्यां साक्षादिव सुधां । वसुधाविबुधाधिपौ ॥ युगपत्पपतुः स्वामि—वदनेंदुविनिर्गतां ॥७३॥ अनुजानीहि । गृहीतुमशनं मम ॥ व्याख्यांते चक्रिणेत्युक्ते । जगदे धर्मचक्रिणा ॥ ७४ ॥ यः कृतः कारितो यश्चा—नीतः कल्पनया मुनेः ॥ विषदिग्धमिवाहारं । तं न गृह्णंति साधवः ॥ ७५ ॥ तत्स्वभावेन निष्पन्न—मन्नमादातुमादिश ॥ अमून् मदोकसीत्युक्ते । चक्रिणाभाषत प्रभुः ॥ ७६ ॥ एतैर्हि राजपिंडोऽपि । दंभवन्नानु मन्यते ॥ श्रुत्वेति भरतो दुःख—भरतो दध्यिवानिति ॥ ७७ ॥ जघ्नसेऽप्युग्रसेनोऽहं । यद्राज्यान्यनुजन्मनां ॥ तत्सर्वथाप्यपांक्तेय—स्तातेनांत्यजवत्कृतः ॥ ७८ ॥ पातालं प्रविशाम्येष । दीर्यते यदि भूतलं ॥ रत्नपीठे सुबध्धेऽत्र । सा कथापि वृथाथवा ॥ ७९ ॥ तमश्चेद्भवति क्वापि । निलीये तदहं रहः ॥ यद्वास्तु बहिराप्येत । तमो नात्र मनस्यपि ॥८०॥ एवं विषादिनि क्ष्मापे । जिनेंद्रं नाकिनायकः ॥ पप्रच्छ तत्समाध्यर्थ—मवग्रहभिदास्तदा ॥८१॥ देवेंद्रराजग्रामेश—सागारिकमहात्मनां ॥ स्युः पंचावग्रहा उत्त—रोत्तरार्दितपूर्वकाः ॥ ८२ ॥ श्रुत्वेति भगवद्वाचं । प्रणम्य मघवा ददौ ॥ विहर्तुं भरतक्षेत्रे । साधुभ्यः स्वमवग्रहं ॥ ८३॥

भरतोऽपि ततः प्रीत-मनाः प्रोचे प्रभुंप्रति ॥ मयापि भरतक्षेत्रे । दत्तः साधुष्ववग्रहः ॥९४॥
अन्योन्यकंठसंयुक्त — बाहू सुरनरेश्वरौ ॥ निरीयतुः प्रभोर्व्याख्या—मंदिरात्सोदराविव
॥ ९५ ॥ कथं कार्यमिदं भक्त—पानमानीयमादरात् ॥ इति तेन हरिः पृष्टो । गुणाढ्यान् पू-
जयेत्यवक् ॥९६॥ गुणैः शौर्यादिभिर्मत्तो । न कश्चिददतिरिच्यते ॥ ततः कं पूजयामीति । सं-
शिष्ये तस्य चेतसा ॥ ९७ ॥ ये देशविरताः श्राद्धा—स्ते मत्तोऽपि गुणाधिकाः ॥ ततस्तान् पू-
जयामीति । निश्चिकाय स्वयं नृपः ॥ ९८ ॥ रूपं त्वमेकदा मुख्यं । दिदृक्षोर्मम दर्शय ॥ प्रा-
र्थितो भरतेनेति । नेता प्रोचे दिवौकसां ॥ ९९ ॥ मानवा दानवारीणां । मुख्यरूपेक्षणाक्ष-
माः ॥ क्ष्मानाथ तथाप्येका—वयवं दर्शयामि ते ॥ १३०० ॥ एकालोकमयीं शक्रः । स्वाम-
दर्शयदंगुलीं ॥ अवाङ्मुखो महीशक्रो । यया चक्रे स चक्र्यपि ॥ १ ॥ सोऽष्टाह्निकोत्सवं ते-
नें । चक्री शक्रांगुलींप्रति ॥ तदादि प्रावृतल्लोके । सोऽयमिंद्रमहोत्सवः ॥ २ ॥ बभूव तत्ततः
शक्र—चक्रिणोः सौहृदं मिथः ॥ न यदेकगुणप्रोत—मिव जातु वियुक्तवत् ॥ ३ ॥ दिवंदि-
वस्पतौ याते । समध्यास्य निजां पुरीं ॥ श्राद्धानाकारयामास । भरतो वरतोषभूः ॥ ४ ॥ स

तानूचे भवद्भिर्नो । कृष्यादिषु पराङ्मुखैः ॥ कुर्वद्भिर्धर्मकर्मैव । भोक्तव्यं भवने मम ॥ ५ ॥
भोजनानंतरं चैत–त्पठनीयमनारतं ॥ जितो भवान् वर्धते भी–स्तस्मान्मा हन मा हन ॥६॥
आरंभभीरवस्तेऽपि । तत्तथेति प्रपेदिरे ॥ भुक्त्वा तस्य गृहे शश्व–त्तथा पेठुः स्फुटाक्षरं ॥ ७ ॥
अशठं पठितं तैस्त–द्वाक्यमाकर्ण्य भूपतिः ॥ रागसागरमग्नोऽपि । क्षणं दध्यौ विचक्षणः
॥ ८ ॥ सोऽहं केन जितो ज्ञातं । कषायैर्वर्धते भयं ॥ तेभ्य एव ततो हंतुं । न युक्ताः प्राणि-
नो मम ॥ ९ ॥ इति ध्यानात्क्षणं तस्य । स्वांतं शांतमजायत ॥ यावच्छब्दादिविषयाः । प्रादु-
रासन्न विद्विषः ॥ १० ॥ वर्धमाने प्रतिदिनं । जने भोजनकारिणि ॥ श्रांतैर्विज्ञापितो भूपः ॥
सूपकारैः कदाचन ॥ ११ ॥ श्राद्धैः सह विशंतीह । कुंडेऽब्धिरिव वालुकाः ॥ अन्ये जना
जनाधीश । भोजनैकप्रयोजनाः ॥ १२ ॥ श्रावकाश्रावकाणां त–त्परीक्षां कर्तुमर्हसि ॥ नो चे-
न्नित्यश्रमाः कूपे । सूपकाराः पतंत्यमी ॥ १३ ॥ ततः पप्रच्छ भूपालो । लोकान् भोक्तुमुपस्थि-
तान् ॥ विचारं निरतीचारं । श्राद्धधर्मस्य मूलतः ॥ १४ ॥ विचारं भूभुजा पृष्टा । ये यथादृ-
ष्टमूचिरे ॥ तेषां रेखात्रयं चक्रे । काकिण्या स विचारवित् ॥ १५ ॥ ये प्राक्तनाः प्रमाद्यंति ।

जायंते ये च नूतनाः ॥ चिंतयामास षण्मासा—तिक्रमे तानसौ पुनः ॥ १६॥ दानेनालिंगितं
श्राद्ध—नक्तिव्याजेन वीक्ष्य तं ॥ आसन् शीलतपोनावा—स्तस्मिन्नुत्कंठिता इव ॥ १७ ॥
आर्यवेदानसौ चक्रे । तेषां स्वाध्यायहेतवे ॥ वृत्तिदो ज्ञानदश्चापि । कोऽन्यस्तेनोपमीयते ॥
॥ १८ ॥ मन्ये श्रावकमेकमेव नरतं यः साधुसाधर्मिके—ष्वेवं स्वं विनवं विनज्य विनयी शेषं
स्वयं नुक्तवान् ॥ पुण्यक्षेत्रपराङ्मुखा नटविटप्रायेषु बद्धादराः । केऽन्ये वृत्तविशालशासनस-
रोनिःश्रावकाः श्रावकाः ॥ १९ ॥ धौतपोताः सदा स्नाता—स्त्रिरेखा वेदपारगाः ॥ काले ती-
र्थव्यवच्छेदा—दनवंस्ते द्विजातयः ॥ २० ॥ अन्यदाष्टापदगिरिं । नगवंतमुपागतं ॥ पप्रच्छ कौ-
तुकस्यूत—चेता नरतनूपतिः ॥ २१ ॥ तीर्थंकरास्त्वया तुल्या । मया तुल्याश्च चक्रिणः ॥
कियंतोऽत्र नविष्यंति । नरते विरते त्वयि ॥ २२ ॥ त्रयोविंशतिरर्हंत—स्तथैकादश चक्रिणः
॥ नवार्धचक्रिणस्तेषां । बंधवो रिपवोऽपि च ॥ २३ ॥ इत्युदित्वा जगन्नाथ—स्तेषां नरितमा-
दिशत् ॥ पितृदेहप्रमाणायु—र्वर्णप्राच्यनवादिकं ॥ २४॥ नत् श्रुत्वा कौतुकाच्चक्री । प्रोवाच
परमेश्वरं ॥ सेयं देव त्रिजगती—समास इव ते सन्ना ॥ २५ ॥ स कश्चिद्विद्यते जंतु—रि-

यत्यां तव पर्षदि ॥ यः प्रनो तीर्थंकृन्नावी—त्यथ प्रोचे जिनेश्वरः ॥ २६ ॥ योऽसौ मरीचि-
स्तनय—स्तव कर्मवशो व्रतात् ॥ च्युतोऽपि सत्परीणामः । स नावी चरमो जिनः ॥ २७ ॥
पोतनेऽसौ पुरे विष्णुः । त्रिपृष्टो नविताद्दिमः ॥ मूकापुर्यां विदेहेषु । प्रियमित्रश्च चक्र्यपि ॥
॥ २८ ॥ ततो रोमांचितवपु—र्मरीचिमनिगम्य सः ॥ प्रदक्षिणय्य प्रणम—न्नित्यनाषत नूप-
तिः ॥ २९ ॥ वासुदेवो यदाद्यस्त्वं । पोतनेशो नविष्यसि ॥ यद्विदेहेषु मूकायां । चक्रवर्ति-
त्वमाप्स्यसि ॥ ३० ॥ तन्न वंदे न वंदे ते । पारिव्राज्यं च जन्म च ॥ यत्त्वं जिनश्चतुर्विंशो ।
नावी वंदे तदेव ते ॥ ३१ ॥ अथ नत्वा जिनं याते । विनीतां चक्रवर्तिनि ॥ मरीचिस्त्रिपदीं
मत्वा । मदाध्मातो जगाविति ॥ ३२ ॥ यदाद्यो वासुदेवानां । समये चक्रवर्त्यपि ॥ जिनश्च
नवितास्मीति । पूर्णमेतावता मम ॥ ३३ ॥ हरीणामहमाद्योऽस्मि । पिता मे चक्रिणां पुनः ॥
पितामहश्च तीर्थेशा—महो मम कुलं महत् ॥ ३४ ॥ एवं कुलमदान्नीचै—र्गोत्रकर्म चिकाय सः
॥ नाथोऽपि विहरन्नाप । सुराष्ट्रादेशमन्यदा ॥ ३५ ॥ मोक्षमध्यारुरुक्षूणां । सोपानमिव निश्च-
लं ॥ तत्र शत्रुंजयं शैल—मारुरोह जिनेश्वरः ॥ ३६ ॥ तन्मौलौ समवसृति—स्थितो जिनघना-

घनः ॥ घनदेशनया तेने । नवां पीयूषवाहिनीं ॥ ३७ ॥ दिनानि कतिचित्तत्र । व्यतीत्य विहरन्नथ ॥ प्रथमं पुंमरीकाख्यं । स्वाम्यादिक्गणेश्वरं ॥ ३८ ॥ त्वमत्रैवावतिष्टस्वा—नेकसाधुपरिछदः ॥ तवात्रस्थस्य न चिरा—द्भविष्यति नवदृतिः ॥ ३९ ॥ ओमित्युक्त्वा स्थितस्तत्र । गणभृद्विहृते विन्नौ ॥ पार्ष्णिग्राह इव द्रंगे । दिग्यालाप्रस्थिते नृपे ॥ ४० ॥ तत्र स्थितः स नगवा—नेवं श्रमणपर्षदि ॥ श्रीशत्रुंजयमाहात्म्यं । महाकीर्तिरकीर्तयत् ॥ ४१ ॥ सुधांजनं सज्ञानलोचनेषु । मिथ्यादृशामक्षिषु धूमलेखा ॥ प्रदर्शितो यैर्विमलाचलोऽयं । पुण्यानि तान्येव चिरं जयंतु ॥ ४२ ॥

अधः प्रविष्टो नरकं पिधत्ते । पुनाति पृथ्वीं विशदैः स्वपादैः ॥ गिरीश्वरोऽयं गगनाग्रलग्नो—ऽपवर्गमार्गं सुगमं करोति ॥४३॥ कृत्वापि पापानि सुदारुणानि । हत्वापि जंतूननिशं विमंतून् ॥ आरुह्य शैलेशमिमं प्रयांति । स्वर्मंदिरं दारुणचेतसोऽपि ॥ ४४ ॥ चलाबला नूरिमलाविला च । रजोमयी दृष्टविचित्रमारा ॥ क सुंदरी कास्य दरी नगस्य । स्थिरा पवित्रा विरजा अहिंस्रा ॥ ४५ ॥ न यांति ये शैलममुं विहाय । विहायसः संतु चिरायुषस्ते ॥ किं तैर्नरै-

रम्यफलावतारै–र्नालोकि यैस्तीर्थमदोऽपदोषं ॥४६॥ संत्यत्र शैला बहवोऽपि किंतु। सोऽयं गि-
रिः सिद्धिपदं प्रसिद्धः ॥ केके ग्रहा व्योमनि न स्फुरंति । सुधानिधानं विधुरेक एव ॥ ४७ ॥
श्रुत्वेति गणभृद्वाचं । प्रीताः सर्वेऽपि साधवः ॥ शिवं गतमिवात्मानं । ते जीवंतोऽपि मेनिरे
॥ ४८ ॥ अथाचिरादनशनं । गृहीत्वा गणनायकः॥ उत्पन्नकेवलज्ञानः । सिद्धोऽमून्मुनिभिः
सह ॥ ४९ ॥ नाकिभिर्निर्मिते तस्य । निर्वाणगमनोत्सवे ॥ हैमं तस्य गिरेर्मौलौ । प्रासादं
चक्रूचीकरत् ॥ ५० ॥ पुंडरीकप्रतिमया। सहितां प्रतिमां प्रभोः ॥ तत्र सोऽस्थापयत्तीर्थं ।
तदाद्यं भुवि पप्रथे ॥ ५१ ॥ विहारं वसुधापीठे । विदधानो जिनेश्वरः ॥ केषां नोपकरोतिस्म ।
द्विधा धर्मप्रदानतः ॥ ५२ ॥ द्वादशांगीविधातारो । धातारः संयमश्रियः ॥ आसंश्चतुर्युता-
शीति–र्गणा गणधरा विभोः ॥ ५३ ॥ तावंत एव साधूनां । सहस्राः साधुबुद्धयः ॥ लक्षा-
स्तिस्रश्च साध्वीनां । ब्रह्माणांतर्द्विषां तथा ॥ ५४ ॥ रम्यसम्यक्त्वसाराणां । द्वादशव्रतधारि-
णां ॥ तिस्रो लक्षाः श्रावकाणां । सहस्रैः पंचभिर्युताः ॥ ५५ ॥ पंचलक्षा बद्धलक्षाः । सततं
शुभकर्मसु ॥ चतुःपंचशता युक्ताः । सहस्रैः श्राविका विभोः ॥ ५६ ॥ चतुर्दशपूर्वविदा—म-

विसंवादिवादिनां ॥ चत्वार्येव सहस्राणि । सार्धसप्तशतानि च ॥ ५७ ॥ सहस्राणि विभोरास—न्नवधिज्ञानिनां नव ॥ सहस्रा विंशतिश्चैव । केवलज्ञानशालिनां ॥ ५८ ॥ षट्शतान्यधिका आसन् । सहस्रास्तस्य विंशतिः ॥ जातवैक्रियलब्धीनां । तपःसिध्ध्यानगारिणां ॥ ॥ ५९ ॥ द्वादशैव सहस्राणि । सार्धानि च शतानि षट् ॥ तेषां मानसपर्याय—वेदिनां वादिनामपि ॥ ६० ॥ द्वाविंशतिसहस्राणि । तथा नव शतानि च ॥ बभूवुः स्वामिनः शिष्या । अनुत्तरविमानगाः ॥ ६१ ॥ भेजुः स्वातिजलानीव । मुक्तावस्थां मुनीश्वराः ॥ सहस्रा विंशतिस्तस्य । साध्व्यस्तद्द्विगुणाः पुनः ॥ ६२ ॥ स्ववाग्जलैर्नृणां बोधि—बीजं पल्लवयन्निव ॥ आचारित्रादतीयाय । पूर्वलक्षं जिनेश्वरः ॥ ६३ ॥ उच्छ्रितं योजनान्यष्टौ । पुंडरीकमिवोज्ज्वलं ॥ अभितः शोभितं कार—स्करैर्मधुकरैरिव ॥ ६४ ॥ अयत्नसिद्धालोकत्वा—द्भोगिभिर्योगिभिः पुनः ॥ शुक्लध्यानालंबनत्वा—न्मंदिरीकृतकंदरं ॥ ६५ ॥ अथारोहदसावष्टा—पदमष्टापदद्युतिः ॥ लोकांतवासिनीं मुक्ति—रामामभिसरन्निव ॥ ६६ ॥ त्रिभिर्विशेषकं ॥ निर्वाणसमये तत्र । तपश्चक्रे चतुर्दशं ॥ स्वामी सिद्धिवधूयोगे । विघ्नौघमिव रक्षितुं ॥ ६७ ॥ निशम्य तातनिर्वा-

ण-समयं शैलपालकात् ॥ वज्राहत इव प्राप । मूर्छनां भरतः क्षणं ॥ ६८ ॥ कथंचिल्लब्धचैतन्य—श्चांह्रिचारेण निर्ययौ ॥ शोकाद्विस्मृतसाम्राज्य-संपत्तिः पत्तिवत्पुरः ॥ ६९ ॥ नोपवाह्यं गजं छत्र—धरं चामरधारिणीः ॥ प्रतीक्षतेस्म वेगेन । पवनं स्वं जयन्नृपः ॥ ७० ॥ चलताश्रुजलैस्तेन । यः पंकः पथि निर्ममे ॥ अशोषि सैष तत्कालं । तन्निःश्वासोष्णवायुभिः ॥ ॥ ७१ ॥ मृदुपादक्षरद्रक्त-सिक्तकर्कशभूतलः ॥ अज्ञातमार्गखेदोऽसा—वारुरोह गिरीश्वरं ॥ ७२ ॥ प्रदीपमिव निर्वाण—क्षणेऽप्यक्षीणतेजसं ॥ अवैक्षत स पर्यका-सनस्थं परमेश्वरं ॥ ॥ ७३ ॥ तं प्रणम्य तदीयांह्रि-तलविन्यस्तमस्तकः ॥ भावितद्विरहध्यान-ध्वस्तधैर्योऽन्यधत्त सः ॥ ७४ ॥ जय त्वं ज्ञानिनां सीम—न्नसीमगुणवैभव ॥ भवत्यागकृतोद्योग । योगसिद्धजिनेश्वर ॥ ७५ ॥ हित्वा जन्मजरामृत्यु-दुःखलक्षोद्भवं भवं ॥ अद्वैतसुखभूसिद्धि-पुरी युक्तं त्वयाप्स्यते ॥ ७६ ॥ तात त्वं यासि लोकाग्रं । मां मुक्त्वा भवसंकटे ॥ याहि यद्यासतारुण्यं । कारुण्यं ते न हीयते ॥ ७७ ॥ अमी सह ग्रहिष्यन्ते । निर्वृतिं व्रजता सुताः ॥ जानामि दुर्विनीतत्वा—त्त्वयाहं दूरतः कृतः ॥ ७८ ॥ तदयुक्तं यतस्तुल्या । मतिः सदसतोः सतां ॥ द-

न्ते मधुरमेवांभो । विषवृक्षेऽपि वारिदः ॥ ७९ ॥ यद्वा नाथ कथं यासि । धृतोऽपि हृदि यन्मया ॥ यदा नयसि मां मुक्तिं । तदा मुंचामि नान्यथा ॥ ७० ॥ इत्युल्लसद्ध्वनिर्मेघ । इव श्याममुखः शुचा ॥ सोऽजीजनज्झिरेर्मूर्ध्नि । नेत्रांभोनिर्झरान्नवान् ॥ ७१ ॥ ज्ञात्वा निर्वाणकल्याण—क्षणमासनकंपतः ॥ तदैव दैवतैः सत्रा । तत्राजग्मुर्बिडौजसः ॥ ७२ ॥ अथास्यामवसर्पिण्यां । तृतीयस्यारकस्य च ॥ एकोननवतौ पक्षे—ष्ववशिष्टेषु केवलं ॥ ७३ ॥ माघकृष्णत्रयोदश्यां । पूर्वाह्णे साभिजिद्विधौ ॥ योगत्रयनिरोधेन । शैलेशीकरणं श्रितः ॥ ७४ ॥ दशभिः शोभितः साधु—सहस्रैर्निर्वृतिं द्रुतं ॥ लघुभूत इवाशेष—कर्मत्यागाज्जगाम सः ॥ ७५ ॥ त्रिभिर्विशेषकं ॥

वृत्तत्र्यस्तचतुरस्रा—श्चंदनैर्निचिताश्चिताः ॥ चक्रुः क्रमात्तदा पूर्व—दक्षिणापरतः सुराः ॥ ॥ ७६ ॥ जिनस्येक्ष्वाकुसाधूनां । शेषाणां च महात्मनां ॥ देहान्यस्नपयन् देवाः । क्षीरोदांभोभिराहृतैः ॥ ७७ ॥ तानि चंदनपुष्पाद्यै—रभ्यर्च्यारोपयन्नमी ॥ शिबिकासु पतद्बाष्प—पूरप्लुतविलोचनाः ॥ ७८ ॥ अर्हदिक्ष्वाकुशेषाणां । शरीराणि विचिक्षिपुः ॥ क्रमात्तिसृषु पूर्वा-

दि—चितासु त्रिदिवौकसः ॥ ८९ ॥ अमुंचंत मुखेनाग्नि—कुमारास्तत्र पावकं ॥ वैक्रियैर्वायुन्निर्वायु—कुमारास्तमदीपयन् ॥ ९० ॥ भारशः सुरभिद्रव्या—एयत्र निक्षिप्य निर्जराः ॥ सौरभ्यमैदिधन्नग्ने—रपि प्रभुवपुस्पृशः ॥ ९१ ॥ तपःशुष्केऽग्निना दग्धे । सुखं तन्मांसशोणिते ॥ आसिंचंत चिताः क्षीरो—दधिनीरेण नाकिना ॥ ९२ ॥ अधस्तां शक्रचमरा—वूर्ध्वध-स्तस्य दक्षिणां ॥ ईशानेंद्रबली वामां । दंष्ट्रामस्थीनि चामराः ॥ ९३ ॥ याचमानास्तदा देवै—र्दत्तकुंडत्रयाग्नयः ॥ श्रावका अभवन् काले । ब्राह्मणा अग्निहोत्रकाः ॥ ९४ ॥ ते तं स्वामिचितावह्निं । गृहे नित्यमपूजयन् ॥ रक्षंतिस्म च निर्वातं । द्विजेष्वद्याप्यसौ विधिः ॥ ९५ ॥ चितास्थानत्रये कृत्वा । रत्नस्तूपत्रयं ययुः ॥ कृत्वा नंदीश्वरेऽष्टाह—महं स्वसद्म वासवाः ॥ ॥ ९६ ॥ सभायां ते सुधर्मायां । वज्रगोलसमुद्गके ॥ न्यस्यार्हद्दंष्ट्रिका नित्यं । मंगलार्थमपूजयन् ॥ ९७ ॥ भरतः प्रभुनिर्वाण—स्थानासन्नं मणीमयं ॥ प्रासादं योजनव्यासं । त्रिगव्यूतोच्चयं व्यधात् ॥ ९८ ॥ स तत्र स्थापयामास । चतुर्विंशतिमर्हतां ॥ स्वस्वप्रमाणवर्णांक—शालिनी प्रतिमाः क्रमात् ॥ ९९ ॥ तत्रैव कारयामास । दिव्यरत्नशिलामयीः ॥ भ्रातॄणां नवनव-

तेः । प्रतिमा भरतेश्वरः ॥ १४०० ॥ चैत्याद्बहिर्भगवतः । स्तूपमेकमकारयत् ॥ भ्रातॄणां शतमेकोनं । स्तूपांश्च स हिरण्मयान् ॥ १ ॥ चक्री तातं विना विश्वं । पश्यन् शून्यमिवाखिलं ॥ कथंचित्सचिवैर्निन्ये । कुशलैः कोशलां पुरीं ॥ २ ॥ सभायां विजने सौधे । कानने दिवसे निशि ॥ स्वामिनो नाम तच्चित्ता—न्नोत्ततार विलग्नवत् ॥ ३ ॥ प्रलपन्नाथ नाथेति । बध्यमान इवारिभिः ॥ ससंभ्रमं जजागार । निशि निद्रान्तरेऽपि सः ॥ ४ ॥ कुलामात्यैः क्रमाच्छोक—स्तस्य तत्तद्विनोदतः ॥ शरद्दिनैरिवाब्दस्य । कालिमानायि तानवं ॥ ५ ॥ स साधर्मिकवात्सल्य—कृतार्थितधनो धरां ॥ प्रभुमुक्तिदिनात्पंच—पूर्वलक्षा अपालयत् ॥ ६ ॥ अन्यदा विहितस्नानः । सर्वांगं धृतभूषणः ॥ रत्नादर्शगृहं प्राप । भूपः स्वं रूपमीक्षितुं ॥ ७ ॥ भूपस्य पश्यतो रूप—मंगुल्या अंगुलीयकं ॥ भ्रष्टं भवनिवासस्य । निषेधे बिंदुतां ययौ ॥ ८ ॥ अंगुलीं गलितश्रीका—मंतरेणांगुलीयकं ॥ भूमानैक्षिष्ट निर्वाण—दीप्तिदीपदशामिव ॥ ९ ॥ औपाधिक्येव शोभैवं । किमंगेषु परेष्वपि ॥ इति कौतुकतोऽमुंच—त्सर्वांगालंकृतीर्नृपः ॥ १० ॥ तदा घटमिवाकर्णं । निजं निर्मुकुटं शिरः ॥ चंद्रं डुरुधरोत्तीर्ण—मिव वक्त्रमकुंडलं ॥ ११ ॥ निस्तो-

रणमिव द्वारं । कंठं त्यक्तललंतिकं ॥ अगंगौघमिवाद्रींद्र-प्रस्थं वक्षश्च हारमुक् ॥ १२ ॥ अनंगदौ भुजौ लून-फणाहीशानुकारिणौ ॥ निष्कंकणौ प्रकोष्टौ च । भग्नपीठद्रुमोपमौ ॥ १३ ॥ अनंगुलीयकं हस्तं । निस्तारकमिवांबरं ॥ अनितंबं गिरिमिव । कटीतटममेखलं ॥ १४ ॥ एवं समग्रमप्यंगं । भरतो भूषणोज्झितं ॥ फाल्गुने द्रुमिव भ्रष्ट-च्छायं पश्यन्नचिंतयत् ॥१५॥ पंचभिः कुलकं ॥ त्वक्सारेण शरीरेण । कूटहेम्नेव ही कथं ॥ वंचितास्म इयत्कालं । विधिना वयमप्यमी ॥ १६ ॥ दूरदेशांतरानीतै । रत्नस्वर्णादिवस्तुभिः ॥ यालंचिकीर्षा देहस्य । वासेन्ना प्राघुर्णैर्हि सा ॥ १७ ॥ यस्याशुचेः समुत्पादो । यश्चाधारोऽशुचेः स्वयं ॥ तन्वंति शौचसंकल्पं । देहे तत्रापि निस्त्रपाः ॥ १८ ॥ हिंगुश्चेत्सौरभं याया-द्दुर्वैरीभावमूषरं ॥ स्वादुतां लावणं वारि । लवणं घनसारतां ॥ १९ ॥ काकोलः कलहंसत्वं । गोमायुश्च मृगारितां ॥ पिचुमंदश्च चूतत्वं । दृषद्वा जात्यरत्नतां ॥ २० ॥ शेवालमरविंदत्वं । मलं वा गंधधूलितां ॥ तत्संस्कारैरयं कायो । लभेत रमणीयतां ॥ २१ ॥ त्रिभिर्विशेषकं ॥

एवं भावनया दत्त-हस्तालंब इव क्रमात् ॥ उच्चोच्चानि गुणस्थाना-न्यारुरोह महीपतिः

॥ २२ ॥ यस्या वारणके मुद्रा । साक्षिण्यासीन्नृपस्तदा ॥ स्वीचक्रे साक्षिणि ध्याना— नले तां केवलश्रियं ॥ २३ ॥ तदैव देवतादत्त-साधुनेपथ्यधारिणं ॥ स्वर्गादुपेत्य राजर्षिं । देवराजो ननाम तं ॥ २४ ॥ कस्मादस्मानकस्मात्त्वं । त्यजसीत्यंगनाजने ॥ दृष्टो दुर्विनयोऽस्माकं । किं कोऽपीति सुतव्रजे ॥ २५ ॥ त्वं नः किं नाधुनादेशं । ददासीति परिच्छदे ॥ प्राग्वत्पश्यसि किं नास्मा-निति पौरजनेऽपि च ॥ २६ ॥ व्याहरत्येव नीरागो । निरगान्नगरादसौ ॥ व्रतीन्नृ-तैर्दशक्ष्माप—सहस्रैः समलंकृतः ॥ २७ ॥ त्रिभिर्विशेषकं ॥ भरतो भरतक्षेत्रे । विहृत्य व्रत-वासरान् ॥ पूर्वलक्षं ततस्तातो—त्कंठयेव शिवं ययौ ॥ २८ ॥ अस्यासन् पूर्वलक्षाणि । कौमारे सप्तसप्ततिः ॥ साम्राज्ये षट् व्रते चैक—मेतदुक्तं प्रसंगतः ॥ २९ ॥ छायापास्तसमस्तदुस्तरतरप्रत्यूहतीव्रातपः । प्राप्य प्रौढिमिहाज्यसेकसदृशीं श्रीधर्मकल्पद्रुमः ॥ यस्मै देवमनुष्यसौख्यकुसुमान्यार्हत्यलक्ष्मीचिदा—नंदास्वादफलान्यदाद्दिशतु स आदिदेवः श्रियं ॥ ॥ ३० ॥ इति श्रीधर्मप्रशंसाधिकारे श्रीधनसार्थवाहदृष्टांतः समाप्तः. ॥



तार्क्ष्यः पक्षिषु मेरुरद्रिषु वियद्व्यूढे च चक्री नरे-ष्विंद्रः स्वर्गिषु शीतदीधितिरुडुष्वैरावणो हस्तिषु ॥ शीता सिंधुषु हेम धातुषु रविर्भास्वत्सु धाराधरो । जीवानुष्वयमर्हता निगदितो धर्मेषु धर्मो गुरुः ॥ ३१ ॥ स्वपरिषदि निषण्णास्तेऽपि तीर्थांतरीया । नरसुरसुखहेतुं हंत जल्पन्तु धर्मं ॥ शिवसदनकपाटोद्घाटने कुंचिकात्वं । यदि वहति तदानीं जैन एवैष धर्मः ॥ ॥ ३२ ॥ इति श्रीअंचलगच्छाधिराज महेंद्रप्रभसूरिशिष्याचार्यवर्यश्रीजयशेखरसूरिविरचितायां स्वोपज्ञोपदेशचिंतामणिटीकायां प्रथमो श्रीजिनधर्मप्रशंसाधिकारः समाप्तः ॥ श्रीरस्तु. ॥

समाप्तोऽयं ग्रंथो गुरुश्रीमच्चारित्रविजयसुप्रसादात्.

---

आ ग्रंथ श्रीजामनगरनिवासी पंडित श्रावक हीरालाल हंसराजे स्वपरना श्रेयमाटे पोताना श्रीजैनभास्करोदय छापखानामां छापी प्रसिद्ध कर्यो छे.

॥ इति श्रीउपदेशचिंतामणेः प्रथमो भागः समाप्तः ॥

॥ श्रीजिनाय नमः ॥

# ॥ श्रीउपदेशाचिंतामणिः सटीकः ॥ भाग १ ॥

( कर्ता—श्रीजयशेखरसूरिः )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज. ( जामनगरवाळा )

वीरसंवत्—२४४५. विक्रमसंवत्—१९७५. सने—१९१९.

किं रु. ४-०-०

श्रीजैनभास्करोदय प्रिन्टिंग प्रेस. जामनगर.

॥ श्रीजिनाय नमः ॥

॥ श्रीचारित्रविजयगुरुभ्यो नमः ॥

## ॥ अथ श्रीउपदेशचिंतामणिः सटीकः प्रारभ्यते ॥

( कर्ता—श्रीजयशेखरसूरिः )

( द्वितीयोऽधिकारः )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज. ( जामनगरवाळा )

अस्याधिकारस्य पूर्वेण सह संबंधं प्रकरणकारः स्वयमेवाह—

॥ मूलम् ॥—जिणधम्मं जीवा न हु । लहंति सामग्गीबाहिरा सव्वे ॥ माणुस्सखित्त-कुलगुरु—सद्धाविरियाइया सा य ॥ १ ॥ व्याख्या—हुरेवकारार्थः, सर्वे जीवा भव्या अभव्याश्च सामग्रीबाह्याः संतो नैव जिनधर्मं पूर्वाधिकारोपवर्णितस्वरूपं लभंते, सामग्रीसद्भावे तु लभंते, तस्मादत्राधिकारे सामग्रीवक्तव्येति भावः. नन्वभव्याः सामग्रीसद्भावेऽपि जिनधर्मं न

लभ्यंते इति प्रतीतं प्रावचनिकानां, ततः किमेवमुच्यते नैवं, श्रद्धारहितत्वेनाभव्यानां सदापि सामग्रीबाह्यत्वात्. अथ सामग्रीमेव नामग्राहमाह—'माणुस्सेत्यादि' सा च सामग्री मानुष्यक्षेत्रकुलगुरुश्रद्धावीर्यादिका भवति. तत्र मानुष्यं मनुष्यभवः, क्षेत्रमार्यभूमिः, कुलमार्हतं, गुरुर्धर्मोपदेष्टा, श्रद्धा धर्मस्य परिणतिः, वीर्यं धर्मकृत्येष्वनालस्यं, आदिशब्दाद्रूपारोग्यायुःपरिग्रहः, इयं च सर्वापि समुदिता सम्यग्बोधिनिबंधनं. अत एव निधिरिव दुर्गतानां, पोत इव जलधिपतितानां, सुधारस इव तृष्णातरलितानां, ससार्थ इव मार्गच्युतानां, दीप इव तमोविप्लुतानां दुर्लभा सेयं कर्मवशानां प्राणिनां. ॥ १ ॥ तत्र प्रथमं मानुष्यं दुर्लभमाह—

॥ मूलम् ॥—दुलहं खलु माणुस्सं । सव्वुत्तमलाभमूलनीविसमं ॥ लंभे जस्स विसिट्ठा । दस दिठ्ठंता लए दिट्ठा ॥ २ ॥ व्याख्या—खलु निश्चितं प्रथमं प्राणिनां मानुष्यं मनुष्यत्वं दुर्लभं दुःप्रापं, कथंभूतं? सर्वेषामुत्तमलाभानामिह भवे सम्यग्ज्ञानादीनां प्रेत्य स्वर्गापवर्गादीनां च मूलनीविसमं मूलद्रव्यकल्पं, यथाहि—मूलनीव्या चौरादिभिरनुपहतया कश्चिद्भा-

ग्यवान् विशिष्टलाभं लभते, तथा मानुष्येन प्रमादादिभिरनुपहतेन भव्या अपि यथोक्तलाभमिति. उक्तं च—जहा य तिन्नि वणिया । मूलं घेत्तूण निग्गया ॥ एगोत्थ लहए लाभं । एगो मूलेण आगओ ॥ १ ॥ एगो मूलंपि हारित्ता । आगओ तत्थ वाणिओ ॥ ववहारे उवमा एसा । एवं धम्मे वियाणह ॥ २ ॥ माणुसत्तं भवे मूलं । लाभो देवगई भवे ॥ मूलच्छेएण जीवाणं । नरगतिरिक्खत्तणं धुवं ॥ ३ ॥ अथ मानुष्यस्य दुर्लभतयां दृष्टांतानाह—लंभे जस्सेत्युत्तरार्धं स्पष्टं, दृष्टांतसंग्रहश्चैवं—विप्राशनं पाशकमन्नराशिं । द्यूतं मणिं स्वप्नशशांकपानं ॥ चक्रं च कूर्मं च युगं पराणुं । दृष्टांतमाहुर्मनुजत्वलाभे ॥ १ ॥ तत्र विप्राशनदृष्टांतः पूर्वं प्रतिपाद्यते—

कांपिल्यपत्तने ब्रह्म—दत्तोऽजनि नरेश्वरः ॥ चुलनीकुक्षिनलिनी—हंसो ब्रह्मनृपांगजः ॥ ॥ १ ॥ यो दीर्घदर्शिनं दीर्घं । दीर्घनिद्रामलंघयत् ॥ स्फुरत्खड्गलताछाये । श्रांतं समरकानने ॥ २ ॥ संजाते चक्रवर्तित्वा—भिषेके द्वादशाब्दिके ॥ फलानीव तपःकल्प—तरोः सौख्यान्यभुक्त यः ॥ ३ ॥ बहुदुःखसहायोऽभू—द्भ्राम्यतस्तस्य भूतले ॥ द्विजः कोऽपि पुरा दुःस्थो ।

दारिद्र्यस्येव सेवधिः ॥ ४ ॥ स श्रुत्वा चक्रिणं ब्रह्म-दत्तं वित्ताभिलाषुकः ॥ कांपिल्यमाययौ
पांथ । इव नीराशया सरः ॥ ॥ ५ ॥ सिंहद्वारं विशन् विप्र—श्चक्रिणोऽवारि वेत्रिणा ॥ क्व
प्रस्थितोऽसि रे धृष्ट । तिष्ट तिष्टेति जल्पता ॥ ६ ॥ मम च ब्रह्मदत्तस्य । चास्ति प्रीतिश्चिरं-
तनी ॥ तमेकदा दिदृक्षोऽह-मित्युक्ते तेन सोऽवदत् ॥ ७ ॥ निष्ठिता नाकिनाथाः किं । की-
णा वा खेचरेश्वराः ॥ नरेंद्रवृंदवंद्यांह्रि-र्यत्त्वां मित्रीयतिस्म सः ॥ ८ ॥ श्वानेनेवाभ्रजूर्जंतु-
र्भिल्लेनेव दिवस्पतेः ॥ तस्य षट्खंडभूपस्य । का मैत्री दुःस्थ रे त्वया ॥ ए ॥ पश्यन्नपि नृपा-
नेता-नप्राप्तावसरानिह ॥ क्षुधाकरंक रे रंक । विविक्षति कथं भवान् ॥ १० ॥ एवं निवा-
रितस्तेन । विप्रः क्षिप्रमपासरत् ॥ सिसाधयिषुरर्थं स्वं । बुद्ध्या द्यूतापणे गतः ॥ ११ ॥ तत्र
द्यूतकृतः कूट-बुद्धीनामाकरानिव ॥ उपाचरत्ययं पाना-शनदानादिना द्विजः ॥ १२ ॥ भूमि-
शायिषु कोपीन-वस्त्रेषु विरसाशिषु ॥ परद्रव्यैकतानेषु । त्वं किमस्मासु लिप्ससे ॥ १३ ॥ तै-
रित्युक्तो द्विजोऽवादी-त्सौम्यास्तां दत्त मे मतिः ॥ प्राग्बद्धसौहृदश्चक्री । यथा संगच्छते मम
॥ १४ ॥ न मे वित्तं न मे मित्रं । न मे वस्त्रादिगंबरः ॥ किं तु मत्यैव युष्माक-महं द्रष्टा-

मि चक्रिणं ॥ १५ ॥ तेऽपि तं शिक्षयंतिस्म । ध्वजं द्विज पटच्चरैः ॥ विधायोत्तंभयेरुच्चै–रेवं
द्रष्टासि भूपतिं ॥ १६ ॥ सोऽथ संगृह्य सकला–न्युपानद्रूपवाससां ॥ रजोमहमहीनाथ । इव
चक्रे नवं ध्वजं ॥ १७ ॥ राजपाटिकया प्रात–र्यदा चक्री विनिर्ययौ ॥ निजं ध्वजं समुत्तभ्य।
। तदोच्चस्तस्थिवान् द्विजः ॥ १८ ॥ सेवायातनृपव्रात–ध्वजेष्वभ्रलिहेष्वपि ॥ चक्रिणो दृग्
विशश्राम । तस्मिन्नेव नवे ध्वजे ॥ १९ ॥ कः केन वा कुतो हेतोः । केतुरस्त्ययमुच्छ्रितः ॥ इ-
त्युक्त्वा भूभुजा भृत्या । द्विजंप्रति दधाविरे ॥ २० ॥ ध्वजोत्तंभनहेतुं तै–रनुयुक्तो द्विजो ज-
गौ ॥ निदध्यासामि चक्रेशं । पूर्वमित्रं धियानया ॥ २१ ॥ त्यक्त्वा गृहगृहापुत्रा–नागां यस्मै
बभूव सः ॥ चक्री चक्रवतो द्राक्षा–गुच्छवद् दुर्लभो मम ॥ २२ ॥ श्रुत्वेति चक्रिणः सर्वं ।
ते तदुक्तं न्यवेदयन् ॥ चिरोपकारिणं धैर्या–धारः सस्मार सोऽपि तं ॥ २३ ॥ मास्म वेलावि-
लंबोऽभू–त्तमानयंत सत्वरं ॥ इति भर्तुर्गिरा भृत्या—स्तं द्विजन्मानमाह्वयन् ॥ २४ ॥ तं मू-
र्तमिव दारिद्र्यं । समुत्सृज्य ध्वजं द्विजः ॥ दधावे विस्मयस्मेरै–र्दत्तवर्त्मा नरेश्वरैः ॥ २५ ॥
चक्री कांचनभूषारुक्—पिंजरस्त्यक्तकुंजरः ॥ उत्पाटित इव प्रेम्णा । तमागच्छंतमभ्यगात् ॥

॥ २६ ॥ नमतो नेत्ररोगीव । यो नः कथमपीक्षते ॥ सोऽमुं दरिद्रमन्येति । प्रीत्या कस्येद-
मुच्यते ॥ २७ ॥ विज्ञापितोऽपि योऽस्माभि—र्जल्पत्यल्पं गलात्तवत् ॥ सोऽमुं विवक्षति स्वैरं
॥ स्वामित्वं ह्यसमंजसं ॥ २८ ॥ इति ध्यायत्सु भूपेषु । चक्री दत्ताशिषं द्विजं ॥ दृढमालिंग्य
चारोप्य । गजेंद्रमिदमालपत् ॥ २९ ॥ उपकारास्त्वया कृता । आपद्यापन्नवत्सल ॥ ऋणं मम
न मुंचंति । चेतो न्यासीकृता इव ॥ ३० ॥ अमी गजा अमी अश्वा । अमी कोशा अमूः
श्रियः ॥ एषु स्वेप्सितमादाय । तेभ्यो ममानृणीकुरु ॥ ३१ ॥ स प्रोचे तनुतृष्णस्तं । प्राक्
स्वसद्मनि भोजनं ॥ अदीनारं भदीनारं । दक्षिणायां च देहि मे ॥ ३२ ॥ ततो भरतसीमांतं
। सर्वसद्मसु दापय ॥ दक्षिणायुक्तमेकैकं । भोजनं भो जनेश्वर ॥ ३३ ॥ भुक्त्वा सर्वत्र या-
चिष्ये । भूयस्त्वामेव भोजनं ॥ स्वामिन्नेवं त्वत्प्रसादा—दीषदाढ्यं भवं मया ॥ ३४ ॥ आः किं
याचितवानेष । मयि तुष्टे नरेश्वरे ॥ यद्वांभः कियदादत्ते । वार्धौ क्षिप्तोऽप्युदंचकः ॥ ३५ ॥
श्वानस्तुष्टेऽपि देवेंद्रे । शश्वद्भांतं समीहते ॥ स्वचंचुपुटपूर्तिं च । शालेये फलिते द्विजः ॥३६॥
दृढं याचति भिक्षाको । भिक्षापात्रं सुरद्रुमं ॥ यांचापि प्रायसः पुंसां । प्रतिष्ठामनुवर्तंते ॥

॥ ३७ ॥ अदातुं वा प्रदातुं वा । भवेन्न प्रभुरप्रभुः ॥ सरसां सूर एवेष्टे । शोषणे पोषणेऽपि वा ॥ ३८ ॥ ध्यात्वेति भूभुजाऽभोजि । विप्रः स प्राक्सदक्षिणं ॥ अंतःपुरीसहस्रैश्च । चतुःषष्ट्या ततः परं ॥ ३९ ॥ ततो द्वात्रिंशता राज—सहस्रैः क्षत्रियैस्ततः ॥ इभ्यैः प्रकृतिभिर्दुर्ग—ग्रामादिषु ततः क्रमात् ॥ ४० ॥ सोऽयं द्विजो भारतमंदिरेषु । सर्वेषु भुक्त्वा भरताधिपस्य । भुंजीत भूयो भवने कदापि । भजेद् धर्मा न पुनर्नृजन्म ॥४१॥ इति. अथ पाशक दृष्टांतः—अस्त्यत्र भरतक्षेत्रे । गोल्लदेशो मनोहरः ॥ तत्राभूच्चणकग्राम—वासी चणिरिति द्विजः ॥१॥ स चतुर्दशविद्याब्धि—पारदृश्वा शुभाशयः ॥ अर्हद्धर्मे दधौ स्थैर्यं । सांद्रद्रुम इव द्विजः ॥ २ ॥ अन्यदा पुण्यदानेन । प्रीणयंतो जगज्जनं ॥ ईयुर्ज्ञानक्रियासत्रं । तत्र सागरसूरयः ॥ ३ ॥ स्वगृहाधित्यकायां तान् । विप्रः शांताननतिष्ठिपत् ॥ अभिरामपरिणामः । प्राणिनो निर्वृताविव ॥ ४ ॥ नाम्ना चणेश्वरी तस्य । कांतासूत सुतं तदा ॥ प्ररूढदाढमाजन्म । विंध्यभूरिव सिंधुरं ॥ ५ ॥ कृतचाणिक्यनामानं । तनयं दशमे दिने ॥ वंदयित्वा गुरून् दाढा—वृत्तांतमभणच्च तं ॥ ६ ॥ बालोऽयं भूपतिर्भावी—त्युक्ते श्रीगुरुणा चणिः ॥

संतोषसेवधिर्गत्वा । गृहांतश्चेत्यचिंतयत् ॥ ७ ॥ राज्यमुग्रनरकार्तिकारणं । राज्यमग्न्यशमसौ-
ख्यदारणं ॥ राज्यमाज्यमिव हि प्रमेहिनां । देहिनां परिणतौ न सुंदरं ॥ ८ ॥ जघर्ष सोऽ-
थ तद्दाढा । बालकुंचिकया रयात् ॥ अबोध्यत च तद् वृत्तं । चणिना गणनायकः ॥ ९ ॥
गुरुः प्रोचे महाजाग । किं बालोऽयं कदर्थितः ॥ जाव्यं यद्यस्य तत्तस्य । नवत्येव न संशयः
॥ १० ॥ त्वया यद्यप्यघृष्यंत । दाढा बालस्तथाप्यसौ ॥ बिंबेनांतरितो जोक्ता । राज्यं
प्राज्यपराक्रमः ॥ ११ ॥ पित्रा पवर्धमानोऽसौ । पाठितः सकलाः कलाः ॥ अनुरूपां
द्विजकन्यां । यौवने पर्यणाय्यत ॥ १२ ॥ काले ताते दिवं याते । द्रव्यजाते गतस्पृहः ॥ अ-
पालयत् पितुः कोश-मिव संतोषमेव सः ॥ १३ ॥ अन्यदा बंधुविवाहे । महोत्साहेन वत्स्यं-
ति ॥ पितुर्गेहमतिस्नेहा—द्ययौ चाणिक्यगेहिनी ॥ १४ ॥ अन्या अप्याययुस्तस्याः । स्वसा-
रः सारवैजवाः ॥ सख्यादिसहिता राज—महिष्य इव लीलया ॥ १५ ॥ ता ऊढा धनप्रौ-
ढै-रित्यतिव्याकुलैरपि ॥ मातापित्रादिजिर्गेह-मानीयंत सगौरवं ॥ १६ ॥ अज्यंगोद्वर्तनस्ना-
न—विलेपनविजूषणैः ॥ संमान्यंतेस्म ता देव्य । इव सर्वैः ससंभ्रमं ॥ १७ ॥ चाणिक्यपत्नी

निःस्वेति । तैर्दासीव दिवानिशं ॥ अकारि कर्म मध्याह्ने । यद्वा तद्वाप्यजोजि च ॥ १८ ॥ कल्पवल्लीषु कर्कंधु—मरालीष्विव वायसी ॥ घनश्रीकासु निःश्रीका । ददृशे सोदरीषु सा ॥ १९ ॥ पितुस्ता दिव्यवस्त्राणि । विवाहादनुलेभिरे ॥ लेभे चाणिक्यपत्नी तु । वराशिमपि कष्टतः ॥ २० ॥ बंधुभिः सह भूत्वा ताः । प्राप्यंत श्वशुरालयं ॥ दीना केनापि सार्द्धं न । प्राहीयत चणिस्नुषा ॥ २१ ॥ द्रव्यप्राणपरित्यागे । सा प्राप्ता पितृमंदिरं ॥ युक्तं दुःखाग्निना दाहे । ववले यत्तदद्भुतं ॥ २२ ॥ पितृधिक्कारदावोष्म— तप्ता बाष्पायतेस्म सा ॥ ईला मिलितमेघांबु-रिव संजग्मुषी प्रियं ॥ २३ ॥ अस्थानव्रणवद्वक्तु-मशक्ता पितृहीलनं ॥ भर्त्रा निबंधतः पृष्टा । कथंचन जगाद सा ॥ २४ ॥ ततो दध्यौ स चाणिक्यो । माणिक्योज्ज्वलबुद्धिभूः ॥ लोके श्रीरेव गौरव्या । न कुलं न कला अपि ॥ २५ ॥ आस्तां यदखिलश्रीमा— न्नरः स्याज्जगतः प्रियः ॥ काष्ठं श्रीखंडनामापि । पश्य कस्य न वल्लभं ॥ २६ ॥ साक्षरोऽपि सुवृत्तोऽपि । रूपवानपि रूपकः ॥ न विभाति यथा द्रव्य—हीनस्तद्वत्पुमानपि ॥ २७ ॥ पंक्तिलो जलनाथोऽपि । क्षारः कुमाहभूरपि ॥ कैः सादरैर्न सेव्येत । श्रीतात इति सागरः ॥

॥ २८ ॥ शाब्दोक्त्या मुखरः शमेन विधुरः स्थाम्ना पतंगोपमः । वाक्स्थैर्येण कदाग्रही रुजु-
तया मूर्खो धिया धूर्तकः ॥ संतुष्ट्याप्यलसो भ्रमीव कलयाप्येवं यया वर्जितो । दूष्येताग्र्य-
गुणोऽपि हंत मनुजस्तस्यै नमोऽस्तु श्रियै ॥ २९ ॥ श्रीर्द्विजैर्याचया लभ्या । योग्या याचापि
मे नृपे ॥ पर्जन्यवर्जमन्येभ्यो । नाम्भो याचेत चातकः ॥ ३० ॥ तद्याचे पाटलीपुत्र—स्वामि-
नं नंदभूपतिं ॥ वैवर्ण्यं याचकास्येषु । सुवर्णैः परिमार्ष्टि यः ॥ ३१ ॥ ध्यात्वेति सोऽगमद्वोत्र
—सहायः पाटलीपुरं ॥ मनोरथरथारोह—ध्वस्तवैहारिकक्रमः ॥ ३२ ॥ सोऽविशन्मंदिरं प्रात
र्नांदमानंदमेदुरः ॥ दैवाद्दौवारिकेणापि । न वायुरिव वारितः ॥ ३३ ॥ सिंहासनेषु नांदेषु ।
नवसु क्रमवर्तिषु ॥ आद्यं सिंहासनं सिंह—शक्तिरध्यास्त तत्र सः ॥ ३४ ॥ परिमार्ष्टुं सभां
प्रात—रायाता राजकिंकरी ॥ मूलसिंहासनासीनं । द्विजं वीक्ष्य दधौ रुषं ॥ ३५ ॥ ऊचे च
रे द्विज द्वेधा । दधानो दीर्घसूत्रतां ॥ सिंहासनेऽत्र भूजंतु—रपि पूज्यो निषीदसे ॥ ३६ ॥
तवासनेऽत्र नैकस्य । स्वर्णाबुज इव स्थितिः ॥ न युक्तेति तया प्रोक्त—स्तत्र दंडं न्यधत्त सः
॥ ३७ ॥ भेजे सिंहासनं चान्य—त्ततोऽप्युत्थापितस्तया ॥ मुक्त्वा कमंडलुं तत्र । तत्तृतीयं स

शिश्रिये ॥ ३८ ॥ पुनस्तथोत्थाप्यमानो—ऽरौत्सीत्सर्वासनानि सः ॥ पादूपवीतवैकक्षा—क्षमा-
लाबुत्रकैरपि ॥ ३९ ॥ राज्याधिष्ठातृदेवेना—क्रांते सिंहासनेऽतिमे ॥ नंदः पुरोधसा सत्रा ।
तत्रायासीन्नरेश्वरः ॥ ४० ॥ कोऽपि राज्ञा सहायातः । सिद्धपुत्रोऽवदत्तदा ॥ अहो आक्रम्य
नंदस्य । राज्यमेष द्विजः स्थितः ॥ ४१ ॥ याहि याहीति जल्पंत्या । स्वामिदृग्बलदीप्तया ॥
आशु निर्वासितो दास्या । स लेष्टुरिव संसदः ॥ ४२ ॥ यज्ञसूत्रं रुषास्फोट्य । गुंजापुंजायि-
तेक्षणः ॥ परिस्पृश्य जलं विप्रः । प्रत्यज्ञासीदिदं तदा ॥ ४३ ॥ अतिकठिनमनघोत्तुंगमूर्धा-
नमुच्चैः । पटुकपटमुदंचत्खड्गमुत्तालसालं ॥ अहमनुपहतौजा मंक्षु कल्पांतकाला—निल इव
धरणींद्रं नंदमुत्पाटयामि ॥ ४४ ॥ अपनेया मया पूर्ण—प्रतिज्ञेनेयमित्यसौ ॥ बबंध मस्तके
गाढ—गर्वग्रंथिसखीं शिखां ॥ ४५ ॥ यत्किंचिदुक्ति ही क्रोधा—वेशादेष द्विजब्रुवः ॥ त-
त्किं प्रत्युच्यतेऽस्येति । क्षितीशस्तमुपैक्षत ॥ ४६ ॥ भूतिस्थाने पराभूतिं । प्राप्तो भूपतिस-
द्मनि ॥ निर्गतो नगरादाशु । सोऽभिमानीति दध्यिवान् ॥ ४७ ॥ अशक्तिना प्रतिज्ञातं । म-
या राजलिकेन यत् ॥ तत्समारोढुमारेभे । पंगुनामरभूधरः ॥ ४८ ॥ प्रतिज्ञा क्रियते न प्रा-

क् । कृता चेत्तर्हि पूर्यते ॥ अपूरितप्रतिज्ञस्य । जीवितान्मृत्युरुत्तमः ॥ ४९ ॥ एवं चिंतयत-
स्तस्य । तत्स्मृतं यत्पितुः पुरः ॥ बिंबांतरितराजत्व-मस्यादिश्यत सूरिभिः ॥ ५० ॥ परिव्रा-
जकवेषेण । बिंबं । लब्धुं भ्रमंस्ततः ॥ मयूरपोषकग्रामं । सोऽगमन्नांदमन्यदा ॥ ५१ ॥ संप्रा-
प्तस्तत्र भिक्षार्थं । ग्रामाध्यक्षस्य सद्म सः ॥ अद्राक्षीदखिलदुःख—विच्छायवदनं जनं ॥५२॥
संभावितप्रभावं तं । नत्वा ग्रामाग्रणीर्जगौ ॥ किं किं कल्याण वेत्सीति । गौरगौरवया गिरा
॥ ५३ ॥ न सा कला न सा विद्या । यां न जानात्ययं जनः ॥ एवं ग्रामाधिपस्याग्रे । गर्ज-
न्निव जगाद सः ॥ ५४ ॥ स प्रोचे भगवन् सर्वं । संभाव्यं त्वयि तच्छृणु ॥ सेयं मे दुहिता
गुर्वी । शर्वरीशं पिपासते ॥ ५५ ॥ येन केनाप्युपायेना—मुष्याः पूरय दोहदं ॥ म्रियिष्यतेऽ-
न्यथा बाला । त्रुटत्तैलेव दीपिका ॥ ५६ ॥ दोहदेनैव तज्जन्म । राज्यार्हमवबुध्य सः ॥ प्रम-
दोत्पन्नरोमांचः । प्रोवाच चणिनंदनः ॥ ५७ ॥ दत्से चेज्जन्मैतन्मे । दोहदं पूरयामि तत् ॥
॥ प्रायः प्रयाससाध्येऽर्थे । न बुधानां मुधादरः ॥ ५८ ॥ जनयिष्यति जीवंती । बाला बाला-
न् बहूनपि ॥ इयं फलानि वल्लीवे—त्यंगीचक्रे स तद्वचः ॥ ५९ ॥ ततो ग्रामीणलोकेषु । सा-

क्षीभूतेषु तव सः ॥ गंभीरं कारयामास । पटुधीः पटमंरूपं ॥ ६० ॥ तस्योर्ध्वं रंध्रमेणाक—प्रमाणेन च निर्मितं ॥ सोऽवस्थाप्य निशि ज्योत्स्ना । तत्र बालामसूषुपत् ॥ ६१ ॥ निशीथे तत्पुरो मुक्ते । शर्कराक्षीरपूरिते ॥ सुधाकुंभ इव स्थाले । संचक्राम निशामणिः ॥ ६२ ॥ सुधात्भानुरिहानीतो । मंत्रैः पुत्र्येष पीयतां ॥ श्रुत्वेति तद्वचोऽपक—निद्रया सहसोत्थिता ॥ ॥ ६३ ॥ ततस्तस्यां विधुधिया । धयंत्यां ससितं पयः ॥ रंध्रं पिधापयामास । चणिसूनुः शनैः शनैः ॥ ६४ ॥ पूर्णायुर्भविता गर्भो । न वेति ज्ञातुमन्यधात् ॥ चाणिक्यस्तामियानिंदुः । प्रजार्थे पुत्रि मुच्यतां ॥ ६५ ॥ सतृष्णा नेति जल्पंती । सा चंद्रं सकलं पपौ ॥ स्वमुखद्विषमात्तं हि । किं त्यजत्यर्धचर्वितं ॥ ६६ ॥ रंध्रेऽथ पिहिते सूची—भेद्ये तमसि विस्तृते ॥ विधुं विना जनं वीक्ष्य । विधुरं निजगाद सः ॥६७॥ मया प्रजार्थमुत्पाद्यो । नव्य एवाथ चंद्रमाः ॥ एवं बुद्ध्वा राजबिंबं । समासूत्र्य चचाल सः ॥ ६८ ॥ नार्थं विनार्थसिद्धिः स्या—दित्यसौ धातुवादवित् ॥ संचिकाय गतो धातु—विवराणि घनं धनं ॥ ६९ ॥ निरीक्षितुं निजन्यास—माजगाम निशामुखे ॥ गोधने विशति ग्रामं । तमेव स कदाचन ॥ ७० ॥ ददर्श तत्र तं बा-

ल-मुक्ताफलद्युतिमंफलं ॥ रेणुसिंहासनासीनं । खेलंतं राजखेलनैः ॥ ७१ ॥ परीतं परितो बा-
लैः । सामंतादिपदे स्थितैः ॥ निग्रहानुग्रहव्यग्र-मन्यायन्यायचारिषु ॥ ७२ ॥ युग्मं ॥ कल्प-
द्रुमायमाणं तं । याचकेषु यशस्विनं ॥ किंचिन्मह्यं प्रदेहीति । चाणिक्योऽप्ययाचत ॥ ७३ ॥
स्थूललक्षः शिशुस्तस्मै । सकलं गोकुलं ददौ ॥ सोऽप्यवादीदिदं गृह्ण—न्मार्यै गोधनिकैर्न
किं ॥७४॥ हसन् बालो जगौ हीन-सत्त्व मा भैर्गृहाण गोः ॥ को व्यर्थयति मद्दत्तं । वीरभो-
ज्या वसुंधरा ॥ ७५ ॥ वयोऽनुमानशौर्याभ्या—मुपलक्षयतापि तं ॥ कोऽयमित्यर्भकः कोऽपि
पृष्टस्तेनेत्यभाषत ॥ ७६ ॥ चंद्रगुप्ताख्यया ग्राम—स्वामिनो दुहितुः सुतः ॥ अभौ गर्भगतोऽ-
प्येष सर्वैर्दत्तोऽस्ति लिंगिनः ॥ ७७ ॥ प्राप्तराज्य इव प्रीतो । चाणिक्यस्तं ततो जगौ ॥ एहि
वत्स यथा कुर्वे । त्वामूर्वीशं यथातथं ॥ ७८ ॥ विश्वविश्वंभराभार-वहनोदात्तदोर्युगः ॥ अ-
भस्तं निर्भयं भेजे । क्व भयं किल तादृशां ॥ ७९ ॥ भ्रमन् वसुमतीं तेन । समं प्राग्मेलितैर्ध-
नैः ॥ अचिरेण चमूं चिक्रये । चाणिक्यश्चतुरंगिकां ॥ ८० ॥ चंद्रगुप्तं नृपं कृत्वा । स स्वेना-
हत्य मंक्षितां ॥ रुरोध नगरं नांदं । सेतुर्वारीव सारसं ॥ ८१ ॥ नंदः सर्वाभिसारेण । नगरा-

न्निरगान्निजात् ॥ प्रावर्तत मिथो युद्धं । सैन्ययोरुभयोरपि ॥ ८२ ॥ नंदस्य सुनटैरंशो-रिवांशुन्निरन्निद्रुता ॥ कलेव चांद्री ध्वजिनी । जनस्यादृश्यतां ययौ ॥ ८३ ॥ आरूढौ चंद्र-चाणिक्या-वेकमश्वं पलायितौ ॥ न हि तौ स्वहितौ वैरि-बलाब्धावुपलायितौ ॥ ८४ ॥ पृ-ष्ठानुपातिनं नंद—सादिनं वीक्ष्य कंचन ॥ तौ तुरंगमपि स्वाम्य—संपत्पिशुनमौज्झतां ॥ ॥ ८५ ॥ पुरः सरस्तटे कंचि-द्रजकं चणिन्नूर्जगौ ॥ रे नश्य पश्य चंद्रेण । लोड्यते नंदपत्तनं ॥ ८६ ॥ श्येनैरिव निगृह्यंते । चंद्रगुप्तस्य सैनिकैः ॥ न्रांत्वा न्रांत्वान्नितो नंद—वर्गीणाश्चट-का इव ॥ ८७ ॥ उड्डीनात्मेव वासांसि । तत्याज रजकस्ततः ॥ मेने दे.नोपसंख्यान-मपि न्ना-राय नश्यता ॥ ८८ ॥ विशालनलिनीजाल—गुपिले सरसो जले ॥ चाणिक्योक्त्या चटुलदृक् । चंद्रगुप्तो न्यलीयत ॥ ८९ ॥ उत्ताले स्मेरनलिने । निलीनो नलिनीवने ॥ अन्वन्नूह्नाविन्नूपो-ऽसौ । सदंरूब्रत्रसंपदं ॥ ९० ॥ तं चंद्रमपि पद्मिन्यो । ररक्षुरतिथिं नवं ॥ गुणवत्यो हि नौ-चित्या—च्यवतेऽरिजनेऽपि ताः ॥ ९१॥ स्वयं तु रजकीन्नूय । मंत्री वासांसि धौतवान् ॥ न्ना-यार्त्तैर्गण्यते नैव । प्रायः कर्म विकर्म वा ॥ ९२ ॥ तावत्तत्राययौ वैरि—सादी वादीव वाक्प-

डुः ॥ विपक्षपक्षमुच्छेत्तुं । दृढहेतौ कृतश्रमः ॥ ९३ ॥ अभाषत च साक्षेपं । रे रे रजक किं त्वया ॥ नश्यंतौ चंद्रचाणिक्यौ । दृष्टौ कापि द्विषाविति ॥ ९४ ॥ सोऽवदद्वेद नोदंतं । चाणिक्यस्य द्विजन्मनः ॥ राजा चंद्रः पुनर्वारि—मध्यमध्यास्य तिष्ठति ॥ ९५ ॥ श्रुत्वेति कोपकंप्रोष्ठः । प्राप्तो वैरीति संमदी ॥ तुरगादुत्तरन्नेव । तुरगीति जगाद तं ॥ ९६ ॥ इमं हयं च खड्गं च । क्षणं धावक धारय ॥ यथा कृष्याम्यमुं नीरा—त्पाठीनमिव धीवरः ॥ ९७॥ मनो नाश्वासिविश्वासि । वस्त्रमात्ररुचेर्मम ॥ इत्युक्ते तेन तुरगं । तरुस्कंधे बबंध सः ॥ ९८ ॥ यावद्भूमिविमुक्तासि—रसौ विशति वारिणि ॥ तेनैव तावदसिना । चाणिक्यस्तं द्विधाकरोत् ॥ ९९ ॥ एहि वत्सेति तद्वाचा । मौर्यः प्रादुरभूज्जलात् ॥ तमेव हयमारुह्य । तौ द्वावथ प्रचेलतुः ॥ १०० ॥ प्राग्वत्तमपि मुक्त्वाश्वं । चाणिक्यो मौर्यमन्वधात् ॥ किमध्यायस्तदा वत्स । यदा दिष्टोऽसि विद्विषः ॥ १ ॥ सोऽभ्यधत्त तदा तात । ध्यातवानित्यनातुरः ॥ इदं राज्यं ममार्येण । ध्रुवं दृष्टं भविष्यति ॥ २ ॥ चाणिक्यश्चिंतयामास । प्राप्तराज्योऽप्यसौ मम ॥ समुल्लंघिष्यते नाज्ञां । मर्यादामिव सागरः ॥ ३ ॥ अथ क्षुधातुरं चंद्र—गुप्तं मुक्त्वा

वनांतरे ॥ धिवेश कंचन ग्रामं । चाणिक्यो भैक्ष्यलिप्सया ॥ ४ ॥ काप्यत्र लभ्यते भोज्य-
मिति कंचन स द्विजं ॥ पप्रछ तत्क्षणप्रस्ता— हारभाराक्षसक्रमं ॥ ५ ॥ स स्माह गेहिनोऽ-
मुष्य । गेहेऽद्यास्ति महोत्सवः ॥ त्वमत्र लप्स्यसे भैक्ष्य—मत्र लब्धं मया ह्यपि ॥ ६ ॥ आ-
यासभीरुणा तेन । मौर्यस्यापायशंकिना ॥ कुष्मांडवद् द्विजस्यास्यो—दरं क्षुर्या व्यदार्यत ॥
॥ ७ ॥ कलशादिव तत्कुक्षेः । कृष्ट्वा कुरकरंभकं ॥ अविनष्टेन तेनासौ । चंद्रगुप्तमभोजयत्
॥ ८ ॥ हृतद्विजोदराकृष्ट—करंभास्वादसादरं ॥ निशूकः इव राज्यार्हं । चाणिक्यो निश्चिका-
य तं ॥ ९ ॥ अथ तौ प्रस्थितौ सायं । कंचन ग्राममीयतुः ॥ चाणिक्यस्तत्र भिक्षार्थं । वृ-
द्धाभीरीगृहं गतः ॥ १० ॥ तया तत्कालमुत्तीर्ण, । पेया हुतवहोपमा ॥ स्थाले क्षुधाकराला-
नां । बालानां पर्यवेष्यत ॥ ११ ॥ दृष्ट्वा तां बालकः कोऽपि । प्रेयसीं पायसादपि ॥ दिव्य-
कारीव चिक्षेप । सत्वरः करमंतरा ॥१२॥ तया दग्धकरः क्रंद—न्नेवमालापि वृद्धया ॥ त्वं व-
त्स तुछधीः कस्मा—च्चाणिक्य इव चेष्टसे ॥ १३ ॥ स्वनामश्रवणाशंकी । चाणिक्यस्तामभा-
षत ॥ कोऽसौ मातस्त्वयाभाणि । चाणिक्योऽस्य निदर्शने ॥ १४ ॥ साप्युचे वत्स कोऽप्यस्ति

। चाणिक्यो दैवदोषतः ॥ स स्वेनाहृत्य मंत्रित्वं । चंद्रगुप्तं व्यधान्नृपं ॥ १५ ॥ मंत्री मंत्रवि-
हीनोऽसौ । मेलिताल्पपरिच्छदः ॥ रुरोध रभसा राज—धानीं नंदनरेशितुः ॥ १६ ॥ ततो नं-
देन निर्गत्य । तथालोड्यत तद्बलं ॥ यथा खरमरुन्नुन्न—सक्थुमुष्टितुलां ललौ ॥ १७ ॥ यद्य-
सौ बालिशो देशं । प्राग्व्यजेष्यत तत्सुखं ॥ निःप्रत्यूहमिवावर्त—मुपादास्यत तत्पुरं ॥ १८ ॥
तथा शिशुरसौ पूर्व—मनादायैव पार्श्वतः ॥ दग्धः किलोष्णपेयाया । गर्ने एव क्षिपन् करं ॥
॥ १९ ॥ एषा वृद्धामिषाज्ज्योत्स्न—देवी मे मतिदायिनी ॥ इति तस्या वचः शिक्षा—प्रायमादाय
सोऽचलत् ॥ २० ॥ मेलयित्वा शनैः सेनां । चंद्रगुप्तान्वितोऽथ सः ॥ मित्रीयितुं शबरेशं ।
जगाम हिमवद्गिरिं ॥ २१ ॥ स श्रीदानेन मानेन । कलाभिश्च महाबलं ॥ पल्लीशं पर्वतं तत्र
। चक्रे मित्रमभंगुरं ॥ २२ ॥ पर्वतं सोऽन्यदावोच—देहि मित्र मया सह ॥ उद्धरावो य-
था नंदं । मुस्ताकंदं किरी इव ॥ २३ ॥ तद्राज्यं च विभज्याहो—रात्रं शशिरवी इव ॥ आ-
वां भोक्ष्यावहे मुंच । मध्ये गिरिमुलूकतां ॥ २४ ॥ पर्वतः प्रतिपेदे त—दसंतुष्टा हि भूभुजः
॥ ततस्तौ चलितौ स्वस्व—चतुरंगचमूवृतौ ॥ २५ ॥ तौ निर्गतौ नगान्नाकि—सिंधुसिंधुप्लवा·

विव ॥ देशमास्कंदुतां नांदं । वर्धमानौ दिने दिने ॥ २६ ॥ तयोः प्रसरतोस्तस्थु–स्ते ये वंजुलवन्नताः ॥ शेषशाखिवदामूल— मुध्धृता अनताः पुनः ॥ २१ ॥ एकं तौ पर्यवेष्टेता–मन्नंगं डुंगमन्यदा ॥ न तु तं पर्वतं मेषा–विव भेत्तुमशक्नुतां ॥ २७ ॥ विवेश वीक्षितुं वास्तु । परिव्राजकवेषभाक् ॥ चाणिक्यस्तत्पुरं ।लिंगी । ह्यनिरुद्धगमागमः ॥ २ए ॥ स मध्येनगरं भ्राम्यन् । कचिदिंद्रकुमारिकाः ॥ ददर्श सुप्रतिष्टानाः । पुर्या वज्रांगिका इव ॥ ३० ॥ आसां प्रभावतोऽभंगो । डुंगोऽयमिति ।चिंतयन् ॥ उद्विग्नैश्चिररोधेन । स पौरैरित्यपृच्छ्यत ॥ ३१ ॥ प्रभो प्राप्ताश्चिरात्कारा–वेष्मवासव्यथां वयं ॥ कदा लप्स्यामहे मोक्ष–ममुष्मादरिचक्रतः ॥ ॥ ३२ ॥ एता इंद्रकुमार्यश्चे–दुध्ध्रियतेऽधुनापि तत् ॥ पुरमुद्वेष्ट्यते नात्र। भ्रांतिरेताह्यलक्षणाः ॥ ३३ ॥ खननोपक्रमेऽप्यासा—सिंधिद्रोधो निवर्त्स्यति ॥ तेनत्युक्ते जनः खिन्नः । खनितुं ताः प्रचक्रमे ॥ ३४ ॥ युग्मं ॥ मनाग्निवर्तयामास । चाणिक्यः स्वां चमूं चरैः ॥ ततः प्रत्ययतः पौरै—रामूलं ताः समध्धृताः ॥ ३५ ॥ ततस्तत्पुरमालोड्य । लीलया चंद्रपर्वतौ ॥ स्वीकृत्य देशमक्लेशं । पाटलीपुत्रमीयतुः ॥ ३६ ॥ सर्वशक्त्या समं ताभ्यां । कुर्वन्नंदः समाह्वयं ॥ अ-

न्याय्यव्ययकारीव । त्रुटतिस्म दिने दिने ॥ ३७ ॥ अथ नंदः श्लथानंदो । वनीपक इवाशु तं
अनन्यजीवनोपायो । धर्मद्वारमयाचत ॥ ३८ ॥ चाणिक्यस्तद्ददौ तस्य । पुनरर्थी क ताहशः
॥ ऊचे च मागधमुखे—नेति नीतिविशारदः ॥ ३९ ॥ नंद नादास्तदा मह्यं । किंचित्त्वं कां-
चनार्थिने ॥ इदानीं ते ददानोऽस्मि । जीवितं प्रियजीवितं ॥ ४० ॥ यद्रोचते तदादाय । र-
थेनैकेन निःसर ॥ श्रुत्वेति तद्वचो नंदः । स्वं निनिंद विधेर्वशं ॥ ४१ ॥ चापल्यं चिंतयन् ल-
क्ष्म्याः । पुत्रीमेकां प्रिये जने ॥ सारसारं च रत्नौघ—मेकस्मिन् स रथे न्यधात् ॥ ४२ ॥ म-
दरिः परिणीयेमां । म्रियतामिति दुष्टधीः ॥ एकां विषकनीं रूप—खनीं गेहे मुमोच सः ॥
॥ ४३ ॥ यामो वास्तु तवास्तु मंगलमहो सिंहासन क्षम्यतां । हे शय्यावसनासनाश्वकरि-
णो भूयः क वः संगमः ॥ कोशाः स्थास्यथ किं व्रजत्यपि मयि प्रीतिं त्यजध्वं प्रजाः । को युु-
ष्मानथ वर्धयिष्यति हहा हे हेमरूप्याचलाः ॥४४॥ एवं प्रलपतस्तस्य । स्वर्णाद्रिध्यानतो ध्रु-
वं ॥ तद्रूपमेव हृज्जात—मस्फुटिष्यन् किलान्यथा ॥ ४५ ॥ नगरान्निर्यतस्तस्य । कुष्टाद्देहादि-
वात्मनः ॥ चंद्रपर्वतयोः सेने । अभूतां पार्श्वयोर्द्वयोः ॥ ४६ ॥ स्मरतापातुरापश्य—त्तदा नं-

दस्य नंदिनी ॥ चंद्रगुप्तं चकोरीव । चंद्रमुन्निद्रलोचना ॥ ४७ ॥ स्वप्रजाजंजने सूर्य । इव मौ-
र्ये नवोदये ॥ जन्मुखी साजवद् दृष्या । नंदस्येंदोरिवाब्जिनी ॥ ४८ ॥ आः पापे कृतसंता-
पे । मम रज्यसि वैरिणि ॥ तद्याहि याहि राज्यश्री-रिवामुं त्वमपि श्रय ॥ ४९ ॥ एवं सा
प्रीणिता रोष——रुक्तयापि पितुर्गिरा ॥ अपास्य स्वं रथं लीला——गतिश्चांद्रं रथं ययौ ॥५०॥
तस्याश्चांद्ररथारोहे । जग्नाश्चक्रारका नव ॥ यद्वा जूजृद्जुवो जारो । दारुजैः किमु सह्यते ॥
॥५१ ॥ विचार्यारिकजंगेना-शकुनं तां निवारयन् ॥ चंड्रो मतिमतां सीम्ना-जाणि चाणिक्य-
मंत्रिणा ॥ ५२ ॥ वत्स श्रियमिवायांती-मेतां किमु निषेधसि ॥ वंश्यास्तव जविष्यंति । नू-
नं जग्नारका नव ॥ ५३ ॥ अथारोप्य रथं मौर्य-स्तां विवेशोदयी पुरे ॥ निःप्रजीकृत्य नंदेंदुं
व्योमनीव दिवाकरः ॥ ५४ ॥ नंद पूर्णप्रतिज्ञेन । शिखेयं मुच्यते मया ॥ इति चाणिक्यवा-
क्यस्य । दुःखावासे ध्वजायत ॥ ५५ ॥ सज्रूजंगं खलैः सद्भि-र्नीचैर्वक्रं च वैरिजिः ॥ वीक्षि-
तैः प्राचलन्नंदो । वर्षांत इव वारिदः ॥ ५६ ॥ प्रविष्टावथ तच्चंद्र—पर्वतौ नगरं रयात् ॥
धीरयंतौ प्रजा राज्य— परावर्तेन पिंजलाः ॥ ५७ ॥ रत्ने रत्नाकरप्रायं । स्वर्णैः स्वर्णाचलोपमं

॥ वैपुल्येन नभःकल्पं । प्रापतुर्नंदमंदिरं ॥ ५८ ॥ युग्मं ॥ तत्र नंदस्य राज्याधि—देवतामिव देहिनीं ॥ वित्रस्तहरिणीनेत्रां । कन्यां ददृशतुः पुरः ॥ ५९ ॥ विषकन्येति चाणिक्य—स्तां विनिश्चित्य लक्षणैः ॥ तत्रानुरागिणं चंद्र—गुप्तमेव न्यवारयत् ॥ ६० ॥ वत्सैका तव कन्यासू—र्मास्मिन्भूर्लोभवान् भृशं ॥ इयं च पर्वतस्य स्ता—दर्धराज्यविभागिनः ॥ ६१ ॥ तदैवोद्वाहयामास । चाणिक्यः पर्वतेन तां ॥ छेकाः कूटप्रयोगे हि । कालक्षेपं न कुर्वते ॥ ६२ ॥ तस्याः पर्वतकः प्राप । संस्पर्शमशनेरिव ॥ यावत्तावत् श्लथीभूत—संधानो व्यलुठद्भुवि ॥ ६३ ॥ तात चाणिक्य हा भ्रात—श्चंद्रगुप्त म्रिये म्रिये ॥ रक्ष रक्षेति दुःखार्तै । बाढं क्रंदति पर्वते ॥ ॥ ६४ ॥ आतितांसुः ऋजुश्चंद्र—गुप्तस्तस्य प्रतिक्रियां ॥ चाणिक्येनेति जगदे । रहः पुंरुहबुद्धिना ॥ ६५ ॥ युग्मं ॥ राजनीतिं न जानासि । वत्स स्वल्पमते शृणु ॥ अर्धराज्यहरं भृत्यं । यो न हन्यात्स हन्यते ॥ ६६ ॥ तायंते हंत यं हंतु—मुपाया भूरिशो नृपैः ॥ सोऽर्धराज्यहरो व्याधिः । स्वयं शाम्यन् मुदेऽस्तु मे ॥ ६७ ॥ विलंबं विदधेऽलीको—पक्रमैः सचिवस्ततः ॥ अचिरान्मुमुचे प्राणै—र्विलपन्नेव पर्वतः ॥ ६८ ॥ राज्ये भग्ने भुनक्तिस्म । चंद्रगुप्तो म-

ह्रीपतिः ॥ चाणिक्यश्चाजवन्मंत्री । धिया धर्वितवाक्पतिः ॥ ६९ ॥ चंद्रे राजनि चाणिक्ये । व्यापारिणि च चक्रिरे ॥ स्वामिवैरात्पुरे चौर्यं । नंदजृत्याः सुदुर्धराः ॥ ७० ॥ कर्तुकामस्तलारक्षं । चौररक्षाक्रमं नवं ॥ कृतवेषांतरोऽज्राम्य—च्चाणिक्यः सकलं पुरं ॥ ७१ ॥ जगाम नलदामाख्य–कुविंदस्य स मंदिरं ॥ तदा च दृष्टो मत्कोटै—स्तत्सुतः पितुरूचिवान् ॥ ७२ ॥ वानं मुक्त्वा स निस्तृंशो । मत्कोटविलमातलं ॥ खनित्वा वह्निदानेना—धाक्षीत्तानखिलानपि ॥ ७३ ॥ तलारक्षत्वयोग्योऽय—मिति निश्चित्य धीनिधिः ॥ चाणिक्यो दत्तसंमानं । तं चक्रे दंरूपाशिकं ॥ ७४ ॥ जाते मयि तलारक्षे । कः पराजविताऽत्र वः ॥ तन्मुष्णीत पुरं स्वैरं । स जगौ तस्करानिति ॥ ७५ ॥ विश्रंजाज्जृंजमाणांस्ता—न्निजधाम्नीव पत्तने ॥ नलदामोऽखिलान् जोक्तुं । जक्तिमानन्यदाह्वयत् ॥ ७६ ॥ ज्वलनं सर्वतो दत्वा । विधातुं चौर्यशांतिकं ॥ अश्नतः सकुटुंबांस्तान् । मंत्रपूर्वं जुहाव सः ॥ ७७ ॥ संजातेऽथ पुरस्वास्थ्ये । चाणिक्योऽस्मरदन्यदा ॥ यथा ग्रामेऽहमेकत्र । प्राग्जिक्षामपि नाप्नुवं ॥७८॥ क्षुद्रलेखं ततस्तत्र । स प्रैषीज्ञो जना इह ॥ ये चूताः संति तांश्छित्वा । वंशानां क्रियतां वृतिः ॥ ७९ ॥ ग्राम्यै

न ह्याम्रवनमुच्छिद्य । रुध्यंते क्वापि वेणवः ॥८०॥
रचिंति लेखोऽयं । विस्मृत्यालेखि मंत्रिणा ॥ तस्मादाज्ञाविपर्यासा–च्चुकोप चणिनंदनः
ध्यात्वेति चक्रे चूतानां । वंशानुच्छिद्य तैर्वृतिः ॥ बद्धद्वारेऽखिलग्रामे । वह्निदानेन निर्दयः
॥ ८१ ॥ वंशोच्छेदफलं तेषां । वंशच्छेदं व्यधत्त सः ॥ तवैव हेतोरेतावत् । प्रियेऽहमु-
॥ ८२ ॥ सोऽथ मानी समानीय । निजां जायामवोचत ॥ क्वयंती कुरंगाक्षि । वल्ली वफलि-
पचक्रमे ॥८३॥ एभिर्धनैर्धनैस्तास्ताः । पराभवदव्यथाः ॥ तदागः क्षम्यतामेवं । श्वशुरोऽ
नी भव ॥ ८४ ॥ मयासौ दुःस्थपत्नीति । पुत्री यत्पर्यणीयत ॥ ग्रामदेशादिकं रोष–तो-
प्येत्य तं जगौ ॥८५॥ श्वशुरस्यापरेषां च । बंधूनां स ददौ मुदा ॥ तत्रैयरुर्यतिव्राता
षौ ह्यस्य न निष्फलौ ॥ ८६ ॥ कदाचन विहारेण । पुनानाः पृथिवीतलं ॥ स्थापयि-
—न्विता विजयसूरयः ॥ ८७ ॥ जानंतोऽतिशयज्ञानात् । दुर्भिक्षं भावि तत्र ते ॥ योगसिद्धीर्ददुर्निशि ॥
त्वा नवं सूरिं । गणं तस्मिन्निचिक्षिपुः ॥ ८८ ॥ गुरवस्तस्य निःशेषा । क्षुल्लकौ द्वौ र-
संघकार्ये महत्येताः । प्रयोज्या इति भाषिणः ॥ ८९ ॥ तदेकमांजनं योगं । घनागमो गुरुः प्रैषीत् । सु-
हः स्थितौ ॥ आदिषातां घनवृष्टौ । वार्लवं चातकाविव ॥ ९० ॥

न्निद्धं मंक्लंप्रति ॥ साधुपद्मयुजं सूरिं । मानसंप्रति हंसवत् ॥ ९१ ॥ क्षीणजंघाबलत्वेन । तस्थौ तत्रैव स स्वयं ॥ पूरयन् पाटकावृत्त्या । नवकल्पानकैतवः ॥ ९२ ॥ क्षुल्लकौ तौ गुरुस्नेहा—त्पुनर्व्याघुट्य मार्गतः ॥ आगतौ पाटलीपुत्रं । ववंदाते गुरोः क्रमौ ॥ ९३ ॥

गुरुस्तौ बोधयामास । वत्सौ पश्चात्किमागतौ ॥ वीक्ष्य स्वस्यापि निर्वाह—मत्राहमतिदुष्करं ॥९४॥ दुर्भिक्षेऽत्र युवां बालौ । सोमालौ स्थास्यथः कथं ॥ कियद्भिः पल्वले तुच्छ—जले नंदंति पूतराः ॥ ९५ ॥ तावुचतुर्विना युष्मा—न्न नौ क्वचन निर्वृतिः ॥ यन्नाव्यं तन्नवत्वत्र । पूज्यपादांतिकस्थयोः ॥९६॥ तयोरिति स्नेहकिरा । गिरा च्छिन्नमना मनाक् ॥ स्वांतिके स्थापयामास । गुरुस्तौ जातगौरवः ॥ ९७ ॥ काले करालरूपेण । दुःकालेन व्यजृंभत ॥ कणैर्मणीयितं यत्र । मणिभिश्चोपलायितं ॥ ९८ ॥ केचिन्नरान् केऽपि धेनूः । स्वोदरे यत्र चिक्षिपुः ॥ तद्वाष्पपूर्यमाणेऽस्मि—न्नसिधेनूश्च केचन ॥ ९९ ॥ मेघैर्मोघोदयैर्यत्र । राज्ञां राज्यानि तुत्रुटुः ॥ राज्यं प्रेतपतेरेव । केवलं ववृधे तदा ॥ २०० ॥ न कश्चिदर्थिनां यत्र । दक्षिणाशामपूरयत् ॥ सा प्रत्युत विपेदाने—स्ततस्तैरेव पूरिता ॥ १ ॥ प्रक्षीणं विषयत्रमैः

क्षितितले पंकेन नोन्मीलितं । जातं नित्यघनागमार्थिभिरनारंभैश्चिरं कर्षकैः ॥ व्युत्सृष्टा तन-
यादिकेऽपि ममता लोकैस्तपः सेवितं । दुर्भिक्षस्य गुरोः प्रबोधपटुता सार्वत्रिकी काचन ॥१॥
उद्दीप्यतेस्म या पूर्व–मौषधैर्विविधैस्तदा ॥ दीप्तायाः स्वयमेवास्या । नाभूद्भात्यौषधं क्षुधः ॥
॥ २ ॥ यत्किंचिल्लेभिरे भैक्षं । गौरव्यं गुरवस्तदा ॥ अपत्यप्रणयान्नित्यं । तत्तयोः क्षुल्लयोर्ददुः
॥ ४ ॥ ताभ्यामचिंतयत्पूज्या । वृद्धा देहं हि वार्धकं ॥ अशुश्रुषं पतत्येव । पुराणमिव मं-
दिरं ॥ ५ ॥ सारं ददति नौ भिक्षं । सीदंति गुरव स्वयं ॥ दुर्भिक्षाब्धिरयं तार्य– स्तत्क-
या बुद्धिवेक्षया ॥ ६ ॥ हुं ज्ञातमांजनो योगः । सम्यक्परिचितोऽस्ति नौ ॥ तेनादृश्यतनू
भूत्वा—न्यतो भोक्ष्यावहे क्वचित् ॥ ७ ॥ तावथांजनमासूत्र्य । तेनादृश्यौ दिने दिने ॥ भुंजा-
नेन समं राज्ञा । भुंजातेस्म सविस्मयं ॥ ८ ॥ एककुक्षिंभरो भक्ते । जनत्रितयभोजनात् ॥ क्षा-
मीबभूव भूपाल–स्त्रपया न जगौ पुनः ॥ ९ ॥ नृपं कदापि चाणिक्यो—ऽपृच्छद्वत्स
कृशोऽसि किं ॥ किं तवाप्यस्ति दुर्भिक्षं । किं वा चिंता च काचन ॥ १० ॥ भूमानवददद्यश्वो
। भुंजे प्राक्तनमात्रया ॥ परमध्मात एवाहं । तातोत्तिष्ठामि नित्यशः ॥ ११ ॥ मंत्री दध्यौ ध्रुवं

सिद्धः । कोऽप्यदृश्योंजनादिना ॥ दुर्भिक्षेऽत्र हरत्यस्या–हारं हा रंकवत् क्षुधा ॥ १२ ॥ भोज-
नावसरेऽन्येद्यु–र्भूभुजे भोजनौकसि ॥ श्लक्ष्णीकृतेष्टिकाचूर्णं । क्षेपयामास सोऽजितः ॥१३॥
सरसाहारलोभेन । प्राग्वदायातयोस्तयोः ॥ प्रेक्षांचक्रे पदश्रेणिं । स तत्र प्रतिबिंबितां ॥१४॥
निश्चित्यांजनसिद्धौ तौ । मंत्री धूम्रमकारयत् ॥ बाष्पायेतेस्म तन्नेत्रे । धूमध्यामलिते रयात् ॥
॥ १५ ॥ धौतेंजनेऽश्रुपूरेण । चाणिक्यस्तावलोकत ॥ क्षुल्लावुभयतो भूमी–भुजं सत्वरभोजि-
नौ ॥ १६ ॥ गुरुणा मोदितौ यत्ना–च्चाणिक्येन च रोदितौ ॥ तौ जग्मतुर्गुरूपांतं । लज्जितौ
नृपमंदिरात् ॥ १७ ॥ ही व्रतिभ्यां सह न्याद–मिति शूकां दधन्नृपः ॥ माभूच्छासनहीले-
ति । चाणिक्येनान्वशिष्यते ॥ १८ ॥ वत्स किं हूयसे भूयान् । भवतो भवितोदयः ॥ एतत्ते
शकुनं साधु । साधुभ्यां सह भोजिनः ॥ १९ ॥ एतौ भूपाल बालर्षी । कुमारब्रह्मचारिणौ ॥
॥ आस्थाप्येकत्र दुःप्रापा । द्वाभ्यां किमुत भोजनं ॥ २० ॥ तत्त्वमेव पवित्रोऽसि । महांश्च म-
हतामपि ॥ एवमालप्य भूपाल–मुपालब्ध गुरून् च सः ॥ २१ ॥ बालो न दीक्ष्यते पूज्या
। दीक्ष्यते वा सुशिक्ष्यते ॥ दुःशिक्षितौ भवच्छिष्या–वपि येनेदृशक्रियौ ॥ २२ ॥ यद्यल्पवय-

सोरेतां । ददुः श्रीगुरवः कलां ॥ तन्मन्ये बालकस्नेहो । गीतार्थैरपि दुस्त्यजः ॥ २३ ॥ गुरुर्लब्धावसरोऽवक् । समृद्धे श्रावके त्वयि ॥ यद्यत्कुर्वंति नः शिष्या–श्चाणिक्य स्वल्पमेव तत् ॥ २४ ॥ अल्पाहारौ शिशू एता– वेवं निर्वहतो यदि ॥ न ते किमियता दान–कीर्तिर्ननर्ति नूतले ॥ २५ ॥ इह त्वां श्रावकं वीक्ष्य । दानकल्पद्रुमायितं ॥ प्राहैष्म प्रथमं दूरे । गन्नंदुर्निक्षसंनवे ॥ २६ ॥ दौःस्थ्यं क्षुल्लकयोर्वीक्ष्य । स्वकार्पण्यान्न लज्जसे ॥ कुरुषे प्रत्युताक्षेप–महो तेऽमात्य धृष्टता ॥ २७ ॥ यद्वा श्राद्धचतुर्नंग्या । अंत्यो नंगः फलेत्कथं ॥ कृपणैर्निपुणैः शिक्षा–क्षणे युष्मादृशैर्विना ॥ २८ ॥ गुरूनर्चंति संपत्तौ । ये ते न प्रचुरा नराः ॥ पश्य पूर्णेन शशिना । प्रत्नान्नंगो गुरोः कृतः ॥ २ए ॥ त्वं योग्योऽसीति चाणिक्य । साक्षेपमुपदिश्यते ॥ वर्ण्यं सुवर्णमेव स्यात् । घनाघातैर्न पित्तला ॥ ३० ॥ शिष्यावपि गुरुः प्रोचे । युवाभ्यां किमिदं कृतं ॥ नवंति साधवः सत्त्वा–नरणा मरणावधिः ॥ ३१ ॥ चूर्णनक्तं राजनक्तं । निषद्या गृहिनाजनं ॥ अंतरायं च पंचामी । दोषाः किं नात्र वां स्मृताः ॥ ३२ ॥ स्वापराधं ततः शिष्यौ । नत्वाचिक्षमतां गुरून् ॥ मिथ्यादुष्कृतमाधत्ता—मपुनष्करणेन च ॥ ३३ ॥ चा-

णिक्योऽपि गुरून्नत्वा । प्रोचे पूज्यैः समुध्धृतः ॥ पतन्नहं प्रमादांधौ । साधुशिक्षावरत्रया ॥
॥ ३४ ॥ स्फुटमुक्ता गुणाधाराः । सारश्रीनायकाश्च वः ॥ न व्याहारा अमी किंतु । नव्या
हाराः सतां हृदि ॥ ३५ ॥ तत्क्रमध्वं न यच्चक्रे । साधुचिंता मया पुरा ॥ अथ प्रासुकनक्ता-
द्यै—रनुग्राह्यो जनो ह्ययं ॥ ३६ ॥ पीतामृत इव प्रीतो । धाम स्वमगमत्ततः ॥ नक्तपानादि-
कं नक्तः । साधुन्यः स सदाप्यदात् ॥ ३७ ॥ नृपः कदापि मिथ्यात्वं । ययौ पाखंडिनां गिरा
॥ स हि स्वनावो जीवानां । नीचैर्गतिरिवांनसां ॥ ३८ ॥ ततोऽस्य तातदेशीयो । जिनधर्मै-
कलालसः ॥ चाणिक्यः स्माह वत्सैषु । किं पाखंडिषु रज्यसि ॥ ३९ ॥ अमी भ्रांतवदुन्मार्गा
। हिमवज्जडिमालयाः ॥ कुशीला हलवत्कूट—बहुलाः शैलवत्पुनः ॥ ४० ॥ मयैषां ज्ञायते
वृत्तं । त्वमपि ज्ञापयिष्यसे ॥ इत्युक्त्वा नृपते धर्मं । वक्तुं तानाजुहाव सः ॥ ४१ ॥ समुदा-
येन तानेतान् । प्राक्क्षिप्तोज्ज्वलवालुके ॥ उपांतःपुरमेकांत—स्थाने स्थापयतिस्म सः ॥४२॥
अन्यर्णवर्तिनृपाल—नामिनीनूषणक्कणैः ॥ तच्चित्तकोणे चेतोनू—श्चिरसुप्तोऽप्यजागरीत् ॥
॥ ४३ ॥ संनूय विवशात्मानः । सर्वे ते जालकाध्वना ॥ आनूपागममैक्षंतां—तःपुरीः पामरा

इव ॥ ४४ ॥ उपस्थिते नृपे बद्ध—बकध्याना दृढासनाः ॥ स्वं स्वं धर्मं निवेद्योच्चै—रगमं-
स्ते यथागतं ॥ ४५ ॥ उवाच सचिवो वत्स । पश्यैताः पदपंक्तयः ॥ त्वदंतःपुरिकालोका—
द्व्यंजंत्येषां सरागतां ॥ ४६ ॥ वालुकां तां समीकृत्य । तेन जैनमुनीश्वराः ॥ आकारिता द्वि-
तीयेऽह्नि । तत्रैव विनिवेशिताः ॥ ४७ ॥ सिद्धांते तेऽनिशं लीनाः । शुद्धांते न मनो ददुः ॥
आयातस्तस्य च भूभर्तु—रार्हतं धर्ममूचिरे ॥ ४८ ॥ गतेषु तेषु चाणिक्य–श्चंद्रगुप्तमभाषत
पश्यैतां वत्स साधूनां । पदपंक्तिर्न वीक्ष्यते ॥ ४९ ॥ अमीभिरैक्षत स्त्रैणं । न तव स्ववशेंद्रियैः
आत्मारामा ह्यमी रामा । गणयंति तृणोपमाः ॥ ५० ॥ कः काचं सति सद्रत्ने । करभागं स-
ति सिंधुरे ॥ कः शमीं सति कल्पद्रौ । कः पल्लीं सति पत्तने ॥ ५१ ॥ को दास्यं सति सा-
म्राज्ये । कः पंकं सति चंदने ॥ को मिथ्याशासनं जैने । शासने सति सेवते ॥ ५२ ॥युग्मं॥
ततो भूमान् सनिर्वेदः । स व्यलीकेषु लिंगिषु ॥ लाक्षाराग इवोर्णायौ । स्थिरोऽभूज्जिनशास-
ने ॥ ५३ ॥ निशीव पद्मकोशोऽभू–त्कोशो भूमिभुजोऽन्यदा ॥ निःश्रीकः श्रीकरीबुद्धिं । चा-
णिक्योऽथ व्यचिंतयत् ॥ ५४ ॥ इभ्यानाहूय वास्तव्यान् । भक्त्या भोजयतिस्म सः ॥ आ-

।मर्षं धीवराणां ही । मुखमन्यवशीकृतेः ॥ ५५ ॥ आविःकुर्वंत्यमी मत्ताः । स्वसत्तामिति चिं-
तयन् ॥ मैरेयं पाययित्वा तां—श्चाणिक्यः प्रोचिवानिति ॥ ५६ ॥ त्रिदंडं कुंडं च काषाये ।
वस्त्रे कांचनकुंडिका ॥ नित्यं नृपोऽस्ति मे वश्यो । झंझां वादयतात्र भोः ॥ ५७ ॥ तत् श्रुत्वा
गर्वमूर्बालाः । सर्वे हालाबलाज्जगुः ॥ किं रे दृप्यसि भिक्षाक । शृण्वस्माकमहो धनं ॥ ५८ ॥
सहस्रं योजनानीभ—पतेर्यातः पदे पदे ॥ दीनारलक्षं मुंचामि । झंझां वादयतात्र भोः ॥ ५९ ॥
तिलाढकस्य सद्वृष्ट्या । निष्पन्नस्य तिले तिले ॥ दीनारलक्षं मुंचामि । झंझां वादयतात्र
भोः ॥ ६० ॥ एकाहक्षरणैर्बध्ध्वा । सेतुः प्रावृण्णरोऽन्नवं ॥ वालयामि सरित्पूरं । झंझां वाद-
यतात्र भोः ॥ ६१ ॥ एकाहजातजात्याश्व—किशोरस्कंधकुंतलैः ॥ करोमि मंडपं व्योम्नि ।
झंझां वादयतात्र भोः ॥ ६२ ॥ शालिप्रसूतिगर्दभ्यौ । सदा क्षेत्रे उभे मम ॥ छिन्नछिन्नप्ररू-
ढे स्तो । झंझां वादयतात्र भोः ॥ ६३ ॥ शुक्लवासाः ससौरभ्यो । नक्तमार्यं ऋणोज्झितः ॥ सा-
हस्त्रिकोऽप्रवास्यस्मि । झंझां वादयतात्रभोः ॥ ६४ ॥ इति तेषां क्रमेणोक्तं । चाणिक्यश्चीर-
केऽलिखत् ॥ दृषल्लेखेव लिखितं । न विपर्येति जातुचित् ॥ ६५ ॥ व्यावृत्तचेतनांस्तान् स ।

इव ॥ ४४ ॥ उपस्थिते नृपे बद्ध—बकध्याना दृढासनाः ॥ स्वं स्वं धर्मं निवेद्योच्चै—रगमं-
स्ते यथागतं ॥ ४५ ॥ उवाच सचिवो वत्स । पश्यैताः पदपंक्तयः ॥ त्वदंतःपुरिकालोका—
द्व्यंजंत्येषां सरागतां ॥ ४६ ॥ वालुकां तां समीकृत्य । तेन जैनमुनीश्वराः ॥ आकारिता द्वि-
तीयेऽह्नि । तत्रैव विनिवेशिताः ॥ ४७ ॥ सिद्धांते तेऽनिशं लीनाः । शुद्धांते न मनो ददुः ॥
आयातस्तस्य च भूभर्तु—रार्हतं धर्ममूचिरे ॥ ४८ ॥ गतेषु तेषु चाणिक्य—श्चंद्रगुप्तमभाषत
पश्यैतां वत्स साधूनां । पदपंक्तिर्न वीक्ष्यते ॥ ४९ ॥ अमीभिरैक्षत स्त्रैणं । न तव स्ववशेंद्रियैः
आत्मारामा ह्यमी रामा । गणयंति तृणोपमाः ॥ ५० ॥ कः काचं सति सद्रत्ने । कश्छागं स-
ति सिंधुरे ॥ कः शमीं सति कल्पद्रौ । कः पल्लीं सति पत्तने ॥ ५१ ॥ को दास्यं सति सा-
म्राज्ये । कः पंकं सति चंदने ॥ को मिथ्याशासनं जैने । शासने सति सेवते ॥ ५२ ॥ युग्मं ॥
ततो भूमान् सनिर्वेदः । स व्यलीकेषु लिंगिषु ॥ लाक्षाराग इवोर्णायौ । स्थिरोऽभूज्जिनशास-
ने ॥ ५३ ॥ निशीव पद्मकोशोऽभू—त्कोशो भूमिभुजोऽन्यदा ॥ निःश्रीकः श्रीकरीबुद्धिं । चा-
णिक्योऽथ व्यचिंतयत् ॥ ५४ ॥ इभ्यानाहूय वास्तव्यान् । भक्त्या भोजयतिस्म सः ॥ आ-

मिषं धीवराणां ही । मुखमन्यवशीकृतेः ॥ ५५ ॥ आविःकुर्वंत्यमी मत्ताः । स्वसत्तामिति चिं-
तयन् ॥ मैरेयं पाययित्वा तां—श्चाणिक्यः प्रोचिवानिति ॥ ५६ ॥ त्रिदंडं कुं च काषाये ।
वस्त्रे कांचनकुंडिका ॥ नित्यं नृपोऽस्ति मे वश्यो । भंभां वादयतात्र भोः ॥ ५७ ॥ तत् श्रुत्वा
गर्वभूर्बालाः । सर्वे हालाबलाज्जगुः ॥ किं रे दृप्यसि भिक्षाक । शृणवस्माकमहो धनं ॥ ५८ ॥
सहस्रं योजनानीन्न—पतेर्यातः पदे पदे ॥ दीनारलक्षं मुंचामि । भंभां वादयतात्र भोः ॥५ए॥
तिलाढकस्य सदृष्ट्या । निष्पन्नस्य तिले तिले ॥ दीनारलक्षं मुंचामि । भंभां वादयतात्र
भोः ॥ ६० ॥ एकाहन्नवनीतेन बध्वा । सेतुः प्रावृण्नरोत्तवं ॥ वालयामि सरित्पूरं । भंभां वाद-
यतात्र भोः ॥ ६१ ॥ एकाहजातजात्याश्व—किशोरस्कंधकुंतलैः ॥ करोमि मंडपं व्योम्नि ।
भंभां वादयतात्र भोः ॥ ६२ ॥ शालिप्रसूतिगर्दभ्यौ । सदा क्षेत्रे जन्ने मम ॥ छिन्नछिन्नप्ररू-
ढे स्तो । भंभां वादयतात्र भोः ॥ ६३ ॥ शुक्लवासाः ससौरभ्यो । नक्तन्नार्य ऋणोज्झितः ॥ सा-
हस्त्रिकोऽप्रवास्यस्मि । भंभां वादयतात्र भोः ॥ ६४ ॥ इति तेषां क्रमेणोक्तं । चाणिक्यश्चीर-
केऽलिखत् ॥ दृषल्लेखेव लिखितं । न विपर्येति जातुचित् ॥ ६५ ॥ व्यावृत्तचेतनांस्तान् स ।

यथोचितमयाचत ॥ परं पुष्पमिवादुन्वन् । स्वार्थकृद्भृंगवद्बुधः ॥ ६६ ॥ एकयोजनगामी-
न—पदमित्यादिमो धनं ॥ द्वैतीयिकः पुनश्चैक—तिलोद्भवतिलैर्भितं ॥ ६७ ॥ एकाहश्चरूणं
चाग्न्य—स्तुर्यश्चैकाहिकान् हयान् ॥ पंचमो मासिकं धान्यं । ददे चैतेषु मंत्रिणः ॥ ६८ ॥
अरुणो वारुणीयोगा—त्सर्वथा विवसुर्भवेत् ॥ बुटिताःस्मो वयं स्तोका—दिति ते दध्युरुन्मदाः
॥ ६९ ॥ एवं कोशं कुशूलं च । धनैर्धान्यैश्चमूं हयैः ॥ नृपस्यापूर्य चाणिक्यः । स्वं कृतार्थम-
मन्यत ॥ ७० ॥ काले कृशेषु कोशेषु । पुनर्जातेषु नृभुजः ॥ उपायांतरमासूत्र्य । मंत्रीभ्या-
नाह्वयत्तदा ॥ ७१ ॥ बभूवुर्देवता दौःस्थ—नाशकास्तस्य पाशकाः ॥ तानुपादाय दायज्ञः । स म-
हेभ्यानरीरमत् ॥ ७२ ॥ पुरतः प्रस्फुरद्रत्न—जालं स्थालं विमुच्य सः ॥ उवाचेदं स गृह्णातु
। यो जयत्येकदापि मां ॥ ७३ ॥ जयामि यमहं तेन । देयो दीनार एव मे ॥ ततो लोभा-
ददीव्यंस्ते । न पुनस्तं विजिग्यिरे ॥ ७४ ॥ प्रतिदायमुपादाय । तेभ्यो दीनारमेव सः ॥ ब-
भार श्रीगृहं किं न । बिंदुभिर्भ्रियते सरः ॥ ७५ ॥ आत्तेषु दिव्येष्वपि पाशकेषु । जीयेत मं-
त्री धनिभिः कदापि ॥ विरूढधर्मा न पुनर्मनुष्यो । भवाच्च्युतो मानुषतां लभेत ॥ ७६ ॥ इ-

ति द्वितीयपाशकदृष्टांतः. ॥

॥ अथ अन्नराशिदृष्टांतः प्रारभ्यते ॥

सर्वत्र भारते वर्षे । वर्षेभ्रादस्य भूयसि ॥ जायंते यानि धान्यानि । संभान्यानिलयोगतः ॥ १ ॥ तान्येकत्र सुरो राशी—कृत्य कुर्यात्तथा शिखां ॥ यथोपरि चरन्निंदुः । क्षणं रजतकुंभति ॥ २ ॥ तत्रैकः सर्षपप्रस्थः । क्षिप्त्वा मिश्रीकृतस्तथा ॥ यथाभूद् दुर्लभः सर्व—पूर्वगुप्तैकमंत्रवत् ॥ ३ ॥ वयसः परिपाकेन । धनुर्यष्टिरिवानता ॥ वाताधिक्येन वल्लीव । प्रचलत्पाणिपल्लवा ॥ ४ ॥ रोमभिः पलितैः शुष्क—तृणभूमिविलंबिनी ॥ निर्दंतास्यतुलारूढ—निष्कुलीकृतदाडिमा ॥ ५ ॥ अमावासी कृताशेष—तिथिर्नेत्रबलं विना ॥ आसन्नमृत्युरायासी—जरती तत्र काचन ॥ ६ ॥ त्रिभिर्विशेषकं ॥ अनात्मज्ञा दुढौके सा । सूर्पमादाय कौतुकात् ॥ विभज्य सर्षपान् सर्वान् । प्रस्थं पूरयितुं पुनः ॥ ७ ॥ कदापि सूर्पेण विविच्य धान्य-राशेर्भरत्याशु कदंबकैस्तैः ॥ प्रस्थं तथा सा जरती न भूयः । प्राप्नोत्यपुण्यो मनुजो नृजन्म ॥ ८ ॥ इति तृतीयदृष्टांतः. ॥

अथ चतुर्थद्यूतदृष्टांतः—अस्ति रत्नपुरं नाम । पुरं रत्नाकरश्रियं ॥ यद्दद्भुतैर्नरै रत्नै—रिव श्रृंगायते जगत् ॥ १ ॥ राजा शतायुधस्तत्र । नलीनः कुलिशायुधः ॥ यस्य कस्य न वित्राय । महिमा दानवर्धितः ॥ २ ॥ सुधर्मागर्वसर्वस्व-मुच्छेतुमिव निर्मितं ॥ अनन्यसममास्थान—मासीत्तस्य नरेशितुः ॥ ३ ॥ यत्रोल्लोच्यस्थमुक्तास्रक्-प्रतिबिंबितभूतले ॥ किमधोऽप्यस्त्युरूचक्र-मिति संदिदिहे जनैः ॥ ४ ॥ यत्र स्फुरन्मणिघृणि-स्तोमापास्ततमस्ततौ ॥ क्रियते मंगलायैव । प्रदीपा रजनीमुखे ॥ ५ ॥ यौवराज्यं ददौ यूने । सूनवे नयविन्नृपः ॥ न चैष तावतातृप्य—ल्लोभो लाभे हि वर्धते ॥ ६ ॥ हत्वापि पितरं स्वस्य । राज्यश्रियमियेष सः ॥ धिग्राज्यं येन दुर्मित्रे—णेव दुर्बुद्धिरेधते ॥ ७ ॥ एतद्विवेद सर्वत्र । संचरच्चरलोचनः ॥ मंत्री कुमारदुर्वृत्तं । रहो राज्ञो जगाद च ॥ ८ ॥ अजानन्निव भूजानि—रन्यदा तनयं जगौ ॥ परिश्रांता वयं वत्स । धृत्वा राज्यधुरां चिरं ॥ ९ ॥ निधित्सामस्त्वयि ज्येष्ठे। नंदने राज्यमेकतः ॥ अन्यतः कुलमर्यादां । परित्यक्तुं न शक्नुमः ॥ १० ॥ का तात कुलमर्यादा । पृष्टे तेनेति साग्रहं ॥ भूपोऽभ्यधात्कुलेऽस्माकं । राज्यं द्यूतेन लभ्यते ॥ ११ ॥ अष्टोत्तरशतं स्तंभा

। जृंभमाणमणित्विषः ॥ आस्थानेऽत्र प्रतिस्तंभं । संत्यष्टशतमश्रयः ॥ १२ ॥ अदैर्दीव्यन् मया साकं । त्वमाकंपविमुक्तधीः ॥ जयमासादयन्नश्रि—मेकां स्तंभस्य जेष्यसि ॥ १३ ॥ पुनर्द्यूते जयन्नाश्रिं । द्वितीयां च विजेष्यसे ॥ स्तंभस्यैकस्य निःशेषा । जेतव्या एवमश्रयः ॥१४॥ एवमेव क्रमाज्जेयाः । शेषस्तंभाखिलाश्रयः ॥ यद्येकदापि स्खलति । तद् द्यूतं याति मूलतः ॥ १५ ॥ ततः स द्यूतनिष्णात—स्तातघातनिवृत्तधीः ॥ प्रयासाज्जीरुरारेभे । रंतुं राज्याय भूभुजा ॥ १६ ॥ कदाप्यसावस्खलितं विजित्य । स्तंभानशेषानपि लाति राज्यं । अपुण्यनैपुण्यमना न भूयः । प्राप्नोति मानुष्यमहो मनुष्यः ॥ १७ ॥ इति चतुर्थद्यूतदृष्टांतः. ॥

अथ पंचमरत्नदृष्टांतः प्रारभ्यते—ऋद्धं धनसमृद्धाख्य—मस्ति ख्यातं क्षितौ पुरं ॥ यस्य स्थिरस्य संसर्गा—दिव श्रीश्चापलं जहौ ॥ १ ॥ तत्राभूद्धनदः श्रेष्ठी। यो नानारत्नसंग्रहात् ॥ रत्नाकर इति ख्याति—मुदधेर्विदधे वृथा ॥ २ ॥ यद्यद्ददर्श शुश्राव । रत्नं क्वापि स कौतुकी ॥ तत्तत्संजगृहे दीप्ति—पात्रं शास्त्रं सुधीरिव ॥ ३ ॥ ग्राहं ग्राहं स रत्नानि । स्वमंदिरमपूरयत् ॥ ऋभुर्मनीषितं मूल्यं । व्यक्रीणीत न किंचन ॥ ४ ॥ कोटिध्वजौकःकोटीषु । प-

ताकाः कोटिसंख्यया ॥ वेल्लंतीर्व्योम्नि वल्लीव । तत्पुत्रा आलुलोकिरे ॥ ५ ॥ दध्यिवांसश्च चेत्तात—स्तनुते रत्नविक्रयं ॥ तदस्माकमपि द्रव्य—कोटयः स्युः सुदुर्घटाः ॥ ६ ॥ चलाचलां-चलान् पश्चा—दुत्तन्नीमो ध्वजान्वयं ॥ नीरसैर्जरठस्पर्शैं । रत्नैर्बंदीकृतैर्हि किं ॥ ७ ॥ यया द्वि-षो न हूयंते । प्रीयंते न च बांधवाः ॥ घटदीपिकयेवालं । बुद्ध्या रुद्ध्या च नस्तया ॥ ८ ॥ यदि क्वचित्पिता याति । नुन्नोऽस्माकं मनोरथैः ॥ तद्रत्नविक्रयात्कोटि—ध्वजनाम लभामहे ॥ ॥ ए ॥ एवं विमृशतां तेषां । धनदो धनदोहदी ॥ ययौ देशांतरं न श्री—रस्ति दुस्त्यजस-द्मनां ॥ १० ॥ विना सवित्रा पुत्रास्ते । तारावद्विजजृंभिरे ॥ आविश्चक्रुश्चिरत्नानि । रत्ना-न्यापणवीथिषु ॥ ११ ॥ ययाचे यो यथा रत्नं । मूल्येनाल्पेन भूयसा ॥ विक्रीय तत्तथा द्र-व्य—मेव संजगृहुश्च ते ॥ १२ ॥ विदेश्या रत्नलाभात्ते । हृष्टा देशांतराण्यगुः ॥ व्यधुश्च श्रे-ष्ठिनः पुत्रा । ध्वजारोपं स्ववेश्मनि ॥ १३ ॥ रत्नव्ययादवासेषु । तेषु कोटिध्वजाभिधां ॥ ध-नार्जनोर्जितः श्रेष्ठी । निन्ये स्वोकः सनाथतां ॥ १४ ॥ वीचीयितं मरुध्धूते—र्यैः पुत्रानंदवा-रिधेः ॥ श्रेष्ठिनः शीर्षशूलाय । तैश्चपेटायितं ध्वजैः ॥ १५ ॥ रत्नविक्रयवर्धिष्णु—क्रोधलोहि-

तलोचनः ॥ श्रेष्ठी यष्टिभिराहत्या—दिदेश तनयानिति ॥ १६ ॥ रे लक्ष्मीकंदकुद्दाला। बाला व्याला इवोन्मदाः ॥ गुरुगौरवगौरांशु—राहवः कामबाहवः ॥ १७ ॥ रत्नानि तान्यशेषाणि। दिशः सर्वा भ्रमन् भ्रमन् ॥ आहृत्य वेश्म विशत । सुचिरेणापि नान्यथा ॥ १८ ॥ एवं निर्वासिताः पित्रा । पुत्रास्ते रत्नलिप्सवः ॥ बभ्रुर्भृशं भुवं रंका । इव भोगोचिता अपि ॥ १९ ॥ भ्रांत्वा चतस्रोऽपि दिशो लभेरन् । तान्येव रत्नान्यखिलानि तेऽपि ॥ अकृतधर्मा न पुनर्मनुष्य—भवाच्च्युतो मानुषतां कदापि ॥ २० ॥ इति पंचमदृष्टांतः. ॥

अथ स्वप्ने चंद्रपानदृष्टांतः—नगरं पाटलीपुत्र—मस्ति गौरुविभूषणं ॥ यत्र मांगल्यदीपंति । सौधोर्ध्वे निशि तारकाः ॥ १ ॥ तत्र भूपोऽभवद्भंखो । दक्षिणावर्तशंखवत् ॥ समुज्ज्वलगुणः श्रीणां । कारणं वारिताशिवः ॥ २ ॥ तस्य प्रशस्यसौभाग्य—जयश्रीकुक्षिभूरभूत् ॥ ॥ पुत्रश्चित्रकलामूलं । मूलदेव इति श्रुतः ॥ ३ ॥ ह्रींकार इव निःशेष—मायाबीजं महामतिः ॥ आद्यो रूपवतां लीला—वतां योऽजनि यौवने ॥ ४ ॥ सरलक्रूरसच्चौर—पौरपामरपर्षदि ॥ सोऽमिलत्तादृशीभूय । वस्तुस्तोमे यथा जलं ॥ ५ ॥ स द्यूतव्यसनी स्तैन्यं । पुरस्यांतरकारयत् ॥

धूमो वह्नेरिव स्तैन्यं । द्यूतस्याद्यं हि लक्षणं ॥ ६ ॥ द्यूतं त्याजयितुं पित्रा । ततोऽसौ शिक्षि-
तो रहः ॥ तच्छिक्षां न पुनर्मेने । मत्तद्विप इवांकुशं ॥ ७ ॥ नृपोऽथ जनतानिष्टं । कुलीनमपि
कश्मलं ॥ चिरलग्नं पुरात्पंक-मिव दूरीचकार तं ॥ ८ ॥ इष्टं मे पूर्यतां दूर-देशदर्शनकौतु-
कं ॥ इति ध्यायन् ययौ सोऽप्यु-ज्जयिनीं जयिनीं दिवः ॥ ९ ॥ स तत्र वामनः कुब्जे । भूत्वा
गुटिकया रयात् ॥ कलाः प्रकटयामास । स्वाः शशीवांतरांतरा ॥ १० ॥ परःशतगुणा प्राज्ञ-
—हृज्ञता व्यक्तवर्णवाक् ॥ वेश्यात्र देवदत्ताभू-त्प्रवीणेत्युचितश्रुतिः ॥ ११ ॥ तां मोहयितु-
मन्येद्यु-स्तस्या उपनिकेतनं ॥ स प्रातर्गानमारेभे । मधुरध्वनिरध्वनि ॥ १२ ॥ गायनः कोऽ-
यमित्यूचे । स्वदासी देवदत्तया ॥ सापि वीक्ष्यावदच्छिद्रे । कुब्जः कोऽप्येष गायति ॥ १३ ॥
कलावंतं तमाह्वातुं । प्रहिता देवदत्तया ॥ कुब्जांगा माधवी चेटी । मूलदेवं जगाविति ॥१४॥
सर्वगाणिक्यमाणिक्यं । कोविदप्रिय कोविदा ॥ त्वां मत्स्वामिनी देव—दत्ताह्वयति संप्रति ॥
॥ १५ ॥ विशेषबहुमानेच्छुः । स तामूचे हले व्रज ॥ न वेश्यावेश्मनि वयं । स्ववशा निविशा-
महे ॥ १६ ॥ व्यावृत्तामथ तां पृष्टे । मुष्टिनाहत्य मर्मवित् ॥ कुब्जामपि ऋजूचक्रे । स यष्टि-

मिव वर्धकिः ॥ १७ ॥ दास्या प्रोक्तेऽथ तद्वृत्ते । देवदत्तानुरागिणी ॥ स्वयं गत्वा चटूक्त्या तमानिन्ये निजमंदिरं ॥ १८ ॥ तयोरन्योन्यमालापे । जाते पीयूषपारणे ॥ वीणाकारशिरोरत्नं । तत्रागात्कोऽपि गायकः ॥ १९ ॥ तद्वीणाक्वणितं श्रुत्वा । साधु साध्विति नाषिणी ॥ देवदत्ताधुनान्मौलिं । धूर्तः सोऽपि तथाकरोत् ॥२०॥ पृष्टस्ततया शिरःकंप—हेतुं धूर्ताधिपो जगौ ॥ अद्भुतं वीक्षमाणस्य । शिरः कस्य न कंपते ॥ २१ ॥ स्त्रियः सर्वत्र वीक्ष्यंते । सगर्भा[illegible]न पुनः पुमान् ॥ अद्य त्वद्धाम्नि वीक्ष्येते । स्त्रीपुंसावपि गर्भितौ ॥ २२ ॥ स्त्रीवीणेयं सगर्भास्ति । पुमान् दंडोऽपि तादृशः ॥ इत्युक्त्वादर्शयत्तंत्र्यां । केशं दंडे च कर्करं ॥ २३ ॥ अथ तस्मै निजां वीणां । प्रवीणार्पयतिस्म सा ॥ तयात्तया विरेजेऽसौ । पुंरूपेव सरस्वती ॥ २४ ॥ मूलदेवे स्वयं वीणा— वादके देवदत्तया ॥ ऐंद्रसदस्तदा मेने । निर्विश्वावसुतुंबरुः ॥ २५ ॥ तं वीणावादनाम्नायं । वीणाकारेऽथ याचति ॥ धूर्तराजोऽभ्यधाद्भद्र । नाहं जानामि किंचन ॥२६॥ आयुक्तः सर्वविद्यानां । वीणायाश्च विशेषतः ॥ विद्वान् विक्रमसेनोऽस्ति । पाटलीपुत्रपत्तने ॥ ॥ २७ ॥ तच्छिष्यो मूलदेवोऽस्ति । सोऽहं तत्पारिपार्श्वकः ॥ तदहं कलाया नो वेद्मि । कुरुचि-

द्ध इवोदधेः ॥ २८ ॥ अत्रांतरे विश्वभूतौ ॥ रंगाचार्ये समागते ॥ सा प्रोचे नामुना तुल्यः । कोप्यन्यो भारते श्रुतः ॥ २९ ॥ मूलदेवोऽन्यथा भद्रे । येन त्वमपि शिक्षिता ॥ किं ब्रूमस्तस्य वैदुष्यं । तदपि ज्ञास्यतेऽथवा ॥ ३० ॥ कुब्जोऽयमित्यवज्ञाय । प्रारब्धे विश्वभूतिना ॥ विचारे भारते सोवक् । पूर्वापरविरोधतां ॥ ३१ ॥ कस्त्वं कुब्ज विचारेऽस्मिन् । धनुर्वेद इवार्भकः ॥ विश्वभूतिर्वदन्नेवं । मूलदेवेन हक्कितः ॥ ३२ ॥ किं मंडयसि पांडित्यं । रंडापंडित रे मयि ॥ बिभिमः किमु तालाभि-र्मठपारापता वयं ॥ ३३ ॥ कथं कुर्मस्त्वया वादं । वयं सांप्रतमुत्सुकाः ॥ स्वं जाड्यमित्यपह्नुवन् । विश्वभूतिर्विनिर्ययौ ॥ ३४ ॥ दृष्ट्वा तत्पाटवं देव-दत्ता चित्तानुरागिणी ॥ निपत्य पादयोर्मूल—देवमेवं व्यजिज्ञपत् ॥ ३५ ॥ भारती भरतो विश्वा—वसुतुंबरुनारदाः ॥ प्रत्यक्षा अद्य सर्वेऽपि । त्वयि दक्ष निरीक्षिते ॥ ३६ ॥ कुलरूपाकृतीर्वक्ति । कलाकौशलमेव ते ॥ कुरुते कषरेखैव । विशेषं स्वर्णलोहयोः ॥ ३७ ॥ तथाप्याहृत्य रूपं स्वं । मेघमुक्त इवोडुपः ॥ प्रिय पूरय मद्दृष्टि—चकोरीपारणस्पृहां ॥ ३८ ॥ तयेत्यभ्यर्थितो रूपं । स्वाभाविकमियाय सः ॥ अधिकादरदं तस्या—यत्प्रदीयेत चाटुभिः ॥ ३९ ॥ तं मूर्त-

मिव कंदर्पं । चक्षुष्पमिव भास्करं ॥ सचेतनमिव स्वर्णं । वीक्ष्य सापि विसिष्मिये ॥ ४० ॥
प्रीणयित्वाथ तं स्नान—भोजनाच्छादनादिना ॥ देवदत्तावदत्तोष—निचिता रचितांजलिः ॥
॥ ४१ ॥ न याचे भवतो भूषां । न च स्वर्णधनान्यपि ॥ एतत्तु याचे धामेदं । मां च मास्म
मुचः सदा ॥ ४२ ॥ सोऽप्यूचे मयि निर्द्धव्ये । वैदेश्ये चानुरागिणी ॥ गुणज्ञे गणिकाधर्म—
मर्म कस्मान्निकृंतसि ॥ ४३ ॥ सावदद्बाह्यवृत्त्यैव । राज्ये धनिषु धीधनं ॥ मनः पुनः ममाज-
स्रं । विश्राम्यति कलावति ॥ ४४ ॥ कुमुदिन्या बहिःस्पर्शं । कुर्युर्वसुमतः कराः ॥ हृदयोद्घा-
टनस्तस्याः । पुनरिंदुः कलामयः ॥४५॥ विदेशो वा स्वदेशो वा । गुणिनां गणनेति का ॥ वि-
देशेष्वेव लब्धार्घा । हेममौक्तिकविद्रुमाः ॥ ४६ ॥ उंमिति प्रतिपेदाने । मूलदेवेऽथ तद्वचः
॥ हेमदंडकरस्तत्र । राज्ञो द्वास्थः समाययौ ॥ ४७ ॥ आहूता नर्तितुं तेन । नृपधाम जगाम
सा ॥ हृद्येवालक्ष्यरूपेण । मूलदेवेन संयुता ॥ ४८ ॥ कुशले वाद्यविद्यायां । तस्मिन् पटहवा-
दिनि ॥ सांद्रं गर्जति पर्जन्ये । मयूरीव ननर्त सा ॥ ४९ ॥ तुष्टस्तस्यै ददौ भूपः । प्रसादं
सापि वाणिनी ॥ समये प्रार्थयिष्येऽह—मिति न्यासीचकार तं ॥ ५० ॥ सा जगौ राजगौ-

रव्या । ततो गीतं श्रुतिप्रियं ॥ ददौ प्रमुदितस्तस्यै । स्वांगभूषां नरेश्वरः ॥ ५१ ॥ मधुमत्त-
पिकीकंठ—कुंठीकरणकारणं ॥ अगायन्मूलदेवोऽपि । वीणाक्वणितमिश्रितं ॥ ५२ ॥ सखंडा-
अरसास्वाद—मिवादाने महीपतौ ॥ सभा बभार तज्ज्ञान—विरामाशंकिनी शुचं ॥ ५३ ॥ प्राप्तः
कार्यवशात्तत्र । पाटलीपुत्रभूभुजः ॥ भुजमुत्क्षिप्य विमल—सिंहो मंत्रीत्यवोचत ॥ ५४ ॥ इयं
गीतकला मूल—देव एवापरत्र न ॥ छन्नवेष स एवैष । विज्ञेयो नात्र संशयः ॥ ५५ ॥ अ-
भ्यर्थितस्ततो राज्ञा । मुख्यं रूपमुपागतः ॥ नत्वा विमलसिंहेन । स्वामिसूनुः स सस्वजे ॥
॥ ५६ ॥ कोडीकृत्य नरेशेन । गाढं गौरवितोऽपि सः ॥ वाक्पाशपतितो भेजे । भवनं पण्यो-
षितः ॥ ५७ ॥ भुंजानः स तया साकं । भोगानक्षैर्निरंतरं ॥ दिदेव देवदत्तापि । तापितेव ज-
गाद तं ॥ ५८ ॥ प्रतिकूलं महत्त्वस्या—नुकूलं सकलापदां ॥ द्यूतं दोषैरनुस्यूतं । दयितेदं
विमुच्यतां ॥ ५९ ॥ जिते लोभोदधि क्षोभो । हारिते तु जयस्पृहा ॥ जिते वा हारिते वा-
पि । द्यूतेनोभयथा सुखं ॥ ६० ॥ नरः कृशोऽस्तु न खीडे । शोफात्तं मेदुरोदरं ॥ सादारिद्र्यं
श्रियेऽप्येत—न्नाभिष्टं मे दुरोदरं ॥ ६१ ॥ नाजन्मशिक्षितं द्यूतं । प्रियोक्त्यापि मुमोच सः ॥

यद्वा सितानुविद्धापि । किं शुंठी तैक्ष्णमुज्झति ॥ ६२ ॥ नाहर्नापि निशां च वेत्ति विकलो जानाति न क्षुत्तृषौ । वक्त्यश्लीलगिरो धनं निधनयत्याशु प्रयासार्जितं ॥ हास्यः स्पष्टधियां भवत्यवसनो हे द्यूतभूत त्वदा—घातस्तत्पुनरत्र चित्रमफलो यन्मंत्रतंत्रक्रमः ॥ ६३ ॥ इतश्चास्त्यचलस्तत्र । धनीसार्थपतिर्युवा ॥ स्वीकृत्य वित्तदानेन । देवदत्तामभुंक्त सः ॥ ६४ ॥ तस्मिन् दुःकर्मवन्नित्यां—तरायेऽप्यंतरांतरा ॥ तां भेजे मूलदेवोऽपि । श्रद्धावुः समतामिव ॥ ॥ ६५ ॥ अक्कावग्देवदत्तां तां । मूलदेवं त्यजाधनं ॥ अचलं निश्चलीभूय । भज वत्से श्रियां पदं ॥ ६६ ॥ स्त्रीणां भवति मान्यत्वं । समृद्धे सति भर्तरि ॥ उत्तरा दिक्कृता पूज्या । धनेशोऽस्या यतः पतिः ॥ ६७ ॥ उभे शास्त्रे उभे विद्ये । उभौ मार्गावुभौ विभू ॥ समं सिसेविषोः पुंसो । नैकोऽपि फलदो भवेत् ॥ ६८ ॥ साप्यूचे मातरेषास्मि । नैकांतेन धनार्थिनी ॥ किं तु मेऽस्त्यादरश्चाप—यष्टेरीव गुणेष्वपि ॥ ६९ ॥ अयं गुणी गुणज्ञश्च । सुरूपः सुभगः शुचिः ॥ उचितज्ञः प्रियः पुण्यैः । प्राप्तः किं त्याज्यते त्वया ॥ ७० ॥ न हि स्वीकारमर्हंति । धनवंतोऽपि निर्गुणाः ॥ मुक्ताभारोऽपि नारोपि । वक्षो दक्षैर्गुणं विना ॥ ७१ ॥ तत् श्रुत्वा कुट्टिनी

सा कदा-
तस्यां । व्यवाहार्षीद्दिनात्ततः ॥ शाकिनीव सपत्नीव । वैरिणीवोरगीव वा ॥ ७२ ॥ सा कदा-
चिद्ययाचेबां । तैलेक्षू अथ यावकं ॥ खलकूर्चकनिर्णिक्त–पद्मकाणि तु सा ददे ॥७३॥ मातः
किमेतदिति सा । तया पृष्टा रुषा जगौ ॥ प्रियस्तवास्ति निःसारो । यादृक् तादृश्यमून्यपि ॥७४॥
सपद्मं याति भृंगीत्वं । सपद्मं वारि हंस्यपि ॥ निष्पद्मं च रता ताभ्यां । पशुभ्यामपि हीयसे
॥ ७५ ॥ ज्ञात्वा तदाशयं सापि । प्रोचे मातरिमान्यपि ॥ गोकुले भाजने भग्ने । प्रदीपे व्य-
पकुर्वते ॥ ७६ ॥ मूलदेवो न निःसारो । यः प्रवीणो विवेकिषु ॥ निःसारोऽचल एवासौ । यो
विवेकेन वर्जितः ॥ ७७ ॥ दर्शयिष्ये तवाप्येत–दित्युक्त्वा प्रेष्य माधवीं ॥ अचलं ज्ञापयामा-
स । सा श्रद्धामिक्षुभक्षणे ॥७८॥ सोऽपि प्राप्य तदादेश–मनेक इव किंकरः ॥ प्राहिणोदिक्षु-
संपूर्ण–मनः स्वमनसा सह ॥ ७९ ॥ तदौदार्यं प्रशंसंत्या—मक्कायामभ्यधत्त सा ॥ किं मयि-
ष्यस्मि येनेक्षू–नक्षि मूलदलैः सह ॥ ८० ॥ तमेव दोहदं मूल–देवोऽपि ज्ञापितस्तया ॥ स्व-
वचांसीव सरसा–निक्षूनादत्त पंचषान् ॥ ८१ ॥ मूलाग्राणि दृढा सर्व—ग्रंथीरपि परित्यजन्
॥ इक्षूनिस्तक्ष्य चक्रे स । खंडान् द्वित्र्यांगुलायता ॥ ८२ ॥ त्रिसैर्भृत्वा शराबांस्तै–श्चतुर्जात-

कवासितैः ॥ प्रोतैर्बब्बूलशूलाग्निः । स प्रैषीदुपवल्लभं ॥ ७३ ॥ हृष्टाथ देवदत्ता तां । बभाषे मातरं तरं ॥ विवेको मूलदेवस्या—चलस्यापि निशालय ॥ ७४ ॥ इयं मुग्धा विप्रलब्धा । धूर्तेनानेन धिक्कथं ॥ कार्पण्यं दोषमप्यस्य । यत्पश्यति गुणाशया ॥ ७५ ॥ नृशल्यमिव निर्वास्य । एवायं सदनादिति ॥ कल्पांतवार्धिवीचीवा—चलं चानयतिस्म सा ॥ ७६ ॥ दिनाधीशोदयेऽवोच—द्देवदत्तामथाचलः ॥ एष ग्रामांतरं यामि । कामिन्यस्तु शिवं तव ॥ ७७ ॥ गुणाग्रहे गृहाणेदं । नित्यव्ययकृते धनं ॥ मृद्वि मद्विरहान्मात्रै—स्त्वं मे वससि चेतसि ॥ ७८ ॥ अचले चलिते सद्म । सानिनाय स्वनायकं ॥ गते म्लेछबले बिंब—मिव चैत्यमशंकिता ॥ ॥ ७९ ॥ स्निग्धताजितगोस्तन्या । गोस्तन्या अपि पेशलाः ॥ प्रावर्तंत मिथो वार्ता । एकतल्पस्थयोस्तयोः ॥ ८० ॥ अक्रसंकेतितस्ताव—दचलः सुभटान्वितः ॥ विद्युल्लोल इवापत्य । सहसा प्राविशद्गृहे ॥ ८१ ॥ मूलदेवं न्यधाद्देव—दत्ता तल्पतले तदा ॥ मुक्त्वा तस्यांतिके स्वांतं । सा तन्वाचलमभ्यगात् ॥ ८२ ॥ विषसादाचलस्तल्पे । विकल्पे दुर्मना इव ॥ अक्का भ्रूसंज्ञयावादी—दधस्थं तस्य वैरीणं ॥ ८३ ॥ अचलेनाचलेनेवो—पर्याक्रांतो विमूढधीः

॥ न निर्गंतुं न च स्थातुं । शशाक नृपनंदनः ॥ ९४ ॥ इभ्योऽवदत्प्रिये नासं—स्खलतः श-
कुनानि मे ॥ ज्ञाने जानंति मच्चित्तं । तानि त्वद्विरहास्पदं ॥ ९५ ॥ सस्नौ तल्पे सचेलोऽहं ।
निशीति स्वप्नमीक्षितं ॥ सत्यीकर्तुमिह स्नास्या—म्यद्य तत्प्रगुणीभव ॥ ९६ ॥ सा बभाषे प्र-
भो स्नातुं । स्नानपीठमलंकुरु ॥ मा विनश्येदियं तूली । भोगार्हा स्नानवारिणा ॥९७॥ शठो
जातहठोऽवादी—दचलस्तां मनस्विनि ॥ अद्य स्नातव्यमत्रैव । मया स्वप्नानुरोधतः ॥९८॥
सार्थेशगोत्रदेवीव । पुत्रीं शास्तिस्म कुट्टिनी ॥ वत्से कोऽयं स्वभावस्ते । पत्युः प्रत्युत्तरार्पणं
॥ ९९ ॥ अवशा सा तमभ्यज्य । स्नपयामास पाथसा ॥ तेनाधः पतता छन्नः । सद्यःस्ना-
पितोऽपि सः ॥ १०० ॥ जुगुप्समानः स्वं कर्म । वणिग्मलजलाविलः ॥ तत्र सोऽस्थात्क्षणं ग्रा-
म—स्रोतसीव सितच्छदः ॥ १ ॥ यन्नाव्यं तद्भवत्वाशु । न तु स्थातुमिहौचिती ॥ ध्यात्वेति भू-
पभूर्निर्य—न्नेवारुध्यत तद्भटैः ॥२॥ चौरवद् दृढबद्धं तं । कृतांत इव दारुणः ॥ ऊचिवानचलः
कुर्वे । किमन्यायकृतस्तव ॥ ३ ॥ समयेऽपचिकीर्षुस्तं । मूलदेवोऽब्रवीदिति ॥ यत्क्रियेताभि-
पन्नस्य । कुरु घातं च तन्मम ॥ ४ ॥ व्यमृशद्देवदत्तांतः । साधूक्तं दयितेन मे ॥ नीचैर्नमन्नयं

चापः। श्वारातिं हनिष्यति ॥ ५ ॥ स प्रोचे याहि युक्तोऽसि । मुंचेस्त्वमपि जातु मां ॥ पुच्छ-
कं भगणस्यैव । धिग् निःसत्वं वणिग्जनं ॥ ६ ॥ आबद्धशकुनग्रंथि-र्निर्गत्य नगराद्बहिः ॥
स्नातः सरसि सोऽचाली-त्पुरं बेन्नातटंप्रति ॥ ७ ॥ एकस्मादचलात् त्रस्तः। पुरोऽचलच्चयाकु-
लां ॥ वीक्ष्याटवीं सशंकासौ । सहायं कंचिदैहत ॥ ८ ॥ तावत्तत्रागतः कोऽपि । सबलः स-
क्थुशंबलात् ॥ विप्रस्तेन क्व यासीति । बभाषे मुदितात्मना ॥ ९ ॥ यामि वीरप्रधानाख्यं ।
ग्रामं बेन्नातटांतिके ॥ इत्युक्तिशालिना तेन । मूलदेवः सहाचलत् ॥ १० ॥ वार्ताविनोदतोऽ-
न्योन्यं । जातसौहृदयोस्तयोः ॥ क्षीरोदस्पर्द्धि मध्याह्ने । ययौ दृग्गोचरं सरः ॥ ११ ॥ मरा-
ललीलया तत्र । कृतकेलिर्न्यलीयत ॥ अपाथेयः पथश्रांतो । मूलदेवस्तरोस्तले ॥ १२ ॥ स्वो-
दरप्रमितान् सक्थू-नशक्तो दानकर्मणि ॥ क्षणादालोकयामास । भोक्तुकामोंजसा द्विजः
॥ १३ ॥ रीतिज्ञोऽप्ययमद्यापि । किं नाह्वयति मामिति ॥ कुमारे विमृशत्येवं । सक्थूनेकोऽप्य-
भुंक्त सः ॥१४॥ भुक्त्वा प्रचलीते विप्रे । राजपुत्रे व्यभावयत् ॥ नाद्याल्पसक्थुरेषोऽदा-द्भोजनं
श्वस्तु दास्यति।१५।न द्वितीये तृतीयेऽपि । दिवसे तमबूभुजत् ॥ निकाककुलजातेषु। प्रायो

दानकथा वृथा ॥ १६ ॥ अथोत्तीर्णकांतारं । कुमारं न्यगदद् द्विजः ॥ स्वस्त्यस्तु सौम्य ते यास्या—म्यहं तु वर्त्मनामुना ॥ १७ ॥ अवदन्मूलदेवस्त—मियं द्वादशयोजना ॥ गृहांगणमिवालंघि । त्वत्सहाय्यान्मयाटवी ॥ १८ ॥ ध्रुवं त्वमुपकारार्हः । किं कुर्वे निर्धनोऽधुना ॥ मूलदेवं नृपं श्रुत्वा । विप्र क्षिप्रं समापतेः ॥ १९ ॥ अथासौ मूलदेवेन । नामपृष्टोऽब्रवीदिति ॥ लोकैर्निर्घृणशर्माख्यां । लंभितः सिद्धडोऽस्म्यहं ॥ २० ॥ द्विजः काको जनैर्युक्तं । स्मर्यते भोजनक्षणे ॥ बंधून् लब्ध्वाल्पमन्नं यो ऽपि । नोक्तुमाह्वयतीह यः ॥२१॥ द्विजा दंता वसंत्यास्ये । युक्तं यन्नन्दयमाप्यते ॥ स्वेन मृध्नंति यद्भंति । जिह्वायास्त्वौरसं रसं ॥ २२॥ विधुर्धत्ते द्विजे शाख्यां । युक्तं यातोदयो ह्यसौ ॥ सौहित्यं जीवलोकस्य । करोति स्वकरामृतैः ॥ २३ ॥ आत्मंभरिरपूर्वोऽयं । मम मार्गसुहृद् द्विजः ॥ अस्य नामांतरं तन्व—न्न मृषावाग्महाजनः ॥ ॥ २४ ॥ औदार्यभूरिति ध्यायन् । बेन्नातटपुरंप्रति ॥ प्रस्थितो भूपभूरेकं । विवेश ग्राममध्वनि ॥ २५ ॥ पंचभिः कुलकं ॥ भ्रांतभूरिगृहः प्राप । कुल्माषांस्तत्र भिक्षुवत् ॥ कुल्माषास्तेऽभवंस्तस्य । मोदकेभ्यः प्रमोदकाः ॥ २६ ॥ अनाकुलमनास्तेषां । भक्षणे क्षुधितोऽपि सः ॥ व्य-

भावयदुपग्राम—सरस्तीरं गतः कृती ॥ २७ ॥ क तन्मे पैतृकं राज्यं । क सावंतीविलासिता ॥ क च कुग्राममभिक्षेयं । सर्वमीषत्करं विधेः ॥ २८ ॥ एकः स दिवसो यस्मि—न्नार्थिव्रातमजीवयं ॥ एकोऽयं दिवसो यत्र । नोदरंभरिरप्यहं ॥ २९ ॥ उपवासत्रयांतेऽमी । कुल्माषा लेभिरे मया ॥ तत्कस्मैचिददत्वैतान् । किं रंक इव यद्मि ॥ ३० ॥ योऽपि सोऽपि समायातो । भिक्षुस्तोषाय संप्रति ॥ सत्पात्रं प्राप्यते येन । क तादृग्भाग्यमस्ति मे ॥ ३१ ॥ एवं भावयतस्तस्या—कृष्टः पुण्यैरिवाययौ ॥ तपोराशिरिवांगस्थः । साधुर्मासमुपोषितः ॥ ३२ ॥ राज्यं रोरः सुतं वंध्य—श्चक्षुरंधः श्रुतं जडः ॥ वाचं मूको निधिं दुःस्थ । इव तं प्राप्य सोऽहृषत् ॥ ३३ ॥ अजस्थाने गजप्रासे—र्मणिलाभाद् दृषत्पदे ॥ स्वं धन्यं मन्यमानोऽसौ । मुनिं नत्वा व्यजिज्ञपत् ॥ ३४ ॥ त्वादृक्षा नास्त्यसौ भिक्षा । पुनर्भावं प्रमाणयन् ॥ गतकल्मषकुल्माषान् । गृहाणानुगृहाण मां ॥ ३५ ॥ विवर्धयिषुरानंदं । दातुर्दांतमना मुनिः ॥ दौःस्थ्याब्धिं तरितुं पोत—मिव पात्रं पुरो दधे ॥ ३६ ॥ मुनये मूलदेवेऽथ । ददाने दानमंजसा ॥ अवदद्देवता व्योम्नि । तत्पुण्यस्येव साक्षिणी ॥ ३७ ॥ धन्यानां हि नराणां स्युः । कुल्माषाः

गणिका देवदत्तेन—सहस्रं
साधुपारणे ॥ यद्याचसे परार्धेन । मूलदेव ददामि तत् ॥ ३८ ॥ गणिका देवदत्तेन—सहस्रं
राज्यमस्तु मे ॥ इति तस्मिन्नधियाने । पुनः प्रोवाच देवता ॥ ३९ ॥ सप्तमेऽहनि राज्यं ते ।
देवदत्ता तु सा क्रमात् ॥ भविष्यत्येव पुण्यं हि । क्रमेणैव विपच्यते ॥ ४० ॥ सोऽथ कृत्वा
पुनर्भिक्षा—प्राप्तकुल्माषभोजनं ॥ सांयाह्नि शनैर्गच्छ—न्नाप बेन्नातटं पुरं ॥ ४१ ॥ प्रसुप्तः
पांथशालायां । परिपूर्णं ददर्श सः ॥ निशावसाने शशिनं । विशंतं वदनोदरे ॥ ४२ ॥ कश्चि-
त्कार्पटिकोऽप्येवं । तदा स्वप्नं व्यलोकत ॥ अवोचच्च सतीर्थ्यानां । निद्रामुकुलिताक्षरं ॥४३॥
तेऽप्यूचुः स्वप्नदृष्टस्या—नुभावान्मृगलक्ष्मणः ॥ त्वं लप्स्यसेऽद्य भिक्षायां । मंरुकं गुरुमंकितं ॥
॥ ४४ ॥ स्वप्नचिंतामणौ काची—यतस्तान्मंदमेधसः ॥ निंदन्नुदारमारामं । मूलदेवो ययौ प्र-
गे ॥ ४५ ॥ मालिकं सर्वकर्मज्ञो—ऽप्रीणात्पुष्पप्रचायतः ॥ तस्मात्पुष्पफलान्याप्य । ययौ स्वप्न-
ज्ञधाम सः ॥ ४६ ॥ दत्वा पुष्पफले पृष्टः । स्वप्नार्थं स विचक्षणः ॥ आचख्यौ तदहं वच्मि ।
जायसे चेन्ममातिथिः ॥ ४७ ॥ तथेति प्रतिपेदानं । विहितस्नानभोजनं ॥ रूपस्याधिभुवा स
स्व—पुत्र्या तमुदवाहयत् ॥ ४८ ॥ ततोऽवदच्च शीतांशु—पानस्वप्नानुभावतः ॥ सप्तमेऽहनि

लब्धासे ।.वत्स राज्यमिह स्थितः ॥ ४ए ॥ स्वप्नस्य देवतावाचि । साचिव्यं चिंतयन्नसौ ॥
निष्कंपश्चंपकस्याधः । प्रसुप्तः सप्तमेऽहनि ॥ ५० ॥ निधान इव निष्पत्रे । निष्पुत्रे नृपतौ मृ-
ते ॥ तदा तत्र पुरि प्राज्या । राज्यायंतिस्म गोत्रिणः ॥ ५१ ॥ यस्मै राज्यं दास्यतीदं । स
राजास्त्विति वादिन्निः ॥ प्रधानैरधिवास्याथ । मुमुचे दिव्यपंचकं ॥ ५२ ॥ कुमाराः कृतशृंगा-
राः । क्षत्रमंत्रिद्विजन्मनां ॥ पुरस्तस्य चरंतिस्म । स्वैरं विचरतः पुरे ॥ ५३ ॥ राज्यार्हं कंचि-
दप्राप्य । पुरस्यांतः पुराद्बहिः ॥ पंच दिव्यान्ययुस्तत्र । यत्र सुप्तोऽस्ति नृपनूः ॥ ५४ ॥ तं
वीक्ष्याहेषि तार्क्ष्येण । करेण च करेणुना ॥ स स्वस्कंधे समारोपि । पर्जन्येनेव गर्जता ॥५५॥
दुधुवे चामराभ्यां च । बन्नेणोपरि पप्रथे ॥ अर्घस्तस्य वितेने च । नृंगारेण नवातिथेः ॥५६॥
मौलिस्पृष्टमहीपीठ—लुठिताशेषशेखरैः ॥ सामंतैः स नमश्चक्रे । चिरं नंदेति वादिन्निः ॥
॥ ५७ ॥ श्रेणिस्थजनतानेत्र—निर्मितांनोजतोरणे ॥ प्राविशन्नगरे मूल—देवो देवेंद्रलीलया ॥
॥ ५७ ॥ सन्नासीनः स सामंतैः । साम्राज्यायाज्यषिच्यत ॥ अंतर्हिता तदा सैव । बन्नाषे
व्योम्नि देवता ॥ ५ए ॥ रेमे यः किल राजकुंजरकुले गौडेषु गर्जस्ततः । सत्क्रीमान्निरवंति-

गणिका देवदत्तेन—सहस्रं
साधुपारणे ॥ यद्याचसे परार्धेन । मूलदेव ददामि तत् ॥ ३८ ॥ सप्तमेऽहनि राज्यं ते ।
राज्यमस्तु मे ॥ इति तस्मिन्नधियाने । पुनः प्रोवाच देवता ॥ ३९ ॥ सोऽथ कृत्वा
देवदत्ता तु सा क्रमात् ॥ भविष्यत्येव पुण्यं हि । क्रमेणैव विपच्यते ॥ ४० ॥ प्रसुप्तः
पुनर्भिक्षा—प्राप्तकुल्माषभोजनं ॥ सांयाह्नि शनैर्गच्छ—न्नाप बेन्नातटं पुरं ॥ ४१ ॥ कश्चि-
पांथालायां । परिपूर्णं ददर्श सः ॥ निशावसाने शशिनं । विशंतं वदनोदरे ॥ ४२ ॥
त्कार्पटिकोऽप्येवं । तदा स्वप्नं व्यलोकत ॥ अवोचच्च सतीर्थ्यानां । निद्रामुकुलिताक्षरं ॥४३॥
तेऽप्यूचुः स्वप्नदृष्टस्या—नुभावान्मृगलक्ष्मणः ॥ त्वं लप्स्यसेऽद्य भिक्षायां । मंडकं गुडमंडितं ॥
॥ ४४ ॥ स्वप्नचिंतामणौ काची—यतस्तान्मंदमेधसः ॥ निंदन्नुदारमारामं । मूलदेवो ययौ प्र-
गे ॥ ४५ ॥ मालिकं सर्वकर्मज्ञो—ऽप्रीणात्पुष्पप्रचायतः ॥ तस्मात्पुष्पफलान्याप्य । ययौ स्वप्न-
ज्ञधाम सः ॥ ४६ ॥ दत्वा पुष्पफले पृष्टः । स्वप्नार्थं स विचक्षणः ॥ आचख्यौ तदहं वच्मि ।
जायसे चेन्ममातिथिः ॥ ४७ ॥ तथेति प्रतिपेदानं । विहितस्नानभोजनं ॥ रूपस्याधिभुवा स
स्व—पुत्र्या तमुदवाहयत् ॥ ४८ ॥ ततोऽवदच्च शीतांशु—पानस्वप्नानुभावतः ॥ सप्तमेऽहनि

लब्धासे । वत्स राज्यमिह स्थितः ॥ ४९ ॥ स्वप्नस्य देवतावाचि । साचिव्यं चिंतयन्नसौ ॥ निष्कंपश्चंपकस्याधः । प्रसुप्तः सप्तमेऽहनि ॥ ५० ॥ निधान इव निष्पत्रे । निष्पुत्रे नृपतौ मृते ॥ तदा तत्र पुरि प्राज्या । राज्यायंतिस्म गोत्रिणः ॥ ५१ ॥ यस्मै राज्यं दास्यतीदं । स राजास्त्विति वादिभिः ॥ प्रधानैरधिवास्याथ । मुमुचे दिव्यपंचकं ॥ ५२ ॥ कुमाराः कृतशृंगाराः । क्षत्रमंत्रिद्विजन्मनां ॥ पुरस्तस्य चरंतिस्म । स्वैरं विचरतः पुरे ॥ ५३ ॥ राज्यार्हं कंचिदप्राप्य । पुरस्यांतः पुराद्बहिः ॥ पंच दिव्यान्ययुस्तत्र । यत्र सुप्तोऽस्ति नृपभूः ॥ ५४ ॥ तं वीक्ष्याहेषि तार्क्ष्येण । करेण च करेणुना ॥ स स्वस्कंधे समारोपि । पर्जन्येनेव गर्जता ॥५५॥ दुधुवे चामराभ्यां च । छत्रेणोपरि पप्रथे ॥ अर्घस्तस्य वितेने च । भृंगारेण नवातिथेः ॥५६॥ मौलिस्पृष्टमहीपीठ—लुठिताशेषशेखरैः ॥ सामंतैः स नमश्चक्रे । चिरं नंदेति वादिभिः ॥ ॥ ५७ ॥ श्रेणिस्थजनतानेत्र—निर्मितांभोजतारणे ॥ प्राविशन्नगरे मूल—देवो देवेंद्रलीलया ॥ ॥ ५८ ॥ सभासीनः स सामंतैः । साम्राज्यायाभ्यषिच्यत ॥ अंतर्हिता तदा सैव । बभाषे व्योम्नि देवता ॥ ५९ ॥ रेमे यः किल राजकुंजरकुले गौडेषु गर्जंस्ततः । सत्क्रीडाभिरवंति-

ऩूपतिसत्तां संशोत्नयामास यः ॥ दानोदारमतिर्यतिद्विपकरे योऽयोजयत्स्वं करं । सत्यं सोऽयमनेकपो विजयते श्रीमूलदेवो नृपः ॥ ६० ॥ ततः स ऩूपतिस्ताय–मानो जनकवत्प्रजाः ॥ अवंतीशेन सौहार्दं । चक्रे चक्रेश्वरः श्रिया ॥ ६१ ॥ सोऽथ निर्घृणशर्माख्यो । विप्रस्तत्र समाययौ ॥ दविष्टस्यैव तद्वास–ग्रामं तस्मै ददौ नृपः ॥ ६२ ॥ तदानीं देवदत्तापि । मूलदेवविरूंबनां ॥ साक्षान्निरीक्ष्य चुक्रोशा–चलं क्रोशायतस्वरा ॥ ६३ ॥ रे त्वया किमुद्धूढास्मि । यन्नान्यमिह मृष्यसि ॥ धनांध मद्गृहं मुंच । नो चेत्त्यक्षसि जीवितं ॥ ६४ ॥ तन्निर्वास्य गृहादेव–दत्ता गत्वोपऩूपतिं ॥ अयाचत प्रसादं तं । न्यासीकृतवरं तदा ॥ ६५ ॥ ददामि ते किमित्युक्त–वति ऩूऩृति सा जगौ ॥ मूलदेवं विनास्वामि—न्न प्रसाद्यः पुमान् मम ॥ ६६ ॥ कुपितेव ब्रुवाणासि । किमित्युक्ता नृपेण सा ॥ जगादाचलदुर्वृत्तं । ज्वलत्यशनिवत्क्रुधा ॥६७॥ अथाहूयाचलं ऩूपोऽ–ऽभ्यधात् किं रे पुरे मम ॥ नेतासि कुरुषे येन । निग्रहानुग्रहौ स्वयं ॥ ॥६८॥ असूयन्मूलदेवाय । त्वं वध्योऽसीति ऩाषिणः ॥ ऩूपालव्यालतः सैव । कथंचन ररक्ष तं ॥ ६९ ॥ मद्दृष्टौ तमनानीय । मायासीरिति ऩूऩुजः ॥ आज्ञौषधं पुराद्व्याधि–मिव तं नि-

रवासयत् ॥ ७० ॥ मूलदेवं ततोऽन्वेष्टु—मचलः प्रचचाल सः ॥ न तु क्वचन तं प्राप । निः-पुण्य इव शेवधिं ॥ ७१ ॥ दध्यौ च मूलदेवोऽपि । रहितं देवदत्तया ॥ श्यामया तारयां चक्षु—रिव राज्यं वृथा मम ॥ ७२ ॥ कलाः पंचदश यांति । यांति वा चंद्रमंमलं ॥ एका पुन-र्ध्रुवा तिष्टे—न्न चंद्रस्तां विना यतः ॥ ७३ ॥ एवं मम मनः का का । कामिनी नागतागता ॥ तस्थौ सा तु स्थिरीभूय । न मनस्तां विना यतः ॥ ७४ ॥ सोऽथ दूतमुखेनैव—मवंतीश्व-रमालपत् ॥ चौरी मच्चेतसो देव—दत्ता वसति ते पुरे ॥ ७५ ॥ तामत्र प्रेषयेर्येन । निबि-मस्नेहबंधनां ॥ रुणध्मि स्वमनोगुप्तौ । नान्यस्तस्या हि निग्रहः ॥ ७६ ॥ ज्ञात्वा तदाशयं प्रैषी—त्तां ततोऽवंतीनायकः ॥ देवतादत्तसाम्राज्यः । स ह्यनुलंघ्यशासनः ॥ ७७ ॥ देवदत्ता रथा-रूढा । ययौ बेन्नातटं पुरं ॥ प्रावेश्यत च भूपेनां—तःपुरं परमोत्सवैः ॥ ७८ ॥ वियोगचित्रा-तापार्ता । चिरात्प्राप्य हृदीश्वरं ॥ स्वात्यंभ इव शस्यश्रीः । सापि प्रोल्लासमाललत् ॥ ७९ ॥ इतश्च भूतभांमोऽगा—दचलः पारसं तटं ॥ आत्ततद्भांमसंभारः । प्राप बेन्नातटं पुरं ॥ ८० ॥ उपादायामुपादाय । स्थालं रत्नौघपूरितं ॥ उपतस्थे महीनाथं । सोऽथ द्वाःस्थनिवेदितः

॥ ७१ ॥ दूरादवनतं प्रीति-प्रांजलं पटुचेतनः ॥ अचलोऽयमिति क्षिप्रं । क्षितीशस्तमलक्षयत्
॥ ७२ ॥ मूलदेवं तु भूपालं । नोपलक्षयतिस्म सः ॥ को लक्षयति वैशाखे । शाखिनं फाल्गु-
नेक्षितं ॥ ७३ ॥ अजानतेव भूपेन । पृष्टे तस्याभिधादिके ॥ उच्छ्वसन्निव हर्षेण । सवृत्तमच-
लो जगौ ॥ ७४ ॥ वदनस्थितहर्षेण । हृदि न्यासीकृतक्रुधा ॥ शुल्कार्धीकरणाच्चक्रे । प्रसाद-
स्तस्य भूभुजा ॥ ७५ ॥ अस्माकं दानचौर्येण । स्यात्प्राणांतोऽपि निग्रहः ॥ शेषार्धेन ततश्छन्न
। विधेयमिति चोच्यते ॥ ७६ ॥ दानमंडपिकां गत्वा । वस्तु भांडान्यदर्शयत् ॥ यावत्पंच-
कुलायासौ । तावत्तत्राययौ नृपः ॥ ७७ ॥ तव किं शुल्क निर्वाहो-ऽभवन्नो चेत्करोम्यहं ॥
इत्युक्ते भूभुजा हर्षा-दचलो द्विगुणोऽभवत् ॥ ७८ ॥ स्वामिंस्तव प्रसादेन । मंक्षु पंचकुलं
मम ॥ सर्वं निर्वाहयामास । शुल्कमेवमुवाच सः ॥ ७९ ॥ अथ भ्रूसंज्ञया राज्ञा । शौल्कि-
काः प्रगुणीकृताः ॥ मर्माणीव पुनस्तस्य । वस्तुभांडान्यशोधयत् ॥ ८० ॥ राज्ञोचे भोः कि-
मिक्षध्वे । मृषाभाषी हि नाचलः ॥ तथापि यदि संदेहो । दार्यतां भांडवस्तु तत् ॥ ८१ ॥
तैस्तथा विहिते वस्तु-भांडाद्बहिरसारतः ॥ गुप्तं तस्यांतरात्मेव । सारं वस्तु विनिर्ययौ

॥ ९२ ॥ अथ रोषेण संहार—रुद्ररौद्रवपुर्नृपः ॥ सर्वं वस्तु स्वमुद्रांकं । कृत्वाचलमबंधयत् ॥ ९३ ॥ वस्तुव्ययेन चेन्मुच्ये । जीवंस्तद्भाग्यवानहं ॥ चिंतयेति चकंपेऽसौ । कंऊयेव जरद्गवः ॥ ९४ ॥ क्ष्मापः स्वभवनं प्राप । नीतो बद्धः स चाग्रतः ॥ किमेवं कुरुषे कूट—मित्युक्तो भूभुजाभ्यधात् ॥ ९५ ॥ विश्वस्तवंचनं माया—रचनं वचनं मृषा ॥ गुरून् विनापि विधेयं । वणिजां स्यादयत्नजाः ॥ ९६ ॥ अधीते यत्किंचित्तदपि मुषितुं ग्राहकजनं । मृदु ब्रूते यच्चा तदपि विवशीकर्तुमपरं ॥ प्रदत्ते यत्किंचित्तदपि समुपादातुमधिकं । प्रपंचोऽयं वृत्तेरहह गहनः कोऽपि वणिजां ॥ ९७ ॥ इत्युक्तवंतमंतस्थ—नयं तमनुयुक्तवान् ॥ किं भोः प्रत्यभिजानासि । मां न वेति नरेश्वरः ॥ ९८ ॥ को वेत्ति भानुवन्न त्वां । नत्वा तेनेति भाषिते ॥ भूपोऽभ्यधत्त चाटूनि । मुंच जल्प यथातथं ॥ ९९ ॥ तर्हि सम्यङ्न जानामी—त्युक्तवत्यचले भिया ॥ साक्षादिव श्रियं देव—दत्तामानाययन्नृपः ॥ २०० ॥ ह्रीणस्तां वीक्ष्य तं जानन् । मूलदेवमिलापतिं ॥ संजातद्विगुणातंको । बभाषे भूभुजाचलः ॥ १ ॥ मुंचेः कदापि मामेवं । त्वया प्रोक्तं तदा ततः ॥ प्राप्तोऽपि निग्रहस्थानं । मया संप्रति मुच्यसे ॥ २ ॥ अथ

श्रथितबंधस्य । तस्य प्रत्यार्पयन्नृपः ॥ समस्तमपि तद्वस्तु । न संतश्छलघातिनः ॥ ३ ॥ व्य-
जिज्ञपन्नृपं सार्थ—नाथो नाथ तथा कुरु ॥ यथावंतीश्वरोऽवंत्यां । प्रवेशं मेऽनुमन्यते ॥ ४ ॥
पृथिवीपुरुहूतोऽथ । दूतं तस्मै ददौ निजं ॥ दूतोक्त्यावंतीनाथोऽपि । तमवंत्यामवीविशत्
॥ ५ ॥ अथान्यदा मूलदेवं । महीनाथं सदःस्थितं ॥ एत्य व्यजिज्ञपन् पौरा—श्चौराकुलि-
तचेतसः ॥ ६ ॥ यच्छास्त्रेषु श्रुतं पूर्वं । न तु प्रत्यक्षमीक्षितं ॥ तदेव चौर्यमद्य श्वः । पुरे तव
भवत्यहो ॥ ७ ॥ समं समस्तशृंगारै—श्चौरैरात्ते धनेऽधुना ॥ निर्ग्रंथेभ्यः परं वेणि—श्मश्रु-
णास्माकमस्ति भित् ॥ ८ ॥ तद्देवो यततामस्मा—नस्मात्तस्कर संकटात् ॥ त्रातुं ददातु वा
स्थानं । सुखवासाय किंचन ॥ ए ॥ अथ भूपः स्फुरत्कोपः । प्रोवाचारक्षकानिति ॥ रे पुरे
चौरिका केयं । भवत्सु प्रभवत्स्वपि ॥ १० ॥ ते प्रोचुरेक एवासौ । चौरोऽस्ति न तु भूरयः ॥
परं स दुर्ग्रहोऽस्माकं । मनः क्लीबात्मनामिव ॥ ११ ॥ स चौरो दैत्यवत्क्रूरो । न लेभे न च
लप्स्यते ॥ अस्ति नः केवलं रात्रि—जागरो रोगवृद्धये ॥ १२ ॥ नृपो दध्यावमीभिः किं । व-
राकैर्हंत सिध्यति ॥ मयैव जेष्यते चौरः । श्रीरामेणेव रावणः ॥ १३ ॥ मा धत्त तस्करभयं ।

जवताञ्जन्नतां धृतिः ॥ इत्युक्त्वा बहुमानेन । व्यसृजन्नागरान्नृपः ॥ १४ ॥ स्वयं च सायमा-
धाय । सहायमिव साहसं ॥ नीलांबरधरो ध्वांता—धिदैवतमिवाचलत् ॥ १५ ॥ भ्रमन् पुरे-
ऽन्वितो वीक्षां—चक्रे वक्रेण चक्षुषा ॥ चौरं क्वापि न तु प्राप । क्ष्मापः पापमिवोत्तमे ॥ १६ ॥
भ्रमंभ्रमं श्रमात्खिन्न—मना देवकुले क्वचित् ॥ अनाथ इव नूनाथः । शिश्ये कपटनिद्रया
॥ १७ ॥ पापप्रचंडदोर्दंडो । मंडिकस्तस्कराग्रणीः ॥ तावत्तत्रायया रक्ष । इव भ्राम्यंस्तमोब-
लात् ॥ १८ ॥ प्रभुः प्रेष्यमिव क्ष्मापं । घृष्ट्वा सावज्ञमंह्रिणा ॥ सोऽजागरयदूचे च । कोऽसि
त्वमिति दुर्मतिः ॥ १९ ॥ अकालचर्यया चौरं । ज्ञात्वा तं नृपतिः कृती ॥ शाठ्यादूचे जन्म-
दुःस्थो । मठेऽस्मिन् शयितोऽस्म्यहं ॥ २० ॥ स्नानं कूपेऽशनं सत्रा—गारे स्वापः पुनर्मठे ॥
दिग् दैवं दरिद्राणा—मपि लोके जिजीविषा ॥ २१ ॥ चौरः प्रोचे मयि प्राप्ते—ऽप्येवं नोः
किमु खिद्यसे ॥ हस्तस्थिते सुरमणौ । का दारिद्र्यविहस्तता ॥ २२ ॥ वत्सागच्छ मया साकं ।
यदि संपदमिच्छसि ॥ इत्युक्त्वा तं सहादाय । सोऽचलच्चललोचनः ॥ २३ ॥ लक्ष्मीलीलारविं-
देऽसौ । कस्यापीभ्यस्य मंदिरे ॥ दत्तखात्रो मणिस्वर्ण—पेटाः प्राचीकटद्बहिः ॥ २४ ॥ दृष्ट्वा

तच्चेष्टितं दृष्ट्वा—धरोऽपि क्ष्मापतिः क्रुधा ॥ तन्मूलस्थानजिज्ञासुः । प्रतिचक्रे न किंचन
॥ २५ ॥ पेटा उवाह वाहीक । इव तास्तच्छिरा नृपः ॥ कार्यसिध्ध्यै शठा दस्यो—रपि दास्यं
प्रकुर्वते ॥ २६ ॥ नृपेनानुगतश्चौरो । निर्गत्य नगराद्बहिः ॥ क्रीडास्थानं यमस्येव । जीर्णोद्या-
नं रयादयात् ॥ २७ ॥ तत्र नानानिकुंजांतः । शिलाछन्नमुखं सुखं ॥ स नूमिगृहमुद्घाट्य ।
विवेश सह भूभुजा ॥ २८ ॥ तत्रापश्यत्कनीमेकां । नृपो रूपवतीं पुरः ॥ सर्वा अपि तिथी
राकाः । कुर्वतीं स्वमुखेंदुना ॥ २९ ॥ तद्दर्शनसुधाकुंड—क्रीडया प्राप भूपतिः ॥ विहारजारजं
खेदं । वमन् समधिकं सुखं ॥ ३० ॥ न वयं तस्करा एत—त्तव दौःस्थ्यच्छिदो कृतं ॥ तन्मुंच
जारमित्युक्त-स्तेन पेटां नृपोऽमुचत् ॥ ३१ ॥ स्वसारं तत्समादाय । स्वसारं तां मलिम्लुचः
॥ क्षालयास्यातिथेः पादा—वित्यादिक्षदलक्षधीः ॥ ३२ ॥ क्रौर्यनिर्जितकृत्याशा । दुःकृत्याच-
रणे रता ॥ उपकूपतटं भूप—स्यासनं समतिष्टिपत् ॥ ३३ ॥ तत्रासीनस्य सा राज्ञः । क्षाल-
यंती मृदू पदौ ॥ विचक्षणा लक्षयंती । लक्षणानि व्यजावयत् ॥ ३४ ॥ निपात्यंतेस्म कूपेऽ-
स्मिन् । ये पुरा तेऽपरे जनाः ॥ अयं लोकोत्तरः कोऽपि । पुनर्नरशिरोमणिः ॥ ३५ ॥ देया

कामं निहत्यामुं । लक्ष्मणामुदरंभरिं ॥ पताका पातकावासे । हा मया विश्ववामया ॥ ३६ ॥ जीवन्नसौ कदापि स्या—न्मम भर्तापि भाग्यतः ॥ यद्वा केयं दुराशा मे । क घुकी क च भास्करः ॥ ३७ ॥ तथापि रक्षणीयोऽयं । माभूज्जगदनायकं ॥ ततस्तं सा जगौ याहि । याहि भो मा मृथा वृथा ॥ ३८ ॥ जिघांसुः समये भूप—श्चौरं शूराग्रणीरपि ॥ अपासरत्ततः स्थाना—त्त्वरितत्वरितैः पदैः ॥ ३९ ॥ रक्षितोऽयं मया मृत्यो । रक्ष्यं स्वस्याथ दूषणं ॥ ध्यात्वेति पूच्चक्रे सापि । गतः सैष ममाग्रतः ॥ ४० ॥ प्राप्तोऽहं रे क यासीति । प्रजल्पंस्तस्कराधमः ॥ कंकखड्ग करे कृत्वा । दधावे तस्य पृष्ठतः ॥ ४१ ॥ वीक्ष्यायातमुदस्त्रं त—मतुन्नमिव वृश्चिकं ॥ चत्वरस्थं शिलास्तंभ—मवष्टंभ्य नृपः स्थितः ॥ ४२ ॥ कोपांधिताक्षश्चौरोऽपि । समुपेत्य पुमानिति ॥ भ्रांत्या खड्गेन कदली—कांडवत्स्तंभमभिनत् ॥ ४३ ॥ तस्मिन्निवृत्ते चौराक्षि—निवृत्तात्मा नरेश्वरः ॥ निजं निवासमासाद्य । निशाशेषमतीयिवान् ॥ ४४ ॥ क द्रक्ष्यामि पुनश्चौर—मिति जातकुतूहलः ॥ राजा विनिर्ययौ राज—पाटिकाव्याजतः प्रगे ॥ ४५ ॥ नृपो दिक्षु क्षिपंश्चक्षु—रपश्यत्पश्यतोहरं ॥ तमेव नून्नकृत्कर्म । कुर्वाणं दौष्यिकापणे ॥ ४६ ॥ राजा

मास्म भूः ॥ संध्याभ्रवज्जवद्दोषाः । क्षणरागा हि भूभुजः ॥ ६ ॥ श्रेयःप्रयोजनां प्राची–मिव
प्राक् पद्मिनीपतिः ॥ सरागां त्वामसौ राग—सागरः संगमिष्यति ॥ ७ ॥ यदादिशति य-
द्दत्ते । यद् ब्रूते यच्च चेष्टते ॥ त्वय्यसौ प्रथमस्नेहा—त्तत्सर्वं मे निवेदयेः ॥ ८ ॥ सापि
सर्वं तथा चक्रे । तदुक्तं मंत्रिपुंगवः ॥ लिलेख पत्रके शेषं । दीर्घदर्शी न सीदति ॥ ए ॥
गौरवं लज्जमाना सा । पत्युः सर्वोत्तरं चिरं ॥ मुक्ताफलं शुक्तिरिव । क्रमाद्गर्भमधारयत् ॥
॥ १० ॥ कालेन तां विसस्मार । भूपो विद्यामिवालसः ॥ अवश्या यस्य राज्ञश्च । स्नेहस्तिष्ठति
किं चिरं ॥ ११ ॥ मंत्री निन्ये निजं गेहं । गुर्विणीं गौरवेण तां ॥ गतिः पितृगृहं स्त्रीणां ।
। द्विधापि पतिधिक्कृतौ ॥ १२ ॥ अशेषदोषनिर्मुक्ते । दिवसे शिवसेवधौ ॥ सुरेंद्रदत्तनामानं
। सा सुखं सषुवे सुतं ॥ १३ ॥ अग्निकः पर्वतश्चैव । वह्ली सागरस्तथा ॥ दासेया इति च-
त्वार—स्तेनैधांचक्रिरे सह ॥ १४ ॥ अन्योऽन्यं तस्य तेषां च । तुल्याहजन्मनामपि ॥ स-
हकारकरीराणा—मिव भेदो महानभूत् ॥ १५ ॥ कलाविलासभवना—द्गुरोरध्याप्यतेस्म
सः ॥ मातामहेन संजाता—वसरः सकलाः कलाः ॥ १६ ॥ अंगारमिव शृंगारं । महिला

ग्रहिला इव ॥ विषदिग्धमिव स्निग्धं । क्रीडाः पीडा इवाखिलाः ॥ १७ ॥ अग्नितापमिवा-
लापं । भोगान् रोगानिव स्मरन् ॥ अधीयन्नेकतानोऽभूत् । श्रुत एव स लालसः ॥ १८ ॥
विश्वाधिक्येन विश्वासु । कलासु विललास सः ॥ जातकातरनिर्वेदे । धनुर्वेदे विशेषतः ॥
॥ १९ ॥ तत्रापि स तथा धीरो । राधावेधे व्यजृंभत ॥ यथा ययौ धनुष्मत्सु । पार्थस्याथा-
र्घतां यशः ॥ २० ॥ तस्य साधयतो राधा—वेधं विद्यागुरोः पुनः ॥ दासेयाः स्खलनं चक्रु—र्न
तु चुक्षोभ सोऽजयः ॥ २१ ॥ द्वाविंशतिः कुमारास्ते—ऽधीयानाः शिथिलादरं ॥ धर्षिता गु-
रुणा रुक्ष—वाचस्तं प्रतिचुक्रुशुः ॥ २२ ॥ आचार्यः शिक्षयामास यदि कंबादिना मनाक्
॥ तदा जीवन्मृतं चक्रु—स्तं ते संभूय वैरिवत् ॥ २३ ॥ प्राप्ताः कृच्छ्रेण कृच्छ्रेण । वर्धिता मृ-
दवो ह्यमी ॥ नार्हति ताडनामेव—मूचुस्तन्मातरोऽपि तं ॥ २४ ॥ अक्षरप्रक्षरानर्हा—स्तां-
स्ततः स्वैरचारिणः ॥ न शिक्षा गोचरीचक्रे । स सादी शूकलानिव ॥ २५ ॥ इतश्चास्ति ध-
निव्राता-विधुरा मथुरापुरी ॥ अन्वर्थनामा तत्राभू-ज्जितशत्रुर्नरेश्वरः ॥ २६ ॥ कन्यारत्नं निः-
सपत्नं । तस्याजायत निर्वृतिः ॥ निर्वृतिं नार्थयामासुः । पश्यंतो योगिनोऽपि यां ॥ २७ ॥ ज-

रजनिदृष्ट्वा—लक्षयामास तं क्षणात् ॥ आह्वयामास च निजैः । पुरुषैः सदनं गतः ॥ ४७ ॥
सशल्य इव साशंकः । सोऽपि भूपांतिकं ययौ ॥ व्रणीव निबिडं बद्ध—पट्टकः स्वांगसंधिषु
॥ ४८ ॥ अंतःसंयमितक्रोध—स्तं नमंतं निजांतिके ॥ निवेश्य नृपतिः प्रोचे । मृदुवाचा व-
यस्यवत् ॥ ४९ ॥ स्वां जामिं देहि भो मह्यं । सा हि देयैव कस्यचित् ॥ तत् श्रुत्वा वज्रघा-
तेने—वाकुलोऽसौ व्यचिंतयत् ॥ ५० ॥ रंकवन्मिलितो यो मे । निशि सोऽयं महीपतिः ॥
जीवन् यदि तदा मुक्त—स्तद्यथेष्टं विचेष्टतां ॥ ५१ ॥ प्रस्ताववेद्यथो चौरो—ऽवदत्किमि-
दमुच्यते ॥ आस्तां कन्या त्वमेवासि । सर्वस्वस्यापि नः प्रभुः ॥ ५२ ॥ तेन दत्तां ततो भू-
मान् । कन्यकां परिणीय तां ॥ प्रसादपात्रमकरोत् । कृतज्ञाः किल तादृशाः ॥ ५३ ॥ मंडि-
कस्य महामात्य—पदवीं प्रददौ नृपः ॥ पोषयंति द्विषं लाग—मिव छेका जिघांसवः ॥ ५४ ॥
प्रणाल्येव द्रुमः कूप—स्यांभस्तस्याखिलं धनं ॥ अग्राहयत्तया पत्न्या । तत्तत्कार्यमिषान्नृपः
॥ ५५ ॥ अन्यदा कियदद्यापि । बंधोस्ते विद्यते धनं ॥ इत्युक्ता भूभुजा साव—क्निःस्वोऽया-
यमभूदिति ॥ ५६ ॥ ततो विडंब्य निबिडं । भूजानिर्निजघान तं ॥ अचिरेण विपच्येत । चौ-

र्यपापतरोः फलं ॥ ५७ ॥ सर्वं समर्प्य लोकानां । स्वस्वनामांकितं धनं ॥ नूधनः पालयामास । ज्रुवं वासवलीलया ॥ ५८ ॥ साम्राज्यं मूलदेवस्य । श्रुत्वा स्वप्नानुज्ञावजं ॥ स्वं स कार्पटिकोऽनिंद—त्सुस्वप्ने दुर्विचारणं ॥ ५९ ॥ तस्मै स्वप्नाय शिष्येऽसौ । निशि व्यात्तााननो बहिः ॥ तन्मुखे वल्गुलीविष्टा । पपात न पुनः शशी ॥ ६० ॥ पुनः पुनः कार्पटिकः शयानः । कदापि कुर्वीत शशांकपानं ॥ विराद्धधर्मा न पुनर्मनुष्य—ज्ञवाश्च्युतो मानुषतां लज्ञेत ॥ ६१ ॥ इति मूलदेवदृष्टांतः ॥

अथ चक्रदृष्टांतः—पुरमिंद्रपुरं नाम । श्लाघ्यमिंद्रपुरादपि ॥ तस्मिन् पवित्र एवैकः । पवित्रोऽत्राखिलो जनः ॥ १ ॥ इंद्रदत्तमहीपालः । पालयामास तत्पुरं ॥ श्यामाप्यसिलता यस्य । सुषुवे विशदं यशः ॥ २ ॥ जिन्नजिन्नजनीजाताः । तस्य द्वाविंशतिः सुताः ॥ उपोपाध्यायमध्येतुं । प्रावर्तंताखिलाः कलाः ॥ ३ ॥ सुबुद्धिसचिवस्योप—मंदिरं संचरन्नृपः ॥ अधित्यकायां खेलंतीं । तस्य कन्यामवैक्षत ॥ ४ ॥ तद्रूपमोहितो नूमा—नज्यर्थ्य सचिवं शुचिः ॥ अचिरात्परिणिन्ये तां । सर्वकार्येषु स प्रजुः ॥ ५ ॥ मंत्री तामिति शास्तिस्म । स्मयभूः पुत्रि

मास्म भूः ॥ संध्याभ्रवद्भवद्दोषाः । क्षणरागा हि भूभुजः ॥ ६ ॥ श्रेयःप्रयोजनां प्राची—मिव
प्राक् पद्मिनीपतिः ॥ सरागां त्वामसौ राग—सागरः संगमिष्यति ॥ ७ ॥ यदादिशति य-
द्दत्ते । यद् ब्रूते यच्च चेष्टते ॥ त्वय्यसौ प्रथमस्नेहा—त्तत्सर्वं मे निवेदयेः ॥ ८ ॥ सापि
सर्वं तथा चक्रे । तदुक्तं मंत्रिपुंगवः ॥ लिलेख पत्रके शेषं । दीर्घदर्शी न सीदति ॥ ९ ॥
गौरवं लज्जमाना सा । पत्युः सर्वोत्तरं चिरं ॥ मुक्ताफलं शुक्तिरिव । क्रमाद्गर्भमधारयत् ॥
॥ १० ॥ कालेन तां विसस्मार । भूपो विद्यामिवालसः ॥ अवश्या यस्य राज्ञश्च । स्नेहस्तिष्ठति
किं चिरं ॥ ११ ॥ मंत्री निन्ये निजं गेहं । गुर्विणीं गौरवेण तां ॥ गतिः पितृगृहं स्त्रीणां ।
। द्विधापि पतिधिक्कृतौ ॥ १२ ॥ अशेषदोषनिर्मुक्ते । दिवसे शिवसेवधौ ॥ सुरेंद्रदत्तनामानं
। सा सुखं सषुवे सुतं ॥ १३ ॥ अग्निकः पर्वतश्चैव । बहली सागरस्तथा ॥ दासेया इति च-
त्वार—स्तेनैधांचक्रिरे सह ॥ १४ ॥ अन्योऽन्यं तस्य तेषां च । तुल्याहजन्मनामपि ॥ स-
हकारकरीराणा—मिव भेदो महानभूत् ॥ १५ ॥ कलाविलासभवना—द्गुरोरध्याप्यतेस्म
सः ॥ मातामहेन संजाता—वसरः सकलाः कलाः ॥ १६ ॥ अंगारमिव शृंगारं । महिला

ग्रहिला इव ॥ विषदिग्धमिव स्निग्धं । क्रीडाः पीडा इवाखिलाः ॥ १७ ॥ अग्नितापमिवा-
लापं । भोगान् रोगानिव स्मरन् ॥ अधीयन्नेकतानोऽभूत् । श्रुत एव स लालसः ॥ १८ ॥
विश्वाधिक्येन विश्वासु । कलासु विललास सः ॥ जातकातरनिर्वेदे । धनुर्वेदे विशेषतः ॥
॥ १९ ॥ तत्रापि स तथा धीरो । राधावेधे व्यजृंभत ॥ यथा ययौ धनुष्मत्सु । पार्थस्याथा-
र्घतां यशः ॥ २० ॥ तस्य साधयतो राधा—वेधं विद्यागुरोः पुनः ॥ दासेयाः स्खलनं चक्रु—र्न
तु चुक्षोभ सोऽन्वयः ॥ २१ ॥ द्वाविंशतिः कुमारास्ते—ऽधीयानाः शिथिलादरं ॥ धर्षिता गु-
रुणा रुक्ष—वाचस्तं प्रतिचुक्रुशुः ॥ २२ ॥ आचार्यः शिक्षयामास यदि कंबादिना मनाक्
॥ तदा जीवन्मृतं चक्रु—स्तं ते संभूय वैरिवत् ॥ २३ ॥ प्राप्ताः कृच्छ्रेण कृच्छ्रेण । वर्धिता मृ-
दवो ह्यमी ॥ नार्हति ताडनामेव—मूचुस्तन्मातरोऽपि तं ॥ २४ ॥ अक्षरप्रक्षरानर्हा—स्तां-
स्ततः स्वैरचारिणः ॥ न शिक्षा गोचरीचक्रे । स सादी शूकलानिव ॥ २५ ॥ इतश्चास्ति ध-
निव्राता-विधुरा मथुरापुरी ॥ अन्वर्थनामा तत्राभू-जितशत्रुर्नरेश्वरः ॥ २६ ॥ कन्यारत्नं निः-
सपत्नं । तस्याजायत निर्वृतिः ॥ निर्वृतिं नार्थयामासुः । पश्यंतो योगिनोऽपि यां ॥ २७ ॥ उ-

भिन्नयौवनाधीत-श्रुता पादौ प्रणम्य सा ॥ पद्मगर्भे मरालीव । क्रोडे निविविशे पितुः ॥ ॥ २७ ॥ रूपशिल्पैकसीमां तां। धातुर्निध्याय नंदिनीं ॥ प्रियः कस्ते वरो वत्से । पप्रछेति नरेश्वरः ॥ २ए ॥ धीरो धियां निधी राधा—वेधं साधयतीह यः ॥ स एव मे वरोऽस्त्वेवं । प्रत्युत्तरयतिस्म सा ॥ ३० ॥ अथ प्रस्थापयामास । चतुरंगचमूवृतां ॥ समं वृद्धैः कुलामात्यै—र्नृवरस्तां स्वयंवरां ॥ ३१ ॥ स्पृशती शतशो देशा—न्न च क्वचन नृपतौ ॥ पुष्पंधयीव धत्तूर—पुष्पे प्रीतिं बबंध सा ॥ ३२ ॥ इंद्रदत्तस्य पुत्रौघं । शृण्वती श्रुतपारगं ॥ आगत्येंद्रपुरं बाला । चिराद्विश्राममाप सा ॥ ३३ ॥ इंद्रदत्तो नदत्तूर्य—स्तोमस्तामुत्सवैर्नवैः ॥ पुरं प्रवेश्य विपुले । स्थापयामास मंदिरे ॥ ३४ ॥ निर्वृतिं नृपतिर्वीक्ष्य । तां मूर्तामिव निर्वृतिं ॥ मत्सूनोः कतमस्येयं । नवितेति व्यचिंतयत् ॥ ३५ ॥ चंचडुद्योचरोचिष्णु—जिष्णुजिष्णुसदस्तदा ॥ ब्रह्मांडमिव संक्षिप्तं । शिल्पिनो मंडपं व्यधुः ॥ ३६ ॥ तस्यांतः कांचनं रत्न—प्रत्नासंन्नारन्नासुरं ॥ तनुतामागतं मेरु—मिव स्तंनं निचिक्षिपुः ॥ ३७ ॥ चतुष्टयतया न्राम्यं—त्यनुलोमविलोमतः ॥ महावेगानि ते चक्रा—ण्यष्टौ तदुपरि व्यधुः ॥ ३७ ॥ तेषामुपरि राधेति।

प्रसिद्धां शालभंजिकां ॥ अधोमुखीं सभां द्रष्टु—मिव ते समतिष्ठिपन् ॥ ३९ ॥ रचितोदा-रश्रृंगाराः । कुमारास्तत्र तेऽखिलाः ॥ लीलालसपदा भूपे—नाहूताः समगंसत ॥ ४० ॥ श्रीमा-ली प्रथमस्तेषु । पुत्रः पित्राभ्यधीयत ॥ युष्मान् विचक्षणान् श्रुत्वा । राजकन्येयमाग-ता ॥ ४१ ॥ अधोदृगास्यराद्धया । विध्यन् वामकनीनिकां ॥ त्वमिमां निर्वृतिं भूस्था—मिव रंभामुरीकुरु ॥ ४२ ॥ ॐमित्युक्त्वा ययौ स्तंभा—भिमुखं सोऽपि वर्ष्मणा ॥ परं प-लायितुं पश्चा—न्मनसा व्यमृशद्दिशं ॥ ४३ ॥ अधोदृग् धनुषा बाणं । मुंचन्निति जजल्प सः ॥ यत्र वा तत्र वा यातु । मुक्तः श्रीमालिना शरः ॥ ४४ ॥ अंतरा स्खलितश्चक्रे । राधामप्रा-प्नुवन् शरः ॥ स्वनायकाय पूत्कर्तु—मिव पश्चान्न्यवर्तत ॥ ४५ ॥ उत्तालतालिकादाना—ज्जने कोलाहलाकुले ॥ कथंचिन्मंक्षूपात्पाशा—दिव रंकुः स निर्ययौ ॥ ४६ ॥ द्वितीयोऽथ सुतो राजा । राधावेधाय ढौकितः ॥ न हस्तलाघवाद्भक्त । इवाग्रजमतीयिवान् ॥ ४७ ॥ एव-मेव कुमारेषु । च्युतेषु ह्यपरेष्वपि ॥ शुचा मुदा च मूर्धान—मधुन्वत सुहृद्खलाः ॥ ४८ ॥ सिंहाकृतीनपि क्रोष्टा—यितांस्तान् वीक्ष्य दक्षिणा ॥ स्वपाणिपीरुनस्याशा—मपि तत्याज

निर्वृतिः ॥ ४९ ॥ राजा तु हृतसर्वस्व । इव दूनमना ध्रुवं ॥ रसातले प्रवेशार्थ—मिवाधो दृष्टिरैक्तत ॥ ५० ॥ रंभास्तंभैरिवासारै—रंतश्चेतोहरैर्बहिः ॥ पुत्रैः स्वकुलसौधस्या—वष्टंभं कः समीहते ॥ ५१ ॥ मन्ये द्वाविंशतिः पुत्रा । रुद्राद् द्विगुणिता अमी ॥ मम स्फूर्तियशःसृष्टि—संहारायैव जज्ञिरे ॥ ५२ ॥ अनंदनं कुलं श्रेयो । न पुनर्निंद्यनंदनं ॥ अविहंगो वरं वृक्षो । न तु गृध्रविहंगमः ॥ ५३ ॥ बालस्वभावलोलानां । यद्वामीषां न दूषणं ॥ स हि वृत्तिं मुधा गृह्ण—न्नुपाध्यायोऽपराध्यति ॥ ५४ ॥ एवं विषादविच्छाय-वदनं मेदिनीपतिं ॥ उवाच सचिवो देव । किमेवमनुशय्यते ॥ ५५ ॥ पंचभिः कुलकं ॥ अद्यापि मम दौहित्रः । पुत्रोऽस्ति विजयी तव ॥ यः स्वबंधुकृतं वक्त्र—मालिन्यं तेऽपनेष्यति ॥ ५६ ॥ नाथ पुत्रकुपुत्राणां । संप्रत्यंतरमीक्ष्यसे ॥ भेदः सिंहशुनां हि स्यात् कुंभिकुंभभिदि स्फुटः ॥ ५७ ॥ स्मरामि न च तस्याह—मिति जल्पति भूभुजि ॥ पत्रकं दर्शयामास । स निधेरिव शासनं ॥ ५८ ॥ सोऽस्मरत्पत्रके दृष्टे । सर्वानुभवसाक्षिणि ॥ चिरदृष्टं स्वप्नमिव । मंत्रिपुत्र्याः करग्रहं ॥ ५९ ॥ अथ तस्याज्ञया मंत्री । सारशृंगारसुंदरं ॥ सुरेंद्रदत्तमानैषी—न्मनीषी भूभुजों-

तिकं ॥ ६० ॥ दृष्ट्वाश्रुदंन्नतो नृपः । पूर्वदुःखं वमन्निव ॥ हृदा सुदृढमालिंग्य । क्षणमंकं निनाय तं ॥ ६१ ॥ राधावेधेन वत्स त्वं । कुमारीं वृणु निर्वृतिं॥ अनिर्वृतानामेवं स्ता—दस्माकमपि निर्वृतिः ॥ ६२ ॥ इति तातगिरा जाता—वष्टंन्नः स्तंन्नः सन्निधौ ॥ द्रोणीं निवेशयामास । स तैलपरिपूरितां ॥ ६३ ॥ स वंदित्वा कलाचार्यं । तद्दृशि द्विगुणोद्यमः ॥ पूजयामास बाणेन । समं चापमचापलः ॥ ६४ ॥ संधाय विशिखं तीक्ष्ण—मुखं धनुषि स क्षणं ॥ अतिष्टत्तैलसंक्रांत—चक्रविश्रांतलोचनः ॥ ६५ ॥ ऊर्ध्वमुष्टिमधोदृष्टि—मेनमेकांतनिश्चलं ॥ परीषहा इव मुनिं । कुमारास्ते हसंस्तरां ॥ ६६ ॥ स्फुरद्भिः परितः कायं । स्पृशद्भिः क्षोभितोऽपि सः ॥ तैर्दासैर्न चुक्षोन्न । कषायैरिव साधकः ॥ ६७ ॥ स्खलितश्चेत्तदा मूर्ध्ना । विमुक्तोऽसीति वादिनौ ॥ उन्नौ तमन्नितोऽस्थातां । खड्गव्यग्रकरौ नरौ ॥ ६८ ॥ लघुहस्ततया तेन । प्रेषितोऽवसरे शरः ॥ अतिचक्राम चक्राणि । कर्माणीवाष्ट संयमी ॥ ६९ ॥ राधां सर्वोपरि स्थित्या । सापराधामिवाशुगः ॥ स वामदृष्टिं विव्याध । साधुरस्य हि नायकः ॥ ॥ ७० ॥ मिलिताः कुतुकं द्रष्टुं । व्योमन्यमरखेचराः ॥ पुष्पवृष्टिं व्यधुस्तस्य । मौलौ स्तुति-

परायणाः ॥ ७१ ॥ नदत्षट्पददंभेन । तत्कीर्तेरिव गायिनीं ॥ राजकन्या निचिक्षेप । तत्कंठे वरणस्रजं ॥ ७२ ॥ परस्परगुणक्रीतौ । तुल्यौ रूपवयोगुणैः ॥ भूमानुद्वाहयामास । तावथ प्रथितोत्सवं ॥ ७३ ॥ अभ्यासहीनस्य नरस्य राधा—वेधो डुराराराधतया प्रसिद्धः ॥ यथा तथा पुण्यविना कृतस्य । नृजन्म दुःप्रापतयांगभाजः ॥ ७४ ॥ इति सप्तमदृष्टांतः. ॥

अथाष्टमकूर्मदृष्टांतः—अनेकयोजनायाम-विस्तारोऽस्ति महाह्रदः ॥ यस्य न क्षीयते जातु । नीरं क्षीरोदधेरिव ॥१॥ क्वचिन्नक्राः क्वचिद् ग्राहाः । क्वचिन्मेकाः क्वचिन्झषाः ॥ वसंति यत्र नगरे । नानावर्णा इवाश्रयाः ॥२॥ दुर्भेदैराशुगौघस्य । प्रभूतपुटशालिभिः ॥ यस्योपरिष्टाच्छैवालैः । प्रवरप्रच्छदायितं ॥ ३ ॥ तत्राभूत्कच्छपः कोऽपि । यश्चिरायुरवैकृत ॥ पुत्रपौत्रप्रपौत्रादि—संतानं सकलं स्वकं ॥४॥ अन्यदा वायुवशतो । विशीर्णे क्वापि शैवले ॥ उद्ग्रीवं शारदं विश्वा—प्यायनैकविशारदं ॥ ५ ॥ इंदुमंडलमद्राक्षी—दुडुमंडलमंडितं ॥ मिथ्यादृष्टिर्जिनमिव । मोहे क्षीणे कथंचन ॥ ६ ॥ युग्मं ॥ स स्वेषामीदृशं तत्वं । दर्शयामीति चिंतयन् ॥ ॥ जवाद्ययौ ह्रदस्यास्य । तलं स्वजनवत्सलः ॥७॥ यावत्कुटुंबमादाय । कूर्मः सत्वरमाययौ ॥

तावन्मिमेल शेवाल—पटलं पवनेरितं ॥ ८ ॥ भ्रमं भ्रमं ह्रदं सर्वं । स निर्वेदमुपागतः ॥ नालुलोके पुनश्चंद्रं । चिंतारत्नमिव च्युतं ॥ ९ ॥ स नदेऽत्र कदाप्यशारदः । कमठः शारदमिंदुमीक्षते ॥ न पुनर्मनुजो रजोधिको । मनुजत्वं पुनरेति संसृतौ ॥ १० ॥ इत्यष्टमदृष्टांतः. ॥

अथ नवमयुगदृष्टांतः—यो वयस्यमिवालिंग्य । जंबूद्वीपं स्थितः सदा ॥ द्विलक्षयोजनायामो । जात्यसौ लवणोदधिः ॥ १ ॥ परिधौ योजनानां यो । लक्षाः पंचदशाधिकाः ॥ अवगाहे पुनस्तेषां । सहस्रं कथितं जिनैः ॥ २ ॥ पातालकलशा यत्र । चत्वारो लक्षयोजनाः कमलौघं वर्धयितुं । वार्धेवार्धुषिका इव ॥ ३ ॥ कर्कोटाद्याद्रयः स्थैर्यं । यत्र वीच्यस्तु चापलं ॥ मिथः संगेऽपि नोज्झंति । स्वभावः खलु दुस्त्यजः ॥ ४ ॥ तिमिंगिलादयो मत्स्याः । प्रसारितमुखाः सुखं ॥ क्रोडे क्रीडंति निर्भीकं । यस्य वप्तुरिवांगजाः ॥ ५ ॥ क्वचिदापीड्य वेलोम्या—ह्वोकं जाततृपा इव ॥ सूर्याद्या यस्य लीयंते—ऽत्युच्चतोयशिखांतरे ॥ ६ ॥ भ्रांति द्वीपाः परे लक्षा । अधृष्या यत्र वारिणा ॥ कल्लोलाहतसत्वौघ—मुपकर्तुमिवोत्थिताः ॥ ७ ॥ अमरः कौतुकी कोऽपि । तत्पूर्वापरकूलयोः ॥ तत्संगमविनोदेच्छु—र्युगं शम्यां च मुंचति ॥

॥ ७ ॥ पृष्टानुपाति पवना–द्भावत्यपरतो युगं ॥ शम्या च पूर्वतो देशां–तरे भिन्ना हि वायवः
॥ ए ॥ न रुद्धा शैलाद्यैर्न परिशटिता नीरनिवहै–र्युगच्छिद्रं शम्या कथमपि कदाचिद्विश-
ति सा ॥ प्रमादप्राबल्यादकृतसुकृतो मानवभवा—त्परिभ्रष्टो भूयो न भवति मनुष्योऽत्र
तनुमान् ॥ १० ॥ इति नवमदृष्टांतः.

अथ दशमपरमाणुदृष्टांतः—दृष्टुकामः स्वसामर्थ्य—ममरः कोऽपि कौतुकी ॥ क्ष-
णचूर्णीकृतं स्तंभं । निनाय परमाणुतां ॥ १ ॥ तैः पुद्गलैः स नलिकां । चर्मचक्षुरगोचरैः ॥
आपूर्यागमद्दुत्तुंगं । शृंगं मेरुमहीभृतः ॥ २ ॥ नलिकायंत्रयोगेन । रंहस्वति नभस्वति ॥
पुद्गलांस्तान्निचिक्षेप । काष्टास्वष्टासु निर्जरः ॥ ३ ॥ यंत्रनिर्युक्तमात्रास्ते । दूरं बिभिदिरेऽण-
वः ॥ चिरसंघट्टजां बाधां । जिहासव इव क्षणात् ॥ ४ ॥ स्वशक्तितो विधातेव । देवस्तैरेव
पुद्गलैः ॥ कर्तुं तथाविधं स्तंभ—मदंभः प्रावृतत्पुनः ॥ ५ ॥ करोत्यनूनाधिकमेव देवः । क-
दापि तं स्तंभमिहाणुभिस्तैः ॥ प्राप्नोति मानुष्यभवाच्च्युतोंगी । पुनर्न मानुष्यमक्लृप्तपुण्य
॥ ६ ॥ इति दशमदृष्टांतः. ॥ इत्युक्ता दशापि दृष्टांताः. ॥

इह यथा मानुष्यस्य दशभिर्दृष्टांतैर्दुर्लभत्वमुक्तं, तथाग्रतः क्षेत्रकुलादीनामपि प्रत्येकं वाच्यं. यथाह भाष्यकारः—दसहिं उदाहरणेहिं । डुलहं मणुयत्तणं जहा भणियं ॥ तह जाइकुलाईणिवि । दसदिठंतेहिं दुल्लहाडं ॥ १ ॥ अथ निगोदवासादारभ्य यथा जीवः क्रमेण मानुष्यं लभते तथाह—

॥ मूलम् ॥—इह सव्वेसिं जियाणं । तिरियगई होइ आइमं ठाणं ॥ तित्थंकराविजम्हा । वासिंसु पुव्वं निगोएसु ॥ २ ॥ व्याख्या—इह तावत्तिर्यग्गतिः सर्वेषां जीवानामादिमं प्रथमं स्थानं वासभूमिर्वर्तते, यस्मात्कारणादास्तां देवनारकादयस्तीर्थंकरा अपि भगवंतस्त्रसत्वलब्धेः पूर्वं निगादेषु सूक्ष्मसाधारणशरीरेष्ववात्सुः. निगोदाश्च तिर्यग्योनिका एवेति प्रतीतं प्रवचनज्ञानात्. अयमर्थः—यदि नाम त्रिभुवनप्रभवस्तीर्थंकरा अपि प्रथमं निगोदवासमासंसारमनुभूय ततस्त्रसत्वं प्राप्य सिध्ध्यंति, ततः किमुच्यते शेषजीवानां? उक्तं च—अव्ववहारनिगोएसु । ताव चिठंति जंतुणो सव्वे ॥ पढमं अणंतपुग्गल–परियट्टे थावरत्तेण ॥ १ ॥ अथैषु निगोदेषु जीवो यथा वसति तथाह—

॥ मूलम् ॥—तेसु अणंतजीएहिं । समजम्माहारदेहऊसासो ॥ कम्मवसो वसइ जिउ । अणंतपुग्गलपरिअट्टे ॥ ४ ॥ व्याख्या—जीवः प्राणी तेषु निगोदेष्वव्यावहारिकेष्वनंतानपरिमितान् पुद्गलपरावर्तान् वसति तिष्ठति. कालस्यानादित्वादाकालं च निगोदेषु वासात्तद्वासकालस्यानंतानंतैरपि पुद्गलपरावर्तैः संख्यां कर्तुं न पार्यत इत्यर्थः. कथंभूतो जीवः? अनंतैरनंतलोकाकाशप्रदेशप्रमाणैर्जीवैः सह समाः समकालभाविनो जन्माहारदेहोच्छ्वासा यस्य स तथा. उक्तं च प्रज्ञापनायां—समगं वक्कंताणं । समगं तेसिं सरीरनिव्वत्ती ॥ समगं आणुग्गहणं । समगं ऊसासनिसासो ॥ १ ॥ साहारणमाहारो । साहारणमाणपाणगहणं च ॥ साहारणजीवाणं । साहारणलक्खणं एअं ॥ २ ॥ ननु किमसावत्यंतविषमेषु तेष्वियंतं कालं तिष्टतीत्याह—'कम्मवस्सेत्ति' हेतुद्वारेण विशेषणमिदं, ततः कर्म ज्ञानावरणादिकं साधारणकर्म वा तद्वशः, यथा ह्यनिछन्नपि सापराधः कोऽपि कुपितभूपतिनिर्दिष्टदुष्टारक्षकवेष्टिते श्लथसंधिबंधपतयालुभित्त्यंतरालकृतालयफणिस्फारफूत्कारभीषणे तीक्ष्णतरतुंडाग्रजाग्रद्यूकामत्कूणमशकप्रायक्षुद्रजंतुसंततिभारितनरककुहरे कुहुरजनीजित्वरप्रसृत्वर-

विषमतमतमःपूरितेऽपि चारकगृहे राजानुरोधात्सुचिरमवतिष्ठते, तथा कर्मपरवशः प्राण्यनंतानंतजंतुसंघट्टकष्टेष्वपि निगोदेष्वनंतान् पुद्गलपरावर्तानिति भावः. अथ कोऽयं पुद्गलपरावर्त इत्युच्यते—इह यदा सर्वलोकवर्तिनः सर्वानपि पुद्गलान् संसारे संसरन्नेको जीवोऽनंतानंतैर्भवैरौदारिकवैक्रियतैजसकार्मणभाषानपानमनोरूपतया परिणमय्य मुंचति तदासौ पुद्गलपरावर्त इत्युच्यते. अन्ये त्वाचार्या द्रव्यक्षेत्रकालभावभेदाच्चतुर्धा पुद्गलपरावर्तमाहुः. अयं चैकैकोऽपि द्विधा, बादरः सूक्ष्मश्चेति, तत्र यदा संसारे भ्राम्यतैकेन जीवेन सर्वेऽपि पुद्गलाः सामान्येनौदारिकवैक्रियतैजसकार्मणशरीररूपतया परिणमय्य मुच्यंते तदा द्रव्यतो बादरः पुद्गलपरावर्तः. यदा तूक्तशरीरचतुष्टयमध्ये प्रत्येकमेकैकशरीररूपतया सर्वेऽपि पुद्गलाः परिणमय्य विसृज्यंते, विवक्षितशरीराच्छेषशरीररूपतया परिणमिता न गण्यंते तदा द्रव्यतः सूक्ष्मोऽसौ भवति. क्षेत्रतस्त्वनंतानंतैर्भवैर्निरंतरेषु व्यवहितेषु वान्यान्याकाशप्रदेशेषु म्रियमाणो यदा सर्वानपि लोकाकाशप्रदेशान् स्पृशति तदा बादरपुद्गलपरावर्तः. यदा पुनर्येष्वाकाशप्रदेशेष्वेकदा मृतस्तेषामेवानंतरेष्वन्यान्येष्वाकाशप्रदेशेषु म्रियमाणो नानाभवैः सर्वान-

पि लोकाकाशप्रदेशान् स्पृशति पूर्वमरणावगाढनभःप्रदेशेभ्य एकेनापि प्रदेशेन व्यवहितेषु तेष्वेव वा प्रदेशेषु म्रियमाणो न गण्यते तदा सूक्ष्मः पुद्गलपरावर्तः. कालतस्तु यदोत्सर्पिण्यवसर्पिणीरूपकालचक्रसमयेषु सर्वेष्वपि क्रमेणोत्क्रमेण वानंतानंतैर्भवैरेको जंतुर्मृतो भवति तदा बादरः पुद्गलपरावर्तः. यदा पुनरादितोंतं यावत्सकलानपि कालचक्रसमयान् प्रथमद्वितीयतृतीयादिसमयक्रमेणाव्यवहितानेव नानामरणैर्जीवः स्पृशति तदा सूक्ष्मपुद्गलपरावर्तः. इह विवक्षितमरणसमयादेकेनापि समयेन व्यवहितेषु तेष्वेव वा समयेषु म्रियमाणो न गण्यते. अथ भावतः पुद्गलपरावर्त उच्यते—

इह ये एकस्मिन् समये सूक्ष्माग्निकायिका जीवा उत्पद्यंते तेऽसंख्यलोकाकाशप्रदेशराशिप्रमाणास्तेभ्यस्तु सूक्ष्माग्निकायिकाः सर्वेऽप्यसंख्यगुणाः, यत एकः सूक्ष्माग्निकायिकोंतर्मुहूर्तं जीवति, सर्वसूक्ष्मजीवानामेतावन्मात्रायुष्कत्वात्. तस्मिंश्चांतर्मुहूर्ते ये समयास्तेषु प्रत्येकमसंख्यलोकाकाशप्रदेशप्रमाणाः सूक्ष्माग्निकायिका उत्पद्यंते, अतः सिद्धं. एकसमयजेभ्यः सूक्ष्माग्निकायिकेभ्यः सर्वेषां तेषामसंख्येयगुणत्वं, तेभ्योऽपि तेषां कायस्थितिरसंख्येयगुणा, ए-

कैकस्यापि सूक्ष्माग्निकायिकस्यासंख्योत्सर्पिण्यवसर्पिणीरूपायाः कायस्थितेरुक्तत्वात्. ततोऽप्यनुभागबंधाध्यवसायस्थानान्यसंख्येयगुणानि, कायस्थित्यामसंख्येयानां स्थितिबंधानां भावात्. एकैकस्मिंश्च स्थितिबंधेऽसंख्येयानामनुभागबंधाध्यवसायस्थानानां सद्भावात्, संयमस्थानान्यप्यनुभागबंधाध्यवसायस्थानैस्तुल्यान्येव, तत्र यदैकैकस्मिन्ननुभागबंधाध्यवसायस्थाने क्रमेणोत्क्रमेण वा म्रियमाणो जंतुः सर्वाण्यप्येतानि स्पृशति तदा बादरपुद्गलपरावर्तः. यदा तु येनैव विशुद्धविशुद्धतमादिक्रमेण व्यवस्थितान्येतान्यनुभागबंधाध्यवसायस्थानानि तेनैव क्रमेण नानाभवैर्म्रियमाणः सर्वाण्यपि स्पृशति, व्यवहितानि तु स्पष्टान्यपि न गण्यंते तदा सूक्ष्मो भावपुद्गलपरावर्तः. ॥ ४ ॥ तदेवमनादिनिगोदवासमुपदर्श्याथ ततो निर्गतस्य जंतोः स्वरूपमाह—

॥ मूलम् ॥—कह कहवि तउ मुक्को । निगोयअयसंकलाइगहिलोव्व ॥ अइगहणे भवगहणे । भमइ जिउ विविहवेसेहिं ॥ ५ ॥ व्याख्या—ततो निगोदवासानंतरं, निगोदा एव सुचिररोधकत्वादयःशृंखला लोहदाम, तस्याः कथमपि छद्मस्थालक्ष्येण प्रकारेण मुक्तो

निर्गतो जीवो विविधैः पृथ्व्यप्तेजोवायुवनस्पत्यादिभिरतिगहनेऽत्यंतगुपिले भवगहने संसा-
रकांतारे भ्रथिल्ल इव भ्रमति. यथा भ्रथिलो लोहशृंखलाबद्धः सुचिरमपि तिष्ठति, तत-
श्च कथमपि मुक्तो विविधैर्विकलोचितैर्वेषैर्भ्रमतीत्यर्थः. ॥ ५ ॥ अथ यत्र भवे यावंतकालं
भ्राम्यति तावंतमाह—

॥ मूलम् ॥—साहारणेसुणंतं । संखाइअं परित्तजोणीसु ॥ तसकाए संखिज्जं । कालं
परियट्टए जीवो ॥ ६ ॥ व्याख्या—इह ये एकस्मिन् देहे समयभाषया निगोद इति प्रसि-
द्धेऽनंता जीवाः पूर्वोक्तयुक्त्या संभूय तिष्ठंति, ते खलु वनस्पतिकायिकाः साधारणदेहवासि-
त्वात्साधारणा इत्युच्यंते, एते च सूक्ष्मबादरभेदाद् द्विधा. ये च एकैकस्मिन् देहे एकैकत-
या वसंति ते जीवाः परित्तयोनयः प्रत्येकयोनयो वाभिधीयंते, ते च पृथ्व्यप्तेजोवायुवनस्पति-
भेदात्पंचधा. तत्र पृथ्व्यप्तेजोवायवः सूक्ष्मा बादराश्च भवंति, प्रत्येकवनस्पतयस्तु बादरा एव,
तथा त्रस्यंति बुद्धिपूर्वमितश्चलंतीति त्रसा द्वित्रिचतुःपंचेंद्रियभेदाच्चतुर्धा. एवं जीवस्वरूप-
मुपदर्श्याथ गाथार्थ उच्यते—स विवक्षितो जीवः साधारणेष्वेव भ्राम्यन् भूयःस्वपि भवेषु नै-

रंतर्येण साधारणत्वममुंचन् जघन्यतोंतर्मुहूर्तमुत्कृष्टतोऽनंतं कालमनंतोत्सर्पिण्यवसर्पिणीलक्षणं परिवर्तंते. ततः परमवश्यं प्रत्येकत्वं त्रसत्वं वा प्रतिपद्यते, एतच्च व्यावहारिकनिगोदापेक्षं. यदाह—तह कम्मठिई काला—दउ विसेसे पडुच्च किर जीवे ॥ नाणाइवणस्सइणो । जे संववहारबाहिरिया ॥ १ ॥ इह व्यवहाराव्यवहारराशिभेदाज्जीवानां द्वैविध्यं सूत्रे साक्षादनुक्तमपि प्रतिपत्तव्यं. यदाह प्रज्ञापनावृत्तिकारः—

इह द्विविधा जीवाः सांव्यवहारिका असांव्यवहारिकाश्च, तत्र ये निगोदावस्थात उद्धृत्य पृथिवीकायादिके भावे वर्तंते ते संव्यवहारमनुपतंतीति सांव्यावहारिका उच्यंते, ते च यद्यपि भूयोऽपि निगोदावस्थामुपयांति तथापि ते सांव्यावहारिका एव, व्यवहारपतितत्वात्. ये त्वनादिकालादारभ्य निगोदावस्थामुपगता एव ते व्यवहारपथातीतत्वादसांव्यवहारिका इति. एषानंतोत्सर्पिण्यवसर्पिणीलक्षणा साधारणेषु कायस्थितिः सूक्ष्मा बादरविशेषं विना सामान्यतः प्रतिपत्तव्या. यत्प्रज्ञापनासूत्रं—निगोएणं भंते निगोएत्ति कालउ केवचिरं होइ? गोयमा! जहन्नेणं अंतोमुहुत्तं उक्कोसेणं अणंतं कालं अणंताउ उसप्पिणीउसप्पिणीउ कालाउ

खित्तसो अड्ढाइज्जा पुग्गलपरियट्टा. यदि पुनः सूक्ष्मेषु रेषु वा साधारणेषु पृथक्पृथक्कायस्थितिश्चिंत्यते तदाद्येष्वसंख्येयोत्सर्पिण्यवसर्पिण्य इतरेषु तु सप्ततिः सागरकोटाकोट्यः. उक्तं च–सुहुमनिगोएणं भंते पुच्छा, गोयमा! जहन्नेणमंतोमुहुत्तमुक्कोसेणमसंखिज्जं कालमसंखिज्जाउ उसप्पिणीउसप्पिणीउ कालउ, खित्तउ असंखिज्जा लोगा. बायरनिगोएणं पुच्छा, गोयमा! जहन्नमंतोमुहुत्तमुक्कोसेणं सत्तरिसागरोवमकोडाकोडीउ. तथा स एव जीवो निगोदेभ्य उद्धृत्य यदि परित्तयोनिषु भ्राम्यति तदा सामान्यतः परित्तत्वममुंचयन् जघन्यतोंतर्मुहूर्तं, उत्कृष्टतः संख्यातीतं कालमसंख्येयोत्सर्पिण्यवसर्पिणीरूपं परिवर्तते. उक्तं च–कायपरित्तेणं पुच्छा, गोयमा! जहन्नमंतोमुहुत्तं, उक्कोसमसंखिज्जं कालमसंखिज्जाउ उसप्पिणीउसप्पिणीउ कालउ, खित्तउ असंखिज्जा लोगा. यदा पुनः सामान्यतः प्रत्येकानामेव पृथ्व्यादिभेदेन प्रत्येकं कायस्थितिश्चिंत्यते तदेवं–पुढवीकाइएणं पुच्छा, गोयमा! जहन्नमंतोमुहुत्तमुक्कोसेणमसंखिज्जं कालं असंखिज्जाउ उसप्पिणीउसप्पिणीउ कालउ, खित्तउ असंखिज्जा लोगा. एवमाउतेउवाउकाइयावि. वनस्पतयस्तु सामान्यतः साधारणमिश्रिता एव भवंतीति न तेषां चिंता कृता, य-

दा तु सूक्ष्मबादरन्नेदेन प्रत्येकमेषां कायस्थितिश्चिंत्यते, तदेवं—सुहुमपुढविकाइएणं नंते पुच्छा, गोयमा! जहन्नमंतोमुहुत्तं, उक्कोसेणमसंखिज्जं कालं असंखिज्जाउ उसप्पिणीउसप्पिणीउ कालउ, खित्तउ असंखिज्जा लोगा. एवं सुहुमआउकाइए तेउकाइए वाउकाइएवि. सूक्ष्मवनस्पतयस्तु प्रत्येका न नवंतीति नोदाहृताः, प्रत्येककायस्थितेः प्रयुक्तत्वात्. बायरपुढविकाइएणं नंते पुच्छा, गोयमा! जहन्नमंतोमुहुत्तं, उक्कोसं सत्तरिसागरकोमाकोमीउ, एवं बायरआउबायरवाउबायरतेउकाइए पत्तेयसरीरबायरवणस्सइकाइएवि. तथा स एव जंतुरनादिनिगोदवासमुत्सृज्य पृथिवीकायिकादिनवक्रमेण मूलत एव त्रसकायं प्राप्य तन्नावममुंचन् जघन्यतोंतमुहूर्तमुत्कृष्टतः संख्येयं कालं संख्येयानि सागरोपमाणि परिवर्तते. उक्तं च—तस्सकाएणं नंते पुच्छा, गोयमा! जहन्नेणमंतोमुहुत्तं, उक्कोसंदोसागरोवमसहस्साइं, संखिज्जवासमन्नहियाइंति. यद्यप्ययमालापकः सामान्यत्रसविषयः प्रवर्तते, इह च मनुष्यनवदुर्लनतायां मनुष्यवर्जा एव त्रसा विवक्षितास्तथापि संख्येयकालतोच्यमाना न विरुध्यते, केवलविकलेंद्रियाणामपि कायस्थितेः संख्येयकालत्वेन भणनात्. तथा च जीवसमाससूत्रं—

विगलेसु संखिज्जो कालोत्ति यदा तु त्रसानामेव द्वींद्रियादिभेदेन कायस्थितिश्चिंत्यते तदैवं-
बेंदिएणं भंते पुच्छा, गोयमा! जहन्नेणमंतोमुहुत्तं, उक्कोसेणं संखिज्जं कालं, एवं तेइंदियचउ-
रिंदियाणवि. पंचेंद्रियतिरश्चां तु कायस्थितिः काप्युक्ता न दृष्टेति न लिखितेति गाथार्थः.
नन्वेवं परिवर्तमानाः सर्वेऽपि जीवा मानुष्यमासादयेयुराहोश्चित्केचिदेवेत्याशंक्याह—
॥ मूलम् ॥—एवं परिभ्रमंतो । भवकंतारे दुहेहिं परितत्तो ॥ कप्पतरुव्व दरिद्दो । क-
हवि लहइ कोइ मणुअत्तं ॥ ७ ॥ व्याख्या—स्पष्टा, ननु कोऽयं विशेषो येनेतरभवेभ्यो मा-
नुष्यमेव सर्वसारमुच्यते? इत्याह—
॥ मूलम् ॥—नाणेण केवलेणं । पुरिसे जिणगणहराइजम्मेण ॥ चरणंमि सव्वविरई ।
को भव तुलइ माणुस्सं ॥ ८ ॥ व्याख्या-ज्ञानेन ज्ञानमाश्रित्य 'केवलेणेति' केवलज्ञानेन,
कोऽन्यो भवः? सुरनारकादिर्मानुष्यं मनुष्यभवं तुलयति? अपि तु न कोऽपीत्यर्थः. अयं भा-
वः—यद्यन्येष्वपि भवेषु सर्वभावस्वभावावभासकं केवलज्ञानं स्यात्तदा तेऽपि मनुष्यभवस्य
तुलां लभेरन्न चास्ति तेष्वाद्यज्ञानत्रयस्यैव संभवात्, ततः कथममी तेन तुल्या भवेयुः?

तथा 'पुरिसेत्ति' महर्द्धिकं पुरुषं प्रतीत्य जिनगणधरादीनां जन्मनावतारेण, तत्र जिना अर्हंतः, गणधरा द्वादशांगीकर्तारः, आदिशब्दाच्चतुर्दशपूर्वविदादयः, इह नारकतिरश्चां च चैव का? सर्वाधमत्वात्. देवत्वे तु यद्यपि दिव्यश्रीसंजारजासुराः शक्रादयः पुरुषाः संति, तथापि गुणाधिकतया तेषामपि गौरव्या जिनादयो मनुष्यजव एवावतरंतीति जावः. तथा चरणेन चारित्रमाश्रित्य सर्वविरत्या, यतः सकलकर्मव्याधिविध्वंसमहौषधीसर्वविरतिर्मनुष्याणामेव संजवति, देवनारकाणामविरतत्वात्. तिरश्चां तूत्कृष्टतोऽपि देशविरतत्वात्. यत एवं मनुष्याः सर्वोत्तमाः. अत एव शेषजीवेज्योऽमी स्वल्पा इत्याह—

॥ मूलम् ॥—चंदनतरुव्व मुत्ता—गरव्व मरगयमणिव्व कणयंव ॥ सव्वुत्तमत्तिह्नो वा । मणुआ सेसेसु जीवेसु ॥ ए ॥ व्याख्या—यथा धवखदिरपलाशादिवृक्षेषु भूयस्स्वपि सर्वोत्तमत्वाच्चंदनतरवः स्तोकाः, यथा वाऽयःशीशकाद्यकरेषु मुक्ताकराः, काचस्फटिकादिमणिषु च मरकतमणयः, लोहत्रपुताम्रादिषु च कनकं सुवर्णधातुः, तथा शेषेषु नाकिनारकादिजीवेषु प्रागुक्तयुक्त्या सर्वोत्तमा इति मनुजाः स्तोका एव विवक्षितक्षणे प्राप्यंते. तथाहि—आगमे

तिर्यंचोऽनंता उक्ताः, वनस्पतिजीवानामनंतलोकाकाशप्रदेशप्रमाणत्वात्. देवा नैरयिकाश्चासंख्येयाः यतः प्रतरासंख्येयतमभागवर्तिश्रेण्याकाशप्रदेशराशिप्रमाणा देवाः, तथांगुलमात्रक्षेत्रप्रदेशराशेः प्रथमे वर्गमूले द्वितीयेन वर्गमूलेन गुणिते यावान् प्रदेशराशिर्भवति तावत्प्रमाणासु श्रेणिषु यावंत आकाशप्रदेशास्तावत्प्रमाणाश्च नैरयिका मनुष्याः पुनस्तत्र संख्येया एव पठिताः, अत एव ज्ञायतेऽमी सर्वोत्तमा इति. सर्वसारस्य वस्तुनः शेषजातीयवस्त्वपेक्षया स्तोकस्यैव प्राप्यमाणत्वादिति गाथार्थः. ॥ ९ ॥ स्तोकत्वमेव व्यनक्ति—

॥ मूलम् ॥—छट्ठो वग्गो पंचम—वग्गगुणोतित्तिया जहन्नेणं ॥ उक्कोसपए मणुआ । संखिज्जा कोडाकोडीउ ॥ १० ॥ व्याख्या—इह मनुष्याणां प्रमाणं द्विधा, जघन्यत उत्कृष्टतश्च. तत्र यदा सर्वत्रापि मनुष्यक्षेत्रे मनुष्याः कालानुभावेन स्तोकाः स्युस्तदा कियंत उच्यते —षष्ठो वर्गः पंचमवर्गगुणः सन् यावान् जायते तावंतो जघन्येन मनुष्याः—इह राशेस्तेनैव राशिना गुणनं वर्ग उच्यते, एकस्य च वर्गो न भवति, एकेन गुणितं तदेव भवतीति वचनात्. ततो द्विकस्य वर्गश्चत्वारः, ४. चत्वार चतुर्भिर्गुणिताः षोडश, १६, एष द्वितीयो व-

गः. षोमश षोमशन्निर्गुणिताः षट्पंचाशदधिके द्वे शते २५६, एष तृतीयो वर्गः. अस्यापि राशेरनेनैव राशिना गुणने जातं पंचषष्टिसहस्राणि पंचशतानि षट्त्रिंशदधिकानि ६५५३६, एषश्चतुर्थो वर्गः. अयमपि राशिरनेनैव राशिना गुण्यते, जातमेकोनत्रिंशदधिकानि चत्वारि कोटिशतानि, एकोनपंचाशल्लक्षाः. सप्तषष्टिसहस्रा द्वे शते षण्णवत्यधिके ४२९४९६७२९६, एष पंचमो वर्गः. अयं च पृथग् ध्रियते, अस्मिन् राशावनेनैव राशिना गुणिते जातमेकं लक्षं चतुरशीतिसहस्राश्चत्वारि शतानि सप्तषष्ट्यधिकानि कोटाकोटिनां चतुश्चत्वारिंशल्लक्षाः सप्तसहस्राण्यशीति शतानि सप्तत्यधिकानि कोटीनां पंचनवतिर्लक्षा एकपंचाशत्सहस्राः षट्शतानि षोमशोत्तराणि १८४४६७४४०७३७०९५५१६१६. एष षष्ठो वर्गः. अयं च पृथग् धृतेन पंचमवर्गेण गुण्यते, जातं ७९२२८१६२५१४२६४३३७५९३५४३९५०३३६. अयं च कोटाकोट्यादिप्रकारेण वक्तुं न शक्यत इत्यंकत एव लिखितः. अथांकगाथा—सत्तेव य कामीउं। लक्खा बाणवई सहस्स अमवीसा ॥ एगं सयं च जाणह। नरं कोमाकोमीकोमीणं ॥ १ ॥ बावट्ठिं कोमीउं। इक्कावन्नं हवंति लक्खाइं ॥ बायालीससहस्सा। छच्चसया कोमिकोमीणं ॥ २ ॥ ते-

आलीसं कोमी । सत्तत्तीसं तहेव लरकाइं ॥ एगुणसट्ठिसहस्सा । तिन्निसया मणुअकोमीणं ॥ ३ ॥ चउपन्नं कोमीउ । लरका गुणयाल सहस्स पणासा ॥ तिन्नि सया बत्तीसा । सन्ना गप्नयमणुस्साणं ॥ ४ ॥ एतावंतो जघन्यतोऽपि मनुष्याः. तथा चानुयोगद्वारसूत्रं—जहन्नपए मणुस्सा संखिज्जा कोमाकोमीउ हुंति, जमलपयस्स उवरिं, चउजमलपयस्स हिट्ठा, अहवणं बट्ठो वग्गो, पंचमवग्गपमुप्पन्नो, अहवा बन्नउइ बेयणादाइरासित्ति. ननूत्कृष्टतस्तेऽसंख्येया अपि नविष्यंतीत्याह—उत्कृष्टपदे यदाजितनाथवारक इव सर्वत्रापि मनुष्यक्षेत्रे सामस्त्येन चिंतमाना मनुष्याः सर्वोत्कृष्टा नवंति तदानीमपि मनुजाः संख्येयाः कोटिकोटयो नवंति. संख्येयकोटिकोटित्वं च जघन्यपदेऽप्यस्ति, परं तस्मादिदं बृहत्तरमवसेयं, संख्येयकस्य संख्येयन्नेदन्निन्नत्वात्. ततः स्थितमेतत्, मनुष्या जघन्यत उत्कृष्टतश्च संख्येयत्वात्स्तोका एव. ॥ १० ॥ ननु संमूर्छिममीलनेन मनुष्या अप्यसंख्येयाः स्युस्तेषां श्रेण्यसंख्येयनागवर्तिनभःप्रदेशराशिप्रमाणत्वादत आह—

॥ मूलम् ॥—जीवियमईहिं तणुआ—मुछिममणुआ निगोयजीवव्व ॥ तम्हा इह अ-

हिगारो । न हु तेहिं असंखएहिंपि ॥ ११ ॥ व्याख्या—मूर्छनं मूर्छा, गर्भोत्पातव्यतिरेकेणोत्पादः, तेन निर्वृत्ता मूर्छिमा, भावादिम इतीमप्रत्ययः, मूर्छिमाश्च ते मनुजाश्च मूर्छिममनुजा गर्भजानामेव वांतपित्तादिसमुद्भवाः. यदागमः—कहिणं भंते समुच्छिममणुस्सा संमुच्छंति? गोयमा! अंतो मणुस्सखित्ते, अड्ढाइज्जेसु दीवसमुद्देसु, पनरससु कम्मभूमीसु, तीसाए अकम्मभूमीसु, छपन्नाए अंतरदीवेसु, गब्भवक्कंतियमणुस्साणंव उच्चारेसु वा, पासवणेसु वा, खेलेसु वा, सिंघाणेसु वा, वंतेसु वा, पित्तेसु वा, पूएसु वा, सोणिएसु वा, सुक्केसु वा, सुक्कपुग्गलपरिसाडेसु वा, विगयकलेवरेसु वा, थीपुरिससंयोगेसु वा नगरनीद्धमणेसु वा, सव्वेसु चेव असुइठाणेसु वा इत्थ णं समुच्छिममणुस्सा समुच्छंति, अंगुलस्स असंखज्जइभागमित्तीए उगाहणाए असण्णीमिच्छादिट्ठी सव्वाहिं पज्जत्तीहिं अपज्जत्तगा अंतोमुहुत्ताउआ चेव कालं करंति. एते च निगोद जीवा इव जीवितमतिअल्पमायुश्चैतन्यादयः तनवो हीना भवंति, यथा निगोदजीवा उक्त तोऽप्यंतर्मुहूर्तायुषस्तथैतेऽपि, यथा च निगोदजीवानां महामोहत्वादल्पीयसी चेतना तथैषामपि, मनसाऽपर्याप्तानामेव मरणात्. छद्मस्थचैतन्ये च म-

नःपर्याप्तिनिबंधनत्वात्, यत एवं. तस्मादिह धर्मसामग्र्या विचारे तैः संमूर्छिममनुष्यैरसंख्यैरपि नाधिकारः, आयुष्मत्त्वेन सचेतनत्वेन च गर्भजानामेव तदधिकृतत्वात्. ते च संख्येया एवेति गाथार्थः. ॥ ११ ॥ एवं मानुष्यं दुर्लभमुक्त्वाऽथार्यक्षेत्रस्य दुर्लभतामाह—

॥ मूलम् ॥—पत्तेवि माणुसत्ते । आरियखित्तेसु दुल्लहो जम्मो ॥ सड्ढपणवीस आरिय—देसा भरहंमि मगधाइ ॥ १२ ॥ व्याख्या—उत्तानार्था, नवरमाराद् दूरेण हेयधर्मेभ्यो याता आर्यास्ते च द्विधा ऋद्धिप्राप्ता अऋद्धिप्राप्ताश्च, तत्र ऋद्धिप्राप्ताः षोढा तद्यथा–तीर्थकर १ चक्रवर्ति २ वासुदेव ३ बलदेव ४ चारणमुनि ५ विद्याधराः ६. अऋद्धिप्राप्ताश्चार्या नवधा–क्षेत्र १ जाति २ कुल ३ कर्म ४ शिल्प ५ भाषा ६ ज्ञान ७ दर्शन ८ चारित्रार्यभेदात् ९. एषां तत्वार्थः श्रीप्रज्ञापनातोऽनुसर्तव्यः. इह तु क्षेत्रार्यैरेवाधिकारः. ॥ १२ ॥ अथार्यदेशानामग्राहमाह—

॥ मूलम् ॥—मगहंगवंगकासी । कलिंगकुरुकोसला कुसट्टा य ॥ जंगलवच्छविदेहा । पंचालसुरट्ठसंदिल्ला ॥१३॥ मलयब्भासिंधुवेई । वइराडदसन्निभंगिवेट्टा य ॥ लाटा य सुरसेणा

। कुणाल तह केयई अद्धं ॥ १४ ॥ व्याख्या—द्वे अपि सुबोधे, नवरं केतकीदेशस्यार्धमेवार्यं, अर्धं त्वनार्यमतएव सार्धपंचविंशतिसंख्यार्यदेशानामुपपद्यते, यदार्षं—खित्तारिया अद्ध-छव्वीसविहा पन्नत्ता, एते च सम्यगुपलक्षणाय प्रज्ञापनायां प्रथमपदे राजधानीसहिताः प-ठ्यन्ते, तद्यथा—रायगिह मगह चंपा—अंगा तह तामलित्ति वंगा य ॥ कंचणपुरं कलिंगा । वाणारसीमेव कासी य ॥ १ ॥ साएए कोसला गय—उरं च कुरु सोरियं कुसट्टा य ॥ कं-पिल्लं पंचाला । आहिछत्ता जंगला चेव ॥ २ ॥ बारवई य सुरट्टा । मिहिलविदेहा य वच्छ-कोसंबी ॥ नंदिपुरं संदिब्भा । भद्दिलपुरमेव मलया य ॥ ३ ॥ वइराड वच्छ वरणा । अच्छ तह सुत्तियावई दसणा ॥ सुत्तियमई य वेई । वीतभयं सिंधुसोवीरा ॥ ४ ॥ महुरा य सूरसेणा । पावा भंगी य मासपुरि वट्टा ॥ सावत्थी य कुणाला । कोडीवरिसं च लाटा य ॥ ५ ॥ सेयवियावि य नयरी । केयइ अद्धं च आरियं भणिअं ॥ इच्छुपत्ति जिणाणं । चक्कीणं रामकण्हाणं ॥ ६ ॥ एते च प्रत्यासत्त्या भरतक्षेत्रवर्तिन एव प्रोक्ताः, उपलक्षणत्वादन्येऽप्यैरावतमहाविदेहांतर्वर्तिविजयमध्यखंडादिषु यथासंभवं वाच्याः. अमी च कालविशेषेण सी-

म्ना नाम्ना च परिवर्ततेऽपि ततः श्रोतॄणामव्यामोहाय तल्लक्षणमाह—

॥ मूलम् ॥—जह न जिणकल्लाणा । न चक्किबलकेसवाण अवयारा ॥ न य जिणधम्मपवित्ती । सगजवणाई अणज्जा ते ॥ व्याख्या—यत्र जिनानामर्हतां संबंधीनि कल्याणानि जन्मदीक्षादीनि न जायंते, तथा यत्र चक्रिबलकेशवानां चक्रवर्तिबलदेववासुदेवानामवतारा न भवंति, तथा यत्र साधूनामुपगमान्न च जिनधर्मस्य प्रवृत्तिर्व्यापारः कोऽप्यस्ति, ते देशाः शकयवनादयोऽनार्या इत्युच्यंते. यदागमः—सगजवणसबरबब्बर—कायमुरंडोडुगोडुपक्कणया ॥ अरवागकणरोमस—पारसखसखासिया चेव ॥ १ ॥ दुबिलयलउसबोक्कस—भिल्लंधपुलिंदकुंचभमररुया ॥ कुंचायचीणचंचुअ—मालवदमिला कुलग्घा य ॥ २ ॥ केकयकिराय हयमुह—खरमुह तह तुरगमिंढगमुहा य ॥ हयकन्ना गयकन्ना । अन्नेय अणारिया बहवे ॥ ३ ॥ पावा पचंडदंडा । अणारिया निग्घिणा निरणुकंपा ॥ धम्मोत्ति अक्खराइं । जेसु न नज्जंति सुविणेवि ॥ ४ ॥ एवं चानार्यलक्षणे प्ररूपिते आर्यलक्षणमपि प्ररूपितमेव तद्विपरीतत्वात्. ॥ १५ ॥ अथ तत्तथा दुर्लभमपि लब्धं मानुष्यमार्याणामेव सफलं ना-

नार्याणामित्याह—

॥ मूलम् ॥—जह जह तेसिमिंदिय—मणोबलं तह तहायरो पावे ॥ ता तेहिंतो मन्ने । पवरं एगिंदियत्तंपि ॥ १६ ॥ व्याख्या—यथा यथा तेषामनार्याणामिंद्रियमनोबलं पटुपटुतरं स्यादिति गम्यते, तथा तथा पापे जीवसंहारमांसाहारपरदाररमणाद्यकृत्ये आदरस्तीव्रतरो जायते, ततो मन्ये इति वितर्कार्थो निपातः, तेभ्योऽनार्यमनुष्येभ्य एकेंद्रियत्वमपि प्रवरं श्रेयः. अयमर्थः—वयमपि जानीमो न हि पापप्रकृतय एकेंद्रियाः कदापि पंचेंद्रियेभ्यः प्रशस्या भवंति, परं तेषामिंद्रियपटुतया मनोबलेन च दुस्तरतरनरकनिबंधने पापकर्मणि सविशेषां प्रवृत्तिमालोक्य स्यादयमपि वितर्को यदेभ्य एकेंद्रिया अपि वरियांसः, स्वल्पप्रयत्नतया स्वल्पचेतनतया च तेषां नरकार्हकर्मबंधाभावात्. न च वाच्यमनार्यदेश्योऽपि संयमश्रियं बभार श्रीआर्द्रकुमार इति परमसुहृत् श्रीअभयकुमारबुद्धिसाध्यत्वात्तत्प्रतिबोधस्येत्याह—

॥ मूलम् ॥—उप्पन्नोवि अणारिअ—देसे जं अद्दओ वयं पत्तो ॥ सो बुद्धिमहानिहि-

णो । महिमा खलु अन्नयमित्तस्स ॥ १७ ॥ व्याख्या—स्पष्टा, नावार्थस्तु कथानकगम्यः. अथार्द्रकुमारकथा—आसीन्मगधदेशस्ये । ग्रामे नाम्ना वसंतके ॥ सामायिक इति क्षेत्री । तस्य बंधुमती प्रिया ॥ १ ॥ अन्यदा सुस्थिताचार्य—व्याख्यायां तावुनावपि ॥ संसारत्नार-निर्विण्णौ । नेजाते युगपद् व्रतं ॥ २ ॥ सूत्रार्थलालसः साधु—र्व्यहरद्गुरुनिः सह ॥ साध्वी पुनः प्रवर्तिन्या । साकं देशे पृथक्पृथक् ॥ ३ ॥ अन्यदा विहरंतौ तौ । कंचन ग्राममीयतुः ॥ सस्मार प्राग्विलासानां । साधुः साध्वीं निरीक्ष्य तां ॥ ४ ॥ चित्तमुच्छृंखलीभूतं । यदा तेन निरुध्यते ॥ तन्मत्तशंकवत्क्षेत्रं । प्रत्यधावत्तदाधिकं ॥ ५ ॥ तच्चेतश्चापलं तेन । द्वितीयो ज्ञापितो मुनिः ॥ जगाद् ही प्रमादस्ते । कोऽयं साधो श्रुतोदधेः ॥ ६ ॥ शल्यं कामा वि-षं कामा । कामा विषधरोपमाः ॥ कामान् प्रार्थयमाना । अकामा यांति दुर्गतिं ॥ ७ ॥ सो-ऽप्यूचे किं करोम्येष । एषा दृग्गोचरं गता ॥ फलं मर्कटिकेवोच्च—माकृष्यत्येव मे मनः ॥ ॥ ८ ॥ सोऽप्यथाख्यत्प्रवर्त्तिन्या । बंधुमत्याश्च साप्यहो ॥ वातोद्धूतं रज इव । साधोर्गोप्यं वितस्तिरे ॥ ए ॥ दध्यौ बंधुमती धिग्मां । सर्वथानर्थहेतुकाम् ॥ यथा धूमलहर्येव । मुनेर्म-

व्विनितं मनः ॥ १० ॥ शीलात्मा मयि जीवंत्यां । साधोरस्य न जीवति ॥ तन्मे मृत्युरपि श्रे-
या—नित्यूचे सा प्रवर्त्तिनीम् ॥ ११ ॥ सा सुबुद्धिः स्वमुद्बुध्या—नशनेन दिवं ययौ ॥ त-
न्निशम्य यतिर्जात—वैलक्ष्यो दध्यिवानिति ॥ १२ ॥ अबलाया अहो सत्त्वं । यदेवं सा वि-
पेदुषी ॥ पुरुषस्यापि धिक् क्लैव्यं । ममाद्यापि जिजीविषोः ॥ १३ ॥ अथात्तानशनः सूरे—
स्तदनालोच्य दुष्कृतम् ॥ स प्रियोत्कंठित इव । तदैव त्रिदिवं ययौ ॥ १४ ॥ द्वीपोऽस्त्यंतर-
कूपारं । कूपाराममनोहरः ॥ श्रीमानमुद्रसामुद्र—सारकोश इवार्डकः ॥ १५ ॥ राजाभूदार्द्र-
कस्तत्र । शत्रुन्निन्मित्रवर्धकः ॥ आर्द्रिकेति प्रिया तस्य । प्राप्ता श्रीरिव वारिदेः ॥ १६ ॥
साधुजीवो दिवश्च्युत्वा । तस्याः कुक्षाववातरत् ॥ जातः सोऽप्यार्डकान्निख्यां । देजे तेषां ह्य-
सौ स्थितिः ॥ १७ ॥ पितृभ्यामार्द्रको भूमि—जलाभ्यामार्द्रकंदवत् ॥ अवर्ध्यत गुणैर्जीवै—
रिवानंतैः श्रितः सदा ॥ १८ ॥ मंत्री श्रेणिकराजस्य । सदःस्थं नृपमन्यदा ॥ निर्दिष्टो वेत्रि-
णानंसी—द्विमुच्योपायनं पुरः ॥ १९ ॥ प्रफुल्लवदनः प्रीत्या । तं बभाषे नरेश्वरः ॥ अस्ति
नः कुशली बंधुः । श्रीमान् श्रेणिकभूपतिः ॥ २० ॥ सोऽप्यूचे नोत्पलस्येव । तस्याकुशलसंभ-

वः ॥ बालमित्रं जवान् यस्य । दिवाकर इवोदितः ॥ २१ ॥ अत्रांतरे कुमारेणा— डिंकिणा-
लपितं पितुः ॥ यद्वार्ताश्रवणे यूयं । सतृष्णाः श्रेणिकः स कः ॥ २२ ॥ बजाषे भूपतिर्वत्स ।
देशोऽस्ति मगधाजिधः ॥ केदाराश्च विहाराश्च । यत्रोरुकलशालयः ॥ २३ ॥ पुरं राजगृहं
पाति । तत्र श्रीश्रेणिको नृपः ॥ न द्विषामायुधैर्लोहै—र्जिद्यते पार्थिवोऽपि यः ॥ २४ ॥ प्रीतिः
कुलक्रमायाता । वर्तते सह तेन नः ॥ मिथो मंत्रिगतायातैः । प्राजृतप्रेषणैरपि ॥ २५ ॥ अ-
यं च सचिवस्तेन । प्रजिघ्ये सौहृदान्मयि ॥ मयापि समये तस्मै । निजमंत्री प्रहेष्यते ॥
॥ २६ ॥ अथो आर्द्रकुमारेण । सचिवोऽवादि सादरं ॥ त्वत्प्रजोः कोऽपि पुत्रोऽस्ति । येन
मैत्री विधीयते ॥ २७ ॥ सानंदं सचिवोऽवोचत् । कुमारेंद्र किमुच्यते ॥ रत्नानीवोदधेस्तस्य ।
संति पुत्रा अनेकशः ॥ २८ ॥ पुनस्तेषु समस्तेषु । श्रीमान् कौस्तुजरत्नवत् ॥ तेजसा व-
यसा ज्येष्ठो । जयत्यजयनंदनः ॥ २९ ॥ मूर्तिस्थ इव जीवो यः । प्रजायाः परिवर्धनः ॥ द्वि-
षद्विखंकनः षष्ट–गृहस्थ इव सद्ग्रहः ॥ ३० ॥ नवमस्थ इव क्रोमो । जिनधर्मस्य पोषकः ॥
अभूत्प्रजुत्वहेतुश्च । दशमस्थ इवार्यमा ॥ ३१ ॥ स एव तव मैत्र्यार्हः । इति जल्पति मंत्रि-

णि ॥ कुमारः स्माह संगच्छे—स्त्वं गच्छन् मगधेषु मां ॥ ३२ ॥ वत्स स्वच्छकुलीनोऽसि । यत्नः पूर्वक्रमागतां ॥ प्रीतिं दृढयसीत्येन—मन्वमोदत भूपतिः ॥ ३३ ॥ तं मंत्रिणमवस्थाप्य । दिनानि कतिचिन्मुदा ॥ समं स्वमंत्रिणा दत्त—प्राभृतं व्यसृजन्नृपः ॥ ३४ ॥ सोऽथामिलत्कुमारस्य । सोऽपि तस्मै ददौ मुदा ॥ चिरसंचितरत्नाढ्य—मात्मजाय स्वढौकनं ॥ ३५ ॥ ऊचे च सचिवेंद्र त्व—मात्मजाय वदेरिति ॥ चकोर इव शीतांशु—मार्द्रकिस्त्वां सखीयति ॥३६॥ सोऽथ राजगृहं प्राप्तो । ददौ श्रेणिकभूभुजे ॥ आर्द्रकस्वामिनः सर्वं । प्राभृतं वाचिकैः समं ॥ ३७ ॥ सचिवः स वयस्यस्य । वयस्य इव भूभुजा ॥ कुशलः कुशलप्रश्न—पूर्वं गौरवितो भृशं ॥ ३८ ॥ अथार्द्रककुमारस्य । स वाचिकमुपायनं ॥ प्राप्य स्वपुरुषाद्दध्या—विति श्रेणिकनंदनः ॥ ३९ ॥ अहो चित्रमहो चित्रं । यदेषोऽनार्यदेशजः ॥ वयस्यीयति मामार्यं । का मैत्री वन्यपौरयोः ॥ ४० ॥ यद्वा ज्ञातमनार्योऽयं । जातः कोऽपि च्युतव्रतः ॥ आसन्नसिद्धिकत्वेन । मया मैत्रीं विधित्सति ॥ ४१ ॥ अभव्या दूरभव्याश्च । नेच्छंति मनसोऽपि मां ॥ पुरीषशुकरा दिव्य—चंदनैः किमु कुर्वते ॥ ४२ ॥ मम मैत्र्याः फलं किं चे—न्नासौ धर्मं

विबुध्यते ॥ कर्पूरं तत एवेष्टं । यद्दत्ते स्वीयसौरज्ञं ॥ ४३ ॥ स राजा न्यायदेष्टा यः । स दी-
पो यस्तमोपहः ॥ तद्धनं यत् त्रिवर्गार्थं । तन्मित्रं यत्प्रबोधकं ॥ ४४ ॥ दूरस्थोऽसौ कथं बो-
ध्यो । यद्वार्हद्बिंबदर्शनात् ॥ जातिं स्मरेत्कदाप्येष । बुध्येत च ततः सुखं ॥ ४५ ॥ ध्यात्वे-
त्यादीशितुर्बिंबं । हैमं हैमविभूषणं ॥ बीजं बोधिद्रुमस्येव । स न्यधत्त स मुझके ॥४६॥ समु-
झकं च तं दिव्ये । वाससी भूषणानि च ॥ मंजूषायां निचिक्षेप । पूजोपकरणानि च ॥ ४७ ॥
पुनर्यदार्द्रकेशाय । प्राहिणोन्मंत्रिणं नृपः ॥ तदा प्रदाय तस्मै तां । मंजूषामन्नयोऽन्यधात् ॥
॥ ४८ ॥ सौम्येयमार्द्रकेरर्प्या । वाच्यमंतच्च वाचिकं ॥ स्नात्वा मित्र रहः सेयं । पेटोद्घा-
ट्या त्वया स्वयं ॥ ४९ ॥ उमित्युक्त्वार्द्रकद्वीपं । गत्वा श्रेणिकढौकनं ॥ दत्वा नृपाय सोऽग-
बत् । कुमारस्य गृहं रहः ॥ ५० ॥ तस्मै पेटां प्रदायाख्य—दन्नयस्य स वाचिकं ॥ तन्निश-
म्य सुधासिक्त । इवार्द्रकिरमोदत ॥ ५१ ॥ स्नातश्च विजनं गत्वा । स्वयं पेटां व्यमुद्रयत् ॥
न्यधात्किमत्र मे मित्र—मित्युत्कलिकयाकुलः ॥५२॥ चंद्रांशुभिरिव च्यूते । वीक्ष्यांतर्वाससी
रसी ॥ पर्यधत्त ततो दिव्य—भूषणैः स्वं व्यभूषयत् ॥ ५३ ॥ उन्मुद्रिते समुझेऽथ । सोऽद्रा-

क्वीदृबिंबमार्हतं ॥ तस्यांतरं तमो भेत्तुं । भानुबिंबमिवोदितं ॥ ५४ ॥ तदाभरणबुद्ध्यासौ
। सर्वांगेषु नियोजयन् ॥ घटनां कापि न प्राप । त्रिलोकाभरणं हि तत् ॥ ५५ ॥ वीक्षापन्नो
वीक्षमाणो । बिंबं दृष्ट्वाऽनिमेषया ॥ कापीदृग्दृष्टमित्यूहा—दस्मरत्पूर्वजन्म सः ॥ ५६ ॥ द-
ध्यौ च प्रागहं भूत्वा । नाम सामायिको मुनिः ॥ भावसामायिकाद्भ्रष्टः । प्राप्तोऽस्म्येवमनार्य
तां ॥ ५७ ॥ मन्ये ममैव बोधार्थ—मनार्यस्य दवीयसः ॥ अभयः प्रेषयामास । मतिमान्
प्रतिमामिमां ॥ ५८ ॥ अभयस्याद्भुतं बुद्धि—वैभवं न स्तवीति कः ॥ योंधायेव दृशं बो-
धं । दूरस्थायापि मे ददौ ॥ ५९ ॥ दृष्टं जानाति रत्नं सुवर्णगपि भटो दृष्टमाहंति लक्ष्यं ।
ग्लानं वैद्योऽपि दृष्टं पटयति सुगुरुर्बोधयत्येव दृष्टं ॥ दृष्टं पांथं पथिज्ञः पथि लगयति योऽ-
बोधयन्मामदृष्टं । दिष्ट्या धीमत्सु सीमा स जयति मगधाधीशजन्मा सखा मे ॥ ६० ॥ त-
दृबंधोर्दर्शनात्तस्य । कृतार्थीकृत्य लोचने ॥ अनुनेष्ये पुनर्दीक्षां । रोषितामिव वल्लभां ॥ ६१ ॥
अथासौ पूजयामास । सोल्लासः परमेश्वरं ॥ मा पुनर्दुर्लभोऽभूस्त्वं । देव देवेत्युदीरयन् ॥
॥ ६२ ॥ सोऽथ व्यजिज्ञपद्भूप—मनुमन्यस्व तात मां ॥ मिलित्वाभयमित्रस्य । येन स्यां

दृढसौहृदः ॥ ६३ ॥ वत्सास्माकं च तेषां च । प्रीतिः प्राभृतवान्चिकैः ॥ नान्योन्यमिलनेनेति ।निषिद्ध्यत नृपेण सः ॥ ६४ ॥ गुर्वादेशवशस्त्यक्त्वा । शेषकृत्योऽथ दध्यिवान् ॥ योगीव परमात्मान—मत्रयस्यैव नाम सः ॥ ६५ ॥ अपृष्ट्वाप्येष गंतेति । चकितस्तस्य चेष्टया ॥ तद्रक्षार्थं नृपोऽमुंच—त्पंचयोधशतानि च ॥ ६६ ॥ कुमारस्तैर्निरुद्धोऽपि । श्रद्धालुरिव कर्मभिः ॥ न मित्रमिलनोत्कंठां । जहौ मोक्षस्पृहामिव ॥ ६७ ॥ स विश्वासयितुं विश्वान् । योधान् व्याह्यालिकं व्यधात् ॥ तुरगेणाग्रतो गत्वा—ऽमिलत्तेषां क्षणात्पुनः ॥ ६८ ॥ घव्यर्धयामयामाद्यैः । क्रमाद्वेलां विवर्धयन् ॥ नित्यं व्यायामकारीव । दूरादप्यवलिष्ट सः ॥ ६९ ॥ एहिरे याहिरे शश्वत् । कुर्वंतस्ते पदातयः ॥ योधाः सर्वेऽपि निर्वेदं । ययुः सूर्यातपाकुलाः ॥ ७० ॥ ततस्ते जातविश्रंभा—स्तस्थुश्छायासु शाखिनां ॥ प्रहरार्धंतरं कृत्वा । सोऽपि तेभ्योऽमिलत्पुनः ॥ ७१ ॥ विश्वान् विश्वास्य तानेवं । कालेन कियतापि सः ॥ सज्जीचकार प्रछन्नं । पोतं प्रत्ययितैर्नरैः ॥ ७२ ॥ तरुछायानिविष्टेषु । योधेष्वेव कदाचन ॥ आरूढः पोतमादाय । प्रतिमां सह कांचनैः ॥ ७३ ॥ तीर्णोऽब्धिं हनुमान् यस्य । वायोः पोतः स्वयं सु-

खं ॥ तत्सहायेन पोतोऽयं । तत्पारं प्राप नाद्भुतं ॥ ७४ ॥ मन्यमानस्ततस्तीर्ण—मपि संसार-
सागरं ॥ दीक्षायामुत्सुको नैष—न्मित्रस्यापि स संगमं ॥ ७५ ॥ बिंबमाशातनाभीरु—रत्न-
याय स्वकैर्नरैः ॥ स प्रैषीन्न हि रत्नस्य । स्थानं रत्नाकरं विना ॥ ७६ ॥ स तत्रैव नवक्षेत्र्या-
मुप्त्वा किंचन कांचनं ॥ शेषं समर्प्य भृत्यानां । यावद्गृह्णाति संयमं ॥ ७७ ॥ तावदेवं दिवो
दैवी । वागभूदार्द्रकांगज ॥ भोगकर्म न तेऽद्यापि । क्षीणं तन्माग्रहीर्व्रतं ॥ ७८ ॥ तपसा
छेत्तुकामस्त—त्कर्म रज्जुमिवासिना ॥ अनाकर्ण्येव तां वाचं । व्रतं भेजे स साहसी ॥ ७९ ॥
निधिकृतं धनमिव । प्राप्य प्राग्भविकं श्रुतं ॥ तेनात्तदीपवन्मार्गं । मौनींद्रं पश्यतिस्म सः ॥
॥ ८० ॥ तपसा कृशयन् देहं । भूषयन् शुभभावनां ॥ पक्षीव पाशनिर्मुक्तो । विजहे स म-
हीतले ॥ ८१ ॥ इतश्च—

स्वरामणीयकग्रामी—कृतत्रिदशपत्तनं ॥ वसंतपुरमित्यस्ति । नगरं गरिमास्पदं ॥ ८२ ॥
तत्रेभ्यो देवदत्तोऽभू—न्मान्यो राज्ञोऽपि यो गुणैः ॥ तस्य संचितसौशील्य—धना धनवती
प्रिया ॥ ८३ ॥ स च बंधुमतीजीवः । समतीत्यामरं भवं ॥ उदपादि तयोः पुत्री । पुत्रेभ्यो-

ऽप्यतिवल्लभा ॥ ७४ ॥ विश्रुता श्रीमती नाम्ना । धाम्ना कनकजित्वरी ॥ विद्याभिर्भारती-
साक्षा-दिव सा ववृधे क्रमात् ॥ ७५ ॥ नियत्या प्रेरितः प्राप्य । वसंतपुरमार्द्रकिः ॥ बहि-
र्देवकुले क्वापि । तस्थौ प्रतिमयाथ सः ॥ ७६ ॥ इतश्च श्रीमती सापि । सखीभिः सह खेलि-
तुं ॥ संकेतितेव प्राग्जन्म—भर्त्रा तत्रागमत्तदा ॥ ७७ ॥ कुर्वंत्यो वरवरण—क्रीडां व्रीडां
विनाखिलाः ॥ सख्यो देवकुलस्तंभान् । वव्रुर्धिग्बालचापलं ॥ ७८ ॥ मृगीव मुग्धा भ्राम्यंती ।
। सर्वतोऽपीभ्यनंदिनी ॥ स्तंभं कमपि नापश्यत् । सा स्वस्य वरणोचितं ॥ ७९ ॥ स्वं स्वं
स्तंभममुंचंत्यः । सत्यं पतिमिवाथ सः ॥ ऊचुः किं दुर्भगासि त्वं । सखि नाप्नोसि यद्वरं ॥
॥ ८० ॥ तदरुंतुदमाकर्ण्य । वचनं सा क्षणं स्थिता ॥ भिन्नेव शक्त्या दृष्ट्वा—लीना लि-
ढेव वह्निना ॥ ८१ ॥ भ्रश्यल्लोचना सापि । भ्रमंतीतस्ततस्ततः ॥ तमेव मुनिमैक्षिष्ट ।
। प्राक्पुण्यैर्दर्शितं रहः ॥ ८२ ॥ अयं मया वृतः सख्यो । नाहं मोक्ष्ये कदाप्यमुं ॥ स्वं स्वं
वरं भवंत्योऽपि । मात्याक्षुश्चेत्पतिव्रताः ॥ ८३ ॥ इति तस्यां प्रजल्पंत्यां । वृतं सुष्ट्विवति भा-
षिणी ॥ रत्नौघं देवतावर्ष—द्गर्जिजर्जरितांबरा ॥ ८४ ॥ सखीषु गर्जित्रस्तासु । साधुपादद्वयां-

तरा ॥ शारदीव नदी कूल—द्व्यांतः श्रीमती स्थिता ॥ ९५ ॥ अवधूयाथ तां बालां । तू-
लालानमिव द्विपः ॥ ततः प्रतस्थे वेगेन । दिव्यवाक्चकितो मुनिः ॥ ९६ ॥ तत्रैत्य नृपतिः
पौरैः । सहादित्सत तद्धनं ॥ अनाथस्य धनस्य स्या—द्राजा स्वामीति नीतिवित् ॥ ९७ ॥
साक्षेपमाचचक्षेऽथ । देवी किं भूप गृह्णसि ॥ धनमेतन्मयादायि । श्रीमतीवरणोत्सवे ॥
॥ ९८ ॥ तद्देवदत्त एवैत्त—दादत्तां कोऽपि नापरः ॥ देव्येत्युक्ते तदादत्त । श्रेष्ठ्येव सकलं
धनं ॥ ९९ ॥ देवदत्तो धनैः पूर्णः । कौतुकैश्च महाजनः ॥ स्वं स्वं धामेयतुः कापि । कन्यापि
फलदायिनी ॥ १०० ॥ काले जामातृचिंतार्त्तं । श्रीमती जनकं जगौ ॥ तात यः प्राग्मया
वव्रे । भीता यं शरणं व्यधात् ॥ १ ॥ गृह्णता वरणं द्रव्यं । यस्मै दत्ता त्वयाप्यहं ॥ मुनी-
श्वरः स एवास्तु । वरो मे किमु ताम्यसि ॥ २ ॥ साक्षिणोऽत्र पुरीलोकाः । साक्षिणी सा
च देवता ॥ वदामि नीतिबाह्यं चे—त्तदा मां वारयंत्वमी ॥ ३ ॥ एवं तन्निश्चयं ज्ञात्वा । ब-
भाषे श्रेष्ठिपुंगवः ॥ वद विज्ञे स विज्ञेयः । कथं वायुरिव भ्रमन् ॥ ४ ॥ सा प्रत्यवोचतामंद—
मंदाक्षमुदिताक्षरं ॥ सम्यग्जानाम्यहं तात । तमवामांह्रिलक्षणा ॥ ५ ॥ ददाना दानशा-

लायां । तव दानमनारतं ॥ काले तमपि लप्स्येऽहं । दानं भोगफलं यतः ॥ ६ ॥ भ्रमंति
भिक्षवो दानि-गेहेष्विति विचारयन् ॥ श्रेष्ठ्यथातिथिवर्गाय । पुत्र्या दानमदापयत् ॥ ७ ॥
सापि तत्रेयुषां दत्वा । शुद्धान्नमनगारिणां ॥ नत्वा पदिकवत्पादा—वेव लक्ष्मार्थमैहत ॥
॥ ८ ॥ साभूत्कल्पलता साधु-ष्विष्टभक्तादिदानतः ॥ ईप्सितापूरणात्ते तु । तत्रासन्नवकेशिनः
॥ ९ ॥ एवं निष्फलतारुण्या-रण्यानी मालतीव सा ॥ आशयैवातिचक्राम । क्रमाद् द्वादशव-
त्सरीं ॥ १० ॥ विहरन् वसुधापीठे । विस्मृत्या विधुरीकृतः ॥ तदेव दैवयोगेना-जगाम पुर-
मार्द्धकिः ॥ ११ ॥ स भोगकर्मविभ्रांत—मानसो दानसद्म तत् ॥ अनाहूतोऽप्यगाद् भृंग ।
इव सत्कुसुमं द्रुमं ॥ १२ ॥ मुदा प्रदाय शुद्धान्न-पानमानम्य सा मुनिं ॥ लक्षणं दक्षिणां-
ह्रिस्थं । वीक्ष्य सम्यगलक्षयत् ॥ १३ ॥ तत्कालोद्भूतरोमांच-त्रुटत्कंचुकबंधना ॥ शमयंतीव
हर्षाश्रु—सलिलैर्विरहानलं ॥ १४ ॥ मेघागमे मयूरीव । नृत्यंती निजगाद सा ॥ जाने दा-
नेन नश्यंति । दुरितानीति सुश्रुतं ॥ १५ ॥ स्वागतं स्वागतं स्वामिन् । क्व स्थितस्त्वमियच्चिरं
॥ कोऽयं स्निग्धजने द्वेषः । कृपापि एव नास्ति किं ॥ १६ ॥ जीविताहमियत्काल-माशया

फलिताद्य सा ॥ तदंगीकुरु मां यासि । कथं संप्रति लज्जितः ॥ १७ ॥ भ्रातरस्त्वरितायाता—स्तावत्तस्या बभाषिरे ॥ भक्तेभ्यो भक्तदात्री ते । मिलिता विमुखोऽसि किं ॥१८॥ मुने त्वमेव विज्ञो य—न्मुक्त्वा बालामिमां तदा ॥ संप्रत्युद्यौवनां ज्ञात्वा । पारापत इवापतः ॥ ॥ १९ ॥ व्रतं पालयितुं तुर्य—मेतां मुंचसि चेत्तदा ॥ आद्यं लुंपसि ही पादौ । रक्षतो लिप्यते शिरः ॥ २० ॥ रे रे भंड्व व्रतं किं मे । नाहं सोऽस्मीति वादिनं ॥कन्योचे मुनिमग्रेऽपि । भग्ना पंचव्रती तव ॥ २१ ॥ स्थूले जीवे मयि त्यक्त—कृपस्याद्यं क ते व्रतं ॥ नाहं स इति वाचैव । द्वितीयमपि हारितं ॥ २२ ॥ मम चौरयतश्चेतो । स्तं क्व च तृतीयकं ॥ शमाया मे हृदि स्थान—कृतस्तुर्यमपि क्षितं ॥ २३ ॥ तृतीयतुर्ययोर्भंगे । भग्नमेवास्ति पंचमं ॥ प्रपन्नायां मयि पुन—र्जीवति व्रतमादिमं ॥ २४ ॥ यद्वा नाहं स इत्युक्त्या । त्वमेव ज्ञापयन्नसि ॥ हंसोऽस्मि पुनरेषोऽस्मि । हंसीसंबंधमर्हति ॥ २५ ॥ अथ पित्रापि कन्याया । भूपेनाप्येत्य कौतुकात् ॥ भृशमप्यार्थितोऽस्मार्षी—न्महर्षिर्दैवत्तं वचः ॥ २६ ॥ नंष्टुमप्यक्षमः सर्वैः । प्राकारीभूय वेष्टितः ॥ वसत्यपि पुरे वेषं । मोचितः शालकैर्मुनेः ॥ २७ ॥ सोऽपवादप-

देनेव । श्रीमतीं परिणीतवान् ॥ पाथोधिपूरवत्कर्म—विपाकः केन रुध्यते ॥ २८ ॥ कन्याया वरणे देव्या । यत्प्राप क्ष्मापसाक्षिकं ॥ अदत्त देवदत्तस्त—द्वित्तमस्मै तदा मुदा ॥ २९ ॥ भुंजानस्य तया साकं । भोगान् प्राग्भवभार्यया ॥ तस्याभूत्तनयः काले । फलं गार्हस्थ्यभूरुहः ॥ ३० ॥ संजाते व्यक्तसंज्ञेऽस्मिन् । बाले सौभाग्यशालिनि ॥ मुक्तमंतर्गृहं साधु—वेषमेष स्वमैक्षत ॥ ३१ ॥ स्वं समुद्धर्तुकामोऽथ । श्रीमतीमभ्यधत्त सः ॥ प्रिये पुत्रसहायासि । मुंच मामाद्रिये व्रतं ॥ ३२ ॥ अदत्त्वैवोत्तरं सापि । शोकाद्बाष्पायितेक्षणा ॥ कुतोऽपि तर्कुमानीय । समारभत कर्तनं ॥ ३३ ॥ पुत्रः प्राक् शिक्षितस्तस्य । श्रीमतीं लब्धगीर्जगौ ॥ मातस्त्वमपि कर्मेदं । निर्वीरेव करोषि किं ॥ ३४ ॥ जीवत्सु जनकभ्रातृ—पतिपुत्रेष्वपि त्वया ॥ एतच्च किं समारेभे । रोदनं शोकलक्षणं ॥ ३५ ॥ सा प्रोचे वत्स मां मुक्त्वा । त्वत्पिता क्वापि यास्यति ॥ भाव्यापि त्वं शिशुस्तन्मे । वृत्तिरेषैव शाश्वती ॥ ३६ ॥ अद्यापि तारतारुण्य—मकारुण्यश्च मन्मथः ॥ दुर्लंघ्या कुलमर्यादा । न जाने किं भविष्यति ॥ ३७ ॥ वारयिष्याम्यहं यातं । मातस्तातमिति ब्रुवन् ॥ बालोऽकर्कशधीस्तर्कु—माच्छिनज्जननीकरात् ॥ ३८ ॥ लो-

लचक्षुश्चलत्काक—पक्षः किंचित्स्मिताननः ॥ तर्कूध्धृतेन सूत्रेण । स वस्त्रारमवेष्टत ॥ ३९ ॥ ऊचे च मातर्मारोदी—र्मारोदीरितवेदना ॥ मया नियंत्रितो बाढं । न तातः क्वापि यास्यति ॥ ४० ॥ वद तात समर्थोऽपि । कथं यास्यस्यतःपरं ॥ नवे वयसि मुक्त्वा मे । मातरं विरहातुरां ॥ ४१ ॥ सोऽवक् सत्यमिदं पुत्र । बद्धोऽहं वचसैव ते ॥ वेष्टव्यथां वृथा कुर्व—न्त्येते किं तव तंतवः ॥ ४२ ॥ यावंतस्तंतवः संति । समाः स्थास्यामि तावतीः ॥ ते चासन् द्वादशैवेति । सोऽस्थाद् द्वादशवत्सरीं ॥ ४३ ॥ ततो द्वादशवर्षेषु । गतेषु लवलीलया ॥ स दध्यौ ही प्रमादेन । छलितोऽयं जनः कथं ॥ ४४ ॥ यत्पुराज्ञयमित्रेण । बोधिरत्नमढौकयत ॥ तज्जाग्रतोऽपि मेऽहारि । हहा विषयतस्करैः ॥ ४५ ॥ अनार्येष्वहस्मुपेदे । मनसा प्राक्च्युतव्रतः ॥ सर्वथा च्युतचारित्रो—ऽधुना यास्यामि कां गतिं ॥ ४६ ॥ लब्धपोतोऽप्यहं मग्नो । लब्धान्नः क्षुधितोऽस्म्यहं ॥ भ्रष्टोऽहं लब्धसार्थोऽपि । ग्लानो लब्धौषधोऽप्यहं ॥ ४७ ॥ लब्धश्रीरपि दुःस्थोऽहं । लब्धविद्योऽप्ययं जडः ॥ यल्लब्धजिनधर्मोऽपि । विषयैर्व्यथितोऽस्म्यहं ॥ ४८ ॥ यद्वा किं चिंतया शुध्ध्यै । संप्रत्यपि तपः कृतं ॥ भावोऽस्ति चेत्तदा पश्चा—दपि

दूरे न निर्वृतिः ॥ ४ए ॥ निश्चित्येति प्रियां पृष्ट्वा । प्रातः परिजनं च सः ॥ नीरूादिवां-
रूजो गेहा-न्निर्ययौ व्रतवेषजाक् ॥ ५० ॥ सोऽथ वीरं जिनं नंतुं । पुरं राजगृहंप्रति ॥ प्रचल-
न्नंतराद्राक्षी—न्नटपंचशतीं वने ॥ ५१ ॥ प्रत्यभिज्ञाय तैः सर्वै-र्ववंदे मुनिपुंगवः ॥ सोऽपि
तानुपलक्ष्योचे । कुतो यूयं वनेऽत्र जोः ॥ ५२ ॥ तेऽप्यूचुस्त्वं पलायिष्टा । विश्वास्यास्मान् यदा
तदा ॥ च्युतन्यासा इव श्रिया । न जूपमुपजग्मिम ॥५३॥ जवद्दिदृक्षया भ्रांत्वा । जुवं संजूय
भूयसीं ॥ अत्रायाता अतिष्ठाम । जीवंतश्चौर्यचर्यया ॥ ५४ ॥ साधुः कृपोदधिस्तेषां । बोधाये-
दमुपादिशत् ॥ जवद्भिः कुलजैः केयं । प्रारेजे पापजीविका ॥ ५५ ॥ एतद्धनं शिवस्याध्वा
। स्याद्योग्याय निषेवितं ॥ तदेव सेवितं चौर्य-कृते नरकवर्तिनी ॥ ५६ ॥ चौरो हारयति
स्वार्थं । परार्थहरणोद्यतः ॥ साधुस्तु साधयन् स्वार्थं । परार्थायापि कल्पते ॥ ५७ ॥ तद्भोः
स्तैन्यं समुत्सृज्य । जजध्वं संयमश्रियं ॥ माभून्मानुष्यकं पापा । दुःप्रापं जवतां पुनः ॥५७॥
यातबोधा गतक्रोधा । योधास्ते तस्य शिक्षया ॥ आत्तदीक्षा न्यषेवंत । तं चिरस्वामिनं पुनः
॥ ५ए ॥ अन्वितैस्तैर्मुनींद्रोऽथ । कलभैरिव कुंजरः ॥ व्रजन् राजगृहं हस्ति-तापसाश्रममी-

थिवान् ॥ ६० ॥ निवाराद्यैर्मृगाद्यैश्च । बहुजंतुक्षयो ह्यतः ॥ तापसा घ्नंति यत्रैकं । वारणं प्रतिपारणं ॥ ६१ ॥ तापसैर्निबिडं बद्धो । नारशृंखलया तदा ॥ आलोकत तमायांतं । गजो गजगतिं यतिं ॥ ६२ ॥ वंदेऽहमप्यमुं मुक्त-बंधः स्यां चेदिति द्विपे ॥ ध्यायत्येवात्रुटत्तस्य । शृंखला जीर्णरज्जुवत् ॥ ६३ ॥ सिंधुरे धावमानेऽस्मिन् । मुनिंप्रति विबंधने ॥ इतस्ततो जनोऽत्रस्य—द्धीरधीर्न पुनर्मुनिः ॥ ६४ ॥ अवंदि स पदौ स्पृष्ट्वा । स्वकरेण करेणुना ॥ निर्जितेनेव शौंडीर्यो—न्नत्यगत्यादिनिर्गुणैः ॥ ६५ ॥ मनसा मुनिसारेऽत्र । भूरिनक्तिर्द्विपस्ततः ॥ स्वधाम्नीव वनेऽवीक्ष—ल्लोकानां कृतकौतुकः ॥ ६६ ॥ तं तस्यातिशयं हस्ति—तापसा असहिष्णवः ॥ सर्वेऽप्याजग्मुरूचुश्च । जटिलाः कुटिलाशयाः ॥ ६७ ॥ निष्फला व्यर्था क्रिया भूरि—जीवपिंडाशिनस्तव ॥ वायं तु धार्मिका कुर्मो । हस्तिनैकेन पारणं ॥ ६८ ॥ पशुना पशुदेश्यस्त्वं । गजेन यदि वंदितः ॥ तत्किं नश्चित्रमित्युक्ते । तैरुवाच मुनीश्वरः ॥ ६९ ॥ एकापि पापाय यथोरुजंतु—हत्या तथा न प्रचुरापि चान्या ॥ अंगस्य भंगाय शिलैककापि । यथा तथा स्यात्किमु कर्करौघः ॥ ७० ॥ स्वार्थसाधितनक्तेषु । मध्याह्ने लोकसद्मसु ॥ अल्पा-

ल्पमाददानस्य । नास्ति हिंसकता मम ॥ ७१ ॥ मांसव्रता न तावद्भः । करुणा करिघातिनां ॥ निःकृपाणां कुतः पुण्यं । निःपुण्यानां क्रियैव का ॥ ७२ ॥ एवं वो लाजमिन्नूनां । मूलक्षितिरुपस्थिता ॥ तद्भजध्वं कृपामेका— मेकांतसुकृतार्थिनः ॥ ७३ ॥ द्विपः कृपास्पदं सौम्यं । यदि मां शरणं गतः ॥ जवद्भ्यो घातकेभ्योऽयं । त्रिभ्यस्तत्किं प्रकुप्यथ ॥ ७४ ॥ यतेः स्याद्योगसिद्धस्य । महिमा हि स कश्चन ॥ आसतां सुधियो येनो—पासते पशवोऽपि हि ॥ ७५ ॥ साधोः सुधामुचा वाचा । शांतक्रोधकृशानवः ॥ क्षणेन तापसाः सर्वे । जैनीं दीक्षां प्रपेदिरे ॥ ७६ ॥ तैरन्वितो मुनिर्याव—द्ययौ राजगृहांतिकं ॥ गोशालः संमुखस्ताव—दासीदशकुनो यथा ॥ ७७ ॥ जक्रोऽसौ मर्दितुमना । पाणिना गोक्षुरोत्करं ॥ उन्मादबहुलो वादं । ययाचे मुनिमार्द्रकिं ॥ ७८ ॥ अजाव्यं न जवत्येव । नाशोऽस्ति न च जाविनः ॥ नियतेरिति सावद्ये । वृथा ते संयमश्रमः ॥ ७९ ॥ जंतूनां पौरुषं व्यर्थं । बलिनी जवितव्यता ॥ पश्य मुज्ञा न पच्यंते । वह्नियोगेऽपि केचन ॥ ८० ॥ इत्यस्मिन् जल्पति प्रेक्ष्य-माणः खेचरभूचरैः ॥ ऋषिर्बनाषे पाखंडिन् । केयं तेऽलीककल्पना ॥ ८१ ॥ नियतिश्चेत्प्रमाणं ते ।

तदेव रारटीषि किं ॥ त्वद्बोधायेति चेन्नासौ । नियतेरौपजानुकः ॥ ८२ ॥ न हि धूमध्वजे- धमादि—सामग्रीरहिताः क्वचित् ॥ पाच्यमाना नियत्यैव । मुद्गा अपि निरीक्षिताः ॥ ८३ ॥ अन्यच्चाहं क्रियानिष्ठो । नियत्या वान्यथापि वा ॥ अन्यथा चेत्तदा त्वन्न—प्रसरा सा वराकिका ॥ ८४ ॥ नियत्या चेत्तदा किं त—न्निमित्तं कलहायसे ॥ किंच व्याधिः स्वयं शाम्य—त्येकोऽन्यस्त्वौषधैः पुनः ॥ ८५ ॥ स्वयं जायेत कोऽपि द्रु—रपरो रोपितः खलु ॥ ततो द्वितीयं नियतेः। पौरुषं मन्यसे न किं ॥ ८६ ॥ एवं निगृह्य गोशालं। स्तूयमानः सुरैर्नरै ॥ समवसरणं प्राप्तः । सोऽनमच्चरमं जिनं ॥ ८७ ॥ श्रुत्वा तमागतं साधु—माहूत इव तद्गुणैः ॥ सवाभयकुमारेण । तत्रागाच्छ्रेणिको नृपः ॥ ८८ ॥ प्रदक्षिणय्य तं भक्त्या । नत्वा च रचितांजलिः ॥ तच्चरित्राद्भुतं शंस—न्नन्यधान्मगधाधिपः ॥ ८९ ॥ घनो गुणैस्त्वमाद्याभू—न्नस्तताप सवर्ष्मसु ॥ गोशालकदवार्चिश्च । युक्तमेव निवारयेः ॥ ९० ॥ तच्चित्रं यत्त्वयाऽत्रोटि । नाहंकरटिशृंखला ॥ ततो मुनिर्मनाग्हास्य—रम्यास्यः क्ष्मापतिं जगौ ॥ ९१ ॥ न दुष्करो मे नृप बंधमोक्षो । गजस्य मत्तस्य वने बभूव ॥ पुनः स तर्कूद्धृततंतु बंधा—त्सुदुष्करो मे प्रतिभाति मोक्षः

॥ ए२ ॥ इति वृत्तं पठित्वास्य । वृत्तं स्वं वदतोऽनवत् ॥ विशिष्य वीरतां स्तोतुं । मागधो मगधेश्वरः ॥ ए३ ॥ अथाजयं मुनिः प्रोचे । मित्रैष महिमा तव ॥ अनार्यदेशजन्मापि । वंद्योऽहं यन्नरेश्वरैः ॥ ए४ ॥ चकोर इव चंद्रे चे—न्नाधास्यं सौहृदं त्वयि ॥ चारित्रचंद्रिकापानं । तदवाप्स्यमदः कथं ॥ एए ॥ अहं तवोपकारस्य । नानृणः स्यां कदाचन ॥ एतद्रूक्ष्मीवमेव त्वं । सम्यक्त्वं द्योतयेः सदा ॥ ए६ ॥ मुनिं सम्यक्तमानम्य । ययौ राजा यथागतं ॥ सहाजयेन तद्दीक्षा—नावनापावनाशयः ॥ ए७ ॥ केवलैराश्रितः साधु—गुणैरुत्पन्नकेवलः ॥ मुनीश्वरोऽपि स प्राप । समये शाश्वतं पदं ॥ ए८ ॥ अनार्यदेशप्रनवोऽपि मंक्षु । मोक्षं ययावार्द्रकुमारसाधुः ॥ सौहार्दतः श्रेणिकनंदनस्य । कार्या ततः साधुनिरेव मैत्री ॥ एए ॥ इति श्रीआर्द्रकुमारकथा समाप्ता.

नन्वार्येन्योऽन्ये हूणचिणादयो धर्मबाह्या इत्यवसितं, परमंतरद्वीपादिमनुष्याणां का वार्तेत्याह

॥ मूलम् ॥—बपन्नंतरदीवेसु । तह य तीसाइनोगभूमीसु ॥ जे जुअलधम्मिमणुआ । न तेवि धम्मस्स किर जुग्गा ॥२८॥ व्याख्या—इह कुंभवितकोदंमाकारनरतक्षेत्रप्रत्यंचायमूतस्य पूर्वा-

परकोटिन्यां जगतीं निस्वा लवणसमुद्रं स्पृष्टवतः पीतप्रनापद्दसितहेम्नो हिमवतः पर्वतस्य पूर्वांतात्पश्चिमांताच्च द्वे द्वे दाढे समुद्रांतर्निर्गते, चतसृष्वपि तासु प्रत्येकं सप्त सप्त संतीति हिमवन्निश्रयाष्टाविंशतिरंतरद्वीपाः. एवमैरावतक्षेत्रसीमावस्थिते शिखरिण्यपि पर्वत एतावंतः संतीति सर्वसंख्ययामी षट्पंचाशत्. एतेषां विशेषस्वरूपं जीवाभिगमादवसेयं. तथा नोगः प्राक्कृतसुकृतफलानुनवः, तदर्हा भूमयो नोगभूमयस्ताश्च हैमवतं हरिवर्षं देवकुरव उत्तरकुरवो रम्यकमैरण्यवतं चेति षट् जंबूद्वीपे, धातकीखंडे द्वादश, द्वादश पुष्करार्धे चेति सर्वसंख्यया त्रिंशत्, एताश्चाकर्मनूमयोऽप्युच्यंते. अत्रोद्भूतानां कृषिवाणिज्यादिकर्मरहितत्वात्, एतेषु षडशीतौ स्थानेषु ये युगलमेव धर्मः स्वभावो येषां ते युगलधर्मिणो मनुजा जायंते, किलेति निश्चये तेऽपि न धर्मस्य योग्याः, धर्मसामग्रीचिंतायां तेऽप्यनधिकृता एवेत्यर्थः, नोगप्रधानत्वात्तेषां. एतेनार्यक्षेत्रोद्भवा एव मनुजा धर्मयोग्या नवंतीति समर्थितं. ॥

॥ १८ ॥ अथ कुलसामग्रीमाह—

॥ मूलम् ॥—तब्भवि सुसावयकुलं । दुलहं मुत्तागरुव्व बहुसुत्ति ॥ जह्मोदयाउ दीसइ ।

कमेण मुत्ताण परिणामो ॥ १९ ॥ व्याख्या—तत्रार्यक्षेत्रेऽपि मुक्ताकर इव शृण्वंति सद्गुरूपदेशमिति श्रावकाः, शोभनाश्च ते श्रावकाश्च सुश्रावकास्तेषां कुलं दुर्लभं, कथंभूतं ? बहवः सूक्तयः सुवचनानि यत्र तद्बहुसूक्ति, धर्मज्ञतया तेषां भाषासमितत्वात्. अथ श्रावककुलस्य विशेषमाह—यत्र श्रावककुले उदयावताराात्प्राणिनामिति गम्यते, क्रमेण सम्यक्त्वदेशविरत्यादिरूपेण मुक्तानां सिद्धानां परिणामो दृश्यते, मुक्ताकरपक्षे—बहवः शुक्तयो यत्र तद्बहुशुक्ति, यत्र मुक्ताकरे उदकात्स्वातिजलात्क्रमेण मुक्तानां मौक्तिकानां परिणामो दृश्यते. अयमर्थः—आर्यक्षेत्रं हि समुद्रप्रायं, समुद्रेऽपि मुक्ताकरेष्वेव मेघमुक्तसंभो मौक्तिकत्वेन परिणमति, न सर्वत्र, तत्र पतितमात्रस्य तस्य क्षारजलसंपर्केण निर्नामनाशात्, एवमार्यक्षेत्रेऽपि सत्कुल एव जातो जंतुर्मुक्तत्वं लभते, न शेषेसु. ॥ १९ ॥ तत्रोत्पन्नस्य भव्यस्यापि स्वभावभ्रंशादित्येतदेवाह—

॥ मूलम् ॥—मिछेसु कूरकम्मसु । कुलेसु भवोवि असरिसेसु गउ ॥ अप्पाणं नासेइ । खारजले साइसलिलंव ॥ २० ॥ व्याख्या—म्लेछेषु, भनंगमादिषु क्रूरकर्मसु चाक्रिकादिषु,

एवंविधेष्वसद्दृशोष्वयोग्येषु कुलेषु गत उत्पन्नो भव्योऽप्यात्मानं नाशयति, नैर्मल्यप्रतनुकर्मत्वादिस्वस्वरूपाद्भ्रंश्यतीत्यर्थः, क्षारजले स्वादुसलिलमिवेति प्रागेव भावितं. ॥ २० ॥ अथ न केवलं म्लेच्छादय एव दुःकुलत्वेन रूढाः, किंतु मिथ्यादृशोऽपीत्याह—

॥ मूलम् ॥—देवगुरुधम्मतत्ते । जह परिक्खापरम्मुहा बुद्धी ॥ तेसुवि कुलेसु जाउ । कुलगव्वं वहइ ही मूढो ॥ २१ ॥ व्याख्या—यत्र येषु कुलेषु जातानां बुद्धिर्देवगुरुधर्मतत्वविषये परीक्षापराङ्मुखी विचारवंध्या वर्तते, हीति खेदे, खेदश्चासमंजसदर्शनात्, किमसमंजसमिति चेदुच्यते—यस्तेष्वपि कुलेषु जातो मूढो मूर्खः कुलिनोऽहमिति गर्वं वहति, इदमत्र हृदयं—इह तत्कुलं वस्तुतः स्तुतिपदे भवति, यत्रोत्पन्नाः प्रज्ञाढ्युतया सारासारताविवेकं विधाय वस्त्वाद्रियंते परिहरंति वा, एतच्च श्रावकाणामेव दृश्यते देवादिसम्यक्त्वानुरागात्, कुदेवादिमिथ्यात्वपरित्यागाच्च. यत्र पुनरमी देवगुरुधर्मा अस्मत्पूर्वजैः प्रमाणीकृतास्तदेत एव प्रवरा इति वृथागर्वगरलतरलितचेतनाः सारासारविवेकविकलाः कलाधिष्ठातारः सदपि परमतं दूषयंति, असदपि स्वमतं भूषयंति, हंत तेष्वपि कुलेषु जातो यदि कुलमदं धत्ते,

ततः को नाम न खिद्यत इति गाथार्थः. ॥ २१ ॥ पुनः श्रावककुलस्य शेषकुलेभ्यो भंग्यंतरेण वैशिष्ट्यमाह—

॥ मूलम् ॥—जलगलणणंतकाइय—निसिभत्तसुराइविरमणाइयं ॥ जं अन्नेसिं दुग्गं । सो मग्गो सावयकुलेसु ॥ २२ ॥ व्याख्या—जलगलनं प्रतीतं, अनंतकायिका मूलकार्द्रकादयः, निशाभक्तं रात्रिभोजनं, सुरा मदिरा, आदिशब्दादामिषादिपरिग्रहः, तत एषां द्वंद्वः, एतेभ्यो विरमणं निवर्तनं, जलगलनं चानंतकायिकादिविरमणं, च जलगलनानंतकायिकनिशाभक्तसुरादिविरमणं, तदादिर्येषां, कंकतग्रहणसर्पादिमारणातपशय्याप्रस्फोटनादिनियमानां यत्र तज्जलगलनानंतकायिकनिशाभक्तसुरादिविरमण दिकमनुष्टानं यदन्येषां श्रावकव्यतिरिक्तानां कुले दुश्चरत्वाद् दुर्गं दुर्गप्रायं वर्तते स श्रावककुलेषु बालैरपि सुखासेव्यत्वान्मार्गो राजमार्ग इव भवति. ॥ २२ ॥ अत एव श्रावककुलाय देवा अपि स्पृहंतीत्याह—

॥ मूलम् ॥—सुरलोयंपि सुरिंदा । सुक्खं तं तारिसं अणुहवंता ॥ बोहिसुलहत्तहेउं । सावयकुलजम्म मिछंति ॥ २३ ॥ व्याख्या—व्यक्तार्था. अथ श्रावककुलेषु प्रेष्यभावोऽपि बो-

धिबीजनिबंधनत्वाद्बाढं कमनीय इत्याह—

॥ मूलम् ॥—आयणिऊण जम्मं-तरंमि सुहयस्स तारिसं उदयं ॥ सावयकुलेसु पेस-त्तणंपि बाढं सुहावेइ ॥ २४ ॥ व्याख्या-सुभगस्य कर्मकृतः श्रावककुलसांनिध्यादधिगतपंचपरमेष्टिमंत्रस्य जन्मांतरे तादृशं त्रिदशानामपि श्लाघ्यमवतारमाकर्ण्य श्रावककुलेषु प्रेष्यत्वं दासत्वमपि मम बाढं सुखायते, बोधिहेतुत्वेनायतौ स्वर्गापवर्गसुखकारणत्वात्, न पुनः सार्वभौमत्वमपि मिथ्यात्वोपहतं प्रेत्य नरकादिक्लेशमूलत्वात्. यदाह—जिनधर्मविनिर्मुक्तो । माभूवं चक्रवर्त्यपि ॥ स्यां चेटोऽपि दरिद्रोऽपि । जिनधर्माधिवासितः ॥१॥ सुभगस्य कथा चैवं—

अस्त्यंगदेशशृंगार-श्चंपा संपद्धरा पुरी ॥ यस्यां दृष्टो ध्वजेष्वेव । कंपः किल महाबलात्
॥ १ ॥ दधिवाहनभूपाल-स्तत्र लोकमपालयत् ॥ जैत्रो यस्य प्रतापोऽभू-त्खड्गस्तु करभूषणं
॥ २ ॥ स्मरवीरवधूगर्व-सर्वस्वापहृतिक्षमा ॥ सुभटीवाभयेत्याख्यां । दधानास्य प्रियाभवत्
॥ ३ ॥ जनौघरंजनो जैन-शासनोपासनोन्मनाः ॥ अभूदृषभदासाख्य-स्तत्र श्रेष्टी महाधनः
॥ ४ ॥ अर्हद्दासीति तस्यासी-त्प्रेयसी श्रेयसी गुणैः ॥ न हि धर्मेऽपि कामेऽपि । या भर्त्रा

व्यभिचारिणी ॥ ५ ॥ महिषीश्चारयामास । तस्य कर्मकरो वने ॥ जज्ञे न केवलं नाम्ना । सुभगः कर्मणापि यः ॥ ६ ॥ अन्यदा मासि माघेऽसौ । महिषीश्चारयन् बहिः ॥ कायोत्सर्गस्थमद्राक्षी—त्कंचिद्ध्यानधरं मुनिं ॥ ७ ॥ कृषिरेष कथं रात्रि—मत्र स्थातेति चिंतयन् ॥ कथंचिदतिचक्राम । यामिनीं स गृहं गतः ॥ ८ ॥ महिषीः प्रातरादाय । स जगाम वनं पुनः ॥ ववंदे तं च सानंदः । कंदर्पदमनं मुनिं ॥ ९ ॥ तस्य शीतव्यथां हर्तु—मिव सूर्ये समुद्गते ॥ नमस्कारादिमपदं । वदन् व्योम ययौ मुनिः ॥ १० ॥ उत्पपात यया साधुः । सेयं विद्या खगामिनी ॥ इत्याहतमतिर्मंक्षु । तत्पदं सुभगोऽग्रहीत् ॥ ११ ॥ आसने शयने स्थाने । गमने भोजनेऽपि सः ॥ नामुंचत्तत्पदं भाग्या—ल्लब्धं तद्धनवद्धनं ॥ १२ ॥ श्रेष्ठी पप्रच्छ तं वत्स । त्वमेतज्जंजपीषि किं ॥ सोऽप्यधत्त मुनेर्लब्धां । विद्यां गगनगामिनीं ॥ १३ ॥ ईभ्योऽवदन्न विद्यासौ । केवलं व्योमगामिनी ॥ सर्वकामकरी किंतु । स्वच्छचित्त विचारय ॥ १४ ॥ जगद्वश्यकरी वैरि—स्तंभिनी बंधमोक्षणी ॥ विद्येयं श्रीकरी मोक्षा—कर्षिणी बुद्धिवर्धिनी ॥१५॥ इमां पुनरनुद्विष्टः । समस्तां सततं जपेः ॥ श्रेष्ठीत्युक्त्वा नमस्कारं । तं संपूर्णमपीपठत् ॥

॥ १६ ॥ अथाखंडनमस्कार–परावृत्तिप्रमोदतः ॥ स्वं दासमपि शंकीयन् । सोऽतिचक्राम वासरान् ॥ १७ ॥ प्राप्ते घनागमे जाते । शाड्वले भूतलेऽखिले ॥ सोऽगात्पुराद्बहिः सर्वा । गृहीत्वा सौरभीरभीः ॥ १८ ॥ श्यामाः पयोभृता धीर–निःस्वना उन्मदिष्णवः ॥ मह्यां महिष्यो गगने । कादंबिन्यश्च रेजिरे ॥ १९ ॥ परक्षेत्रेषु महिषीः । प्रसृता असतीरिव ॥ विनिवर्तयितुं झंपां । सोऽदादंतर्नदीजले ॥ २० ॥ स तत्र तन्नकीलेन । विद्धो ध्यायन् नमस्कृतिं ॥ विपद्यर्षभदासस्य । पत्न्याः कुक्षाववातरत् ॥ २१ ॥ तस्मिन् गर्भगते श्रेष्ठि—न्युत्पन्नान् पुण्यदोहदान् ॥ भर्तुः प्रसादतः सर्वान् । यथाकालममानयत् ॥ २२ ॥ सा काले सुषुवे पुत्रं । दर्शनानंदमिंदुवत् ॥ सुदर्शनाख्यया ख्यात—स्ततः स ववृधे क्रमात्॥ २३ ॥ कलासु कुशलः काले । साधूनां सन्निधौ सुधीः ॥ अधीयानः श्रुतं धर्मं । गृहिधर्ममधत्त सः ॥ २४ ॥ अध्यारुढः स तारुण्यं । पुण्यमूर्तिरुपायत ॥ महेभ्यनंदिनीं नाम्ना । गुणैरपि मनोरमाम् ॥ २५ ॥ बभूव कपिलस्तस्य । मित्रं राज्ञः पुरोहितः ॥ स्मरस्येव विधुर्वायु—र्दक्षिणात्यो मधोरिव ॥ ॥ २६ ॥ एकतानः सदा सद्म । श्रेष्ठिनः स न्यषेवत ॥ स्वगृहं व्यवहारेण । जजमानोंतरां·

तरा ॥ २७ ॥ स्वभर्तरि परस्त्रैण—व्यसनाशंकिनी मनाक् ॥ एकांते कपिला कांता । पप्रच्छ कपिलं प्रियं ॥ २८ ॥ नायासि प्रायशो गेह—मायातोऽपि न तिष्टसि ॥ कांत किं तव वैराग्य—मद्यश्वः सत्यमुच्यतां ॥ २९ ॥ कपिलः प्रोचिवानस्ति । सुहृन्मम सुदर्शनः ॥ व्रजामि भामिनि प्रायः । तस्यैव सदनं सदा ॥ ३० ॥ कः सुदर्शन इत्युक्ते । पत्न्या प्रोचे पुरोहितः ॥ सुदर्शनं न चेद्वेत्सि । वेत्सि तत्किं विशारदे ॥ ३१ ॥ सुदर्शनोऽयमृषभ—श्रेष्टिसूनुरनूनधीः ॥ आराजरंकं स्वगुणै—रभीष्टो जात्यरत्नवत् ॥ ३२ ॥ औदार्येण घनाघनस्य घटितो बुद्ध्या च वाचस्पतेः । गांभीर्येण सरस्वतो रतिपतेर्देवस्य रूपश्रिया ॥ धीरिम्णा धरणीधरस्य रजनीभर्तुः कलाभिश्च यः । सोऽयं श्रेष्टिसुदर्शनो विजयते विश्वत्रयीभूषणं ॥ ३३ ॥ तस्य सर्वे गुणा दृष्टा । यतः शीले पुनर्महान् ॥ चंद्रस्य जगदुल्लास्यं । कुमुदं तु विशेषतः ॥ ३४ ॥ इत्याकर्ण्य सकर्णा सा । कपिला चपलाशया ॥ सुदर्शनं रमयितुं । चक्रे चिंतां स्मरातुरा ॥३५॥ अन्यदा भूभृदादेशा—त्पत्यौ ग्रामांतरे गते ॥ कपिला फलितं मेने । स्वमनोरथशाखिनं ॥ ॥ ३६ ॥ उपेत्य साभ्यधाद्भिभ्य—मद्याजीर्णपुरोहितः ॥ आमयावी मया विज्ञ । त्वामा-

ह्वयति संप्रति ॥ ३७ ॥ परित्यक्तान्यकृत्योऽथ । तया सह सुदर्शनः ॥ मध्ये मित्रगृहं प्राप्तो-ऽपश्यत्तामेव कामिनीं ॥ ३८ ॥ चाटूक्तिर्निर्वृषस्यंतीं । पश्यंतीं स्निग्धया दृशा ॥ स्वशीलरत्न-रक्षार्थ—माचख्यौ तां सुदर्शनः ॥ ३९ ॥ यद्भाषसे मृगाक्षि त्व—मेतत्कस्मै न रोचते ॥ परं हंत विधेर्वाम्या-त्क्लीवोऽस्मि करवाणि किं ॥ ४० ॥ भग्नाशा साथ तत्कालं । गृहद्वारमपावृ-णोत् ॥ व्रज व्रजेति जल्पंती । लज्जमाना स्वकर्मणा ॥ ४१ ॥ जालादिव तिमिः पाशा—दिव पक्षी गृहात्ततः ॥ निर्गत्य त्वरया गर्व-श्चिंतयामासिवानसौ ॥ ४२ ॥ या विलासविषावेशा—-द्विवशीकुर्वते जगत् ॥ भुजंगीष्विव नारीषु । विश्वासस्तासु को नृणां ॥ ४३ ॥ शस्त्रीव स्त्री बुधैश्चिंत्या । प्राणहर्त्री प्रमादिनां ॥ भर्त्रा करगृहीतापि । या परंप्रति धावति ॥ ४४ ॥ वरं वज्रनिपातेन । शतधा चूर्णितं शिरः ॥ न तु निर्धर्मनारीवा-ग्विश्वासोपहृतं मनः ॥ ४५ ॥ ततः स स्वं मनः साक्षी-कृत्याभिग्रहमगृहीत् ॥ नातःपरं । परगृहं गम्यमेकाकिना मया ॥ ॥ ४६ ॥ तदादि चिंतयन् योषाः । सदोषा निखिला अपि ॥ सदा स्वदारतुष्टोऽधा-र्मे धैर्यं विशिष्य सः ॥ ४७ ॥ प्राप्ते शक्रोत्सवेऽन्येद्यु-र्वनं प्राप्तोऽवनीपतिः ॥ समं मंत्रिपुरोधाभ्यां ।

क्रीडा वहुविधा व्यधात् ॥ ४७ ॥ यांत्याः क्रीडार्थमुद्यान—मनयायास्तदामिलत् ॥ नद्या
इवांतरनदी । पथि पत्नी पुरोधसः ॥ ४९ ॥ सुदर्शनवधूं वीक्ष्य । बनं यांतीं षडंगजां ॥ केयं
रामाभिरामांगी—त्यपृच्छत्कपिलान्वयां ॥ ५० ॥ त्वन्नर्तृसुहृदो नार्या । राज्यश्रीरिव षड्गुणा
॥ मुग्धे मनोरमा सेयं । षट्पुत्रेत्यन्वयाव्यधात् ॥ ५१ ॥ सावज्ञं कपिलालापी—द्देवि किं ना-
षसे वृथा ॥ सुदर्शनप्रिया नेयं । यद्यस्यास्तनया अमी ॥ ५२ ॥ स हि क्लीबोऽस्ति निःशेष—
मनुभूतमिदं मया ॥ इत्युक्त्वा प्रकटीचक्रे । कपिला निजचापलं ॥ ५३ ॥ हसंत्यथ जगौ राज्ञी
। निःपुण्ये विदुषि ब्रुवे ॥ अमुना छद्मना मुग्धां । शठः स त्वामवंचयत् ॥ ५४ ॥ स हि षंढः
परस्त्रीषु । प्रचंडस्तु स्वयोषिति ॥ अमी षट् तनयास्तस्य । जानातीति जनोऽखिलः ॥ ५५ ॥
तन्निशम्य विलक्षा सा । च्युतलक्षास्त्रयोधवत् ॥ आलापीत्कपिला कोऽयं । देवि दर्पो वृथा
तव ॥ ५६ ॥ वाचा तं स्वगृहानीतं । मुग्धाप्यहमरीरमं ॥ त्वं जोगिनि प्रगल्भापि । प्राभू-
स्तद्भाषणेऽपि न ॥ ५७ ॥ ग्राव्णोऽपि द्राविका धत्ता—मेका चंद्रकला मदं ॥ शेषाः स्वस्वप्रि-
यप्रीति-कृतो माद्यंति किं स्त्रियः ॥ ५८ ॥ तद्वाणीभिः कृपाणीभि-रिव भिन्नान्वया भृशं ॥

प्रतिज्ञामित्यनात्मज्ञा । चक्रे वक्रेण चेतसा ॥ ५ए ॥ शीलशैलाग्रशृंगाच्चे—त्पातयामि सुद-
र्शनं ॥ तदा मामजयां ब्रुयाः । सजयामन्यथा सखि ॥ ६० ॥ कोऽयं मम पुरोऽसत्व—वणि-
ग्मात्रं सुदर्शनः ॥ सुदर्शनधरोऽपि स्याद् । दृष्टायां मयि निर्मदः ॥ ६१ ॥ मृणाललीलया
हेतीः । सहंते ये रणांगणे ॥ न स्पंदंते जटास्तेऽपि । दृग्मात्राभिहता मया ॥ ६२ ॥ एवं
मिथः प्रजल्पंत्यौ । ते गत्वोपवनं बहिः ॥ तत्र रत्वा चिरं सायं । पुनः स्वस्थानमीयतुः ॥
॥ ६३ ॥ राज्ञ्यथो पंकितां धात्रीं । स्वप्रतिज्ञामजिज्ञपत् ॥ सा स्माह ग्रहिले कोऽयं । लग्न-
स्तव कदाग्रहः ॥ ६४ ॥ स्वात्मभूमिं परिज्ञाय । प्रतिजानाति नीतिमान् ॥ किमज्ञा प्रति-
जानीते । तरणं सरिदीशितुः ॥ ६५ ॥ अन्ये ते वालुकासद्म—समानमनसो नराः ॥ नारी-
नदीनिरक्कोन्यो । वज्रस्तंभस्त्वयं पुनः ॥ ६६ ॥ परेऽपि श्रावकाः प्रायः । परस्त्रीषु पराङ्मुखाः
॥ असौ किं पुनराजन्म—शीलशाली सुदर्शनः ॥ ६७ ॥ गुरुवक्त्राब्जजातार्ह—मरंदास्वादषट्-
पदः ॥ रमते रमणीदेह—वर्चोगेहेष्वसौ कथं ॥ ६८ ॥ सुप्रापाः फणिरत्नाब्धि—तलकेसरि-
केसराः ॥ डुरापं परनारीजि—र्वक्तुः सौदर्शनं पुनः ॥ ६ए ॥ शीललीलायितं तस्य । ख्यातं

क्षितितलेऽखिले ॥ आकाशवद्गगनप्रायां । कदाशां तदिमां त्यज ॥ ७० ॥ अन्यथादन्यथा साधु—शिक्षा ते पंडिते पुनः ॥ प्रतिज्ञाभंजने जाने । जीवितं मरणाधिकं ॥ ७१ ॥ ज्ञात्वा तवैव साचिव्यं । प्रतिज्ञातमिदं मया ॥ विना वायुबलं धूलि—र्न हि व्योमारुरुक्षति ॥ ७२ ॥ तदेकदा तमानीय । निजं नाम कृतार्थय ॥ तस्मिन्नत्रागतेऽशेषं । शेषमीषत्करं मया ॥ ७३ ॥ एवमभ्यर्थिता राज्ञ्या । तदाज्ञामभिगृह्य सा ॥ इभ्यस्यानयनोपायं । वीक्षांचक्रे विचक्षणा ॥ ॥ ७४ ॥ एष कामसमः काम—त्रुमनानीयते सुखं ॥ इति सा पंडिता काम—मूर्तिं लव्यामचीकरत् ॥ ७५ ॥ तां चोत्सवैः सदा साय—मंतःपुरमवीविषत् ॥ एवं च कंचुकिव्रातं । विदुषी सा व्यशिश्वशत् ॥ ७६ ॥ इतश्च भवनिर्वेदा—दार्षभिः सर्वपर्वसु ॥ प्रतिमास्थोऽतिचक्राम । यामिनीः शून्यसद्मसु ॥ ७७ ॥ अन्यदा कौमुदीपर्व—ण्यागते नागरैः सह ॥ विधातुं विविधाः केली—रवनीशो वनं ययौ ॥ ७७ ॥ महीपतिमनुज्ञाप्य । शिरोर्त्तिछद्मना गृहे ॥ मदनार्त्ताभया तस्थौ । सा हि कूटोक्तिजन्मभूः ॥ ७७ ॥ विधित्सुर्धर्मकर्माणि । चतुर्मासकपर्वणि ॥ प्राभृतार्पणतः क्ष्माप—मापप्रह सुदर्शनः ॥ ७० ॥ अनुज्ञातो नरेंद्रेण । स सर्वमपि वासरं ॥ सरंगो

विद्धे चैत्य-परिपाटीमुपोषितः ॥८१॥ सायं निर्माय निर्मायः । पौषधं दुरितौषधं ॥ स गृहस्थो-
ऽपि योगीव । तस्थौ शून्यगृहे क्वचित् ॥ ८२ ॥ सद्ध्यानस्तिमितं प्राणा-यामजातांगलाघवं ॥
ज्ञात्वा तत्रस्थमुध्धृत्य । तं मूर्ध्नाधत्त पंफिता ॥ ८३ ॥ श्रुतामृतभृतः साधु—वृत्तो मांगल्य-
दर्शनः ॥ सस्मेराब्जमुखो ब्रेजे । तन्मौलौ पूर्णकुंभवत् ॥ ८४ ॥ मुक्तकामोऽप्यसौ काम—दं-
भान्निःशंकया तया ॥ मध्ये शुद्धांतमानीय । पुरो राज्ञ्या अमुच्यत ॥ ८५ ॥ खिद्यंती धर्म-
ततेव । वेपनामा भयार्त्तवत् ॥ हृष्यंत्यात्तनिधानेव । तं बभाषेऽभया रयात् ॥ ८६ ॥ चिरा
ज्जीवितसर्वस्व । चिंतया गोचरीकृतः ॥ सुकृतैः प्राक्कृतैरद्य । त्वं दृशोर्गोचरेऽभवः ॥ ८७ ॥
प्राग्मां गुणैरबध्नास्त्वं । बंधितोऽसि ततो मया ॥ कृते प्रतिकृतं कुर्वन् । जनोऽयं नापराध्यति
॥ ८८ ॥ त्वया रूपश्रिया जिग्ये । कामस्तन्मां त्वदाश्रितां ॥ स बाधतेऽमुना त्वं तु । शक्तो-
ऽपि किमुपेक्षसे ॥ ८९ ॥ सुमते सर्वसत्वेषु । समता संमता तव ॥ शरीरेणावयोर्नंद—मधु-
ना नाधुनाति किं ॥ ९० ॥ जानाम्यजन्म ते जंतु—जाते जातोदया दया ॥ मयि पंचेषुदू-
नायां । सा किमग्राहि तस्करैः ॥ ९१ ॥ ध्यानं च मुंच मुंचेदं । न ध्यानावसरोऽधुना ॥ प-

रार्त्तिभंजनार्त्तिं मे । हत्वा ध्यानं ततो व्रजेः ॥ ए२ ॥ शृंगारवार्धिकल्लोलै—र्विश्वविप्लावकै-
रिति ॥ तद्वचोभिर्न चुक्षोभ । सुरशैल इवार्षभिः ॥ ए३ ॥ पाणिभ्यां सास्पृशत्तं च । कटा-
क्षैर्निशितैरहन् ॥ न्यौबच्च केशैस्तस्यांहि—मंशदेशे त्वलंबत ॥ ए४ ॥ अगृह्णन्मध्यमुरूभ्यां ।
स्तनाभ्यां ह्यताडयत् ॥ बध्ध्वा च वस्त्रांचलेनाशु । तं सर्वांगमधूनयत् ॥ एए ॥ एभिर्विला-
सितैस्तस्या । न चकंपे सुदर्शनः ॥ कृकलासीविलासैः किं । कंपते दृढपादपः ॥ ए६ ॥ हंसक-
ध्वनिपादाब्जां । वलित्रयतरंगिणीं ॥ किं सुधादीर्घिकां भूप—प्रियां प्राप्य न खेलसि ॥
॥ ए७ ॥ निशा याति क्रमात्कार्त्स्न्यं । प्रायेणोन्मूंखलाः खलाः ॥ त्वं च मानाद्रिमारूढो ।
धिग्मां दुर्दैववंचितां ॥ ए८ ॥ जल्पंतीति मुहुश्चक्रे । सोपसर्गान् यथा यथा ॥ आरुरोह परां
कोटिं । ध्यानस्य स तथा तथा ॥ एए ॥ स्थूलस्तनस्थले ह्येका—दशश्रोत्रमहाबिले ॥ अ-
रोमहरिति श्याम—शिरोजाभोगभोगिनी ॥ १०० ॥ तृष्णा विवर्धते तस्याः । शरीरमरुमंडले
॥ तादृग्मुनिमुखांभोज—राजहंसी चिखेल न ॥ १ ॥ युग्मं ॥ यस्य माता गृहे नास्ति । तस्य
माता हरीतकी ॥ तस्यामित्यन्वयख्यायां । स दधौ जननीधियं ॥ २ ॥ अथ सामवचोभि-

स्त—मह्युन्यंतं सुदर्शनं ॥ अन्यथाङ्भ्रुकुटीनीम—नालदत्तनयानया ॥ ३ ॥ रे रे यथा यथा चाटु—शतैरभ्यर्थ्यसे मया ॥ तथा तथा स्वसौभाग्य—गर्वेणेव प्रपूर्यसे ॥ ४ ॥ अद्यापि स्त्री-चरित्रस्या—नभिज्ञोऽसि वराक रे ॥ अनयास्मि स्वशक्त्याहं । वीरानपि विरेचये ॥ ५ ॥ क-स्त्वं वणिगणुः स्त्रीनि—र्भ्रश्यंते भूधना अपि ॥ पातयंति तरूनद्य—स्तृणस्तंबस्य का कथा ॥ ॥ ६ ॥ प्रसन्ना जीवितं दत्ते । मेघवृष्टिरिवांगना ॥ अप्रसन्ना पुनः प्राणान् । गृह्णाति जगतो-ऽपि सा ॥ ७ ॥ सरसे नीरसो दीने । शूरः स्निग्धे च कोपनः ॥ कोऽपि नालोकितः क्वापि । नरस्त्वदपरो मया ॥ ८ ॥ जिजीविषास्ति चेन्मानं । मुक्त्वा मानय मां तदा ॥ नो चेत्प्रया-सि मत्क्रोध—कृशानौ तृणपूलतां ॥ ए ॥ एवं चिकीरती वाक्य—गरलं तरलीनृजुः ॥ ध्यानमंत्रभृतस्तस्य । प्राभवन्नोगिनी न सा ॥ १० ॥ दध्यौ सुदर्शनो धिग्मा—मभाग्यानां शि-रोमणिं ॥ यदेवं कुर्वतः पुण्य—मुपसर्गो ममोत्थितः ॥ ११ ॥ यद्यस्य व्यसनांभोधेः । पारं पश्या-म्यमुं तदा ॥ मुंचे पोतमिवोत्सर्ग—मन्यथानशनं श्रये ॥ १२ ॥ आभवाभ्यस्तसंभोग—भं-गीभङ्गीभिराहतः ॥ राज्ञ्या सर्वां निशां नाप । तद्धैर्यजरदो भिदां ॥ १३ ॥ अथालोक्य तमा-

क्षोभं । खिन्ना तीक्ष्णशिखैर्नखैः ॥ सा रंभास्तंभसोमालं । विलिलेख निजं वपुः ॥ १४ ॥
पूत्चक्रे च तथा सर्वे-ऽप्याययुर्यामिका यथा ॥ नासान्यस्तद्दृशं तत्र । ददृशुस्ते सुदर्शनं ॥१५॥
अस्मिन्नेतदसंभाव्य—मिति तैर्ज्ञापितो नृपः ॥ तत्राययौ क्रुधा काल । इव पप्रच्छ चाभयां ॥
॥ १६ ॥ साप्यधाद्दंभभूर्भाग्य-हीनाहं नाथ किं ब्रुवे ॥ तदा त्वयि वनं याति । यज्जाता मे
शिरोव्यथा ॥ १७ ॥ तयाकुलीकृताकस्मात् । त्वदादेशादिह स्थिता ॥ यावत्तावदयं भूत । इ-
वायासीत्कथंचन ॥ १८ ॥ चिरं चकार चाटूनि । रिरंसुरसकौ मया ॥ परं स्वशीलरक्षार्थ—
मौनमेव व्यधामहं ॥ १९ ॥ निस्त्रपोऽयं बलात्कार—मपि चक्रे यदा मयि ॥ तदोच्चैः पूत्च-
काराह-मेतदेव बलं स्त्रियां ॥ २० ॥ घटते नात्र कर्मेदं । तमस्तिग्मद्युताविव ॥ ध्यायन्निति
नृपोऽप्राक्षी-द्भूयोभूयः सुदर्शनं ॥ २१ ॥ कृपालुर्भूपत्नामिन्या । अन्यायं वक्तुमक्षमः ॥ स
मौनमादधेसंतो । ह्यन्यदोषेष्वनादृताः ॥ २२ ॥ तूष्णीकत्वान्महीनाथ—स्तं निश्चित्यापरा-
धिनं ॥ भ्रामयित्वाखिले पुरे । धीवंध्यो वध्यमादिशत् ॥२३॥ मद्वृत्तमस्विन्नीं राज-दयितामे-
ष नास्पृशत् ॥ इत्याख्यातुमिव ज्योती-रूपः सूर्यस्तदोद्ययौ ॥२४॥ आरक्षैः कारितः सोऽन्य—

गुह्यार्वादी गुणाश्रयः ॥ शुभ्रायतिं खरारोहं । पटो निर्णेजकैरिव ॥ २५ ॥ तं वधोचितनेपथ्यं । प्रतिरथ्यां पुरांतरा ॥ भ्रामयित्वा तलारक्षा—श्चक्रुर्घोषणामिति ॥ २६ ॥ सुदर्शनोऽयं शुद्धांते । स्खलितो वध्यते ध्रुवं ॥ नयनिष्ठो नृपो नात्र । मनागप्यपराध्यति ॥ २७ ॥ अस्मिन्नेतदसंभाव्यं । वेत्ति कः कर्मणां गतिः ॥ एषोऽपि कर्मजेयः किं । कोऽयं तैर्हि जगज्जितं ॥ २८ ॥ यद्येषोऽपि भवेदीदृ—क्तद्विश्वासोऽपरस्य कः ॥ इति पंक्तिस्थपौराणा—मालापानशृणोदसौ ॥ २९ ॥ दध्यौ च जीव क्लीवत्वं । माधा बाधान्तरेऽपि रे ॥ दोषः कस्यैष सर्वोऽपि । स्वकर्मफलभाग्जनः ॥ ३० ॥ यांति चेद्यांतु मंक्ष्वेव । प्राणाः सत्वरगत्वराः ॥ माभून्मत्तः पुनर्जातु । लांछनं जिनशासने ॥ ३१ ॥ दुःखमकृतशीलस्य । नाकालमरणान्मम ॥ इदमेव महद्दुःखं । यद्व्रताशा वृथाभवत् ॥ ३२ ॥ इति ध्यानसुधाधौत—मुखकालुष्यमागतं ॥ गृहाग्रतः पतिं वीक्ष्य । हृदि दध्यौ मनोरमा ॥ ३३ ॥ अहो पुण्यवतोऽमुष्य । मुखं दुःखेऽप्यकश्मलं ॥ इंदुः किमपरागेऽपि । प्रसत्तिं स्वां समुज्झति ॥ ३४ ॥ वीक्ष्य सद्वृत्तमुख्यस्या—मुष्य साक्षादिमां दशां ॥ जीवत्यद्यापि पाषाण—हृदया हि मनोरमा ॥ ३५ ॥ आरप्स्यते यदा भर्त्रा । मम

किंचन चापलं ॥ तदा यास्यत्यधो भूमि—र्भ्रंशिष्यत्युरुमंफलं ॥ ३६ ॥ सुता गता भृता वा किं । सर्वाः शासनदेवताः ॥ यदेकापि न सान्निध्यं । मद्भर्तुः कुरुतेऽधुना ॥ ३७ ॥ ततः स्वगृहचैत्ये सा । पूजयित्वा जिनेश्वरान् ॥ चक्रे तदाग्रतः कायो—त्सर्गमेवं कृताश्रवा ॥ ३८ ॥ पारयामि तदोत्सर्गं । यदा संगछते पतिः ॥ नो चेदनशनं मेऽस्तु । सर्वाः शृण्वंतु देवताः ॥ ॥ ३९ ॥ मा शोचीः पुत्रि भर्तुस्ते । सन्निहिता वयं सदा ॥ इत्यकस्मान्नभोभाषा—श्रावि श्राविकया तया ॥ ४० ॥ इतश्चारोपि शूलायां । तलारक्षैः सुदर्शनः ॥ शूली शीलमहिम्नास्य । दधौ स्वर्णारविंदतां ॥ ४१ ॥ दत्ता असिप्रहारास्तै—स्तन्मौलौ मौलितां ययुः ॥ हृद्ये भावलितां पाणि—पादे त्वंगदतां पुनः ॥४२॥ जय जीव जगज्जैत्र—गुणास्पद सुदर्शन ॥ इति वाक्पुष्पवृष्टिश्च । तदा प्रादुरभूद्दिवः ॥४३॥ नृपस्तत्क्षणमारक्षै—र्विज्ञप्तो जातविस्मयैः ॥ तत्रैत्य गाढमालिंग्य । तुष्टावेवं सुदर्शनं ॥४४॥ सात्विकानां त्वमेवासि । सुदर्शन निदर्शनं ॥ यदेवं देवताः शील—साद्ध्यमातन्वते तव ॥४५॥ अवश्यं तव देहस्य । संति केचन रक्षकाः ॥ किं वेत्त्यहृदयश्चर्म—लोचनो दधिवाहनः ॥४६॥ वितन्वंत्या रजःपूरं । वा नात्र च न वा ःयया । भ्रमितोस्म्ययशो·

हंत । भूधरोऽपि तृणं यथा ॥ ४७ ॥ वंश्य : सद्धर्मसंज्ञोऽपि । स्त्रिया को न विडंब्यते ॥
ज्यासंगतः क्षिपेच्चापो । वक्रीभूय शरानृजून् ॥ ४८ ॥ अज्ञानतापराद्धं य—न्मया गुणमये
त्वयि ॥ क्षम क्षमस्व सर्वं तत् । क्षमा हि भवदाश्रया ॥ ४९ ॥ सत्यं वद परं येन । प्रत्ये-
मीति महीभुजा ॥ पृष्टः श्रेष्ठी जगौ वृत्त–मभयाया यथातथं ॥ ५० ॥ एतन्मम पुरावादि ।
त्वया न किमिति ब्रुवन् ॥ भूपस्तं करिणीस्कंधे । न्यस्यानैषीन्निजं गृहं ॥ ५१ ॥ रुषा भजन्
भुजंगत्व–मभयायां भुवो विभुः ॥ श्रेष्ठिना स्ववचोमंत्रै — र्निर्मत्सरविषीकृतः ॥ ५२ ॥ तन्नि-
शम्याभया ह्रीणा । स्वमुद्बध्य विपेदुषी ॥ शुभभावेन केनापि । लेभे वैयंतरीं श्रियं ॥ ५३ ॥
तदभावे निराधारा । भग्ननीडेव पक्षिणी ॥ पलाय्य पाटलीपुत्रं । प्रययौ पंडितापि सा ॥
॥ ५४ ॥ तत्रासौ देवदत्ताया । गणिकाया गृहे स्थिता ॥ घटते भ्रष्टशीलाना—मशीलैः सह
संगतिः ॥ ५५ ॥ संस्नप्य भोजयित्वा च । परिधाप्य विभूष्य च ॥ श्रेष्ठिनं स्वगृहे प्रैषी—
न्महर्द्ध्या मेदिनीपतिः ॥ ५६ ॥ तदा च पारितोत्सर्गा । तीर्णसंसारसागरा ॥ मनोरमा यमा-
नंदं । लेभे सैव विवेद तं ॥ ५७ ॥ मनःसमक्षमक्षाम—मतिर्दध्यौ सुदर्शनः ॥ अभवत्कीय-

ती मान—म्लानिः सुकृतिनोऽपि मे ॥ ५८ ॥ पराभवे रतिर्येषां । ध्रुवं तेषां पराभवः ॥ न हि नीरधितीरस्थो । नक्रैः कोऽपि कदर्थ्यते ॥ ५९ ॥ स्थिरं गुरुकुले वास—माधास्यं शैशवे यदि ॥ तदाहमीदृशं दाह—मद्राक्षं न मनागपि ॥ ६० ॥ न संप्रति प्रीतीकरी । तदेषापि मनोरमा ॥ मनोरमा पुनर्लोल—स्वभावा रमयेत्कथं ॥ ६१ ॥ इत्यात्तनिश्चयो दीक्षां । समादाय स सद्गुरोः ॥ क्रमाद्गीतार्थतां प्राप्तो । विजह्रे वसुधातले ॥ ६३ ॥ गतोऽसौ पाटलीपुत्रं । भ्रमन् गोचरीचर्यया ॥ तया पंडितया दृष्ट—मात्र एवोपलक्षितः ॥ ६४ ॥ शीललीलायितं तस्य । वर्णयामास पंडिता ॥ पुरतो देवदत्ताया । ययौ सोऽपि तदालयं ॥ ६५ ॥ सदानद्धारमावल्ल्या—भयावद्देवदत्तया ॥ स सर्वं दिवसं नाना—विलासैरुपसर्गितः ॥ ६६ ॥ कथंचित्त्रुटितः सायं । तस्या वार्या इव द्विपः ॥ अलुप्तचरणप्राणो । वनं भेजे मुनीश्वरः ॥ ६७ ॥ ध्यानस्थं व्यंतरीभूता—भया तत्र निरीक्ष्य तं ॥ चकार प्राग्भवद्वेषा—दुपसर्गाननर्गलान् ॥ ॥ ६८ ॥ तदापि निःप्रकंपोऽसौ । निर्वात इव दीपकः ॥ अवाप केवलालोकं । दुष्कर्मशलभक्षयात् ॥ ६९ ॥ असावभ्यर्चितो भक्ति—भासुरैस्त्रिदशासुरैः ॥ निविष्टः कनकांभोजे । वितेने

धर्मदेशनां ॥ ७० ॥ व्यंतरी पंकिता देव–दत्ता चान्येऽपि नागराः ॥ श्रुत्वा तद्देशनां के के । न प्राबुध्यंत जंतवः ॥ ७१ ॥ इत्थं विहृत्य वसुधावलये विलीन–मीनध्वजो भवरजो दलयन् जनानां ॥ श्रीमान् सुदर्शनमुनिर्वनिताविरक्तो–ऽप्यालिंगतेस्म शिवनायकया क्रमेण ॥ ७२ ॥ इति श्रीसुभगकथा समाप्ता. ॥ इत्युक्ता श्रावककुलस्य दुर्लभता. अथ गुरोर्दुर्लभतामाह––

॥ मूलम् ॥––विमलंपि कुलं अहलं । जइ लब्भइ धम्मदेसउ न गुरू ॥ पत्तंपि जाणवत्तं । विहलं निज्जामएण विणा ॥ २५ ॥ व्याख्या–सुगमा ॥ २५ ॥ इदानीं गुरोः स्वरूपमाह–

॥ मूलम् ॥–छत्तीसगुणसमेउ । तयभावे अप्पमत्तगीयत्थो ॥ जो सो नौउव्व गुरु । तरेइ तारेइ भवजलहिं ॥ २६ ॥ व्याख्या––षट्त्रिंशता गुणैः समेतो युक्तो गुरुर्भवति, ते चामी–देसकुलजाइरूवी । संघयणी धीइजुउ अणासंसी ॥ अविकत्थणो अमाई । थिरपरिवाडी गहियवक्को ॥ १ ॥ जियपरिस्सो जियनिद्दो । मज्झत्थो देसकालभावन्नू ॥ आसन्नलद्धपइभो । नाणाविहदेसभासन्नू ॥ २ ॥ पंचविहे आयारे । जुत्तो सुत्तत्थतदुभयविहिन्नू ॥ अहरणहेउकारण । नयनिउणो गाहणाकुसलो ॥ ३ ॥ ससमयपरसमयविऊ । गंभीरो दित्तिमं सिवो

सोमो ॥ गुणसयकलिउं जुत्तो । पवयणसारं परिकहेउं ॥ ४ ॥ आसां लेशतो व्याख्या—देशो मध्यदेशस्तत्रोत्पन्नः सुखावबोधवाग्भवति. कुलं पैतृकं तद्वान् यथोत्क्षिप्तं भारं निर्वाहयति. मातृकी जातिस्तद्युक्तः सुविनीतो भवति. रूपवानादेयवाक्यो भवति. संहननी दृढसंहननो व्याख्यानतपोऽनुष्ठानादिषु न खिद्यति, धृतियुतः कथंचिदलाभे न दैन्यं याति. अनाशंसी श्रोतृभ्यो न वस्त्रादीहते. अविकत्थनोऽस्वश्लाघी, स ह्यनुद्धतः स्यात्. अमायी न शाठ्यो न शिष्यान् वाहयति. स्थिरपरिपाटिः स्थिरपरिचितग्रंथस्तस्य हि सूत्रं न गलति. गृहीतवाक्योऽप्रतिहतवचः स्यात्. जितपरिषद् परवाद्यक्षोभ्यो भवति. जितनिद्रः सूत्रार्थपरिवर्तकः शयालुशिष्याणां शिक्षयिता. मध्यस्थः संवादको भवति. देशकालभावज्ञो यथायोगं देशादिगुणानवबुध्य विहरति हृदयंगमां च देशनां विधत्ते. आसन्नलब्धप्रतिभो वादिनावष्टब्धः सद्यः प्रत्युत्तरदानक्षमो भवति. नानाविधदेशभाषाज्ञो नानादेशजविनेयप्रत्यापयनसमर्थः स्यात्. ज्ञानदर्शनचारित्रतपोवीर्यलक्षणे पंचविधे आचारे युक्तः श्रद्धावान् स्यात्. सूत्रार्थतदुभयविधिज्ञः सम्यगुपसर्गापवादौ वक्ति. उदाहरणहेतुकारणनयनिपुणस्तज्ज्ञम्यान्

भावान् सम्यक्प्ररूपयति, नागममात्रमेव प्रमाणीकुरुते. तत्रोदाहरणं—वह्न्यादिसिद्धौ महानसादिर्हेतुर्ज्ञापको धूमत्वादेः कारणं कुंभादेर्मृत्पिंडादि, नया नैगमादयः. ग्राहणाकुशलोऽल्पबुद्धीनपि शिष्यान् भंग्यंतरेण ग्राहयति. स्वसमयपरसमयवित्परमताक्षेपेण सुखं स्वसमयं परूपयति. गंभीरः कृतेऽपि कार्येऽनौत्कर्षं याति. दीप्तिमान् दृष्टोऽपि परवादिनः क्षोभयति. शिवो मारिरोगाद्युपवान् हंति. सौम्यः सर्वजनप्रियो भवति. इत्थंभूत एवाशेषैरपि गुणशतैः कलितः सन् प्रवचनसारमागमरहस्यं परिकथयितुं युक्तो भवति, एते च सूरिगुणाः क्वचिदन्यथापि दृश्यंते, तद्यथा—अट्ठविहा गणिसंपई । चउगुणा नवरि हुंति बत्तीसं ॥ विणउ य चउप्भेउ । बत्तीसगुणा इमे तस्स ॥ १ ॥ अस्यापि व्याख्या—आचारश्रुतशरीरवचनवाचनामतिप्रयोगसंग्रहरूपाष्टविधा गणिसंपच्चतुर्विधा सती द्वात्रिंशत्सूरिगुणा भवंति. तत्र संयमेऽध्रुवोपयोगिता मदरहितत्वमनियतवासित्वमचंचलत्वं चेत्याचारसंपच्चतुर्धा. बहुश्रुतत्वं क्रमोत्क्रमादिवाचनया स्थिरसूत्रत्वं, उत्सर्गापवादादिभिर्विचित्रसूत्रत्वं, उदात्तादिघोषशुद्धिश्चेति श्रुतसंपच्चतुर्धा. आरोहपरिणाहयोः समत्वं, अहीनांगतयाऽलज्जनीयावयवत्वं, संपूर्णेंद्रियत्वं,

दृढसंहननं चेति शरीरसंपच्चतुर्धा. ग्राह्यवाक्यत्वं, मधुरवाक्यत्वं, रागाद्यनिश्रितवाक्त्वं स्पष्टवाक्त्वं चेति वचनसंपच्चतुर्धा. योग्यं ज्ञात्वोद्दिशति, समुद्दिशति, अपरिणतादौ दोषसंभवात्तत्रेदमध्ययनं त्वया पठितव्यमिति गुरुवचनमुद्देशः, तस्मिन्नेव शिष्येणाधिते गुरोर्निवेदिते स्थिरपरिचितं कुर्वेति गुरुवचनसमुद्देशः, तथाग्रेतने परिचिते नवं वाचयति, अर्थस्य निर्वाहं करोतीति वाचनासंपच्चतुर्धा. सामान्यतोऽर्थस्यावग्रहणमवग्रहः, अहं किंचित्पश्यामीत्यादि, तदर्थविशेषालोचनमीहा, अयं स्थाणुर्वा पुरुषो वेत्यादि, प्रक्रांतार्थविशेषनिश्चयोऽवायः, स्थाणुरेवायमित्यादि, निश्चितार्थस्य पश्चादपि स्मरणं धरणं धारणा चेति मतिसंपच्चतुर्धा. आत्मनः शक्तिं पुरुषमुपासकादिबलं, क्षेत्रं साधुभावितमितरद्वा, अयं प्रतिवादी राजामात्यो वा सांख्यः सौगतो वेति वस्तु विमृश्य वादमारभते, इति प्रयोगसंपच्चतुर्धा. बालवृद्धादियोग्यक्षेत्रग्रहणं निषद्यादिमालिन्यपरिहाराय वर्षासु पीठफलकादेर्ग्रहणं, यथाकालं स्वाध्यायोपधिप्रत्युपेक्षणाभिक्षादिषु विनियोगः, दीक्षागुरोः श्रुतगुरोः, पूजनं चैते संग्रहसंपच्चतुर्धा. तथा विनयश्च चतुर्भेदः, स चायं—आयारे सुसविणए। वक्खेवणे चेव होइ बो-

धव्वे ॥ दोसस्सयनिग्घाए । विणए चउहे सपडीवत्ती ॥ १ ॥ तत्र स्वयं संयमसमाचरणादि-राचारविनयः, सूत्रं चार्थं वाचयतीत्यादिः श्रुतविनयः, अदृष्टधर्मं दृष्टपूर्वमिव ग्राहयतीति विक्षेपणाविनयः, क्रुद्धस्य क्रोधं विनयतीत्यादिर्दोषनिर्घातविनयः, सर्वेऽप्यमी मिलिताः षट्त्रिंशत्. अथवा—समत्तनाणचरणं । पत्तेयं अट्ठ अट्ठ भेइल्ला ॥ वारसभेउ अ तवो । सूरिगुणा हुंति बत्तीसं ॥ १ ॥ यद्वा—वयछक्काइ अट्ठार—सेव आयारमाइ अठेव ॥ पायच्छित्तं दसहा । सूरिगुणा हुंति बत्तीसं ॥ १ ॥ यदिवा—विगहासणा य पिंडो । कसायउवसग्गझाणसामाइयं ॥ भासा धम्मो एए । चउगुणिया हुंति सूरिगुणा ॥ १ ॥ ननु यस्मिन्नेते गुणाः सामस्त्येन न स्युः, स किं गुरुरेव न भवतीत्याह—' तयभावेति ' कालादिदोषाणां तेषां षट्त्रिंशतो गुणानां समुदितानामभावे सत्यप्रमत्तो गीतार्थश्चेति गुणद्वयसहितोऽपि गुरुर्भवति, तत्राप्रमत्तः क्रियास्ववहितः, स हि परमपि प्रमाद्यंतं निःशंकं वारयति, गीतार्थः सूत्रार्थादिवेदकतया कुशलः, यदाह—सुत्ते अत्थे य तहा । उस्सगाववायभाववबहारे ॥ जो कुसलत्तं पत्तो । पवयणकुसलो तउ बद्धा ॥१॥ अयं हींगिताकारादिभिः परेषां भावमवबुध्य त-

दुचितदेशनया सुखं बोधं जनयतीत्येतद्गुणद्वयस्य मुख्यता, शेषास्तु गुणास्तत्परिकरप्रायाः, य एवंविधः स गुरुः पोत इव प्रवहणमिव स्वयं भवजलधिं तरत्यन्यानप्यनिश्रितांस्तारयति. यदाह—जह लहुदारुविरईउं । पोउं तारेइ गुरुअन्नंमंपि ॥ तह कम्मलहुयपत्तं । सयं तरं तारए अन्नं ॥ १ ॥ ननु गुरुः परं कथं तारयतीत्युच्यते उपदेशद्वारेण, तथा चाह—

॥ मूलम् ॥—जब न मणी न दीवा । न य चंदा न य रवीवि दिप्पंति ॥ तंपि सुगुरूवएसा । अबं हेलाइ पयासंति ॥ २७ ॥ व्याख्या—यत्र जीवाजीवादिकेऽर्थे न मणयश्चंद्रकांताद्याः, न दीपा गृहमणयः, न च चंद्राः शीतांशवः, न रवयोऽपि दीप्यंते, बहुवचनं जिनमतापेक्षं, मण्यादयोऽपि यमर्थं न प्रकाशयंतीत्यर्थः, तमप्यर्थं वस्तु सुगुरूपदेशा हेलया सुखेनैव प्रकाशयंति. अयमर्थः—न हि गुरुः करे धृत्वा कंचन संसारात्तारयति, किंतूपदेशद्वारेण पुण्यपापादिकान् भावांस्तथा कथंचित्प्ररूपयति, यथा संजातवैराग्याः श्रोतारः परिणामविशुद्ध्या स्वयमेव संसारसागरं तरंतीत्युपचाराद्गुरवोऽपि तारका एव. ॥ २७ ॥ उपदेशसारत्वमेव गुरोर्दर्शयति—

॥ मूलम् ॥—नीणिंति कहं नविया । गंनीराउ नवंधकूवाउ ॥ जइ अवलंबं सुगुरू—वएसरासीउ न करिंति ॥ २७ ॥ व्याख्या—स्पष्टा, नवरं नीणंतित्ति निर्गछंति. उक्तं च—अज्ञानछन्नदृशां । नविनां नवकूपसंकटे पततां ॥ एकैव नवति गुरुजन—वचनवरत्रा परित्राणं ॥ १ ॥ एवं सद्गुरुस्वरूपमुक्त्वाथ व्यतिरेकमाह—

॥ मूलम् ॥—न य चोयंति पमत्तं । नेव पयासंति विहिपथं सम्मं ॥ सवछचाडुवाई । ते गुरुणो नवपहसहाया ॥ २९ ॥ व्याख्या—ये गुरवः प्रमत्तं धर्मे मंदादरं साधुं श्रावकं वा वत्स! किं प्रमाद्यसि? पुनः पुनर्दुर्लनेयं सामग्री, विरसावसाना हि विषयाः, कस्तेषु व्यामोहः? परमार्थबंधुर्धर्म एव, न ह्यसावादृत्य मोक्तुं युक्तः, इत्याद्युपदेशैर्न चोदयंति प्रवर्तयंति स्वकृत्येषु, तथा तथाविधाचारविकलतया मास्म लोकेऽस्माकमवज्ञाभूदिति न सम्यग्यथावस्थितं विधिपथं विधिमार्गं साधुश्रावकसामाचारीरूपं प्रकाशयंति, किंतु सर्वत्र पुण्यपापनिर्वृत्ते जने केवललोनावेशाच्चाटु मुखप्रियमेव वदंतीत्येवंशीलाश्चाटुवादिनः, ते गुरवो नवपथं भ्राम्यतां जीवानां सहाया इव नवंति. यदाह—जह लोहसिला अप्पंपि । बोलए तह

विलग्गपुरिसंपि ॥ इय सारंत्तो अ गुरु। परमप्पाणं च बोलेइ ॥ १ ॥ इदानीं दृष्टांतगर्जं सद्गुरोर्माहात्म्यं वक्ति—

॥ मूलम् ॥—खीणोवि धम्मधाऊ। पएसिरज्जंमि जं समुल्लसिओ ॥ तं किर सम्मं सेविय। गुरुचरणरसायणस्स बलं ॥ ३० ॥ व्याख्या—गाथार्थः सुगमः, न्नावार्थस्त्वयं—यथा रोगिणो देहे राजयक्ष्मणा क्षीणोऽपि धातुः सुसेवितेन सम्यग्वैद्योक्तेन रसायणेनोपचर्यते, तथा प्रदेशिभूपते राज्ये नास्तिक्येन क्षीणोऽपि धर्मधातुः सुसेवितेन श्रीकेशिकुमारगुरोर्वचनरसायनेन पुनर्नवीकृत इति. व्यासार्थः कथानकगम्यस्तच्चेदं—

समस्ति केतकीनिवृ—द्भूरिवासात्र न्नारते ॥ चित्रमीश्वरवाल्लभ्यं। न मुंचति कदापि या ॥ १ ॥ तदर्धे श्वेतवीनाम। पूरस्ति स्वस्तिन्नाजनं ॥ यत्राढ्याश्च कवींद्राश्च। विशिष्टार्थैकदृष्टयः ॥ २ ॥ प्रतापतपनस्तत्र। प्रदेशिभूपतिर्बन्नौ ॥ मित्रशत्रुदृशं योऽदा—दंन्नोजकुमुदोपमाम् ॥ ३ ॥ यः स्वयं नास्तिको लोकान्। लौकायतिकशासने ॥ दृढीचक्रे चिरं द्यूत—कारवद्द्यूतदेवने ॥ ४ ॥ यः प्रमादो व्रतानीव। गव्यानीव सुरालवः ॥ पंचापि दूषयामास। शासना-

नि कुवासनः ॥ ५ ॥ प्रत्यक्षैकप्रमाणो यो । जीवस्वर्नरकादिकान् ॥ निह्नुतेस्माखिलानर्थान् । सिद्धचौर इवोन्नितः ॥ ६ ॥ शुक्लपक्षाः सदाचार—चतुरा अनगारिणः ॥ न यस्य विविशुर्देशं । मराला इव जंगलं ॥ ७ ॥ सूर्यकांतान्नवत्तस्य । शौर्यवृत्तिरिव प्रिया ॥ सूर्यवन्महसां राशिः । सूर्यकांतस्तु तत्सुतः ॥ ८ ॥ बभूव सारथिस्तस्य । चित्रश्चित्रधियां निधिः ॥ स ययौ राजकार्येण । श्रावस्तीं पुरमन्यदा ॥ ९ ॥ अभिरामोपदापाणि—र्मिलितस्तत्र भूभुजः ॥ पृथुश्रि श्रीपदाभ्यासे । वासमंदिरमापसः ॥ १० ॥ अन्यदा पुत्रमित्राद्यै—र्युक्तं स्नातमलंकृतं ॥ परिपुरं स तत्रस्थो । यांतं लोकमलोकत ॥ ११ ॥ इंद्रस्कंदमुकुंदादि—यात्रान्यो वा महोत्सवः ॥ किं बहिर्विद्यते कोऽपी—ति भृत्यानन्वयुंक्त सः ॥ १२ ॥ तेऽपि ज्ञात्वा जगुः स्वामिं—श्चतुर्ज्ञानमहोदधिः ॥ श्रीपार्श्वनाथसंताने । विश्रुतः श्रुतकेवली ॥ १३ ॥ केशी गणधरः पुर्या । उद्यानमधुनापुनात् ॥ तमनंतशमं नंतु—मयं याति जनव्रजः ॥ १४ ॥ युग्मं ॥ अथारूढो रथं चित्रो । विनोदेन वनं गतः ॥ प्रणम्य परया प्रीत्या । निषसाद गुरोः पुरः ॥ १५ ॥ पौरव्रातं च चित्रं च । समुद्दिश्याथ केशिना ॥ देशना विदधे धर्म—द्रुमपीयूषसारिणी ॥१६॥

यथाशक्ति प्रपेदाने । धर्मं धीभाजने जने ॥ नामग्राहं गुरुश्चित्र–मपृच्छद्धर्मकौशलं ॥ १७ ॥
स्वभावभद्रकश्चित्रो । गुरुणा भाषितस्तदा ॥ महोदयपदं प्राप्त–मिवात्मानममन्यत ॥ १८ ॥
आदाय गुरुतः सार–सम्यक्त्वां द्वादशव्रतीं ॥ राजकार्यमसौ गौणी–कृत्य धर्मं सदा व्यधात्
॥ १९ ॥ श्रावं श्रावं गुरोर्वाचं । सोऽभवन्नवतत्त्ववित् ॥ पायं पायं पयोऽब्दस्य । बद्धमूल इव
द्रुमः ॥ २० ॥ सिद्धसाध्योऽन्यदा चित्रो । व्रजन् निजपुरींप्रति ॥ गुरूणामाग्रहं तेने । तत्रागंतुं
कृतांजलिः ॥ २१ ॥ तेऽप्यूचुः सौम्य सद्भावं । पुष्पितं फलितं वनं ॥ भूयोभिरभिगम्येत । प-
थिकैर्विहगैरपि ॥ २२ ॥ तदेवानभिगम्यं स्या–द्भिलिंगुव्रयसाश्रितं ॥ यः कृषत्यरिवत्पांथ–प-
क्षिणां सहसाक्षिणी ॥ २३ ॥ एवं कुस्वामिना क्रांता । कांतापि श्वेतवी पुरी ॥ कथमाश्रीयते
सद्भि–स्ततः सारथिरभ्यधात् ॥ २४ ॥ लब्धोऽप्यलब्धवद्भावी । धर्मोऽयं भगवन्मया ॥ याव-
त्प्रदेशिस्वामी मे । धत्ते धर्मविरोधतां ॥ २५ ॥ न तं बोधयितुं शक्तिः । कस्यापि भवतो वि-
ना ॥ विना जनार्दनं केन । दम्यते कालियोरगः ॥ २६ ॥ स्वरूपं स्वप्रभोर्जानन् । नाहं कुर्वे
कदाग्रहं ॥ परं पश्यथ लाभं चे–त्तत्रांचध्वमेकदा ॥ २७ ॥ पूज्यैर्लाभार्थिभिस्तत्र । न चिंत्यं

स्वात्मसंकटं ॥ न लाभा सुखशीलस्य । वणिजोऽपि क्वचिद्यतः ॥ २८ ॥ विज्ञप्येति चचा-
लाशु । चित्रः स्वविषयंप्रति ॥ यतिभक्तिं प्रतिग्रामं । बोधयन् जनतानताः ॥ २९ ॥ प्राप्तश्च
श्वेतवीं सिद्धं । कार्यं विज्ञप्य भूभुजे ॥ स्थापयित्वांतरुद्यानं । स्वभृत्यानेवमन्वशात् ॥ ३० ॥
यदा केचिन्नरा अत्रा—यांति भून्यस्तलोचनाः ॥ दंडहस्ताः स्फुरद्धर्म—ध्वजा उध्धृतमूर्ध-
जाः ॥ ३१ ॥ तदांतःकाननं सर्वा—स्तानवस्थाप्य सत्वरं ॥ अनवद्या निवेद्यास्ते । कर्णान्त्य-
र्णमुपेत्य मां ॥ ३२ ॥ धर्मं व्यधादथो मंत्री । रहः स्वगृहमध्यगः ॥ करोति प्रकटां लक्ष्मीं ।
को वा राज्ये कुनायके ॥ ३३ ॥ गुरवोऽपि निजज्ञान—ज्ञातज्ञातव्यडंबराः ॥ चिंतयामासु-
राबुद्ध्य । प्रबोधार्हं प्रदेशिनं ॥ ३४ ॥ यद्यसौ बोध्यते बोध—शक्तिस्तन्नः किमन्यथा ॥ न
वज्रं वज्रमित्याख्यां । लभतेऽद्रिमदारयन् ॥ ३५ ॥ सन्मार्गे स्थापयेन्मिथ्या—दृशमेकमपी-
ह यः ॥ त्रसस्थावरजंतूना—मभयं तेन घोषितं ॥ ३६ ॥ भृंगा इव सरंगास्ते । केतकीमग-
मंस्ततः ॥ अबिभ्यतो महीपाल—डुर्वाक्कंटकदारणात् ॥ ३७ ॥ लोकान् पथि प्रतिग्राम—
मवस्थाप्य स्वशासने ॥ प्रापुर्विजयरीतिज्ञा । गुरवः श्वेतवीं पुरीं ॥ ३८ ॥ प्राग्वर्णितस्वरूपांस्ता

—न्निरीक्ष्यांतर्वनं मुनीन् ॥ ते नरास्तेनिरे शुद्धिं । छन्नमागत्य मंत्रिणं ॥ ३९ ॥ दिने तद्वंद-
ने शंक—मानः स्थानस्थ एव सः ॥ अवंदत गुरून् दत्त—सप्ताष्टाभिमुखक्रमः ॥ ४० ॥ मनो
गूढपथत्वेना—परिज्ञेय गमागमं ॥ प्राहिणोद्गुरुसेवायै । दिवापि स पुनः पुनः ॥ ४१ ॥ सा-
यं गत्वा गुरून्नत्वा । सोऽवग्नाथ तथा कुरु ॥ जैनो धर्मः प्रथामेति । यथा पृथ्वीशपर्षदि ॥
॥ ४२ ॥ सादीव शूकलमगस्त्युदयोंबुधिं वा । मंत्रीव सर्पमिभपाल इव द्विपेंद्रं ॥ अंभोऽभिषेक
इव दुग्धमुदस्तफेनं । एनं समर्थ शमयस्व नृपं विरुद्धं ॥४३॥ गुरुरूचे न चादृष्टं । वेध्यं वीरो-
ऽपिविध्यति ॥ अदृष्टमातुरं धीमान् । वैद्योऽपि नो चिकित्सति ॥४४॥ काष्टं तक्षापि नादृष्टं ।
सरलीकुरुते क्वचित् ॥ अदृष्टं तं तवाधीशं । बोधयामः कथं वयं ॥ ४५ ॥ मयोपायेन स प्रा-
त-रिहानेय इति ब्रुवन् ॥ चित्रः स्वमंदिरं गत्वा । भूपमूचे निशात्यये ॥ ४६ ॥ नेतर्यें तव
कांबोजाः । संति प्राग्ढौकिता हयाः ॥ अद्य गत्वा परीक्षस्व । चतुरश्चतुरोऽपि तान् ॥ ४७ ॥
तेष्वेकं हयमारुह्य । बाह्यालीवर्त्मना नृपः ॥ चित्रेण तां दिशं निन्ये । यत्र ते संति सूरयः ॥
॥ ४८ ॥ दूराध्वक्रमणोत्पन्न—क्लमं प्रस्वेदविक्लिदं ॥ राजानमानयच्चित्रो । वनं निर्ग्रंथपावनं ॥

॥ ४९ ॥ भेकैर्वचनवैचित्र्या—न्नीयंते यां दिशं रयात् ॥ संचरंते तया पृथ्वी—पालका बा-
लका इव ॥ ५० ॥ तदा पुरो निविष्टेषु । केषुचिद्भद्रकात्मसु ॥ सुध्वानो विदधानोऽभू—त्फ-
णभृद्धर्मदेशनां ॥ ५१ ॥ श्रुता तरुतलस्थेन । देशना सा प्रदेशिना ॥ ऊचे चित्र किमत्रास्ति
। घरटः कोऽपि कानने ॥ ५२ ॥ चित्र ध्वनिरियं कर्ण—कोटरे मे कटूयसे ॥ स्वामिन्नक्तस्त्व-
मेनं चे—त्तदा वारय वारय ॥ ५३ ॥ गत्वाथ पुनरागत्य । चित्रो भूपमभाषत ॥ देव धर्मं व-
दन्नस्ति । वने कोऽप्येष भिक्षुकः ॥ ५४ ॥ रुषोत्तालोऽथ भूपालो—ऽन्यधाद्भ्रुकुटिभीषणः ॥
कथं चित्र विवेशासौ । देशेऽस्मिन् मयि रक्षके ॥ ५५ ॥ कदर्थयिष्यतेऽनेन । मद्देशोऽप्यन्यदे-
शवत् ॥ यद्येष ताड्यते बाढं । तदुपैत्यपरोऽपि न ॥ ५६ ॥ एवमेवैवदित्युक्ति—र्राजा चि-
त्रेण संयुतः ॥ चचाल रोषरक्ताक्षो । भूमानुज्जीर्णमुद्गरः ॥ ५७ ॥ चित्रेणाथ धियां धाम्ना—
भ्यधीयत नराधिपः ॥ कोऽयं स्वामिन् वृथा भिक्षु—मशके तव विक्रमः ॥ ५८ ॥ पृच्छ्यते स
निजज्ञान—हेतुः किंचिदगोचरं ॥ येनोत्तरप्रदानाया—शक्तो जिहेति स स्वयं ॥ ५९ ॥ ततः
क्षीणाभिमानोऽसौ । रात्रिमादाय नंक्ष्यति ॥ तत् श्रुत्वा नापरोऽप्यत्र । कोऽपि भिक्षुः समे-

ष्यति ॥ ६० ॥ एवं च तव चातुर्यं—यशो जगति रंस्यते ॥ आदत्ते वीरमानी को। भिक्षु-
क्षथनदुर्यशः ॥ ६१ ॥ साधुस्ते धीर धीरेषा । चित्रमेवमभिष्टुवन् ॥ पुरो गुरुमुदारांगं ।
निरीक्ष्येति जगाद सः ॥ ६२ ॥ पश्य चित्र कियन्मात्र—मेष स्थूलो निरीक्ष्यते ॥ निश्चित-
स्य परान्नस्य । न स्यात्किं स्थूलताथवा ॥ ६३ ॥ मन्ये म्रियेत जठरं । नास्यैकग्रामभिक्षया ॥
दुर्भिक्षं तत्र वृष्टेऽपि । मेघे स्याद्यत्र यात्यसौ ॥ ६४ ॥ किमेवं रारटीत्येव । दह्यमान इवाग्निना
॥ यद्वा किंचिद्दिनायामं । भुक्तमस्य न जीर्यति ॥ ६५ ॥ भेजुर्गुरोस्तरोर्दूरी—भावं भाविवि-
हंगमाः ॥ पूर्वासीनास्तमायातं । दृष्ट्वा द्विपमिवोन्मदं ॥ ६६ ॥ अथ गत्वाग्रतः स्तब्धः ।
कृतकेदारयात्रवत् ॥ भूपः कोपविशामीति । सूरिं पप्रच्छ शाठ्यतः ॥ ६७ ॥ चक्रे स कृतिनां
चक्री । लापमालापगोचरं ॥ राजन् भूमिस्तवैवेयं । यथारुचि तदास्यतां ॥ ६८ ॥ यथा स्था-
नं निविश्याथ । नृपः सोल्लंठमभ्यधात् ॥ देहानुमाननिर्ह्रादः । किमाचार्य वदन्नसि ॥ ६९ ॥
धर्मं वच्मीति गुरुणा । प्रोक्ते धर्मस्तु कस्तव ॥ किं च धर्मफलं भूपे—नेति पृष्टे गुरुर्जगौ ॥
॥ ७० ॥ धर्मोऽस्माकं दयासत्या—स्तैन्यब्रह्मादिलक्षणः ॥ फलं तत्कारिणो स्वर्गो । नरकस्त्वत-

रस्य च ॥ ७१ ॥ भापयन्निव हुंकारै—र्भूतान् भूमिपतिर्जगौ ॥ वाक्प्रपंचममुं मुंच । वंच्येऽहं
न भवादृशैः ॥ ७२ ॥ लोकेन सह किं वैरं । तवास्ति पितृघातजं ॥ येन स्वैरमसौ भोगान् ।
भुंजानो दंड्यते त्वया ॥ ७३ ॥ किं नाम पामरप्रायं । मायिन्मामपि मन्यसे ॥ सत्रासमक्ष-
मक्षोद—क्षमं वक्ति यदीदृशं ॥ ७४ ॥ त्वया जल्पितं यदृष्टं । ये फले पुण्यपापयोः ॥ तौ
स्वर्गनरकौ धूर्तै—रेव स्वमतिकल्पितौ ॥ ७५ ॥ नास्ति स्वर्गोऽत्र तद्भासि—जनानामनि-
रीक्षणात् ॥ अंतर्व्याप्त्या साध्यसिद्धे—रुदाहृतिकथा वृथा ॥ ७६ ॥ एवं निषेधिते स्वर्गे । न-
रकोऽपि निषेधितः ॥ कषितो निष्तुषः पक्षो । ह्येष जात्यसुवर्णवत् ॥ ७७ ॥ तथाहि—आर्ह-
स्पत्यमते विद्धा—नासीन्मम पितामहः ॥ स मामुत्साहयामास । द्यूताब्रह्मादिकर्मसु ॥ ७८ ॥
अभूदर्हन्मते बद्ध—मतिर्मम पितामही ॥ दयादमादिपुण्येषु । सा मां नित्यं न्ययोजयत् ॥
॥ ७९ ॥ अनाबद्धमुखो लोक—स्तदानीमित्यभाषत ॥ राजायं नरकं याता । राज्ञी च त्रिदि-
वं पुनः ॥ ८० ॥ तौ द्वावपि मया मृत्यु—समयेऽभ्यर्थितौ भृशं ॥ यायश्चेन्नरकं स्वश्च । कृत-
कर्मवशौ युवां ॥ ८१ ॥ तदागत्यावबोध्यास्तं । मां प्राणेभ्योऽपि वल्लभं ॥ येन कुर्वे सदा ध-

र्म—कर्म निर्मुक्तपातकः ॥ ७२ ॥ तयोः प्रमितयोर्मार्ग—महमालोकयं चिरं ॥ दवाग्निद
ग्धः शाखीव । कोऽपि नाविरभूत्पुनः ॥ ७३ ॥ तदादि नरकस्वर्ग-निषेधं दृढधीर्व्यधां ॥ रा-
ज्ञेत्युक्ते जगौ सूरिः । पूरयन् ध्वनिनांबरं ॥ ७४ ॥ जनं स्वकर्मरोगार्तं । विषयापथ्यतो वयं
॥ वारयन्तो हितधिया । भवामः किमु वैरिणः ॥ ७५ ॥ तौ स्वर्गनरकौ धूर्तै—रेव स्वमति-
कल्पितौ ॥ इत्युक्तिरेव भवतो । भाति स्वमतिकल्पिता ॥ ७६ ॥ तारतम्यं क्वचित्तात्र—भव-
स्थसुखदुःखयोः ॥ विश्रामत्येव वैपुल्य—तारतम्यमिवांबरे ॥ ७७ ॥ भूप तद्यत्र विश्रांतं । तौ
स्वर्गनरकौ मतौ ॥ आह्लादवृद्धिविश्राम—स्थानमेवं शिवोऽपि च ॥ ७८ ॥ यः स्वर्गनरकाभावे
। प्राग्नुपादीयत त्वया ॥ न क्षोदपरशुस्पर्श—मपि हेतुः सहेत सः ॥ ७९ ॥ स हि त्वदाश्रि-
तः किं वा । किं वा सर्वजनाश्रितः ॥ आद्यश्चेत्तर्हि पाथोधि—मध्यमीनैर्विरोधभाक् ॥ ८० ॥
द्वितीयश्चेत्तदास्माभि—र्ज्ञानाद्देवादिदर्शनात् ॥ अयमन्यतरासिद्धो । याति हेतुरहेतुतां ॥
॥ ८१ ॥ चार्वाका एव चेत्सर्व—शब्देन स्युस्तदप्यसत् ॥ अदृष्टो दृष्टिहीनैर्हि । गिरिर्नाभाव-
मर्हति ॥ ८२ ॥ स्तः स्वर्गनरकावेक—शब्दवाच्यत्वतो नृप ॥ घटपेटापटा यद्व—द्व्यतिरेकेण

र्या-
नत्रोंबुजं ॥ ए३ ॥ तस्माद्विद्येत एव स्व—र्नरकौ नरनायक ॥ अनागमाच्च चेत्पितो—
मूढोऽसि तदा शृणु ॥ ए४ ॥ विद्यते तेऽनवद्यांगी । सूर्यकांतेति या प्रिया ॥ तदासक्तं नरं
चेत्त्वं । लज्जसे हंसि तद् ध्रुवं ॥ ए५ ॥ हन्यमानस्त्वया वीर । निर्दयं वक्ति यद्ययं ॥ सुकृद्वि-
मुंच मां स्वामिन् । यामि धाम निजं यथा ॥ ए६ ॥ तत्रेति शिक्षया स्वामिन् । त्रो त्रो त्य-
जत चापलं ॥ चापलस्यैव दोषेण । विडंब्येऽहं महीभुजा ॥ ए७ ॥ रटन्नपीति चाटूनि । स
त्वया न विमुच्यते ॥ नरकान्नारकारक्षै—र्मुच्यते त्वत्पिता कथं ॥ ए८ ॥ किंच—अध्यासीनं
सत्रामध्यं । त्वां दिव्यस्त्रग्विलेपनं ॥ सर्वांगसंगिशृंगारं । वीरविद्भूतपरिछदं ॥ एए ॥ अतिस्व-
र्गपतिश्रीकं । मातंगो कोऽपि त्राषते ॥ आलोचाय सकृद्दूर्चो—गेहमेहि महीपते ॥ १०० ॥
तद्गिरा तां सत्रां मुक्त्वा । यासि त्वं तत्र चेन्नृप ॥ तदा त्वदंबिका देवी—न्नूतात्रापि स-
मेति सा ॥ १ ॥ योजनानां पंचशती—मूर्ध्वं याति निरर्गलः ॥ मनुष्यलोकदुर्गंधो । नायां-
ति विबुधास्ततः ॥ २ ॥ मुनींद्रोः केवलोत्पत्तौ । जिनजन्मादिपर्वसु ॥ प्राक्प्रेम्णा वा समायां-
ति । नृलोकमपि निर्जराः ॥ ३ ॥ अथ राजा जगौ स्वर्गं । नरकं वा प्रयाति कः ॥ आत्मा

त्रैकालिकी क्रिया ॥ ज्ञानभूतेषु नो पंगु—जडेषु लजते स्थितिं ॥ २६ ॥ अहं सुखी त्वहं डुःखी । पुल्लिंगेनेत्यहं ध्वनिः ॥ ज्ञानभूतेषु न क्लीब—जडेष्वाश्रयमश्नुते ॥ २७ ॥ सर्वक्रियाणामधिभू—रहं प्रत्ययगोचरः ॥ पुण्यपापफलं जोक्ता । संसर्ता च भवार्णवं ॥ २८ ॥ देहाद्भिन्नोऽपि देहेन । संपृक्तः क्षीरनीरवत् ॥ चेतनालक्षणोऽनक्ष—लक्ष्यश्चात्मा विचार्यतां ॥ २९ ॥ युग्मं ॥ किंच—पुंसा नीरंध्रकोष्टांतः । कृतशंखध्वनिर्बहिः ॥ यथा याति तथा चौर—जीवः स निरगात्ततः ॥ ३० ॥ नीरंध्रेऽपि यथा लोहे । प्रविशत्याशु शुक्षणिः ॥ कृमिजीवा विशामीश । विविशुस्तत्र ते तथा ॥ ३१ ॥ भूपोऽथान्निदधे सूरे । जीवो यदि सदा सदृक् ॥ तत्किं क्षेप्तुं शरं दूरे । युवालं न तु बालकः ॥ ३२ ॥ किं वा वहति जूयांसं । युवा जारं न चेतरः ॥ श्रुत्वेत्यवोचदाचार्यः । संदेहद्रोहिणीं गिरं ॥ ३३ ॥ युवापि मृदुना चापे—नेषुं दूरं न निक्षिपेत् ॥ न विहंगिकया मृद्व्या । वहेद्भारं च दुर्वहं ॥ ३४ ॥ एवं मृदुलदेहत्वा—न्न क्षेप्तुं दूरतः शरं ॥ न वा जूरिजरं वोढुं । प्रजूयेत नृपार्जकः ॥ ३५ ॥ यथा स एव च प्रौढ—चापो दृढविहंगिकः ॥ स्वस्वकार्यक्षमस्तद्व—ज्जीवः पर्याप्तविग्रहः ॥ ३६ ॥ भूपोऽन्यधान्म-

या जीवन् । मृतश्चैको मलिम्लुचः ॥ अतोलि न पुनर्नार—न्नेदोऽन्नूत्तेन नास्त्यसौ ॥ ३७ ॥ हृतेः पूर्णस्य वातेन । रिक्तस्यापि च तोलने ॥ तुला समा तथांगस्य । सात्मनोऽनात्मनोऽपि च ॥ ३८ ॥ एवमुत्तरयन् सूरि—रन्यधीयत नृभुजा ॥ स्तेनः कोऽपि मया खड्ग—प्रहारैः खंडशः कृतः ॥ ३९ ॥ लुलोके न तु तत्रात्मा । प्रयत्नेनापि वीक्षितः ॥ यद्ययं स्यात्तदीक्ष्येत । स्फुरन्मीन इवोदधौ ॥ ४० ॥ गुरुर्जगौ पर्शुघातै—र्दारितेऽरणिदारुणि ॥ वह्निमालोकमानः स्या—द्यथा मूर्खस्तथा भवान् ॥ ४१ ॥ वह्निर्दारुणि सौरभ्यं । पुष्पे तैलं तिलेऽपि च ॥ तेजः सूर्योपले वारि—शशांकाश्मन्ययो मृदि ॥ ४२ ॥ शैत्यं हिमे चौष्णमग्नौ । श्वैत्यं सुरसरिज्जले ॥ घृतं दध्न्यंकुरो बीज । इव जीवोऽस्ति वर्ष्मणि ॥ ४३ ॥ एवं तमोघ्नं वाग्ज्योतिः । सूरिसूरे वितन्वति ॥ स पप्रच्छ सदृग्जंतुः । कथं कुंथुगजांगयोः ॥ ४४ ॥ सूरिः स्माह यथा दीपो । घटस्थस्तं प्रकाशयेत् ॥ महासद्म पुनः प्राप्य । तदपि द्योतयेदसौ ॥ ४५ ॥ एवमात्मा कुंथुदेहे । तिष्ठन् शक्तिं समस्य याम् ॥ प्राप्य द्विपवपुः शक्तिं । तादृशीं स्वां प्रकाशयेत् ॥ ४६ ॥ साक्षादात्मानमप्रेक्ष्य । न प्रत्येमि कथंचन ॥ इत्यालापिनि भूपाले । बभाषे श्रुतकेवली ॥

चेत्तर्हि नास्त्यत्र । स एवेति विचार्यतां ॥ ४ ॥ संभूताद्भूतसंघाता—दाविर्भवति चेतना ॥
तेषु काले विशीर्णेषु । सा नश्यति निरन्वया ॥ ५ ॥ यैरात्मासौ पृथग्भूतो । भूतेभ्यः परि-
कल्प्यते ॥ तैः प्रत्यक्षप्रमाणेना—नुमानेनागमेन वा ॥ ६ ॥ न भूतेभ्यो विभिन्नोऽसौ । ता-
वदध्यक्षगोचरः ॥ न वा ज्ञेयोऽनुमानेन । तद्धि प्रत्यक्षपूर्वकं ॥ ७ ॥ मिथो विवदमानेना-
गमेनापि न मीयते ॥ यद्वानुमानागमयोः । प्रामाण्यमपि दुर्घटं ॥ ८ ॥ अन्यच्चैको मया
चौरो । धृतः क्षिप्तश्च भाजने ॥ जतुनिश्छिद्रिते लोके—र्मृतः स गदितः क्षणात् ॥ ९ ॥ न
चौरजीवो निर्गछं—स्तत्र छिद्रमपातयत् ॥ नापरे कृमिजीवाश्च । विशंतस्तेन नास्त्ययं ॥ १० ॥
अथोवाच गुरुर्धीर—ध्वनिध्वनितदिङ्मुखः ॥ भूपेदं स्वसुहृद्गोष्ठ्या—मुच्यमानं विराजते ॥
॥ ११ ॥ या भूतेभ्यो जृंभमाणा । त्वया प्रोच्यत चेतना ॥ तेषु सत्यसती वा सा । सती चे-
त्किमु नेक्ष्यते ॥ १२ ॥ नेक्ष्यते सानभिव्यक्ते—रिति चेद्व्यक्तिरस्यदः कथं ॥ प्रादुर्भावं पुरो वीक्ष्य
। सुज्ञानैवेति वक्ति चेत् ॥ १३ ॥ प्रत्यक्षैकप्रमाणस्य । वक्तुं युक्तमिदं न ते ॥ अस्त्वेतदपि
सा तेषु । विद्यते किं ध्रुवाध्रुवा ॥ १४ ॥ ध्रुवा चेत्तर्हि निर्नाम । नश्यतीति वृथा वचः ॥ अ-

नुत्पन्नाच्युतस्थैर्य—रूपं हि ध्रौव्यलक्षणं ॥ १५ ॥ अध्रुवा चेत्तदा भूतां—तरेभ्यः स्यात्स्वयं च वा ॥ भूतांतरेभ्य इति चे—त्तदा स्यादनवस्थितिः ॥ १६ ॥ स्वयं चेत्तर्हि कायस्य । परिणामेऽन्यदापि वा ॥ कायस्यैव परिणामे । न पूर्वमिति रौषि चेत् ॥ १७ ॥ सतीति मुख्यपक्षस्य । तदा लग्नोपदेहिका ॥ अन्यदापीति चेत्तर्हि । लेष्टवादिषु भवेन्न किं ॥ १८ ॥ असत्येवेति चेत्तत्कि—मसदुत्पादनक्रमः ॥ उत्पादयति नो तैलं । सिकताभ्यो बली भवान् ॥ १९ ॥ मधुकधातकीपुष्प—सुगंधर्यादिवस्तुषु ॥ असत्यपि हि जायेत । शक्तिरुन्मादिकेति चेत् ॥ २० ॥ नैवं तेष्वपि सा शक्ति—रस्ति काचन सूक्ष्मिका ॥ अन्यथा शालिसूपाज्यै—रपि माद्येत कश्चन ॥ २१ ॥ सर्वदर्शिभिरात्मायं । प्रत्यक्षेण प्रमीयते ॥ शेषैरप्यनुमानेन । न च तस्याप्रमाणता ॥ २२ ॥ परभावमजानानो—ऽनुमानस्यापमाननात् ॥ ही चार्वाकः सभागर्त्तं । किमायाति च वक्ति च ॥ २३ ॥ आप्तोपज्ञः प्रमाणं स्या—दागमोऽपि न संशयः ॥ आप्तो हि रागरोषाभ्यां । विमुक्तः स हि सत्यवाक् ॥ २४ ॥ अत्रानुमानं ज्ञानं हि । गुणः स न निराश्रयः ॥ अन्वयव्यतिरेकाभ्या—मात्मैव स्यात्तदाश्रयः ॥ २५ ॥ कुर्वेऽकृषि करिष्येऽह—मिति

त्रैकालिकी क्रिया ॥ ज्ञानभूतेषु नो पंगु—जडेषु लभते स्थितिं ॥ २६ ॥ अहं सुखी त्वहं
दुःखी । पुल्लिंगेनेत्यहं ध्वनिः ॥ ज्ञानभूतेषु न क्लीब—जडेष्वाश्रयमश्नुते ॥ २७ ॥ सर्वक्रिया-
णामधिभू-रहं प्रत्ययगोचरः ॥ पुण्यपापफलं भोक्ता । संसर्ता च भवार्णवं ॥ २८ ॥ देहाद्भि-
न्नोऽपि देहेन । संपृक्तः क्षीरनीरवत् ॥ चेतनालक्षणोऽनक्ष-लक्ष्यश्चात्मा विचार्यतां ॥ २९ ॥
युग्मं ॥ किंच—पुंसा नीरंध्रकोष्टांतः । कृतशंखध्वनिर्बहिः ॥ यथा याति तथा चौर—जीवः
स निरगात्ततः ॥ ३० ॥ नीरंध्रेऽपि यथा लोहे । प्रविशत्याशु शुक्षणिः ॥ कृमिजीवा विशा-
मीश । विविशुस्तत्र ते तथा ॥ ३५ ॥ भूपोऽथाभिदधे सूरे । जीवो यदि सदा सदृक् ॥ त-
त्किं क्षेप्तुं शरं दूरे । युवालं न तु बालकः ॥ ३२ ॥ किं वा वहति भूयांसं । युवा भारं न
चेतरः ॥ श्रुत्वेत्यवोचदाचार्यः । संदेहद्रोहिणीं गिरं ॥ ३३ ॥ युवापि मृदुना चापे-नेषुं दूरं
न निक्षिपेत् ॥ न विहंगिकया भृष्ट्वा । वहेद्भारं च दुर्वहं ॥ ३४ ॥ एवं मृदुलदेहत्वा—न्न
क्षेप्तुं दूरतः शरं ॥ न वा भूरिभरं वोढुं । प्रभूयेत नृपार्भकः ॥ ३५ ॥ यथा स एव च प्रौढ
—चापो दृढविहंगिकः ॥ स्वस्वकार्यक्षमस्तद्व—जीवः पर्याप्तविग्रहः ॥ ३६ ॥ भूपोऽप्यधान्म-

या जीवन् । मृतश्चैको मलिम्लुचः ॥ अतोलि न पुनर्जार—ब्रेदोऽभूत्तेन नास्त्यसौ ॥ ३७ ॥
हतेः पूर्णस्य वातेन । रिक्तस्यापि च तोलने ॥ तुला समा तथांगस्य । सात्मनोऽनात्मनोऽपि
च ॥ ३७ ॥ एवमुत्तरयन् सूरि—रन्यधीयत नूभुजा ॥ स्तेनः कोऽपि मया खड्ग—प्रहारैः खंरू-
शः कृतः ॥ ३९ ॥ लुलोके न तु तत्रात्मा । प्रयत्नेनापि वीक्षितः ॥ यद्ययं स्यात्तदीक्ष्येत ।
स्फुरन्मीन इवोदधौ ॥ ४० ॥ गुरुर्जगौ पर्शुघातै—र्दारितेऽरणिदारुणि ॥ वह्निमालोकमानः
स्या—द्यथा मूर्खस्तथा जवान् ॥ ४१ ॥ वह्निर्दारुणि सौरभ्यं । पुष्पे तैलं तिलेऽपि च ॥ तेजः
सूर्योपले वारि—शशांकाश्मन्ययो मृदि ॥ ४२ ॥ शैत्यं हिमे चौष्णमग्नौ । श्वैत्यं सुरसरिज्जले
॥ घृतं दध्न्यंकुरो बीज । इव जीवोऽस्ति वर्ष्मणि ॥ ४३ ॥ एवं तमोघ्नं वाग्ज्योतिः । सूरिसूरे
वितन्वति ॥ स पप्रच्छ सहग्जंतुः । कथं कुंथुगजांगयोः ॥ ४४ ॥ सूरिः स्माह यथा दीपो । घ-
टस्थस्तं प्रकाशयेत् ॥ महासद्म पुनः प्राप्य । तदपि द्योतयेदसौ ॥ ४५ ॥ एवमात्मा कुंथुदे-
हे । तिष्ठन् शक्तिं समस्य याम् ॥ प्राप्य द्विपवपुः शक्तिं । तादृशीं स्वां प्रकाशयेत् ॥ ४६ ॥
साक्षादात्मानमप्रेक्ष्य । न प्रत्येमि कथंचन ॥ इत्यालापिनि भूपाले । बभाषे श्रुतकेवली ॥

॥ ४७ ॥ राजन्नमूनि पत्राणि । कंप्यंते केन भूरुहां ॥ वायुना चेत्तदा वायुः । स मे साक्षात्प्रदर्श्यतां ॥ ४८ ॥ अलक्ष्यमपि चेद्वायुं । यत्र कंपानुमानतः ॥ मन्यसे तत्किमात्मानं । न चैतन्यानुमानतः ॥ ४९ ॥ ततः प्रमुदितस्वांतो-- ऽवनीकांतोऽभ्यधादिति ॥ प्रज्ञो चिराद्विदीर्णोऽयं । कुग्रहग्रंथिरद्य मे ॥ ५० ॥ जीवाजीवादिकान् भावान् । भवदुक्तिसुधांजनैः ॥ भूभ्रादीनिवांधोऽहं । स्वामिन् पश्यामि संप्रति ॥५१॥ परं न पूर्वजैः क्षुण्णं । पंथानं मोक्तुमुत्सहे ॥ तन्मुंचन् मुच्यते जंतुः । श्रियापि श्रेयसापि च ॥ ५२ ॥ ऊचे च सूरिणा राजन् । कोऽयं तव मतिभ्रमः ॥ पूर्वजा ह्यनुवर्त्यंते । सत्कर्मस्वेव कोविदैः ॥५३॥ पूर्वजेषु दरिद्रेषु । दिदरिद्रासतीह कः ॥ को वा रोगाभिभूतेषु । तेषु कामयते रुजः ॥ ५४ ॥ यथायःशीसकश्वेत—स्वर्णमाणिक्यखानिषु ॥ प्राप्तासु कुरुते विद्वा—नुत्तरोत्तरसंग्रहं ॥ ५५ ॥ यः पुनः प्राग्मया प्राप्त—मित्ययस्येव सादरः ॥ नोत्तरोत्तरसंग्राही । स शोच्यः खलु बालिशः ॥ ५६ ॥ एवं त्वमपि नास्तिक्यं । प्राक्प्राप्तमिति न त्यजन् ॥ कदाग्रहग्रहग्रस्तः । सतां शोच्यो भविष्यसि ॥ ५७ ॥ एवं केशिकुमारेण । गुरुणा प्रतिबोधितः ॥ मुक्त्वा व्यामोहवन्मोह—मवदद्भक्तिभाग्नृपः ॥

॥ ५८ ॥ प्रभो त्वय्यपराद्धं य—न्मया सोल्लंठभाषया ॥ तत्क्षमस्व क्षमाशीला । भवंति हि
भवादृशाः ॥ ५९ ॥ त्वं मम व्याहृतैर्नाधा । बाधामाबाधकैरपि ॥ ताप्यते ग्रीष्मलूकाभिः ।
किं वा मेरुवनावनी ॥ ६० ॥ प्रभो मिथ्यात्वपाथोधौ । मज्जंतं मां समुद्धर ॥ पितृभ्यां दुर्वि-
नीतोऽपि । पुत्रो नापह्युपेक्ष्यते ॥ ६१ ॥ चित्र त्वमपि सूरींद्रा—नमूनेव गुरुं कुरु ॥ येनैकध-
र्मिणोः प्रीति—रावयोः स्यादभंगुरा ॥ ६२ ॥ चित्रोऽवदत्त्वदाज्ञातः । श्रावस्तीं प्रागहं गतः ॥
अस्मादेव गुरोर्धर्म—मादां रत्नं निधेरिव ॥ ६३ ॥ तन्मिष्टं यन्निजैर्दृष्ट—मिति लोकवचः स्मरन्
॥ धर्मे लगयितुं त्वाम—प्यानयं श्रीगुरूनिह ॥६४॥ भाग्यवानसि धन्योऽसि । यद्गुरोरस्य वा-
ग्जलैः ॥ प्रक्षिक्षालयिषस्यद्य । सद्यः स्वावद्यकश्मलं ॥ ६५ ॥ अथ भूपोऽवदच्चित्र । भृत्यः स-
त्यस्त्वमेव मे ॥ प्राप्य धर्मनिधिं यन्मे । न न्यधुक्षः कुभृत्यवत् ॥ ६६ ॥ मनोरथरथं पुण्य—
पथे मम नियोजयन् ॥ त्वं सम्यक्सारथिश्चित्र । शेषाः शाकटिकाः पुनः ॥ ६७ ॥ चि-
त्रं मित्रमिवालिंग्य । नृपोऽथ गुरुसन्निधौ ॥ सम्यक्त्वभूषणां सम्य—गादत्त द्वादशव्र-
तीं ॥ ६८ ॥ अरिषड्वर्गमुच्छेत्तुं । धर्मेषु विलसन्मतिः ॥ गुरुणोत्साहयांचक्रे । सेवकः स्वा-

स्मिन्नेव सः ॥ ६९ ॥ इक्षुवाटकवन्नाट्य—शालावच्छारदाभ्रवत् ॥ राजन् प्राक्सुंदरो भूत्वा ।
माभूः पश्चादसुंदरः ॥ ७० ॥ गंगौघ इव वर्षाभ्र—मिव दूर्वेव सर्वतः ॥ वर्धमानपरिणामो ।
भूयास्त्वं जिनशासने ॥ ७१ ॥ दत्ते धर्मोऽयमाराध्य—मानः स्वर्गादिसंपदः ॥ आत्तमुक्तः पुनः
प्राज्य—दुःखाय प्रभुवद्भवेत् ॥ ७२ ॥ मुक्तास्रजमिवाधाय । हृदि शिक्षां गुरोरिमां ॥ आगत्य
नगरीं भूपो । भृत्यैरेवमजूघुषत् ॥ ७३ ॥ पौराः शृणवंतु यः कोऽपि । भूपमाराध्धुमिच्छति ॥ स
गत्वा धर्ममादत्तां । गुरोः केशिकुमारतः ॥ ७४ ॥ प्रकृत्या भद्रका लोका—स्तद्भूपतिवचस्त-
दा ॥ क्षुधार्त्ता भोजनाह्वान—मिव सम्यक् प्रपेदिरे ॥ ७५ ॥ नक्तंदिवमहीनाथ । महीनाथेन
संदधे ॥ स्वादुवारिरिणोत्तीर्णे—नेव जैने मते मतिः ॥ ७६ ॥ धर्मेणेवात्तरूपेण । यशसेवांग-
धारिणा ॥ श्वेतवी श्वेतविहार—हारिणी तेन निर्ममे ॥ ७७ ॥ सुचेताः केतकीनेता । वि-
नेता क्रूरकर्मणां ॥ सप्तग्रामसहस्रेश—श्चतुर्धा राज्यमातनोत् ॥ ७८ ॥ कोशायैकं बलायैक-
मेकमंतःपुराय सः ॥ दयादानाय राज्यस्य । भागं चैकमकल्पयत् ॥ ७९ ॥ त्रिसंध्यं पूजया-
मास । जिनं प्रतिदिनं नृपः ॥ पौषधं पुण्यपोषाय । चतुःपर्व्यां चकार च ॥ ८० ॥ यदादि तेन

सद्धर्म—चिंतामणिरलभ्यत ॥ तदादि विषयग्राव—खंडेष्वास्थां व्यमुच्यत ॥ ७१ ॥ शृंगा-
रांभोधिशफरी । सूर्यकांताथ तत्प्रिया ॥ विरक्तेऽस्मिन्नलं भोग—कामां वामा व्यचिंतयत् ॥
॥ ७२ ॥ गृहस्थोऽपि व्रतीवायं । भोगभीरुर्महीपतिः ॥ प्रतिपन्नः शिवाध्वानं । मां व्याघ्रीमिव
मन्यते ॥ ७३ ॥ हहा कुस्वामिनानेन । विना विषयवारिणा ॥ मम यौवनकल्पद्रु—र्नीतो नि-
ष्फलतां कथं ॥ ७४ ॥ सत्यस्मिन्मयि कोऽप्यन्यो । न रज्येत सचेतनः ॥ को जीवत्युरगे द-
क्षो । जिघृक्षति फणामणिं ॥ ७५ ॥ तदेनं हतकं हत्वा । दत्वा राज्यं स्वसूनवे ॥ कृत्वापरं
पतिं किंचि—द्भविष्यामि सुखास्पदं ॥ ७६ ॥ ददौ सा विषमिश्रान्नं । पत्युः पौषधपारणे ॥ हा
योषिद्विषवल्लीव । मृत्यवे पोषितापि हि ॥ ७७ ॥ वपुर्व्यापिविषावेग—वेदनाविह्वलीकृतः ॥
बध्वा विलसितं बुध्वा । चित्रमाचीकथन्नृपः ॥ ७८ ॥ कथंचिद् ज्ञापयित्वा तं । पत्न्या दुः-
कर्मेमर्म सः ॥ सावष्टंभमभाषिष्ट । सुकृतेष्वग्रपुर्ण्ययात् ॥ ७९ ॥ मम पुण्यफलं दत्वा । मान्नू-
वन् येत्वकेशिनः ॥ केशिनस्ते गणधराः । सुदूरे चित्र संप्रति ॥ ९० ॥ भृत्यो मंत्री सुहच्चि-
त्तं । चित्र पूर्वमभूर्मम ॥ अधुनाराधनाकाले । त्वं गुणज्ञ गुरुर्भव ॥ ९१ ॥ न राज्यं न सुता-

न्नांतः—पुरिका न च जीवितं ॥ मनो मे परमब्रह्म—लीनमिछति संप्रति ॥ ए२ ॥ विना धर्मौषधं संप्र—त्यपरत्रौषधे क्वचित् ॥ मा यतिष्ठाश्चिराच्चित्र । पुण्यैः प्राप्तोऽस्त्ययं क्षणः ॥ ॥ ए३ ॥ चित्रोऽथ तत्प्रसादाना—मिष्टुरानृण्यमंजसा ॥ दशधाराधनां साधु—रिव भूपं व्यधापयत् ॥ ए४ ॥ ऊचे च मा क्रुधं कार्षी—र्वीर धीरधुरंधर ॥ पुरापि कामक्रूनाया—मस्यां देव त्वयोषिति ॥ ए५ ॥ स्वर्गश्रियं चिरात्प्राप्या—मचिराद्दद्ती तव ॥ प्रशांत सूर्यकांतेयं । हितकृन्न तु वैरिणी ॥ ए६ ॥ यद्यथा कारितं तेन । तत्तथा भूभुजा कृतं ॥ ध्यायता बंधुबुद्ध्येव । स्ववधूं बंधकीमपि ॥ ए७ ॥ क्षणाद्देवगुरुध्यान—धूतपातकवीत्रधः ॥ प्राप पुण्यरथारूढः । सौधर्मं त्रिदिवं नृपः ॥ ए८ ॥ विमानं तत्र सूर्याभं । प्रस्तटेऽस्ति त्रयोदशे ॥ दिव्ययोजनलक्षाय—त्सार्धद्वादशविस्तृतं ॥ एए ॥ तत्रोपपातशय्यायां । प्रलंबितपटांतरे ॥ जीवः प्रदेशिभूपस्य । देवत्वेनोपपद्यत ॥ २०० ॥ पर्याप्तिं पंचधा दिव्य—ऋद्धिवीक्षणवीक्षितं ॥ त्वक्ता अप्सरसोऽभ्येत्य । जय नंदेति तं जगुः ॥ १ ॥ मम कृत्यं किमत्रेति । ध्यायंतं तमबूबुधन् ॥ अमरास्तद्विमानस्थाः । सर्वं कृत्यं सुधाभुजां ॥ २ ॥ हृदस्नानाभिषेकालं—कारपुस्तकवाचनाः

॥ चैत्यपूजासुधर्मस्था—निवेशौ स क्रमाद्व्यधात् ॥ ३ ॥ विहरंतं महीपीठे । वर्धमानं जिनेश्वरं ॥ अवबुध्यावधिज्ञाना—द्विवंदिषुरभूदसौ ॥ ४ ॥ अथाभियोगिकैर्देवै—र्विचक्रे लक्षयोजनं ॥ विमानं शीघ्रगमनं । जंबूद्वीपमिवापरं ॥ ५ ॥ सामानिकक्रतुभुजां । स चत्वारिंशता शतैः ॥ महिषीणां चतुष्केन । परीवारयुतेन च ॥ ६ ॥ सहस्रैस्त्रिंशता सभ्यैः । सेनानीभिश्च सप्तभिः ॥ सहस्रैरंगरक्षाणां । तथा षोमशभिर्वृतः ॥ ७ ॥ अध्यारुह्य विमानं तं । मुक्तमानः सुराग्रणीः ॥ कल्पाच्चचाल सौधर्मा—त्पुरंदर इव श्रिया ॥ ८ ॥ क्रमाद्विमानं संकोच्य । श्वेतभूपालपालितां ॥ पुरीमामलकल्पां च । समागाद्वीरभूषितां ॥ ए ॥ प्रणम्य त्रिजगन्नाथं । निजं नाम निवेद्य च ॥ ध्यामच्छ्यास्मितसूर्याभः । सूर्याभ इदमब्रवीत् ॥ १० ॥ सर्वं जिनेश जानासे । त्वं पुनस्त्वदनुज्ञया ॥ समृद्धिं गौतमादीनां । स्वां दिदर्शयिष्याम्यहं ॥ ११ ॥ भगवत्यथ तूष्णीके । मौनमेवोचितं प्रभोः ॥ मया पुनर्विधेयैव । भक्तिरेवं स दध्यिवान् ॥ १२ ॥ स वितेने भुजं वामे—तरं तस्माद्विनिर्ययुः ॥ अष्टाधिकं शतं देव—कुमाराः सदृशश्रियः ॥ १३ ॥ भुजाद्वामाच्च तावत्य । एव देवकुमारिकाः ॥ स चक्रे तौर्यिकान् सर्वान्

। भावतस्तावतस्ततः ॥ १४ ॥ ते संभूय तथा चक्रु—र्द्वात्रिंशद्बद्धनाटकं ॥ निजानिमेषता-लेखै-र्यथा प्राशंसि संसदि ॥१५॥ नाचित्रीयत यश्चित्ते । मूर्धानं यश्च नाधुनात् ॥ यश्च ना-स्फारयन्नेत्रे । नाभ्येऽस्मिन्न स कोऽप्यभूत् ॥ १६ ॥ नाट्यांगान्यथ संहृत्य । भगवंतं प्रणम्य च ॥ कृतकृत्यतया प्रीतः । सूर्याभः स्वपदं ययौ ॥१७॥ सूर्याभो भगवन् लेभे । कथं संपदमीदृ-शं ॥ पृष्टः श्रीगौतमेनेति । वीरो धीरोऽभिरालपत् ॥ १८ ॥ प्रदेशी प्रवरः पृथ्व्यां । यो बभौ वसुधाभुजां ॥ सुकृतैः सांप्रतं प्रष्टः । स बभूव सुधाभुजां ॥ १९ ॥ अयं केशिकुमारस्य । गु-णिगणभृतो गिरा ॥ पिधाय नरकद्वारं । स्वर्द्वारमुदर्जाघटत् ॥ २० ॥ काले सौधर्मतश्च्युत्वा । विदेहेष्ववतीर्य च ॥ नाम्ना दृढप्रतिज्ञोऽयं । भूत्वा मुक्तिं प्रयास्यति ॥ २१ ॥ क्व सा दुष्कर्मा-ली नरकगतिविश्राणनपटुः । क्व तत्पुण्यप्राप्यं त्रिदिवपदवीनिस्तुषसुखं ॥ प्रदेशी यत्त्यक्त्वा नरकमगमन्नाकिनगरं । गिरां पारे सोऽयं जयति महिमा कश्चन गुरोः ॥ २२ ॥ इति श्रीप्रदे-शिराजकथा समाप्ता.

इत्युक्ता गुरुसामग्री. अथ द्वारक्रमायातां श्रद्धासामग्रीमाह—

॥ मूलम् ॥—निसुणिय गुरवयणाणवि । दुलहो देहिण धम्मपरिणामो ॥ जलहरजल-
सित्ताणं । खित्ताणं पवरवाउव्व ॥ ३१ ॥ व्याख्या सुबोधा ॥ ३१ ॥ एतदेव व्यक्तमाह—
॥ मूलम् ॥——किं कुणइ तास सुगुरो । जेसिं हियये ण वासणावासो ॥ मेहोवि अमेहो
ऊ—सरम्मि उप्पाइउं बीयं ॥ ३२ ॥ व्याख्या—सुगुरुः शोभनोऽपि गुरुस्तेषां श्रोतॄणां किं क-
रोति? किं बोधं जनयति ? अपि तु न किंचिदित्यर्थः, येषां हृदये वासनावासः श्रद्धापरि-
मलो मूलत एव न वर्तते. अथ दृष्टांतमाह—आस्तां कूपारघट्टादयः, स निजाभोगनिरुद्धन-
भोभागः प्रबलतरगर्जितजर्जरितब्रह्मांडसंपुटः पटुतरविद्युझात्कारद्योतितदिग्वलयो नीरंध्रनीर-
धाराध्वस्तसमस्तशैलशृंगो मेघोऽप्यूषरे इरिणभूमौ बीजं शाल्यादिकमुत्पादयितुममेघो भव-
ति, बीजोत्पादनरूपस्वभावभ्रंशात्. एवं सद्गुरुरपि श्रद्धारहितानां हृदि बोधिबीजमुत्पाद-
यितुमुद्यतोऽगुरुत्वमेवाश्नुते, बोधकलक्षणस्वभावच्युतेः. ॥ ३२ ॥ अथ सर्वस्यामपि सामग्र्यां
भव्यत्वपरीक्षाभावे नैव भवतीत्याह—
॥ मूलम् ॥——लहिऊणवि सामग्गीं । भावो भव्वाण न उ अभव्वाण ॥ उअइव्व संवपा-

लय—दिठ्ठंतं नेमिनमणंमि ॥ ३३ ॥ व्याख्या—लब्ध्वापि पूर्वोक्तसामग्रीं मनुष्यभवादिकां भावः पुनः पुण्यपरिणामो भव्या आसन्नसिद्धिगतयस्तेषामेवोल्लसति, न पुनरभव्यानां. अत्रार्थे, श्रीनेमिनमने शांबपालकदृष्टांत 'जयतीति' पश्य? तथाहि—नगरी द्वारिकेत्यस्ति । पश्चिमोदधिरोधसि ॥ चतुर्भुजभुजादंड—खंडिताखिलविप्लवा ॥ १ ॥ जगत्क्षेमंकरो नेमिः । पुनानः पृथिवीं पदैः ॥ समं श्रमणसंघेन । तां पुरीं प्रापदन्यदा ॥ २ ॥ चित्तस्थभगवद्भक्ति—सुधोद्गारानुकारिणीं ॥ गिरं पुरः स्वपुत्राणां । निजगाद गदाग्रजः ॥ ३ ॥ प्रभुं यः कोऽपि पुत्रेषु । प्रातः पूर्वं प्रणंस्यति ॥ अश्वं राज्यस्य सर्वस्व—मिव मत्तः स लप्स्यते ॥ ४ ॥ पालको व्यालकोटिभ्यो—ऽधिकक्रौर्यमना अपि ॥ निशायां नंतुमर्हंत—मश्वलोभादधावत ॥ ॥ ५ ॥ मनो विना जिनाधीशं । नत्वा स प्रोचिवानिति ॥ ब्रूया मां प्राक्प्रणंतारं । प्रातस्तातस्य पृच्छतः ॥ ६ ॥ स्वसद्मन्येव शांबेन । विलंबमसहिष्णुना ॥ पादान्यभ्येत्य सताष्टौ । ववंदे भावतः प्रभुः ॥ ७ ॥ प्रभाते पालकेनाथ । श्रीनाथः प्रार्थितो हयं ॥ त्वं प्राक्केन नतोऽसीति । पप्रच्छ परमेष्ठिनं ॥ ८ ॥ जगदे जगदिशेन । सम्यग्माध्यस्थ्यशालिना ॥ द्रव्यतो भावतश्चेति ।

द्विधा स्याद्वंदनं हरे ॥ ९ ॥ तत्र मां द्रव्यतोऽनंसी-त्प्राक्पुत्रस्तव पालकः ॥ यस्याश्वलाभ-लोभेन । निशि निद्रापि नागता ॥ १० ॥ भावतस्तु ववंदे मां । शांबः प्राक्परमार्हतः ॥ ध्या-नादध्यक्षतां नीतो । येनाहं दूरवर्त्यपि ॥ ११ ॥ दूरीकृत्य ततो रंक-मिव पालकमर्थिनं ॥ अनिह्नवेऽपि शांबाय । ददावश्वं गदाधरः ॥ १२ ॥ श्रीनेमिनाथे समुपागते य-द्भव्यस्य शांबस्य बभूव भावः ॥ नाभूदभव्यस्य तु पालकस्य । तद्भावमेवाशुलभं वदंति ॥ १३ ॥ इति शांबपालकदृष्टांतः--

अथ श्रद्धानंतरं वीर्याचारसामग्रीमाह--

॥ मूलम् ॥—दुलहो सुवसंतगुणो । सद्धालंभेवि वीरियायारो ॥ जमणेण विणा पायं । न चूयवल्लीव सा फलइ ॥ ३४ ॥ व्याख्या—श्रद्धाया गुरुवचनरुचिमालाया लाभेऽपि वीर्याचारस्तदुक्तानुष्ठानंप्रति प्रयत्नो दुर्लभः, कथंभूतः? सुष्ठु वसंतो गुणा ज्ञानादयो यत्र स सुवसद्गुणः, ज्ञानादयो हि गुणा वीर्याचार एव सुष्ठु वसंतीत्यर्थः. यद्वा सुष्ठु शोभना वसंतस्यर्तुराजस्य गुणा वक्ष्यमाणोपपत्तिवशाद्यस्य स तथा. तामेवोपपत्तिमाह—यदनेन वीर्या-

भवति, प्रायोग्रहणं
चारेण विना सा श्रद्धा चूतवल्लीव प्रायो न फलति न मोक्षफलदात्री
विनापि फलदर्शनात्.
श्राद्रपदीयचूतवल्लेर्सेसंतं विनापि मरुदेवादिनां श्रद्धायाश्च बाह्यप्रयत्नं
सिद्ध्यतीत्याह—
॥ ३४ ॥ न केवलं श्रद्धा, अन्यदपि सर्वं वीर्याचारेण
य लोगा ॥ जे पुण पमा-
॥ मूलम् ॥—कस्सवि एसो कस्सवि । एस्सो अन्नस्स डुन्निवि
व्याख्या—कस्यापि कृषिवाणिज्यादिकर्मसु
यविवसा । दुन्निवि लोगा हया तेसिं ॥ ३५ ॥
इह लोकसिद्धेलक्ष्मीमूलत्वात्, लक्ष्म्याश्च विषय-
सततोद्युक्तस्यैष वर्तमानो भवः सिद्ध्यति,
समुद्यतारंभे ॥ नरिपृष्टतो विलग्न
मूलत्वात्. यदाहुः—सुव्यवसायिनि कुशले । क्लेशसहिष्णौ
कस्यापि पुनरिहलोकनिष्पिपासस्य तपःसंयमादिषु यत-
। यास्यति दूरं कियल्लक्ष्मीः ॥ १ ॥
सिद्ध्यति, पुण्योपचयेन स्वर्गापवर्गप्राप्तेः. अन्यस्य पुनर्व्यवसाये
मानस्यैष्य आगामी भवः
पुण्यकर्मणि च प्रवृत्तस्य द्वावपि लोकौ सिद्ध्यतः, चकारो भेदांतरख्यापकः. एवं वीर्याचारस्य
साफल्यमुक्त्वा व्यतिरेकमाह—'जे पुणे'त्याद्युत्तरार्धं स्पष्टं. ननु किमनेन प्रयत्नेन नियति-
प्रेरिता हि भरतादीनामिव स्वयमेव सिद्धिरुपढौकते इति यो ब्रूते तंप्रत्याह—

॥ मूलम् ॥— जइ तप्नवसिद्धीया । जिणावि चरणंमि उज्जमंति दढं ॥ संदिद्धे नववेवि । ता पमायंति किं इयरे ॥ ३६ ॥ व्याख्या— यदीत्युपदर्शने, तस्मिन्नेव नवे सिद्धिर्येषां ते तद्भवसिद्धयो जिनास्तीर्थकृतोऽपि चरणे सदनुष्ठाने दृढं सर्वबलेनोद्यच्छंत्युपक्रमते, तदेतरेऽस्मादृशा नव्यत्वेऽपि संदिग्धे सति नियतिवादमालंब्य किं प्रमाद्यंति? अयं नावः— इह स्वस्यावश्यंतया तद्भवे मोक्षं ज्ञात्वा यदि जिनेंद्रा एवमेवासते तदापि ते सिध्यंत्येव, परं तेऽपि मोक्षस्यायमेवोपाय नान्य इति स्थितिं जानाना यदि चरणमाद्रियंते तदा येषां छद्मस्थत्वादद्यापि सम्यग्नव्यत्वमपि दुर्ज्ञानमास्तामासन्नमोक्षता वा दूरमोक्षता वा तेषां कथं प्रमादं कर्तुं युक्ताः, यदार्ष— तिब्बयरो चउनाणी । सुरमहिउ सिज्झियव्वयधुयंमि ॥ अणगूहियबलविरियो । सव्वछामेता उज्जमइ ॥ १ ॥ किं पुण अवसेसेहिं । दुक्खक्खयकारणा सुविहिएहिं ॥ होइ न उज्जमियव्वं । सपच्चवायंमि माणुस्स ॥ २ ॥ न च नरताद्यालंबनं ग्राह्यं, तेषामपि प्राग्नविकचारित्रनिबंधनत्वात्कादाचित्कत्वाद्वा. यदागमः— पत्तेयबुद्धकरणे । चरणं नासंति जिणवरिंदाणं ॥ आहच्च भावकरणे । पंचहिं गणेहिं पासछा ॥ १ ॥ किंच—

॥ मूलम् ॥—अपमाए अरिहंतो । पए पए गोयमंपि चोइए ॥ अवराए वरायाणं । ता कीस पमायविस्संजो ॥ ३७ ॥ व्याख्या—यद्यप्रमादेऽप्रमत्तताविषयेऽर्हत्प्रस्तावात् श्रीवर्धमानः पदे पदे पुनः पुनरित्यर्थः, गौतममपि नोदयति प्रवर्तयति, अत्रापि गौतमस्य गणधरत्वज्ञानित्वाप्रमत्तत्वादीन् विशेषान् व्यनक्ति, वर्तमानविजक्तेर्निर्देशस्तत्प्रतिपादकग्रंथानां वर्तमानत्वात्. यत्स्थानांगसूत्रं—समणे जगवं महावीरे गोयमाइसमणे निग्गंथे आमंतित्ता एवं वयासी, किं जया णं पाणा समणाउसो, गोयमाइ समणं जगवं महावीरं उवसंकमंतिरत्ता एवं वयासी, नो खलु वयं देवाणुप्पिया एयमट्ठं जाणामो वा पासामो वा, तं जइ णं देवाणुप्पिया एयमट्ठं नो गिलायंति परिकहित्तए तं इच्छामो णं देवाणुप्पियाणं अंतिए एयमट्ठं जाणित्त ए अज्जोत्ति. समणे जगवे महावीरे गोयमाइसमणे निग्गंथे आमंतित्ता एवं वयासी, दुक्खजया पाणासमणाउसो, से णं जंते डुक्खे केण कडे जीवेणं? कडे पमाएण, से णं जंते डुक्खे कहं च इज्जइ? अपिमाएणत्ति. उत्तराध्ययनेष्वप्युक्तं—लद्धूणवि माणुसत्तणं । आरियत्तं पुणरावि दुल्लहं ॥ बहवे दसुआ मिलक्खुआ । समयं गोयम मा पमायए ॥ १ ॥ ल-

ध्धूणवि आरियत्तणं । अहीणपंचिंदियया हु दुल्लहा ॥ विगलिंदिया हु दीसइ । समयं गोयम मा पमायए ॥ २ ॥ अहीणपंचिंदियत्तंपि से । लहे उत्तमधम्मसुई हु दुल्लहा ॥ कुतित्थिनिसेवए जणे । समयं गोयम मा पमायए ॥ ३ ॥ लध्धूणवि उत्तमं सुइं । सद्दहणा पुणरावि दुल्लहा ॥ मिच्छत्तनिसेवए जणे । समयं गोयम मा पमायए ॥ ४ ॥ धम्मंपि हु सद्दहंतया । दुलहया कायेण फासया ॥ इह कामगुणेहिं मुच्छिया । समयं गोयम मा पमायए ॥ ॥ ५ ॥ परिजूरइ ते सरीरयं । केसा पंडुरया हवंति ते ॥ से सव्वबले य हायइ । समयं गोयम मा पमायए ॥ ६ ॥ तिण्णोसि हु अण्णवं महं । किं पुण चिट्ठसि तीरमागओ ॥ अभितुर पारंगमित्तए । समयं गोयम मा पमायए ॥ ७ ॥ यदि भगवानेवं श्रीगौतमस्याप्युपदिशतिस्म तदाऽपरेषां वराकाणां धृतिसाहसादिहीनानां किमयं प्रमादस्य निश्चितो विश्वासः? प्रमादो हि बलात् श्रुतकेवलिनोऽपि भवावर्ते पातयति, ततोऽमित्रमित्र इव सर्वथा न विश्वसितव्यमिति. दृष्ट्वाप्यालोकं नैव विश्वसितव्यं । तीरं नीतापि भ्राम्यते वारिणा नौः ॥ लब्ध्वा वैराग्यं भ्रष्टयोगः प्रमादा—द् भूयोभूयः संसृतौ बंभ्रमीति ॥ १ ॥ ननु किमेवमप्रमादे

भृशमुपदिश्यते? यावता स्वहितकामो जंतुः स्वयमेव तत्र प्रवर्त्स्यतीत्याह—

॥ मूलम् ॥—इहलोयपरलोयदुहेसु । आरंभेसु सयं समुज्जमइ ॥ सुहहेउम्मि उ धम्मे । वुत्तोवि जिउ न मूढमई ॥ ३८ ॥ व्याख्या—स्पष्टा, नवरमुक्तोऽपि पौनःपुन्येन शिक्षितोऽप्यथ कदाचिच्छ्रद्धतादिहेतुभिः सम्यक्सत्कृत्येषु न यतेत तथापि परिणामतोऽप्रमत्त एव भूयात्. तथाहि—महारंभवतोऽप्यल्पपापानुसंगादित्येतदेवाह—

॥ मूलम् ॥—मा मे इक्कोवि खणो । निद्दाविकहाविणोयमाईहिं ॥ जाउ मुहा इय बुद्धी । न जस्स नणु तस्स कह सिद्धी ॥ ३९ ॥ व्याख्या—मा इति निषेधे, ममैकोऽपि क्षणः कालांशो निद्राविकथाविनोदादिभिर्मुधा धर्मक्रियारहितत्वेन निष्फलोऽयासीत्, तत्र निद्रा प्रमीला, विकथा राजकथाद्या, विनोदा गीतनाट्यानि, युद्धादयश्चित्ताक्षेपहेतवः, आदिशब्दाद्विषयकषायादयः, एतैराक्षिप्तस्य ममैकोऽपि क्षणो मास्म निष्फलोऽभूदित्येवंरूपा बुद्धिश्चिंता यस्य प्रतिक्षणं नोल्लसति, नन्वित्याक्षेपे, तस्य सर्वथा प्रमादविवशस्य कथं केन प्रकारेण सिद्धिर्भवति? न भवतीत्यर्थः. अप्रमत्ताध्यवसायनिबंधनत्वात्तस्याः. अथ यः सामग्रीं

प्राप्य प्रमाद्यति तस्य दृष्टांतगर्भं निंद्यत्वमाह—

॥ मूलम् ॥—सो नरियसरम्मि ठिओ । तिसिओ बुहिओ व फलियखित्तंमि ॥ जो देइ लहियधम्मा—वसरं पसरं पमायस्स ॥ ४० ॥ व्याख्या—गाथार्थः सुगमः, भावार्थस्त्वयं—यः सरससलिलपूर्णमपि सरः प्राप्य तृषितः, फलितमपि क्षेत्रं प्राप्य क्षुधितश्च तिष्टति स लोके मूर्ख इत्युच्यते, सति संयोगे स्वार्थासाधनात्. तथा पूर्वोक्तयुक्त्या दुर्लभं धर्मावसरं लब्ध्वापि यः प्रमाद्यति सोऽपि मूर्ख एव. मूर्खत्वं दृष्टांतेनाह—

॥ मूलम् ॥—ही बालिसेण सुकया—लसेण बहुविसयलालसेण तहा ॥ पत्ताविधम्म वेला—वहीलिया बंभदत्तेण ॥ ४१ ॥ व्याख्या—ही इति शोच्यतासूचकमव्ययं, ब्रह्मदत्तेन चक्रिणा तदा पूर्वभवभ्रातृसंगमे प्राप्तापि धर्मवेलाऽवहीलितावगणिता हारितेत्यर्थः, प्राप्ताया धर्मवेलाया अवहीलनं बालिशत्वात्. बालिशत्वं च सुकृतालसत्वात्तदपि बहुविषयलालसत्वादत एव शोच्योऽसौ सतामिति, एतद्भावार्थः कथानकादवसेयस्तच्चेदं—

राज्ञश्चंद्रावतंसस्य । साकेतनपुरेशितुः ॥ मुनिचंद्रोऽभवत्सूनु—रनूनगुणवैभवः ॥ १ ॥ पु-

रीमुज्जयिनीं पित्रा । दत्तां भुक्त्वातियौवनः ॥ भ्रातुः सागरचंद्रर्षे—र्हर्षेणादत्त स व्रतं ॥
॥ २ ॥ विचरन्नन्यदा सार्थ—भ्रष्टः प्राप्तोऽटवीमसौ ॥ स्वभावभद्रकैर्दृष्ट—श्चतुर्भिर्गोपदारकैः
॥ ३ ॥ स क्षुत्तृषाध्वसंचार—श्रांतस्तैः पर्यचर्यत ॥ ततो गंतुमिवानृण्यं । तेभ्यो धर्मं जगाद
सः ॥ ४ ॥ प्रबुद्धास्तेऽथ चत्वार—स्तस्मादाददिरे व्रतं ॥ गोपायंतिस्म गोपांगाः । पूर्वं सर्वां-
गिनस्तदा ॥ ५ ॥ ते चत्वारोऽपि संभूय । भूयिष्ठं तेनिरे तपः ॥ इव प्राक्पीतपीयूषैः । संजा-
तोत्तरपारणाः ॥६॥ अतिमात्रमलक्लिन्न—गात्रान् वीक्ष्य मुनीश्वरान् ॥ द्वौ तेष्वनिंदतां धर्मं ।
न स्युः सर्वे समाश्रयाः ॥ ७ ॥ सुसेवितेन तपसा । तावपि प्रापितौ दिवं ॥ स्वामिनेव
पदं भृत्यौ । मधुनेव श्रियं द्रुमौ ॥ ८ ॥ ततश्च्युत्वैककालं तौ । जातौ शांडिल्यविप्रतः ॥
दास्यां जयवतीनाम्न्यां । पुत्रौ दशपुरे पुरे ॥ ९ ॥ दासेरौ तौ क्रमात्पित्रा । नियुक्तौ क्षेत्रर-
क्षणे ॥ तत्रैव शयितौ रात्रौ । दष्टौ दुष्टाहिना मृतौ ॥ १० ॥ उत्पन्नौ युग्मरूपौ तौ । मृगौ
कालिंजरे नगे ॥ चरंतौ तत्र जघ्नाते । व्याधेनैकेन पत्रिणा ॥ ११ ॥ तीरेऽथ मृतगंगायाः ।
संप्राप्तौ हंसयुग्मतां ॥ ग्रीवामोटेन निर्जीव—कृतौ वैतंसिकेन तौ ॥ १२ ॥ चित्रसंभूतनामा-

॥ १३ ॥ सापराधोऽन्य-
नौ । ततस्तौ कासिपत्तने ॥ अभूतां भूतदत्तस्य । मातंगाधिपतेः सुतौ ॥ १४ ॥ भू-
दा मंत्री । नमुचिः शंखभूभुजा ॥ अघाति भूतदत्तेन । व्यापारो हि विषद्रुमः
मिगृहे स्थितः पुत्रौ । यदि शिक्षयसे कलाः ॥ तत्त्वां मुंचामि जीवंतं । मातंगेनेत्यवादि सः
॥ १५ ॥ कदाचिदेतदक्षीयेत । दौःस्थ्यं कालक्षयेण मे ॥ ध्यात्वेति मंत्रिणा मृत्यु—भीरुणा-
मानि तद्वचः ॥ १६ ॥ नीचस्थो निर्बलः किंतु । सत्कलस्तत्र मंत्र्यसौ ॥ ज्येष्ठ्यामिवेंदुरुद्योतं
। तेने विद्याप्रभाभरैः ॥ १७ ॥ दुश्चरित्रोऽन्यदा मंत्री । रेमे मातंगभार्यया ॥ स्थापितोऽप्यु-
दरे याति । विक्रियां कश्मलः खलः ॥ १८ ॥ ज्ञातलक्ष्येष्टितो भूत—दत्तस्तं हंतुमैहत ॥ ते
निर्मंतुमपि घ्नंति । जंतुं किंत्वपराधिनं ॥ १९ ॥ निरसारयतां चित्र—संभूतौ तं कलागुरुं ॥
श्वपाकपाकौ सत्कर्म—विपाकाविव मंत्रिणः ॥ २० ॥ निर्वीतंस इव न्यंकुः । पाशमुक्त इवां-
ऋजः ॥ व्यावृत्तजीवितव्याशः । स ययौ हस्तिनापुरं ॥ २१ ॥ सेवां सनत्कुमारस्य । तन्वंस्तत्र
स चक्रिणः ॥ व्यापारमचिरात्प्राप । तेषां ह्येषैव जीविका ॥ २२ ॥ व्यापारेऽधिगते मंक्षु ।
पापपंकप्रवर्धने ॥ वर्षाकाल इव श्वानः । पुनः सोऽभून्मदोद्धुरः ॥ २३ ॥ तूर्यत्रयकलाभ्यासं

। दर्शयंतौ सुशिक्षितं ॥ चित्रं तौ चित्रसंभूतौ । कस्य कस्य न चक्रतुः ॥ २४ ॥ इव बद्ध इवाकृष्ट । इवाहूत इवाहृतः ॥ कासीवासी जनः सर्व—स्तावेवोपाचरच्चिरं ॥ २५ ॥ अन्यदा चर्चरीपर्व—ण्यागते तत्र पत्तने ॥ चर्चरीर्नागरा मध्ये । मातंगाश्च बहिर्व्यधुः ॥ २६ ॥ नागरीश्चर्चरीस्त्यक्त्वा । पौराः कार्मणिता इव ॥ मातंगचर्चरीमीयु—स्तयोर्गीतेषु लोलुपाः ॥ २७ ॥ तद् ज्ञात्वा शंखनृपाल—स्तलारक्षकमादिशत् ॥ पौरान् मलिनयंतौ तौ । वार्येतां श्वपचाविति ॥ २८ ॥ सर्वत्र घोषयस्वेति । यः कोऽप्येतावुपेष्यति ॥ तमंत्यजमिव क्ष्मापः । पुर्या निर्वासयिष्यति ॥ २९ ॥ तथा तेन कृते राज—विरोधात्सा तयोः कला ॥ निरुद्धा निशि भृंगीव । तस्थौ हृदयपंकजे ॥ ३० ॥ कदापि कौमुदीपर्व । द्रष्टुं कुतूहलावगुंठनौ ॥ साशंकौ चौरवन्मध्ये—नगरं तावविक्षतां ॥ ३१ ॥ तत्रत्यं गीतमाकर्ण्य । तौ मौनं कर्तुमक्षमौ ॥ मंदस्वरेण कंठांत—र्लुठन्नादावगायतां ॥ ३२ ॥ ज्ञातौ गीतानुमानेन । तावन्त्यर्णचरैर्नरैः ॥ हतौ लोष्टादिभिः श्वास—पूरितास्यौ निरीयतुः ॥ ३३ ॥ नागरैर्निहतौ तावन्—द्यावत्तौ प्रापतुर्वनं ॥ कथंचित्तत्र मुक्तौ च । जंतू आरण्यका इव ॥ ३४ ॥ तौ दध्यतुर्धिगस्मा जन्मा—वयोर्येनेदृशी कला ॥

न सद्भ्यो विषसंपृक्त—क्षीरधारेव रोचते ॥ ३५ ॥ कलावतां परा भूतिः । स्याद्दुष्ट्राचरणा-
दिभिः ॥ पराभूतिस्तु नौ लेष्टु—यष्ट्याद्यैर्निजजन्मनोः ॥ ३६ ॥ तदिमं मलिनं जन्म । हि-
त्वा स्वीकुर्वहे नवं ॥ ध्यात्वेति प्रचलंतौ तौ । महाशैलमपश्यतां ॥ ३७ ॥ तमध्यारोहतामेतौ
। मृत्यवे कृतनिश्चयौ ॥ तन्मूर्ध्नि विलुलोकाते । साधुं श्रृंगमिवापरं ॥ ३८ ॥ नतवंतौ मुनिं
तेन । पृष्टौ स्ववृत्तमादितः ॥ तावश्रुधारासिक्तार्त्ति—तप्तदेहाववोचतां ॥ ३९ ॥ अथ तौ मु-
निराचख्यौ । वत्सौ मूढाशयौ युवां ॥ अंगभंगेऽपि किं शुध्ध्ये—दात्मायां कर्मकश्मलः ॥
॥ ४० ॥ हंसो यैर्वायसीचक्रे । छिंथः कर्माणि तानि चेत् ॥ तज्जातु न त्यजत्येष । पंकिलं दे-
हपल्वलं ॥ ४१ ॥ कर्मणामपराधे हि । देहं किं नो कदर्थ्यते ॥ विकारे पैत्तिके किं वा ।
वातं वैद्यश्चिकित्सति ॥ ४२ ॥ लभ्यंते न मृतैः खंरू—पूलिका हंसतूलिकाः ॥ सर्वत्र पुण्यही-
नानां । दरिद्राणामिवापदः ॥ ४३ ॥ तद्धर्ममेव सेवेथां । यदि स्थः सुखलालसौ ॥ विना ज-
लाशयं क्वापि । किमु स्यात्कमलोदयः ॥ ४४ ॥ इति तद्वचसा बुद्धौ । श्लथीकृतदुराशयौ ॥
जयन्तौ कर्मघाताय । सद्यस्तौ जेजतुर्व्रतं ॥ ४५ ॥ विज्ञातश्रमणाचारौ । चरंतौ वसुधातले ॥

तपोभिः प्राप्तलब्धी तौ। जग्मतुर्हस्तिनापुरं ॥४६॥ तत्र ब्रोगवने योगं। साधयामासतुर्मुनी ॥ साक्षान्नारीनरानेक—ललितास्खलिताशयौ ॥ ४७ ॥ कुर्वाणो ग्रीष्मतपना—तपवद्दुस्सहं तपः ॥ संभूतः प्राविशन्मध्ये—पुरं पारणकेऽन्यदा ॥ ४८ ॥ चरन्नमुचिना तेन। स दृष्टोऽप्युपलक्षितः ॥ प्रायेण दूरदृश्वानो। गृध्रा इव नियोगिनः ॥ ४९ ॥ मावादीदत्र मद्वृत्त—मेष मातंगदारकः ॥ इति तं योगिनं योधै—र्नियोगी निरवासयत् ॥ ५० ॥ निर्गतोऽपि पुरात्ताड्यमानस्तैरकुपन्मुनिः ॥ कालकूटोऽतिमथिता—दभूद्दुग्धोदधेरपि ॥ ५१ ॥ दिधक्षुर्नगरं ध्याता—ननस्तैजसलेश्यया ॥ सज्वालाधूमलहरीः। सोऽमुंचत्प्रलयाग्निवत् ॥ ५२ ॥ सार्वभौमः स्फुरद्धूम—श्यामलीकृतलोचनः ॥ मत्वा मुनेर्महाकोपं। भृत्येभ्यो निर्ययौ पुरात् ॥ ५३ ॥ गलितानंदमाक्रंद—परपौरपरिच्छदः ॥ उपेत्य मुनिमानम्य। चक्रयूचे योजितांजलिः ॥ ५४ ॥ यते यत्त्वयि कोपोऽसौ। तत्पानीये प्रदीपनं ॥ सा स्थास्यति क्षमा कुत्र। यदि त्वमपि कुप्यसि ॥ ५५ ॥ धक्ष्यामहेऽग्निनानेन। वयमेव न केवलं ॥ तवापि धक्ष्यते ध्यानो—पज्ञं पुण्यं प्रसीद तत् ॥ ५६ ॥ तावच्चित्रोऽपि तत्रागा—त्तेनापि प्रतिबोधितः ॥ पौरैरप्यनुनीतश्च। संभूतः

शमभूरभूत् ॥ ५७ ॥ चक्रिण्यथ गते साधू । तदैवोद्यानमागतौ ॥ अशनाद्व्यसनाधारा—द्विर-
कृत्यानशनं श्रितौ ॥ ५८ ॥ अद्य जैने मयि क्ष्मापे । केनासौ कोपितो मुनिः ॥ इति पृछन्नृ-
पोऽज्ञासी—न्नमुचेः कर्म तच्चरैः ॥ ५९ ॥ बध्ध्वाथ मंत्रिणं नृपो । नीत्वा साध्वोः पुरोऽवदत्
॥ ब्रूतं किमस्य कुर्वेऽहं । युष्मदाशातनाकृतः ॥ ६० ॥ गृहीतगृहसर्वस्वो—ऽन्धयकोटिमुपाग-
तः ॥ नमुचिर्मुमुचे जीवन् । राज्ञा साधूपरोधतः ॥ ६१ ॥ दुष्कर्मणा कृतघ्नानां । निरागस्तु
विरोधिनां ॥ आत्मैव तस्य वैरी स्यात् । षष्ठस्थ इव लग्नपे ॥६२॥ सहापरपुरंध्रीभिः । स्त्रीरत्नं
चक्रवर्तिनः ॥ सुनंदा नंतुमागब—त्तावात्तानशनौ मुनी ॥ ६३ ॥ सानंदं वंदमानायाः । सु-
नंदायाः सुकोमलां ॥ संभूतो यमुनावेणी—श्यामां वेणीमवैक्षत ॥ ६४ ॥ वेणीदंभमिषात्का-
मे—नासिना स्वेन भापितः ॥ महौजा अपि चुक्षोभ । मुनिः कस्तंप्रति प्रभुः ॥६५॥ तस्या-
मथ निजं स्थानं । गतायां स व्यभावयत् ॥ अहो दृशोः सुधासत्रं । रूपमस्या मनोहरं ॥६६॥
नराः संतीह केऽपीह—ग्वनिताभोगभाजनं ॥ अस्मादृशास्तु ही सृष्टा । विधिना गर्भदुर्भ-
गाः ॥ ६७ ॥ एवंविधवधूभोगा—नाप्यासं हि भवांतरे ॥ यद्यस्ति तपसोऽमुष्य । फलं क-

त्पतरोरिव ॥ ६८ ॥ एवं निदानं कुर्वाणं । सिषेच वचनामृतैः ॥ चित्र कामाग्निना दीप्तं ।
तं जीमूत इव द्रुमं ॥ ६९ ॥ बंधो कल्पद्रुमाराध्य । कंगूभोज्यं किमीहसे ॥ किं चिंतामणि-
मासाद्य । याचसे काचमंजनं ॥ ७० ॥ मृगतृष्णांभसैवैणः । कूटस्वेनेव बालकः ॥ द्वीपश्चर्म-
द्वीपेनेव । त्वं स्त्रिया वंच्यसे किमु ॥ ७१ ॥ यासां मलमयं देहं । कस्तदर्थं तपःक्षयः ॥ तप-
स्ते दातुमीष्टेतां । सिद्धिश्रियमपि क्षणात् ॥ ७२ ॥ एवमुक्तोऽपि चित्रेण । न निदानं मुमो-
च सः ॥ क्षुधितो बालिशः प्राप्तं । किंपाकस्य फलं यथा ॥ ७३ ॥ प्रपाल्यानशनं काले । ही-
नवंशोऽप्यसेवत ॥ स्वः सौधर्ममसौ धर्म—प्रभावाद्बंधुना युतः ॥ ७४ ॥ चित्रजीवस्ततश्च्यु-
त्वा—त्पकर्मासन्नसिद्धिकः ॥ पुरे पुरिमतालाख्ये । महेभ्यस्यांगभूरभूत् ॥ ७५ ॥ इतश्चास्त्य-
धिपंचालं । कांपिल्यपुरपत्तनं ॥ यच्चारुताजितः स्वर्गो । ह्रियैवादृश्यतां गतः ॥ ७६ ॥ तत्रा-
भूद्ब्रह्मभूपालो । जयश्रीकेलिपल्वलं ॥ यत्पाणिकमले खड्ग—भृंगः खेलत्यहर्निशं ॥ ७७ ॥ ब-
लिनी स्मरसेनेव । चुलनी तस्य वल्लभा ॥ संभूतजीवस्तत्कुक्षिं । भेजे देवभवाच्च्युतः ॥ ७८ ॥
चतुर्दशमहास्वप्न—सूचितं सुषुवे सुतं ॥ चुलनी नलिनी पद्म—मिव पद्मानिकेतनं ॥ ७९ ॥

ब्रह्मदत्ताख्यया ख्यातः । प्ररोह इव भूरुहः ॥ सोऽवर्धत क्रमाद्बालः । समं पितृमनोरथैः ॥
॥७०॥ कणेरुदत्तः कुर्वीशः । पुष्पचूलोंगदेशराट् ॥ कटकः काशिभूपालो । दीर्घः कौशलिको नृपः
॥ ७१ ॥ चत्वारः सुहृदोऽभूव—न्नमी ब्रह्ममहीपतेः ॥ वक्षस्काराद्रिभिर्मेरु—रिवासौ तैरराज-
त ॥ ७२ ॥ एकत्रैव पुरे वर्ष—वारकेण निवासिनः ॥ कांपिल्यपत्तने तस्थु—स्ते पंचापि क-
दाचन ॥ ७३ ॥ ब्रह्मताल इवोत्ताल—स्कंधोऽकस्माद्व्यपद्यत ॥ शिरोवेदनया ब्रह्म—दत्ते द्वा-
दशवार्षिके ॥ ७४ ॥ कृतनिर्वृतिनिर्माण—ब्रह्माभ्यासं विना कृताः ॥ सुहृदस्ते दधुर्दुःखं ।
मित्रैश्चतुर्भिरप्येभि—र्ब्रह्महीनैर्व्रतैरिव ॥ न हि किंचनसामर्थ्यं
युक्तं सुचिरयोगिनः ॥ ७५ ॥
—मित्यशोचन् प्रजा अपि ॥७६॥ कृतायामौर्ध्वदेहिक्यां । क्रियायां ब्रह्मभूभुजः ॥ ब्रह्मदत्तं
निवेश्यांके । सुहृदस्तेऽवदन्मिथः ॥७७॥ बालः पाल्योऽयमस्माभिः । स्थितैर्वर्षक्रमादिह ॥ एवं च
ब्रह्मभूपस्य । मैत्री स्यात्परिरक्षिता ॥ ७८ ॥ ततो दीर्घबलं दीर्घं । बालपालनलालसं ॥ तत्र
मुक्त्वा ययुः स्वं स्वं । नगरं सुहृदस्त्रयः ॥ ७९ ॥ अथाप्य प्रभुतां तत्र । दीर्घो गुप्तानपि क्र-
मात् ॥ शुल्कीव वस्तुस्थानकानि । ब्रह्मकोशान्यचालयत् ॥ ८० ॥ कोशेष्वाप्तरसो रेजे । चुल-

नीं नलिनीमिव ॥ मलिनश्चपलो दीर्घ–भ्रमरो मित्रवल्लजां ॥ ए१ ॥ ज्ञात्वा तच्चापलं धीमान् । मंत्री धनुराचिंतयत् ॥ कोशसारेषु दारेषु । लुब्धस्तावदयं प्रभोः ॥ ए२ ॥ दूर्वास्तंबः खरस्येव । क्षेत्रं मत्तकिरेरिव ॥ पशोरिव तरुर्दंति–पोतो मृगपतेरिव ॥ ए३ ॥ युवती कामुकस्येव । राहोरिव सुधाकरः ॥ कटकाद्यैः किमस्यायं । बालो रक्षितुमर्पितः ॥ ए४ ॥ युग्मं ॥ चुलनी चालनीवासौ । विषयेषु तुषेष्विव ॥ पुण्यसारपरित्यागा–ल्लुब्धा चेल्लुज्यतां ततः ॥ ए५ ॥ यत्पुनः सुहृदाजन्म । दीर्घोऽसौ दीर्घदर्श्यपि ॥ द्विधाभूद्ब्रह्मणो वैरी । तन्मनोऽतिदुनोति मे ॥ ए६ ॥ कदापि लब्धप्रसरः । कुमारं यौवनोन्मुखं ॥ हंत्येष निर्विशेषस्त–ज्जीवंतोऽपि वयं हृताः ॥ ए७ ॥ ध्यात्वेति ब्रह्मदत्तस्य । रक्षार्थं स विचक्षणः ॥ पुत्रं वरधनुःसंज्ञं । सेवाव्याजादयोजयत् ॥ ए८ ॥ तेनोक्ते दीर्घवृत्तांते । कुमारोऽदर्शयत्क्रुधं ॥ जीमूतो विद्युदुद्योत–मिवासावंतरांतरा ॥ एए ॥ संयोज्य कोकिलां काके–नाख्यत्सोंतःपुरेऽन्यदा ॥ यः कोऽप्येता-विवान्यायं । कर्ता घात्यः स मे ध्रुवं ॥ १०० ॥ तत् श्रुत्वा दीर्घभूपालः । कालदष्ट इवाकुलः ॥ चुलिन्यालपितो वीर । क्षीरकंगाद्बिभेषि किं ॥ १ ॥ रमयित्वैकदा जड–हस्तिनीं मृगह-

हंस्या सह बक यत्वा । उ
स्तिना ॥ कुमारः पूर्ववज्जल्पन् । राज्यै दीर्घेण दार्शितः ॥ २ ॥ ऊचेऽथ चुलनीं
मारोऽवोचदन्यदा ॥ लोका विलोकतामेतौ । हन्येते दुर्नयौ मया ॥ ३ ॥ ऊचेऽथ चुलनीं
दीर्घो । मर्मविद्ध इवार्त्तिभूः ॥ जड विमृश हृद्दृष्ट्या । नास्त्यत्र कुशलं मम ॥ ४ ॥ हंत वि-
श्वसिमोऽमुष्य । कथं सिंहशिशोरिव ॥ अरुंतुदमिदं यस्य । वचोऽपि क्रकचोपमं ॥ ५ ॥ मां
स्थापयितुकामासि । चेत्तदेनं विनाशय ॥ ऊनता पुत्ररत्नानां । का समुद्रे मयि प्रिये ॥ ६ ॥
पुत्रः प्राणोपमः स्त्रीणां । प्राणेभ्योऽप्यधिकः प्रियः ॥ इति सा तद्वचोऽमंस्त । धिग्योषिज्जन-
साहसं ॥ ७ ॥ स्वान् पुत्रानपि हंति याति मलिना वक्त्रा गतेऽप्यागते । प्राणिप्राणितवैरि-
णिः प्रकुरुते क्रीडां भुजंगैः सह ॥ नृणां चित्तबिलं गता वृषकुलं मृष्णाति तृष्णातुरा । सा
योषिद्भुजगी तदेव कुतुकं यद्विश्वविश्वासभूः ॥ ८ ॥ प्रोचे सा कामचंडाल—साचिव्यविग-
लत्कृपा ॥ व्यापाद्य एव मे पुत्रो । नाथ रक्ष्यं च दुर्यशः ॥ ९ ॥ अयं विवाहव्याजेन । हंतुं
शक्यो न चान्यथा ॥ रिपुवत्प्रकटं पुत्र—पातो दुष्कीर्त्तिदोहदः ॥ १० ॥ नवोढः प्रथमं सैष
। शायितो जतुसद्मनि ॥ प्रच्छन्नानलदानेन । भस्मसात्क्रियते निशि ॥ ११ ॥ चुलनी तल्लिनी-

भूत—विवेकेत्यात्तनिश्चया ॥ पुष्पचूलं नृपं स्वीयं । बंधुं कन्यामयाचत ॥ १२ ॥ एकतो जातुषं वास—वेश्म साकारयन्नवं ॥ वासवेश्मानुमानेन । तत्कूटं विविदे धनुः ॥ १३ ॥ सोऽथ व्यजिज्ञपद्दीर्घं । पुत्रो मे त्वां निषेवतां ॥ वृद्धोऽहं साधयिष्यामि । तीर्थाणि त्वदनुज्ञया ॥ ॥ १४ ॥ कूटोपायमयं धीमान् । कर्ता किंचिद्बहिर्गतः ॥ यथा तथा वा स्थाप्यस्त—द्विमृश्येत्यवदन्नृपः ॥ १५ ॥ वयं प्राघूर्णका एव । राज्यभारक्षमो भवान् ॥ राज्यं न त्वां विना भाति । निर्लोचनमिवाननं ॥ १६ ॥ तीर्थाणि संति किं दूरे । तीर्थं ह्यात्मैव निर्मलः ॥ गंगातीरे स्थितोऽत्रैव । तत्त्वं तत्वोचितं कुरु ॥ १७ ॥ इत्युक्तो भूभुजा मंत्री । गंगातीरमुपेत्य सः ॥ ददानो दानमर्थिभ्यः । सत्रागारमवाहयत् ॥ १८ ॥ द्विगव्यूतां सुरंगां च । सत्रागारादकारयत् ॥ सोऽविसंवादिभिः पुंभि—राजातूपनिकेतनं ॥ १९ ॥ तेनैव दीर्घदुर्मंत्रं । पुष्पचूलोऽपि बोधितः ॥ प्रैषीत्पुरुपरीवारां । दासेरीं दुहितुः पदे ॥ २० ॥ कांपिल्यमागता सापि । राजपुत्रीति पप्रथे ॥ स्वर्णपित्तलयोर्भेदं । वेत्त्यसंकेतितो न हि ॥ २१ ॥ सिद्धिर्मदीप्सितस्यासी—दासन्नेत्युज्ज्वलाननां ॥ चुलनीं सुतवीवाह—तुष्टां मेने महाजनः ॥ २२ ॥ चुलन्या सोऽच-

लन्यायः । कुमारः पर्यणाय्यते ॥ दासेयीं दर्शितप्रीत्या—क्षणे संपूर्णलक्षणे ॥ २३ ॥ प्रजि-
घ्ये नव्यन्नवने । नवोढस्तनयस्तया ॥ दुष्कर्मपरिणत्येव । जंतुर्यमनिकेतनं ॥ २४ ॥ न्नाग्येने-
वांगिनां मंत्रि—पुत्रेणात्यक्तसन्निधिः ॥ जजागार निजागार—मध्ये वार्तारसेन सः ॥ २५ ॥
अजिह्मब्रह्मनृपावद् । ब्रह्मदत्तः स्वपित्यथ ॥ तावज्ज्वालाकुलं वास—वेश्मावैक्षत सर्वतः ॥
॥ २६ ॥ किमेतदिति तेनोक्तो । मातुर्वृत्तं सुहृज्जगौ ॥ संक्षिप्यांत्यदिने सर्वं । सुवक्तेव कथा-
नकं ॥ २७ ॥ आसन्नागारमत्रास्ति । सुरंगा तातकारिता ॥ त्वत्पदप्रहृग्क्षोणी—मिमामित्यप्य-
बोधयत् ॥ २८ ॥ भूवः पुटं पटं जीर्ण—मिव न्नित्वा सुहृद्बलः ॥ सुरंगां सोऽविशन्मुक्त्वा ।
। दासेयीं डुर्दशामिव ॥ २९ ॥ सुरंगा सा सुरंगासी—न्मातुरप्यधिका तयोः ॥ स्वगर्न्नमपि
निघ्नंत्या । गर्न्ने निक्षिप्य तायिनी ॥ ३० ॥ द्वौ नरौ भूर्दधौ कुद्धौ । मृतेऽपि ब्रह्मणि प्रिये ॥
न्नविता च प्रियैकस्य । स्त्रीवृत्तं वेत्ति कोऽथवा ॥ ३१ ॥ द्वे प्रिये ब्रह्मणोऽभूतां । चुलन्येकापरा
च भूः ॥ हंति स्वपुत्रमप्याद्या । सपत्न्यप्यपरावति ॥ ३२ ॥ सहास्यमिति जल्पंतौ । तौ निर्गत्य
सुरंगया ॥ जागरूकं पुरोऽमात्यं । योगींद्रमिव नेमतुः ॥ ३३ ॥ पूर्वं सज्जीकृतौ तेन । त्वरावं-

तौ तरस्विनौ ॥ विमानाविव मर्त्यानां । तावेवारोहतां हयौ ॥ ३४ ॥ अस्पृशंताविव क्षोणीं । दीर्घदुर्नाथदूषितां ॥ पंचाशद्योजनीं गत्वा । हयौ पंचत्वमागतौ ॥ ३५ ॥

वाहयंतौ पदौ वाह—युगादप्यधिकं ततः ॥ आसन्नं कोष्टकग्रामं । क्रमात्तौ जग्मतुर्मृदु ॥ ३६ ॥ मूर्धजानपि भाराया । मन्वानौ मुक्तमंडनौ ॥ तत्राचीकरतां चूला—शेषौ तौ शीर्षमुंडनं ॥ ३७ ॥ पिदधे वसुधेशश्री-पिशुनं पटबंधतः ॥ श्रीवत्सं सुहृदो मंत्री-पुत्रः सूर्यमिवांबुदः ॥ ३८ ॥ यज्ञोपवीतिनावात्त—दंभौ काषायचीवरौ ॥ ब्रह्मपुत्रब्रह्मदासा—विति क्लृप्तनिजाभिधौ ॥ ३९ ॥ अनुष्णितद्युती दौःस्थ्य—मापन्नावपि तावुभौ ॥ ईक्षांचकार तं ग्रामं । विशंतौ कश्चन द्विजः ॥ ४० ॥ युग्मं ॥ अभोजयदसौ भक्त्या । तावानीय स्वमंदिरं ॥ ब्रह्मपुत्राय दत्वा च । वस्त्रे कन्यामढौकयत् ॥ ४१ ॥ कन्येयं किमनिष्टा ते । यद्वोढेनेव सन्मणी ॥ योज्यते भिक्षुणानेन । मंत्रीति निजगाद तं ॥ ४२ ॥ सोऽप्युवाच पुराचष्ट । कश्चिन्नैमित्तिको मम ॥ ग्रामेऽत्र पटकबद्ध-श्रीवत्सो भिक्षुरेति यः ॥ ४३ ॥ दद्याः स्वनंदिनीं तस्मै । स हि चक्री भविष्यति ॥ तदस्मै वितराम्येनां । मेनां हिमवते यथा ॥ ४४ ॥ पर्यणैषीत्कु-

मारोऽथ । कन्यां बंधुमतीति तां ॥ उत्तिष्ठते पुरो जोगा । जोगिनां नश्यतामपि ॥ ४५ ॥
रोहिण्येव विधुः साकं । तया वासकमेककं ॥ विधाय स प्रगेऽचाली—न्निर्वृत्तिर्न हि सद्विषां
॥ ४६ ॥ प्रांतग्रामं गतः श्रुत्वा । रुद्धान् दीर्घजटैः पथः ॥ उत्पथेन चलन्नाप । ज्ञापपुत्रो म-
हाटवीं ॥ ४७ ॥ तृषयाकुलितस्तत्र । प्राहिणोन्मित्रमंजसे ॥ वटछाये स्वयं लीनो । मीनो
वारीव स स्थितः ॥ ४८ ॥ सरसः सरसं वारि । मंत्रीसुर्यावदानयत् ॥ तावद्दीर्घजटै रुद्धः ।
स मेघोऽवग्रहैरिव ॥ ४९ ॥ तत्संकेतात्तृषार्त्तोऽपि । रंहसा खंजयन् मृगान् ॥ नानारण्यान्य-
तिक्रामन् । कुमारः प्रपलायत ॥५०॥ कुक्कुरेष्विव सिंहस्य । शक्तिरेषु न जाति मे ॥ इत्यसौ
नित्यशौर्योऽपि । नाजूद्दीर्घजटानन्नि ॥ ५१ ॥ त्र्यहं भ्रांत्वा तृतीयेऽह्नि । तापसं तापसंकुलः ॥
पुरः सर इवालोक्य । सद्वृत्तं मुमुदेतरां ॥ ५२ ॥ पूर्वं मृदुगिरा पश्चा—त्पयसा परितोषितः
॥ मात्रेव बालस्तेनासौ । स्वमाश्रममनीनयत् ॥ ५३ ॥ समस्तपुनर्श्रृंगारो । दधानः प्रकटा ज-
टाः ॥ पुरः कुलपतिस्तेन । न्यग्रोध इव वीक्षितः ॥ ५४ ॥ स्नेहेन जनकस्यासौ । ववंदे ब्रह्म-
सूनुना ॥ पुत्रप्रेम्णा तमालिंग्य । सोऽप्यानंदयदाशिषा ॥ ५५ ॥ पृष्टश्चागमने हेतुं । स्वकथां

स यथातथां ॥ जगौ प्रीणितविश्वस्य । विश्वस्य पुरतो मुनेः ॥ ५६ ॥ स्मेरास्योऽथ मुनिः प्राह । त्वं भ्रातृव्याविदन्नपि ॥ आगतोऽसि स्ववेश्मैव । ब्रह्मराजानुजोऽस्मि यत् ॥ ५७ ॥ त्वमत्र तिष्ट मा चिंतां । कृथाः सन्निहिते मयि ॥ ब्रह्मवृद्धा अमी ब्रह्म—सूनो सन्तु मुदे तव ॥ ॥ ५८ ॥ वचसा तस्य सातस्य । हेतुना तत्र स स्थितः ॥ कुशली कुशलं प्राप । शास्त्रशस्त्रस्वकर्मसु ॥ ५९ ॥ अन्यदा शरदायासी—त्क्रांते वारिदवैरिणि ॥ स्मेरांभोजानना यत्र । राजीविन्यो विरेजिरे ॥ ६० ॥ वर्षानियंत्रितैः पुष्प—फललाभाय तापसैः ॥ यद्भिः स ययौ राज—कुमारः काननं तदा ॥ ६१ ॥ भ्रमन् वने गजेंद्रस्य । पश्यन्नव्यां पदावलीं ॥ तापसैर्वारितोऽप्येष । केसरीवान्वधावत ॥ ६२ ॥ स पंचयोजनीं गत्वा । कुंजरं नरकुंजरः ॥ मल्लो मल्लमिवाह्वास्त । योध्धुमुत्कलिकाकुलः ॥ ६३ ॥ अवलिष्ट बलिष्टं तं—प्रतिमत्तो मतंगजः ॥ तावन्योन्यमयुध्ध्येतां । दुर्धरौ विजयाशया ॥ ६४ ॥ तावज्जागर्ज पर्जन्यः । कुमारस्येव सेवकः ॥ पलायत च तद्धारा—नाराचैराकुलः करी ॥ ६५ ॥ व्यावृत्तो ब्रह्मभूः पश्य—न्नम्भितों बुमयीं महीं ॥ प्राणी नवमिवारण्यं । जगाहे मार्गतश्च्युतः ॥ ६६ ॥ उत्तीर्य क्रमवर्धिष्णु—

वीचिनिचयभीषणां ॥ दुर्दशामिव देहस्थां । पुरः कांचन निम्नगां ॥ ६७ ॥ शैषे सर इवापद्म
। व्योमेवातारकं दिवा ॥ ददर्शामानुषं तीरे । तस्या नगरमेककं ॥ ६८ ॥ युग्मं ॥ प्रविष्टस्त-
दसौ जात—कौतुकोऽपश्यदग्रतः ॥ नारीवृत्तवदत्यंत—गहनां वंशजालिकां ॥ ६९ ॥ वंशजा-
लीविगलितौ । स्फुराखड्गे निरीक्ष्य सः ॥ कृपाणमकृषत्कोषा—त्पद्मकोशादिवालिनं ॥ ७० ॥
सोऽवाहयदसिं वंश—स्तंबे स्तंबेरमाकृतिः ॥ छिन्नं वंशैः सह शिरो—ऽपश्यत्कंप्राधरं पुरः ॥७१॥
वल्गुलीकरणात्कोऽपि । धूमपानरतो नरः ॥ हतो हंत मया मंतु—रिति स स्वमगर्हति ॥
॥ ७२ ॥ यद्वा मम यमस्येव । का कृपेति विचिंतयन् ॥ इतस्ततो भ्रमन्नेष । नंदनोद्यानमै-
क्षत ॥ ७३ ॥ तदंतर्द्युपतिज्योति—रसहिष्णु मणिमयं ॥ वीक्ष्य ससद्मणं मंक्षु । सौधमध्या-
रुरोह सः ॥ ७४ ॥ तस्योपरितले कन्यां । कांचित्कांचनसच्छविं ॥ रतिरंभारमारूपो—स्थानप-
लीमिवैक्षत ॥ ७५ ॥ स्वःस्त्री वैहासिकी हासि । का त्वं चिंतातुरेव किं ॥ इति वीरावतंसेन
। तेनोक्ता निजगाद सा ॥ ७६ ॥ रूपश्रीकोश कोऽसि त्वं । किमिहागमनं च ते ॥ त्वयोदिते
स्ववृत्तांते । वक्ष्याम्यनुनिजां कथां ॥ ७७ ॥ बाले पंचालभूपाल—कुलांकुरमवेहि मां ॥ इहा-

गमं भ्रमन्नाना—देशदर्शनकौतुकी ॥ ७८ ॥ इति प्रोक्ते कुमारेण । जगौ सा स्मेरलोचना ॥ कटाक्षमिश्रैर्हर्षाश्रै—रर्घ्यं दुर्वांबु तन्वती ॥ ७९ ॥ अहो भाग्यमहो भाग्यं । प्राणेश यदृद्-श्यथाः ॥ पुण्यानि तानि पुष्टानि । भूयासुर्दर्शितोऽसि यैः ॥ ८० ॥ को वक्तीदं पुरं शून्यं । यत्र त्वं नाथ वीक्ष्यसे ॥ शून्यां मन्ये महीमन्यां । स्वामिन् या मुमुचे त्वया ॥ ८१ ॥ जानेऽहं ब्रह्मदत्तोऽसि । कुमार त्वं कलानिधिः ॥ विद्धि मां पुष्पचूलस्य । राज्ञः पुष्पवतीं सुतां ॥ ८२ ॥ पिता मां तुभ्यमेवादा—दहं त्वत्संगमोत्सुका ॥ नाट्योन्मत्ताख्यखेटेन । खेलंती निष्कुटेऽहृ-षि ॥ ८३ ॥ प्रासादमत्र निर्माय । मायाशक्त्यात्र नूतनं ॥ मां मुमोच पुनर्नायं । मदृदृशं सो-ढुमीश्वरः ॥ ८४ ॥ विद्यां साध्धुमसौ धूम—पानाढ्यंशालिकां ययौ ॥ विद्या सेत्स्यति तस्या-द्य । तद्भक्त्योद्वक्ष्यते स मां ॥ ८५ ॥ निर्विघ्नं स मया जघ्ने । कुमार इति जल्पति ॥ कुठार-भंगे वल्लीव । भृशोद्भ्वासा बभूव सा ॥ ८६ ॥ गांधर्वविधिना भावि—स्त्रीरत्नं परिणीय तां ॥ रममाणो निशां निन्ये । सकलां स कलामिव ॥ ८७ ॥ अशृणोन्मशृणं प्रात—रसौ व्योमा-ध्वनि ध्वनिं ॥ क एष ध्वनिरेवं च । तेन पृष्टाभ्यधत्त सा ॥ ८८ ॥ नाथ खंडा विशाखा च ।

भगिन्यौ तस्य पाप्मनः ॥ धृतस्वबंधुवीवाहो—पस्करे आगते इमे ॥ ८९ ॥ तत्त्वं तिष्ठ क्षणं
दूरे । यावद्वृत्ते तवोदिते ॥ त्वयि रक्तं विरक्तं वा । कलयामि तयोर्मनः ॥ ९० ॥ रक्ते चे-
त्त्वयि ते रक्तं । चालयिष्यामि तद्ध्वजं ॥ तदागछेर्विरक्ते चे—त्ततः श्वेतं तदा व्रजेः ॥ ९१ ॥
युग्म्यां बंधुनिरेकस्य । खगाभ्यां भूमिगामिनः ॥ प्रश्नो प्रश्नवतोऽप्याभ्यां । सह युक्तो न ते
रणः ॥ ९२ ॥ अथ दूरे निलीयास्था—त्कुमारो ध्वजदत्तदृक् ॥ स्वयशः श्वेतमद्राक्षी—न्नृ-
त्यंतं च क्षणाद्ध्वजं ॥ ९३ ॥ विग्रहो मे सह स्त्रीभ्यां । त्रपादायीति चिंतया ॥ बहुकुर्वन्
प्रियोक्तिं तां । प्रतस्थे निर्जयोऽपि सः ॥ ९४ ॥ क्रामंश्चिरमरण्यानीः । स मानी सायमैक्षत
॥ कुहुभ्रष्टैः करैरिंदो—रिव नीरैर्भृतं सरः ॥ ९५ ॥ ततः स्नानपयःपान—मथितोरुपथश्रमः
॥ उत्तीर्णः सरसो बाला—मालुलोक स कांचन ॥ ९६ ॥ पुष्पेषु तृणपूर्त्यर्थ—मिव पुष्पाणि
चिन्वती ॥ धीरस्यापि कुमारस्य । गतिविघ्नी बभूव सा ॥ ९७ ॥ आकर्षंती मनस्तस्य । कटा-
क्षैरंकुटैरिव ॥ मान्यतः प्रावृतजंतु । स्वभावोऽयं हि योषितः ॥ ९८ ॥ सोऽपि तां लोपित-
स्वास्थ्यां । पश्यन् वलितया दृशा ॥ नावापि को ह्यविज्ञात—तलां विशतिवाहिनीं ॥ ९९ ॥

स्वदासीं शिक्षयित्वाथ । प्रजिध्ये कन्यया तया ॥ मंदो मदनवत्तिष्ठे—न्मदनाम्नेः पुरः कि-
यत् ॥ २०० ॥ दत्ते प्राभृतदंताते । स्वात्मानं सास्मदीश्वरा ॥ इत्युक्त्वा दासिका तस्य । फ-
लपुष्पाद्यढौकयत् ॥ १ ॥ एहि देहजितानंग—रूपेदं पुरतः पुरं ॥ जल्पंत्येवेति तं निन्ये ।
पुरांतर्मंत्रिसद्म सा ॥ २ ॥ प्रियप्राप्तिप्रमोदिन्या । नंदिन्या भूपतेरयं ॥ प्रहितोऽस्ति त्वदावा-
से । वासनीयः सुखं निशि ॥ ३ ॥ प्रातर्विहितशृंगार—श्चानेयो भूभुजः सभां ॥ इत्युक्त्वा
नागदत्तस्य । मंत्रिणः स न्यवर्तत ॥ ४ ॥ युग्मं ॥ तदा तदाकृतिज्ञात—गुणग्रामेण मंत्रिणा
॥ सेव्यमानः सुखं तत्र । सुष्वाप स्वौकसीव सः ॥ ५ ॥ प्रातःकालेन पूर्वाद्रि—चूलां निन्ये
दिवाकरः ॥ मंत्रिणा स च भूपाल—पर्षदं विश्वहर्षदः ॥ ६ ॥ अभ्युत्थाय तमर्घार्घे—रन-
र्घ्यगुणवैभवं ॥ पर्यणाययदूर्वीशः । पुत्र्या श्रीकांतया सह ॥ ७ ॥ तदंगदीर्घिकारंगैः । सर्वाप-
त्तापमल्पयन् ॥ रहः कदापि स प्राक्षी—मप्राक्षीत्तां कुमारराट् ॥ ८ ॥ अज्ञातकुलशीलाय ।
विदेशादागताय मे ॥ प्रिये प्राणप्रियापि त्वं । पित्रा कथमदीयथाः ॥ ९ ॥ सा जगौ राजगौ-
रव्य—गुणस्वामिन्निशम्यतां ॥ राजा शबरसेनोऽभू—द्वसंतपुरपत्तने ॥ १० ॥ तत्पुत्रोऽसौ पिता

मे हि । दायादैः समुदायिभिः ॥ राज्यान्निर्वासितो भोगी । कीटिकाभिर्बिलादिव ॥ ११ ॥
ततः पल्ल्यामिहायातो । ग्रामघातादिकर्मभिः ॥ स्वभृत्यानेव पुष्णाति । क्षीरनीरैस्तरूनिव
॥ १२ ॥ ऊर्ध्वं चतुर्णां पुत्राणा—मस्याहं दुहिताभवं ॥ संहितानामुपायानां । विभूतिरिव
भूभुजः ॥ १३ ॥ मामसौ धामसौहित्य—स्येत्युचे मुक्तशैशवां ॥ मम सर्वे द्विषो भूपा—
स्तत्त्वं स्वैरं वरं वृणु ॥ १४ ॥ तदादि सरसस्तीरं । हंसीवाहमसेविषि ॥ गतागतकृतो मार्गे ।
पथिकांश्च निरैक्षिषि ॥ १५ ॥ मन्मनोऽविमरुतरु— ष्विव पांथेषु निःस्पृहः ॥ नेत्रास्यांह्रिभि-
रंभोज—वनेऽलं त्वय्यरज्यत ॥ १६ ॥ मयि योग्यानुरागायां । पिताप्राक्षीन्न ते कुलं ॥ को-
कीमयूर्योः सूर्याब्द—प्रीतौ कस्तत्कुलेक्षकः ॥ १७ ॥ अन्यदा श्वसुरे धाट्ये । चलिते स स-
हाचलत् ॥ ग्रामे च लुंट्यमानेऽगा—त्कुमारः केलये सरः ॥ १८ ॥ विधायारामविश्राम—म-
विश्रामलवारिणि ॥ विशन् सरसि सोऽद्राक्षी—न्मित्रं वरधनुं पुरः ॥ १९ ॥ सोऽनभ्रादभ्रवृ-
ष्ट्याभं । तं वीक्ष्य मुमुदेतरां ॥ सोऽप्यागत्य कुमारस्य । न्यपतत्पदपद्मयोः ॥ २० ॥ स रोदन्
कंठमालंब्य । कुमारमपि रोदयन् ॥ तेनैवाश्वासितश्चाभू—त्कथंचिद्वचनक्षमः ॥ २१ ॥ मित्र

दीर्घजटव्याघ्रै । रुद्धोऽपि मृगवत्तदा ॥ कथं मुक्तोऽसि ।तेनेति पृष्टो वरधनुर्जगौ ॥ २२ ॥ शृणु
वीर तदा नीरं । धृत्वा नीरजिनीपुटैः ॥ अपीतजल एवाहं । ववले पल्वलात्ततः ॥ २३ ॥ द-
ष्टोऽहं दीर्घपुरुषैः । परुषं ताडितैश्च तैः ॥ क्व स रे ब्रह्मदत्तोऽस्ती—ति पृष्टो मौनमाश्रयं ॥
॥ २४ ॥ पुनस्तैस्ताड्यमानस्त्वां । व्याघ्राघ्रातं न्यवेदयं ॥ तत्स्थानं दर्शयेत्येभिः । पुरश्चक्रे ब-
लादपि ॥ २५ ॥ संकेतं दृष्टिमार्गे ते । कृत्वाहं न्यपतं भुवि ॥ हे भूस्त्वं नौ तदारक्तः ।
किं नाद्येतीव भाषितुं ॥ २६ ॥ परिव्राड्दत्तगुलिकां । क्षिप्त्वास्ये तत्प्रभावतः ॥ निःसंज्ञोऽहं
मृतधिया । तैरौज्झिषि वनांतरे ॥ २७ ॥ गतेषु तेषु गुटिका—माकृषं मुखकोटरात् । नष्टं रत्न-
मिव द्रष्टुं । भवंतमहमभ्रमं ॥ २८ ॥ गतश्च कंचन ग्रामं । तत्राद्राक्षं तपोनिधिं ॥ वसुभागं
परिव्राज—माजन्म सुहृदं पितुः ॥ २९ ॥ स मया समयागत्य । प्रणतः प्रीतिभाजनं ॥ कु-
मार कुशलोदंत—मप्राक्षीत्तातवत्तव ॥ ३० ॥ मयाप्युक्त्वा भवद्वृत्तं । पृष्टो निजपितुः क-
थां ॥ शोकेनापूरित इव । निःश्वस्येति जगाद सः ॥३१॥ तदा जतुगृहे दग्धे । दग्धमेकं वपुः
प्रगे ॥ दीर्घो निरीक्ष्य दुःखाग्नि—दग्धं मेने स्वमेव सः ॥ ३२ ॥ गतरंगः सुरंगाग्रे । वीक्ष्य

तार्क्ष्यपदावलीं ॥ धनोर्धिया गतावेता–विति तस्मै चुकोप सः ॥ ३३ ॥ स वां शोधयितुं योधा–नादिदेश समंततः ॥ तावद्भानुः पलायिष्ट । त्रस्तः सिंहादिव द्विपः ॥ ३४ ॥ निशीव मालतीमाला । मणीवावकरोत्करे ॥ सरुषा तेन तद्भार्या–ऽक्षेपि चांडालपाटके ॥ ३५ ॥ इति जल्पत एवास्य । दुःखाच्चेतनयागतां ॥ तामन्वेष्टुमिवागच्छ–न्मूर्छाजाजो ममापि सा ॥ ३६ ॥ क्षणेन शैत्यनिलयै–रनिलैराप्तचेतनः ॥ करोम्मि सांप्रतं मातु–श्चितामेवमचिंतयं ॥ ३७ ॥ ततः कापालिकीभूया–गमं कांपिल्यपत्तनं ॥ विट्शूकर इवाभ्राम्यं । परितोंति ज-पाटके ॥ ३८ ॥ इह भ्राम्यसि किंतो कि–मिति पृष्टोऽहमंत्यजैः ॥ कल्पोऽयं मम मातंगी–विद्याया इत्यजाषिषि ॥ ३९ ॥ जनन्या रक्षकं मित्री–कृत्य तेन व्यजिज्ञपम् ॥ मातर्नमति कौक्षिन्यो । वयस्यस्तनयस्य ते ॥ ४० ॥ मातुर्मातंगगेहेषु । भ्रमन्नमनपूर्वकं ॥ अन्यदा गुटि-कागर्भं । बीजपूरकमार्पयं ॥ ४१ ॥ तदा स्वादात्परिभ्रष्ट–संज्ञा जाता मृतेव सा ॥ तां ता-दृशीं तलारक्षो–ऽज्ञापयद्दीर्घभूभुजः ॥ ४२ ॥ दीर्घादवाप्य तादाहा–देहं श्वपचपाटकं ॥ आजगाम तलारक्ष–स्तदाहमगमं तदा ॥ ४३ ॥ तां दिधक्षुं तलारक्ष–माचख्यौ शठधीरहं

॥ अस्या दाहः क्षणेऽमुष्मि—न्ननर्थाय महीभुजः ॥ ४४ ॥ तत् श्रुत्वा स न्यवर्तिष्ट । विश्वस्तो मयि लिंगिनि ॥ यदाहुः सर्वदंभेषु । व्रतदंभं सुदुस्तरं ॥ ४५ ॥ प्राक्प्रीत्या पुरुषः प्रोचे । जनन्यारक्षको मया ॥ शबेनानेन साध्नोमि । विद्यां यद्यनुमन्यसे ॥ ४६ ॥ ओमित्युक्तवता तेन । सममादाय मातरं ॥ सौरभेयीमिवाकर्ष । बहिश्चांडालपाटकात् ॥ ४७ ॥ गत्वा पितृगृहं साय—मकार्षं मंगलादिकं ॥ प्रत्येति न विना दंभं । लोकः प्रायो बहिर्मुखः ॥ ४८ ॥ पूर्देवीज्यो बलं दातुं । तन्मित्रं प्रैषमातुरः ॥ मातुरास्येऽपरां क्षिप्त्वा । गुटिकां तामचेतयं ॥ ॥ ४९ ॥ अभिवंद्य स्वमावेद्य । निवार्य रुदतीं च तां ॥ स्कंधमारोप्य वेगेन । कच्छग्राममगामहं ॥ ५० ॥ मुक्त्वा तातसुहृद्देव—शर्मविप्रस्य तां गृहे ॥ पुनस्त्वां द्रष्टुमत्राभ्म्यं । क नु मित्रं विना धृतिः ॥ ५१ ॥ नगाद्रिनगरग्राम—समग्राममप्यहर्निशं ॥ वीक्ष्यमाणः क्रमाद्भद्र । माध्यह्नाग्यैरिहागमं ॥ ५२ ॥ अथ तस्मै कुमारोऽपि । निजं वृत्तमवोचत ॥ तयोर्वार्तयतोरेवं । पुरुषः कश्चिदाययौ ॥ ५३ ॥ आहुर्ग्रामेऽत्र दीर्घस्य । जटाश्चित्रपटान्विताः ॥ लोका ईदृग्नरद्वंद्वं । कापि दृष्टं तदुच्यतां ॥ ५४ ॥ तत् श्रुत्वा तादृशौ वीक्ष्य । युवामहमिहागमं ॥ कुर्वीया-

थामथ स्वेष्ट—मित्युदित्वा जगाम सः ॥ ५५ ॥ युग्मं ॥ तान् जेष्यामीति जल्पंतं । कुमारं मंत्रिभूर्जगौ ॥ सिंहस्येव श्वभिः स्वामि—न्नेभिः कस्तव विक्रमः ॥ ५६ ॥ निंद्या इन्नमिवोन्मत्तं । समये दीर्घमेव तं ॥ इति तस्य गिराचाली—त्कुमारस्तादृशां क नीः ॥ ५७ ॥ गहनेनाध्वना यांतौ । गमिकाध्यायिनाविव ॥ तौ कौशांब्यां गतौ वार्ता—विनोदाविदितश्रमौ ॥ ५८ ॥ वने सागरदत्तस्य । श्रेष्टिनो बुद्धिलस्य च ॥ अपश्यतां रणं रोष—ताम्रयोस्ताम्रचूडयोः ॥ ५९ ॥ तौ स्वस्वामिना लक्ष—पणबंधेन योधितौ ॥ चंचुघातैर्नखव्रातै—र्युयुधाते मिथश्चिरं ॥ ६० ॥ तरुणं क्षीणतारुण्यो । विक्रांतं हीनविक्रमः ॥ कुक्कुटं सागरेऽन्यस्या—जयद्बुद्धिलकुक्कुटः ॥ ६१ ॥ सागरं मंत्रिभूः प्रोचे । त्वत्पक्षी पक्षिणामुना ॥ किं फणी गोनसेनेव । जिग्ये जात्योऽप्यजातिना ॥ ६२ ॥ सागरानुज्ञया तस्य । पश्यन् पादौ कुपक्षिणः ॥ कीना शमासुरीश्लक्ष्णा । अयःशुचीरबोधि सः ॥ ६३ ॥ तद् ज्ञात्वा दुर्यशोभीरु—स्तस्मै छन्नममन्यत ॥ लक्षार्धं बुद्धिलः सोऽपि । कुमारं तदजिज्ञपत् ॥ ६४ ॥ शूचीः शल्यमिवाकृष्य । पदयोः पक्षिणः क्षणात् ॥ लघुहस्तः कुमारस्तौ । पुनर्योध्धुमढौकयत् ॥ ६५ ॥ हेलया हील-

यामास । विपद्गो जात्यपक्षिणा ॥ न ह्युलूकोद्योतवज्जन्म—जयः क्वचन शाश्वतः ॥ ६६ ॥
स्वागारं सागरो निन्ये । रथमारोप्य तावथ ॥ अन्नीष्टभोगसंयोगा—त्तत्र तौ तस्थतुः सुखं
॥ ६७ ॥ इतश्चात्र पुरे श्रेष्ठी । धनप्रवर इत्यभूत् ॥ ऊर्ध्वं तस्याष्टपुत्राणां । जज्ञे रत्नवती सु-
ता ॥ ६८ ॥ सा खर्वितशचीरूप–गर्वा निर्वाणशैशवा ॥ आरराध वने यक्षं । प्राप्तुकामा वरं
वरं ॥ ६९ ॥ आख्यद्यक्षः प्रसन्नस्तां । पुत्री दैवाद्दिहेति यः ॥ श्रीवत्सांकः सुहृद्युक्त–स्तव-
ज्ञावोः कुकुटाहवे ॥ ७० ॥ स न्नावी सार्वन्नौमस्ते । न्नविष्यत्यचिरात्प्रियः ॥ श्रुत्वेति मुदिता
यक्षं । सा विशिष्य न्यषेवत ॥ ७१ ॥ बंधुकुक्कुटयुद्धे तं । तदा वीक्ष्य हृदीश्वरं ॥ विरहा
नलदग्धांगी । क्वापि प्राप न सा धृतिं ॥७२॥ मयि कामामयार्त्तायां–मयं मुक्तामयः किमु ॥
इति कंठाध्धृतोत्कंठा । सा हारमुदतारयत् ॥ ७३ ॥ आर्यपुत्रस्य मित्राय । देह्येतमिति वादि-
नी ॥ सह लेखेन तं हारं । सा तापस्याः करे ददौ ॥ ७४ ॥ लब्धार्थं बुद्धिलः प्रैषी–त्तदा नृ-
त्येन मंत्रिणे ॥ तौ यांतौ स्वामिकार्येण । संयुज्येतेस्म वर्त्मनि ॥ ७५ ॥ बुद्धिलानुचरं वी-
क्ष्य । स्वतः सत्वरगत्वरं ॥ हस्ते तस्यार्पयत्प्रीत्या । हारं लेखं च तापसी ॥ ७६ ॥ तत्सर्वं

मंत्रीपुत्राय । दत्वा बुद्धिलसेवकः ॥ प्रेक्षमाणे क्षमानाथ—पुत्रे व्यावर्तत क्षणात् ॥ ७७ ॥
हारः क एष मत्स्वामि—नामांको लेख एष कः ॥ इति ध्यातं वरधनुं । सैवोपेयाय तापसी
॥ ७७ ॥ दत्वाशिषं तयो रत्न—वत्या वृत्तं निवेद्य च ॥ अवाप्तप्रतिलेखा सा । मंत्रिपुत्रान्न्य-
वर्तत ॥ ७ए ॥ तल्लेखवीक्षणोद्भूत—हृल्लेखः क्ष्मापभूरपि ॥ तं तापमाप यत्राप—श्चंदनान्य-
प्युदासते ॥ ७० ॥ तौ शोधयति कौशांबी—पतौ दीर्घनिदेशतः ॥ अगोपायन्निजे धाम्नि ।
सागरः सारज्ञांकवत् ॥ ७१ ॥ पुरीं परिजिहीर्षू तौ । सायायत्वान्निशामुखे ॥ मार्गं संप्रेषया-
मास । कियंतमपि सागरः ॥ ७२ ॥ सागरे वलिते यांतौ । तौ वनांतरपश्यतां ॥ तारामिव
दिवः भ्रस्तां । कांचिद् द्युतिमतीं कनीं ॥ ७३ ॥ स्वःस्त्रीभिरिव युक्तेहुः । शस्त्राकीर्णे रथे स्थि-
ता ॥ लग्ना किमीयती वेला । युवयोरिति सावदत् ॥ ७४ ॥ आवां कौ सुष्ठु वेत्सीति । कु-
मारेणोदिता जगौ ॥ दोषापि दंतद्युतिभि—र्दर्शयंतीव सादिनं ॥ ७५ ॥ जवद्भिरहसंतप्तां ।
यक्षस्तुष्टोऽन्यधत्त मां ॥ धवस्तव वनच्छाया—मद्य संगंस्यते निशि ॥ ७६ ॥ स एव ब्रह्मदत्तो-
ऽसि । विद्धि रत्नवतीं च मां ॥ एह्येहि रथमारोह । मारो हंति त्वया विना ॥ ७७ ॥ कुमारे-

ऽथ रथारूढे । क गम्यमिति जल्पति ॥ धनावहपितृव्योक्ता । सावग् राजगृहे पुरे ॥ ८८ ॥ वाहौ स वाहयामास । मगधानन्नि निर्जयः ॥ तस्याः निःसीमसौंदर्यं । धैर्यं च हृदि जावयन् ॥ ८९ ॥ तिष्टंति वज्रपातेऽपि । तृणस्पर्शेऽपि बिभ्यति ॥ साहसं साध्वसं चापि । स्त्रीणां किंचिदलौकिकं ॥ ९० ॥ कालस्य सोदरीं शैल—दंतुरां श्वापदातुरां ॥ जगाहे कांचिदटवीं । पुरः क्ष्मापतिनंदनः ॥ ९१ ॥ सुकंटकः कंटकश्च । तत्र चौरचमूपती ॥ अरुद्धां तद्रथं मार्ग—द्रुमाविव सुसंहतौ ॥ ९२ ॥ वर्षत्सु विशिखासारै—स्तद्वीरेषु घनेष्विव ॥ उदस्थायि कुमारेंद्रो । धनुषा तत्समाश्रये ॥ ९३ ॥ शरसंघर्षजाताग्नि—सिद्धेन वनदेवताः ॥ प्रीणिताश्चौरबलिना । बलिना ब्रह्मसूनुना ॥ ९४ ॥ जघ्नयोश्चौरसेनान्यो—रथासौ मित्रसारथेः ॥ रथस्यांके रणश्रांतः । शिश्ये सा स्खलवत्यपि ॥ ९५ ॥ निश्चिंते ब्रह्मतनये । शयाने सुखनिद्रया ॥ प्राप्य प्रातर्नदीं रथ्यौ । तुरगौ तस्थतुः स्वयं ॥ ९६ ॥ वेगाधिक्येन निद्रालुः । सहसा स्खलिते रथे ॥ गतनिद्रः कुमारेंद्रो । न रथे मित्रमैक्षत ॥ ९७ ॥ गतः स्यादंजसे क्वापी—त्याहृत्तारस्वरेण तं ॥ अनाप्तप्रतिवाग्रक्त—क्लिन्नां धूर्वीमलोकत ॥ ९८ ॥ तत्क्षणं मूर्छितो लब्ध—संज्ञश्च व्यलपत्तरां

॥ सखे रुषेव मां सुप्तं । विहाय क गतो नवान् ॥ एए ॥ हुं ज्ञातं मित्र नष्टोऽसि । त्मुक्त्वा
तास्ताः सहापदं ॥ दूरीभूतोऽसि तेन त्वं । मत्तोऽद्यापि ध्रुवापदः ॥ ३०० ॥ विरहो दुःसह-
स्तेऽभू—न्मनागपि मया पुरा ॥ विमना किमनापृच्छ्य । दूरं गछसि सांप्रतं ॥ १ ॥ नाद्यापि
पैतृकी राज्य—लक्ष्मीरासादितास्ति सा ॥ मुंचन्मामेवमस्थाने । मित्र न त्रपसे कथं ॥ २ ॥
मित्रोदयेऽप्यमित्रोऽहं । तमसा पूरितोऽस्मि ही ॥ यः सुन्निद्रे बुभुक्षार्त्तः । स जीवति किय-
च्चिरं ॥ ३ ॥ स प्रेयस्या सुबुध्ध्येव । क्रंदन्नेवमबोध्यत ॥ धीर मा धीरतां मुंच । शांतं शांतम-
मंगलं ॥ ४ ॥ कचित्तवैव कार्येण । मंत्री संजाव्यते गतः ॥ न हि तस्यापदः शंक्याः । सो-
ऽपि मित्रं तवैव यत् ॥ ५ ॥ नात्र स्थातुं चिरं युक्त—मरण्यरुदितेन किं ॥ स्थानप्राप्त्या पु-
नर्विष्वक् । क्रियते तन्नवेषणं ॥ ६ ॥ ततो मगधदेशस्य सीमग्रामं जगाम सः ॥ सदाकृति-
रिति ग्रामे—शेन निन्ये स्ववेश्म सः ॥ ७ ॥ किं शोकार्त्त इवासीति । पृष्टस्तेन जगाद सः ॥
सखा मे चौरसंग्रामे । ग्रामेश काप्यगादिति ॥ ८ ॥ सोऽपि प्रत्ययितैः पुंन्निः । शोधयित्वा-
खिलाटवीं ॥ लब्धमेकं कुमाराय । रुधिरार्द्रं शरं ददौ ॥ ए ॥ स बाणालोकनिर्णीत—मित्र-

मृत्युः शुचातुरः ॥ जाग्रदाग्रहतो ग्रामे—शस्य तत्र निशि स्थितः ॥ १० ॥ तृतीययामे ग्रामेऽत्र । प्राप्तांश्चौरान् स भूयसः ॥ लीलया दलयामास । घरटश्चणकानिव ॥ ११ ॥ कथंचिदनुगच्छंतं । निवर्त्य ग्रामनायकं ॥ सोऽगात्पुरं राजगृहं । द्विपो राजगृहं यथा ॥ १२ ॥ विश्रामार्हं बहिरसौ । प्रविष्टस्तापसाश्रमं ॥ मुमोच न्यासवत्तत्र । दयितामुपतापसं ॥ १३ ॥ पुरं च प्रविशन् वर्य—वेश्मवातायनस्थिते ॥ अपश्यत्कन्यके मूर्ते । स्वर्न्नलोकश्रियाविव ॥ १४ ॥ ते तमित्यूचतुर्मुक्त्वा । यज्जनं प्रेमभाजनं ॥ अगास्तदा सदाचार—सार तत्किं तवोचितं ॥ ॥ १५ ॥ सोऽन्यधात्को जनः प्रेम—पात्रं तं च कदात्यजं ॥ के युवां कः पुनरहं । ततस्ते प्रत्यवोचतां ॥ १६ ॥ अत्रागच्छ यथा वच्मः । सोऽथ तद्गेहमाविशत् ॥ प्रीणितः स्नानपानाद्यै—स्ताभ्यामेवमभाषत ॥ १७ ॥ अस्ति वैताढ्यनामाद्रि—र्नवकूटोऽपि सत्प्रियः ॥ न च दुर्वर्णतामेति । श्वेतधातुमयोऽपि यः ॥ १८ ॥ तत्रास्ते दक्षिणश्रेण्यां । नगरं शिवमंदिरं ॥ तत्राभूज्ज्वलनशिखो । राजा विद्याधरेश्वरः ॥ १९ ॥ प्रिया विद्युच्छिखा तस्य । विद्युद्वारिमुचो यथा ॥ नाट्योन्मत्तस्तयोः पुत्रः । प्रकृत्या स्त्रीषु लोलुपः ॥ २० ॥ आवां खंगा विशाखा च । तस्य

प्राणप्रिये सुते ॥ कदापि सह तातेन । जग्मिवाष्टापदाचलं ॥ २१ ॥ तत्र नत्वा जिनश्रेणीं । रक्ताशोकतरोस्तले ॥ चारणर्षीं समं ताते—नावंदिष्वहि सादरं ॥ २२ ॥ शुश्रुवुः श्रमणाज्ज्येष्टा—न्निर्मदधर्मदेशनां ॥ तातोऽपृछत्ततो नावी । कोऽनयोः कन्ययोर्वरः ॥ २३ ॥ नाव्योन्मत्तवधं कर्ता । यः स नर्त्तानयोरिति ॥ श्रुत्वा मुनिवचस्तात—श्चावामाधिमधिष्महि ॥ ॥ २४ ॥ आवाभ्यामथ विज्ञप्तं । तात किं खिद्यते वृथा ॥ स्वबंधुवधमूलेन । विवाहेनावयोरलं ॥ २५ ॥ ततः सन्निहितीभूय । सदा नोगगतस्पृहे ॥ नातुर्देहमरक्षावा—क्षिगोलमिव पक्ष्मणी ॥ २६ ॥ सोऽन्यदा पुष्पचूलस्या—हरत्पुत्रीं स्मरातुरः ॥ ततः परं स्वयं वेत्सि। वच्चः किं नातृदुर्नयं ॥ २७ ॥ श्रुत्वा पुष्पवतीनक्त्रा—द्भ्रातुर्घातं तवागमं ॥ तापशैत्ये शरद्रात्री । इव नेजिव तत्क्षणं ॥ २८ ॥ ततो वीक्ष्यावयो रागं । रत्नसा पुष्पवत्यपि ॥ नवत्पलायने हेतुं । केतुं श्वेतमचालयत् ॥ २९ ॥ आवां च त्वामनु नाम—कारमानमिव शूचिके ॥ मंजुलोहे चिरं नांते । पुनर्न क्वचिदाप्नुवः ॥ ३० ॥ विनोपक्रममद्य त्वं । दृष्टस्तनौ समुद्वह ॥ कुमारैर्मारयन् मारः । कुमार किमुपेक्षसे ॥ ३१ ॥ गांधर्वेण विवाहेन । कुमारः स्वीचकार ते ॥ रय-

वर्धितरंगाढ्ये । गंगासिंधू इवोदधिः ॥ ३२ ॥ स्थित्वा तत्र निशां प्रैषी—त्पुष्पवत्यंतिकं स ते ॥ क्षणात्ते च तदोकश्च । तिरोऽभूत्सर्वमन्नवत् ॥ ३३ ॥ अथाश्रमं गतोऽपश्य—न्नासौ रत्नवतीं प्रियां ॥ कन्या काप्यत्र दृष्टेति । नरं पप्रच्छ कंचन ॥ ३४ ॥ सोऽवदन्नाथ नाथेति । क्रंदंतीं ह्यस्तने दिने ॥ अनायि नायिका कापि । तत्पितृव्यालयं मया ॥ ३५ ॥ समं तेन कुमारोऽपि । धनावहगृहं ययौ ॥ सोऽप्युत्सवैर्नवै रत्न—वतीं तेन व्यवाहयत् ॥ ३६ ॥ संसारे सारताबुद्धिं । दधानः प्रियया तया ॥ सोऽन्यदा कर्तुमारेभे । स्वमित्रस्यौर्ध्वदेहिकं ॥ ३७ ॥ उपोषित इव स्वैरं । भुंजाने विप्रमंडले ॥ विप्रवेशो वरधनु—र्द्वारमेत्याब्रवीदिति ॥ ३८ ॥ जानेऽहं क्रियते भोज्य—मेतद्वरधनोः कृते ॥ विप्रौघैर्भोजितेऽप्येत—त्पुनस्तं नोपतिष्ठते ॥ ॥ ३९ ॥ भुंक्ते वरधनुः साक्षा—च्चेन्मां भोजयथाधुना ॥ आस्तां देहेनात्मनापि । मम तस्य च नांतरं ॥४०॥ तं श्रुत्वा श्रुतिपीयूषं । व्याहारं द्वारमागतः ॥ वपुर्वयोवचोभिस्तं । लक्षयामास भूपभूः ॥ ४१ ॥ दैतं भेत्तुमिवालिंग्य । गाढं नीत्वांतरालयं ॥ ब्रह्मदत्तेन पृष्टोऽसौ । निजं वृत्तमवोचत ॥ ४२ ॥ नाथ त्वयि तदा सुप्ते । रुद्धोऽहं क्रूरतस्करैः ॥ बाणेनाहत्य केनापि । द-

स्युना पातितो रथात् ॥ ४३ ॥ रुधिराघ्राणमत्ताश्वे । रथे सत्वरचारिणि ॥ मयि लीने द्रुमां-
तश्च । निराशास्तस्करा ययुः ॥ ४४ ॥ अतीत्योत्पथचारेणा—रण्यानीं ग्रामग्रामतः ॥ प्रवृत्तिं
प्राप्य ते ग्रामा—धिपादिह समागमं ॥ ४५ ॥ कुमारोऽथाभ्यधान्मित्र । वदास्माज्जिरपौरुषैः
॥ एवं रंकैरिव स्थेयं । शत्रुत्रस्तैः कियच्चिरं ॥ ४६ ॥ अत्रांतरेऽस्मिन्नगरे—ऽकस्मात्कोलाह-
लाकुले ॥ दत्तकर्णः कुमारेंद्रः । शुश्रावेति जनध्वनिं ॥ ४७ ॥ स्तृणींस्तृणीयन् कदली—दली-
यन्नसिपंजरं ॥ मुस्तास्तंबमिवोन्मूल्या—लानं धावत्यसौ द्विपः ॥ ४८ ॥ बालेयं तृणपूलीव
। क्लीवद्ग्जग्रसेऽमुना ॥ कोऽप्यस्यारक्षको नास्ति । ही निर्वीरा वसुंधरा ॥ ४९ ॥ तत् श्रुत्वा
सत्वरं सत्व—रंगतो नागमभ्यगात् ॥ आह्वास्त च कुमारस्तं । योद्धुमुद्धतदोर्युगः ॥ ५० ॥
जिहेषि किं न कन्यायां । पाप व्यपारयन् करं ॥ चेत्सामज समर्थोऽसि । तदेहि पुरुषोऽ-
स्म्यहं ॥ ५१ ॥ हतो वैदेशिको हंते—त्याक्रंदमुखरे जने ॥ त्यक्त्वा बालामधाविष्ट । द्वि-
पस्तंप्रति निःकृपः ॥ ५२ ॥ सदज्यस्तः पटुस्थामा । वामावर्त्तं परिभ्रमन् ॥ भ्रमयित्वा चि-
रं मेद—स्विनं सोऽखेदयद्द्विपं ॥ ५३ ॥ आरुह्य दत्तदंतांहि—र्दंतिनं केसरीव सः ॥ उरु-

संदंशकाक्रांत—कंठं कुंठमदं व्यधात् ॥ ५४ ॥ वशीकृत्यांकुशेनाथ । नरनाथगृहं गतः ॥ सो-
ऽबध्नाद् द्विपमालाने । स्तंभे गजमिवोद्धतं ॥ ५५ ॥ तत्रैत्य कौतुकी भूप—स्तं वीक्ष्यावग्म-
हाजनं ॥ सिंहः पौरो रविप्रेक्ष्यो । विधुर्नीरंकुरेष कः ॥ ५६ ॥ मुखं चंद्रसखं कीर्ति—स्तंभ-
सान्ययुजौ भुजौ ॥ उरः सरित्तटव्यूढं । तेजस्त्वस्य गतोपमं ॥५७॥ उक्ते धनावहेनाथ । तच्च-
रित्रे यथातथे ॥ ददौ तस्मै नृपः कन्या । भूयसीः पारितोषिकैः ॥ ५८ ॥ तटिनीभिरिवां-
भोधि—र्लताभिरिव भूरुहः ॥ ताराभिरिव तारेश—स्ताभिर्भ्राजे स भूपभूः ॥ ५९ ॥ प्रीतैः
पदे पदे पौरै—र्गीयमानगुणोत्करं ॥ भ्रमयत्यंचलं काचि-ज्जरत्यूचे तमन्यदा ॥ ६० ॥ पत्तने
वित्तनेतास्मि—न्नस्ति पुण्यजनप्रियः ॥ श्रेष्ठी वैश्रमणो नाम । चित्रं नातः कुबेरतां ॥ ६१ ॥
तत्पुत्री श्रीमती नाग—कराद्या मोचिता त्वया ॥ तदादीच्छति पुन्नाग । सा तवैव करग्रहं ॥
॥ ६२ ॥ ततस्तामुपयेमेऽसौ । श्रेष्ठिना विहितोत्सवः ॥ सुबुद्धेर्मंत्रिणः पुत्रीं । नंदां वरधनुः
पुनः ॥ ६३ ॥ तौ क्रमाद्विक्रमाधिक्या—त्ख्यातिं क्षितितले गतौ ॥ अभियावभियोगाढ्यौ
। काशीं पुरमुपेयतुः ॥ ६४ ॥ काशीशः कटको ब्रह्म—पुत्राय परमोत्सवैः ॥ कन्यां कटकव-

त्याख्यां । कार्यसिद्धिमिव त्वदात् ॥ ६५ ॥ स मैत्रीं मित्रपुत्रत्वा—त्प्रमना न मनागपि ॥
तुष्टयंश्चतुरायास्मै । चतुरंगां चमूं ददौ ॥ ६६ ॥ पुष्पचूलः कणेरुश्च । धनुर्मंत्रीश्वरश्च सः ॥
ब्रह्मदत्तं तदा नेजुः । काले दीपमिव द्युतः ॥ ६७ ॥ चलाचलचमूचाल—चालिताचलचूलकः
॥ चचाल प्रतिपंचालं । चौलनेयोऽचलद्धचः ॥ ६८ ॥ अथ दूतमुखेनैवं । दीर्घः कटकमन्य-
धात् ॥ अस्मासु बालमित्रेषु । कोऽयं ते युद्धडंबरः ॥ ६९ ॥ दूतेनैवावदत्सोऽपि । मित्राय
मित्रनंदनं ॥ स्वस्थाने स्थापयंतः कि—मुपलभ्यामहे त्वया ॥ ७० ॥ सख्यं ब्रह्मक्षितीशेन
। यादृशं त्वमपालयः ॥ न्यायस्यैकसमानत्वा—त्तादृग्वयमपि त्वया ॥ ७१ ॥ बालस्त्रीघातमि-
त्रान्य—धनस्त्रीद्रोहलक्षणं ॥ पंचालमिव पंचाल—मद्य मित्र विमोच्यसे ॥ ७२ ॥ अथ जालै-
रिवानीकै—र्ब्रह्मभूर्दीर्घमरोऽरुणत् ॥ सदीर्घमपि कांपिल्यं । सग्राहमिव पल्वलं ॥ ७३ ॥ स्वांग-
रक्षाक्षमे सार—मंत्रे सन्निहिते सुते ॥ बलादृक् चुलनी नीता । शाकिनीवात्यजत्पुरं ॥७४॥
सूर्यांशुभिरिव क्रांत—स्तत्सैन्यैर्दीर्घभूपतिः ॥ निर्यियासुः पुरात्कोल—कुणस्तल्पादिवाभवत्
॥ ७५ ॥ यो यो दीर्घभटो मीन । इवाब्धेर्निर्ययौ पुरात् ॥ स स ब्रह्मभुवो योधै—र्बकोटैरिव

जग्रसे ॥ ७६ ॥ उदस्तो भूपतिर्दीर्घो । दीर्घपृष्ठ इवोत्फणः ॥ निर्ययौ स्फारफूत्कारो । बिला-
दिव पुरादथ ॥ ७७ ॥ रथान् भंजन् भटान् निघ्नं—स्तुदस्यन् गजवाजिनः ॥ द्राणं ब्रह्म-
भुवः सैन्ये । दीर्घोऽभूत्प्रलयानिलः ॥ ७८ ॥ रुषं रोमांचदंभेन । वहन्नंकुरितामिव ॥ ब्रह्मदत्तो
दुढौकेऽथ । योध्धुं तेन सह स्वयं ॥ ७९ ॥ वर्षन् सांद्रशरासारै—स्तन्वन् रुधिरवाहिनीं ॥
स महामेघवद्दीर्घ—र्भटानां दुस्सहोऽजनि ॥ ८० ॥ कुर्वंतो दिवि देवाना—मद्भुतं विजयै-
षिणौ ॥ युयुधाते मिथस्तौ द्वौ । शस्त्राशस्त्रि भुजाभुजि ॥ ८१ ॥ अथोदयाय चक्रार्को । ब्र-
ह्महस्तनभस्तले ॥ चित्रं यत्तेन दीर्घस्य । दीर्घनिद्रोदपाद्यत ॥ ८२ ॥ उत्पन्नो द्वादशः सोऽयं ।
चक्रवर्तीति वादिनः ॥ तदानीं ववृषुः पुष्पै—र्नभ्राब्दा इव नाकिनः ॥ ८३ ॥ पौरा मुमुदिरे
दीर्घ-क्षये ब्रह्मांगजोदये ॥ शांते दवे प्रफुल्ले चा-राते को वा न मोदते ॥ ८४ ॥ जित्वा व-
षशतेनाथ । षट्खंडामपि मेदिनीं ॥ क्रियमाणोत्सवैः पौरै—र्ब्रह्मदत्तोऽविशत्पुरे ॥ ८५ ॥ वर्षैर्द्वा-
दशभिर्दत्ता—न्निषेको देवमानवैः ॥ स सहस्रैश्चतुःषष्ट्या । विललास मृगीदृशां ॥ ८६ ॥ फ-
लं निदानवृक्षस्य । पुष्पवत्यस्य वल्लभा ॥ बभार सर्वशुद्धांतः—पुरंध्रीषु धुरीणतां ॥ ८७ ॥

मधूत्सवेऽन्यदा दास्या । दत्तं कुसुमकंदुकं ॥ निरीक्ष्येदृक्मद्राक्षं । कापीत्यूहां बभूव सः ॥ ॥ ८८ ॥ जातिस्मरः स्मरन् पंच । पूर्वजन्मानि नृपतिः ॥ दृष्टपूर्वीदृशं देव—न्नवे स ध्यातवानिति ॥ ८९ ॥ तं पूर्वन्नवसोदर्यं । स सस्मार यथा यथा ॥ तथा तथा मनस्तस्या—न्नवत्तत्संगमोत्सुकं ॥ ९० ॥ अथोपलब्धये तस्य । श्लोकार्धमिति सोऽपठत् ॥ आस्व दासौ मृगौ हंसौ । मातंगावमरौ तथा ॥ ९१ ॥ राज्यार्धं लन्नते योऽमुं । श्लोकार्धं पूरयेदिति ॥ राज्ञोक्ते सा समस्याभू—त्प्रियातोऽपि प्रिया नृणां ॥ ९२ ॥ द्विपच्येव समस्याभूत् । परं तस्या अपूरणात् ॥ पौराश्चतुष्पदा जाता—स्तेषां मौर्ख्यं हि लक्षणं ॥ ९३ ॥ इतश्च स हि चित्रात्मा । संजातो धनिनः कुले ॥ श्रीषु स्त्रीषु च वैराग्यं । जातजातिस्मृतिर्ययौ ॥ ९४ ॥ पित्रोरनुज्ञया प्राप्य । चारित्रं चारुधीरसौ ॥ भूतले विहरन्नाप । कांपिल्योद्यानमन्यदा ॥ ९५ ॥ तं श्लोकार्धमुच्चरंतं । विद्यामिव पुनः पुनः ॥ तत्रारघट्टिकं कंचि—देकचित्तं ददर्श सः ॥ ९६ ॥ एषा नौ षष्टिका जाति—रन्योन्याभ्यां वियुक्तयोः ॥ इति तं पूरयामास । श्लोकं जातिस्मरो मुनिः ॥ ९७ ॥ संपूर्णं ग्राहितः श्लोकं । मुनींद्रेणारघट्टिकः ॥ कूपं मुक्त्वा ययौ भूपं ।

साम्राज्यार्धजिघृक्षया ॥ ९८ ॥ यावन्मध्येसत्रं श्लोकं । सोऽपाठीदशठाशयः ॥ तावत्प्रमोदा-
कुलितः । क्ष्मापतिः प्राप मूर्छनां ॥ ९९ ॥ हन्यमानोऽथ सामंतैः । सोऽरटन्मां विमुंचत ॥
ममोच्चाटनमंत्रोऽयं । प्रदत्तः खलु साधुना ॥ ४०० ॥ स्वस्थीभूतोऽथ भूपालो । दत्वास्मै पा-
रितोषिकं ॥ तेनैव दर्शिताध्वागा—दुद्यानं सपरिच्छदः ॥ १ ॥ चिरात्स बांधवालोक—हर्ष-
रुद्धमना नृपः ॥ मुनिमानम्य शुश्राव । धर्मतत्वकिरं गिरं ॥ २ ॥ प्रतापाग्निज्वलद्द्वेषि—
शलभा सुलभाः श्रियः ॥ एक एवांगिनां धर्मः । शर्महेतुः सुदुर्लभः ॥३॥ मानुषं प्राप्य दुः-
प्रापं । ये धर्मे स्युः प्रमद्वराः ॥ प्रांते शोचंति ते प्राप्त—च्युतसिद्धरसा इव ॥ ४ ॥ मनुष्यद्रोः
फलं फल्गु । विषयाः संयमः पुनः ॥ पेशलं फलमित्याहु—स्तद्गृहाणस्तत्त्वं गृहाण भोः ॥ ५ ॥
अथोचे भूपतिर्भ्रातः । सौख्येभ्यैः क्रियते तपः । प्राप्तसौख्यास्तु तत्कुर्युः । किमुल्लाघा इवौषधं
॥ ६ ॥ बंधुराः सिंधुराः श्यामा । रामा अनिधनं धनं ॥ देवाः सेवाकृतस्तत्किं । यल्लाभाय
भजे तपः ॥ ७ ॥ असंदिग्धसुखं राज्यं । ससंदेहसुखं व्रतं ॥ बलाबलविधिज्ञोऽसि । ग्राह्यं
त्याज्यं च किं बुधैः ॥ ८ ॥ तत्पंचजन्मसोदर्य । व्रतं त्यज पुरं भज ॥ प्राज्यं राज्यं विभज्या-

वां । भुंजीवहि यथा सुखं ॥ ए ॥ मुनिः स्माह महाभाग । भोगाः किं मम नाभवन् ॥ मोक्षांतरायभूतत्वा—त्तानत्याक्षमहं पुनः ॥ १० ॥ जानन्नपि तपो जाति—स्मृत्या कल्पद्रुमायितं ॥ करीरेष्विव भूतघ्नो । भोगेषु किमु मुह्यसि ॥ ११ ॥ प्राग्जन्मपुण्यैः प्राप्तोऽसि । ध्रुवं दिव्यामिमां श्रियं ॥ संप्रत्यकृतपुण्यस्तु । भ्रातः किं लप्स्यसे पुरः ॥ १२ ॥ आयुः स्वल्पं रुजोऽभ्यर्णा । ध्रुवनाशं च यौवनं ॥ विषयाः प्रांतविरसाः । कोऽयं मोहो वृथा तव ॥ १३ ॥ उपदेशैर्न चक्र्येति । यदा बोधिं मनागपि ॥ तदाभजन्मुनिर्मौनं । न हि ते निष्फलोक्तयः ॥ १४ ॥ विचरन् वसुधापीठे । प्रलये कर्मणां मुनिः ॥ उत्पन्नकेवलज्ञानः । प्रपेदे पदमव्ययं ॥ १५ ॥ चक्राधिपोऽतिचक्राम । कामभोगैकलालसः ॥ सप्तवर्षशतीं भृंगो—भोजलुब्धो निशामिव ॥ १६ ॥ कदाचिच्चक्रिणं कोऽपि । विप्रः परिचितो जगौ ॥ यदश्नासि स्वयं देव । भोजनं तत्प्रदेहि मे ॥ १७ ॥ विना स्त्रीरत्नमन्नं मे । न हि कस्यापि जीर्यते ॥ जीर्येद्वानर्थकृत्तत्स्या—दिति राज्ञा न्यषेधि सः ॥ १८ ॥ धिक्त्वामशनदानेऽपि । कदर्यमिति विब्रुवन् ॥ स विप्रः सकुटुंबोऽपि । राज्ञा स्वान्नमभोज्यत ॥ १९ ॥ तत्कुटुंबं ततो रात्रौ । सोन्मादमभवत्त-

या ॥ प्रावर्तंत व्यवस्थाभि—स्पशुधर्मो यथा मिथः ॥ २० ॥ कुटुंबे कैरव इव । प्रातर्विद्रायतां गते ॥ विडंबितोऽमुना सोऽह—मित्यकुप्यन्नृपे द्विजः ॥ २१ ॥ तद्द्रोहचिंतासायेपः । सोऽपश्यन्नगराद्बहिः ॥ जावालं तरु पत्राणि । काणयंतं इषत्कणैः ॥ २२ ॥ भविष्यत्यमुना भूप—वैरनिर्यातनं मम ॥ ध्यात्वेति तमगौरव्यं । गौरवेण जगाद सः ॥ २३ ॥ गजारूढो धृतछत्रो । राजमार्गेण याति यः ॥ त्वं तस्य गोलिके क्षिप्त्वा । चक्षुषी आकृषेः सखे ॥ २४ ॥ धनदानेन मानेन । द्विजेन परिवर्तितः ॥ ओमिति प्रतिपेदे स । पशुपालेषु का मतिः ॥२५॥ सोऽथ कुड्यांतरे कापि । कुड्यमत्स्य इव स्थितः ॥ पार्श्वचारिणि चक्रेशे—ऽचिराच्चिक्षेप गोलिके ॥ २६ ॥ हार्दं चेदक्षि नास्त्यस्य । तदावां निःप्रयोजने ॥ इतीवगोलिकास्पर्शा—त्तस्य नेत्रे निरीयतुः ॥ २७ ॥ मृता धृता गताः सुताः । क्षीणा मत्ता इवामराः ॥ अंगस्था न ररक्षुस्तं । हंत कः कर्मणां प्रभुः ॥ २८ ॥ अंगरक्षैर्निरीक्ष्यासौ । पशुपालो गले धृतः ॥ ताड्यमानोऽवदद्विप्रं । मूलमन्याय भूरुहः ॥ २९ ॥ स्फुरत्कोपेन भूपेन । सकुटुंबोऽपि स द्विजः ॥ क्षणान्निजघ्ने का वेला । भोगिनो भेकघातने ॥ ३० ॥ क्रोधदावानलस्तस्य । भूभृतः कठिनात्मनः

॥ सर्वान् विप्रतृणांकूरान् । मध्येपुरमशोषयत् ॥ ३१ ॥ अथादिदेश सोऽमात्यं । मात्यंतर्मे न मत्सरः ॥ यावन्न मुंचसि स्थालं । द्विजनेत्रैर्भृतं पुरः ॥ ३२ ॥ रौद्राध्यवसितं नृपं । मत्वा मंत्री महामतिः ॥ श्लेष्मातकफलैः स्थाल—मापूर्य पुरतोऽमुचत् ॥ ३३ ॥ मृद्गस्तानि महीजानि —रालापीदिति पार्श्वगान् ॥ एष एव क्षणो जाति । सारः सकलजीविते ॥ ३४ ॥ स्त्रीरत्नपुष्पवत्यंग—संगमे नापि सा धृतिः ॥ द्विजाक्षगोलकस्पर्शे । याद्य माद्यति मे हृदि ॥ ३५ ॥ श्लेष्मातकफलान्येवं । मृद्गता द्विजदृग्धिया ॥ अतिचक्रमिरे तेन । समाः क्रूरेण षोडश ॥ ३६ ॥ स्मृत्वापि स्वजवं मुनीश्वरमपि प्राप्याग्रजं प्राक्तनं । श्रुत्वाप्यस्य शुभा गिरो व्रतफलं सम्यग्विदित्वापि च ॥ जातः पापकपूरहेतुविषयेष्वेवांतिमश्चक्रभृ—चेद् गृद्धस्तदसौ विपद्य नरकं सर्वांतिमं लब्धवान् ॥ ३७ ॥ इति ब्रह्मदत्तकथानकं समाप्तं. ॥ एवं च प्रमादविवशानां निंद्यतामुपदर्श्य विवेकिभिः सम्यक्सामग्रीमवाप्य पुण्यकृत्येष्वप्रमादः कार्य इत्यावेदितम्. ॥ मज्जन्मध्ये स वार्धेस्तरणिमतिदृढां प्राप्य नैवाधिरूढो । निःस्वो विश्वोपकार क्षममरतरुं प्राप्य नैवाश्रितोऽसौ ॥ रोगग्रस्तः स सिद्धौषधमधिकबलं प्राप्य नात्र प्रवृत्तः । सं-

साराक्तोऽपि लब्ध्वा नरजवमजवद्यः प्रमत्तः स्वकार्ये ॥ १ ॥ आयुःसिद्धिसमृद्धिसत्वधिषणा-सौजाग्यशोजायशो—जाग्यारोग्यकलाविलासविजुता अत्यद्जुताः सर्वतः ॥ तुष्टे यत्र जगत्-त्रयीतनुमतामाविर्जवंत्याजवं । रद्दयः स प्रयतैः प्रमादरिपुतः सद्धर्मचिंतामणिः ॥ २ ॥ इति श्रीमदंचलगछाधिराजश्रीमहेंद्रप्रजसूरिशिष्यश्रीजयशेखरसूरिविरचितायां स्वोपज्ञोपदेशचिंतामणिटीकायां धर्मसामग्रीजणनाधिकारो द्वितीयः समाप्तः ॥ श्रीरस्तु ॥

॥ समाप्तोऽयं ग्रंथो गुरुश्रीमच्चारित्रविजयसुप्रसादात् ॥

लब्ध्वा यदीयचरणांबुजतारसारं । स्वादछटाधरितदिव्यसुधासमूहम् ॥
संसारकाननतटे ह्यटतालिनेव । पीतो मया प्रवरबोधरसप्रवाहः ॥ १ ॥
वंदे मम गुरुं तं च । चारित्रविजयाह्वयं ॥ परोपकारिणां धुर्यं । चित्रं चारित्रमाश्रितम् ॥२॥ युग्मं.

—

आ ग्रंथ श्रीजामनगरनिवासी पंडित श्रावक हीरालाल हंसराजे स्वपरना श्रेयमाटे पोताना श्रीजैनजास्करोदय छापखानामां छापी प्रसिद्ध कर्यो छे. ॥ श्रीरस्तु ॥

॥ श्रीजिनाय नमः ॥

॥ श्रीचारित्रविजयगुरुभ्यो नमः ॥

# ॥ श्री उपदेशचिंतामणिः ॥ भाग ३ ॥

( कर्ता—श्रीजयशेखरसूरिः )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज. ( जामनगरवाळा )

वीरसंवत्—२४४६. विक्रमसंवत्—१९७६. सने—१९२०.

किं रु. ८-४-०

श्रीजैनभास्करोदय प्रिन्टिंग प्रेस. जामनगर.

॥ श्रीजिनाय नमः ॥

॥ श्रीचारित्रविजयगुरुभ्यो नमः ॥

## ॥ अथ श्रीउपदेशचिंतामणिः सटीकः प्रारभ्यते ॥

( कर्ता—श्रीजयशेखरसूरिः )

( तृतीयोऽधिकारः )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज. ( जामनगरवाळा )

अथ तृतीयो देशविरत्यधिकारः प्रस्तूयते—इह प्राक्तनाधिकारे सामग्रीमवाप्याप्रमत्तेन भाव्यमिति प्रतिपादितं. अत्र तु यथाऽप्रमत्तः स्यात्तथा प्रतिपादयितव्यमित्यनेन संबंधेनायातस्याधिकारस्येयमादिमा गाथा—

॥ मूलम् ॥ सो होइ अप्पमत्तो । विरइए उज्जमेण सा य दुहा ॥ देसेण सावयाणं । सव्वेणं संजयाणं च ॥ १ ॥ व्याख्या—स प्राग्निर्दिष्टोऽप्रमत्तो विरमणं विरतिः सावद्ययोग-

निवृत्तिस्तद्विषयेनाध्यमेन जवति, सा च विरतिर्द्विधा द्विप्रकाश—देशतः सर्वतश्चेति. तत्र देशेन विरतिः श्रावकाणां, तेषां हि सांकल्पिकजीवनिषेधादिना प्राणातिपाताद्याश्रवेभ्यो देशेनैव विरमणात्, सर्वेण विरतिः सं सामस्त्येन यन्तंतिस्मोपरमंतिस्म स सावद्ययोगेभ्य इति संयताः साधवस्तेषां जवति सर्वाश्रवद्वारनिरोधतः. ननु प्रथमं सर्वविरतिमुपदिश्य ततस्तदशक्तस्य देशविरतिरुपदेश्या, यदाह—'जइ धम्मस्स समत्थे । जीवइ तद्देसणंपि साहूणं ॥' इत्यागमक्रममुल्लंघ्य कथं नाम देशविरतिरेव पूर्वं प्रस्तूयते? उच्यते—प्रतिपत्तिक्रमाश्रयणात्. तथा च जाष्यं—सम्मत्तम्मि उ लद्धे । पलिय्पुहुत्तेण सावउ होज्जा ॥ चरणोवसमखयाणं । सागर संखंतरा हुंति ॥ १ ॥ तर्हि प्रथमं सम्यक्त्वमेव वाच्यं, सत्यमेवैतदत एव देशविरतिद्वारगाथायां पूर्वं सम्यक्त्वमुपन्यस्य ततो व्रतवर्णना विधत्स्यते, इत्यलं विस्तरेण. अथ देशविरतियोग्यानाह—

॥ मूलम् ॥—जे न खमंति परीसह—जयसयणसिनेहविसयलोजेहिं ॥ सव्वविरइं धरेउं । ते जुग्गा देसविरइए ॥ २ ॥ व्याख्या—ये प्रत्याख्यानावरणकषायोदयवर्तिनो जीवाः

परीषहभयस्वजनस्नेहविषयलोभैर्हेतुभूतैः सर्वविरतिं धर्तुं न क्षमंते, ते देशविरतेर्योग्या भवंति. इदमत्र हृदयं—सामग्रीं प्राप्य विवेकिना पूर्वं सर्वविरतिरेवादृतव्या. यः पुनः क्षुत्तृट्सहनभिक्षाभ्रमणमलधारणादिपरीषहभीरुतया, तथा कथमीदृशमत्यंतवत्सलं पितृपुत्रादिपरिजनं त्यक्त्वैकाकिना भूयत इति स्वजनस्नेहेन, तथा कथं संसारसारतापादनक्षमा अमी इंद्रियार्था अभुक्ता मुच्यंत इति विषयलोभेन वा सर्वविरतिं वरितुं नोत्सहते. स मा सर्वभ्रष्टोऽभूवं, सर्वनाशे जायमाने यत्तल्लाभोऽपि श्रेयानेवेति विचार्य देशविरतिमपि प्रतिपद्यते, प्रतिबंधककारणाभावे तु सर्वविरतिमित्यर्थः. यदावश्यकचूर्णिः—विसयसुहपिवासाए । अहवा बंधवजणाणुराएण ॥ अचयंतो बावीसं । परीसहे दुस्सहे सहिउं ॥ १ ॥ जइ न करेइ विसुद्धं । सम्मं अइदुक्करं तवच्चरणं ॥ तो कुज्जा गिहिधम्मं । न य बज्झो होइ धम्मस्स ॥ ॥ २ ॥ अथ देशविरतिमेव विस्तरतो विवक्षुर्द्वारगाथामाह—

॥ मूलम् ॥—इह सम्मत्तं बारस—वयाइं दिठंतसंजुयाइं तउ ॥ गुणभावणदिणरयणी—किच्चाइं फलं च वत्तव्वं ॥ ३ ॥ व्याख्या—इह देशविरत्यधिकारे प्रथमं सम्यक्त्वं वक्तव्यं,

इहोक्तं चैतत्सर्वविरतेरपि मूलभूतं प्रतिपत्तव्यं, द्वयोरपि साधारणत्वात्. साधारणत्वेऽपि यद्देशविरतेरादावस्योपन्यासस्तद् विरतानामपि सम्यक्त्वमात्राश्रयणाच्छ्रावकत्वं भवतीति ज्ञापनार्थं. यदार्षं—सान्निग्गहा य निरन्नि—ग्गहा य उहेण सावया दुविहा ॥ ते पुण विभज्जमाणा । अट्ठविहा हुंति नायव्वा ॥ १ ॥ ततः प्रत्येकं दृष्टांतसंयुतानि द्वादशव्रतानि वाच्यानि. ततः प्रतिपन्नव्रतो यैर्गुणैर्युक्तः स्यात्ते गुणा वाच्याः, ततो दिनरजन्यहोरात्रं तत्प्रतिबद्धानि कृत्यानि वाच्यानि. ततः सुपालिताया देशविरतेः फलं वाच्यं. एतत्सर्वमत्राधिकारे वक्तव्यमिति योगः. तत्र प्रथमं सम्यक्त्वस्य स्वरूपमाह—

॥ मूलम् ॥—गयरागदोसमोहो । देवो छक्कायसंजया गुरुणो ॥ केवलिभणिउं धम्मो । इय सम्म रुई य सम्मत्तं ॥ ४ ॥ व्याख्या—राग इष्टेष्वासक्तिः, द्वेषोऽनिष्टेष्वप्रीतिः, मोहोऽज्ञानं, गता दूरीभूता रागद्वेषमोहा यस्य स गतरागद्वेषमोहः, सर्वं वाक्यं सावधारणं भवतीत्येष एव देवो नापरे हरिहरादयः. तेषां स्त्रीशस्त्रजपमालादिरागादिचिन्हस्य व्यक्तस्य वीक्षणात्. भवत्वेषां रागादिमत्ता का नो हानिरिति चेन्न, रागादिकलुषिततया तेषामद्यप्यमु-

क्तत्वेन मुक्तिदानायोगात्, मुक्त्यर्थमेव च देवस्याप्यभिप्रेतत्वात्. नित्यमुक्ता अमी न लिप्यंते रागादिभिरिति चेन्न, नित्यमुक्तानां पुनर्भवाभावात्. श्रूयंते च पुनर्भवा एषामवतारा ह्यसंख्येया इति पुराणोक्तबलात्. मा भवतु मुक्तिदत्वं, तथापि राज्यादिदातृत्वं रोगाद्यपायवारकत्वं च वर्तत एवामीषां साक्षात्कारणादिति चेन्न, तथाविधपार्थिवादीनां भिषगादीनां च देवत्वप्रसंगात्, पार्थिवादयः परेभ्यः कर्मानुगुणमेव ददुर्नाधिकमिति चेत्तेषामपि तथैव प्रवृत्तेः. न हि सर्वेऽपि तद्भक्ता राजानो निरुजोवाऽनुभवविरुद्धत्वात्. यदाहुः—यद्यावद्यादृशं येन । कृतं कर्म शुभाशुभं ॥ तत्तावत्तादृशं तस्य । फलमीशः प्रयच्छति ॥ १ ॥ इत्यलं विस्तरेण. तथा षट्कायाः पृथ्व्यप्तेजोवायुवनस्पतित्रसरूपास्तेभ्यो विराधनाद्वारेण संयता उपरता ये त एव गुरवो नापरे द्विजादयस्तेषां सर्वारंभप्रवृत्तत्वेन सदा षट्कायोपमर्दनसंभवात्. भवतु षट्कायोपमर्दकत्वं, परं ब्राह्मणजातित्वमस्त्येवेति चेन्न, ब्राह्मणजातित्वेऽपि जात्यस्य निंद्यत्वात्. तदभावेऽपि विश्वामित्रादीनां पूज्यत्वाभिधानात्. यदाहुः—श्वपाकीगर्भसंभूतः । पारासरमहामुनिः ॥ तपसा ब्राह्मणो जात—स्तस्माज्जातिरकारणं ॥ १ ॥ कैवर्तीगर्भसंभूतो ।

व्यासो नाम महामुनिः ॥ तपसा ब्राह्मणो जज्ञे । तस्माज्जातिरकारणं ॥ २ ॥ हरिणीगर्भसंभूतो । ऋषिशृंगो महामुनिः ॥ तपसा ब्राह्मणो जज्ञे । तस्माज्जातिरकारणं ॥ ३ ॥ शशकीगर्भसंभूतः । शूको नाम महामुनिः ॥ तपसा ब्राह्मणो जात—स्तस्माज्जातिरकारणं ॥ ४ ॥ मंकूकीगर्भसंभूतो । मांकव्यश्च महामुनिः ॥ तपसा ब्राह्मणो जात—स्तस्माजातिरकारणं ॥ ५ ॥ अरणीगर्भसंभूतः । कठिनोऽभून्महामुनिः ॥ तपसा ब्राह्मणो जात—स्तस्माज्जातिरकारणं ॥ ६ ॥ उर्वशीगर्भसंभूतो । वसिष्ठोऽभून्महामुनिः ॥ तपसा ब्राह्मणो जात—स्तस्माज्जातिरकारणं ॥ ७ ॥ न तेषां ब्राह्मणी माता । संस्कारश्च न विद्यते ॥ तपसा ब्राह्मणा जाता—स्तस्माज्जातिरकारणं ॥ ८ ॥ अन्यत्राप्युक्तं—सत्यं ब्रह्म तपो ब्रह्म । ब्रह्म चेंद्रियनिग्रहः ॥ सर्वभूतदया ब्रह्म । एतद्ब्राह्मणलक्षणं ॥ १ ॥ शूद्रोऽपि शीलसंपन्नो । गुणवान् ब्राह्मणो भवेत् ॥ ब्राह्मणोऽपि क्रियाहीनः । शूद्रापत्यसमो भवेत् ॥ २ ॥ तस्माद्विरतिरेव प्रमाणं, तां विनापि गुरुत्वे तार्यतारकत्वायोगात्. यतः—दुन्निवि विसयासत्ता । दुन्निवि धणधन्नसंगहसमेया ॥ सीसगुरू समदोसा । तारिज्जइ भणसु को केण ॥ १ ॥ न च वाच्यं कुटीचरादयः

संयता एव निःसंगत्वादिति, तेषामपि सम्यग्जीवानवबोधेन स्नानाद्यारंभकत्वात्. तस्मात् षट्कायसंयताः साधव एव गुरव इति स्थितं. तथा केवलिना सर्वज्ञेनैव भणितो धर्मः श्रेयान्, न त्वपरैः, न च तेऽपि सर्वज्ञा एकमूर्तित्वेऽपि विरूद्धधर्मभाषणायोगात्. तथाहि —विष्णुमते विष्णुमूलेयं सृष्टिरुच्यते, शिवमते शिवमूलेति. शुद्धिरप्येकत्र जलेनापरत्र तु भस्मना, मोक्षोऽप्येकत्रात्मन्येव लयः, अपरत्र तु नवगुणोछेदः, किंच पश्चादप्युछेद्यान् सुरान् सृजंतस्तेभ्यश्च वरं ददानाः कथं ते नाम सर्वज्ञीभवितुमर्हंति ? अत एव न तदुक्तो धर्मः प्रमाणं, अस्मदाद्युक्तवत्. तस्मात्केवलिप्रणीत एव धर्मः श्रेयानिति. सम्यगविपर्यस्ता रुचिः श्रद्धानात्मिका सम्यक्त्वमुच्यते, चकार एवकारार्थः. सम्यग्रुचिरेव सम्यक्त्वं भावीति भावः. ॥ ४ ॥ रुचेरेव वैशिष्ट्यमाह—

॥ मूलम् ॥—पन्नवगस्साभावा । मइहेउअभावओ व दुग्गिज्झे ॥ जो जिणवुत्ते भावे । सद्दहए तस्स सम्मत्तं ॥ ५ ॥ व्याख्या—प्रज्ञापकः समर्थो वक्ता, तस्याभावात्, तथा मतिः कर्मक्षयोपजन्यबुद्धिपाटवं, हेतुः परोक्षार्थसाधकमनुमानं, उपलक्षणत्वाद् दृष्टांतादयस्तेषा-

मत्नावतो वा दुर्ग्राह्यान् दुर्बोधान् नावान् सूक्ष्मनिगोदादीन् यः श्रद्धत्ते सत्यान्निति मन्यते, कीदृशान्? 'जिणवुत्तेति', हेतुद्वारेण विशेषणमिदं, जिनोक्तत्वात्, जिनो हि रागादिजेतृत्वान्न कदाचिदसत्यं नाषते. यतः—रागाद्वा द्वेषाद्वा। मोहाद्वा वाक्यमुच्यते ह्यनृतं ॥ यस्य तु नैते दोषा—स्तस्या नृत कारणं किं स्यात् ॥ १ ॥ तस्यैव सम्यक्त्वं, नान्यस्य, जिनोक्ततत्वैकाक्षरा श्रद्धानेऽपि मिथ्यात्वप्रसंगात्. यदार्षं—पयमक्खरंपि इक्कं। जो न रोएइ सुत्तनिद्दिठं ॥ सेसं रोअंतोवि हु। मिच्छादिठ्ठिजमालिव्व ॥ १ ॥ एवं सम्यक्त्वस्य स्वरूपमुक्त्वा तद्नेदानाह—

॥ मूलम् ॥—सद्दहणारूवमेगहं। निसग्गउवएससंनवं दुविहं ॥ उवसमिअखउवसमिअ—खाइअनेएहिं तं तिविहं ॥ ६ ॥ व्याख्या—तत्सम्यक्त्वं सामान्येन चिंत्यमानं श्रद्धानरूपं तत्वार्थरुचिलक्षणमेकधा एकप्रकारं नवति, श्रद्धानमात्रस्य वक्ष्यमाणनेदेष्वप्यव्यनिचारात्. तथा निसर्गसंनवमुपदेशसंनवं चेति द्विविधं द्विप्रकारं, तत्र गुरूपदेशानपेक्षं स्वयमेव जातिस्मरणादिना बाह्यद्वीपवर्तिनां तिरश्चामिव यज्जायते तन्निसर्गसंनवं सम्यक्त्वमुच्यते.

उक्तं चौपपातिके—से जे इमे सन्नियपंचेंदियतिरिक्खजोणिआ भवंति, जलयरा थलयरा खयरा, तेसिणं अत्थेगइयाणं, सुत्तेणं परिणामेणं, पसत्थेहिं अज्झवसाणेहिं लेसाइं विसुज्झमाणीहिं, तदावरणिज्जाणं कम्माणं खओवसमेणं ईहापोहमग्गणगवेसणं, करेमाणाणं सन्निपुव्वे जाइसरणे समुप्पज्जइ, तएणं ते समुप्पन्नजाइस्सरा सयमेव पंचाणुव्वयाइं पडिवज्जंति. बहूहिं सीलव्वयगुणवेरमणपच्चक्खाणपोसहोववासेहिं अप्पाणं भावेमाणा बहूहिं वासाइं आउअं पालंतित्ति. तथा गुर्वादेरुपदेशाद्यज्जायते तदुपदेशसंभवं, आभिगमिकमप्युच्यते, अथवा द्रव्यभावाभ्यां व्यवहारनिश्चयाभ्यां च सम्यक्त्वमागमे द्विधा प्रोक्तं. तत्र द्रव्यतः क्षायोपशमिकं शोधितमिथ्यात्वपुद्गलानामेव तत्स्वरूपत्वात्. भावतस्त्वौपशमिकं क्षायिकं वा, तयोरपौद्गलिकत्वेन केवलभावप्रधानत्वात्. तथा व्यवहारतः परतीर्थगमनलौकिकपर्वपरिहारादिरूपं, निश्चयतस्तु मोहक्षयोपशमजन्मा शुभः स्वात्मनः परिणाम एव सम्यक्त्वं. यदागमः—से य सम्मत्ते अपसत्थमोहणीयकम्माणुवेयणोवसमखयसमुत्थे परमसंवेगाइलिंगे सुहे आयपरिणामे पन्नत्ते, एतच्चात्र न दर्शितं, दिङ्मात्रस्यैव दिदर्शयिषितत्वात्. तथोपशमिकक्षायोपशमिकक्षायिक-

भेदैस्तत्सम्यक्त्वं त्रिविधं त्रिप्रकारं भवति. तत्र मिथ्यात्वमोहनीये कर्मण्युदीर्णे क्षीणे शेषस्यानुदीर्णस्यानुदयावस्थापादनमुपशमस्तेन निर्वृत्तमौपशमिकं, उपशमश्रेण्यां दर्शनसप्तके उपशांते भवति, अनादिमिथ्यादृष्टेः करणत्रयपूर्वकं वा, तत्रानादिमिथ्यादृष्टेर्यथा भवति तथोच्यते—इह हि सकलपापपादपमूलमिथ्यात्वप्रत्ययमासंसारमपरापरभवपरावृत्त्यानंतान् पुद्गलपरावर्तान् पर्यटन् प्राणी तथा भव्यत्वपरिपाकवशाद्गिरिसरिदुपलघोलनाकल्पेनानाभोगिकेनाध्यावसायविशेषरूपेण यथाप्रवृत्तकरणेन प्रभूतं कर्म निर्जरयन्नल्पं च बध्नन् संज्ञित्वमासाद्यायुर्वर्जानि कर्माणि पृथक्सागरोपमकोटाकोटिस्थितीनि विधाय तन्मध्यादपि पल्योपमासंख्येयभागे क्षपिते ग्रंथिदेशमासादयति, ग्रंथिश्च दारुग्रंथिरिव कातरैर्दुर्भेदा निबिडरागद्वेषपरिणामरूपः. उक्तं च—गंठित्ति सुदुब्भेउ । कक्कडघणरूढगूढगंठिव्व ॥ जीवस्स कम्मजणिउ । घणरागदोसपरिणामो ॥ १ ॥ अमुं च यावद्भव्या अप्यनंतशः प्राप्ता ग्रंथिभेदं तु कर्तुमशक्ता व्यावृत्य पुनः संक्लेशवशादुत्कृष्टस्थितीनि कर्माणि कुर्वंति, तेषामपूर्वकरणायोगाद् ग्रंथिभेदस्य च तत्साध्यत्वात्. यदाह—करणं अहापवत्तं । अपुव्वमनियट्टिमेव भव्वा-

णं ॥ इयरेसिं पढमं चिय । जणइ करणं तिपरिणामो ॥ १ ॥ कश्चित्पुनर्जव्योऽपार्धपुज्गलपरावर्तमध्यानीतसारः सारसाहसतया विशुद्धतराध्यवसायरूपेणाननुज्जूतपूर्वेणापूर्वकरणेन मुद्गरेणेव तं गहनमपि ग्रंथिं जित्वा ततो विशुद्धतमाध्यवसायरूपमनिवृत्तिकरणं प्राप्य तद्बलेन वेद्यमानस्य मिथ्यात्वस्य स्थितिद्वयं करोति. तद्यथा—प्रथमा स्थितिरंतर्मुहूर्तमाना, द्वितीया च किंचिदूनसागरोपमकोटाकोटिप्रमाणा, एतदंतरकरणमि युच्यते. तत्र प्रथमं मिथ्यात्वस्थितिमनिवृत्तिकरणेनैवानुभूय द्वितीयां च द्राघीयसीं स्थितिमद्याप्यप्राप्तोऽस्मिन्नंतरे प्रदेशतो विपाकतश्च मिथ्यात्वपुज्गलवेदनाज्जावाद्विशदतरतत्वार्थश्रद्धानरूपमंतर्मुहूर्तस्थितिकमौपशमिकं प्रथमं सम्यक्त्वमाप्नोति. ऊसरदेसं दड्ढिल्लयं च । विज्ञाइ वणदवो पप्प ॥ इय मिच्छस्स अणुदये । उवसमसम्मं लहइ जीवो ॥२॥ तस्मिंश्चौपशमिकसम्यक्त्वे स्थितः सत्तायां वर्तमानं मिथ्यात्वं शुद्धादिपुंजतया त्रिधा करोति. यथा कश्चिदौषधबलेन मदनकोद्रवान् शोधयति, ते च शोध्यमानाः केचिच्छुध्ध्यंति, निर्मदनीजवंतीत्यर्थः. केचिदर्धशुद्धा जवंति, केचित्पुनः सर्वथैव न शुध्ध्यंति. एवं जीवोऽप्यौपशमिकसम्यक्त्वेन तत्वार्थप्रतिपत्तिरूपं मिथ्यात्वपुंजं शोधयति.

तथा च स त्रिधा जायते; शुद्धोऽर्धशुद्धोऽशुद्धश्चेति. तत्र यदांतर्मुहूर्तमौपशमिकसम्यक्त्वेऽनुभूते शुद्धपुंज उदेति, स तं वेदयन् तदा क्षायोपशमिकसम्यग्दृष्टिरुच्यते, निर्मदनीकृतकोद्रवकल्पानां मिथ्यात्वपुद्गलानां जिनवचनरुचिं प्रत्यवारकत्वात्. यदाह—तद्यथेति प्रदीपस्य । स्वच्छाभ्रपटलैर्गृहं ॥ न करोत्यावृतिं कांचि—देवमेतद्रुचेरपि ॥ १ ॥ यस्य पुनरर्धशुद्धपुंज उदेति, तदुदये स सम्यग्मिथ्यादृष्टिरुच्यते, मिश्रतया पुंजस्य जिनधर्मप्रत्यौदासीन्यनिबंधनत्वात्. यस्य त्वशुद्धः पुंज उदेति स मिथ्यादृष्टिरेव, अशुद्धतयाऽस्य सम्यग्देवादिषु विप्रतिपत्तिहेतुत्वादिति. एतत्कार्मग्रंथिकानां मतं, सैद्धांतिकाः पुनरेवमाहुः—यदुतानादिमिथ्यादृष्टिः कोऽपि तथाविधसामग्रीसद्भावेऽपूर्वकरणेन पुंजत्रयं कृत्वा शुद्धपुंजपुद्गलान् वेदयन्नौपशमिकं सम्यक्त्वमलब्ध्वैव प्रथमत एव क्षायोपशमिकसम्यग्दृष्टिर्भवति. अन्यस्तु यथाप्रवृत्तादिकरणत्रयक्रमेणांतरकरणेनौपशमिकं सम्यक्त्वं लभते, पुंजत्रयं त्वसौ न करोत्येव. ततश्चौपशमिकसम्यक्त्वाच्च्युतोऽवश्यं मिथ्यात्वमेव गच्छति. उक्तं च कल्पभाष्ये—आलंबनमलहंती । जह सठाणं न मुंचए इलिया ॥ एवं अकयतिपुंजी । मिच्छं चिय उपशमी ए-

॥ १ ॥ तथा उदीर्णस्य मिथ्यात्वस्य विपाकोदयेन वेदितत्वात् क्षयः, अनुदीर्णस्य तूपशमो मिथ्यात्वमिश्रपुंजावाश्रित्य विष्कंभितोदयत्वं शुद्धपुंजमाश्रित्य पुनरपनीतमिथ्यात्वस्वभावत्वं ताभ्यां क्षयोपशमाभ्यां निर्वृत्तं क्षायोपशमिकं, एतच्च यथा भवति तथोक्तमेव, अस्य च जघन्यतोंतर्मुहूर्तं, उत्कृष्टतः साधिकानि षट्षष्टिसागरोपमाणि स्थितः. यदाह—दोवारे विजयाइसु । गयस्स तिन्नि अच्चुए अहव ताइं ॥ अइरेगं नरभवियं । नाणाजीवाण सवद्धं ॥ ॥ १ ॥ अस्मिंश्चानुदीर्णस्य मिथ्यात्वस्य विपाकतोऽनुभवो नास्ति, प्रदेशतोऽस्त्येव. औपशमिकं तूभयथापि नास्तीत्यनयोर्भेदः. यद्भाष्यं—वेएइ संतकम्मं । खउवसमिएसु नाणुभावं सो ॥ उवसंतकसाउ पुण । वेएइ न संतकम्मंपि ॥ १ ॥ अत्र सत्कर्म प्रदेशकर्म अनुभावं विपाकलक्षणमिति. तथा मिथ्यात्वमिश्रसम्यक्त्वरूपस्य पुंजत्रयस्य क्षयेण सर्वथा दलिकनिर्लेपताकरणेन निर्वृत्तं क्षायिकं, तच्च भवचतुष्टयांतर्मोक्षगामिन एव भवति, नान्यस्येति. इह सम्यक्त्वपुंजस्य चरमपुद्गलग्रासानुभवरूपं यद्वेदनं तद्वेदकसम्यक्त्वं, तद्वस्तुतः क्षायोपशमिकमेव. तथाऽनंतानुबंध्युदयादौपशमिकसम्यक्त्वं वमतः किंचित्तद्रसास्वादनेन यद्वेदनं

तत्सास्वादनं सम्यक्त्वं. तदपि प्रबलकषायकलुषितत्वात्परिपाताभिमुखत्वाच्च मिथ्यात्वकल्पमित्युपेक्षितं. कारकरोचकादयस्तु भेदा एष्वेवांतर्भवंतीति न पृथक्प्रोक्ताः. अथास्य सम्यक्त्वस्य सर्वगुणाधारतामाह—

॥ मूलम् ॥—जह सउणाणं साही । जलाण जलही निही हिरम्माणं ॥ गयणं ताराण तहा । गुणाण सम्मत्तमाहारो ॥ ७ ॥ व्याख्या—स्पष्टा, नवरं यथा शकुनानां पक्षिणां शाखी वृक्षः. ॥ ७ ॥ अथ मोक्षांगतया तुल्येष्वपि ज्ञानदर्शनचारित्रेषु दर्शनस्य विशेषप्राधान्यमाह—

॥ मूलम् ॥—जंति न सिद्धिमभव्वा । अहिगयसुत्ता विसुद्धचरणावि ॥ तम्हा नाणचरित्ता । दंसणरहियाण न हु फलया ॥ ८ ॥ व्याख्या—अधिगतं अर्थतः प्राप्तं सूत्रं एकादशांगरूपं यैस्तेऽधिगतसूत्राः, विशुद्धं प्रमादाकलुषितं चरणं आचारो येषां ते विशुद्धचरणाः, एवंविधा अप्यभव्याः सिद्धिं परमपदं न यांति, नवमग्रैवेयकात्परतस्तेषां गमनाभावात्. अत एवं तस्माद् ज्ञानचारित्रे दर्शनरिक्तानां सम्यक्त्वशून्यानां नभोऽल्पार्थत्वान्न फलदे, अ-

ल्पफलेद् इत्यर्थः, हुरेवकारार्थः. अयं भावः—यदि ज्ञानक्रियाभ्यां मोक्षः स्यात्तर्हि अभव्यानामपि भवेत्, न च भवति दर्शनशून्यत्वात् तदेव प्रधानं. आह परः—ननु यथा त्वयोक्तं तथा वयमपि वच्मः, यदि केवलेन सम्यक्त्वेन मोक्षः स्यात्तदाऽविरतसम्यग्दृष्टीनामपि भवेत्, न च भवति, ज्ञानक्रियाशून्यत्वात्, अतस्ते एव प्रधाने, इत्यत्रोच्यते—नैवं, सम्यक्त्वस्य स्वतंत्रत्वात्. तथाहि—ज्ञानक्रिये विनापि सम्यक्त्वं स्वात्मलाभं लभते, न तथा सम्यक्त्वहीने ज्ञानक्रिये, किंच सम्यक्त्वहीनाभ्यां व्यवहारतो ज्ञानक्रियाभ्यां प्राप्ताभ्यामप्यभव्यानां सिद्धिर्नास्त्येव, तद्रहितेऽपि सम्यक्त्वे लब्धे भव्यानामपार्धपुद्गलपरावर्तांतर्भवत्येव, तस्य प्रधानत्वं. अत्र च सम्यक्त्वप्राधान्यख्यापनाय श्रीआचारांगप्रोक्तोंधेतरकुमारद्वयदृष्टांतो दर्श्यते—

प्रौढप्रतापः स्मरतुल्यरूपः । पुरा बभूवोदयवर्मभूपः ॥ आद्यस्तनूजोऽजनि वीरसेन—स्तस्य द्वितीयः किल सूरसेनः ॥ १ ॥ ज्यायान् सुतोऽजायत दैवदोषा—दंधः स गंधर्वकलाप्रपन्नः ॥ धीमान् धनुर्वेदमधीत्य नित्य—माप द्वितीयस्तु भुवि प्रसिद्धिं ॥ २ ॥ ख्यातिं क्षि-

तौ तस्य सदापि चाप—व्यापारपारीणतयावगत्य ॥ वीरो गताक्रोऽपि हि शास्त्रकर्मा—ध्येतुं ययाचेऽनुमतिं स्वतातं ॥ ३ ॥ अवाप्ततातानुमतिः प्रधान—मतिर्धनुर्वेदविधौ क्रमोऽभूत् ॥ तथा यथा विध्यति शब्दमात्रे । श्रुतेऽपि दूरं चलमेष वेध्यं ॥ ४ ॥ कदाचिदाप्तांतरतिप्रताप—स्फुरद्भटस्तोममरातिचक्रं ॥ रुरोध तं भूपमुपेत्य वार्द्धि—कल्लोललोलोल्लसदश्ववृंदं ॥ ५ ॥ अंधोऽपि लोकोत्तरसत्वधामा । पितुर्निदेशेन स वीरसेनः ॥ गत्वा परानीकमनेकयोधान् । जघान बाणैः श्रुतशब्दवेधी ॥ ६ ॥ आबुध्य तस्यांध्यमवंध्यबुध्ध्यु—न्मेषा अशेषा अपि क्लृप्तमौनाः ॥ तं वीरसेनं जगृहुः सुखेन । द्विषः किराता इव चित्रकायं ॥ ७ ॥ स बंधुमुद्दूषयितुं तदैवो—त्तस्थे घनस्थामभुजोऽनुजन्मा ॥ तन्मारभीता रिपवोऽपि वीरं । मुक्त्वापदां बीजमिवाशु नेशुः ॥ ८ ॥ विज्ञोऽपि योद्धापि यथाक्षिहीनो—ऽद्विपद्विपदान्न हि वीरसेनः ॥ ज्ञानक्रियावानपि कर्मजालं । सम्यक्त्वहीनो न तथा भिनत्ति ॥ ए ॥ इत्यतदेव निर्युक्तिकारोऽप्याह—कुणमाणोवि य किरियं । परिचयंतोवि सयणधणन्नोए ॥ दिंतोवि डुहस्स उरं । अंधो न जिणइ पराणीयं ॥ १ ॥ कुणमाणोवि निविंत्तिं । परिच्चयंतोवि सयणधणन्नोए ॥

दिंतोवि दुहस्स उरं। मिच्छदिट्ठी न सिज्झइ उ ॥ २ ॥ तम्हा कम्माणीयं। जेउमणो दंसणम्मि पयइज्जा ॥ दंसणवंत हि सफलाणि। हुंति तवनाणचरणाइं ॥ ३ ॥ अथ सम्यक्त्वस्य सर्वलाभेष्वाधिक्यमाह—

॥ मूलम् ॥—इक्कत्तो धणकोडी। अन्नत्तो इक्कमेव सम्मत्तं ॥ आसिवसुहहेउस्स य। न तस्स ताउ पहुप्पंति ॥९॥ व्याख्या—स्पष्टा, न वरं आशिवं मोक्षमवधीकृत्य सुखहेतुतस्तस्य सम्यक्त्वस्य तास्त्वैकभविकसुखहेतवो धनकोटयो न पूर्यंते, न तुल्या भवंति, अत एव—

॥ मूलम् ॥—विलसइ रंकोवि सुरे—सरोव्व सम्मत्तनिच्छियमईउ ॥ रायावि रुलइ रंकोव्व। जेण पत्तं न सम्मत्तं ॥ १० ॥ व्याख्या—इयमपि सुबोधा, न वरं सुरेश्वरवद्विलसनं रंकवद्रुलनं च गृष्यभवापेक्षं. अथेदं सम्यक्त्वं प्राप्तं सद्यथा स्थिरीभवति तथाह—

॥ मूलम् ॥—सद्दहणसुद्धिलक्खण—लिंगगुणागारविणयजयणाणं ॥ गणपभावणभावण—दोसाणं तं परिन्नाए ॥ ११ ॥ व्याख्या—इह परिज्ञाशब्दस्य सर्वपदेषु संबंधात् श्रद्धादीनां द्वादशानां पदानां परिज्ञया तत्सम्यक्त्वं स्थिरीभवतीति गम्यते. परिज्ञा द्विधा,

ज्ञपरिज्ञा प्रत्याख्यानपरिज्ञा च, तत्र श्रद्धानशुद्धिलक्षणलिंगगुणविनययतनाप्रभावनानां ज्ञपरिज्ञया परिज्ञानं, उपलक्षणत्वादाचरणं च आकारस्थानभावनानां ज्ञपरिज्ञया परिज्ञानमेव, दोषाणां च प्रत्याख्यानपरिज्ञया परिहरणमित्येवं परिज्ञाशब्दो योज्यः. तत्र श्रद्धीयते प्रतीयते सम्यक्त्वमनेनेति श्रद्धानं चतुर्धा, तद्यथा—ज्ञातानामपि जीवादितत्वानां पुनः पुनश्चिंतनं परमार्थसंस्तवः ( १ ). सुदृष्टपरमार्थानां साध्वादीनां सेवनं ( २ ). व्यापन्नदृष्टीनां निन्हवपार्श्वस्थादीनां ( ३ ). कुदृष्टीनां शाक्यादीनां च वर्जनं चेति ( ४ ) तथा सम्यक्त्वस्य नैर्मल्यापादनं शुद्धिस्त्रिधा, जिनजिनमतवर्जं सर्वमन्यदसारमिति ध्यानं मनः शुद्धिः ( १ ). जिनवर्जदैवतादारोग्याद्यप्रार्थनं वचःशुद्धिः ( २ ). आपद्यपि देवांतरानुपासनं कायशुद्धिश्चेति. ( ३ ). तथा लक्ष्यते परिच्छिद्यते औष्ण्येनेवाग्निर्येन सम्यक्त्वं, तल्लक्षणं स्वरूपमिति यावत्पंचधा, तद्यथा—सापराधेऽपि क्रोधानुदय उपशमः ( १ ). मोक्षाभिलाषः संवेगः ( २ ) भवविरागो निर्वेदः ( ३ ). दुःखिते दयानुकंपा ( ४ ) जिनवचने प्रत्यय आस्तिक्यं चेति ( ५ ). तथा लिंग्यते चिह्न्यते धूमेनेव धूमध्वजः सम्यक्त्वं येन तल्लिंगं त्रिधा,

रागज्ञस्येव गीते जिनागमे शुश्रुषा ( १ ) तृषितस्येव जले धर्मानुष्टाने आदरः ( २ ). देव-
गुरुषु पूजाविश्रामणादिना वैयावृत्यनिश्चयश्चेति ( ३ ). तथा सम्यक्त्वात्मनो दीप्तिहेतवो
गुणाः पंच, तद्यथा—क्रियानैपुण्यं कौशल्यं ( १ ) संविग्नजनादिना संसर्गस्तीर्थसेवा ( २ )
देवगुर्वादिषु आदृतत्वं भक्तिः ( ३ ). देवादिभिरक्षोभ्यत्वं स्थिरता ( ४ ). तीर्थोन्नत्यकरणं
प्रभावना ( ५ ) चेति. तथा अपवादपदकल्पानां येषां वशेनेतरदेवादीन्नमस्यतोऽपि सम्य-
क्त्वं न हीयते, ते आकाराः षट्, तद्यथा—राज्ञो बलात्कारेण अपरं देवादिकं नमस्यतो
राजाभियोगः ( १ ). एवं गणबलसुराभियोगा अपि वाच्याः, तत्र गणो जनसमुदायः ( २ )
बलं बलवत्कृतो हठवादः ( ३ ) सुरः कुलदेवतादिः ( ४ ). वृत्तेराजीविकायाः कांतारमिव
कांतारं दुर्भिक्षादि ( ५ ). मिथ्यादृग्पित्रादिकृत उपरोधो गुरुनिग्रहश्चेति ( ६ ). तथा वि-
शेषेण नयति प्रापयति सम्यक्त्वमिति विनयः, स चार्हत्सिद्धाचार्योपाध्यायसाधुचैत्यश्रुतध-
र्मप्रवचनदर्शनानां यथार्हं भक्तिबहुमानवर्णजननीवर्णवादनाशाद्दशधा. अत्रार्हदादयः प्रती-
ताः, न वरं चैत्यं जिनप्रतिमा, धर्मश्चारित्रधर्मः, प्रवचनं संघः, दर्शनं सम्यक्त्वमेव. तथा

सम्यग्दृशामत्र महान् यत्न इति यतना षोढा, अन्यलिंगिषु तद्दैवतेषु तत्परिगृहितचैत्येषु वा वंदन १ नमस्करण २ दाना ३ नुप्रदाना ४ लाप ५ संलाप ६ वर्जनात्. तत्र वंदनं करयोजनं १, नमनं शिरसा नमनं २, दानं पात्रबुध्ध्या वितरणं ३, अनुप्रदानं पुनः पुनर्दानं ४, आलापः सप्रणयमीषद्भाषणं ५, संलापः पुनः पुनः सुखदुःखादिपृछा ६. तथा स्थीयते सम्यक्त्वेनास्मिन्निति स्थानं मानसः परिणामः, स च षोढा, तद्यथा—अस्त्यात्मा चेतनायास्तल्लिंगस्य दर्शनात् १. अस्त्यात्मा द्रव्यार्थतया नित्यः सुरनारकादिपर्यायाधारत्वात् २. अस्त्यात्मा योगकषायसाचिव्येन कर्मणां कर्ता मृच्चक्रचीवरादिसामग्र्या कुलालवत् ३, अस्त्यात्मा स्वयं कर्मणां भोक्ता परकृतभोगेऽतिप्रसंगात् ४, अस्ति कर्मणां मोक्षो रोगनिग्रहवत् ५, संति च मोक्षोपायाः सम्यग्ज्ञानादयो रोगनिग्रहे सिद्धौषधवत् ६. तथा प्रकर्षेण भाव्यते सम्यक्त्वमनयेति प्रभावना, इह तु तत्कर्तारो ज्ञेयाः, कर्तृकर्मणोः कथंचिदभेदोपचारात्, ते चाष्टौ, तद्यथा—कालोचितागमज्ञः प्रावचनिकः १, व्याख्यालब्धिमान् धर्मकथकः २, तर्कबलात्परमतोछेदको वादी ३, अष्टांगनिमित्तज्ञो नैमित्तिकः ४, मासादिक्षपकस्तपस्वी ५, न-

भोगामिन्यादिविद्यायुक्तो विद्यावान् ६, अंजनादिसिद्धिमान् सिद्धः ७, अनाहतकाव्यकृत्क-विश्चेति ८. तथा भाव्यते सम्यक्त्वमनयेति भावना षोढा, तद्यथा—धर्मद्रुमस्य मूलं १, धर्मपुरे प्रवेष्टुं द्वारं २, धर्मप्रासादस्य प्रतिष्ठानं ३, व्योमेव ज्योतिश्चक्रस्य धर्माधारः ४, धर्मदुग्धस्य भाजनं ५, धर्मधनस्य निधिः ६, सम्यक्त्वमेतदिति ध्यानं. तथा दूषयंति मलिनयंति सम्यक्त्वमिति दोषाः पंच, तद्यथा—देशतः किमयं जीवो नित्योऽनित्यो वा, सर्वतः किं जीव एवास्ति नास्ति वेति संशयकरणं शंका १, देशत एकस्मिन्नेव दर्शने, सर्वतः सर्वेष्वपि दर्शनेष्वभिलाषः कांक्षा २, देशतः सर्वतो वा क्रिया फलंप्रति संदेहो विचिकित्सा ३, एतेऽपि धर्ममेवोपदिशंती त्याद्यापरपाखंडिनां प्रशंसा ४, तेषामेव सह निवासालापलक्षणः परिचयः परपाखंडिसंस्तवश्चेति ५. एतदर्थसंग्रहः पूर्वाचार्यपठिताभ्यः 'चउसद्दहणातिलिंग' मित्यादिगाथाभ्यः प्रतिपत्तव्यः. एवं सम्यक्त्वस्य स्वरूपमुक्त्वाथ तत्प्रतिपक्षस्य मिथ्यात्वस्य दौरात्म्यमाह—

॥ मूलम् ॥—भवभमणुव्विग्गाणं ।वीसामगणमाइमं एयं ॥ मित्थत्तमोहियमणा ।लंद्ध

पि वमंति सम्मत्तं ॥१२॥ व्याख्या—मिथ्यात्वेन सम्यक्त्वविप्रतिपत्तिरूपेण मोहितं विभ्रमितं मनो येषां ते मिथ्यात्वमोहितमनसो जीवा एतत्पूर्वोपवर्णितस्वरूपं सम्यक्त्वं लब्धमपि कथंचित्प्राप्तमपि वमंति. यत्कीदृशमित्याह—भवभ्रमणोद्विग्नानां प्राणिनामादिमं प्रथमं विश्रामस्थानं, देशविरत्यादिगुणेभ्यः पूर्वं सम्यक्त्वस्यैव लाभात्. यथा ह्यपारकांतारोल्लंघनघनश्रमः पथिकः पथि किमपि विश्रामस्थानं प्राप्य संजातखेदच्छेदः सुखेन शेषं मार्गमतिक्रामति, तथा जीवोऽपि प्रभूतभवभ्रांतिविश्रांतः प्राप्तसम्यक्त्वविश्रामः क्रांतः शेषं संसारमिति. ततश्च येन व्यामोह्य जीवोऽधरितकल्पद्रुमानुभावं प्राप्तमपि सम्यक्त्वं त्याज्यते, कथं नाम तस्य मिथ्यात्वस्य विश्वसेदिति तात्पर्यार्थः. ॥ १२ ॥ मिथ्यात्वस्य व्यामोहकत्वमेव समर्थयन्नाह—

॥ मूलम् ॥—ही धुत्तिउव्व धत्तूरेउव्व । कयकम्मणोव्व मूढोव्व ॥ मिच्छत्तेणं जीवो । गणइ अहम्मंपि धम्मं व ॥ १३ ॥ व्याख्या—स्पष्टा, न वरं, मूढोऽत्र दिग्मूढो ज्ञेयः, यथा हि दिग्मूढो भ्रांत्या पूर्वामपि पश्चिमां मन्यते, तथा मिथ्यात्वेनाधर्ममपि धर्ममिति. ॥१३॥ एतदेव भावयन्नाह—

॥ मूलम् ॥ कारंति जीवहिंसं । हिंसंपि हु सग्गकारणं बिंति ॥ मित्थत्तगहग्गहिया । इमंपि सच्चंति मन्नंति ॥ १४ ॥ व्याख्या—इह केचिज्जैमनिपद्धिया जीवहिंसां छागादिवधं कारयंति, तथा तदुपदेशः—षट् शतानि नियुज्यंते । पशूनां मध्यमेऽहनि ॥ अश्वमेधस्य वचना—दूनानि पशुभिस्त्रिभिः ॥ १ ॥ तथा—यज्ञार्थं पशवः सृष्टाः । स्वयमेव स्वयंभुवा ॥ यज्ञोऽस्य भूत्यै सर्वस्य । तस्माद्यज्ञे वधोऽवधः ॥ २ करणादपि कारणाया महाधार्ष्ट्यसूचकत्वादुपन्यासः, जीवघातनमपि यदि ते दुष्कर्मतया मन्यंते, तदा न कश्चिद्दोष इत्याह, हिंसामपि स्वर्गकारणं ब्रुवते. तथा चाहुः—मधुपर्के च यज्ञे च । पैत्र्ये दैवतकर्मणि ॥ अत्रैव पशवो हिंस्या । नान्यत्रेत्यब्रवीन्मनुः ॥ १ ॥ एष्वर्थेषु पशून् हिंसन् । वेदतत्त्वार्थविद् द्विजः ॥ आत्मानं च पशूंश्चैव । गमयत्युत्तमां गतिं ॥ २ ॥ इति. नन्वेवं विरुद्धजल्पाकास्ते लोके ग्राह्यवचसो भविष्यंतीत्याह, मिथ्यात्वमेव ग्रहो भूताद्यावेशस्तेन गृहीता ग्रस्ताः श्रोतार इदमपि तेषामुन्मत्तप्रलपितं सत्यमिति मन्यंते, तत एव तेषु गुरुबुद्धिं ददति. अयमर्थः—हिंसा नरकस्य कारणं भवतीति प्रतीतं तावत्सर्वेषां, यल्लौकिका अप्याहुः—यावंति पशुरोमाणि ।

पशुगात्रेषु जारत ॥ तावद्वर्षसहस्राणि । पच्यंते पशुघातकाः ॥ १ ॥ यूपं छित्वा पशून् हत्वा । कृत्वा रुधिरकर्दमं ॥ यद्येवं गम्यते स्वर्गे । नरके केन गम्यते ॥ २ ॥ एवं सत्यपि ये दुरावेशाद्वोजाद्वा हिंसामपि स्वर्गहेतुतयोद्भावयंति, तेज्योऽपि ये महामिथ्यात्वतिमिरपूरपरिप्लुष्टविवेकदृष्टयस्तदुक्तं प्रमाणयंति ते महापापाः, अतस्तदुक्तं न प्रमाणयितव्यं, न च तन्महिमानमपि श्रुत्वा क्षुभितव्यमिति दृष्टांतद्वारेणाह—

॥ मूलम् ॥—आयणिय वणियमंब—डस्स पयडं पहावमवरेहिं ॥ नियनियमाउ न जट्ठा । समत्ते अकलुसा सुलसा ॥ १५ ॥ व्याख्या—आकर्ण्य श्रुत्वाऽपरैः स्वव्यतिरिक्तैर्वर्णितमंबडस्य परिव्राजकस्य प्रकटं सर्वजनाध्यक्षं प्रजावं सुलसा नागपत्नी निजनियमात्तीर्थांतरीयानुपास्तिरूपस्वनिश्चयान्न ज्रष्टा, अत एव सा सम्यक्त्वेऽकलुषा निष्कलंका, तत्कथा चैवं —अथ सुलसाकथा—विहारयोगतः श्रीमान् । वर्धमानो जिनेश्वरः ॥ चंपां चंपकपुष्पाजवपुः प्राप कदाचन ॥ १ ॥ स्थितः समवसरणे । पुरः सुरनृणां प्रजुः ॥ मेघगंजीरया वाचा । वितेने धर्मदेशनां ॥ २ ॥ तदानीमाययावात्त—छत्रदंडकमंडलुः ॥ परिव्राडंबडस्तत्र । नुन्नः

प्राक्सुकृतैरिव ॥ ३ ॥ सिक्तः स्वामिवचोनीरै—र्मिथ्यादृग् स प्रपन्नवान् ॥ सम्यक्त्वं पल्लवो-
ल्लासं । दवदग्ध इव द्रुमः ॥ ४ ॥ प्राप्तधर्मा ततोऽचालीत् । पुरं राजग्रहंप्रति ॥ परिव्राट् प-
त्वलात्पीत—पयाः पक्षीव पादपं ॥ ५ ॥ व्रजन्नयं जिनेनोचे । तत्र नागस्य वल्लभां ॥ सुल-
सां मन्मुखेन त्वं । पृच्छेर्धर्मकथामिति ॥ ६ ॥ अचर्च्य वीतरागत्वा—न्निशम्येति विभोर्वचः
॥ चमत्कृतमना मौलिं । धुन्वन्निति स दध्यिवान् ॥ ७ ॥ यन्नाम त्रिजगत्स्वामि—रसताग्रे
॥ रमणी रमणीया सा । म-
लसत्यहो ॥ सुलसा खलु सा योषि—ज्जातेर्यात्यवतंसतां ॥ ८ ॥ रमणी रमणीया सा । म-
न्ये कैश्चन सद्गुणैः ॥ एतदप्यवगंतव्यं । मया काले परीक्षया ॥ ए ॥ निश्चित्येत्यार्हतां शि-
क्षां । तथेति प्रतिपद्य सः ॥ पुरं राजगृहं प्राप । तस्थौ स्वस्थमना वने ॥ १० ॥ पंकेरुहा-
सनो हंस—वाहनश्चतुराननः ॥ तत्र वेदध्वनिं तन्वन् । विधातेति स पप्रथे ॥ ११ ॥ कदा-
चित् पीतवसनः । शंखचक्रगदाधरः ॥ कौस्तुभांकः श्रिया श्लिष्टः । स भेजे वैष्णवीं तनुं ॥
॥ १२ ॥ अन्यदा शूलखट्वांग—गंगाभृद्भोगिभूषणः ॥ इंदुमौलिरुमारम्य—शोभः सोऽभूद्
वृषध्वजः ॥ १३ ॥ कदापि जनयन् धर्म—देशनां जनताग्रतः ॥ जिनेशः पंचविंशोऽय—मिति

ख्यातिमधत्त सः ॥ १४ ॥ अनेनास्य प्रनावेण । बिनेदे निखिलो जनः ॥ भूरुहां हि किय-
द्धैर्यं । सरित्पूरे प्रसर्पति ॥ १५ ॥ येऽभूवन् दृढसम्यक्त्वा—स्तेऽपि तन्महिमेक्षणात् ॥ वै-
परीत्यं विपर्यस्ता—न्यस्ता इव हया ययुः ॥ १६ ॥ मुक्त्वा सौधं सन्नां रंग—नुवं राजपथं
तथा ॥ तस्यैव नेजुरन्यर्णं । नागराः सुलसां विना ॥ १७ ॥ मिथ्यात्वाब्धौ ब्रुमंतोऽपि । मो-
दंते हंत किं जमाः ॥ सुलसेत्यहसल्लोकं । तडुपास्तिपरायणं ॥ १८ ॥ विद्वान् नक्तमुखात्त-
स्या । अनागमननिश्चयं ॥ मेने मोघमिवाशेषं । स्वस्याडंबरमंबमः ॥ १९ ॥ मया व्यामोहितं
विश्वं । विश्वं न सुलसा पुनः ॥ तमसा ग्रस्यते लोको । न प्रदीपशिखा पुनः ॥ २० ॥ तथा-
मुष्या मनो रुद्धं । विपुलैरर्हतां गुणैः ॥ स्थातुमीष्टे यथा तत्र । महिमा न हि मादृशां ॥
॥ २१ ॥ सर्वज्ञो देवता यस्याः । स्थितश्चेतोनिकेतने ॥ अधुना सान्निगम्या मे ।सुलसा ती-
र्थनूरिव ॥ २२ ॥ ध्यात्वेति वेष्टितो लोकैः । सोऽचलत्सुलसांप्रति ॥ चतुर्मुखचतुःशाले ।
खेलयन् वैदिकीर्गिरः ॥ २३ ॥ तावत्कश्चित्पुरो भूत्वा । सुलसामित्यनाषत ॥ नाग्यवत्यसि न-
द्रं ते । भूयादुत्तिष्ठ भामिनि ॥ २४ ॥ उत्तनीहि ध्वजं धेहि । स्वस्तिकांस्तनु तोरणं ॥ स्तृणु

कौसुंभवासोभि—र्भवनं रचयासनं ॥ २५ ॥ सा प्रीत्योवाच दास्ये ते । जिह्वां स्वर्णमयीम-
हं ॥ वद सत्यं समायातः । श्रीवीरो गौतमोऽथ किं ॥ २६ ॥ सोऽभ्यधात् कूपमंडूकि । कस्ते
लग्नः कदाग्रहः ॥ श्रीवीरं गौतमं वापि । यत्पश्यसि पदे पदे ॥ २७ ॥ तीर्थानामपि यत्तीर्थं-
। देवानामपि दैवतं ॥ स श्रीमानंबडोऽभ्येति । भवंतीं भुवनाद्भुतः ॥ २८ ॥ हहा ममाधुना
भावि । मिथ्यादृग्मुखदर्शनं ॥ इति प्रत्युत वैलक्ष्यं । दध्यौ तद्वचसाथ सा ॥ २९ ॥ अज्ञान-
कष्टजो लब्धि—लवो नानेन जीर्यते ॥ सति प्रभावे गांभीर्यं । यद्वा जैनान् विना कुतः ॥
॥ ३० ॥ एवं तस्यां ब्रुवाणायां । गृहद्वारमुपागतः ॥ स्वज्ञापनमिवाकार्षी—द्धर्मध्वनिभिरंब-
डः ॥ ३१ ॥ सापि भद्रासनासीना। पश्यंती मुकुरे मुखं ॥ आस्तां सपर्यया नैनं । दृशापि स-
मभावयत् ॥ ३२ ॥ ऊचे च चेटीं सावज्ञं । मुक्त्वा कर्मांतरं हले ॥ अमुं विसृज यत्किंचि
—द्दत्वा किं नु विलंब्यते ॥ ३३ ॥ अंबडो व्यमृशन्मान्यो । भूत्वाहं भूभुजामपि ॥ भिक्षा-
कमात्वगणनां । प्रापितोऽस्म्यनया कथं ॥ ३४ ॥ कोऽहं मोहं न यात्येवं । स्वधर्मे वज्रिणा-
प्यसौ ॥ युक्तं गृह्णाति नामास्या । जिनस्त्रिदशपर्षदि ॥ ३५ ॥ अथ श्रावकमुद्राभृत् । सर्वं-

वयं जिणंदेहिं निद्दिठं ॥ १६ ॥ व्याख्या—सम्यक्त्वलाज्ञानंतरं गेही गृहस्थो विरतेः प्राणातिपाताद्यारंजनिवृत्तेर्गुणान् सज्ञतिप्रापकत्वादीन् जानन् द्वादश व्रतानि गृह्णीयात्. तथा चोक्तं—दसारसिंहस्स य सेणियस्स । पेढालपुत्तस्स य सच्चइस्स ॥ अणुत्तरं दंसणसंपया तया । विणा चरित्तेण हरं गइं गया ॥ १ ॥ प्रस्तुतमाह—'तथेत्यादि' तत्र तेष्वाहिंसाव्रतं जिनेंद्रैः सर्वसारत्वात्प्रथमं पूर्वं निर्दिष्टं, तत्र जीवद्रव्यस्यामूर्तत्वेन हिंसानर्हत्वात्तत्सर्वस्वभूतानां दशानां प्राणानां व्यवरोपणं हिंसोच्यते. उक्तं च—पंचेंद्रियाणि त्रिविधं बलं च । उछ्वासनिःश्वासमथान्यदायुः ॥ प्राणा दशैते भगवद्भिरुक्ता—स्तेषां वियोगीकरणं तु हिंसा ॥ ॥ १ ॥ तद्विपरीता त्वाहिंसा, तद्रूपं व्रतमाहिंसाव्रतं, इदं च सर्वव्रतानां धुरि पठ्यते, जीवदयामूलत्वाज्जैनधर्मस्य. यदाहुः—इक्कं चिय इत्थ वयं । निद्दिठं जिणवरेहिं सवेहिं ॥ पाणाइवायविरमणं । अवसेसा तस्स रक्खठ्ठा ॥१॥ अथ गृहस्थोचितमाहिंसाविज्ञागमाह—

॥ मूलम् ॥—तसजंतु संकप्पिय । निम्मंतू नवि हणेइ निरवक्खो ॥ वच्चसि से जयणा । न तं विणा जं वयस्स फलं ॥ १७ ॥ व्याख्या—गेहीत्यत्रापि संबंध्यते, त्रसजंतून् द्वींद्रि-

यादीन् हंति, एतेन स्थावरवधं नासौ नियमयतीत्युक्तं. तद्वधेनैव पचनपाचनाद्यशेषकर्मप्रवृत्तेः, अत्रापि विशेषमाह—संकल्प्य त्रसमेतं मारयामीत्यध्यवसायः, अनेन कृषिशकटाद्यारंभेषु प्रवृत्तो नायं त्रसवधमपि प्रत्याख्याति. यदाहुः श्रीभद्रबाहुपादाः—थूलगं पाणाइवायं समणोवासओ पच्चक्खाइ, से य पाणाइवाये डुविहे पन्नत्ते, संकप्पओ य आरंभओ य, तत्थ समणोवासओ संकप्पओ जावज्जीवाए पच्चक्खाइ, नो आरंभओ. अत्राप्यपवादमाह—निर्मंतून् निरपराधान्, अनेन सापराधस्य चौराभिमरादेः संकल्प्यापि घातनं न वर्जयति, नहि प्रतिपत्तृबाहुल्यादेतावताद्यापि निर्वाह इत्याह—निरपेक्षं, अपेक्षा आशंका, तदाधारत्वात्पुरुषोऽप्यपेक्षा ततोऽन्यत्र शंकास्थानं मुक्त्वेत्यर्थः. अनेन श्रीकरणाद्यधिकारी प्रतिपन्नप्रथमव्रतोऽपि मर्मज्ञत्वाच्छंकास्थानस्य कस्यचिद्राज्ञो वा रिपुपुत्रस्यानपराध्यतोऽपि वधं न निषेधयतीत्युक्तं. इत्थं हि श्रावकाणां सपादविशोपकमात्रा दया भवतीति तत्त्वं. साहूवीसं सड्ढे। तससंकप्पावराहसाविक्खे ॥ अद्धद्ध सवाउ । विसोयउ पाणअइवाए ॥ १ ॥ ननु नियमितस्थानेभ्योऽन्यत्रासौ यथेष्टं जीववधं विधत्तामित्याह—' वच्चासेत्ति ' उक्तेभ्यस्त्रसादिभ्यो

मुत्सृज्य मंबरं ॥ अंबडः श्राविके वंदे । नवतीमित्यनाषत ॥ ३६ ॥ तत् श्रुत्वा जातरोमांचा । मुमोचासनमुत्सुका ॥ सुलसा गर्जिते मेघे । कुलायमिव बर्हिणी ॥ ३७ ॥ सा धर्मबंधो वंदेऽह—मपि त्वामिति नाषिणी ॥ इमं निमंत्रयामासा—सनेन रचितांजलिः ॥ ३८ ॥ निविष्टः सोऽप्यनाषिष्ट । सुलसां परमार्हति ॥ श्रीवीरो मन्मुखेन त्वां । शुद्धिं धर्मस्य पृछति ॥ ३९ ॥ प्रनोरहमपि प्राप्त—सम्यक्त्वस्त्वां परीक्षितुं ॥ इहागत्यैंद्रजालीव । तं प्रपंचमकरयं ॥ ४० ॥ मम प्रनावपाथोधि–पूरे विश्वविसर्पिणि ॥ अंतर्द्वीपायितं सौम्य–स्वनावोन्नतया त्वया ॥ ४१ ॥ न हि त्वं महिलामात्रं । क्षमस्व मम विप्लवं ॥ प्रपत्स्येऽहं पुनर्वीर–चरणौ शरणं सदा ॥ ४२ ॥ अथ धर्मानुरागेण । गाढं गौरवितस्तया ॥ अंबडो निविडोल्लासः । प्रचचाल यथारुचि ॥ ४३ ॥ तस्य सप्तशतान्यासन् । शिष्या अक्षामबुद्धयः ॥ तदा वीरप्रभोः पार्श्वे । संगृहीतगृहिव्रताः ॥ ४४ ॥ ते कांपील्यपुराद्यांतः । पुरं पुरिमतालकं ॥ तृषाव्याकुलिताः प्रापुः । पथि गंगां महानदीं ॥ ४५ ॥ ते नादेयमनादेयं । दायकानावतो जलं ॥ सर्वेऽप्यनशनं नेजु—रहो दुष्करकारिता ॥ ४६ ॥ ध्यायंतः श्रीमहावीरं । नमंतो गुरु-

मंबकः ॥ प्रययुः पंचमं स्वर्गं । ते निरर्गलन्नावनाः ॥४७॥ प्रत्याख्यानस्थूलहिंसो । ननद्यादिषु केलिकृत् ॥ न नाट्यविकथामुख्या—नर्थदंरुविरुंबितः ॥ ४८ ॥ नालांबुदारुमृत्पात्र—वर्जपात्रपरिग्रहः ॥ न गंगामृतिकां मुक्त्वा । विहितान्यविलेपनः ॥ ४९ ॥ न कंदमूलफलजु—ग्नाधाकर्मादिसेवकः ॥ अंगुलियकमात्रालं—करणो धातुरक्तसिक् ॥ ५० ॥ वहत्प्रसन्नं केनापि । दत्तं पूतं च वाससा ॥ पातुं दर्व्यादि शोध्धुं वा । गृह्णन्नर्धाढकं जलं ॥ ५१ ॥ तादृगेवाढकमितं । गृह्णन् स्नानोचितं जलं ॥ व्यलंघताखिलं जन्म । धर्मैकमतिरंबरुः ॥ ५२ ॥ पंचन्निः कुलकं ॥ चक्रे संलेखनां सोंते ॥ मासमासन्नसन्मतिः ॥ ततो गतो ब्रह्मलोकं । सिद्धिं यास्यति च क्रमात् ॥ ५३ ॥ सुलसाऽनलसा धर्मे । बध्ध्वार्हत्कर्मनिर्मलं ॥ अलंचकार पर्यंते । साधितानशना दिवं ॥ ५४ ॥ च्युत्वा ततः सा नरतेऽत्र सिद्धिं । नूत्वा जिनः पंचदशः प्रयाता ॥ अहो न सम्यक्त्वमिदं त्रिलोकै—श्वर्यप्रदानेऽपि हि याति दैन्यं ॥ ५५ ॥ इति सम्यक्त्वाधिकारे सुलसादृष्टांतः ॥ गतं सम्यक्त्वद्वारं, अथ संबंधगर्भं व्रतद्वारमाह—

॥ मूलम् ॥—जाणंतो विरइगुणे । गेही गिह्णेज बारसवयाइं ॥ तत्थ पढमं अहिंसा—

वयं जिणंदेहिं निद्दिठं ॥ १६ ॥ व्याख्या—सम्यक्त्वलाभानंतरं गेही गृहस्थो विरतेः प्राणातिपाताद्यारंभनिवृत्तेर्गुणान् सद्गतिप्रापकत्वादीन् जानन् द्वादश व्रतानि गृह्णीयात्. तथा चोक्तं—दसारसिंहस्स य सेणियस्स । पेढालपुत्तस्स य सच्चइस्स ॥ अणुत्तरं दंसणसंपया तया । विणा चरित्तेण हरं गइं गया ॥ १ ॥ प्रस्तुतमाह—' तथेत्यादि ' तत्र तेष्वहिंसाव्रतं जिनेंद्रैः सर्वसारत्वात्प्रथमं पूर्वं निर्दिष्टं, तत्र जीवद्रव्यस्यामूर्तत्वेन हिंसानर्हत्वात्तत्सर्वस्वभूतानां दशानां प्राणानां व्यवरोपणं हिंसोच्यते. उक्तं च—पंचेंद्रियाणि त्रिविधं बलं च । उछ्वासनिःश्वासमथान्यदायुः ॥ प्राणा दशैते भगवद्भिरुक्ता—स्तेषां वियोगीकरणं तु हिंसा ॥ ॥ १ ॥ तद्विपरीता त्वहिंसा, तद्रूपं व्रतमहिंसाव्रतं, इदं च सर्वव्रतानां धुरि पठ्यते, जीवदयामूलत्वाज्जैनधर्मस्य. यदाहुः—इक्कं चिय इत्थ वयं । निद्दिठं जिणवरेहिं सव्वेहिं ॥ पाणाइवायविरमणं । अवसेसा तस्स रक्कठा ॥२॥ अथ गृहस्थोचितमहिंसाविभागमाह—

॥ मूलम् ॥—तसजंतु संकप्पिय । निम्मंतू नवि हणेइ निरवक्को ॥ वच्चसि से जयणा । न तं विणा जं वयस्स फलं ॥ १७ ॥ व्याख्या—गेहीत्यत्रापि संबंध्यते, त्रसजंतून् द्वींद्रि-

यादीन् हंति, एतेन स्थावरवधं नासौ नियमयतीत्युक्तं. तद्धधेनैव पचनपाचनाद्यशेषकर्मप्रवृत्तेः, अत्रापि विशेषमाह—संकल्प्य त्रसमेतं मारयामीत्यध्यवसायः, अनेन कृषिशकटाद्यारंभेषु प्रवृत्तो नायं त्रसवधमपि प्रत्याख्याति. यदाहुः श्रीभद्रबाहुपादाः—थूलगं पाणाइवायं समणोवासउ पच्चक्खाइ, से य पाणाइवाये डुविहे पन्नत्ते, संकप्पउ य आरंभउ य, तत्थ समणोवासउ संकप्पउ जावज्जीवाए पच्चक्खाइ, नो आरंभउ. अत्राप्यपवादमाह—निर्मंतून् निरपराधान्, अनेन सापराधस्य चौराभिमरादेः संकल्प्यापि घातनं न वर्जयति, नहि प्रतिपत्तृबाहुल्यादेतावताद्यापि निर्वाह इत्याह—निरपेक्षं, अपेक्षा आशंका, तदाधारत्वात्पुरुषोऽप्यपेक्षा ततोऽन्यत्र शंकास्थानं मुक्त्वेत्यर्थः. अनेन श्रीकरणाद्यधिकारी प्रतिपन्नप्रथमव्रतोऽपि मर्मज्ञत्वाच्छंकास्थानस्य कस्यचिद्राज्ञो वा रिपुपुत्रस्यानपराध्यतोऽपि वधं न निषेधयतीत्युक्तं. इत्थं हि श्रावकाणां सपादविशोपकमात्रा दया भवतीति तत्त्वं. साहूवीसं सड्ढे। तससंकप्पावराहसाविक्खे ॥ अद्धद्ध सवाउ। विसोयउ पाणअइवाए ॥ १ ॥ ननु नियमितस्थानेभ्योऽन्यत्रासौ यथेष्टं जीववधं विधत्तामित्याह—'वच्चासेत्ति' उक्तेभ्यस्त्रसादिभ्यो

व्यत्यासे विपर्यासे स्थावरादिके से तस्य गेहिनो यतना जवति. अयं जावः—मया हि संकल्प्य निरपराधत्रसवध एव प्रत्याख्यातो नान्यत्किंचिदिति विचिंत्य न हि गृहिणा पृथ्व्यादीनामारंजतस्त्रसादीनां चोपमर्दो निःशंकतया कार्यः, किंतु यदि निर्वहति तदा स्थावरादीनपि न हंति, अनिर्वाहे तु धन्याः खल्वमी सर्वारंजमुक्ताः साधवो महारंजस्य मम क किल मोक्ष इति सदयहृदयतया सशंक एव तत्र प्रवर्तते. उक्तं च—वज्जइ तिव्वारंजं । कुणइ अकामो अनिव्वहंतो य ॥ थुणइ निरारंजजणं । दयालुउ सव्वजीवेसुत्ति ॥ १ ॥ नन्वनियमिते वस्तुनि केयं यतनेत्याह—यत्तां यतनां विना व्रतस्य प्राणातिपातविरमणस्य फलमेव न जवति, व्रतं हि पुण्यार्थमाद्रियते, न केवलं स्वोच्चरितनिर्वाहाय, पुण्यं च मनःपरिणामेन, स च यदि स्थावरादिष्वपि निर्दयस्तदा सर्वत्रापि तादृश एव जीवसमान्यात्, ततोऽनियमितेष्वपि स्थावरादिषु यतनां कुर्यादिति गाथार्थः. ॥ १७ ॥ एतदेवाह—

॥ मूलम् ॥—जं जं घरवावारं । कुणइ गिही तत्थ तत्थ आरंजो ॥ आरंजेवि हु जयणं । तरतमजोएण चिंतेइ ॥ १८ ॥ व्याख्या—उक्तार्था च, नवरं 'तरतमयोगेति' अ-

ल्पारंभसाध्ये कार्ये न महारंभं प्रयुक्ते, बहुसावद्यं वा कार्यमुत्सृज्याल्पसावद्यमेव कुरुते इति
तरतमयोगः. ॥ १८ ॥ अथाहिंसायाः शुभायतित्वमन्वयव्यतिरेकाभ्यामाह—

॥ मूलम् ॥—जो परजीवे रक्खइ । रक्खइ परमत्थउ स अप्पाणं ॥ जो परजीवे हिंसइ
। सो हिंसइ अप्पणा अप्पं ॥ १९ ॥ व्याख्या—इह स्वगतेनैव शुभाशुभकर्मणा सुखदुः-
खे जीवानामुपढौकेते इति प्रतीतं. ततश्च यः परजीवान् रक्षति परमार्थतः स आत्मानमेव
रक्षति सर्वापायेभ्य इति गम्यं, पुण्यफलत्वाज्जीवरक्षायाः पुण्यस्य च सर्वापायवारकत्वात्.
यः पुनः परजीवान् हिनस्ति स हिनस्त्यात्मनात्मानं पापफलत्वाज्जीवहिंसायाः पापस्य च
सर्वापायकारणत्वादिति. ॥ १९ ॥ अथ जीववधं कृत्वापि दानादिना तत्पापशांतिर्भवतीति
ये प्राहुस्तान्प्रत्याह—

॥ मूलम् ॥—जीवस्स नत्थि मुल्लं । बहुएहिंवि कणयभूमिरयणेहिं ॥ ता कह जीववहा-
उ । बुटइ कणयाइदाणेण ॥ २० ॥ व्याख्या—सुगमा. यदार्षं—

॥ मूलम् ॥—जो देइ कणयकोमी । धन्नाणं देइ अहव रासीउ ॥ इक्कं वहेइ जीवं । न

बुट्टइ कणयाऽइदाणेणं ॥ २० ॥ व्याख्या—सुगमा. परेऽप्याहुः—कपिलानां सहस्रं तु । यो द्विजेभ्यः प्रयच्छति ॥ एकस्य जीवितं दद्या—न्न तत्तुल्यं युधिष्टिर ॥ १ ॥ एकतः क्रतवः सर्वे । समाप्तवरदक्षिणाः ॥ एकतो भयभीतस्य । प्राणिनः प्राणरक्षणं ॥ २ ॥ सप्तद्वीपं सरत्नं तु । दद्यान्मेरुं सकांचनं ॥ यस्य जीवदया नास्ति । सर्वमेतन्निरर्थकं ॥ ३ ॥ न गोप्रदानं न महीप्रदानं । नान्नप्रदानं हि तथा प्रधानं ॥ यथा वदंतीह बुधाः प्रधानं । सर्वेषु दानेष्वभयप्रदानं ॥ ४ ॥ ननु ये बहून् जीवान् घ्नंति तेषां का वार्तेत्याह—

॥ मूलम् ॥—इक्कस्स कए नियजी–वियस्स मारंति जीवकोमीउ ॥ तं जीवियं विणस्सइ । ते उ कया वेरिणो सव्वे ॥ २१ ॥ व्याख्या–इहैके धीवरलुब्धकादय एकस्य निजजीवितस्य कृते मारयंति जीवानां मृगमत्स्यादीनां कोटीः, न हि तथापि तेषां काचित्कार्यसिद्धिः. यतो यस्यार्थे इहन्मात्रं पापं कृतं तज्जीवितं तावद्विनश्यत्यायुषः सांतत्वात्. ते पुनर्मारिता जीवाः स्वस्वात्मनो वैरिणः कृता भवंति. यो हि यं व्यापादयति भवति स तस्य वैरी, अनेन हस्तयोरपि दग्धो न पृथुकस्यापि घ्रात इति न्यायस्तेषामापतितः. ननु जीवहिंसां विना कथं

बलपरीक्षा स्यात्? दृश्यंते हि केचिदेकेनापि प्रहारेण महाकायमपि महिषं द्विखंडयंतः सजातीयेषु बलिष्ठताख्यातिं लभमाना इत्याह—

॥ मूलम् ॥—रोगाउ सावउ वा । सन्नावउ वावि अबलया सेया ॥ जं पुण परहणण- ट्ठा । तं बलियत्तंपि मा होउ ॥ २२ ॥ व्याख्या—रोगाद्राजयक्ष्मादेः, शापात्कुपितदेवादिद- त्तात्स्वभावतो वा वीर्यांतरायकर्मोदयात्, अपिशब्दस्य व्यवहितसंबंधत्वादबलतापि श्रेयसी श्लाघ्येत्यर्थः, पुण्यानुबंधित्वात्. यत्पुनः परहननार्थं तद्बलित्वमपि मा भवतु पापानुबंधि- त्वात्. ॥ २२ ॥ अथ हिंसायाः पापानुबंधकत्वं मन्यमाना ये वेदविहिता हिंसा धर्मायेत्युद्- घोषयंति तान्प्रत्याह—

॥ मूलम् ॥—जे हिंसं कुणमाणा । अन्नाणा अहिलसंति धम्मफलं ॥ गयणगयकमल- परिमल—माइग्घेउं मणो तेसिं ॥ २३ ॥ व्याख्या—इह ये अज्ञाना हिंसां छागादीनां वधं कुर्वंतो धर्मस्य फलं सुरनरैश्वर्यादिकमभिलषन्ति तेषां गगनगतकमलपरिमलं व्योमारविंद- रजस्यमाघ्रातुं मनो वर्तते, शून्ये हि गगने तावत्कमलानि न प्ररोहंति, कुतस्तत्परिमलः?

एवं हिंसायां धर्म एव नास्ति, कुतस्तत्फलं स्वर्गाद्यमिति. उक्तं च—इति स्मृत्यनुसारेण। पितॄणां तर्पणाय या ॥ मूढैर्विधीयते हिंसा । सापि दुर्गतिहेतवे ॥ १ ॥ अहिंसालक्षणो धर्मो । न धर्मप्राणिनां वधः ॥ तस्माद्धर्मार्थिना वत्स । कर्तव्या प्राणिनां दया ॥ २ ॥ ध्रुवं प्राणिवधो यज्ञे । नास्ति यज्ञस्त्वहिंसकः ॥ तस्मात्सत्वानहिंसैव । सदा यज्ञो युधिष्ठिर ॥ ३ ॥ इंद्रियाणि पशून् कृत्वा । वेदीं कृत्वा तपोमयीं ॥ अहिंसामाहूतिं कृत्वा । आत्मयज्ञं यजाम्यहं ॥ ४ ॥ अथान्वयव्यतिरेकाभ्यामहिंसायाः प्रवृत्तिनिमित्तं फलमाह—

॥ मूलम् ॥—सुहसोहग्गबलाउ य । धीरिमकंती फलं अहिंसाए ॥ रोगसोगविजगा—बलत्तजिई उ हिंसाए ॥ २४ ॥ व्याख्या—सुखं चेतोनिवृतिः शुभं वा श्रेयः, सौभाग्यं सर्वजनप्रियता, बलं शारीरिकं स्थाम, आयुरिंद्रियपाटवेन संपूर्णं जीवितं, धीरिमा निर्भयत्वं, कांतिर्दीप्तिमत्त्वं, उपलक्षणाद्विजववैजवस्वर्गादिकमपि यद्यद्रमणीयं तत्तत्सर्वमहिंसाया जीवरक्षायाः फलं, तथा रोगाः कासश्वासाद्याः, शोक इष्टवियोगानिष्टसंयोगजन्मा, वियोग इष्टविरहः, अबलत्वं क्लीवता, भीतिः सप्तधा भयं, तु शब्दान्नरकनिपाताद्यानिष्टं सर्वं

हिंसायाः फलं विज्ञेयम्. ॥ २४ ॥ अथात्र व्रते दृष्टांतमाह—

॥ मूलम् ॥—परजीवरक्खणाउ । सुकयं कणयं व गहिय जियजीवं ॥ धूलिव्व जेण चत्तं । तं मेयज्जं मुणिं थुणिमो ॥ २५ ॥ व्याख्या—परजीवस्य क्रौंचात्मनो रक्षणाद्धेतुभूतात्सुकृतं पुण्यं, तदेव सकलसंपन्मूलत्वात्कनकमिव गृहीत्वा येन भगवता निजजीवितसारत्वाध्धूलिवल्लीलयैव त्यक्तं तं सारसंग्रहपरं परमकारुणिकं मेतार्यं मुनिं स्तुमः. तत्कथा चैवं—

कुशलानां द्विधा कोशः । कोशलेत्यस्ति सत्पुरी—आरामाभालतिलका—कारप्राकारधारिणी ॥ १ ॥ तत्र राजा कृतद्वेषि—द्रावश्चंद्रावतंसकः ॥ कल्केशः कोऽपि यद्राज्ये । नाभूद्धातुर्विदो विना ॥ २ ॥ स्थितः स्थिरगुणे धर्मे । यत्सामायिकसायकः ॥ अमुक्तोऽप्यरिषड्वर्गं । जघान किल कौतुकं ॥ ३ ॥ आस्तां भूयोऽवरोधस्या—स्य मुख्यवल्लभे उभे ॥ तयोः सुदर्शना चैका । द्वितीया प्रियदर्शना ॥ ४ ॥ आद्या सागरचंद्रेण । मुनिचंद्रेण पुत्रिणी ॥ बभूव बालचंद्रेण । गुणचंद्रेण चापरा ॥ ५ ॥ तेषु सागरचंद्रेण । यौवराज्यमभुज्यत ॥ राज्यं च मुनिचंद्रेणो—ज्जयिन्या जनकार्पितं ॥ ६ ॥ तस्य राज्ञोऽभवत्सर्वं । कुटुंबं धर्मनिर्मलं ॥ न हि चं-

द्रुमयूखेषु । मयूखः कोऽपि कश्मलः ॥ ७ ॥ सभां विसृज्य संध्याया—मात्तसामायिकोऽन्यदा ॥ कायोत्सर्गं विधायेति । जग्राहाभिग्रहं नृपः ॥८॥ स्थितोऽत्रकगृहे याव—देष दीपो ज्वलिष्यति ॥ तावन्न पारयिष्यामि । कायोत्सर्गं कथंचन ॥ ९ ॥ सन्निधाय तदासीना । दासी नाथेऽनुरागिणी ॥ आद्ययामात्यये दीपे । निर्वांते स्नेहमक्षिपत् ॥ १० ॥ एवं यामे द्वितीयेऽपि । तृतीयेऽपि गते सति ॥ दीपं सा दीपयामास । स्वध्यानं भूधनः पुनः ॥११॥ दीपस्यास्य गृहस्थस्य । ध्यानस्यास्य मनोयुषः ॥ द्वयोरपि द्युतिस्पर्धा—वतोर्वाद इवालगत् ।१२। क्षीयमाणगुणोऽस्नेह्य—च्छायः पात्रे मलप्रदः ॥ क्व दीपः क्व च भूमीप—ध्यानं सर्वांगसुंदरं ॥१३॥ अत एवोदिते विश्व—कर्मसाक्षिणि भास्वति ॥ जगाम दीपको म्लानिं । ध्यानं त्वस्य नृशायत ॥ ॥ १४ ॥ मृदुर्भूपश्चतुर्याम—कायोत्सर्गोत्थपीडया ॥ निर्व्रीडया रमण्येवा—लिलिंगे दिवसोदये ॥ १५ ॥ सात्त्विकस्तात्त्विकं ध्यानं । स दधानो विपद्यपि ॥ विपद्य वैबुधं धाम । जगामाराधनाबलात् ॥ १६ ॥ सामंतसचिवैः सर्वै—र्योग्यत्वादथ सागरः ॥ राज्यार्थं प्रार्थितः प्रोचे । भवोद्विग्नो विमातरं ॥ १७ ॥ बंधुर्मे बालचंद्रोऽस्तु । राज्यव्यापारपारगः ॥ मातः पात-

कपाथोधौ । मज्जंतं रक्ष रक्ष मां ॥ १८ ॥ सापि क्षुद्राशयावादी—त्किमेतद्वत्स ज्ञाषसे ॥
त्वयैव यूना विदुषा ॥ राज्यश्री रंतुमर्हति ॥ १९ ॥ नालं स्याद्बालचंद्रोऽयं । बालः साम्रा-
ज्यपालने ॥ न हि स्नुहितरोर्दारुः । सौधद्वारं प्रतिष्ठति ॥ २० ॥ राज्ये बलेन सामंतैः । सा-
गरः स्थापितस्ततः ॥ आस्तामाबध्य दीक्षायां । सोऽपि साम्राज्यमन्वशात् ॥ २१ ॥ अन्यदा
द्विरदारूढं । राज्यश्रीसमलंकृतं ॥ तं यांतं वीक्ष्य विद्वेषा—द्ध्यमृशत्प्रियदर्शना ॥ २२ ॥
महिलानामहो मौढ्यं । यत्तदानीमुपस्थिता ॥ वैरिण्येव मयावारि । स्वसुते प्रच्युतादृता ॥
॥ २३ ॥ अधुना ह्येष ज्ञूपोऽस्ति । ज्ञवितास्य सुतस्ततः ॥ नावकाशं प्रसूतिर्मे । क्वापि लब्धा
॥ २४ ॥ राजमातेति सर्वत्र । गीयते सा सुदर्शना ॥ पदे पदे पराज्ञूतीः । सह-
हतास्मि हा ॥ २४ ॥ राजमातेति सर्वत्र । गीयते सा सुदर्शना ॥ पदे पदे पराज्ञूतीः । सह-
ते प्रियदर्शना ॥ २५ ॥ तदेनं मारयित्वापि । दद्यां राज्यं स्वसूनवे ॥ इति सा ज्ञूपतेश्छिद्रा-
ण्यपश्यन्मलिनाशया ॥ २६ ॥ मातुः पार्श्वात्प्रातराशि—मानयस्वेति शिक्षया ॥ राजा वनं
गतोऽन्येद्युः । प्रैषीच्चेटीं पुरांतरे ॥२७॥ मास्म वेलाविलंबोऽभू—त्क्षुधितस्य सुतस्य मे ॥ इति
दास्या ददावेकं । माता मोदकमुत्सुका ॥ २८ ॥ सत्वरं विनिवृत्तां तां । ददर्श प्रियदर्शना ॥

किमेतदित्युदित्वा त–त्कराज्जग्राह मोदकं ॥ २९ ॥ अहो वृत्तत्वसौरभ्ये । अस्येत्यमृतभा-
षिणी ॥ विषाक्ताभ्यां कराभ्यां सा । तं पस्पर्श मुहुर्मुहुः ॥ ३० ॥ हले भूपं विनान्यस्मै ।
मादा मोदकमीदृशं ॥ सेत्युक्त्वा प्रेषयामास । दासीं प्रत्यर्प्य मोदकं ॥ ३१ ॥ दासिकोद्या-
नलीनस्य । भूपस्य मुमुचे करे ॥ बुभुक्षादुर्गतांगाय । गोलकाकृतिमोदकं ॥ ३२ ॥ जनन्या
प्रहितस्ताव–देक एवैष मोदकः ॥ वैमात्रेयौ क्षुधाक्रांतौ । द्वाविमौ पुरतः पुनः ॥ ३३ ॥
अनयोरेव देयोऽसौ । स्यादेवं गुरुतोचिती ॥ ध्यात्वेति तं द्विधा चक्रे । नृपः क्षुरिकया रयात्
॥ ३४ ॥ युग्मं ॥ भूपात्तखंडमेकैक–मर्धचंद्रमिव क्षुधः ॥ अवाप्य तावुभौ स्वादु–स्वादं
स्वादमचर्वतां ॥ ३५ ॥ क्षणेन तौ विषावेग–मूर्छितौ लुठितौ भुवि ॥ वीक्ष्याकुलेन भूभर्त्रा–
हूयंत भिषजां वराः ॥ ३६ ॥ तेऽपि ज्ञात्वा विषावेशं । तथा चक्रुः प्रतिक्रियां ॥ यथा स्वस्थौ
क्षणाज्जातौ । तौ निपीतसुधाविव ॥ ३७ ॥ व्याधेरिव भिषक्तस्य । विषस्यादिं विलोकयन् ॥
जज्ञे चेटीमुखाद्भूप–स्तद्विमातुर्विजृंभितं ॥ ३८ ॥ नूनमेषा स्वपुत्रस्य । राज्यार्थं मां जिघां-
सति ॥ निश्चित्येति समाहूय । साक्षेपं तां नृपोऽभ्यधात् ॥ ३९ ॥ आः वैरिणि तदा राज्यं ।

दीयमानं न चाग्रहीः ॥ अधुना तत्कृते दत्वा । विषं मां हंतुमिच्छसि ॥ ४० ॥ तवास्ति यदि राज्येहा । तत्किं मे न न्यवेदयः ॥ नाहं गृध्ध्या स्थितो राज्ये । किंतु लोकोपरोधतः ॥ ॥ ४१ ॥ त्वं मुग्धे यदिदं राज्यं । भोग्यत्वादमृतीयसि ॥ तदेव मोहहेतुत्वा—न्मम चेतो विषीयते ॥ ४२ ॥ अद्य चेत्साधनाहीनो—ऽमरिष्यं विषमूर्छितः ॥ व्यपतिष्यं कुलीनोऽपि । तदा दुर्गतिसागरे ॥ ४३ ॥ स एवं तामधिक्षिप्य । क्षमयित्वाखिलं जनं ॥ प्रदाय बालचंद्राय । राज्यं भेजे स्वयं व्रतं ॥ ४४ ॥ साम्राज्यादधिकं तोषं । दधानो गुरुसन्निधौ ॥ अधीयानः श्रुतान्यासी—द्गीतार्थः स क्रमान्मुनिः ॥ ४५ ॥ आयातावन्यदावंत्याः । साधू सोऽपृच्छदुत्सुकः ॥ पुरी सा कीदृशी कीदृ—क्तत्र राजा प्रजाथवा ॥ ४६ ॥ तौ प्रोचतुरवंती पूः । रम्या लोकश्च भक्तिभाक् ॥ परं पीडयतः साधून् । पुत्रौ राजपुरोधसोः ॥ ४७ ॥ सरसीव स्फुरन्नक्रा । वनीव व्याघ्रसंकुला ॥ सबाधापि ततोऽवंती । मुनिभिर्नाभिगम्यते ॥ ४८ ॥ स्वभ्रातृव्यस्य विज्ञाय । तमन्यायमृषीश्वरः ॥ सपुरोहितपुत्रं तं । शासितुं प्रचचाल सः ॥ ॥ ४९ ॥ गत्वावंतीं स्थितस्तस्याः । स बाह्योपवने मुनिः ॥ न्यगद्यतातिथेयार्हं । इति प्राक्स्थ-

तसाधुभिः ॥ ५० ॥ तवानेष्यामहे भक्तं । वयं पात्रकमर्पय ॥ ततो बभाष तानेष । मार्ग-
श्रममचिंतयन् ॥ ५१ ॥ न मे भक्ताद्यमानेय—महमस्म्यात्मलब्धिकः ॥ परं दर्शयतात्को-
ऽपि । मुनींद्रः स्थापनागृहान् ॥ ५२ ॥ तेष्वेकः क्षुल्लकस्तस्यो—पदर्श्य स्थापनागृहान् ॥ उ-
वाचेदं नृपस्योकः । श्रेयोऽर्थिन्नत्र मागमः ॥ ५३ ॥ कामवद्वारितो वाम—स्तत्रैव स मुनिर्य-
यौ ॥ तारस्वरं बभाषे च । धर्मलाभशिषं विभीः ॥ ५४ ॥ तां श्रुत्वा भूपतेर्बध्वः । प्रोचुर्मौनं
मुने कुरु ॥ तौ यतिद्वेषिणौ मास्म । शृणुतां तव शब्दितं ॥ ५५ ॥ सोऽपि तद्द्वंद्वमाह्वातु-
मिव बाढमभाषत ॥ श्राविका वक्थ किं यूयं । बधिरोऽस्मि शृणोमि न ॥ ५६ ॥ सपुरोधाः
पुरोधावं—स्तावदागान्नृपांगजः ॥ पिशाचकीव कुर्वाणो । विक्रियां मुनिदर्शनात् ॥ ५७ ॥
यथा यथा मृदूक्त्या तं । शमयंतिस्म मातरः ॥ तथा तथाज्यसंसिक्त—वह्निसाम्यमधत्त सः
॥ ५८ ॥ ताभ्यां कर्णद्वये धृत्वा । कुरु नृत्यमितीरितः ॥ मुनिः प्रोवाच नृत्यं स्या—न्न हि
वाद्यं विना क्वचित् ॥ ५९ ॥ ततः पटहमंभोद—नादं वादयतोस्तयोः ॥ मुनिः परिकरं ब-
द्ध्वा—नृत्यन्नट इवात्रपः ॥ ६० ॥ वीक्ष्य तौ स्खलितौ वाद्या—न्मुनिर्हत्वा चपेटया ॥ अ-

स्थिकूटाविवाकार्षी—दंगोपांगविटालनात् ॥ ६१ ॥ पतितौ भुवि निश्चेष्टौ । मृताविव विमुच्य
तौ ॥ मुनिः पुनर्वनं व्रजे । सिद्धयात्र इवालयं ॥ ६२ ॥ मां ज्ञापयेत निःशंकं । महीपालस्य
पृष्ठतः ॥ इत्युदित्वा मुनींस्तत्र । रहो ध्यानमधत्त सः ॥ ६३ ॥ तन्निशम्यागतस्तत्र । मुनि-
चंद्रो महीपतिः ॥ ज्येष्टिकैरंगमर्मज्ञै—र्मंक्षु तावचिकित्सयत् ॥ ६४ ॥ चिकित्समानयोर्दृष्ट्र-
वा । तयोः प्रत्युत वेदनां ॥ साधुं तं शोधयामास । भवनेषु वनेषु सः ॥ ६५ ॥ भवत्सु म-
त्सुतं मूर्द्धा—मीलिताक्षं चकार कः ॥ इत्युक्ता भूभुजोद्यान—निलीना मुनयोऽभ्यधुः ॥
॥ ६६ ॥ राजन् वयं न ते धाम । यामः संक्लेशभीरवः ॥ कदाचिदतिथिः साधु—स्तत्र सं-
भाव्यते गतः ॥ ६७ ॥ अस्माभिर्बहुभिः स्यात्किं । स एवैको विलोक्यतां ॥ धात्रा भग्नं हि
संधातुं । धातुरन्यः क्षमेत कः ॥ ६८ ॥ वनं शोधयता राज्ञा । ततः सोऽपि निरीक्षितः ॥ त-
दैवायं मम ज्यायान् । बंधुरित्युपलक्षितः ॥ ६९ ॥ ध्यानं मुक्त्वा मुनीशोऽपि । सापराधं
निजानुजं ॥ भ्रमंतमेव भूपाल—मुपालभत रोषतः ॥ ७० ॥ वत्स चंद्रावतंसस्य । तस्य भू-
त्वा तनूरुहः ॥ स्वपुत्रेणोत्तमां चार्कि । मुनीनां कारयन्नसि ॥ ७१ ॥ त्वत्पुत्रकृतपूजातो । जातो-

डेका महर्षयः ॥ पुर्यामिहावतिष्ठंते । साशंकं तस्करा इव ॥ ७२ ॥ पुरोहितसुतोपेतः । पुरोहितमचिंतयन् ॥ पुत्रस्ते कुरुते पापं । कथं यदि न मृष्यसि ॥ ७३ ॥ मयानायि मुनिद्वेषी । कामवीरोऽप्यनंगतां ॥ कथं ममानयोरंग—भंजने शंकते मनः ॥ ७४ ॥ अथ नत्वा नृपोऽवादी—न्ममागः क्षम्यतामिदं ॥ देहे मल इवाभूव—महं तस्य पितुः कुले ॥ ७५ ॥ परं सर्वांगसूत्रस्य । नांगभंगस्तवोचितः ॥ तस्मादष्टांगयोगज्ञ । योजयाष्टांगमेतयोः ॥ ७६ ॥ गोत्रवृद्धो गुरुश्च त्वं । प्रपाल्या एव ते वयं ॥ कुरुष्व तद्यथायोग्यं । बंधो किं ब्रूमहे बहु ॥७७॥ तदाहं जीवयाम्येतौ । प्राव्राजयसि चेन्नृप ॥ एवमुक्तो मुनींद्रेण । भूमानोमित्यभाषत ॥ ॥ ७७ ॥ ततः साधुः कृपासिंधु—स्तत्रैत्य सह भूभुजा ॥ असज्जयत्तयोरंगा—न्यनसोरिव वार्धकिः ॥ ७ए ॥ तौ समुज्जीवितौ सत्या—श्चवः प्राव्राजयन्मुनिः ॥ तयोरपालयद्दीक्षां । सम्यग्भावेन भूपभूः ॥ ७० ॥ अध्यापयच्च पितृव्यो । जीयाद्यो मामुपायतः ॥ बोधयामास बोधिः स्या—न्मादृशां नेयता विना ॥ ७१ ॥ पालयामास चारित्रं । पुरोहितसुतः पुनः ॥ स्वजात्युत्कर्षतो निंदन् । मनाग्मुनिजनक्रियां ॥ ७२ ॥ दध्यौ च मे हगादत्तं । कथं राजर्षिणा

व्रतं ॥ दीयमाना हठात्तादृक् । स्वदते शर्करापि न ॥ ७३ ॥ प्रांते प्रपाल्यानशन—मुभाव-
पि बभूवतुः ॥ नखमांसोपमप्रेम—णासुरौ तौ सुरौ दिवि ॥ ७४ ॥ सम्यग्दृष्टी मिथस्तत्र ।
। चक्राते तौ प्रतिश्रवं ॥ यो दिवश्च्यवते पूर्वं । प्रतिबोध्योऽपरेण सः ॥ ७५ ॥ द्विजजीवो
दिवः पूर्वं । च्युत्वा कर्मवशंवदः ॥ स्वचारुताजितस्वर्गे—पुरे राजगृहे पुरे ॥ ७६ ॥ मेतस्य
मलिने वंशे । मेत्याः कुक्षावतारयत् ॥ शुक्तिकायामिव स्वाति—नीरमाकाशतश्च्युतं ॥ ७७ ॥
युग्मं ॥ धनस्य श्रेष्ठिनो गेहे । स्वोचितं कर्म कुर्वती ॥ मेती मैत्रीमधाद्गाढं । सा श्रेष्ठिन्या
धनश्रिया ॥ ७८ ॥ तां मेदुरोदरां वीक्ष्य । विलक्षा श्रेष्ठिनी जगौ ॥ सखि धन्यासि यत्पुत्र
—मचिरेण त्वमाप्स्यसे ॥ ७९ ॥ मेत्योक्तं मा विषसाज्ञः । सखि गुर्वी त्वमप्यसि ॥ सोचे
खेदाय गुर्वीत्व—मेव निंदुर्यदस्म्यहं ॥ ८० ॥ मेत्यूचे जातमात्रं स्वं । पुत्रं दास्याम्यमुं तव ॥
परं तस्य शिशोर्नाम । देयमस्मत्कुलोचितं ॥ ८१ ॥ श्रेष्ठिन्यपि ततोऽन्वीक्षणं । लोभादुपचचार
तां ॥ लोभेन वाह्यते विद्वान् । किं पुनर्ललनाजनः ॥ ८२ ॥ दैववैवशतो जाते । युगपत्प्रसवे
तयोः ॥ श्रेष्ठिन्यै स्वसुतं न्यास—मिव मेती ददौ रहः ॥ ८३ ॥ स्वयं च तन्नमादाय । तत्प्र-

सूतां सुतां मृतां ॥ पत्युर्निवेदयामास । प्रीतौ संजाव्यते न किं ॥ ए४ ॥ श्रेष्टिना निर्मितेऽनूने । सूनोर्जन्ममहोत्सवे ॥ मेतार्याभिधया नित्य—मंबा तं बालमालपत् ॥ ए५ ॥ अंकस्थः श्रेष्टिजार्यायाः । स मैतेयो बजौतरां ॥ मुक्तामणिरिवांजोधि—वेलायाः शुक्तिसंजवः ॥ ए६ ॥ क्रमात्कृतकलाज्यासं । तमतिक्रांतशैशवं ॥ प्राग्जन्मसहृदः स्वप्ने । स्वप्नाद्यैः प्रत्यबोधयत् ॥ ए७ ॥ चिंतितोपस्थिताशेष—कामः काम इवांगवान् ॥ रममाणः सममित्रै—र्न पुनः प्रत्यबोधि सः ॥ ए८ ॥ त्रैलोक्यमोहिनीमूर्त्ता । इव कर्मजिदास्तदा ॥ कन्या नवयौवनोले । सोऽष्टौ शिष्टकुलोद्भवाः ॥ एए ॥ यदासौ शिबिकारूढः । सम्राण्णिव महोत्सवैः ॥ प्रतस्थे परिणेतुं ता—स्तदा देवो व्यचिंतयत् ॥ १०० ॥ बाल्ये कृतकलाकेलिः । कलाकेलिवशस्ततः ॥ कष्टं जवाब्धेर्मे तार्यो । मेतार्योऽयमजायत ॥ १ ॥ किंचित्कष्टमदृष्ट्वास्य । जोगेब्बा न समिष्यति ॥ विना तीव्रौषधं किं वा । गुल्मव्याधिर्निवर्तते ॥ २ ॥ अथामुष्य पिता मेतस्तस्य पश्यन्महोत्सवं ॥ देवेनाधिष्टितोऽश्रूणि । मुंचन्नेवमवोचत ॥ ३ ॥ अकारयिष्यमद्यैवं ॥ पुत्र्याः पाणिग्रहोत्सवं ॥ सा बाला यद्यजीविष्य—त्किं कुर्वे विधिवंचितः ॥ ४ ॥ मेती प्रो-

वाच मा शोची—स्तवैवायं यतः सुतः ॥ ततः सा प्रकटीचक्रे । निजं वृत्तांतमादितः ॥ ५ ॥
स देवाविष्ट एवाथ । पाथःपतिवदुध्ध्वनिः ॥ रुरोध शिबिकां तस्य । पथिकैरपि वारितः ॥
॥ ६ ॥ रे दुर्विनीत दुर्वृत्त । किं मत्तो विकलोऽसि किं ॥ जूत्वा ममांगभूरिज्य—कन्या यदन्नि-
लष्यसि ॥ ७ ॥ स्वतुल्यैरेव सर्वोऽपि । संबंधः खलु बंधुरः ॥ मृद्धिका यदि मृद्वी स्या—त्त-
दा किं लन्नते खरः ॥ ८ ॥ किं शादाभ्रष्टकपिव—द्धीद्यसे गेहमेहि मे ॥ अचिराद्दाप-
यिष्यामि । कन्यां ते स्वकुलोचितां ॥ ९ ॥ इत्युक्त्वा कोपकंप्रोष्ट । आहत्य च चपेटया ॥
शिबिकातः स मेतार्यं । कातराक्रमपातयत् ॥ १० ॥ चतुर्जिः कलापकं ॥ जर्त्रा किमेतदि-
त्युक्ता । श्रेष्टिनी न्यग्मुखाजनि ॥ लोकोऽपि स्वस्ववेश्मागा—द्वदन् दैवस्य दूषणं ॥ ११ ॥
गृहमानीय गर्त्तायां । क्षिप्त्वा मेतार्यमन्यधात् ॥ वयस्थ वय वासांसि । यद्वयं वानवृत्तयः
॥ १२ ॥ वचसानेन कुलिशा—घातेनेवाकुलीकृतं ॥ प्रादुर्जूय सुरः सार—तमवास्तमन्नाषत ॥
॥ १३ ॥ बोधितोऽपि न बुद्धस्त्वं । प्राग्यौवनधनोन्मनः ॥ विरुंबितोऽसि तेनैवं । तदद्यापि न्न-
ज व्रतं ॥ १४ ॥ तृणवन्मां लघूकृत्य । रोलयित्वा च रंकवत् ॥ विरुंब्य चौरवद्दीक्षां । ग्राह-

यन्मित्र नासि किं ॥ १५ ॥ चेन्मां स्थापयसि स्थाने । विवाह्य श्रेणिकांगजां ॥ तदा द्वादश-
वर्षांते । ध्रुवं स्वामि संयमं ॥ १६ ॥ इति जल्पति मेतार्ये । रत्नव्युत्सर्गिणं छगं ॥ बबंध तद्-
गृहद्वारि । दयाऽऽर्द्रहृदयः सुरः ॥ १७ ॥ त्रिभिर्विशेषकं ॥ ऊचे च छगलोत्सृष्टे । रत्नैः सतत-
ढौकितैः ॥ वशीकृतस्य मगधे--शस्य पुत्रीमवाप्स्यसि ॥ १७ ॥ स्थालमापूर्य तैः स्फूर्जद्—
घृणिर्निर्मणिभिस्ततः ॥ पुत्रप्रेरणया मेतः । प्रातर्नृपसभां ययौ ॥ १९ ॥ रत्नस्थालं पुरो मु-
क्त्वा । श्रेणिकं स व्यजिज्ञपत् ॥ रत्नौघेनामुना देव । रत्नमेकं प्रदेहि मे ॥ २० ॥ किं तद्र-
त्नमिति प्रोक्तो । भूभुजा निजगाद सः ॥ शृणु भूप स्फुरद्रूपं । कन्यारत्नं तवैव यत् ॥ २१ ॥
ग्रावखंडैरयं कन्या-रत्नमिच्छति दुर्मतिः ॥ इत्याक्रोशन्नृपो दत्वा—र्धचंद्रं तमदूरयत् ॥२२॥
तथापि सोऽनिशं राज्ञो । रत्नस्थालमढौकयत् ॥ वृणोति न कदापि श्रीः । जनं निर्वेदभाजनं
॥ २३ ॥ वद रे मेत मे तथ्यं । रत्नानीयंति ते कुतः ॥ इति पृष्टोऽभयेनासौ । छगवृत्तं न्यवेद-
यत् ॥ २४ ॥ भूपो ययाचे तं छागं । रत्नै रत्नकरायितं ॥ बबंध सिंधुरमिव । छागं सोऽपि
नृपांगणे ॥ २५ ॥ सातिसार इवासारं । छागस्तत्रामुचन्मलं ॥ मृतश्चोरगगंधोऽपि । यद्दुर्गं-

धाग्रतस्तृणं ॥ २६ ॥ नूपश्भागं सन्नानर्हं । खलवन्निरवासयत् ॥ काप्येषा देवमायेति । नि-
श्चिनोतिस्म चान्नयः ॥ २७ ॥ ऊचे च मेतं न्नो हैमं । वप्रमत्र पुरे कुरु ॥ वैन्नाराडौ रथारूढै
—र्गम्यां पद्यां प्रपंचय ॥ २८ ॥ समानय पयोराशि—माशु स्वस्य विशुद्धये ॥ दापयामि
तदा जामिं । स्वीयां तव तनूरुहं ॥ २९ ॥ एतन्मेतोऽन्नयादिष्टं । मेतार्यस्य न्यवेदयत् ॥ सो-
ऽप्यचिंत्योजसा देवे—नाशेषं तदकारयत् ॥ ३० ॥ मेतार्यस्त्रिदशानीत—वार्धिवीचीषु मज्ज-
नैः ॥ पूतात्मा भून्नुजः पुत्री—मुपयेमे यथाविधि ॥ ३१ ॥ ततो व्रतचरीः कन्याः । स लेन्ने
निखिला अपि ॥ गंगागमेंबुधेः शेष—नदीयोगो न दुर्घटः ॥ ३२ ॥ राज्ञा निवेशितः पंक्तौ ।
। महेन्न्यानां महोदयः ॥ नुंजानो विविधान् न्नोगान् । द्वादशाब्दानि सोऽत्यगात् ॥ ३३ ॥
स्मारयंतं समागत्य । चारित्रावसरं सुरं ॥ नवोढा नव ता एव । दीनवक्त्रा व्यजिज्ञपन् ॥
॥ ३४ ॥ देव त्वं चेष्टसेऽस्मासु । विबुधोऽप्यबुधो यथा ॥ कवलं यन्मुखायात—मेवमाक्रष्टुमि-
च्छसि ॥ ३५ ॥ अस्माभिरपराद्धं किं । यद्वियोजयसि प्रियं ॥ मुक्त्या च तव किं दत्तं । यत्ता-
मेनं नयन्नसि ॥ ३६ ॥ नवोढूढा नवस्नेहा । नवाशा नवयौवनाः ॥ मुक्त्वास्मानेष गृह्णाति ।

व्रतं चेत्तन्निश्रयामहे ॥ ३७ ॥ स्ववधूवधपापस्य । धत्सेऽधः स्वं शिरो यदि ॥ तदा प्रव्राजय-
स्येन—मधुना बुधनायक ॥ ३८ ॥ नर्तुः प्रियसखं तत्त्वां । वयमित्यर्थयामहे ॥ गृहे द्वाद-
शवर्षाणि । तिष्टत्वेष तवाज्ञया ॥ ३९ ॥ दयार्द्रेणाथ देवेना—नुज्ञातस्तस्थिवानसौ ॥ पुन-
र्द्वादशवर्षाणि । सदने मदनेच्छया ॥ ४० ॥ तदंते मित्रदेवेन । कृतनिःक्रमणोत्सवः ॥ स प्र-
वव्राज निर्व्याज—वैराग्यो गुरुसन्निधौ ॥ ४१ ॥ अधीत्य नवपूर्वाणि । प्रपद्यैकविहारितां ॥
असौ पुनः पुनातिस्म । तदेव स्वपदैः पुरं ॥ ४२ ॥ सौवर्णान् यो यवांश्चक्रे । नित्यं राज्ञो
जिनार्चने ॥ भिक्षार्थं स भ्रमंस्तस्य । गृहं स्वर्णकृतो ययौ ॥ ४३ ॥ तत्कालघटितान्मुक्त्वा ।
वहिर्यावद्यवान् यवी ॥ गृहांतः स ययौ ताव—त्तत्रागात्क्रौंचनीरुजः ॥ ४४ ॥ चुणित्वा तान्
यवान् सत्य—यवबुध्ध्या ययौ खगः ॥ आगतश्च कलादस्ता—नपश्यन्नातुरोऽभवत् ॥ ४५ ॥
विना भिक्षुममुं नान्यः । कश्चिदत्रागतोऽधुना ॥ एष एव यवग्राही । तस्मादित्युन्निनाय सः
॥ ४६ ॥ जगाद च मुनीं भिक्षो । कामी मुक्ता यवास्त्वया ॥ सत्वाधारः कृपासार—स्तत्
श्रुत्वा दध्यिवान् मुनिः ॥ ४७ ॥ निवेदयामि यद्यस्मै । क्रौंचमेनं यवाशिनं ॥ तदस्योदरम-

प्येष । दारयत्येव निर्दयः ॥ ४७ ॥ मज्जीवितव्ययेनायं । वराको जीवितात्खगः ॥ इति मौनं मुनिर्भेजे । स्वर्णाचल इवाचलः ॥४९॥ रे कागारिकतां वक्ति । मौनमेवास्य लिंगिनः ॥ इति कल्पनयानल्पं । स्वर्णकृत्तमताम्यत् ॥ ५० ॥ तथाप्यवदतः किंचि—न्मौलिमस्यार्द्रवध्रकैः ॥ सोऽवेष्टयत्कुटुंबीव । रज्जुभिः कणमूढकं ॥ ५१ ॥ यवानद्यापि रे मुंच । मृत्योरुत्कंठितोऽसि किं ॥ इति तस्य गिरः शृण्व—न्मुनिः स्वात्मानमन्वशात् ॥ ५२ ॥ आत्मन् कला कलादस्य । दृश्यतामस्य बंधनं ॥ यद्विधाय बहिर्वृत्त्या । दाता ते मोक्षमायतौ ॥ ५३ ॥ वर्धनीव शिरोबद्धा । निःसारापि तनुस्तव ॥ अचिरेणैव भूयांसि । रजांसि व्यपनेष्यति ॥ ५४ ॥ देहे सति न मोक्षः स्या—त्तत्ते देहः परो रिपुः ॥ तं चासौ मूर्ध्नि बध्ध्वा त्वं । हृष्ट्वा मोक्षं च नेष्यति ॥ ५५ ॥ नार्कंधमेऽत्र मा कुप्य । रे जीव सुहृदीत्र तत् ॥ स्मर सिद्धांतसूत्रार्था—वाधिव्याधिमहौषधी ॥५६॥ ध्यानाभ्यां धर्मशुक्लाभ्या—मार्तरौद्रे निराकुरु ॥ प्राप्तोऽयं परर्क्षार्थः । क्षणो भाग्येन मा मुह ॥ ५७ ॥ मेतार्यः क्षपकश्रेणिं । श्रितो भावनयानया ॥ श्रुतार्थामृतसंतुष्ट—स्तां विवेद न वेदनां ॥ ५८ ॥ व्यधितस्य शिरोवेष्टा—त्कलादेनादयं भृशं ॥

यन्मित्र नासि किं ॥ १५ ॥ चेन्मां स्थापयसि स्थाने । विवाह्य श्रेणिकांगजां ॥ तदा द्वादश-
वर्षांते । ध्रुवं रह्यामि संयमं ॥ १६ ॥ इति जल्पति मेतार्ये । रत्नव्युत्सर्गिणं बगं ॥ बबंध तद्-
गृहद्वारि । दयाऽहृदयः सुरः ॥ १७ ॥ त्रिभिर्विशेषकं ॥ ऊचे च बगलोत्सृष्टे । रत्नैः सतत-
ढौकितैः ॥ वशीकृतस्य मगधे—शस्य पुत्रीमवाप्स्यसि ॥ १८ ॥ स्थालमापूर्य तैः स्फूर्जद्—
घृणिनिर्मणिभिस्ततः ॥ पुत्रप्रेरणया मेतः । प्रातर्नृपसभां ययौ ॥ १९ ॥ रत्नस्थालं पुरो मु-
क्त्वा । श्रेणिकं स व्यजिज्ञपत् ॥ रत्नौघेनामुना देव । रत्नमेकं प्रदेहि मे ॥ २० ॥ किं तद्र-
त्नमिति प्रोक्तो । नृभुजा निजगाद सः ॥ शृणु भूप स्फुरद्रूपं । कन्यारत्नं तवैव यत् ॥ २१ ॥
ग्रावखंडैरयं कन्या–रत्नमिच्छति दुर्मतिः ॥ इत्याक्रोशन्नृपो दत्वा—र्धचंद्रं तमदूरयत् ॥२२॥
तथापि सोऽनिशं राज्ञो । रत्नस्थालमढौकयत् ॥ वृणोति न कदापि श्रीः । जनं निर्वेदभाजनं
॥ २३ ॥ वद रे मेत मे तथ्यं । रत्नानीयंति ते कुतः ॥ इति पृष्टोऽभयेनासौ । बगवृत्तं न्यवेद-
यत् ॥ २४ ॥ भूपो ययाचे तं बागं । रत्नै रत्नकरायितं ॥ बबंध सिंधुरमिव । बागं सोऽपि
नृपांगणे ॥ २५ ॥ सातिसार इवासारं । बागस्तत्रामुचन्मलं ॥ मृतश्चोरगगंधोऽपि । यद्दुर्ग-

धाग्रतस्तृणं ॥ २६ ॥ नूपश्चागं सन्नानर्हं । खलवन्निरवासयत् ॥ काप्येषा देवमायेति । निश्चिनोतिस्म चान्नयः ॥ २७ ॥ ऊचे च मेतं नो हैमं । वप्रमत्र पुरे कुरु ॥ वैन्नाराडौ रथारूढै—र्गम्यां पद्यां प्रपंचय ॥ २८ ॥ समानय पयोराशि—माशु स्वस्य विशुद्धये ॥ दापयामि तदा जामिं । स्वीयां तव तनूरुहं ॥ २९ ॥ एतन्मेतोऽन्नयादिष्टं । मेतार्यस्य न्यवेदयत् ॥ सोऽप्यचिंत्योजसा देवे—नाशेषं तदकारयत् ॥ ३० ॥ मेतार्यस्त्रिदशानीत—वार्धिवीचीषु मज्जनैः ॥ पूतात्मा भूज्ञुजः पुत्री—मुपयेमे यथाविधि ॥ ३१ ॥ ततो व्रतचरीः कन्याः । स लेन्ने निखिला अपि ॥ गंगागमेंबुधेः शेष—नदीयोगो न दुर्घटः ॥ ३२ ॥ राज्ञा निवेशितः पंक्तौ । । महेज्यानां महोदयः ॥ जुंजानो विविधान् नोगान् । द्वादशाब्दानि सोऽत्यगात् ॥ ३३ ॥ स्मारयंतं समागत्य । चारित्रावसरं सुरं ॥ नवोढा नव ता एव । दीनवक्त्रा व्यजिज्ञपन् ॥ ॥ ३४ ॥ देव त्वं चेष्टसेऽस्मासु । विबुधोऽप्यबुधो यथा ॥ कवलं यन्मुखायात—मेवमाक्रुष्टुमिच्छसि ॥ ३५ ॥ अस्माभिरपराद्धं किं । यद्वियोजयसि प्रियं ॥ मुक्त्या च तव किं दत्तं । यत्तामेनं नयन्नसि ॥ ३६ ॥ नवोढा नवस्नेहा । नवाशा नवयौवनाः ॥ मुक्त्वास्मानेष गृह्णाति ।

व्रतं चेत्तन्निश्रयामहे ॥ ३७ ॥ स्ववधूवधपापस्य । धत्सेऽधः स्वं शिरो यदि ॥ तदा प्रव्राजय-
स्येन—मधुना बुधनायक ॥ ३८ ॥ भर्तुः प्रियसखं तत्त्वां । वयमित्यर्थयामहे ॥ गृहे द्वाद-
शवर्षाणि । तिष्टत्वेष तवाज्ञया ॥ ३९ ॥ दयार्द्रेणाथ देवेना—नुज्ञातस्तस्थिवानसौ ॥ पुन-
र्द्वादशवर्षाणि । सदने मदनेच्छया ॥ ४० ॥ तदंते मित्रदेवेन । कृतनिःक्रमणोत्सवः ॥ स प्र-
वव्राज निर्व्याज—वैराग्यो गुरुसन्निधौ ॥ ४१ ॥ अधीत्य नवपूर्वाणि । प्रपद्यैकविहारितां ॥
असौ पुनः पुनातिस्म । तदेव स्वपदैः पुरं ॥ ४२ ॥ सौवर्णान् यो यवांश्चक्रे । नित्यं राज्ञो
जिनार्चने ॥ भिक्षार्थं स भ्रमंस्तस्य । गृहं स्वर्णकृतो ययौ ॥ ४३ ॥ तत्कालघटितान्मुक्त्वा ।
बहिर्याविच्यवान् यवी ॥ गृहांतः स ययौ ताव—त्तत्रागात्क्रौंचनीडजः ॥ ४४ ॥ चुणित्वा तान्
यवान् सत्य—यवबुध्ध्या ययौ खगः ॥ आगतश्च कलादस्ता—नपश्यन्नातुरोऽभवत् ॥ ४५ ॥
विना भिक्षुममुं नान्यः । कश्चिदत्रागतोऽधुना ॥ एष एव यवग्राही । तस्मादित्युन्निनाय सः
॥ ४६ ॥ जगाद च मुनीं भिक्षो । कामी मुक्ता यवास्त्वया ॥ सत्वाधारः कृपासार—स्तत्
श्रुत्वा दध्यिवान् मुनिः ॥ ४७ ॥ निवेदयामि यद्यस्मै । क्रौंचमेनं यवाशिनं ॥ तदस्योदरम-

प्येष । दारयत्येव निर्दयः ॥ ४७ ॥ मज्जीवितव्ययेनायं । वराको जीवितात्खगः ॥ इति मौनं
मुनिर्भेजे । स्वर्णाचल इवाचलः ॥४ए॥ रे कागारिकतां वक्ति । मौनमेवास्य लिंगिनः ॥ इति
कल्पनयानल्पं । स्वर्णकृत्तमताडयत् ॥ ५० ॥ तथाप्यवदतः किंचि—न्मौलिमस्यार्द्रवध्रकैः ॥
सोऽवेष्टयत्कुटुंबीव । रज्जुभिः कणमूढकं ॥ ५१ ॥ यवानद्यापि रे मुंच । मृत्योरुत्कंठितोऽसि
किं ॥ इति तस्य गिरः शृण्व—न्मुनिः स्वात्मानमन्वशात् ॥ ५२ ॥ आत्मन् कला कलादस्य
। दृश्यतामस्य बंधनं ॥ यद्विधाय बहिर्वृत्त्या । दाता ते मोक्षमायतौ ॥ ५३ ॥ वर्धनीव शि-
रोबद्धा । निःसारापि तनुस्तव ॥ अचिरेणैव जूयांसि । रजांसि व्यपनेष्यति ॥ ५४ ॥ देहे
सति न मोक्षः स्या—त्तत्ते देहः परो रिपुः ॥ तं चासौ मूर्ध्नि बध्ध्वा त्वं । दृष्ट्वा मोक्षं च
नेष्यति ॥ ५५ ॥ नार्किधमेऽत्र मा कुप्य । रे जीव सुहृदीव तत् ॥ स्मर सिद्धांतसूत्रार्था—
वाधिव्याधिमहौषधी ॥५६॥ ध्यानाभ्यां धर्मशुक्लाभ्या—मार्तरौद्रे निराकुरु ॥ प्राप्तोऽयं परर-
क्षार्थः । क्षणो जाग्येन मा मुह ॥ ५७ ॥ मेतार्यः क्षपकश्रेणिं । श्रितो जावनयान्यया ॥ श्रुता-
र्थामृतसंतुष्ट—स्तां विवेद न वेदनां ॥ ५७ ॥ व्यधितस्य शिरोवेष्टा—त्कलादेनादयं जृशं ॥

निरगातां मुनेर्मोक्ष—मार्गं शोधुमिवाक्षिणी ॥ ५९ ॥ तथाप्यचलितो ध्याना—त्केवलज्ञा-
नमाप सः ॥ बभूव गतनेत्रोऽपि । सर्वदर्शी मुनीश्वरः ॥ ६० ॥ पुरोपरितनद्वारे । रुध्धेऽपि स्व-
र्णकारिणा ॥ तदैवाचिंत्यशक्तित्वा—त्तस्यात्मागात्परं पदं ॥ ६१ ॥ अग्रस्थकाष्टकीलेन ।
। चरन् विरूस्तदा गले ॥ क्रौंचः कातरदृक् सर्वान् । वमतिस्म यवाद्यवान् ॥ ६२ ॥ तद् ज्ञा-
त्वा नागरः कश्चि—त्कुर्वन् कलकलं जगौ ॥ हंत हंतिस्म दुष्टोऽय—मनगारं निरागसं ॥ ६३ ॥
दीनाननो बिभेतिस्म । पापस्तद्वचसापि सः ॥ स्याच्चौर्यं ह्युपजिह्वायाः । कंबलीजक्षणावधि
॥ ६४ ॥ तत्कलादपलादस्य । दुर्वृत्तं शठगंधवत् ॥ विस्तार्यमाणं लोकोक्ति—वात्यया बुबुधे
नृपः ॥ ६५ ॥ श्रेणिकः स्वजटान् प्रैषी—त्तं हंतुं सपरिच्छदं ॥ सोऽप्युत्पन्नमतिर्वेष—मृषेस्त-
स्यैव पर्यधात् ॥ ६६ ॥ सुजटैर्बोधितस्तस्य । साधुनेपथ्यधारितां ॥ नारिंधमं तमाकार्य । भू-
मानेवमशिक्षयत ॥ ६७ ॥ संप्रति व्रतिवेषत्वा—न्मया मुक्तोऽसि रे शठ ॥ त्यक्त एष यदा
वेषो । मृत एव तदा जवान् ॥ ६८ ॥ जाषितो जापितश्चैवं । श्रीश्रेणिकमहीभुजा ॥ आत्तां
न स्वर्णकृद्दीक्षां । रक्षाकांक्षमिवात्यजत् ॥ ६९ ॥ कृपागुणस्तस्य तथा प्रकर्षं । जगाम मेता-

र्यमुनीश्वरस्य ॥ यथा कलादस्य तदंगसंगी । वेषोऽपि रक्षाजनको बभूव ॥ १० ॥ इति श्रीप्रथमव्रते मेतार्यमुनिकथा समाप्ता. ॥

एतच्च व्रतं प्रपन्नेन पंचातिचारा वर्ज्यास्तद्यथा—बंधो वधश्छविच्छेदोऽतिभारारोपणं भक्तादिव्यवच्छेदश्च. तत्र बंधो मनुष्यगवादीनां रज्ज्वादिना संयमनं, अयं च द्विधा—सापेक्षो निरपेक्षश्च. तत्र यदा पशुचौरादिकं प्रदीपनकमरणाद्यपेक्षां मुक्त्वा दृढमाक्रम्य बध्नाति तदा निरपेक्षः, स च न कल्पते. सापेक्षः पुनश्चतुष्पदं तथा बध्नाति यथाग्न्यादिभये स्वयमुद्वेष्ट्य नश्यति, सुखेन छोटयितुं शक्यते, द्विपदेषु तु दासं चौरं पाठादिप्रमत्तं पुत्रं वा तथा बध्नाति यथा बद्धोऽप्यसौ सोच्छ्वासो भवत्यग्न्यादिना न म्रियते, ते किल श्रावकेण मनुष्यगवादयो धार्याः, येऽचपलतया बद्धा एवासते. एवं च सापेक्षं बंधमपि कुर्वन्नव्रतमतिचरति निरपेक्षं तु कुर्वतो व्रतातिचार इति. एवं शेषेष्वप्यतिचारेषु भावनीयं. वधो यष्ट्यादिताडनं, सोऽपि प्राग्वत्, नवरं निरपेक्षो वधो निर्दयताडना, भीतपर्षदा हि श्रावकेण भाव्यं. यथा वाक्पात्रमात्राद्विभ्यतो दासादयः स्वस्वकर्मणि प्रवर्तंते, तथापि यदि कोऽपि किंचिदयुक्तमाचरति तदा मर्मवर्जं लतया

दवरकेण वा सकृद् द्विर्वा ताडयतः सापेक्षो वधः. छविछेदः कर्णादिकर्तनं. भावना प्राग्वत्, कर्णादि निर्दयं छिंदानस्यासौ निरपेक्षः, अरुर्गंडादिकं तु चिकित्साबुद्ध्या सदयं छिंदतः सापेक्षः. अतिभारस्य गंत्रिगोपृष्ठादावारोपणमतिभारारोपणं, अत्रापि द्विपदादिभारवाहनाद्वृत्तिं न कल्पयति, यदि पुनर्न निर्वहति तदा द्विपदं तावंतं भारं वाहयति यावंतमसौ स्वयमुत्क्षिपत्यवतारयति च. चतुष्पदे तु यावंतं भारमसौ वोढुं क्षमस्तत ऊनमेव क्षिपति, हलशकटादिपुनरुचितवेलायां मुंचति. भक्तपानयोर्व्यवच्छेदो निवारणं भक्तपानव्यवच्छेदः, स च निरपेक्षः पूर्ववत्. सापेक्षस्तु रोगचिकित्सार्थं शांत्यर्थं वोपवासं कारयतः, अपराधिनि तु तवाद्य भोक्तुं न दास्ये इत्येवं ब्रूयात्. अत्राह—ननु हिंसैवानेन प्रत्याख्याता, न बंधादयः, ततस्तत्करणेऽपि को दोषो नियमस्याखंडितत्वात्. अथ बंधादयोऽपि प्रत्याख्यातास्ततस्तत्करणेऽपि व्रतभंग एव, नियमखंडनात्कुतोऽतिचारत्वं? अत्रोच्यते—सत्यं, प्राणातिपात एव मुख्यतयानेन प्रत्याख्यातः, न बंधादयः, केवलं प्रत्याख्या नेऽर्थतस्तेऽपि तत्प्रत्याख्याता एव हिंसाहेतुकत्वात्तेषां, तर्हि भवतु तत्करणे व्रतभंगो नातिचार इति. इति चेन्नैवं, द्विविधं हि व्रतं, अंत-

वृत्त्या बहिर्वृत्त्या च, तत्र मारयामीति विकल्पशून्योऽपि यदा कोपाद्यावेशात्परप्राणहारणनिरपेक्षो बंधादौ प्रवर्तते, न चायुःपृष्टतया तस्य जंतोर्मृत्युर्जातस्तदा निर्दयपरिणामत्वाद्भग्नमंतर्वृत्त्या व्रतं हिंसाया अभावात्तु बहिर्वृत्त्या पालितं, ततो देशस्य भंजनाद्देशस्य पालनादतिचारव्यपदेशः, उक्तं च—न मारयामीति कृतव्रतस्य । विनैव मृत्युं क इहातिचारः ॥ निगद्यते यः कुपितो वधादीन् । करोत्यसौ स्यान्नियमेऽनपेक्षः ॥ १ ॥ मृत्योरभावान्नियमोऽस्ति तस्य । कोपाद्दयाहीनतया तु भग्नः ॥ देशस्य भंगादनुपालनाच्च । पूज्या अतीचारमुदाहरंति ॥ २ ॥ बंधादीनामुपलक्षणत्वादपरेऽपि हिंस्रमंत्रतंत्रादयोऽतिचारतयेह ग्राह्याः. अत्र भावनागाथा—सव्वेसिं साहूणं । नमामि जेसिं तु नत्थि तं कज्जं ॥ जत्थ भवे परपीडा । एवं च मणेण चिंतिज्जा ॥ १ ॥ उक्तं सदृष्टांतं प्रथमव्रतं. अथ द्वितीयव्रतमाह—

॥ मूलम् ॥—कन्नागोभूअलियं । नासवहारं च कूडसक्खिज्जं ॥ थूलमलियं पंचहा । चएइ सुहुमंपि जहसत्ति ॥ २६ ॥ व्याख्या—गेहीति संबध्यते, स्थूलं परिस्थूलवस्तुविषयमतिदुष्टाशयोद्भवमलीकं मृषावादं पंचधा परित्यजति, कथमित्याह—कन्येत्यादि, अलीकश-

ब्दस्य प्रत्येकसंबंधात्. कन्यालीकं, गवालीकं, भूवलीकं च. तत्र निर्दोषामपि कन्यां विषकन्येयमित्यादि वदतः कन्यालीकं, तथा बहुक्षीरामपि गामल्पक्षीरां व्यत्ययेन वा वदतो गवालीकं, परसत्कामपि भुवमात्मादिसत्कां वदतो भूवलीकं, उपलक्षणानि चैतानि सर्वद्विपदचतुष्पदापदविषयालीकानां. यद्येवं सर्वसंग्रहार्थं द्विपदादिग्रहणमेव कस्मान्न कृतं? उच्यते—कन्याद्यलीकानां लोके प्रतिगर्हितत्वाद्विशेषेण तद्वर्जनार्थं तदुपादानं. तथा न्यासस्यापहरणमपलपनं न्यासापहारः. अस्य चादत्तादानरूपत्वेऽप्यपलापनं वचनप्राधान्यान्मृषावादे पाठः. तथोत्कचमत्सराद्यभिभूतस्य प्रमाणीकृतमप्यर्थमन्यथा स्थापयतः कूटसाक्ष्यं, अस्य च परकीयपापसमर्थकत्वविशेषात्पूर्वेभ्यो भेदः. एष स्थूलालीकनिषेधमभिधाय गृहिणः सूक्ष्मालीकयतनामाह—' सुहुमंपित्ति ' सूक्ष्ममप्यल्पवस्तुविषयमप्यलीकं यथाशक्ति त्यज, सति निर्वाहे सूक्ष्ममप्यलीकं न ब्रूयात्, अनिर्वाहे पुनस्तरतमयोगेन यतनां कुर्यात्. अथ सत्यवादिनो लोके श्लाघ्यत्वमाह—

॥ मूलम् ॥—पुज्जो पिउव्व गेउं । गुरुव्व जणणिव्व जणियवीसासो ॥ सच्चेण नरो सुहउं ।

सहिव निवश्व नमणेज्जो ॥ २७ ॥ व्याख्या-- सुगमा, नवरंसुहृज्ज सहिव्वत्ति ’ सखा वयस्य इव सुन्नगः प्रियो न्नवति. ॥ २७ ॥ अथ सत्यव्रतस्य प्रन्नावमाह—

॥ मूलम् ॥—जे सच्चववहारा । तेसिं दुट्ठावि नेव पहवंति ॥ नाइक्कमंति आणं । ताणं दिव्वाइं सव्वाइं ॥ २८ ॥ व्याख्या—इह ये सत्यव्यवहाराः सत्यवादिनस्तेषां दुष्टाः क्रूरकर्माणोऽपि न्नूपादयो नैव व्यलीकं कर्तुं प्रन्नवंति. श्रीकालिकाचार्याणां दत्तवत्. तथा सर्वाणि. यतः—जलमग्निर्घटं कोशो । विषं माषाश्च तंकुलाः ॥ फालं धर्मसुतस्पर्शो । दिव्यानां दशकं मतं ॥ १ ॥ इत्येवंरूपाणि दिव्यानि, तेषां हे जल! मास्म मां निमज्जय? हे वह्ने! मास्म मां ज्वलय? इत्येवंरूपामाज्ञां नातिक्रमंति, नोल्लंघंते प्रतिप्राणि प्रसिद्धमेतत्. ॥ २८ ॥ अथ सत्यप्रतिपक्षस्यासत्यस्य न्नृशं निंद्यतामाह—

॥ मूलम् ॥—वयणम्मि जस्सवयणं । निच्चमसच्चं वहेइ वच्चरसो ॥ सुद्धिए जलण्हाणं । कुणमाणं तं हसंति बुहा ॥ २९ ॥ व्याख्या—यस्य वदने मुखेऽसत्यमलीकं वचनमेव सर्वजगदनिष्टत्वादपावित्र्यहेतुत्वाच्च वर्चोरसोऽसकृन्नित्यं वहति तं पुरुषं शुध्ध्यै शुद्धिहेतुंजलस्ना-

नं कुर्वंतं बुधा विवेकिनो हसंति, अहोऽस्य मूख॰ यदसत्यवचनादनारतं मलिनात्मापि स्वगतमलक्षालनक्रमेण जलमात्रेण स्वस्य पावित्र्यमिछन् स्नानाद्यर्थमुपक्राम्यतीति. यदप-रेऽप्याहुः—चित्तं रागादिभिः क्लिष्ट—मलीकवचनैर्मुखं ॥ जीवघातादिभिः कायो । गंगा तस्य पराङ्मुखी ॥ १ ॥ सत्यं शौचं तपः शौचं । शौचमिंद्रियनिग्रहः ॥ सर्वभूतदया शौचं । जलशौचं च पंचमं ॥ २ ॥ आत्मानदी संयमतोयपूर्णा । सत्यावहा शीलतटा दयोर्मिः ॥ तत्राभिषेकं कुरु पांडुपुत्र । न वारिणा शुद्ध्यति चांतरात्मा ॥ ३ ॥ किंच—

॥ मूलम् ॥—मूयत्तणंपि मन्ने । सारं सारंभ वयणसत्तीउ ॥ निम्मंरूणं चिय वरं । जलंत अंगारसिंगारा ॥ ३० ॥ व्याख्या—मन्ये इति वितर्कार्थं पदं, सारंभमसत्यभाषणं मर्मोद्घाटनादिना सपापं वचनं, तद्विषया या शक्तिः स्फूर्तिस्तस्याः सकाशान्मूकत्वं वाग्वैकल्यमपि सारं श्रेयः, अत्र दृष्टांतमाह—ज्वलद्भिर्धगधगायमानैरंगारैर्यः शृंगारः शोभाकारणं तस्मान्निर्मंरूनं मंरूनाभाव एव शरीरस्य वरं प्रशस्यं. अयमर्थः—अथ शरीरशोभार्थमपि कृतोंगारशृंगारः प्रत्युत दाहाद्यनर्थहेतुस्तथा स्वनैपुण्यप्रकाशायापि प्रस्तुता सारंभवचनस्फूर्तिः

प्रत्युत नरकनिपातादिदुःखकारणं भवतीति तस्याः सकाशान्मूकत्वमपि प्रशस्यते. ॥ ३० ॥
अथास्य व्रतस्य पातितस्य पालितस्य च फलमाह—

॥ मूलम् ॥—सच्चेण जीउ जायइ । अप्पडिहयमहुरगुहिरवरवयणो ॥ अलिएणं मुहरोगी । हीणसरो मम्मणो मूउ ॥ ३१ ॥ व्याख्या—सत्येन सत्यवचनेन जीवो जायते, इह लोके यशोविश्वासादिपात्रं परलोके पुनरप्रतिहतं क्वचिदप्यस्खलितं वज्रवत्, मधुरं परिपक्वेक्षुरसवत्, गंभीरं सजलजलधरगर्जिवत्, वरं व्यक्ताक्षरत्वात्कमनीयं वचनं यस्य सः, तथाऽलीकेन पुनरिहलोकेऽविश्वासदुष्कीर्त्यादिभाजनं, भवांतरे तु मुखरोगा लंबकप्रतिजिह्वादयो यस्य स मुखरोगी, हीनो गांभीर्यादिलक्षणैरूनः प्रतिभारहितो वा स्वरो यस्य स हीनस्वरः, मन्मनो यस्य वदतो वाक्स्खलति, अव्यक्तवचनो वा मूकः श्रुतिवचनरहितश्च भवति, तस्य व्रतस्य वाग्विषयत्वात्तत्फलमपि वाग्विषयमेवोक्तं, अन्यथाऽविराद्धेनानेन स्वर्गादिकं, विराद्धे तु नरकादिकमपि फलं बोधव्यं. ॥ ३१ ॥ अथास्मिन् व्रते व्यतिरेकेण दृष्टांतमाह—

॥ मूलम् ॥—दप्पेण अलियवयणस्स । जं फलं तं न सक्किमो वोत्तुं ॥ दक्खिणालीए-

णवि । गउ वसू सत्तमं नरयं ॥ ३२ ॥ व्याख्या—दर्पेण स्वमतस्थापनाभिनिवेशेन यदलीकं जिनमतविरुद्धभाषणं तस्य फलमनंतानंतसंसारपरिभ्रमणरूपं वयं छद्मस्थाः परिमितायुषश्च वक्तुं न शक्नुमः, यतो दाक्षिण्यं गुरुभार्यानुरोधस्तेन हेतुना प्रोक्तमलीकं दाक्षिण्यालीकं, तेनापि वसुराजा सप्तमं नरकं गतः. यदि दाक्षिण्येनाप्युक्तेनालीकेनेदृशी दुर्गतिः स्यात्तदा दर्पेणोक्तस्य तस्य फलं कथं वक्तुं शक्यमिति भावः. वसुकथा चैवं—चेदिदेशोदधौ शुक्तिमती पूरस्ति शुक्तिवत् ॥ विश्वं विभूष्यते विश्वं । यज्जातैर्नरमौक्तिकैः ॥ १ ॥ तत्र व्योम्नीव चंद्रोऽभू—दभिचंद्रो नरेश्वरः ॥ अरिवृंदारविंदानि । म्लानिमानयतिस्म सः ॥ २ ॥ उपाध्यायोऽभवत्तत्र । पुर्यां क्षीरकदंबकः ॥ यश्चेतः केतकेनेव । जिनधर्मेण वासितं ॥ ३ ॥ राज्ञः सूनुर्वसुर्बाल्या—दपि सत्यव्रते रतः ॥ शास्त्रौघमशठो ऽपाठी—द्गुरोः क्षीरकदंबतः ॥ ४ ॥ पर्वतको गुरोः पुत्रो । विद्यार्थी नारदोऽपि च ॥ द्वावप्येतावपठतां । वसुना शिशुना सह ॥ ॥ ५ ॥ अन्यदा तेषु शर्वर्यां । श्रमात्कुट्टिमशायिषु ॥ व्योम्नीति चारणर्षिभ्य । उपाध्यायोऽश्रृणोदूचः ॥ ६ ॥ ये पर्यध्ययना एवं । कुट्टिमोपरि शेरते ॥ गात्रेष्वेषु दिवं ह्येको । नरकं द्वौ

तु यास्यतः ॥ ७ ॥ ततो दध्यावुपाध्याय—स्तावदार्षमिदं वचः ॥ ऋषयो हि मृषावाचः ।
कदाचिन्न भवंत्यमी ॥ ८ ॥ कथमेतेषु विज्ञेयौ । विनेयौ नरकातिथी ॥ यदि वा यो दयालुः
स्या—त्स नैति नरकं नरः ॥ ए ॥ तदेषां प्रथमं ताव—त्परीक्षणीया दया मया ॥ ध्यात्वेति
त्रीनसौ चक्रे । सत्याभान् पिष्टकुक्कुटान् ॥ १० ॥ दत्वा कुक्कुटमेकैकं । शिष्यानित्यादिदेश
सः ॥ भो अमून् हत तत्रैव । यत्र कोऽपि न पश्यति ॥ ११ ॥ वसुपर्वतकौ गत्वा । विभिन्नौ
विजने वने ॥ जघ्नतुः कुक्कुटं स्वं स्वं । सकृत्या सह निर्दयौ ॥ १२ ॥ नारदः शारदशशि—
ज्योत्स्नाधवलधीधनः ॥ रहो गत्वा पुरो मुक्त्वा । कुक्कुटं चेत्यचिंतयत् ॥ १३ ॥ गुरुणा दारु-
णं कर्म । हा वयं किमु कारिताः ॥ हंति को हंत निर्मंतून् । जंतूनेवं सचेतनः ॥१४॥ यद्वा
कस्याप्यनालोके । घात्योऽमिति जल्पतः ॥ जातं न वध्य एवेति ।तत्वं तस्य गुरोर्गिरः ।१५।
यतः पश्यत्यसौ पश्या—म्यहं पश्यन्ति चिन्मयाः ॥ नास्ति तत्किंचन स्थानं । यत्र कोऽपि
न पश्यति ॥ १६ ॥ अहो अज्ञानमोहांधै—र्वृथा स्वमतिकल्पनात् ॥ अन्यथैव विचार्यंते ।
गंभिरार्था गुरोर्गिरः ॥ १७ ॥ कृपालुर्गुरुरस्माकः । शंके शिष्यान् परीक्षितुं ॥ इत्यादिशदिति

ध्यात्वा । तेन नाघाति कुक्कुटः ॥ १८ ॥ व्यावृत्य तद्घातस्य । हेतुं विज्ञापयन्नयं ॥ गु-
रुणा निश्चितस्वर्ग—गतिः प्रीतेन सस्वजे ॥ १९ ॥ हतः कुक्कुट इत्युक्ते । वसुपर्वतयोर्गुरुः
॥ युवां पठितमूर्खौ रे धिगित्याक्षेपमातनोत् ॥ २० ॥ सोऽथ दध्यौ मयि गुरौ । प्रातेऽप्येता-
वधोगती ॥ राजवैद्योऽपि हि क्षीणा—युषि यद्वा करोतु किं ॥ २१ ॥ साधारणापि हि गु-
रो—र्वाणी पात्रविशेषतः ॥ पृथक्फला स्यादम्भोदा—दिव वृष्टिः पृथग्रसा ॥ २२ ॥ इयान-
ध्यापनायासो । ममासीदनयोर्वृथा ॥ वृष्टिर्जलधरस्येव । मांसलस्थलमूर्धनि ॥ २३ ॥ अवेद्य-
व्येषु गुरूपदेशा—द्गुणो बहिः कोऽपि न वास्तवस्तु ॥ सौधाश्रयास्स्याद् गृहगोधिकापि ।
। त्वङ्मात्रशुभ्रा न पुनर्दयालुः ॥ २४ ॥ एतावत्यंतसोमालौ । समितानिर्मिताविव ॥ सहि-
ष्येते हहा तीक्ष्ण—नारकीया कथं व्यथा ॥ २५ ॥ नरकार्त्तिनिदानैस्त—द्गृहारंभैरलं मम
॥ निर्वेदादित्युपाध्याय—श्चारित्रं स्वीचकार सः ॥ २६ ॥ तत्पदं पालयामास । पर्वतः सर्वतृ-
प्तिकृत ॥ नारदः पारदर्शी च । शास्त्रस्यागाद्ययारुचि ॥ २७ ॥ अग्निचंद्रोऽपि भूपालः । काले
दीक्षामुपादित ॥ वसुर्वसुमतीभारं । बभार पितृवत्ततः ॥ २८ ॥ सत्यवादीति स प्राप ।

ख्यातिं क्षितितलेऽखिले ॥ ख्यातेरेवानुरोधेन । बज्राषे न मृषा कचित् ॥ २९ ॥ इतश्च श-
बरः कोऽपि । विंध्याटव्यां मृगंप्रति ॥ बाणं मुमोच बाणस्तु । स्खलितोऽपतदंतरा ॥ ३० ॥
बाणस्य स्खलने हेतुं । मार्गयन् शबरः पुरः ॥ आकाशस्फटिकशिलां । पाणिस्पर्शादबुध्यत
॥ ३१ ॥ ध्यातवांश्च मयादर्शि । मृगोऽस्याः परतश्चरन् ॥ विना स्पर्शेण दुर्ज्ञेया । योग्येयं व-
सुभूपतेः ॥ ३२ ॥ ततोऽसौ बन्नमागत्य । शिलां विज्ञापयद्वसोः ॥ सोऽपि तस्मै धनं दत्वा
। आहृयामास तां शिलां ॥ ३३ ॥ घटयित्वा तया शिल्प—वेदिन्निर्वेदिकां नृपः ॥ व्यापाद्य
तान्निजं सिंहा—सनं तदुपरि न्यधात् ॥ ३४ ॥ सत्यप्रभावतो व्योम्नि । राज्ञः सिंहासनं
स्थितं ॥ अमु सत्येन सेवंते । देवाश्चेत्यवदज्जनः ॥ ३५ ॥ प्रसिध्ध्यैव तया तस्य । दंडं दद-
दिरे परे ॥ प्रसिध्ध्यैव जगज्जैत्रः । कामः पुष्पायुधोऽपि हि ॥ ३६ ॥ इयाय नारदोऽन्येद्युः ।
प्रीत्या पर्वतकालयं ॥ व्याचष्टेस्म तदा सोऽपि । ऋग्वेदं निजसंसदि ॥ ३७ ॥ अजैर्यष्टव्यमि-
त्यत्र । तस्मिन् मेषार्थभाषिणि ॥ आः शांतं पापमित्युक्त्वा । नारदः पिदधे श्रुती ॥ ३८ ॥
ऊचे च किमिदं भ्रात—र्भ्रांतेनेव त्वयोच्यते ॥ अजांस्त्रिवार्षिकान् व्रीहीन् । व्याचष्टेस्म तदा

ख्यातिं क्षितितलेऽखिले ॥ ख्यातेरेवानुरोधेन । वक्राषे न मृषा क्वचित् ॥ २९ ॥ इतश्च शा-
बरः कोऽपि । विंध्याटव्यां मृगंप्रति ॥ बाणं मुमोच बाणस्तु । स्खलितोऽपतदंतरा ॥ ३० ॥
बाणस्य स्खलने हेतुं । मार्गयन् शबरः पुरः ॥ आकाशस्फटिकशिलां । पाणिस्पर्शादबुध्यत
॥ ३१ ॥ ध्यातवांश्च मयादर्शि । मृगोऽस्याः परतश्चरन् ॥ विना स्पर्शेण दुर्ज्ञेया । योग्येयं व-
सुभूपतेः ॥ ३२ ॥ ततोऽसौ छन्नमागत्य । शिलां विज्ञापयद्वसोः ॥ सोऽपि तस्मै धनं दत्वा
। ग्राहयामास तां शिलां ॥ ३३ ॥ घटयित्वा तया शिल्प—वेदिन्निर्वेदिकां नृपः ॥ व्यापाद्य
तान्निजं सिंहा—सनं तदुपरि न्यधात् ॥ ३४ ॥ सत्यप्रनावतो व्योम्नि । राज्ञः सिंहासनं
स्थितं ॥ अमुं सत्येन सेवंते । देवाश्चेत्यवदज्जनः ॥ ३५ ॥ प्रसिध्ध्यैव तया तस्य । दंकं दद-
दिरे परे ॥ प्रसिध्ध्यैव जगज्जैत्रः । कामः पुष्पायुधोऽपि हि ॥ ३६ ॥ इयाय नारदोऽन्येद्युः ।
प्रीत्या पर्वतकालयं ॥ व्याचष्टेस्म तदा सोऽपि । ऋग्वेदं निजसंसदि ॥ ३७ ॥ अजैर्यष्टव्यमि-
त्यत्र । तस्मिन् मेषार्थनाषिणि ॥ आः शांतं पापमित्युक्त्वा । नारदः पिदधे श्रुती ॥ ३८ ॥
ऊचे च किमिदं भ्रात—र्भ्रांतेनेव त्वयोच्यते ॥ अजांस्त्रिवार्षिकान् व्रीहीन् । व्याचष्टेस्म तदा

गुरुः ॥ ३९ ॥ मास्मभून्मय्यविश्वासो—ऽमीषामंतिषदामिति ॥ स्मरन्नपि गुरूक्तं तं । पर्वतो गर्वतोऽन्यधात् ॥ ४० ॥ नारद त्वमसि भ्रांत—स्तन्मां भ्रांतं प्रजल्पसि ॥ निघंटुः खलु साक्ष्यस्ति । गुरोर्मेषार्थभाषिणः ॥ ४१ ॥ नारदोऽवग्द्विधा शब्दा । मुख्यगौणार्थवाचिनः ॥ गुरुरूचेऽत्र गौणार्थं । न हि जायंत इत्यजाः ॥ ४२ ॥ निघंटूक्त्यैव शब्दार्थः । प्रमाणं यदि धीमतां ॥ तत्किं गुरुर्विधीयेत । कः सार्थः सरलेऽध्वनि ॥ ४३ ॥ गुरुर्धर्मोपदेष्टा स । श्रुतिरेषा च धार्मिकी ॥ लुपन्नेतद् द्वयं लोक—द्वयं लुंपसि पर्वतः ॥ ४४ ॥ साक्षेपं पर्वतः प्राह । शुष्कवादेन किं वृथा ॥ स्वस्वपक्षंव्यलीकरवे । जिह्वाछेदः पणोऽस्तु नौ ॥ ४५ ॥ प्रमाणमावयोरत्र । सहाध्यायी वसुर्नृपः ॥ तच्छ्रुत्वा भुवनव्यापी । छात्रैः कोलाहलः कृतः ॥ ४६ ॥ अक्षोभः सत्यभाषित्वा—दोमित्युक्त्वा च नारदः ॥ ययौ केनापि कार्येण । पुरस्यांतः प्रशांतधीः ॥ ४७ ॥ रहः पर्वतकं प्रोचे । जननी स्नेहविह्वला ॥ अजा व्रीहय इत्येवं । मयापि त्वत्पितुः श्रुतं ॥ ४८ ॥ कुलकूलंकषोऽकारि । कोऽयं वत्स पणस्त्वया ॥ पक्षो व्यभिचरत्येव । कूटः कृत्रिमरत्नवत् ॥ ४९ ॥ वत्स नारदमाकार्य । क्षमयस्वाधुनापि तत् ॥ अजीर्णमिव रो-

गाणां । मूलं सर्वापदामदः ॥ ५० ॥ सोऽवदत्किं त्वयं मात-र्जातस्य हि मृतिर्ध्रुवा ॥ पुंसां हि म्लानमानानां । प्राणाः पापफलं खलु ॥ ५१ ॥ उक्तमनुक्तं कुर्वंतः । शोच्यंते किल बालकाः ॥ उक्तमेतन्मया तात्र-द्यन्नाव्यं तद्भवत्वथ ॥ ५२ ॥ शिक्षितोऽपि यदा स्वात्मा-न्निनिवेशं जहौ न सः ॥ तदा तदापदं नेत्तु-कामांबा वसुमभ्यगात् ॥५३॥ तां प्रणम्य वसुः प्रोचे । चंचद्रोमांचकंचुकः ॥ स्वागतं स्वागतं मातः । प्रसादोऽयं महान् मयि ॥ ५४ ॥ दृष्टोऽद्य त्वयि दृष्टायां । गुरुः क्षीरकदंबकः ॥ किमागतासि सहसा । ब्रूहि किं च ददामि ते ॥ ५५ ॥ चिरं जीव चिरं नंदे—त्याशास्य तमुवाच सा ॥ यथा पश्यामि जीवंतं । पुत्रं राजंस्तथा कुरु ॥ ५६ ॥ वसुरूचे सतीर्थ्यत्वा-न्मम बंधुः सुतस्तव ॥ गुरुश्च गुरुपुत्रत्वा-द्रुद्र द्वेष्टि तमद्य कः ॥ ५७ ॥ प्रातर्विवादायेहार्थ-मिहोपस्थितयोस्तयोः ॥ अजान् त्राषस्व मेषार्था-निति प्रार्थयतेस्म सा ॥ ५८ ॥ वसुः स्माह कचिन्नाहं । मिथ्या वच्मीति विश्रुतं ॥ कूटसाक्ष्ये गुरूक्तेश्च । विपर्यसेऽत्र का कथा ॥ ५९ ॥ म्लेछान्नमिदमुछिष्टं । चांडालीयं रजस्वला ॥ इदं विट्शूकरीक्षीरं । हालाहलविमिश्रितं ॥ ६० ॥ विष्टिरेषा व्यतिपाते । केतुरेषोऽग्निमंडले ॥

धदियं जीवघातेन । दूषिता कूटसाक्षिता ॥ ६२ ॥ सा प्रोवाच विचारेण—मुनालं वत्स
वत्सल ॥ पुण्यं ते जंतुरक्षाया—मृषोक्तेस्त्वघमस्तु मे ॥ ६३ ॥ इति गाढाग्रहान्मेने । तद्वचो
वसुभूपतिः ॥ यः शशीनिरिव क्षीणि—र्न जिह्मो भूतले स कः ॥ ६४ ॥ अद्य क्षियां मया-
धारि । सर्वतः पर्वतः पतन् ॥ दृप्यंतीति वसोः काल—रात्रिः सागाद् गृहं ततः ॥ ६५ ॥
रवौ प्रातवसौ प्रात—र्वसौ संसदमागते ॥ गतौ विवदमानौ तौ । तत्र नारदपर्वतौ ॥६६॥
ताभ्यां तारस्वरं राज्ञः । स्वस्वपक्षे निवेदिते ॥ सभ्या विज्ञापयामासु—र्वसुं माध्यस्थशा-
लिनं ॥ ६७ ॥ वसो वसुमती सेयं । सत्यार्थाद्य त्वया कृता ॥ आबालकालतस्त्वं च । ना-
मुंचः सुनृतं व्रतं ॥ ६८ ॥ सत्यादेवानिशं देवाः । सेवाहेवाकिनस्त्वयि ॥ तैरेव धार्यते देव ।
व्योम्नि सिंहासनं तव ॥ ६९ ॥ लुपत्यब्धिर्न मर्यादां । काले वर्षति वारिदः ॥ भास्वानुदेति
दिव्ये च । शुद्धिः स्याद् भुवि सत्यतः ॥ ७० ॥ अंभोदानमिवांभोधौ । वृथा त्वय्युपदेशवाक्
॥ स्वयं विज्ञोऽसि तद्वादं । सत्योक्त्या शमयानयोः ॥ ७१ ॥ अश्रुत्वेव वचस्तेषां । तां ख्या-
तिमवधूय च ॥ व्याख्यद्गुरुरजान्मेषा—निति साक्ष्यं ददौ वसुः ॥७२॥ स्वाधश्चिक्षेप पापो-

ऽथ—मामित्यनुशयादिव ॥ पुस्फोट स्फाटिकी वेदि—श्चदिनाथस्य तत्क्षणात् ॥ ७३ ॥ कुपि-
ता देवता सिंहा—सनात्तमपातयत् ॥ को हि कल्पतरोर्मूर्ध्नि । सहते वायसस्थितिं ॥७४॥
सर्वधर्मपरिभ्रष्टो । न द्रष्टुमुचितो भवान् ॥ नारदोऽपीति तं निंद—न्नमंदं निरगात्ततः ॥
॥ ७५ ॥ रे मूढ मूढमंत्रेण । किमकार्षीर्जनैरिति ॥ निंद्यमानो न्यवर्तिष्ट । गर्वितः पर्वतश्च्युतः
॥ ७६ ॥ वसुश्चपेटाघातेन । राजदेव्या हतो रयात् ॥ दुरितैः कृतसाहाय्यः । सप्तमं नरकं य-
यौ ॥ ७७ ॥ यो यः सूनुरुपाविक्ष—त्पट्टे तस्यापराधिनः ॥ स स देवतया जघ्ने । यावदष्टाव
नुक्रमात् ॥ ७८ ॥ न भुक्तमाजन्म कदापि भुक्त—मंते विषं हंति यथा मनुष्यं ॥ कदाप्यनु-
क्ता वितथा तथा गी—रुक्तावसाने वसुमाजघान ॥ ७९ ॥ इति द्वितीयव्रते वसुनृपकथा स-
माप्ता. ॥ इदं च व्रतं प्रपन्नेन पंचातिचारा वर्ज्याः, तद्यथा—सहसाभ्याख्यानं, रहसाभ्या-
ख्यानं, स्वदारामंत्रभेदः, मृषोपदेशः, कूटलेखकरणं च. तत्र सहसानालोच्याभ्याख्यानमसद्दो-
षारोपणं यथा चौरस्त्वमित्यादि. रहसा हेतुभूतेनाभ्याख्यानं यथा रहसि मंत्रयमाणान् वीक्ष्य
वक्ति ज्ञातं मयामी राजविरुद्धादिकं मंत्रयंते इति. नन्वनयोरन्योन्यं को विशेषो द्वयोरप्य-

अभ्याख्यानरूपत्वादुच्यते—रहोऽभ्याख्यानं रहोनिमित्तं वितर्क्याऽभ्याख्येयार्थस्याभिधानं, इतरं त्ववितर्कपूर्वमेवेति विशेषः. नन्वभ्याख्यानमसद्दोषोक्तिरूपत्वान्मृषावाद एव, अतस्तद्भिधानेन व्रतभंग एव, कुतोऽतिचारता? सत्यं, किंतु यदा परोपघातकमनाभोगादिनाभिधत्ते, तदा संक्लेशाभावेन व्रतसापेक्षत्वान्न तद्भंगः, परोपघातहेतुत्वात्तु भंगः, इति भंगाभंगरूपो ह्यतिचार इति. यदा तु तीव्रसंक्लेशादभ्याख्याति तदा भंग एव व्रतनिरपेक्षत्वात्. आह च—सहसब्भक्खाणाइ । जाणंतो जइ करेइ तो भंगो ॥ जइ पुण अणाभोगाइ—हिंतो तो होइ अइयारो ॥ १ ॥ तथा स्वदाराणामुपलक्षणत्वान्मित्रादीनां च मंत्रो विश्रंभोक्तिस्तस्य भेदः प्रकटनं, अयं चानुवादरूपत्वेन सत्यत्वाद्यद्यपि नातिचारस्तथापि मंत्रितार्थप्रकाशनाल्लज्जितस्य स्वदारादेर्मरणादिसंभवाद्वस्तुतस्तस्यासत्यता. 'तं सच्चंपि न सच्चं । जं परपीडाकरं वयणमिति' वचनात्. अतः कथंचिद्भंगातिचारः. मृषोपदेश इदमेव ब्रूहीत्यादिका सत्योक्तिशिक्षा, अस्य च नाहं मृषा वच्मि, किंतु तदुपदेशमेव ददामीति धियानाभोगादिना वा निधीयमानस्यातिचारता. कूटलेखकरणं प्रतीतं, इहापि मृषाभाषणमेव मया

प्रत्याख्यातमिदं तु लेखनमिति नावनया मुग्धस्य व्रतसव्यपेक्षस्यातिचारता. अत्र नावनागाथा—कयअज्जवनावाणं । नमामि निच्चं च सव्वसंघाणं ॥ सव्वेसिं साहूणं । चिंतेयव्वं च हियएण ॥ १ ॥ उक्तं सदृष्टांतं द्वितीयव्रतं. इदानीं तृतीयव्रतमाह—

॥ मूलम् ॥—तइयवयंमि चइज्जा । सचित्ताचित्तथूलचोरिक्कं ॥ तिणमाइतुणुअतेणिय—मेसो पुण मोतुमसमत्थो ॥ ३३ ॥ व्याख्या—तृतीयव्रतेऽदत्तादानविरतिरूपे सचित्तं द्विपदचतुष्पदादि, अचित्तं सुवर्णरूप्यादि, उपलक्षणत्वादलंकृतिस्त्रीप्रनृतं च मिश्रवस्तु तद्विषयं स्थूलं स्थूलबुद्धीनिरपि निंद्यत्वाच्चौरव्यपदेशहेतुत्वाद्वा चौर्यं त्यजेत्. तर्हि सूक्ष्मस्य का वार्तेत्याह—तृणं नखादिशलाका तदादिकं, आदिशब्दान्नदीजलवनकुसुमकरीषेंधनादिकं, सूक्ष्मं सूक्ष्मवस्तुविषयत्वात्सूक्ष्मेक्षिनिस्त्याज्यत्वाद्वा स्तैन्यं चौर्यमेष गृहस्थो मोक्तुमसमर्थः, तद्विना मार्गादौ चतुष्पदादीनां निर्वाहानावात्. अथैतच्चौर्यं यावद्भिः प्रकारैस्त्याज्यं नवति तथाह—

॥ मूलम् ॥—नासीकयं निहिगयं । पडियं वीसारियं ठियं नट्ठं ॥ परअत्थं हरंतो ।

नियअत्थं को विणासेइ ॥ ३४ ॥ व्याख्या—न्यासीकृतं स्थापनिकायां मुक्तं, निधिगतं निधानस्थं, पतितं स्वभावाद्भ्रष्टं, विस्मारितं क्वचिदनवधानतया, स्थितं धनस्वामिनो मरणात् केनापि न गृहीतं, नष्टं गतं, एतावद्भिः प्रकारैः परार्थं द्रव्यं हरन्निजं सकलसंपत्संपादनक्षममर्थं पुण्यलक्षणं कः सचेतनो विनाशयति? अपि तु न कोऽपीत्यर्थः. परार्थग्रहणे न केवलं तृतीयव्रतभंगः किंत्वाद्यव्रतभंगोऽपीत्याह—

॥ मूलम् ॥—जं पइ ममत्ति जंपइ। तं तं जीवस्स बाहिरा पाणा ॥ तिणमित्तंपि अदिन्नं। दयालुउ तो न गिह्णेइ ॥ ३५ ॥ व्याख्या—यद्वस्तु सचित्ताचित्तमिश्रप्रति प्राणीदं ममेति जल्पति तद्वस्तु जीवस्य बाह्याः प्राणा भवंति, द्विविधा हि प्राणाः—आभ्यंतरबाह्याश्च, तत्राभ्यंतराः श्वासादयः, बाह्यास्तु ममत्वकारणं कनकादयः, तन्नाशस्य प्राणनाशस्येव दुःखहेतुत्वात्. यत एवं ततो दयालुः प्रत्याघातप्राणिवधस्तृणमात्रमप्यदत्तं परकीयं वस्तु न गृह्णाति, इति हार्दं. यद्गृहिणोऽदत्ततृणादिग्रहणमनुज्ञातं तन्मार्गादौ निःस्वामिकतृणाद्यपेक्षं, इह तु तन्निषेधः स स्वामिकापेक्षो द्रष्टव्यः. दृश्यते हि परसंचितं तृणादिकमप्य-

दत्तं गृह्णतश्चौरवद्वधबंधनादिकं लजते, ततः परपरिगृहीतं तृणादिमप्यदत्तं गृहिणा न गृहीतव्यमिति गाथार्थः. अथ ये विचारवंध्यचेतसश्चौर्येण श्रियमिच्छंति तान्प्रत्याह—

॥ मूलम् ॥—कुलकित्तिकलंककरं । चोरिक्कं मा करेइ कइयावि ॥ इह वसणं पचरकं । संदेहो अत्थलाजस्स ॥ ३६ ॥ व्याख्या—स्पष्टा, नवरं व्यसनं कारानिवासवधबंधनकरकर्तनादिदुःखं. किंच—

॥ मूलम् ॥ काऊण चोरवित्तिं । जे अबुहा अहिलसंति संपत्तिं ॥ विसजरकणेण जीविय—मिछंता ते विणासंति ॥ ३७ ॥ व्याख्या—सुबोधा. अत एव—

॥ मूलम् ॥—ते धन्ना सप्पुरिसा । जेसिमणो पासिऊण परभूइं ॥ एसा परभूइ चिय । एवं संकप्पणं कुणइ ॥ ३८ ॥ व्याख्या—ते धन्याः सुकृतिनः सत्पुरुषाः परकीयां भूतिं वित्तं दृष्ट्वा येषां मन एषा गृह्यमाणा मती वधबंधनादिकारणत्वात्पराजूतिः पराजव एव जवति च, कारणे कार्यव्यपदेशः. यथायुर्धृतमायुरेवेदमिति, एवं संकल्पनमुत्तरकालचिंतनं करोति, ततश्च पराजूतेरिव परजूतेरपि दूरीजवंतीत्यर्थः. अथ चौरस्य फलमाह—

॥ मूलम् ॥—वहबंधरोहमच्चु । चोरिक्काउ हवंति इहलोगे ॥ नरयनिवायधणक्खय—दारिद्दाइं च परलोए ॥३९॥ व्याख्या–स्पष्टा, नवरं वधो लकुटादिप्रहारः, बंधो रज्ज्वादिना संयमनं, रोधश्चारकादौ, मृत्युः शिरश्छेदादिना. अथ चौर्यपरिहारस्य दृष्टांतगर्भं फलमाह—

॥ मूलम् ॥—जं इह जणपसंसाइ । परभवे सुगइमाइ होइ फलं ॥ मुक्काइ चोरियाए । तं जायं रोहिणेयस्स ॥ ४० ॥ व्याख्या—सुगमा. भावार्थस्तु कथानकगम्यः, तच्चेदं—अभूद्राजगृहे रंगे । बृहद्रंगे महोत्सवैः ॥ श्रीवीरचरणांभोज—भ्रमरः श्रेणिको नृपः ॥ १ ॥ अभयस्तनयोऽनस्त—नयस्तस्य महीपतेः ॥ दिशां मेरुरिवाशेष—बुद्धीनां प्रभवोऽभवत् ॥ ॥ २ ॥ इतश्च तत्पुरासन्न—वैभारगिरिकंदरे ॥ क्रूरो लोहखुरश्चौरो । बिले सर्प इवावसत् ॥ ॥ ३ ॥ स राजगृहलोकानां दारैरपि । धनैरपि ॥ अयत्नसिद्धकामार्थो । गमयामास वासरान् ॥४॥ भार्यायां तस्य रोहिण्या—मिदंचरस्येव गोवृषः ॥ रोहिणेयोऽभवत्पुत्रः । क्रौर्येण जनकाधिकः ॥ ५ ॥ प्राप्ते मृत्युक्षणे पुत्र—माकार्येति जगाद सः ॥ वत्स वांछसि चेच्छिक्षां । तत्प्रेम्णा वच्मि किंचन ॥ ६ ॥ त्वच्छिक्षायां श्रियां दुःस्थ । इवोत्कोऽस्मीति भाषिणं ॥ तनयं पाणिना

पृष्टे । स्पृशं लोहखुरो जगौ ॥ ७ ॥ योऽसौ वप्रत्रयांतःस्थो । वीरो वक्ति मृडूक्तिभिः ॥ मा
तस्य वचनं श्रौषी—स्तद्धि दारुणमायतौ ॥ ८ ॥ एवमाशिष्य तनयं । स्वयं पंचत्वमाप सः ॥
पितुः शिक्षां स्मरन्नित्यं । चौर्यं लोहखुरिर्व्यधात् ॥ ए ॥ स्वपादैः पावयन् पृथ्वीं । श्रीवीरप्र-
भुरन्यदा ॥ पुरं राजगृहं प्राप । दिवाकर इवांबरं ॥ १० ॥ तत्र वप्रत्रयं देवै—र्व्यधीयत च-
तुर्विधैः ॥ त्रिलोकीसारसर्वस्व—मिवैकत्र समाहृतं ॥ ११ ॥ धर्मचक्रेश्वरश्चक्रे । तत्र सद्धर्म-
देशनां ॥ श्रोतसेव सुधासिंधो-र्वाचा माधुर्यधुर्यया ॥ १२ ॥ रोहिणेयस्तदास्तैन्य-गृद्धो रा-
जगृहं व्रजन् ॥ उपसमवसरण—मायातो दध्यिवानिति ॥ १३ ॥ यद्यनेन पथा यामि। जैनीं
वाचं शृणोमि तत् ॥ न चान्यो विद्यते पंथा । पतितः संकटेऽस्म्यहं ॥ १४ ॥ यदि वालं वि-
षयेत्यं—गुल्यौ स श्रुतिरंध्रयोः क्षिप्त्वा तत्राचलद्वैरि—त्रुवीव त्वरितैः पदैः ॥ १५ ॥ अ-
त्यंतीनस्य तस्यांह्रौ । गाढोऽजज्यत कंटकः ॥ शशाक तमनाकृष्य । न गंतुं पदमप्यसौ ॥१६॥
अवश्यमद्य दैवस्य । यत्नो मद्व्रतखंडने ॥ ध्यात्वेत्यनिभ्रुरप्येकां । स चकर्षांगुलीं श्रुतेः ॥१७॥
अंगुल्योद्धरतस्तस्य । शल्यं शल्यविशोधिनी ॥ गीर्वाणवर्णिका वीर—वाणीति श्रुतिमाययौ

॥ १७ ॥ देवाः स्युर्निर्निमेषाक्षा । मनश्चिंतितसाधकाः ॥ अम्लानपुष्पदामानः । पादैरस्पृष्ट-
भूमयः ॥ १९ ॥ ही बहु श्रुतमित्येष । रयेणोध्धृत्य कंटकं ॥ पिधाय कर्णमंगुल्या । ययौ रा-
जगृहं पुरं ॥ २० ॥ नागरांस्तत्र स स्वैरं । मुषित्वा प्राविशत्पुनः ॥ क्षेत्रमुत्खाय भूदार । इव
कुंजं गिरेर्गुहां ॥ २१ ॥ पादादुद्धरतः शैल्यं । श्रुतौ शल्यं दुरुद्धरं ॥ ममाविशदिति ध्याय-
न्नित्यं दोडूयतेस्म सः ॥ २२ ॥ तिक्तायते पित्तिनि शर्करापि । क्षारायते सज्जलमब्धिमीने ॥
दोषायते घूकदृशो रहःश्रीः । शल्यायते पापिनि जैनवाणी ॥ २३ ॥ अथानाथमिवाजस्रं । त-
स्मिन्मुष्णति पत्तनं ॥ नागरा नगराधीश—मूचिरेऽवसरे सति ॥ २४ ॥ संचिक्येऽस्माभि-
राजन्म । यन्महाक्लेशतो धनं ॥ एकवेलं सहेलं त—च्चौरैरादीयतेऽधुना ॥ २५ ॥ या मं-
क्षनं मुमूक्षाणा—मपरिग्रहता मता ॥ अनिच्छूनामपि स्तेनैः । सा नः संप्रति ढौक्यते ॥ २६ ॥
सद्मान्यासन्नपद्मानि । यन्नस्तन्नाजिदध्महे ॥ मर्त्यहानिस्त्विहानिष्टा । दृष्टा तत्किमु कुर्महे
॥ २७ ॥ कालरूपोऽथ भूपाल—स्तलारक्षमभाषत ॥ किं दायादोऽसि रे द्रव्यं । लासि लोकं
न रक्षसि ॥ २८ ॥ सोऽप्यूचे देव यः कश्चि—द्रौहिणेयोऽस्ति तस्करः ॥ दुर्निग्रहो मनुष्याणां ।

स दानव इवोदितः ॥ २९ ॥ चरन्नपि पुरे व्योम्नि । स राहुरिव नेक्ष्यते ॥ स्पृष्टोऽपि शक्यते
धर्तुं । न वायुरिव सत्वरः ॥ ३० ॥ शूलशैलशिलाशाल–शालशालादिनापि सः ॥ प्रविशन्निः-
सरन् वापि । न जंतुरिव रुध्यते ॥ ३१ ॥ तद्देव एव गृह्णातु । तलारक्षकतां निजां ॥ उक्ते ते-
नेति नृपालो–ऽन्नयस्य मुखमैक्षत ॥ ३२ ॥ स प्रोचे तात सप्ताह–मध्ये चौरं समानये ॥ नो
चेच्चौरस्य दंडेन । दंड्योऽहं किं बहूक्तिभिः ॥ ३३ ॥ पश्यन्नपि ततो यत्ना–च्चौरस्थानानि सर्व-
तः ॥ नान्नयस्तस्करं लेभे । नरकं पुण्यवानिव ॥ ३४ ॥ सायं कोलाहलाल्लोकं । निवार्य नग-
रांतरा ॥ षष्टेऽहनि बहिर्विप्रा–न्मुमुचे सोऽन्नितो नटान् ॥ ३५ ॥ तस्मिन्नह्नि चलंश्चौरो । वा-
रितोऽशकुनैरपि ॥ न तस्थौ तिष्ठति द्वीपी । चलन्नशकुनैः किमु ॥ ३६ ॥ प्रविष्टः पत्तनं लो-
कै–र्निश्चेष्टैश्चकितोऽपि सः ॥ एकतश्चौर्यमारब्धं । व्रतभंगभयादिव ॥ ३७ ॥ पदे पदे स्थितै-
र्योधै–र्मिलितैरेकहक्कया ॥ त्रासितः स पलायिष्ट । मृगो वागुरिकैरिव॥ ३८ ॥ प्राकारं विद्युदु-
त्क्षेपे–नारुह्य करणेन सः ॥ बहिः पतन् धृतो योधै–र्मेघांत्र इव चातकैः ॥ ३९ ॥ अन्नयाय
नटैः प्रात–र्दत्तस्तेनापि भूभुजे ॥ अलोप्त्र इति राज्ञापि । पृष्टः कोऽसीत्युवाच सः ॥ ४० ॥

अवधेहि महीपाल । शालिग्रामे वसाम्यहं ॥ दुर्गचंद्राख्यया राज—करदायी कृषीवलः
॥ ४१ ॥ अत्रोपयाचितं देव—ग्रहे दत्वा चिरंतनं ॥ स्वग्रामायाचलं रात्रौ । तत्राप्यत्रैव नी-
यंतः ॥ ४२ ॥ नापितोऽहं नवद्योधै—र्नीत्या वप्रं विलंघयन् ॥ बहिः पतन्नमीन्निश्च । धृत-
श्चौरधिया नटैः ॥ ४३ ॥ विचारय विचारज्ञ । चौरश्चेन्निग्रहाण मां ॥ यद्वा मयि हते जीव
—त्यन्नयश्चेत्तथा कुरु ॥ ४४ ॥ श्रुत्वेति तद्वचो नृपः । प्रत्ययाय निजं नरं ॥ तत्राशु प्राहिणो-
द्ग्रामे । दृढबंधं विधाय तं ॥ ४५ ॥ संकेतितोऽनूदग्रेऽपि । ग्रामः स्तेनाधिपेन सः ॥ मुष्ण-
न्नपि मही तस्य । पालकः पोषको ह्यसौ ॥ ४६ ॥ भूपभृत्येन तद्वार्तां । पृष्टो ग्रामो जगाद
सः ॥ सत्यमत्र वसत्येव । दुर्गचंद्रः कृषीवलः ॥ ४७ ॥ गतः स नगरं नाद्या—प्येतः केनापि
हेतुना ॥ तदुदंतमयं ज्ञातु—मातुरः सकलो जनः ॥ ४८ ॥ एत्य तेनेति विज्ञप्तो । दध्यौ श्रे-
णिकभूपतिः ॥ अहो चौरीयति ग्राम्या—नृजून् मृत्युन्नियान्नयः ॥ ४९ ॥ विज्ञाय राज्ञोऽन्नि-
प्रायं । चिंतायामन्नयोऽपतत् ॥ अस्य दंबांबुधिर्बुद्धि—नावा तार्यः कया मया ॥ ५० ॥ अथा-
सज्जयदावास—मन्नयः सप्तभूमिकं ॥ विचित्रोल्लोचमामुक्त—मुक्तामंडनमंडनं ॥ ५१ ॥ रंन्नास-

नृत्यन्नारीकं । तुंबरूपमगायनं ॥ त्रिदशाकारपुरुषं । स्वर्लोकाद्यन्न हीयते ॥ ५२ ॥ बभाषे चाभयश्चौरं । धिग्मे दुर्मतिजृंभितं ॥ गौरव्यं गुणिनं ग्राम्यं । यत्त्वामेवं व्यडंबयं ॥ ५३ ॥ तदेहि भो ममावासं । मा संशयपरो भव ॥ कृत्वा कांचन भक्तिं ते । स्वागस्त्यागं करोमि यत् ॥ ५४ ॥ सोऽपि गोमायुवन्माया—बहुलः सह मंत्रिणा ॥ गतस्तन्मंदिरं मिष्टा—हारैः प्रीतिं परां ययौ ॥ ५५ ॥ अथाभयकुमारेण । पाययित्वा स वारुणीं ॥ दत्तदिव्यांशुकस्तत्र । पल्यंके शायितः सुखं ॥ ५६ ॥ उन्मीलच्चेतनश्चौरः । पश्यंस्तद्दिव्यमंदिरं ॥ स्वं स्वर्गस्थमिवामंस्त । को वा तत्र न मुह्यति ॥ ५७ ॥ पार्श्वं पर्यस्यमानेऽस्मि—न्नरनारीगणोऽभितः ॥ उच्चचाराभयादेशा—ज्जय नंदेतिमंगलं ॥ ५८ ॥ प्राक्कृतैः सुकृतैरत्र । विमाने त्वमभूः प्रभुः ॥ किंकरास्ते वयं सर्वे । कुर्मः कर्म किमादिश ॥ ५९ ॥ इत्युक्त्वा तैः समारब्धे । समहस्तकनाटके ॥ कोऽप्याययौ पुमान् हेम—दंडहस्तोऽभयाज्ञया ॥ ६० ॥ साक्षेपमिव स प्रोचे । किं भो कुरुथ नाटकं ॥ नाद्यापि देवलोकस्य । स्थितिमेषोऽस्ति कारितः ॥ ६१ ॥ इह देवो नवोत्पन्नः । पूर्वं प्राक्तनजन्मनः ॥ पुण्यपापे स्वके वक्ति । भुंक्ते स्वर्गसुखं ततः ॥ ६२ ॥ स्थितिरे-

षा प्रभुप्राप्ति—प्रीतानां विस्मृताद्य वः ॥ तदूद्दूरे स्थ यथा सर्व—माचारं कारयाम्यमुं ॥ ६३ ॥ भो नव्यदेव निर्व्याजं । समतीतस्य जन्मनः ॥ निगद्य पुण्यपापे स्वे । भुंक्ष्व स्वर्गसुखान्यनु ॥ ६४ ॥ रौहिणेयस्तदा दध्यौ । किं स्वर्गोऽयं यथातथः ॥ किं वा कोऽपि प्रपंचोऽय—मभयस्य मदर्थने ॥ ६५ ॥ धीरधीरथ सोऽस्मार्षीत् । कंटकोद्धरणे श्रुतां ॥ वार्णिकामिव गीर्वाण—तत्वस्य भगवद्गिरं ॥ ६६ ॥ ततोऽसौ स्वं च तांश्चापि । भुलोके भूस्थितक्रमान् ॥ म्लानमाल्यान्मिलन्नेत्रा—नमनोऽभीष्टसाधकान् ॥ ६७ ॥ वीरवाक्यस्य तेषां च । पूर्वापश्चिमयोरिव ॥ भेदं निरीक्ष्य सोऽबोधि । तत्सर्वं दंभमाभयं ॥ ६८ ॥ किं भो ध्यायसि सर्वोऽपि । देवलोकोऽयमुत्सुकः ॥ स्वं वृत्तं वद विश्वस्त—स्तेनेत्युक्तो जगाद सः ॥ ६९ ॥ जिनानपूजयं साधू—नसेविषि दयां व्यधां ॥ पात्रेभ्योऽन्नाद्यदां चैत्या—न्यकार्षं प्राग्भवेष्वहं ॥ ७० ॥ वेत्र्यूचे जन्मिनां जन्म । याति नैकस्वभावतः ॥ सैन्यं स्त्रीलोलताद्यं स्यात् । किंचित्कस्यापि दूषणं ॥ ७१ ॥ तत्पुण्यमिव निःशंकं । दुष्कर्मापि कृतिन् वद ॥ न हि प्राप्तापि दिव्यश्री—रेषा मायिषु तिष्ठति ॥ ७२ ॥ इति श्रुत्वावदद्रौह—खुरिः प्रवरकैतवः ॥ अहो मति-

भ्रमः कोऽयं । दिव्यज्ञानवतस्तव ॥ ७३ ॥ साधुसेवाकृतः श्राद्धाः । किमीदृक् कर्म कुर्वते ॥ कुर्वते वा ततः स्वर्गं । लभंते कथमीदृशं ॥ ७४ ॥ कर्पूर इव दौर्गंध्यं । सितायामिव तिक्तता ॥ मयि नास्ति मनाक् पापं । किं पृछसि पुनः पुनः ॥ ७५ ॥ जवन्यंतरितः श्रुत्वा । तत्सर्वं श्रेणिकांगजः ॥ रोषदष्टाधरोऽप्यस्य । प्राशंसन्मतिकौशलं ॥ ७६ ॥ अभ्येत्यालिंग्य तं चिभग्न—मना इव जजल्प सः ॥ निर्जितोऽस्मि न केनापि । जिग्ये वीरत्वया पुनः ॥ ७७ ॥ चिलमेतन्महद्यत्त्वं । मयापि न निगृह्यसे ॥ कोऽत्र हेतुरिति प्रीत्या—भयेनोक्तोऽभ्यधत्त सः ॥ ७७ ॥ श्रीवीरोक्तीर्वहन्नाहं । निगृह्योऽत्र किमद्भुतं ॥ यत्त्वं प्रापयसि स्वर्गं । मद्यपानात्तदद्भुतं ॥ ७९ ॥ एवं त्वयि धियां धाम्नि । दिवं दिशति लीलया ॥ स्वर्गप्रदं तपःक्लेशैः । कः श्रीवीरं निषेवतां ॥ ८० ॥ मा मां लज्जय मर्मोक्त्या । भ्रातर्वद यथातथं ॥ चौरस्यापि कथं जाता । वीरगी रक्तिका तव ॥ ८१ ॥ एवं पृष्टः ससौहार्द—मभयेन निजां कथां ॥ स सर्वामादितोऽवादीत् । प्रीतेर्गोप्यं न किंचन ॥ ८२ ॥ ऊचे च यदि नाश्रोष्यं । तदा वाचं जगद्गुरोः ॥ तत्त्वया छलितः कां कां । नाप्स्यावाप्स्यं विडंबनां ॥ ८३ ॥ यस्यैकेनापि वाक्येन ।

शरीरी रक्ष्यते क्षतेः ॥ श्रुतस्तस्यागमः सर्वः । कथं नाक्षयसौख्यदः ॥ ७४ ॥ धिक् तदा ज-
नकब्रह्म—वैरिणा वंचितस्य मे ॥ श्रीवीरवाक्सुधा श्रुत्योः । प्रविष्टा विषतां गता ॥ श्रूयते
येषु जैनी वाक् । वासरास्ते सुवासराः ॥ नेतुं संयमनीमन्ये । मन्ये कीनाशकासराः ॥ ७६ ॥
तत्संप्रत्यभयत्रातः । सर्वं लोप्त्रं प्रदर्श्य ते ॥ जिघृक्षे वीरपादांते । दांतेन मनसा व्रतं ॥ ७७ ॥
अथाभयेन निन्येऽसौ । संसदं मगधेशितुः ॥ स्वस्यायं मन्यते स्तैन्य—मदैन्यमिति चोच्यते
॥ ७७ ॥ तं वध्यमादिशन् राजा—भयेनैवं न्यवार्यत ॥ तात यद्येष मुच्येत । लोप्त्रं प्रत्यर्पये-
त्तदा ॥ ७९ ॥ बंधूकृत्य मया चायं । गृहीतो न पुनर्धिया ॥ दीक्षां जिघृक्षते चैष । तन्न
निग्रहमर्हति ॥ ७० ॥ गतो गौरवितो लोह—खुरिर्लोप्त्रमदीदृशत् ॥ यथा स्वमर्पयामास ।
पौराणां तच्च भूपतिः ॥ ७१ ॥ ततः श्रेणिकराजेन । कृतनिष्क्रमणोत्सवः ॥ त्यक्तदारपरिवारः
। स्तूयमानश्च नागरैः ॥ ७२ ॥ रौहिणेयः प्रभोः पार्श्वे । जग्राह विधिना व्रतं ॥ तेपे तपां-
सि भूयांसि । स्वदुश्चरितशुद्धये ॥ ७३ ॥ युग्मं ॥ दोषाकरे त्यक्तकलंकपंके । विमुच्य ताते
किल चित्तरंगं ॥ यः संगतिं वीररवेर्व्यधत्त । स रौहिणेयो बुध एव सत्यं ॥ ७४ ॥ उन्मार्ग-

चर्यां परिहृत्य सत्य—माहत्य मार्गं चरणैकचित्तः ॥ काले प्रपद्यानशनं मुनीशः । स रौहिणेयस्त्रिदिवं जगाम ॥ ए५ ॥ इति तृतीयव्रते रौहिणेयकथा॥ अत्रापि व्रते पंचातिचारा वर्ज्याः, तद्यथा–१ स्तेनाहृतं, २ तस्करप्रयोगः, ३ विरुद्धराज्यगमनं, ४ कूटतुलाकूटमानकरणं, ५ तत्प्रतिरूपव्यवहारश्च. तत्र स्तेनैरपहृत्यानीतं वस्तु गृह्णन् लोके चौर इत्युच्यते, यदाहुः—चौरश्चौरापको मंत्री । भेदज्ञः काणकः क्रयी ॥ अन्नदः स्थानदश्चैव । चौरः सप्तविधः स्मृतः ॥ १ ॥ तदिष्टं चौर्यंकरणाद्वाणिज्यमेवेदं क्रियते, न चौर्यमिति व्रतसापेक्षत्वाच्च प्रथमोऽतिचारः स्तेनाहृतं. तस्कराणां प्रयोगः—किमिदानीं निर्व्यापारी अध्वनि शंबलाद्यमहं वो दादास्यामि, युष्मदानीतं च वस्तु विक्रेष्ये इति व्यापारणं तस्करप्रयोगः. अत्रापि वस्तुतो व्रतभंगान्नाहं चार्यं करोमीति सापेक्षत्वाच्चातिचारता. विरुद्धं स्वामिना गमनाय निषिद्धं राज्यं तत्र लोभाद्गमनं विरुद्धराज्यगमनं, अत्र हि स्वस्वामिनाननुज्ञातस्य ( सामीजीवादत्तं । तित्थयरेण तहेव य गुरुहिं ॥ एयस्स उ जा विरई । अदिन्नदाणस्स सा विरई ) इति चौर्यलक्षणयोगाच्चौरदंडार्हत्वाच्च व्रतभंगेन वाणिज्यमेवेदं मया क्रियते, न चौर्यमिति व्रतापेक्षया-

तिचारता. उपलक्षणत्वादन्यदपि राज्यविरुद्धं शुल्कभंगादिकं कुर्वतोऽयमेवातिचारः. तुला प्रतीता, मानं कुडवादि, तयोर्व्यवस्थापेक्षया न्यूनाधिक्यकरणं कूटतुलाकूटमानकरणं, विक्रेतव्यकुंकुमादिवस्तुना प्रतिरूपं सदृशं कुसुंभादि प्रक्षिप्यते यत्र व्यवहारे स तत्प्रतिरूपो व्यवहारः, एतौ च द्वावपि वंचनया परधनग्रहणाद्व्रतभंगरूपौ, तथापि क्षात्रखननमेव चौर्यमेषा तु वणिक्कलेति स्वकल्पनया व्रतरक्षणादतिचारतयोक्ताविति. अत्र भावनागाथा–इणमवि चिंतेयव्वं । अदिन्नदाणाउ निच्चविरयाणं ॥ समतिणमणिमुत्ताणं । नमो सया सव्वसाहूणं ॥ १ ॥ उक्तं सदृष्टांतं तृतीयव्रतं. अथ चतुर्थव्रतमाह—

॥ मूलम् ॥—उरालिय वेउव्विय । परदारासेवणं पमुत्तूणं ॥ गेही वए चउत्थे । सदारतुट्ठिं पवज्जिज्जा ॥ ४१ ॥ व्याख्या—उदारैः स्फारैः पुद्गलैर्निष्पन्नत्वादौदारिका अत्यंतनिर्मलैर्वैक्रियवर्गणांतर्गतैः पुद्गलैर्निष्पन्नत्वाद्वैक्रियाः, परे आत्मव्यतिरिक्ता नरतिर्यक्त्रिदशपुरुषास्तेषां दाराः परिणीतसंगृहीतभेदानि कलत्राणि नार्यस्तिरश्च्यो देव्यश्च. इहौदारिकाः परदारा नार्यस्तिरश्च्यो वा वैक्रियास्तु देव्यः कृतवैक्रियरूपा विद्याधर्यश्च, तासामासेवनमुपभोगं

प्रमुच्य. यद्यप्यपरिगृहीता देव्यस्तिरश्च्यश्च काश्चित्संगृहीतुः परिणेतुश्च कस्यचिदन्नावद्वेश्याकल्पा नवंति, तथापि प्रायः परजातीयोपन्नोग्यत्वात्परदारा एवेता अवस्ता अपि विवर्ज्य गेहीगृहस्थश्चतुर्थेऽब्रह्मविरतिरूपे व्रते स्वदारतुष्टिं प्रपद्येत. यथा परदारास्तथा वेश्यामपि वर्जयन् स्वदारैरेव तुष्येदित्यर्थः. तदशक्तस्तु परदारागमनं प्रत्याचक्षीत, वेश्यामुत्कलीकुर्यादित्यर्थः. तथा चागमः—परदारागमणो समणोवासर्ड पच्चरकाइ सदारसंतोसं वा पक्षिवज्जइत्ति. अथ परदारगमनदोषानाह—

॥ मूलम् ॥—डुरियगयगुरुयसाला—सु कित्तिधवलत्तधूममालासु ॥ वइरविरोयणअरणीसु । को रमइ अवररमणीसु ॥ ४२ ॥ व्याख्या—दुरितान्येव गुरुत्वात्कालरूपत्वाच्च गजा हस्तिनस्तेषामेव स्थानाय गुरुका विशालाः शाला हस्तिबंधनस्थानानि तासु दुरितगजगुरुकशालासु. तथा कीर्तेः सदाचारजनिताया धवलिताया ध्वंसाय धूममालासु. तथा वैरमेव संपादकत्वाद्विरोचनो वह्निस्तस्योत्पत्तयेऽरण्यो निर्मंथदारुणि तासु वैरविरोचनारणीषु अपररमणीषु परस्त्रीषु कः स्वहितकामो रमते? अपि तु न कोऽपीत्यर्थः. ॥ ४२ ॥ वैरहेतुतामेव तासां

समर्थयन्नाह—

॥ मूलम् ॥—जं नागदत्तदइया । रन्ना विक्कमजसेण अवहरिया ॥ बहुसु भवेसु सह तेण । तस्स तोवट्ठियं वइरं ॥ ४२ ॥ व्याख्या—यन्नागदत्तस्य श्रेष्ठिनो दयिता प्रिया राज्ञा विक्रमयशसाऽपहृता बलात्कारेण गृहीता, ततः कारणाद्बहुषु भवेषु देवमनुष्यजन्मसु तेन विक्रमयशोजीवेन सह तस्य नागदत्तात्मनो वैरं वृद्धं वृद्धिं गतमित्यक्षरार्थः, भावार्थस्तु कथानकगम्यस्तच्चेदं—

सरोवदस्ति सुरसं । श्रीकांचनपुरं पुरं ॥ यत्रेन्यसद्मपद्मानि । पद्मा नित्यं न्यषेवत ॥ १॥ तत्राभूद्विक्रमयशो । भूभुग्जैत्रो भुजौजसा ॥ यः कृपणं दधौ क्षत्र—स्थित्यैव रणकर्मणे ॥ २॥ तस्य पंचशतान्यास—न्नासन्नाः सततं स्त्रियः ॥ तथापि तासां तृप्तोऽसौ । न सिंधूनामिवोदधिः ॥ ३ ॥ ईक्षांचक्रेऽन्यदा तेन । व्रजता राजपाटिकां ॥ विष्णुश्रीर्नागदत्तेभ्य—कांता वातायनस्थिता ॥ ४ ॥ भूमिष्ठायामिवोर्वश्यां । तस्यां व्यापारितेक्षणः ॥ क्षणं पंचेंद्रियोऽप्यासी—देकेंद्रियसमो नृपः ॥ ५ ॥ वंठैः प्रावेशयद्भूमा—निमामंतःपुरं ततः ॥ दोषाकरः करैर्लक्ष्मीं ।

कैरवं कमलादिव ॥ ६ ॥ चेतनायामिवैतस्यां । हृतायां पृथिवीभुजा ॥ बभ्राम शून्यहृदयो ।
नागदत्तोऽभितः पुरे ॥ ७ ॥ अभूत्कृपा न भूपस्य । पश्यतस्तं तथाविधं ॥ यदि वानंगमातंग
—संगमे क घृणा नृणां ॥ ८ ॥ नासौ सचिवसामंतो—पदेशैः कोमलैरपि ॥ मुमोच चापलं
तापं । वाडवाग्निरिवांबुभिः ॥ ९ ॥ विरक्तः शेषयोषित्सु । रक्तस्तस्यामभून्नृपः ॥ सर्ववल्लीषु
मालत्यां । श्रद्धालुरिव षट्पदः ॥ १० ॥ लेभाते नृपतिर्विष्णु—श्रीश्च विष्णुश्रियोस्तुलां ॥ अ-
नाकृतास्ततः कोपं । गोपकन्या दधुः पराः ॥ ११ ॥ संभूताभिरथो ताभि—स्तस्यामाधायि
कार्मणं ॥ तेन तेने घुणेनेव । दारु तस्याः कृशं वपुः ॥ १२ ॥ वीक्ष्येव क्षीयमाणां ता—म-
त्याक्षुरसवः क्रमात् ॥ न कोऽपि तां मृतां वक्तु—मशकन्नृपतेः पुरः ॥ १३ ॥ छन्नं मंत्रिभि-
रुद्यानं । नीत्वा तस्याः कलेवरं ॥ नृत्याः श्वानादिरक्षार्थं । न्ययोज्यंत समंततः ॥ १४ ॥ अ-
पश्यताथ तां राज्ञा । पृष्टः सर्वः परिच्छदः ॥ चक्रे कृत्रिममुद्योगं । तद्गवेषणकर्मणि ॥ १५ ॥
कादंबिन्या इवोदंत—मविदन्निजयोषितः ॥ स व्यलापीत्कलापीव । काननायितपत्तनः ॥
॥ १६ ॥ हृदि सैव दृशोः सैव । सैव खे सैव भूतले ॥ मोहांधोऽपि ददर्शैवं । विश्वं तन्मयमेव

सः ॥ १७ ॥ यो यः सामंतमंत्र्यादि—स्तं ननाम सदःस्थितं ॥ विष्णुश्रीशब्दवाच्योऽभू—त्तस्य दुर्मनसः स सः ॥ १८ ॥ नृपः प्रहितचैतन्य । इव पत्न्याः प्रवृत्तये ॥ नाभुक्त नापिबन्नापि । निदद्रौ न चिखेल च ॥ १९ ॥ एवं दिनत्रयेऽतीते—ऽनुशिष्य वरमंत्रिभिः ॥ प्रेषितः पुरुषः कोऽपि । सदःस्थमनमन्नृपं ॥ २० ॥ चिराद् दृष्टास्ति विष्णुश्री—त्यालपंतं जनो जगौ ॥ देवाहं न हि विष्णुश्रीः । किंतु तत्पारिपार्श्वकः ॥ २१ ॥ त्वयि प्रकुपिता देवी । राजन्नीरंजने वने ॥ विमुक्ताकल्पजल्पान्न—स्वादा लुठति भूतले ॥ २२ ॥ न प्रसादयितुं शक्तः । कोऽपि तां कोपितां त्वया ॥ स्यात्किं सौदामिनीदग्धा । जलैः पल्लविनी वनी ॥ २३ ॥ ततस्तुष्टमनाः पुष्ट—मतीनाकार्य मंत्रिणः ॥ जगामाराममूर्वीशः । स्वयं सांत्वयितुं प्रियां ॥ २४ ॥ विनष्टदयितादेह—दौर्गंध्यांधितनासिकः ॥ आः किमेतदिति क्ष्माप—स्तत्र पप्रच्छ मंत्रिणः ॥२५॥ तेऽप्यूचुर्देव देवी ते । कदेऽव क्षेत्रभूः क्रुधां ॥ अस्ति तत्कोपदौर्गंध्य—मिदमन्यैः सुदुस्सहं ॥ २६ ॥ एवं क्रोधाहिदष्टाया । अपि तस्याः प्रसादने ॥ एकचित्तस्य मे वाचो । लप्स्यंते जांगुलीतुलां ॥ २७ ॥ एवमुक्त्वा प्रविश्यांतः—कुंजं कुंजरवन्नृपः ॥ पुरश्चोत्तानमुखून—सर्वाव-

यवन्नीषणं ॥ २७ ॥ विश्वमेकादशश्रोतः—प्रस्रवन्मलनिर्झरं ॥ वर्षाविकरवच्चेल — चलत्कृमिकु-
लाकुलं ॥ २९ ॥ गृध्रैः प्रकटितस्नायु—मालमाकृष्ट लोचनं ॥ विष्णुश्रियो वपुर्वीक्ष्य । सवै-
लक्ष्यमाचिंतयत् ॥ ३० ॥ चतुर्भिः कलापकं ॥ मृतेव वीक्ष्यते सेय—मेतन्न ज्ञातवानहं ॥ वक्तुं
शशाक मे नीत्या । न च कश्चन मंत्र्यपि ॥ ३१ ॥ किममी मे महामात्या । भ्रातरः पितरोऽ-
थवा ॥ यैर्बोधितोऽस्म्युपायेन । प्रसुप्तो मोहनिद्रया ॥ ३२ ॥ त्वयामुच्यंत यस्यार्थे । कुलशी-
लवयोगुणाः ॥ तस्य नारीशरीरस्य । पश्यात्मन्नीदृशीं दशां ॥ ३३ ॥ देहेऽन्त्रांत्रद्वयं पंच—व्या-
मं धमनिका नव ॥ नव श्रोतांस्यथो पृष्ठ—वंशेऽष्टादश संधयः ॥ ३४ ॥ पृष्ठं संधिशतं सप्तो-
त्तरं मर्म शतं तथा ॥ पेशीनामस्थिदाम्नां च । पंच त्रीणि शतानि च ॥३५॥ स्नायूनां च शिराणां
च । शतानि नव सप्त च ॥ द्वात्रिंशद्दना रोम्णां । सार्धा तिस्रोऽत्र कोटयः ॥३६॥ मस्तक्य-
विष्टयोः प्रस्थ । आढको रक्तमूत्रयोः ॥ अर्धाढको वसायाश्च । कुडवः श्लेष्मपित्तयोः ॥ ३७ ॥
एवमंतः कचवरे । बहिरेव मनोरमे ॥ वर्चोगृहे इवासारे । संसारे कोऽनुरज्यति ॥ ३८ ॥
पंचभिः कुलकं ॥ इत्यालोच्य सुतं राज्ये । न्यस्य श्रीसुव्रताद्गुरोः ॥ दीक्षामादाय निःशेष—

प्रियाभ्यो बहुमंस्त सः ॥ ३९ ॥ वीक्ष्य वध्वाः परीणामं । वामं स्वमपि तादृशं ॥ विमृशन्निव
राजर्षि—स्तपसाकृशयद्वपुः ॥ ४० ॥ तपसापि न दुष्कर्म । तस्य सर्वं व्यलीयत ॥ नीलीरा-
गः पटस्येव । शोधितस्यापि वारिणा ॥ ४१ ॥ साधुः समाधिना प्रांत—कालमाराध्य सेवधीः
निर्विकल्पमनाः कल्पे । तृतीये त्रिदशोऽजनि ॥ ४२ ॥ रत्नपुरमितश्चास्ति । पुरं यत्र पुरंध्रयः
॥ पृणंति पश्यतां वक्त्रै—र्दिवापि शशिकौतुकं ॥ ४३ ॥ नरवाहनभूपालः । पालयामास तत्पुरं
॥ जहास नासुरांगो यः । कुबेरं नरवाहनं ॥ ४४ ॥ विक्रमात्मा दिवश्च्युत्वा । पुरेऽस्मिन्निन्य-
नंदनः ॥ जिनधर्मोऽजनि प्राणि—हितो धर्म इवांगवान् ॥ ४५ ॥ इतः स नागदत्तोऽपि । कां-
ताविरहकातरः ॥ भूताविष्ट इवाभीक्ष्णं । भुवं बभ्राम भूयसीं ॥ ४६ ॥ आर्तध्यानवशो मृत्वा
पर्यटन् भवसागरे ॥ भृशं पशुगतौ भ्रांत्वा । विप्रः सिंहपुरेऽजनि ॥ ४७ ॥ अग्निशर्माभिधानोऽ-
सौ । दावाग्निरिव दारुणः ॥ पितृभ्यां त्यजते ताप—त्रस्ताभ्यामिव शैशवे ॥ ४८ ॥ दौर्भाग्य-
स्येव पिंडोऽसौ । क्वचित्किंचिदवाप्नुवन् ॥ आदाय तापसीं दीक्षां । तेपे लोकोत्तरं तपः ॥४९॥
स रत्नपुरमायासी—त्कदाचन चरन्महीं ॥ अरंजयज्जनं राज—प्रमुखं स्वतपस्यया ॥ ५० ॥ जि-

नधर्मः पुनर्जैन—धर्मधौतमतिः सदा ॥ इव संमुखयोगिन्यां । नाचलत्तस्य दिश्यपि ॥ ५१ ॥
तापसः पूर्ववैरेण । तस्मिन्नधिकमत्सरः ॥ अंतर्गूढं दधौ रोषं । जरद्द्रुम इवोरगं ॥ ५२ ॥ ए-
कदानेकदातॄणां । पारयन्मंदिरेषु सः ॥ राज्ञा विज्ञापितो नत्वा । पारणार्थं जगाविति ॥५३॥
हैरेय्या जिनधर्मैन्य—पृष्टिगस्थालसंस्थया ॥ पारणं कारयसि चे—त्तत्कुर्वे नान्यथा पुनः ॥
॥५४॥ तत् श्रुत्वा व्याघ्रघटने—नेव नृपः स्वकर्मणा ॥ अजायताकुलोऽजानन् । जिनधर्मस्य नि-
श्चयं ॥ ५५ ॥ जिनधर्मे च दाक्षिण्यं । नीश्च तापसशापतः ॥ उन्नयं लंघयामास । कोऽत्र
भूमिभुजो मनः ॥५६॥ आकूधुर्यमथाकार्य । स्वान्निप्रायमजिज्ञपत् ॥ अर्थीव क्लीवतां वाचि ।
लज्जया नाटयन्नृपः ॥ ५७ ॥ सोऽपि राजान्नियोगेन । मत्वा सम्यक्त्वमक्षतं ॥ प्रपेदे तद्वचः
पुण्य—वतां हि न कदाग्रहः ॥ ५८ ॥ सोऽथारूढोऽभिमानेऽन्नं । राजौकः प्राप तापसः ॥ नृ-
तिसंगेन वर्ष्मेव । वहन् रुद्धतमं मनः ॥ ५९ ॥ नेक्षन्ते श्रावका मिथ्या—दृशां मुखमितीव
सः ॥ श्राद्धाग्रणीर्ददौ तस्मै । पृष्टं विष्टरशालिने ॥६०॥ पृष्टस्थस्थालनिक्षिप्त—परमान्नेन तापि-
ते ॥ तस्मिन्नजनि शीतात्मा । तापसः प्रतिकूलधीः ॥ ६१ ॥ राज्ञि शोकातुरे लोके । हाहा-

कारपरेऽखिले ॥ श्रेष्ठी संततपृष्टोऽपि । दध्यावध्यात्मनिश्चलः ॥ ६२ ॥ आदीयत न यैर्बाल्ये। दीक्षा विषयलंपटैः ॥ न दुःप्रापा सपापानां । तेषामेषा विडंबना ॥ ६३ ॥ हितवैद्यस्तपस्व्येष । यो मां नूभुजि साक्षिणि ॥ मुधा दुष्कर्मरोगार्तं । चिकित्सत्यग्निकर्मणा ॥ ६४ ॥ शिवचक्र इवामुष्मिन् । शैवे पृष्टप्रतिष्ठिते ॥ नवतान्मम निर्विघ्नं । निघ्नतो नावविद्विषः ॥ ६५ ॥ इति ध्यानसुधापान–शीतीनूतेन चेतसा ॥ आतापससमुन्नानं । विषेहे दाहवेदना ॥ ६६ ॥ पृष्टत्वचं समादाय । दूरीनूतेऽथ नाजने ॥ व्यजिज्ञपन्नृपं दीक्षां । जिघृक्षुः श्रावकाग्रणीः ॥ ६७ ॥ उदश्रुनयनो राजा । तं जगाद सगद्गदं ॥ धत्से नगरशृंगार । किमकांडे व्रतस्पृहां ॥ ६८ ॥ मा शोचीः स्वांगदाहेन । वैद्या मे संति भूरिशः ॥ उपायविद्भिरश्रांतै–स्त्वं तैरुल्लालयिष्यते ॥ ६९ ॥ सोऽवग्वैद्यैरलं वेद्मि । स्वं स्वेनैव चिकित्सितुं ॥ कः सुधीः सति सामर्थ्ये। परस्य मुखमीक्षते ॥ ७० ॥ कर्मामया मया छेद्या—स्तपसान्यैः किमौषधैः ॥ पादपे परशुछेद्ये । तंतवो नाधिकुर्वते ॥ ७१ ॥ गृहान्नोगा गृहान्नोगाः । संपत्प्रनृतिकं मम ॥ त्वत्प्रसादाद्यथा जातं । तथा दीक्षापि जायतां ॥ ७२ ॥ पितेव देव पुत्रेऽस्मि—न्मम मा ममतां मुचः ॥ ६-

त्यनुज्ञाप्य राजानं । निर्लोभः सोऽव्रजद् व्रतं ॥ ७३ ॥ स सत्वजितसिंहोजाः । सिंहोरख्वं
गिरीश्वरं ॥ ध्यानस्येव परां कोटि—मारुरोह महाद्युतिः ॥ ७४ ॥ शीतवातातपसहे—नाच-
लेन क्षमाभृता ॥ तेनाद्रिणा मुनिर्मेने । स्वस्य संघाटकोचितां ॥ ७५ ॥ स धृतानशनः पक्षं ।
पक्षं चक्रे चतुर्दिशि ॥ कायोत्सर्गं गिरेः शृंगे । का मैत्री कृत्रिमैः सह ॥ ७६ ॥ निशि गृध्रै-
र्दिवा काकैः । श्वपाकैरिव निःकृपैः ॥ क्षुत्क्षामैः सत्रशालेव । रंकैर्मुनिरवेष्ट्यत ॥ ७७ ॥ दुष्टाः
पुष्टामिषं त्रोटं । त्रोटं स्वत्रोटिकोटिभिः ॥ ते तस्य कृष्टयामासु—र्वपुः दुष्कर्मभिः समं ॥७८॥
अमी मद्देजनात्सत्वा । मा नैषुरिति सोऽनवत् ॥ व्यथार्त्तोऽपि स्थिरो बाढं । निर्वात इव पाद-
पः ॥ ७९ ॥ षष्ट्या दिनैः प्रपूर्णायुः । कल्पे सौधर्मनामनि ॥ मुनींद्रः स महेंद्रोऽभू—न्नैकना-
किनमस्कृतः ॥ ८० ॥ समये तापसः सोऽपि । बध्वा कर्माभियोगकं ॥ मृतोऽभूद्वाहनं तस्य ।
हरेरैरावणः सुरः ॥ ८१ ॥ ततश्च्युत्वा भ्रमन्नर्ता । भ्रांत्वा भूरिभवेषु सः ॥ असिताक्षोऽभवद्य-
क्षः । कैलाशेऽज्ञानकष्टतः ॥ ८२ ॥ इतश्च कुरुदेशेऽस्ति । नगरं हस्तिनापुरं ॥ यत्र व्योमल-
तायंते । सौधाग्रेषु ध्वजव्रजाः ॥ ८३ ॥ नृपस्तत्राश्वसेनोऽभू—द्रुदभिर्यस्य वैरिभिः ॥ वर्षा

विना च शैलस्थै—श्चक्रिरे पिच्छिलाः शिलाः ॥ ७४ ॥ बभूव सहदेवीति । प्रीतिभूस्तस्य वल्ल-
भा ॥ दिवश्च्युत्वा स तत्कुक्षि—मध्यासामास वासवः ॥ ७५ ॥ चतुर्दशमहास्वप्न—ख्यातच-
क्रेशवैभवं ॥ प्राचीवेंदुं सुतं काले । श्रिया स्यूतमसूत सा ॥ ७६ ॥ वर्द्धमानः सहोद्भूतै—रं-
गोपांगैर्गुणैरिव ॥ सनत्कुमारनामासौ । भेजे कालेऽखिलाः कलाः ॥ ७७ ॥ वहन्नन्वहमद्भुतां ।
सुरैरपि वपुःश्रियं ॥ स त्यक्तशैशवोऽवाप । नारीनेत्रोत्सवं वयः ॥ ७८ ॥ सनयः सूरकालिंद्यो-
स्तनयो हृदिवापरं ॥ महेंद्रसिंह इत्यासीत् । तस्याजन्मसुहृद्वरः ॥ ७९ ॥ तदा सनत्कुमार-
स्य । रूपश्रियमिवेक्षितुं ॥ पुरीपरिसरोद्यानं । वसंततुरवातरत् ॥ ८० ॥ वसंततुविनोदाय ।
प्रमोदायतनं नृपः ॥ समं सनत्कुमारेण । समित्रेण वनं ययौ ॥ ८१ ॥ फुल्लांभोजमुखः स्मेर—
सुनदृष्टिः ऋतुप्रभुः ॥ अपश्यदिव कौमारं । रूपं नृत्यल्लताभुजः ॥ ८२ ॥ कदलीगृहकेलीभिः ।
सरसीजलखेलनैः ॥ पुष्पावचयलीलाभि—ररंस्त नृपतिर्वने ॥ ८३ ॥ अश्वं जलधिकल्लोला—
भिधं कश्चिदढौकयत् ॥ तदा भूपाय भूपोऽपि । पुत्राय तमदान्मुदा ॥ ८४ ॥ तुरंगश्च तुरं ग-
च्छ—न्ननुत्सुकपदैः सुखं ॥ अपूरयत्कुमारस्य । विमानारोहदोहदं ॥ ८५ ॥ अवगंतुं गतिं ते-

न । तुरगः कशया हतः ॥ तथाचलद्यथा वायु–रपि खंज इवाजनि ॥ ९६ ॥ अर्वता कुर्वता
दूरे । बंधूंस्त्याजयता पुरं ॥ रहंस्विना कुमारेऽत्र । यमेनेव व्यचेष्ट्यत ॥ ९७ ॥ राज्यसारे
कुमारेऽत्र । क्षणान्नेत्रपथातिगे ॥ भूधवः शोकविध्वस्त—चैतन्यो व्यलुठद्भुवि ॥ ९८ ॥ नी-
तः शीतोपचारेण । रेणुः पाथोमुचा यथा ॥ शांतिं महीपतेर्मोऽहः । प्राज्ञैः पुत्रवियोगभूः ॥
॥ ९९ ॥ क्व गतोऽसि कुमार त्व—मितीलापे विलापिनि ॥ द्रष्टुं कुमारमजित—स्तद्भृत्या-
श्चेरुरुत्सुकाः ॥ १०० ॥ प्रचंडपवनापास्त–पदपंक्तेः परं पथि ॥ न पृथ्वीपतिपुत्रस्य । प्रवृत्तिं ते
प्रपेदिरे ॥ १ ॥ महेंद्रोऽथ महीनाथं । नत्वेति प्रतिजज्ञिवान् ॥ कुमारोदंतमप्राप्य । विशा-
म्येष न वेश्मनि ॥ २ ॥ स राजानमनुज्ञाप्य । दत्तात्मा दुःखवारिधेः ॥ निरपेक्षः स्वसौख्ये-
षु । चचालैकोऽपि साहसी ॥ ३ ॥ स्वर्णस्फातिमवेक्ष्य संगतिकृतो यांतोऽन्यतस्तादृये । के
न स्युः सुहृदो जनस्य सरसो हंसा इव प्रायशः ॥ कोऽपि क्वापि च कोकवद्दिनमणेः कस्यापि
स स्यात्सखा । यत्रत्यश्रुमिषेण मित्रविरहे वारि स्वसौख्यस्य यः ॥ ४ ॥ क्षणं सनत्कुमारौघ
—नृतं विश्वं ददर्श सः ॥ क्षणं च शून्यमैक्षिष्ट । महेंद्रो विरहातुरः ॥ ५ ॥ नैकग्रामपुरा-

रामा—भिरामां विचरन् भुवं ॥ अत्यगादूर्षमेकं स । तद्वार्तां न तु लब्धवान् ॥ ६ ॥ भ्रमन्ने-
वमविश्राम—मटव्यां शौरिरन्यदा ॥ एकमैक्षिष्ट वृक्षालि—शालिपालिसरः पुरः ॥ ७ ॥ त-
द्वीक्ष्य तस्य स्फुरित—मपसव्येन चक्षुषा ॥ बभूवे भव्यशकुनै—रुद्लस्यत चेतसा ॥ ८ ॥ सु-
हृद्विरहतापार्त्तः । क्रीडन् वारिणि सारसे ॥ एकतः सोऽशृणोत्कर्ण—सुधसंगीतकध्वनिं ॥ ९ ॥
स ध्वनेरनुसारेण । सेतोरुत्तरतश्चरन् ॥ सैन्यस्थितिं पुरो दिव्या—मटव्यामेवमैक्षत ॥ १० ॥
गजाः क्वचन गर्जंतः । सावरुथा रथाः क्वचित् ॥ हया हेषाकृतः क्वापि । क्वचिद्योधा उदायु-
धाः ॥ ११ ॥ उत्पताकां शुचिस्वर्ण—कलशां तारतोरणां ॥ सुधर्मामिव भूमिष्ठां । स ददर्श
पुरः सभां ॥ १२ ॥ तदंतर्दिव्यसंगीत—प्रातिरंगतरंगितं ॥ शृंगारागारवारस्त्री—चारुचामरवी-
जितं ॥ १३ ॥ स्वर्णसिंहासनासीनं । रत्नपीठलुठत्पदं ॥ मानवीं मूर्तिमायात—ममरेंद्रमिव
श्रिया ॥ १४ ॥ परितं परितो योधैः । सूर्यांशुभिरिवोत्कटैः ॥ भूलोके च सदाकल्पं । मित्र-
कल्पं नरेश्वरं ॥ १५ ॥ सोऽयं सनत्कुमारः किं । कोऽप्यन्यो वा तदाकृतिः ॥ इत्यारेकातिरेका-
र्त्तः । सोऽश्रौ—न्मागधध्वनिं ॥ १६ ॥ सनत्कुमार दुर्वार—वीर्यवयभुजद्वय ॥ नयश्रीअश्वसेना-

ख्य—क्ष्मापसद्वंशमौक्तिकः ॥ १७ ॥ ततो विगलितभ्रांतिः । पुरतः प्रससर्प सः ॥ कुमारोऽपि त-
मायांत—मुपलक्ष्याभ्यधावत ॥ १८ ॥ महाविरहपाथोधि—पूरप्लवहणायितौ ॥ शौरिः सुन-
त्कुमारस्य । पस्पर्श शिरसा पदौ ॥ १९ ॥ चिराद्दृष्टं तमुत्थाप्य । कुमारः सस्वजे तथा ॥
यथा बाहुलताप्यस्य । लोहशृंखलतां गता ॥ २० ॥ तयोरंगे वियोगाग्नि—संतप्ते पतयालुभिः
॥ व्यलीयत क्षणेनैव । मिथो हर्षाश्रुबिंदुभिः ॥ २१ ॥ ततो निषद्य स्वस्थाने । कुमारस्तमवा-
र्तयत् ॥ चिराद्वयस्य दृष्टोऽसि । स्वागतं स्वागतं तव ॥ २२ ॥ कच्चिन्मे विजयी तातो । जन-
न्यपि निरामया ॥ बंधुवर्गो निराबाधः । कोशश्च कुशली किमु ॥ २३ ॥ निवेद्य निरवद्यत्वं ।
पित्रोः परिकरस्य च ॥ त्वदागमनपर्यंतं । स्ववृत्तांतमुवाच सः ॥ २४ ॥ वारस्त्रीभिः कुमारेण ।
स्नपितो भोजनक्षणे ॥ आवर्षात्तत्तदाहार—सारस्वादं विवेद सः ॥ २५ ॥ महेंद्रेण कुमारेंद्रः
। पप्रच्छे वत्सलाशयः ॥ स्ववृत्तं मित्र भाषस्व । विश्वमश्वापहारतः ॥ २६ ॥ स्वयं स्वचरिता-
ख्यानं । महतां हि त्रपाकरं ॥ अतो बकुलमत्याख्यां । स प्रियामादिशद् दृशा ॥ २७ ॥ सापि
सापत्रपा पत्युः । पार्श्वे जल्पितुमक्षमा ॥ इति क्रीडागृहेऽशेत । कुमारश्छन्ननिद्रया ॥ २८ ॥

परोक्षेष्वपि वृत्तेषु । विज्ञा प्रज्ञप्तिविद्यया ॥ ततो बकुलमत्यूचे । कलकंठी कलध्वनिः ॥ २९ ॥
शृणु सौम्य हृतस्तेन । वाजिना तनुमानिव ॥ कर्मचारेण संसारे । निन्येऽरण्ये सखा तव ॥
॥ ३० ॥ द्वितीयदिवसे वल्गा—कर्षणोद्भूतलोहितौ ॥ निर्व्यापारकरौ जाता—वस्य वाजी-
व स स्थितः ॥ ३१ ॥ अथोत्तारितपर्याणे । विपन्ने तुरगे क्रमात् ॥ वनं कांतस्तृषाक्रांत—श्चिरं
बभ्राम वारिणे ॥ ३२ ॥ अप्राप्नुवन् वने तत्र । नीरं मृग इवोषरे ॥ न्यपतन्मूर्छितः स्वामी ।
सप्तछदतरोस्तले ॥ ३३ ॥ दक्षः सप्तछदाध्यक्षः । कुमारं वीक्ष्य दुर्दशं ॥ पीयूषेणेव पयसा—
भ्युक्ष्य चक्रे सचेतनं ॥३४॥ निपीय तत्पयः क्षिप्रं तं । पप्रछ सुहृत्तव ॥ निर्निमित्तोपकारी त्वं
। कोऽसि कुत्यमिदं पयः ॥ ३५ ॥ सोऽप्याख्यदेष यक्षोऽस्मि । निलीनोऽस्मिन्महाद्रुमे ॥ एत-
त्पानीयमानीय । मानसात्त्वामचेतयं ॥ ३६ ॥ कुमारस्तं जगौ तन्मां । सरः प्रापय मान तं ॥
न मे तापव्यपोहः स्या—द्विना तज्जलखेलनैः ॥ ३७ ॥ ततो यक्षेण नीतोऽसौ । क्षणात्क्षी-
रोदसोदरं ॥ सरस्तदस्तदाहार्त्ति—र्नाक्रीकृत्क्रीकया कया ॥ ३८ ॥ कैलाशशैलसंवासी । यक्षः
प्राग्भववैरतः ॥ असिताक्षो रुरोधैनं । तमिस्रानिव भास्करं ॥ ३९॥ यक्षो विचक्रे वातोलीः ।

प्रतोलीर्यमवेश्मनः ॥ तान्निरेष न चुक्षोभ । सानुमानिव जंगमः ॥ ४० ॥ पिशाचा विकृता-
कारा—स्तत्क्षणं तेन निर्मिताः ॥ त्रासमासूत्रयामासु—र्न कुमारे तरस्विनि ॥ ४१ ॥ क्रोध-
धूमायितैर्नाग—पाशैरेनं बबंध सः ॥ अनालस्योऽब्जनालस्यो—पमया छित्त्व तानयं ॥ ४२ ॥ हृ-
द्येनं ताडयामास । निर्दयं मुद्गरेण सः ॥ चंदनद्रुममुन्मूल्यै—षोऽपि प्रतिजघान तं ॥ ४३ ॥
दष्टोष्टेन रुषा यक्षे—णोत्क्षिप्तः पर्वतस्ततः ॥ कुमारमुष्टिदंभोलि-चूर्णितः शतधाभवत् ॥ ४४ ॥
बाहुयुद्धे मिथो जाते । तं जघानैष मुष्टिना ॥ तथा यथाभवद्देव—भव एवास्य जीवनं ॥ ४५ ॥
क्रंदमाने गते यक्षे । नियुद्धेक्षणसाक्षिभिः ॥ देवविद्याधरैः पुष्प—वृष्टिश्चक्रेऽस्य मूर्धनि ॥४६॥
बहिर्भूतस्य सरसो—ऽमुष्य चक्षुष्पथं ययौ ॥ अलीकीकृतनालीक—छाया योषित्पदावली ॥
॥ ४७ ॥ व्रजंस्तदनुसारेण । वनांतरेऽयमैक्षत ॥ अष्टौ कन्याः सलावण्याः । शक्रस्य महिषी-
रिव ॥ ४८ ॥ अरतिः किमयं कामः । किं वा शक्रः शचीं विना ॥ ता अप्येतं निरीक्ष्यैवं ।
बाला आलोकयन्मिथः ॥ ४९ ॥ तास्वेका सहजछेका । विवेकादिगुणाब्धिना ॥ अमुनाभा-
णि का यूयं । किं वात्र विपिने स्थिताः ॥ ५० ॥ कटाक्षकुटिलं चक्षु—र्विक्षिपंती जजल्प सा

॥ आकर्णय सकर्ण त्व–मत्र नः स्थितिकारणं ॥५१॥ दृश्यते नातिदूरेऽसौ । नगरी प्रियसंग-
मा ॥ शास्ति स्वस्तिनिधिर्भानु–वेगस्तां खेचरेश्वरः ॥ ५२ ॥ पृथितात्पृथिवीभृत्सु । सुमनःश्रे-
णिसंगतात् ॥ मेरोरिव दिशस्तस्मा—दष्टौ जाताः सुता वयं ॥ ५३ ॥ अस्मासु वर्धमानासु ।
जग्धो जामातृचिंतया ॥ कदापि नः पितापश्य–दर्चिमालिमुनीश्वरं ॥ ५४ ॥ एतासां मम पु-
त्रीणां । को भविष्यति वल्लभः ॥ इति पृष्टो मुनिस्तेन । प्रोचे ज्ञाननिकेतनं ॥ ५५ ॥ यः क्री-
डन्मानसे युद्ध्य–मानं यक्षं विजेष्यते ॥ भविष्यति स जामाता । तव मा तापमुद्वह ॥५६॥
ततःप्रभृति निर्देशा–त्पितुः पतिसमुत्सुकाः ॥ आस्थाम मानससरः । परितो वरटा इव ॥५७॥
स त्वं सात्विक दृष्टोऽसि । तस्य यक्षस्य जित्वरः ॥ तदेहि नगरीं यामो । यामोऽप्यथ युगा-
यते ॥ ५८ ॥ ध्वांताशातिरयं याति । विपश्चित्पश्चिमां दिशं ॥ एषामाशु विलासार्हं । तमः प्र-
सरतादिति ॥ ५९ ॥ अथ तत्किंकरादिष्ट—वर्त्मासौ तां पुरीं गतः ॥ मिमेल भानुवेगस्य ।
सोऽप्यानर्चैनमंजसा ॥ ६० ॥ कन्या मुनिवरोक्तेन । सूर्योकेनामुना नृपः ॥ मुक्ता इव सुवर्णेन
विधिना समयोजयत् ॥ ६१ ॥ वासोकसि समं तेन । तल्पगास्ता निशाभरे ॥ मेनिरे नगरी

नाम । यथार्थं प्रियसंगमां ॥ ६२ ॥ रतश्रांतः कुमारोऽपि । निद्रामुद्रितलोचनः ॥ जह्रेऽसि-
ताक्षयक्षेण । द्विषो हि बलदृष्टयः ॥ ६३ ॥ कचिगिरिसरित्तीरे । विमुक्तोऽसौ निशात्यये ॥
प्रबुद्धः पक्षिणां स्वानैः । स्वमेकाकिनमैक्षत ॥ ६४ ॥ व्यचिंतयच्च क तद्राज्यं । क तत्सैन्यं क
ताः प्रियाः ॥ दृष्टनष्टमभूत्सर्वं । जलबुद्बुदवन्मम ॥६५॥ विलसद्भूरिभोगांगं । क तन्नृपतिम-
दिरं ॥ विलसद्भूरिभोगींद्रं । क चेदं गिरिकाननं ॥ ६६ ॥ अहं भूपेन ताः कन्याः । किं स्व-
प्ने पर्यणायिषि ॥ यद्वा जयति तद्भ्रांति-भिदे तत्करकंकणं ॥ ६७ ॥

ध्यात्वेत्यसौ दृढं वध्वो-पसंख्यानं पुरो व्रजन् ॥ लुलोके लोचनाह्लादं । प्रासादं सप्तभू-
मिकं ॥ ६८ ॥ तं सौधमधिरूढेन । स्वामिनोपरि काचन ॥ बाला व्यालावलीढेव । विलपंती-
ति शुश्रुवे ॥ ६९ ॥ मम जीवितसर्वस्व । अश्वसेननृपांगज ॥ सनत्कुमार कौरव्य । चरणौ
शरणं तव ॥ ७० ॥ त्वं चेन्मे मंदभाग्याया । भर्ता नाभ भवेऽभवः ॥ भवांतरेऽपि तद्भूया ।
इत्युक्त्वा विरराम सा ॥ ७१ ॥ स्वनामश्रवणोद्भूत-कृपोऽकृपणसाहसः ॥ चंद्रशालासमा-
रूढा-मुद्बंधनविधायिनीं ॥ ७२ ॥ धातुस्त्रिभुवनस्त्रैण-सृष्टिसीमामिवांगिनीं ॥ वीक्ष्य वा-

लामयं क्षुर्या । तत्पाशग्रंथिमच्छिदत् ॥ ७३ ॥ युग्मं ॥ मूर्छावश्यां निवेश्यांके । प्रासिंच्यांचल-
वायुभिः ॥ तामसौ जीवयामास । वल्लीमिव बलाहकः ॥ ७४ ॥ कोऽयं सनत्कुमारस्त्वं । य-
त्कृते रौषि निर्झरं ॥ इत्युक्तानेन सा नीति-प्रीतिभिन्नरसा जगौ ॥ ७५ ॥ पुरमस्त्यत्र साके-
तं । संकेत इव संपदां ॥ तत्पालयति भूपालः । सुरभिः पुरभिद् द्विषां ॥ ७६ ॥ श्रीचंदनय-
शास्तस्य । देवी देवीव भूगता ॥ तयोरस्मि सुनंदेति । नंदिनी नवयौवना ॥ ७७ ॥ साहं क-
दाचिदद्राक्षं । साक्षाच्चित्रपटार्पितं ॥ रूपं सनत्कुमारस्या-श्वसेनेर्विश्ववल्लभं ॥ ७८ ॥ चित्रस्थं
वीक्ष्य तं चित्रं । न ममौ मम चेतसि ॥ पतीयंती तमेवाहं । दाहं विरहजं दधौ ॥ ७९ ॥
पितापि तादृशावस्थां । मां तस्यैव ददौ मुदा ॥ को नाम नानुमन्येत । संबंधमुचितं सुधीः
॥ ८० ॥ मामनिर्वृत्तवीवाहा-मेव कश्चन कुट्टिमात् ॥ खगो जहार वातूल । इव श्लथपता-
किकाम् ॥ ८१ ॥ स्वशक्तिसाधिते सौधे । मुक्त्वा मामत्र संप्रति ॥ कर्तुं विवाहसामग्रीं । स
ययौ क्वापि खेचरः ॥ ८२ ॥ जीवितान्मरणं श्रेयः । स्त्रीणामिष्टपतिं विना ॥ इत्युद्बंधनलो-
लाहं । कृपालो पालिता त्वया ॥ ८३ ॥ रूपसर्वस्वकोश त्वं । कोऽसि कस्यांगजोऽथवा ॥ कि-

मेवं मयि कारुण्यं । यावदेवं जजल्प सा ॥७४॥ तावदावासकः कोप-स्यागतः स च खेचरः ॥
एनमुद्धालयामास । क्रीडाकंडुकलीलया ॥ ७५ ॥ सुनंदाप्यसदानंदा । कंदादुत्पाटिते तरौ
॥ वल्लीव भूतले क्लीवा—पतत्पत्युरदर्शने ॥ ७६ ॥ खेचरं चूर्णयामास । शिखरीव पतन्नयं ॥
भाविस्त्रीरत्नमाश्वास्यो—पयेमे स्वं निवेद्य तां ॥ ७७ ॥ विद्युद्वेगस्य खेटस्य । तस्य संध्यावली
स्वसा ॥ तत्रायर्यौ तदा भ्रातुः । कर्तुं पाणिग्रहोत्सवं ॥ ७८ ॥ दृष्ट्वा बंधुं हतं हाहा । हता-
स्मीति क्रुधाकुला ॥ सस्मार सा निमित्तज्ञो—दीरितां भारतीमिति ॥ ७९ ॥ यो हनिष्यति ते
वत्से । भ्रातरं मदनातुरं ॥ तस्य त्वं सार्वभौमस्य । भार्यावश्यं भविष्यसि ॥ ८० ॥ ततः श्व-
थितमात्सर्या । विवाहार्थमुपस्थितां ॥ परिणिन्ये कुमारस्ता—मनुज्ञातः सुनंदया ॥ ८१ ॥
कलत्राभ्यां नवं रागं । दधद्भ्यामुदयोन्मुखः ॥ पत्राभ्यां पादपांकुर । इवासौ शुशुभेतरां
॥ ८२ ॥ इतश्च हरिश्चंद्रश्च । चंद्रसेनश्च खेचरौ ॥ व्योम्नागत्य कुमारेंद्रं । नत्वा चैवमवोचतां
॥ ८३ ॥ चंद्रवेगभानुवेग—नाम्नोर्विद्याधरेंद्रयोः ॥ पुत्रावावां प्रभो ताता—देशात्त्वामुपज-
ग्मिव ॥ ८४ ॥ क्षणात्ते परिचर्यायै । तातावपि समेष्यतः ॥ पुनीहि रथसन्नाहौ । नाथ त-

त्प्रहिताविमौ ॥ ९५ ॥ त्वया हतं सुतं श्रुत्वा—शनिवेगः खगेश्वरः ॥ आगच्छन्नस्ति सन्नह्य । तद्योद्धुं प्रगुणीजव ॥ ९६ ॥ विद्यां प्रज्ञप्तिमेतस्य । तदा संध्यावली ददौ ॥ पत्युरेव जयार्थिन्यः । परिणीता हि योषितः ॥ ९७ ॥ उपस्थितौ चंद्रवेग— जानुवेगावपि क्षणात् ॥ तत्संबंधाः परेऽपीयुः । शतशस्तत्र खेचराः ॥ ९८ ॥ जटकोटिजुजास्फोटै—र्ब्रह्मांडं क्षोजयन्निव ॥ आगादशनिवेगोऽपि । ज्वलन्नशनिवत्क्रुधा ॥ ९९ ॥ पृतने चंद्रवेगस्य । जानुवेगस्य चोल्बणे ॥ सेनयाशनिवेगस्य । योद्धुं व्याक्रमतां मिथः ॥ २०० ॥ रणोत्कटजटव्रात—घातजातासृगुक्षिता ॥ जाविप्रजुममुं वीक्ष्य । रागिणीव बजूव भूः ॥ १ ॥ वीररक्तासवास्वाद—जातोन्मादैरशंकितैः ॥ परक्षेत्रेषु लुन्यद्भिः । खड्गैः खड्गायितं रणे ॥ २ ॥ सैन्यद्वये गतायातं । कुर्वत्यां जयसंपदि ॥ कुमारोऽशनिवेगेन । स्वयं योद्धुमढौकत ॥ ३ ॥ वितन्वतः शरासारं । निर्जीवं विदधे धनुः ॥ असावसिप्रसक्तस्य । तस्य पाणिं च चिच्छिदे ॥ ४ ॥ जुजगज्वलनादीनि । यान्यस्त्राणि स संदधे ॥ प्रत्यस्त्रैर्गरुडांजोद—मुख्यैस्तान्यक्षिणोदयं ॥ ५ ॥ इत्यशनिवेगेऽथ । बाहुयुद्धं परस्परं ॥ नृत्यः प्रस्ताववेदीव । चक्रमेनमुपाययौ ॥ ६ ॥ अयं स्फुरत्फुलिंगेन ।

तस्य चक्रेण चिच्छिदे ॥ वैरिवारशरासारा—संरूद्धगतिना शिरः ॥ ७ ॥ उत्पन्नो जरते च-
क्री । तुर्योऽयमिति घोषणां ॥ पुष्पवृष्टिं वितन्वंतो । देवा विदधिरे दिवि ॥ ८ ॥ कुमारे खे-
चरेंद्रस्य । तस्य श्रीरनुरागिणी ॥ संध्यावलीव संक्रांता । मुक्त्वा समरश्वंबरम् ॥ ए ॥ गिरिं
जगाम वैताढ्यं । ततोऽसौ खेचरैः सह ॥ विद्याधरीदृशां तन्व—न्निव पीयूषपारणं ॥ १० ॥
खेचरैरेष संभूय । स्वस्वामित्वेऽन्यषिच्यत ॥ श्रीः पुण्याढ्यं कुलस्त्रीव । प्रियं दूरेऽपि न त्यजेत्
॥ ११ ॥ तत्रासौ चंद्रवेगस्य । शतं पुत्रीः सहस्रशः ॥ अन्या अप्युत्तमंमन्याः । खगकन्या उ-
पायत ॥ १२ ॥ वैताढ्यमौलिमुकुटा—यितेषु जिनसद्मसु ॥ कुमारः कारयांचक्रे । तत्राष्टाह्-
महोत्सवं ॥ १३ ॥ साधिताशेषवैताढ्यः । समवेताढ्यखेचरः ॥ स्वैरं क्रीडन्नयमिहा—यात-
स्त्वं मिलितोऽसि च ॥ १४ ॥ पत्न्या बकुलमत्येति । प्रोक्ते व्यतिकरेऽखिले ॥ कुमारस्तल्प-
तोऽनल्प—निद्राध्मात इवोत्थितः ॥ १५ ॥ सख्युश्चक्रुर्विनोदाय । वैताढ्यं सोऽस्मजरपुनः ॥
नित्यानित्येषु चैत्येषु । तं च यात्रामकारयत् ॥ १६ ॥ उद्याननगरश्रेणि—लोकालोकनकौतु-
की ॥ समये स महेंद्रेणा—समज्ञाः समज्ञाप्यत ॥ १७ ॥ बंधो बंधुरबुद्धे ते । पितरौ विर-

चक्रेऽस्य । तेन सर्वमहन्महः ॥ ४० ॥ धाम स्वामिन्निदं कस्य— चिदन्यस्यापि विद्यते ॥ इति
पृष्टः पुनर्देवैः । शतक्रतुरवोचत ॥ ४१ ॥ नो नोः श्रृणुत गीर्वाणा । यदास्ते हस्तिनापुरे ॥
तेजः सनत्कुमारस्य । चक्रिणस्तन्न कस्यचित् ॥ ४२ ॥ अप्यलंकारिणो विद्या—धरासुरसुरे-
श्वराः ॥ न यांति तेन सारूप्यं । स्वर्णेनेवान्यधातवः ॥ ४३ ॥ तामश्रद्दधतौ वाचं । व्यलीका-
मिव वज्रिणः ॥ विजयो वैजयंतश्च । सुरौ स्वरवतेरतुः ॥ ४४ ॥ दूराद्विशतां वेश्म । विशां-
पत्युरनुत्सुकौ ॥ तौ जरद्द्विजरूपेण । वेणुदंडधरौ सुरौ ॥ ४५ ॥ चक्रिणं चालुलोकाते । नि-
विष्टं स्नानविष्टरे ॥ अन्नूषणतया दृश्य—मानसर्वांगसुंदरम् ॥ ४६ ॥ इंद्रचंद्रनरेंद्रैर—प्यचुं-
बितमहश्चयं ॥ तं वीक्ष्य जातरोमांचौ । उच्चं तावेवमूचतुः ॥ ४७ ॥ दत्ताभ्यंगस्य निःशेष-
भूषारहितवर्ष्मणः ॥ रूपमस्यास्ति यच्चैत—न्मिथ्यावाक्तन्न वासवः ॥ ४७ ॥ चक्री प्राह ज-
रद्विप्रौ । ब्रूतं स्वागतकारणं ॥ किं केनापिपराभूतौ । किं वा किंचिद्वियाचिषू ॥ ५० ॥ न-
रेंद्र दूरदेशस्था—वावां त्वद्रूपसंपदम् ॥ श्रुत्वा जनाननाच्चित्र—मादधानौ दधाविव ॥ ५१ ॥
विलोक्य नृप रूपं ते । हृद्यानंदः स कोऽप्यन्नूत् ॥ वर्षांबुनेव नैदाघो—ऽध्वंसि येनाध्वजक्क-

मः ॥ ५२ ॥ यस्त्वां विनिर्ममे नासौ । सर्वसाधारणो विधिः ॥ न तत्त्वदुपमं रूप—मपरस्य
जगत्त्रये ॥ ५३ ॥ रूपाहंयुरथ स्मित्वा । नृपः प्रोचे द्विजौ युवां ॥ पंक्तितावप्यकांडे किं ।
रूपमीक्षितुमीयतुः ॥५४॥ स्नानपीठे निविष्टस्य । किं रूपं सांप्रतं मम ॥ न हि स्पंदनिका-
क्तिसः । स्यात्पटोऽपि स्फुटोदयः ॥ ५५ ॥ ततः क्षणं विलंबेथां । यावद्विहितमज्जनः ॥ अ-
लंकृतवपुः भूपै—र्वेष्टमानः सभां श्रये ॥ ५६ ॥ अथावसथकोणे तौ । तस्थतु श्चक्रवर्तिनः ॥
चेष्टमानौ मनाग् ग्राम्या—विव ज्ञानमयावपि ॥ ५७ ॥ चक्रवर्त्यपि सुस्नातः । कृतकौतुकमं-
गलः ॥ कल्पद्रुम इवोदारै—रलंकारैरलंकृतः ॥ ५८ ॥ धृतातपत्रो युगप—न्नृपतिव्रातवंदितः
॥ सदःसिंहासनं भेजे । स पूर्वाद्रिमिवार्यमा ॥ ५९ ॥ तावाहूतौ द्विजौ रूप—स्वरूपं वी-
क्ष्य चक्रिणः ॥ विरक्ताविव दुःखार्त्ता—विवाधूनयतां शिरः ॥ ६० ॥ शिरोधूननहेतुं च । रा-
ज्ञा पृष्टाववोचतां ॥ भूपते रूपमालोकि । यत्तदा तदनुत्तरं ॥ ६१ ॥ कुष्टदुष्टाग्निरुत्तिष्ट—मानः
संप्रति लुंपति ॥ बालप्रवालवद्रूपं । तव धिग् मानवीं तनुं ॥ ६२ ॥ कथं वृद्धौ युवां वित्थ ।
इति वादिनि चक्रिणि ॥ तावूचतुः सुरावावां । विद्वः ज्ञानदृशाखिलं ॥ ६३ ॥ तव रूपर्द्धि-

हातुरौ ॥ धत्तस्तामधुनावस्थां । यां मरालौ मरुस्थले ॥ १७ ॥ प्रायो यांति निदाघार्तौ । म-
हानद्योऽपि तानवं ॥ तद्दृशोर्नीरपूरस्तु । नित्यमेवाधिकाधिकः ॥ १९ ॥ न जद्यं न जलं ना-
पि । तांबुलं न सुभाषितं ॥ केवलं तव नामैव । जिह्वायै स्वदते तयोः ॥ २० ॥ नाथ स्वदर्श-
नेनाथ । तौ सुखीकर्तुमर्हसि ॥ त्वत्संगमं विना किंचि—न्नास्ति तज्जीवनौषधं ॥ २१ ॥
तेनेत्युक्तः पितृपदो—पासनोल्लासिमानसः ॥ पुनः पुनः कुमारः स्वं । गुर्वनक्तिमगर्हत ॥२२॥
वीक्ष्यमाणैः खगैः कैश्चि—न्नावितद्विरहातुरैः ॥ अन्वीयमानस्त्वपरैः । प्रतस्थे कौरवाग्रणीः
॥२३॥ मृद्नन् विपुलतां व्योम्नो । विमानैः खेटनिर्मितैः ॥ आह्वयन्निव दिग्पालान् । विविधातो-
द्यनिक्कणैः ॥ २४ ॥ खेचरीदृष्टनाट्योघ—न्यस्तनेत्रो नृपांगभूः ॥ विमानस्थो देव इव । क्षणा-
त्प्राप निजं पुरं ॥ २५ ॥ युग्मं ॥ अभिगंतुमिवायात—मंबराद्र् कंवरेण तं ॥ पौरा आरुहुः स्व-
स्य । सौधस्याधिक्यतां तदा ॥ २६ ॥ शृंगारितगजं बद्ध—ध्वजं नृत्यन्नटव्रजं ॥ कृत्वा पुरं
रयादश्व—सेनः सूनुमभ्नीयिवान् ॥ २७ ॥ आलोक्य पितरं मुक्त—विमानः प्रीतमानसः ॥
कुमारश्चरणौ तस्य । सदारः प्रणनाम सः ॥ २७ ॥ भूमानशमयद्दाह—ज्वरं विरहजं निजं ॥

नंदनालिंगनानंद—चंदनद्रवसेकतः ॥ २९ ॥ गवाक्षस्थांगनापांग—कृतनीरांजनाविधिः ॥ पित्रा पुरस्कृतेनाथ । कुमारः प्राविशत्पुरं ॥ ३० ॥ प्राग्हर्षाश्रुजलैः पश्चा— दृत्तुजान्यामन्निजग्मुषी ॥ नेमे तेन वधून्निश्च । माता चिरवियोगिनी ॥ ३१ ॥ कुमारः खेचरव्रातं । संमान्य च विसृज्य च ॥ स्वयं पैतृकराज्यस्यो—न्नत्यं नित्यं व्यधत्त सः ॥ ३२ ॥ तस्मिन्नाहितभूजारो । गुणप्राग्भारन्नासुरे ॥ अश्वसेनो नवं शेषं । सुकृतैरकृतार्थयत् ॥ ३३ ॥ साधिते भारते वर्षे । प्रकर्षेण निजौजसा ॥ तेनान्वन्नावि चक्रित्वा—न्निषेको द्वादशाब्दिकः ॥ ३४ ॥ न मित्रस्यापि सर्वस्य । श्रीदस्तस्य त्वदात्तदा ॥ दिव्यं वस्त्रविभूषाद्यं । हेतुस्तत्र हरेर्वचः ॥ ३५ ॥ रूपेण मानिनीमानं । ज्जुजस्थाम्ना च न्नूज्जुजः ॥ स मृद्नन् रसयोरासी—त्पदं शृंगारवीरयोः ॥ ३६ ॥

इतश्च निश्चलालोकः । संचयन् कामचारतः ॥ ईशानकल्पतः प्राप । सौधर्मे संगमः सुरः ॥ ३७ ॥ स च शक्रसदस्यानां । रुंधानः स्वद्युता द्युतीः ॥ निमेषं प्रागनन्यस्त—मपि नेत्राण्यशिक्षयत् ॥ ३८ ॥ कथमस्येदृशी कांति—रतिज्योतिः पतिद्युतिः ॥ इति सामानिकैर्देवैः । पृष्टः प्रोचे पुरंदरः ॥ ३९ ॥ आचामाम्लवर्धमानं । यत्तपः प्राग्भवेऽमुना ॥ चक्रे त्रिदश-

इति
चक्रेऽस्य । तेन सर्वमहन्महः ॥ ४० ॥ धाम स्वामिन्निदं कस्य—चिदन्यस्यापि विद्यते ॥
पृष्टः पुनर्देवैः । शतक्रतुरवोचत ॥ ४१ ॥ भो भोः शृणुत गीर्वाणा । यदास्ते हस्तिनापुरे ॥
तेजः सनत्कुमारस्य । चक्रिणस्तन्न कस्यचित् ॥ ४२ ॥ अप्यलंकारिणो विद्या—धरासुरसुरे-
श्वराः ॥ न यांति तेन सारूप्यं । स्वर्णेनेवान्यधातवः ॥ ४३ ॥ तामश्रद्दधतौ वाचं । व्यलीका-
मिव वज्रिणः ॥ विजयो वैजयंतश्च । सुरौ स्वरवतेरतुः ॥ ४४ ॥ दूरादविशतां वेश्म । विशां-
पत्युरनुत्सुकौ ॥ तौ जरद्द्विजरूपेण । वेणुदंडधरौ सुरौ ॥ ४५ ॥ चक्रिणं चावलोकाते । नि-
विष्टं स्नानविष्टरे ॥ अभूषणतया दृश्य—मानसर्वांगसुंदरम् ॥ ४६ ॥ इंद्रचंद्रनरेंद्रैर—प्यचुं-
बितमहश्चयं ॥ तं वीक्ष्य जातरोमांचौ । भन्नं तावेवमूचतुः ॥ ४७ ॥ दत्ताभ्यंगस्य निःशेष-
भूषारहितवर्ष्मणः ॥ रूपमस्यास्ति यद्येत—न्मिथ्यावाक्तन्न वासवः ॥ ४८ ॥ चक्री प्राह ज-
रद्विप्रौ । ब्रूतं स्वागतकारणं ॥ किं केनाभिपराभूतौ । किं वा किंचिद्वियाचिषू ॥ ५० ॥ न-
रेंद्र दूरदेशस्था—वावां त्वद्रूपसंपदम् ॥ श्रुत्वा जनाननाच्चित्र—मादधानौ दधाविव ॥ ५१ ॥
विलोक्य भूप रूपं ते । हृद्यानंदः स कोऽप्यभूत् ॥ वर्षांबुनेव नैदाघो—ऽध्वंसि येनाध्वजक्क-

मः ॥ ५२ ॥ यस्त्वां विनिर्ममे नासौ । सर्वसाधारणो विधिः ॥ न तत्त्वदुपमं रूप—मपरस्य
जगत्त्रये ॥ ५३ ॥ रूपाहंयुरथ स्मित्वा । नृपः प्रोचे द्विजौ युवां ॥ पंक्तितावप्यकांडे किं ।
रूपमीक्षितुमीयतुः ॥ ५४ ॥ स्नानपीठे निविष्टस्य । किं रूपं सांप्रतं मम ॥ न हि स्पंदनिका-
क्लिन्नः । स्यात्पटोऽपि स्फुटोदयः ॥ ५५ ॥ ततः क्षणं विलंबेथां । यावद्विहितमज्जनः ॥ अ-
लंकृतवपुः नृपै—र्वंद्यमानः सभां श्रये ॥ ५६ ॥ अथावसथकोणे तौ । तस्थतुश्चक्रवर्तिनः ॥
चेष्टमानौ मनाग् ग्राम्या—विव ज्ञानमयावपि ॥ ५७ ॥ चक्रवर्त्यपि सुस्नातः । कृतकौतुकमं-
गलः ॥ कल्पद्रुम इवोदारै—रलंकारैरलंकृतः ॥ ५८ ॥ धृतातपत्रो युगप—न्नृपतिव्रातवंदितः
॥ सदःसिंहासनं भेजे । स पूर्वाद्रिमिवार्यमा ॥ ५९ ॥ तावाहूतौ द्विजौ रूप—स्वरूपं वी-
क्ष्य चक्रिणः ॥ विरक्ताविव दुःखार्त्ता—विवाधूनयतां शिरः ॥ ६० ॥ शिरोधूननहेतुं च । रा-
ज्ञा पृष्टाववोचतां ॥ भूपते रूपमालोकि । यत्तदा तदनुत्तरं ॥ ६१ ॥ कुष्टदुष्टाग्निरुत्तिष्ठ—मानः
संप्रति लुंपति ॥ बालप्रवालवद्रूपं । तव धिग् मानवीं तनुं ॥ ६२ ॥ कथं वृद्धौ युवां वित्थ ।
इति वादिनि चक्रिणि ॥ तावूचतुः सुरावावां । विद्वः ज्ञानदृशाखिलं ॥ ६३ ॥ तव रूपर्द्धि-

माकर्ण्य । वर्ण्यमानां बिडौजसा ॥ आवामत्र द्विजीभूय । कौतुकाद् द्रष्टुमीयिव ॥ ६४ ॥ यादृक् तुष्टाव शक्रस्ते । रूपमासीत्ततोऽधिकं ॥ तदेतदधुना व्याधि–विध्वस्तश्रीकमीक्ष्यते ॥६५॥ इत्युक्त्वा गतयोः स्वर्गं । त्रिदशीभूतयोस्तयोः ॥ स हिमप्लुष्टहेमाब्ज—भायं कायं स्वमैक्षत ॥ ६६ ॥ अथाशिथिलवैराग्यो । भूमानेवं व्यभावयत् ॥ अहो देहो नृणां संध्या—रागवत्क्षणभंगुरः ॥ ६७ ॥ तांस्तान् स्वादयितुं भोगा—नात्मना संपृणक्ति यः ॥ सोऽयं कायः शठसुहृ—त्प्रायः प्रांते विनश्यति ॥ ६८ ॥ विषविश्वानरव्याल— व्याधिस्वाधीन एव यः ॥ सोऽपि स्व इति विश्वस्य । ही देहः पोष्यते जडैः ॥ ६९ ॥ अपावृत्तनवद्वारं । पुरमेतद्धि विक्षतां ॥ आत्मा क्षमः किमेकाकी । वारणे व्याधिवैरिणां ॥ ७० ॥ यस्तत्तद्भक्ष्यभंगीभि—स्तोष्यंते सर्वदेहिभिः ॥ यो वातातपशीतेभ्यः । प्रयत्नेन च रक्ष्यते ॥ ७१ ॥ यत्पोषणाय पापानि । विधीयंते महांत्यपि ॥ नार्प्यते दृढमित्रेऽपि । यत्कृते सुकृते मनः ॥ ७२ ॥ यो देवगुरुबंधुभ्यो—ऽप्यात्माधिक्येन वीक्ष्यते ॥ साक्षाद् दृष्टाद्य निष्टासा—वनिष्टा तस्य वर्ष्मणः ॥ ७३ ॥ एको महौषधीमन्यः । कपिकच्छुं गिरीश्वरात् ॥ कश्चिच्चिंतामणिं चान्यः । पंकपिंडं पयोनिधेः

॥ ७४ ॥ निधिमेकोऽपरः सर्पं । लभते विवराद्यथा ॥ तथैकः पुण्यमन्यस्तु । पापमस्माच्छरीरतः
॥ ७५ ॥ भाग्याभाग्यविभेदेन । नृणां भिन्नाः फलोदयः ॥ अहं देहादितः प्राप्य । पुण्यं स्यां
भाग्यवान्न किं ॥ ७६ ॥ निश्चित्येति दृषत्खंड—लीलयोत्सृष्टवैभवः ॥ विनयंधरसूरिभ्य—श्च-
क्री भेजे द्रुतं व्रतं ॥ ७७ ॥ न विज्ञापनया राज्ञां । चाटुवाक्यैर्न योषितां ॥ लब्धवाग्भिर्न बा-
लानां । व्यामुमोह महामुनिः ॥ ७८ ॥ जातगाढाग्रहः कर्म—पुंजकुंजरघातने ॥ निर्ययौ न-
गराद्द्रि—कंदरात्केसरीव सः ॥ ७९ ॥ सुनंदाद्याश्चतुःषष्टि—सहस्राः स्नेहलाः स्त्रियः ॥ चि-
रत्नानि च रत्नानि । चक्रादीनि चतुर्दश ॥ ८० ॥ अजातनिष्ठाः नैसर्पि—प्रमुखा निधयो न-
व ॥ द्वात्रिंशच्च सहस्राणि । भूपा मुकुटधारिणः ॥ ८१ ॥ षण्मासीं परितो भ्रेमु—श्चक्रिणं चा-
टुकारिणः ॥ न पुनः कौतुकेनापि । दृशा पस्पर्श तान् मुनिः ॥ ८२ ॥ त्रिभिर्विशेषकं ॥ स्वयं
तेषु निवृत्तेषु । मुक्तभार इवाध्वगः ॥ ज्ञानक्रियापरिवारो । भूतले विजहार सः ॥ ८३ ॥ पा-
रणे षष्टभक्तस्य । जितजिह्वः कदापि सः ॥ छगीतक्राक्तचीनान्न—भक्ष्यमाप क्ष्मापतिः ॥८४॥
कदन्नरससंसिक्तः । कुष्टदुष्टद्रुमांकुरः ॥ तत्क्षेत्रे वृद्धिमासाद्य । बभार शतशाखतां ॥ ८५ ॥

तपसा पारणे वेला—तिक्रमेण कुभोजनैः ॥ तद्देहगेहविध्वंसं । बद्धमूलो व्यधादसौ ॥ ८६ ॥
ततोऽस्य कासहृल्लास—श्वासशूलखसादयः । परेऽपि व्यकुपन् रोगा । घटिता भरगा इव
॥ ८७ ॥ तथापि भंगुराद्देहा—दिन्दुर्धर्ममभंगुरं ॥ नातापनातपःप्रायां । क्रियां जातु मुमोच
सः ॥ ८८ ॥ ससवर्षशतीं रोगान् । मृष्यतस्तस्य जज्ञिरे ॥ कफविप्रुएमलामर्शौं—षधिप्रमुख-
लब्धयः ॥ ८९ ॥ लब्धलब्धिबलोऽप्यासी—दुदासीनस्तनौ मुनिः ॥ श्लाघ्यः स हि सश-
स्त्रोऽपि । यो न हंत्यपराधिनम् ॥ ९० ॥ अवधिज्ञानतो जान—न्नवधिं तं महात्मनां ॥ मु-
मुचे नमुचेर्वैरी । सौधर्मे स्वीयमासनम् ॥ ९१ ॥ ससंभ्रमं समुत्थान—द्धुन्वन्निःशेषभूषणः ॥
आवर्जितभुजद्वंद्व—स्तं ववंदे पुरंदरः ॥ ९२ ॥ अनवद्यस्त्वया विश्व—वंद्य कोऽयमवंद्यत
॥ इति पृष्टः सुरप्रष्ट—स्त्रिदशैः स्पष्टमन्यधात् ॥ ९३ ॥ अहो सनत्कुमारर्षि—र्ववंदे विबुधा म-
या ॥ रोगार्त्तोऽपि चिकित्सां यो । न कारयति केनचित् ॥ ९४ ॥ इमां शतक्रतोर्वाचं । म-
धुरोज्ज्वलशीतलां ॥ द्वौ देवौ न विषेहाते । सीतां वातकिनाविव ॥ ९५ ॥ मनुष्येष्वल्पकी-
टेषु । धैर्यमीदृक्कथं भवेत् ॥ भवेद्वा तन्न रोगार्त्ते । स हि प्रियभिषक् सदा ॥ ९६ ॥ विजयो

वैजयंतश्च । द्वावेव त्रिदशौ तत ॥ तस्य सत्वपरीक्षार्थं । दिवोऽवातरतां भुवि ॥ ९७ ॥ वै-
द्यवेषधरौ भूत्वा । नत्वा सत्वाधिकं मुनिम् ॥ ऊचतुस्तौ प्रभो रोगा–स्तवामी पीडयंति नौ
॥ ९८ ॥ त्वां मुधैव चिकित्सामो । मुने यद्यनुमन्यसे ॥ मोघः प्रायः प्रतीकारो । न हि नौ
सिद्धहस्तयोः ॥ ९९ ॥ देहं विना न धर्मः स्या–न्न देहः पटुतां विना ॥ इमामाधातुमाधातु
। चातुरी चेत्तदावयोः ॥ ३०० ॥ नावां द्रविणलोभांधौ । पुण्यमेवार्थयामहे ॥ मास्मन्मनोरथं
भांक्षीः । क्व योगः पुनरीदृशः ॥ १ ॥ एवमभ्यर्थितस्ताभ्यां । मुनिर्ध्यानधनो जगौ ॥ अहो
यदि युवां वैद्यौ । तदा पृच्छामि किंचन ॥ २ ॥ द्रव्यभावविभेदेन । व्याधयो द्विविधाः श्रुताः
॥ कातरान्नितरां भेत्तुं । तेषु सामर्थ्यमस्ति वाम् ॥ ३ ॥ अप्यधीतश्रुतावावां । व्यक्तिमेतां
न मन्वहे ॥ तत्त्वमेव वदेत्युक्त–स्ताभ्यामभिदधे मुनिः ॥ ४ ॥ द्रव्यतः कुष्टकासाद्या । रो-
गा यैर्हीयते वपुः ॥ भावतोऽष्टौ च कर्माणि । यैरात्मा खिद्यते भवे ॥ ५ ॥ तत्र व्यपोहितुं
द्रव्य–रोगानहमपि क्षमः ॥ तत्किं यत्कुलिशस्येव । दुःसाध्यं तपसः किल ॥ ६ ॥ इत्युक्त्वा
श्लेष्मणा सिद्ध–रसेनेव विलिप्य सः ॥ चक्रे कुष्टादयःश्यामां । स्वांगुलीं कनकद्युतिं ॥ ७ ॥

ऊचे च यदि निष्ठ्यूत–लवमेवं व्ययाम्यहं ॥ निर्मितस्वर्णसंदेहं । देहं कुर्वेऽखिलं तदा ॥ ७ ॥ परं भावरुजो भेत्तु—महमीहे महाशयौ ॥ भवेन्मूलेष्वदग्धेषु । वल्ली पल्लविता पुनः ॥ ए ॥ यदि तत्र युवां शक्तौ । तद्ब्रूतं किं बहूक्तिभिः ॥ श्रुत्वेति तौ परां कोटिं । विस्मयस्याध्यरोहताम् ॥ १० ॥ तौ ततो विततोद्योतं । मुख्यं रूपमुपागतौ ॥ संतुष्टौ तुष्टुवाते तं ॥ योगींद्रं योजितांजलिं ॥ ११ ॥ यथा द्रव्यरुजां भाव—रुजामपि तथा भिदे ॥ त्वमेवैकः समर्थोऽसि । कावावां कर्मकिंकरौ ॥ १२ ॥ धन्यस्त्वं यस्य सौधर्मा—धिपतिः कुरुते स्तुतिं ॥ मायामायावः कृत्वैव—मावां त्वां हि परीक्षितुं ॥ १३ ॥ यं द्रव्यभावरोगाणां । मूलमंगं विदुर्विदः ॥ स्वयं विशीर्यमाणं त—त्त्वया युक्तमुपेक्ष्यते ॥ १४ ॥ धनांगनादि दूरेऽस्तु । स्नेहो देहेऽपि नास्ति ते ॥ जानीवो न दवीयांस्त—त्कर्मामयजयस्तव ॥ १५ ॥ स्तुत्वेति जग्मतुः प्रीतौ । निजधाम सुधाशनौ ॥ महर्षिरपि कालज्ञः । कालं चक्रे समाधिना ॥ १६ ॥ सनत्कुमारः सुकृतैकलक्ष—स्त्रिवर्षलक्षप्रमिताखिलायुः ॥ कल्पं तृतीयं त्वरितं जगाम । स्वनामसाधर्मिक इत्यभीष्टम् ॥ १७ ॥ इति श्रीसनत्कुमारकथा समाप्ता. ॥

ननु न युक्तः श्रावकाणां विहितवैरादिदोषोन्मेषः परांगनाश्लेषः, यास्तु नदीनीरवत्सर्वसाधारणाः साधारणस्त्रियः, तदुपभोगः किं निषिध्यत इत्याह—

॥ मूलम् ॥—मयणग्गिपवणवेसं । निम्मलआयारसाहुजणवेसं ॥ केवललोहनिवेसं । न सेवए सावओ वेसं ॥ ४४ ॥ व्याख्या—श्रावको न वेश्यां सेवते, कथंभूतां ? मदनाग्नेः कामानलस्योद्दीपनाय पवनप्रायो वेशो वस्त्राभरणविन्यासो यस्याः सा तथा तां निर्मलाचाराः साधुजनास्तेषामनायनत्वाद्वेश्यामरुच्यां. यदार्षं—अणायणे चरंतस्स । संसग्गीए अभिक्खणं ॥ हुज्ज वयणाणं पीला । सामन्नंपि य संसओ ॥ १ ॥ तथा केवलस्य दयादाक्षिण्यादिनिरपेक्षस्य लोभस्यैव निवेशो यस्यां सा तां. उक्तं च—दूरागयंति आयार-पक्खियं पायमूलपडियंपि ॥ उज्झन्ति फालिऊणं । वेसा लेहंव गहियत्थं ॥ १ ॥ अत एव—

॥ मूलम् —जंपंति महुरवयणं । वयणं दंसंति चंदमिव सोमं ॥ तहवि न वीससियव्वं । नेहविमुक्काण वेसाणं ॥ ४५ ॥ व्याख्या—यद्यप्येता जल्पंति श्लक्ष्णीकृतसीतोपलासंपृक्तपीयूषवन्मधुरं वचनं, तथा च वदनं मुखं चंद्रमिव सौम्यं प्रसन्नं दर्शयंति, तथापि न विश्वसि-

तव्यं स्नेहविमुक्तानां वेश्यानां. उक्तं हि—मा जाणह जह मउअं। वेसाहिययं समम्मणुल्लावं ॥ सेवालबद्धपत्थर—सरिसं पज्जणेण जाणिहसि ॥ १ ॥ अथ दृष्टांतगर्भं वेश्यानामसेव्यत्वमाह—

॥ मूलम्—तह अम्मापि उमरणं। सोऊणं डुल्लरायपुत्ताणं ॥ मणसावि न माणिज्जा। दुरह-निवेसाउ वेसाउ ॥ ४६ ॥ व्याख्या—आस्तां वाक्कायाभ्यां दुष्टो द्रव्यैकरसिकत्वान्मलिनोऽभिनिवेशोऽध्यवसायो यासां ता दुरभिनिवेशा वेश्या मनसापि न मानयेत्. किं कृत्वा ? द्वयोर्वक्ष्यमाणयो राजपुत्रयोस्तथा विषभक्षणेन मातापितृमरणं श्रुत्वा. तथा च श्रूयते श्रीशांतिनाथचरित्रे—अस्ति समस्तवास्तुविस्तारनिरहंकारीकृतशतक्रतुपुरं रत्नपुरं नाम पुरं, तत्र पवित्राचारचारिमचमत्कृतचतुरचेताः श्रीषोडशजिनेश्वरजीवत्वादत्यद्भुतभाग्यसौभाग्यशोभाविशेषः श्रीषेणो नाम राजा, तस्य शंकरस्येव गंगागौर्यौ, मृगांकस्येव राकारोहिण्यौ, कुसुमशरस्येव रतिप्रीती, उभे वल्लभे अभूतामभिनंदिता शिखिनंदिता चेति. तस्य च राज्ञो द्वौ कुमारौ पाठितावपि निरवद्या विद्याः, ग्राहितावपि सकलाः कलाः, शिक्षितावपि महोपाध्यायेन दुर्निवारत्वाच्चित्तस्य, दुर्निग्रहत्वादिंद्रियग्रामस्य, दुर्लंघत्वाद्यौवनवनस्य, दुर्जयत्वादनंगवीरस्य, दुरपोहत्वान्महाम-

ल्वस्य, पतनशीलत्वात्प्राणिसमूहस्य निरस्य गुरुपारवश्यमनाकलय्य कुलाभिमानमविचार्य स्वाचारचारिमाणमवगणय्यागमरहस्यमवधूय निजां प्रसिद्धिं तिरस्कृत्य त्रपान्तरं तन्नगरनिवासिन्यां गतिहसितविलासितभणितभंगीतरंगरंगन्निखिलनागरायां त्रिभुवनजनमनःकुरंगसंयमनवागुरायां नेत्रत्रिभागनिरीक्षणक्षपितसुरपतिसाहसायामनंगसेनायां गणिकायां रज्यतःस्म. रहश्च तौ शिक्षितौ पित्रा किमेतदनुष्ठीयते यौवने युवाभ्यां, न ह्यतःपरं किमपि महत्त्वभंगस्य कारणं, मूलं मलिनतायाः, हेतुभूतं च पातकस्य, यन्मुग्धस्निग्धहृदयाः कुलवधूरवधूय परमार्थतो निःस्नेहासु लोभवश्यासु वेश्यासु बध्यतेऽनुरागः. उक्तं च—माहप्पगज्जिराण वि । चउहिं पयारेहिं गारवप्भंसो ॥ वेसाइ चोरियाए । जूएणं मज्जपाणेणं ॥ १ ॥ एवं तौ पित्रा शिक्षितावपि यदावगणितकशाघातौ तुरगाविव, समुन्मूलितालानौ द्विरदाविव, जर्जरितपंजरौ सिंहाविव, विधूनितगारुडमंत्रौ पन्नगाविव यथेष्टमेव विजृंभमाणौ एकद्रव्याभिलाषित्वान्मिथः कृतकटकबंधौ, गृहीतपरिघप्रासपट्टिसप्रमुखप्रहरणौ, आबद्धजरदौ निस्त्रपतया जातिवैरिणाविव कलहायेतेस्म. तदसाध्यव्याधिग्रस्ताविव कालदष्टाविव प्रबलपिशाचच्छलिता-

विय प्रलयानलदग्धाविव घोरसन्निपातपूरिताविवाशक्यप्रतीकाराववबुध्य दारुद्वयसमन्वितेन भूपालेनाकाले कालकूटकवलनात्कालः कृत इति राजपुत्रयोः कथा समाप्ता. ॥

तदेवं वेश्याव्यसनं दुरंतमवबुध्य न तदादरणीयं. ततश्च परस्त्रीषु साधारणस्त्रीषु च कामाभिष्वंगमुत्सृज्य सुश्रावकेण स्वदारसंतुष्टेन भवितव्यं. अन्यथा कामांधत्वापत्तेरनुचितं च तत् सुश्रावकाणामित्याह—

॥ मूलम् ॥—कामं कामंधेणं । न सावएणं कमावि होयव्वं ॥ देहधणधम्मखयकारिणी हि कामंमि अइगिद्धी ॥ ४७ ॥ व्याख्या—श्रावकेण कदापि सकृदपि काममत्यर्थं कामेन मैथुनाभिलाषेणांध इवाच्छादितविवेकदृक्त्वात्कामांधः, एवंविधेन न भाव्यं. यदाह—दिवा पश्यति नो घूको । नक्तं काको न पश्यति ॥ कामांधः कोऽपि पापीयान् । दिवा रात्रौ न पश्यति ॥ १ ॥ अथ तदेवोच्यते—यदोचितामनुचितां वा स्त्रियमविमृश्य केवलं कामगृद्धः प्रवर्तते, तथा च न कल्पते. यन्नीतिशास्त्रं—गुरुस्वामिसुहृच्छिष्य—स्वजनांगनया सह ॥ मातृजामिसुतात्वेन । व्यवहर्तव्यमुत्तमैः ॥ १ ॥ संबंधिनी कुमारी च । लिंगिनी शरणागता ॥ वर्षा-

धिका च पूज्यत्वं । संकल्पेन विकल्प्यते ॥ २॥ सदोषां बहुलोभां च । बहुग्रामांतरप्रियां ॥ अनीप्सितसमाचारां । चंचलां च रजस्वलां ॥ ३ ॥ अशौचां हीनवृत्तां चा—तिवृद्धां कौतुकप्रियां ॥ अनिष्टां स्वजनद्विष्टां । सगर्वां नाश्रयेत् स्त्रियं ॥४॥ परस्त्री विधवा नर्त्री । त्यक्ता त्यक्तव्रतापि च ॥ राजकुलप्रतिबद्धा । विवर्ज्या यत्नतो बुधैः ॥ ५ ॥ इदानीं कामांधत्वेन दोषमाह—देहधणेत्याद्युत्तरार्धं स्पष्टं, एवं कामांधत्वे दोषान् विज्ञाय न हि स्वदारेष्वत्यंतगृद्धिर्गृहिणा कार्या. तदेवमुक्तं पुरुषान् प्रतीत्य शीलस्वरूपं, अथ नारीराश्रित्य तदाह—

॥ मूलम् —जह नारीउ नराणं । तह ताण नरावि पासभूयाउ ॥ तम्हा नारीउवि हु । परपुरिसपसंगमुज्झंति ॥ ४७ ॥ व्याख्या—इह यथा संयमाचारे चरतां मृगाणामिव नराणां पुरुषाणां सद्गतिहेतुविघ्नत्वान्नार्यः पाशभूतास्तथा तासां नारीणां नरा अपि पाशभूता भवंति, कामस्योभयांशावलंबित्वात्. यस्मादेवं तस्माद्यथा शीलाभिलाषिणः पुरुषाः परस्त्रीसंगं वर्जयंति तथा नार्योऽपि परैः स्वभर्तृव्यतिरिक्तैः पुरुषमात्रस्य वर्जनं कार्यमिति प्रतिपादितं. अथ सुशीलानां दुःशीलानां चांतरं गाथाद्वयेनाह—

॥ मूलम् —ते सुरगिरिणोवि गुरू । जेसिं सीलेण निम्मला बुद्धी ॥ गयसीलगुणे पुण मुण । मणुए तणुए तिणाउवि ॥ ४९ ॥ वग्घाइया जयट्टा । दुट्ठावि जिया न सीलवंताणं ॥ नियछायंपि निरिक्खिय । सासंका हुंति गयसीला ॥ ५० ॥ व्याख्या—ते मनुष्याः सुरगिरेरपि मेरोरपि गुरवः, येषां बुद्धिः शीलेन निर्मला पवित्रा जवति, मेरोर्लक्षयोजनमानत्वात्तस्य तु यशःशरीरस्य त्रिजुवनव्यापकत्वाद्व्यतिरेकः, पुनर्गतशीलगुणान् मनुजान् तृणादपि तनुकान् लघून् जानिहि ? तृणं हि लघुत्वाद्वायुना ह्रियमाणमपि क्वचन गिरिग्रावादौ स्खलितमवतिष्ठते, कुशीलस्तूपचितदुःकृतप्रेरितस्त्रिलोकमपि ज्रमन्न लजते क्वचिदवस्थितिमित्यस्य तृणादपि लघुत्वं. तथा व्याघ्र आदिर्येषां सर्पाग्निपिशाचादीनां, ते व्याघ्रादयो दुष्टा अपि जीवाः शीलवतां न जयार्था जयहेतवो जवंति, श्रूयते हि जतृविरहे दवदंत्यादयः स्त्रियोऽपि शीलस्यैव महिम्ना स्थलीनाशेषव्याघ्रविषधरादिविप्लवाः स्वस्थानमानंचुः. उक्तं च —न वहति नदी नीरापूर्णा प्रशाम्यति पावको । हरिकरिमहासर्पा रेखां न लंघयितुं क्षमाः ॥ प्रजवति विषं भूतं वा नो चापि महायुधं । किमिह बहुना सत्या शप्तः सुरोऽप्युपला-

यते ॥ १ ॥ व्यतिरेके गतशीलाः पुरुषा निजछायामपि नीरंजने निरीक्ष्य मास्म अस्मद्दुष्कर्मगवेषकः स एष कोऽपि पुरुषोऽनूदिति स्वमतिकल्पनया साशंकाः सभया भवंति. उक्तं च —सर्वत्र शुचयो धीराः । स्वकर्मबलगर्विताः कुकर्मनिरतात्मानः । पापाः सर्वत्र शंकिताः ॥ १ ॥ अथ यदुक्तं शीलवतां न कुतोऽपि भयं प्रभवति, तदेवं सविशेषमाह—

॥ मूलम् ॥—जलणोवि जलं जलही–वि गोपयं विसहराvi रज्जुउ ॥ सीलजुआणं मत्ता । करिणो हरिणोवमा हुंति ॥ ५१ ॥ व्याख्या–शीलयुतानां सम्यक् पालितशीलानां प्रभावेणावष्टब्धो ज्वलनोऽप्यदाहकतया जलं जलप्रायो भवतीत्येवं पुरतोऽपि वाच्यं. एवं शीलस्य सकलापायविध्वंसकत्वमुपदर्श्याथाभीष्टलाभनिबंधनतामाह—

॥ मूलम् ॥— वित्थरइ जस वड्ढइ । बलं च विलसंति विविहसिद्धिउ ॥ सेवंति सुरा सिज्झंति । मंतविज्जा य सीलेण ॥ ५२ ॥ व्याख्या—शीलेन हेतुभूतेन हिमकरकरगौरं यशः श्लाध्यतारूपं विस्तार्यते, बलं शारीरिकं स्थाम वर्धते, मैथुनेछानिरोधेन बलहेतो रेतो धातोरभ्रंशात्, तथा च विविधाः सिद्धयोऽणिमाद्या विलसंति स्फुरंति, तासां ब्रह्ममूलत्वात्.

तथा सुरा देवाः सेवंते साहाय्यं कुर्वते. यदार्षं श्रीउत्तराध्ययनसूत्रषोमशाध्ययने—देवदाणवगंधव्वा । जक्खरक्खसकिन्नरा ॥ बंनयारं नमंसंति । दुक्करं जे करंति तं ॥ १ ॥ तथा सिध्यंति सिद्धिं यांति मंत्राः पुरुषाधिष्टिता असाधना वा, विद्या स्त्रीदेवताधिष्टिता ससाधना वा, मंत्रादिसिद्धेः शौचमूलत्वात्, शीलस्य च सर्वशौचेषूपरिवर्तित्वात्. यदागमः—पंचविहे सोए पन्नत्ते, तं पुढवीसोए, आउसोए, तेयसोए, मंतसोए, बंनसोए. लौकिका अप्याहुः—शुचिर्भूमिगतं तोयं । शुचिर्नारी पतिव्रता ॥ शुचिर्धर्मपरो राजा । ब्रह्मचारी सदा शुचिः ॥ १ ॥ अथ शीलस्य सर्वालंकारसारतामाह—

॥ मूलम् ॥—किं मंमणेहिं कज्जं । जइ सीलेण अलंकिउ देहो ॥ किं मंमणेहिं कज्जं । जइ सीले हुज्ज संदेहो ॥ ५३ ॥ व्याख्या—यदि शीलेन देहोऽलंकृतः स्यात्तदा मंमनाद्यैरलंकारैः किं कार्यं ? अपि तु न किंचित्, शीलेनैव तत्वतोऽलंकृते देहेऽलंकाराणां चर्वितचर्वणन्यायेनानर्थत्वात्, अलंकृतस्याप्यलंकारांतरकरणेऽनवस्थाप्रसंगात्. तथा यदि शीले संदेहो नवेत्, मया यावज्जीवं शीलं पाल्यमेवेति निश्चयो नास्तीत्यर्थः, तदापि मंमनैः किं कार्यं ?

शीलं विना तेषां भारमात्रफलत्वात्. अथात्र व्रते दृष्टांतमाह—

॥ मूलम् ॥—हंत नवं चिय नयणं । जंबुकुमारस्स किंपि आसि तया ॥ रूवबहुयावि बहुया । जेण तिणाउ तणू दिट्ठा ॥ ५४ ॥ व्याख्या—हंतेति वितर्कार्थो निपातः, तदा तस्मिन् विवाहकाले जंबूकुमारस्य किमपि नवं नूतनमेव नयनं विवेकात्मकमासीत्, येन वचनेनाष्टौ नवोढा वध्वः रूपेणोपलक्षणत्वादन्यैरपि गुणैर्बह्वयस्तृणादपि तनवो दृष्टाः. अयं भावः—लोको हि निर्विवेको बाह्यदृगिंद्रियेण रूपादिगुणैरनभिरामामपि रामामहृतकुंकुममिव पश्यति, जंबूकुमारस्तु रूपादिविशिष्टा अष्टतरुणीस्तृणादपि तुच्छतया ददर्श, न चैतद्दर्शनं नवीनं नयनं विना संगच्छते, किमप्यपूर्वमेव नयनं प्रादुरासीद्येनैवं दृष्टवानिति. अथ जंबूस्वामिकथा चैवं—

देशोऽस्ति मगधनामा । यत्रारामा बहिः पुरे रामाः ॥ तरुणाश्रिताः सुवयसः । सारच्छायाः सदालियुजः ॥ १ ॥ सुग्राम इति ग्रामः । सुग्रामग्रामणीरभूत्तत्र ॥ चित्रं निर्वृतिसुस्थो । वृतिमध्यस्थोऽपि यत्र जनः ॥ २ ॥ परिकलितराष्ट्रकूटा—न्वयोऽत्नवद्ग्रामनायकस्तत्र ॥

नाम्ना परिणामेन च । यः ख्यातिं प्रापदार्य इति ॥ ३ ॥ शशिन इव रेवती तस्य । वल्लभा
चित्रमुदितवृषराशिः ॥ जातौ तयोः सुविनयौ । तनयौ भवदत्तभवदेवौ ॥ ४ ॥ अविरहित-
योरिह तयोः । सदाचरणशोभयोः समप्रभयोः ॥ शुभयोरुभयोर्नभयो—रिव फाल्गुन्या अ-
भूद्भेदः ॥ ५ ॥ व्याख्यानगर्जितार्जित—दुःसमयः शमितभूरिभवतापः ॥ आगाद् घन इव
गगने । सुस्थितगुरुरन्यदा तत्र ॥ ६ ॥ आदत्त तदुपदेशा—मृतपल्वललुलितगलितचिरतृ-
ष्णः ॥ व्रतमापृष्ठस्वजनो । भवनिर्वेदेन भवदत्तः ॥ ७ ॥ गुरुचरणांबुजभजना—दागममकरं-
दबिंदुपानरतः ॥ भृंग इव जातरंगः । केषु न देशेषु स चचार ॥ ८ ॥ कोऽप्यन्यदा मुनींद्रः
। सूरीनापृच्छ्यबंधुबोधाय ॥ ग्रामं जगाम कंचन । वंचनरहितो नरहितोक्तिः ॥ ९ ॥ तत्का-
लपाणिपीडन— संबंधाद्बंधुरंध इव सम्यक् ॥ न तमायांतमवैक्षत । वंदनदानादि दूरेऽस्तु
॥ १० ॥ वीवाहविहस्तान्नि—र्वनितान्निरितस्ततो भ्रमंतीभिः ॥ प्रत्युत तस्य महाव्रत—मु-
द्धृत्योद्धृत्य जर्जरितं ॥ ११ ॥ मोहमहीपतिराज्ये । विजयिनि तत्र स्वबोधशस्त्रस्य ॥ प्रसरम-
पश्यन् व्रीडया—पन्नो ववलेऽथ मुनिवीरः ॥ १२ ॥ निर्व्याजे मुनिराजे । गुरोः पुरस्तात्तथैव

ज्ञ्वदपाके ॥ भवदत्तः स्माह हसं—स्तारं तारुण्यदुर्ललितः ॥ १३ ॥ यः करपीडनपर्वणि । चा-
रित्रिणमतिथिमग्रजमुपेतम् ॥ नोपालक्ष्यदपि तं । धिग्बंधुं वांध्यमिव वृंदम् ॥ १४ ॥ मुनिर-
परस्तं प्रोचे । कठिनेनायं न बंधुनानंचे ॥ भवतोऽपि बंधुरेकः । सविवेकस्तावदस्ति गृहे ॥१५॥
साधुषु भक्तिर्बंधा—वनुरक्तिस्तस्य भोत्स्यतेऽस्माभिः ॥ शिष्यो भविष्यति यदि । त्वयि नि-
रमिलिते विगतमोहः ॥ १६ ॥ अभिमानी भवदत्त—स्तदा व्यधत्ताश्रवं शृणुत यतयः ॥ गु-
रवो मगधेषु गता । यदि तदसौ प्रव्रजित एव ॥ १७ ॥ समग्रे मगधजनाना—मयन्नदीया-
यितं स गुरुमूचे ॥ पूज्या दत्त सहायं । येनाहं वंदये बंधून् ॥ १८ ॥ तेऽप्यूचुरिंगितज्ञा । ए-
कोऽपि हि गच्छ वत्स तत्र त्वं ॥ कः सिंहस्य सहायो । वने च गगने च सूर्यस्य ॥ १९॥ सो-
ऽचालीदेकोऽप्यथ । शकुनानि प्रतिपदं मृगयमाणः ॥ ग्रामं जगाम सुग्रा—मनामकं नामकं वि-
पदाम् ॥ २० ॥ पृष्टः स्वजनोदंतं । ग्राम्यः कश्चिज्जगाद तत्रेति ॥ भाग्याधिकोऽसि मुनिवर ।
यदवसरे त्वमिह संप्राप्तः ॥ २१ ॥ भ्राता तव भवदेवः । परिणयते नागिलां कनीमद्य ॥ इ-
भ्यस्य नागदत्तस्य । या सुता वासुकीजानेः ॥ २२ ॥ जातशिरःशूलः शूल—येव तद्वार्तया

उप० श्रुतिं गतया ॥ दध्यौ मुनिरहह पर—स्य हस्यते यत्तदन्येति ॥ २३ ॥ किं तव गतेन मया
। मद्बंधुर्दारबंधने पतितः ॥ नूनं स इव हसिष्ये । वलितो मोघश्रवः श्रमणैः ॥ २४ ॥ एत-
चिंता द्विवाहसूचक—मशकुनमपि पथि न किं ममाविरभूत् ॥ यदि वा खेदेनालं । भंगुरमनसोऽ-
५०० स्ति न हि सिद्धिः ॥ २५ ॥ तत्र च गच्छामि गतो । मुखरागं बांधवस्य पश्यामि ॥ हरिरपि न
श्रियमाप—जलधिमनालोड्य दूरस्थः ॥ २६ ॥ एवं वितर्कतर्कुं । भ्रमयन् लेभे स्वबंधुभवनं
सः ॥ तत्रायातमतिथिं । तनयं वीक्ष्यातुरौ पितरौ ॥ २७ ॥ केचिज्जजल्पुरात्ते—ऽपि संयमे
मोह एष दुरपोहः ॥ नो चेद्बंधुविवाहे । कथमयमागादनाहूतः ॥ २८ ॥ केऽप्यूचुरसौ न स्व-
थ—मुपयेमे तेन बंधुर्विवाहं ॥ द्रष्टुमियाय मुनेरपि । कुतुकेनाक्षिप्यते चेतः ॥ २९ ॥ मुनि-
रपि नमतां तेषां । तारस्वरमाशिषं ददौ धर्म्यां ॥ आकृष्टिवरत्रामिव । बंधोर्मोहांधुमग्नस्य
॥ ३० ॥ पत्रलता निजवध्वाः । कपोलफलके लिखन् कुलस्थित्या ॥ शुश्राव तां श्रुतिसुधां ।
भवदेवः सौधमध्यस्थः ॥ ३१ ॥ सम्यगवगम्य बंधो—र्ध्वनिं स नारीनिकुंजमध्यगतः ॥ मेघ-
स्येव मयूरो । नरिनर्त्ति स्म प्रमोदेन ॥ ३२ ॥ सोऽथ दधाते बंधो—र्मिलनाय करीव दुर्निवा-

रगतिः ॥ अध्वस्थिता लता इव । वधूसखीः प्रसन्नमवधूय ॥ ३३ ॥ तेन प्रणयात्प्रणतः । स्थितये चामंत्रितो मुनिः स्माह ॥ नाहमिह स्थाष्णुरहो । गुरुसविधेऽवश्यगंतव्यः ॥ ३४ ॥ तत्किमपि मंक्षु नैदयं । गृहाण निजमनुगृहाण बंधुजनं ॥ इत्युक्त्वा मुनिरेनः—स्तेनः प्रतिलाभितस्तेन ॥ ३५ ॥ पात्रमदान्मुनिरेकं । सत्यंकारं व्रतस्य तस्य करे ॥ तं प्रस्थितमथ नत्वा । नत्वा ववले कुटुंबेन ॥ ३६ ॥ क्षणमनुभवतामेतौ । चिरात्समेतौ मिथः कथारंगं ॥ इत्यागृह्य स्वजनै—र्व्यग्रैर्नावालि भवदेवः ॥ ३७ ॥ पात्रकयोगात्पात्रं । तमेव कर्तुं मुनिर्मनसि गूढः ॥ ग्रामाद् दूरं निन्ये । बंधुं वाक्पाशकृतबंधं ॥ ३८ ॥ पश्येयं सा वापी । यत्रावां चिरमकार्ष्म जलकेलिं ॥ बाल्ये नौ कृतरागं । तरुगणमेतत्तदेव पुरः ॥ ३९ ॥ अस्मद्बालचापल—साक्षिणमुपलक्षयस्यमुं वृक्षं ॥ स्मरसितरामावाभ्यां । निःपल्लविता लता एताः ॥ ४० एता मुनीश्वरगिरो । लवमात्रां मुदमडुर्न तस्य हृदि ॥ शल्यायतेस्म यत्प्रति—पदमर्धपरिस्कृता बाला ॥ ४१ ॥ पूर्वं न किंचिदूचे । स्नेहानुचितं ह्रियैव भवदेवः ॥ ह्रीः स्वार्थभ्रंशकरीति । तामपास्याथ स स्माह ॥ ४२ ॥ बंधो बंधादहितै—र्विहिताज्ञयमत्र विद्यतेऽद्य श्वः ॥ मुनिरूचे

उप०
चिंता
५०२

केयं भीर्भावारिभ्यो भयं दध्याः ॥ ४३ ॥ स स्माह पात्रकमिदं । मदंगभंगाय भारतो भ्रा-
तः ॥ सोऽप्यूचे चिंतय चिरं । लग्नदुःकर्मणां भारम् ॥ ४४ ॥ स जगाद यामि साधो । न
मयास्पृश्यत कदापि भूरियती ॥ मुनिरवदन्निगदसि किं । भ्रातर्भ्रांतस्त्रिभुवनेऽपि ॥ ४५ ॥ ए-
तज्जन्मापूर्वं । सर्वं वनमित्युदीरयति तस्मिन् ॥ मुनिरूचे संसारे । तत्किं यन्नात्मना दृष्टम्
॥ ४६ ॥ एवं मिथः कथारस—वशगौ तौ जग्मतुर्गुरूपांतं ॥ प्रव्राजयसे किमनुज—मिति
यतिभिरभाणि भवदत्तः ॥ ४७ ॥ गुरुणापि नमन्नूचे । भवदेवः किं व्रतार्थ्यसि स दध्यौ ॥
एकालोचा इव किं । सर्वेऽप्येते सदृशजल्पाः ॥ ४८ ॥ मन्ये मुनिषु मनस्वी । मद्व्रतसंधां
व्यधत्त भवदत्तः ॥ सदयो बंद्याहं । जग्राह किमन्यथासौ मां ॥ ४९ ॥ माभूदयं मृषावाक्
। ततो गुरूक्तं तथेति मेने सः ॥ साधुस्तव संधेति । प्राशंसि तदग्रजो यतिभिः ॥ ५० ॥ निः-
संकोचं लोचं । विधाय परिधाप्य साधुनेपथ्यं ॥ आसेदुषाग्रजेन । स मुदेक्षितो दीक्षितो गु-
रुणा ॥ ५१ ॥ अत्र स्थितममुमागत्या— तित्यजन्मा व्रतं स्वजनवर्गः ॥ एवमनुज्ञाप्य गुरून्
। चचाल सह तेन भवदत्तः ॥ ५२ ॥ क्षणमात्रान्मात्रादि—स्तत्रागात्तस्य परिजनः सर्वः ॥

नायातौ नस्तनयौ । किमिहेति गुरूनपृच्छच्च ॥ ५३ ॥ ज्ञवदत्तो ज्ञवदेव—श्चात्रायातौ तदै-
व यातौ च ॥ श्रुत्वेति गुरोः सुज्ञट—श्च्युतेषुरिव स न्यवर्तिष्ट ॥ ५४ ॥ प्रहितैर्दिशि दिशि
मनुजै—रनुजः संशोधितः पितृज्यां सः ॥ न पुनर्ज्ञातः क्वचिदपि । को वा जानाति वायुग-
तिः ॥ ५५ ॥ ज्ञवदेवो व्रतमचरद्—दुश्चरमपि सोदरोपरोधेन ॥ खादन्नक्रे पुनरनिशं । हृदये
सा नागिला तस्य ॥ ५६ ॥ दिवसो ययौ न रजनी । ययौ च रजनी पुनर्न दिवसोऽस्य ॥
अर्धालंकृतबाला—विरहज्वालावलीढस्य ॥ ५७ ॥ न श्रुतमपि गुरुवचनं । नाधीतमपि श्रुतं
विषयवैरि ॥ न गलितमपि तारुण्यं । मदनावेशेन स विवेद ॥ ५८ ॥ समये सौधर्माख्य—
त्रिदिववधूज्ञोगज्ञाजि ज्ञवदत्ते ॥ ज्ञवदेवेन जजृंज्ञे । द्विरदेन निरंकुशेनेव ॥ ५९ ॥ गुरुवचन-
ज्ञानकुला—ज्ञिमानमुख्या गुणाश्चिराद् द्दढिताः ॥ चित्रं मोहमहांधौ । ररक्षुरेतं न निपतं-
तम् ॥ ६० ॥ अगणितगणमर्यादः । स्मरयादःसंकुलश्चचाल मुनिः ॥ उत्खातशीलशैलः । सो-
ऽथ प्रलये पयोधिरिव ॥ ६१ ॥ मोहाज्ञया जरस्यपि । तारुण्योचितविकल्पतल्पस्थः ॥ स ज-
गाम ग्रामं तं । व्रतेन सह मार्गमुल्लंघ्य ॥ ६२ ॥ समया ग्रामं क्वचिदपि । जिनचैत्ये मुनिव-

रो विशश्राम ॥ तत्राजगाम सा ना—गिला जरत्यैव संयुक्ता ॥ ६३ ॥ अभ्यर्च्य जिनप्रतिमां । गुरुगौरवतोऽनमन्मुनिं तं सा ॥ सोऽपि परिविस्मृताशी—स्तां पित्रोः शुद्धिमप्राक्षीत् ॥ ६४ ॥ सापि स्वपतिं कुशला—कुशलप्रश्नाद्द्वयोऽनुमानाच्च ॥ तं विज्ञाय बभाषे । तौ वृद्धौ परत्नवमुपेतौ ॥ ६५ ॥ क्षणमथ दुःखं धृत्वा । साधुः पप्रच्छ नागिलोदंतम् ॥ कोऽसीति तया पृष्टश्च । धृष्टधीः स्पष्टमाचष्ट ॥ ६६ ॥ अहमार्यकरेवत्यो—स्तनयः सा नागिला च मम दयिता ॥ तां मुक्त्वा व्रतमादिषि । तदा स्वबंधूपरोधेन ॥ ६७ ॥ अधुना स्वर्गमुपेयुषि । बंधौ मुक्त्वा गणं व्रतगुणं च ॥ तोषयितुं तामागां । निशांत इव पद्मिनीमरुणः ॥ ६८ ॥ लावण्यरससरस्यां । विजयिन्यां प्रेमभाजने तस्यां ॥ हा प्रेत इवाविरतं । तृषितोऽत्नवदेव त्नवदेवः ॥ ६९ ॥ श्रुत्वेति कर्णकटुकं । मुनिवचनं मनसि नागिला दध्यौ ॥ कथमीदृशोऽपि साधुः । प्राकृत इव वंचितो विषयैः ॥ ७० ॥ धिग्मोहस्य विलसितं । यत्पलितैर्धवलितोऽग्रमूर्धानः ॥ मदनव्याकुलितहृदो । युवान इव बत विजृंभते ॥ ७१ ॥ केनोपायेनायं । भग्नमना मुनिवरो मयोद्धार्यः ॥ न हि गजपतिरबलानां । पंकनिमग्नः सुखोद्धारः ॥ ७२ ॥ अथ तत्साहचरिण्या ।

वृद्धायाः सूनुरायया जवनः ॥ ऊचे च मंक्षु पात्रं । किंचित्कुरु निजकरे जननि ॥ ७३ ॥ अ-
द्येह पर्वदिवसे । कश्चिद्भोजनमदत्त मे श्रीमान् ॥ अन्यो दित्सति भोजन-मुपर्यदीनश्च दी-
नारम् ॥ ७४ ॥ न पुराणाशनपूरित—जठरो भोक्तुं नवं समर्थोऽस्मि ॥ तदद्युक्तमिह वमि-
ष्यामि । तच्च भोक्ष्ये पुनः क्षुधितः ॥ ७५ ॥ यतिपतिरिति बालवचो । जुगुप्समानो न्यगा-
दि नागिलया ॥ उक्ते मुनेऽमुनेदृशि । जुगुप्ससे स्वं न चिंतयसि ॥ ७६ ॥ त्वमपि त्यक्तान्
भोगान् । कामयमानो बुभुक्षसे वांतं ॥ तदियं हंत दुराशा । नाशाय भवद्वयस्य तव ॥ ७७ ॥
भूयो भूयः सुव्रतं । चिंतामणिरिव न चारुचारित्रं ॥ तद्विषयचूर्णकक्षते । माधाक्षीस्त्वमपि
चतुरोऽसि ॥ ७८ ॥ चलितं करणपटुत्वं । कलितं पलितैः शिरश्च निःप्रसरं ॥ गलितं तत्तारु-
ण्यं । स्खलितं तव किं मनश्चरणात् ॥ ७९ ॥ शिवनगरगमनविद्या—मनवद्यां साधयंति ये
दीक्षां ॥ किं तेऽवकरकराणि । रमणीकायं भजंति जनाः ॥ ८० ॥ श्रुत्वेति तदुपदेशा—नूचे-
ऽसौ साधु साधु बोधस्ते ॥ अधुना धुनाति न मनाग् । मनो मनोभूर्मम विरक्तं ॥ ८१ ॥ इ-
यतीमतीत्य भूमिं । पुनर्यदर्थं समागमं सुदति ॥ तां चेत्पश्यामि तदा । समाहितः स्वहित-

मासेत्रे ॥ ७२ ॥ साप्यूचे शृणु साधो । मुमुचे किल नागिला यदा भवता ॥ हृतसर्वस्वेव
तदा । रुरोद सा रोदसीपूरम् ॥ ७३ ॥ साध्वीन्यः श्रुततत्वा । घनसत्वा कर्मवैरिणो हंतुं ॥
तेपे तपस्तथा सा । यथाजनि म्लानकुसुमसमा ॥७४॥ किं तत्रास्ति विलोक्यं । मयि दृष्टायां
च सापि दृष्टैव ॥ देहेन देहिना वा । मम तस्याः कोऽपि न विशेषः ॥ ७५ ॥ तत्किं सैव न
भवती । भवतीरस्थेति यतिनि जल्पाके ॥ सापि तथेत्यनुमेने । मुनिरथ लज्जातुरो दध्यौ
॥ ७६ ॥ वैशाखेनेव लता—लंक्रियते यौवनेन तनुरेषा ॥ क्रियते तरसा जरसा । विछाया
फाल्गुनेनेव ॥ ७७ ॥ जरया ग्रस्तस्यास्य । प्रकाशधमनीस्नसस्य देहस्य ॥ संगतिरंगतिरोहि-
त—हृदा मयाहारि हा चरणं ॥ ७८ ॥ मुनिरूचे धर्मज्ञे । धुरि मन्येऽहं महासतीषु त्वां ॥
या स्वं च मां च रक्षसि । निजाज्ञया कामराक्षसतः ॥ ७९ ॥ शोभयति प्रासादं । पताकि-
का दीपिका तमो हरति ॥ ग्रामं रक्षति वृत्ति—र्जीवयति जगज्जलदधारा ॥ ८० ॥ प्रायः पूर्ये-
त नदी । मेघेन तथा न तु क्वचन मेघः ॥ मय्यपि बोधविधाना—द्विपरीतं तत्त्वया चक्रे
॥ ८१ ॥ भूयान्मिथ्या दुरितं । मम क्षमस्व व्यलीकमनलीके ॥ मुनिरित्युक्त्वा मनसा । व-

वले चारित्रधवलेन ॥ ९३ ॥ आलोच्य गुरोः पुरतः । स्वदुरितमथ तेन तत्तपस्तेपे ॥ यद-
मीमिलदवसाने । सौधर्मे सोदरं तस्य ॥ ९४ ॥ इतश्च—विदेहे पूर्वार्धे । समस्ति किल पु-
ष्कलाख्यया विजयः ॥ विश्वप्रियोऽस्ति देशो । नवो निवेशः श्रियां तत्र ॥ ९५ ॥ सरसीव
विपुलपद्मा । तत्रास्ति पुंडरीकिणी नगरी ॥ निवसंति त्रिदशपक्षा । यस्यां वरलाजवन् श्री-
काः ॥ ९६ ॥ वज्रीव वज्रदत्त—स्तस्यां चक्री बभूव भूरिबलः ॥ यस्याढौक्यत समरे । वि-
जयेनाशेषविजयश्रीः ॥ ९७ ॥ तस्याजायत जाया । यशोधरा लक्षसंख्यललनस्य ॥ च्युत्वा
भवदत्तात्मा । तस्याः कुक्षाववततार ॥ ९८ ॥ समयेऽसूत सुतं सा । हंसायितममलवंशक-
मलस्य ॥ नाम्ना सागरदत्त—श्चंद्र इवायं ययौ वृद्धिं ॥ ९९ ॥ उद्यौवनो नृपसुताः । परःश-
ताः स परिणायितः पित्रा ॥ चिक्रीड सौधमूर्धनि । विजगीषुरिव श्रिया शक्रम् ॥ १०० ॥ वि-
द्युत्पिशंगबहुशृंग—संगतं चलमिव त्रिदशशैलं ॥ सखिभिरिव शिखिभिरुप—वननिलयैरा-
लोकितं प्रीत्या ॥ १ ॥ असमानमानिनीमान—भेदि गगनाध्वरोधसोद्रेकं ॥ अन्येद्युर्घनपट-
लं । दूरोन्नतमालुलोके सः ॥ २ ॥ युग्मम् ॥ यावज्जलैर्घनोऽयं । प्लावयिता मेदिनीमिति स

ऊचे ॥ तावच्चातकपापक—नुन्न इव मरुद्भवौ वामः ॥ ३ ॥ तत्प्रबलतया जलदे । कृषिक-
जनमनोरथैः सह विलीने ॥ सागरदत्तो व्यमृश—च्चपलत्वं सर्वभावानाम् ॥ ४ ॥ वैराग्येण
विमुक्ता—वरोधरोधः प्रपद्य चारित्रं ॥ तपसा विघटितकर्मा । परिलेभे सोऽवधिज्ञानं ॥ ५ ॥
भवदेवोऽपि हि च्युत्वा । विजये तत्र पुरि वीतशोकायां ॥ पद्मरथनृपतिपत्न्या । वनमाला-
या बभूव सुतः ॥ ६ ॥ नाम्ना स शिवकुमारो । जनकेन ग्राहितः कलाः सकलाः ॥ उद्वाह्य-
त तारुण्ये । पंचशतीं नृपतिकन्यानां ॥ ७ ॥ निजवैभवविभवोचित—संपन्नाखिलमनोरथ-
प्रथिमा ॥ रमणीरसानुविद्धः । सौधस्योपरि स चिक्रीड ॥ ८ ॥ मुनिरपि सागरदत्तो । विचरं-
स्तत्रान्यदाययौ नगरे ॥ प्रविवेश च भिक्षार्थं । गृहमिभ्यसमृद्धिदत्तस्य ॥ ९ ॥ तेन प्रासुक-
भक्तै—र्भक्त्या प्रतिलाभिते मुनौ ववृषुः ॥ दानद्रुमस्य फलमिव । पाकपिशंगं सुराः स्वर्णं
॥ १० ॥ तत्साक्षाद्वीक्ष्य शिवः । सौधाग्रस्थः प्रमोदमेदुरितः ॥ शुक्तोत्थितं ववंदे । सानंद-
स्तं मुनिमुपेत्य ॥ ११ ॥ मुनिरथ तस्य प्रथयां—चकार संसारसागरगुरुत्वं ॥ तत्तारणक्षमं
पुन—रर्हद्धर्मं सुपात्रमिव ॥ १२ ॥ अलपन्नृपभूर्न पुरा । के के विलुलोकिरे मया मुनयः ॥

त्वयि पुनरधिकस्नेहं । चेतः को हेतुरिह नेतः ॥ १३ ॥ मम नयने त्वद्वदना—लोकनपी-
यूषपानदुर्ललिते ॥ न चिखेलिषतो योषि—न्मुखनगरश्रोतसीदानीं ॥ १४ ॥ मुनिरूचे प्रा-
ग्जन्मनि । ममानुजोऽभूरितीदृशः स्नेहः ॥ जन्मांतरेऽपि शृणव—त्प्रायेण प्रेम न त्रुटति ॥१५॥
अवद्भिवस्तदानी—मद्भूरयस्त्वं न जातु जनमेनं ॥ अतिदुर्विनीतमिव किं । संप्रति सा-
धो पृथक्कुरुषे ॥ १६ ॥ मोहांबुधौ निमंक्षु । मामुदधार्षीस्तदा मुदागत्य ॥ तत्राकंठं मग्नं ।
संप्रति किमुपेक्षसे भ्रातः ॥ १७ ॥ मुनिरूचे वससि त्वं । राजकुलेऽहं गुरुकुले वत्स ॥ कथ-
मावयोः प्रसिध्यति । भिन्नस्थानस्थयोः स्नेहः ॥ १८ ॥ यदि पूर्वभवाभ्यस्तां । दृढयितुमभि-
लषसि संप्रति प्रीतिं ॥ पित्रोरनुज्ञया त—द्वत्स समादत्स्व चारित्रं ॥ १९ ॥ गत्वा स्वा-
वसथमथ । प्रणम्य पितरौ व्रतं ययाचे सः ॥ तत् श्रुत्वा तौ मूर्छा—निमीलिताक्षावधोऽपत-
तां ॥ २० ॥ संजातचेतनौ तौ । जगाद सादरमनाः शिवकुमारः ॥ वांछति महोदयं मयि ।
कोऽयं पितरौ वृथा खेदः ॥ २१ ॥ विषया विषवृक्षसखा । वनिता निरयाध्वदीपिका एताः ॥
श्रीरपि विद्युल्लोला । तत्किं रज्ये भवे येन ॥ २२ ॥ तावूचतुः किमस्म—न्मनोरथं वत्स स-

पदि मृदूनासि ॥ न क्षणमपि तव विरहं । सहावहे दावहेतिमिव ॥२३॥ अनुकूलास्तव व-
ध्वो । राज्यश्रीश्च स्वयंवरा सेयं ॥ आवां प्रणयप्रह्वौ । कोऽयमकालेऽभिलाषस्ते ॥ २४ ॥ य-
द्यज्जगाद पित्रोः । प्रसादनार्थं शिवोऽथ शिवकामः ॥ तत्तत्तयोर्विलीनं । संतप्ते पात्र इव वा-
रि ॥ २५ ॥ अननुमतोऽथ पितृभ्यां । भोजनमुत्सृज्य मौनधारी सः ॥ तस्थौ पौषधसद्मनि
। चक्रीव त्रिदशविजिगीषुः ॥ २६ ॥ दृढधर्माणं श्रावक—माकार्य जगाद पद्मरथभूपः ॥ अ-
स्मज्जीवितसौध-भ्रंशे स्तंभो भवान् भवतु ॥ २७ ॥ तनयवदनेंदुवीक्षण-मुक्ता प्राणा न श-
क्नुमो धर्तुं ॥ समयज्ञोऽसि तथा कुरु । यथा कुमारोऽचिराद्भुंक्ते ॥ २८ ॥ ॐमित्युक्त्वा दृ-
ढधी—र्दृढधर्मा शिवकुमारमुपतस्थौ ॥ प्रतिचक्रामेर्यामथ । वंदनकार्थं ययाचे तम् ॥ २९ ॥
असमंजसं तदालो—क्य मौनमुद्रां बिभेद नृपतनयः ॥ किं भाषसे विवेकिन् । वंदनमर्हं-
न्ति ननु यतयः ॥ ३० ॥ भावव्रतं तवाप्यस्ति । तेन का न्यूनतेति तेनोक्ते । निजगाद शि-
वकुमारो । वदसि किमेवं प्रवीणोऽसि ॥ ३१ ॥ क्व यतिः परिहृतसंगः । क्व संगकश्मलमति-
र्गृहस्थश्च ॥ सागरगोष्पदयोरिव । भवति च भेदो महाननयोः ॥ ३२ ॥ न गृही निगृहीत-

मना । अपि लज्जते मुनिवरस्य साहश्यम् ॥ श्लक्ष्णीकृतोऽपि समिता । समतां किंचित्कसः
स्पृशति ॥ ३३ ॥ सुचिरं कामितमपि त—त्पश्यामि पुनः सखे भवेऽमुष्मिन् ॥ पूर्वभवानाद्-
रतः । प्रकुपितमिव दुर्लभं चरणं ॥ ३४ ॥ अवदद् दृढधर्माऽदः । सत्यं पितरौ पुनरनुल्लंघ्यौ ॥
तन्मुंच कदाग्रहतां । कुरु स्वकार्यं गृहस्थोऽपि ॥ ३५ ॥ भुंक्ष्व प्रासुकभक्ते—न मृत्युनालं स्व-
कार्यविघ्नेन ॥ इति तद्वचः स मेने । शिष्टाः प्रायेण नाविष्टाः ॥ ३६ ॥ अथ दृढधर्मानीतैः ।
शुद्धाहारैः सदैव षष्टांते ॥ मुनिरिव चक्रे पारण—माचामाम्लेन सदने सः ॥ ३७ ॥ कुंकुम-
कपिशपरःशत—वनितादीप्ताग्निकुंडमध्यस्थः ॥ पंचाग्न्यधिकं तन्व—स्तपोऽत्यगाद् द्वादशा-
ब्दं सः ॥ ३८ ॥ निबिडं विडंबितोऽसौ । प्राच्यभवेऽनेन तेन सर्प इव ॥ दृढधर्माविष्टंभा—
न्निशुशुंभ हठेन मदनमसौ ॥ ३९ ॥ इति तपसा पूर्णायुः । पर्यंते साधुसाधितानशनः ॥ पं-
चमसुरलोकेऽभू—द्विद्युन्मालीति स त्रिदशः ॥ ४० ॥ चतसृभिरमरवधूभिः । सह रममाणे
सुरेऽत्र पंचशरः ॥ प्राग्जन्मनि जर्जरितः । पुनः स्वमुज्जीवितं मेने ॥ ४१ ॥ तस्यायुषोऽवसाने
। विहरन् मगधेषु वर्धमानजिनः ॥ शमत्रासः समवासर—दुपराजगृहं जगन्नाथः ॥ ४२ ॥

विद्युन्माली नंतुं । नगवंतं समवसरणमायातः ॥ त्रिदशातिशायितेजा । ददृशे श्रेणिकनरेशेन ॥ ४३ ॥ ईदृक्तेजाः किमसा—विति पृष्टः श्रेणिकेन विज्ञुरूचे ॥ च्यवनासत्त्या सांप्रत—मयमनल्पमहा महानाग ॥४४॥ ट्पे यदनेन तपः । सुदुस्तपं शिवन्नवे विदेहेषु ॥ तेनेदमस्य तेज—स्त्रपाकरं नास्करस्यापि ॥ ४५ ॥ कोत्पत्स्यते च्युतोऽसा—विति पृष्टे नूज्ञुजा पुनर्वीरः ॥ प्रोवाच सप्तमेऽह्नि । विपत्स्यते सैष सुरलोकात् ॥ ४६ ॥ रुषन्नश्रेष्ठितनुजो । जंबूनामा नविष्यति पुरेऽत्र ॥ अस्यामवसर्पिण्यां । चरमोऽयं केवली ज्ञेयः ॥ ४७ ॥ इति जिनवचसा मुदित—स्त्रिपदीं दत्वाथ समवसरणस्थः ॥ जंबूद्वीपाधिपतिः । प्रननर्त्तानादृतो देवः ॥ ४८ ॥ नूपः पप्रच्छ विज्ञुं । किममरनरपूरितेऽत्र तव सदसि ॥ देवोऽयमेव नृत्यति । मुक्तिः स्थूलं नविष्णुरिव ॥ ४९ ॥ अवदत्प्रज्ञुः पुरेऽस्मि—न्निच्योऽभूद्भूप चंद्रगुप्त इति ॥ आस्तां तनयौ तस्य । रुषभदत्तश्च जिनदासः ॥ ५० ॥ रुषन्नः शुन्नपरिणामः । श्रीधामनिकामधृतगुणग्रामः ॥ यशसा धवलितज्ञुवनो । बन्नार नारं कुटुंबस्य ॥ ५१ ॥ जिनदासः पुनरनिशं । द्यूतव्यसनी पणांगनासक्तः ॥ शरणीचक्रे दोषै—रखिलैः रुषन्नादिव त्रस्तैः ॥ ५२ ॥ बंधुस्ने-

हेन सदा । हितशिक्षादायि तस्य ऋषभेण ॥ न पुनरवासि तयासौ । रामठमिव चंदनबटया
॥ ५३ ॥ उपदेशानर्हत्वा—दृषभस्तं स्वजनभूपतिसमक्षम् ॥ निरवासयन्निजगृहा—ज्ज्ञातापि
रिपुर्गुणैर्हीनः ॥ ५४ ॥ अन्येद्युरथ कितवै । रुद्धो लभ्यं धनं मृगयमाणैः ॥ कलहं विदधन्नि-
शिता—युधैर्निजघ्ने कृपाहीनैः ॥ ५५ ॥ सोऽथ विरुद्धः कर्मणि । मर्मणि विद्धः क्षितिं द्विधा
प्राप्तः ॥ ऋषभस्य दीनवदनो । न्यवेद्यत स्वजनवर्गेण ॥ ५६ ॥ लोकत्रपया कृपया । बंधुप्रेम्णा
तथेरितस्त्वरितम् ॥ तत्राजगाम ऋषभः । क्रंदन् यत्रास्ति जिनदासः ॥ ५७ ॥ मरणभयाक्र-
तगर्व—स्तं जिनदासो जगाद गलदश्रुः ॥ बंधो ममापराधं । क्षमस्व मां विपदि तायस्व ॥५८॥
सोऽपि कृपालुः प्रोचे । भ्रातः किं कातरोऽसि भव धीरः ॥ नीत्वा त्वं जिसदनं । त्वामुल्लाघ-
यितास्मि वरवैद्यैः ॥ ५९ ॥ जिनदासस्तमवादी—न्ममाधुना नास्ति जीविते गृद्धिः ॥ भ्रात-
स्तवमुखकमला—दर्हमंत्याराधनामीहे ॥ ६० ॥ जातोऽस्मि कुले विमले—ऽकरवं कर्माणि
तानि तान्यनिशं ॥ स्मृतमात्रैरपि संप्रति । यैः हृदि दहनाधिको दाहः ॥ ६१ ॥ ऋषभोऽनि-
दधे भ्रात—र्धन्यस्त्वं यस्य मतिरियं स्फुरति ॥ प्रांतेऽपि कृतं सुकृतं । फलदं किं धीर विधु-

रोऽसि ॥ ६२ ॥ भुवनाभरणं शरणं । भवंतु जिनसिद्धसाधुधर्मास्ते ॥ अपराधिन्यपि जंतौ ।
भज मैत्रीं किमुत शेषेषु ॥ ६३ ॥ निंदस्व पापमखिलं । संप्रत्यनुमोदयस्व सच्चरितं ॥ परमे-
ष्ठिपंचकं स्मर । कुरु सर्वाहारपरिहारं ॥ ६४ ॥ देहेऽपि मुंच ममतां । विभावय श्रमणवीर-
चरितानि ॥ एवं तव शिवलक्ष्मी—रपि दूरे नास्ति किमुत द्यौः ॥ ६५ ॥ इति बंधोर्वचना-
मृत—पानाज्जातव्यथामजानानः ॥ समाधितमृत्युः सोऽभू—दनाहताख्यो महादेवः ॥ ६६ ॥
सोऽयमधुना स्वबंधोः । सदने सुतरत्नसंभवं श्रुत्वा ॥ मम निर्मलं कुलमहो । इत्युल्लापान्नरी-
नर्त्ति ॥ ६७ ॥ अथ नत्वा जिननाथं । मन्वानः स्वपुरं प्रधानतरं ॥ सौधं जगाम भूपः । प्री-
त्या पश्यन्नृषभगेहं ॥ ६८ ॥ पूर्वं तत्रैव पुरे । समागतोऽभूत्सुधर्मगणनाथः ॥ विममर्श तदा
ऋषभ—स्य वल्लभा धारिणी मनसि ॥ ६९ ॥ तं तं प्रसादमापं । भर्तुरहं न पुनरेकमपि पु-
त्रं ॥ चकार च सर्वोपायां—स्तदात्वे तेऽपि च न फेलुः ॥ ७० ॥ संप्रति गुरुः सुधर्मा । स-
मागमज्जंगमः सुरद्रुरिव ॥ तत्तं नमामि कामित—सिद्धिः स्याद्येन न चिरेण ॥ ७१ ॥ तनय-
तरणिं विना सा । विषादतमसार्दितास्यतामरसा ॥ आरूढयाप्ययाना । जगाम विपिनं न-

नाम मुनिम् ॥ ७२ ॥ पप्रच्छ सिद्धपुत्रः । कोऽपि तदानीं प्रणम्य गणनाथं ॥ शाश्वतजंबूपाद-
प—विचारमेवं च गुरुरूचे ॥ ७३ ॥ उत्तरकुरुपूर्वार्धे । शीतासरितश्च पूर्वदिग्भागे ॥ जांबू-
नदमयमश्र्यं । पीठं जंबूद्रुमस्यास्ति ॥ ७४ ॥ तत्पंचयोजनशता—न्यायामपृथुत्वयोस्त्रिगुणप-
रिधिः ॥ पिंडे द्वादशयोजन—मंते प्रांते द्विगव्यूतं ॥ ७५ ॥ द्विक्रोशोन्नतया पंच—चाप-
शतविततया मणीमय्या ॥ तदवेष्टि पद्मवेद्या । क्रीडासख्येव देवानां ॥ ७६ ॥ द्वारः पीठस्य
चतुर्दिशि । तोरणकेतुकलशकलशोभाः ॥ द्विक्रोशोच्चा गव्यूत—विस्तृताः शस्तरत्नरुचः
॥ ७७ ॥ जंब्वा आसनभूरिव । मध्ये मणिपीठिकास्य पीठस्य ॥ योजनचतुष्कमुच्चा । प्रवि-
स्तृता योजनान्यष्टौ ॥ ७८ ॥ तत्रास्ति वज्रवैडू—र्यरिष्टमूलप्रकांडवरकंदा ॥ रजतोपरितन-
शाला । सुवर्णशाखा प्रशाखौघा ॥ ७९ ॥ वैडूर्यदला तपनीय—पत्रवृंता च रत्नपुष्पफला ॥
द्वादशवेदीगुप्ता । जांबूनदपल्लवा जंबूः ॥ ८० ॥ द्विक्रोशनिमग्नायां । भूमौ तस्यां द्वियोजनो-
च्छ्रायः ॥ द्विक्रोशपृथुस्कंधः । शाखाश्चतुर्दिशि चतस्रः ॥ ८१ ॥ एका चोर्ध्वं शाखा । योजन-
षट्कोन्नतास्त्युपरि तस्याः ॥ जिनभवनं देशोन—क्रोशोच्चं तदर्धविस्तारं ॥ ८२ ॥ पूर्वस्यां

क्रोशमितं । भवनमनादृतसुरस्य शाखायां ॥ भवनप्रमितास्तिसृषु । प्रासादाः शेषशाखासु
॥ ७३ ॥ जंबूद्रुमेऽष्टयोजन—विस्तारौन्नत्यभाजि भूविकृतौ ॥ नीडानीव खगानां । ध्रुवाणि
जात्यसरभवनानि ॥ ७४ ॥ जंबूनामष्टोत्तर—शतेन परितस्तदर्धमानानां ॥ जंबूरियं परिवृत्ता
। गुरुरिव शिष्यैः प्रमाणोनैः ॥ ७५ ॥ वायव्याद्यं दिक्त्रय—मथ ह्यनादृतस्य देवस्य ॥ सा-
मानिकोचितानां । चतुःसहस्रेण जंबूनां ॥ ७६ ॥ जंबूपूर्वस्यां दिशि । चतस्र एवैतदग्रमहि-
षीणां ॥ आंतरपरिषद्भृणा—मष्ट सहस्राणि चाग्नेय्यां ॥ ७७ ॥ मध्यमसभोपभोग्यं । द-
क्षिणदिशि दशसहस्रमेतासां ॥ बाह्यसदस्त्रिदशार्हा । नैरुत्यां द्वादशसहस्राः ॥ ७८ ॥ तद-
नीकाधिपतीनां । जंब्वः सप्तैव पश्चिमाशायां ॥ मुख्यतरौ विज्ञेयो । द्वैतीयीकः परिरयोऽसौ
॥ ७९ ॥ तनुरक्षकसुरपरिगत—जंबूनां षोडश च सहस्राणि ॥ परितस्तृतीयपरिधौ । त्रय-
स्तथान्ये परिक्षेपाः ॥ ८० ॥ जंबूनां द्वात्रिंश—ल्लक्षाः प्रथमे द्वितीयके परिधौ ॥ चत्वारिंश-
ल्लक्षा । अष्टाग्रास्तास्तृतीये च ॥ ८१ ॥ कोट्येका विंशतिरपि । लक्षाः पंचाशदथ सहस्राणि
॥ विंशत्यधिकं च शतं । शाश्वतजंबूप्रमाणमिदम् ॥ ८२ ॥ इत्यागमोक्तिमापीय । धारिणी

सारिणीमिव सुधायाः ॥ लाभांतरलाभादिवं । समधिकतोषा ननाम गुरुम् ॥ ९३ ॥ पृष्टेऽथ सुतोपाये । धारिण्या समयभेदपरिशंकी ॥ गणभृन्मौनं भेजे । मुख्या यतीनां हि वाग्गुप्तिः ॥ ९४ ॥ निजगाद सिद्धपुत्रो । न सर्वविरता वदंति विदुषीदं ॥ अहमेव ते वदिष्या—मि येन देशेन विरतोऽस्मि ॥ ९५ ॥ आचामाम्लाष्टशतं । कुरु परमेष्टिस्मृतौ सदा लीना ॥ भावी च तदवसाने । सिंहस्वप्नेन पुत्रस्ते ॥ ९६ ॥ श्रुत्वेति सा प्रमुदिता । स्वसदनमागत्य तत्तपस्तेपे ॥ येनाकृष्ट इवागा—द्विद्युन्माली तदुदरं सः ॥ ९७ ॥ दृष्टः सिंहः स्वप्ने । निश्चिक्ये सिद्धसूनुवचनं सा ॥ नास्पृष्टमलयपवनः । प्रत्येति मधूदयं कोऽपि ॥ ९८ ॥ समये सासूत सुतं । मौक्तिकमुरुदीप्तिवंशयष्टिरिव ॥ धारयिता सिद्धिवधू—मूर्धनि यमनन्यरुचिरचिरात् ॥ ९९ ॥ उत्सवपूर्वं पितरौ । जंबूरिति तस्य नाम चक्राते ॥ जंबूविचारसमये । तदुपायं यज्जनन्याप ॥ २०० ॥ संग्राहितः शिशुत्वे । जनकेन कलाः कलागुरोः सकलाः ॥ उद्यौवनो मनोभू—रिव मूर्तोऽमन्यत न कैः कैः ॥ १ ॥ पद्मावती समुद्र—प्रिया समुद्रश्रियं सुतां सुषुवे ॥ पद्मश्रियं च धनिनः । समुद्रदत्तात्कमलमाला ॥ २ ॥ सागरदत्ताद्विजय—श्री-

जानेरजनि पद्मसेनाख्या ॥ इभ्यात्कुबेरदत्ता—जायश्रियः कनकसेना च ॥ ३ ॥ विद्युन्मालिन एतां । दयिताः स्वर्गाच्च्युताश्चतस्रोऽपि ॥ प्रेयांसमुपासितुमिव । नगरे तत्रैवमवतेरुः ॥ ४ ॥ अन्यच्च नभःसेनां । कुबेरसेनादसूत कमलवती ॥ कनकश्रियं सुषेणा । कनकरुचं श्रमणदत्ताच्च ॥ ५ ॥ वीरमतीभ्यसुखेण । प्रिया प्रसूता सुतां च कमलवतीं ॥ जयसेना वसुपालित—कांता च जयश्रियं नाम ॥ ६ ॥ एता अष्टौ कन्या । विज्ञातकला अवाप्ततारुण्याः ॥ गुणमणिखनये पितृभि—र्ददिरे जंबूकुमाराय ॥ ७ ॥ तत्रान्यदा सुगोभिः । क्षोभितभूयस्तमा गभस्तिरिव ॥ गणनायकः सुधर्मा—ययौ जगज्जाड्यभेदरतः ॥ ८ ॥ विनयावनता जनता । घनतापच्छिदं वने सिषेवे तं ॥ तत्राजगाम कामपि । मुदं वहन्नृषभसूनुरपि ॥ ९॥ वदनेंदूदितदंत—द्युतिभिरकांडेऽपि कौमुदीपर्व ॥ सदसि प्रपंचयन्निव । ततो ददौ सूरिरुपदेशं ॥ १० ॥ अस्याशादृढमूलः । कुबोधकंदः कुसंगतिस्कंधः ॥ विस्तृतकषायशाखा—गणः प्रमादेन पल्लवितः ॥ ११ ॥ व्यसनोरुदलो विषय—छाया वारितविवेकमिहिरकरः ॥ अयशः-कुसुमो दुर्गति—फलश्च संसारविषवृक्षः ॥ १२ ॥ युग्मम् ॥ जिनशासनकाननगत—विचार-

सुरपादपं न येऽधिगताः ॥ पोषयति मनस्तोषं । तेषामेवैष नान्येषाम् ॥ १३ ॥ एवं विवर्धयं-
तो । भक्ता विचेतीभवंत्यनेनैव ॥ उच्छेद्य एव कुशलै—स्तपःकुठारेण तत एषः ॥ १४ ॥ गुरु-
वचनमिदं भूयः—सभ्यश्रुतिसारिणीः परिस्पृश्य ॥ वापीजलमिव जंबू—हृदालवाले विश-
श्राम ॥ १५ ॥ स ततः प्रोचे पितरौ । पृष्ट्वा भगवन् व्रतं ग्रहीष्येऽहम् ॥ मा प्रतिबंधं कार्षी
—रिति गुरुरपि तमनुमेने च ॥ १६ ॥ अथ रथमारुह्यासौ । प्रावर्तत गंतुमभिपुरं त्वरितः ॥
आलोकत प्रतोलीं । पुरतो गजवाजिगणरुद्धां ॥ १७ ॥ वेलावलंबभीरु—स्ततोऽपरं गोपुरं
गतस्तावत् ॥ यंत्रशिलागोलकबाण—वृष्टिवैषम्यमद्राक्षीत् ॥ १८ ॥ अत्र स्थितस्य सहसा ।
माभून्मम मृत्युरकृतसुकृतस्य ॥ इति झटिति निवृत्तोऽसौ । पुनर्ययौ गुरुपदोपांतं ॥ १९ ॥ वि-
षयविषण्णः स तदा । प्रसरत्पंचशतवारिधेः सेतुं ॥ सर्वतपसां तपोऽग्र्यं । द्रुतं व्रतं तुर्यमादत्त
॥२०॥ गुरुणोदसाह्यतासौ । रेखामाप्तोऽसि वत्स वीरेषु ॥ स्मरसवयसि वयसि । मतिः सहसा सम-
भूदियं यस्य ॥२१॥ श्रवसोः कस्य न किल । चक्रुरेहिरेयाहिरां गुरुवचांसि ॥ यन्मनसि स्थिरवासो
। व्यधायितैस्ते नरा विरलाः ॥२२॥ स ततः क्षणमपि गुरुपद—पंकजविरहं तितिक्षितुमशक्तः ॥

पितरावनुज्ञपयितुं । व्रतेच्छुरागान्निजागारम् ॥ २३ ॥ अश्रुतपूर्वं तस्मा—त्पितरौ दिक्षाभि-
लाषमाकर्ण्य ॥ अनधिगतपूर्वमाधिं । बिभ्राणौ न्यगदतामेवं ॥ २४ ॥ वत्सास्माकमकस्माद् ।
दुर्विनयः कोऽपि किं त्वयालोकि ॥ येन स्फुटव्यलीका—न्निव नः परिमोक्तुकामोऽसि ॥२५॥
मुक्ता न दहनदाहं । रंभास्तंभो न च क्रकचपातं ॥ न हि मिहिरकरस्पर्शं । विनीत नव-
नीतपिंडोऽपि ॥ २६ ॥ भूक्षेपं न दुकूलं । न च तूलं प्रखरवायुवेगं च ॥ जलपूरं न किशल-
यो । न शंखवलयं च घनघातं ॥ २७ ॥ दृष्टिर्न मरिचचूर्णं । मृणालसूत्रं न बंधनमिभस्य ॥
सहते न हि ते देहः । सुकोमलः संयमक्लेशं ॥२८॥ त्रिभिर्विशेषकं ॥ जंबूरुवाच पितरौ । दु-
र्विनयो न युवयोरभूत्कोऽपि ॥ किंत्वपराध्यति संसार । एव तत्तं मुमुक्षामि ॥ २९ ॥ मृदुर-
स्मि कथं दीक्षा—मुरीकरिष्यामि नेति मे चिंता ॥ हंत सहंते हेती—र्वपुषानेनैव समिति भ-
टाः ॥ ३० ॥ अथ तावूचतुरंगज । यथा पृणा बालकेलिकुतुकं स्वं ॥ संप्रति पूरयसि तथा ।
स्वकरग्रहकौतुकं किं न ॥ ३१ ॥ तनयं कदा सदारं । सतारमिव चंद्रमत्र पश्यामः ॥ इत्या-
शालतिकं नः । कटुवचनहिमेन किं दहसि ॥ ३२ ॥ यद्यसि पित्रोर्भक्त—स्तदेतमधुना कदा-

ग्रहं मुंच ॥ दृष्ट्वापत्यमुखो । जरसि यथायोग्यमनुतिष्ठेः ॥ ३३ ॥ सोऽथ प्रोचे पितरौ । शी-
लव्रतमादृतं मया तावत् ॥ न नियमभंगश्च । त्वत्कुलजानामौचितीं याति ॥ ३४ ॥ भोगैर्नृ-
शमपि भुक्तैः । किं कोऽपि क्वापि तृप्यति कदापि ॥ इति विदुषोरपि युवयो—र्ही विषयास्त-
रलयंति मतिम् ॥ ३५ ॥ तदहं युवयोः प्रीत्यै । वासरमेकं विवाहमनुभूय ॥ अपरेद्युरथादा-
स्ये । दीक्षामयमेव मे नियमः ॥ ३६ ॥ श्रुत्वेति दध्यतुस्तौ । जितभावाभ्यां यदेष वक्त्येवं
॥ स्नेहग्रहिला महिला—श्चौर्यः खलु शीलरत्नस्य ॥ ३७ ॥ स जनो यो नवयौवन—वधूवृ-
तो धर्ममिच्छति ब्रह्म ॥ प्रथमसरित्पूरगत—स्तिष्ठति किमपातितः कोऽपि ॥ ३८ ॥ अष्टवधू-
निगडनियं—त्रितोऽपि तत्प्रेमपाशपतितोऽपि ॥ अस्मासु यामिकेष्विव । यास्यति कथमेष जा-
ग्रत्सु ॥ ३९ ॥ यौवनमिदं धनमिदं । रूपमिदं ताश्च तादृशा वध्वः ॥ एकैकमपि विकाराय ।
किं पुनः समुदयोऽमीषां ॥ ४० ॥ अथ ताभ्यां मुदिताभ्या—मारभ्यत सुतविवाहसामग्री ॥
स्वाभिप्रायं जंबू—रजिज्ञपत्स्वशुरवर्गे च ॥ ४१ ॥ भ्रांता इव मूढा इव । तेऽपि तदाकर्ण्य ग-
लिततत्त्वधियः ॥ किमथो विधेयमेवं । वदंत आोच्यंत कन्याभिः ॥ ४२ ॥ को जंबूजैत्रगुणो ।

जंबूद्वीपेऽपि जयति पुरुषोऽन्यः ॥ तन्नः स एव शरणं । मरणं वा कोऽयमालोचः ॥ ४३ ॥ अस्मानथ स्वपथं । स नयतु तं वा वयं तु नेष्यामः ॥ सज्जीभूय च यूयं । पश्यत कः केन जीयते ह्यत्र ॥ ४४ ॥ अस्ति स तावद्योगी । यावन्नास्माकमागतो विषयं ॥ तावद् दृढता मदनस्य । यावदग्नेः शिखा दूरे ॥ ४५ ॥ विषदोऽपि नागवल्ल्या । मिलितः स्याच्चूर्णकः प्रकटरंगः ॥ एतदपि वीक्ष्य ताताः । कथं तनुध्वं मनसि खेदम् ॥ ४६ ॥ श्रुत्वेति ते विवाहव्यतिकरमारेभिरे स्वगेहेषु ॥ आगात्वरितं लग्न—क्षणश्च किल कौतुकेनेव ॥ ४७ ॥ स्नेहेन तदाभ्यंगं । ददिरे मदिरेक्षणा वरस्यांगे ॥ गुरुवचनवारिभिरय—मा भिदितरामिति धियेव ॥ ४८ ॥ उद्वर्तितश्च पिष्टा—तकेन तान्नी रराज वरराजः ॥ स्वस्य मनसीव बहिरपि । निःस्नेहत्वं ब्रुवाण इव ॥ ४९ ॥ कौसुंभमथ वसानो । वसनं स बभौ भवे निवासयितुं ॥ वनितावित्सृष्टरागेण । सर्वतो दत्तवेष्ट इव ॥ ५० ॥ अंगेषु नवसु तिलका । न्यस्तास्तस्यावलाभिरजितस्य ॥ स्मरचक्रिणः पुरोगा । इव निधयस्तमभिषेणयतः ॥ ५१ ॥ तर्कुस्थतंतुभिरथ । स्पृष्टौ दध्यौ स तर्कुसूत्रमदः ॥ भ्रमरसमध्यापयिता । मामपि कथमितरलोक इव ॥ ५२ ॥

नैवासां कृतमकृतं । कुर्वाणानां क्षणो विलगतीति ॥ स क्षणतो वनितार—ध्धवर्णकोद्धर्णको व्यमृशत् ॥ ५३ ॥ क्षालयितुमिवांगस्थं । वैराग्यं तं परःशतैः कलशैः ॥ अस्नपयंत युवत्यो । गायंत्योऽनंगललितानि ॥ ५४ ॥ जलसंगोऽस्यारक्षत । ततो गुरुक्त्येव गंधकाषाय्या ॥ तावदनंगशरा इव । पेतुः कुसुमस्रजोऽस्य हृदि ॥ ५५ ॥ मार्जरहमस्मि समीप—एव सौहृदमितीव दर्शयितुं ॥ शुक्लध्यानं चंदन—मिषतस्तस्यालिलिंग वपुः ॥ ५६ ॥ सुदशादशयोर्नीरा—गरक्तगोर्हत कीदृशो योगः ॥ सदसे सिते परिदधे । तेन स वस्त्रे न पुनरितरे ॥ ५७ ॥ अंतर्गुरूपदेशै—र्बहिराभरणैर्महामयोऽजनि सः ॥ मोहतमोऽस्मादुचितं । जगाम दूरे हुताशमिव ॥ ५८ ॥ आरुह्य चपलतुरंगं । निनाय सरलाध्वना वशीकृत्य ॥ स स्वमनश्चपलतरं । वशयितुमभ्यासकारीव ॥ ५९ ॥ स्मरसौहृदेन जेतुं । तमुपेताः सितकरा इव सताराः ॥ उपरि बभूर्मायूरे । छत्रे मुक्तायुजो मुकुराः ॥ ६० ॥ गीतध्वनिवाद्यध्वनि—वनितोलूलुध्वनीनसौ मेने ॥ स्मरसेनाकलकलमिव । ततो विशिष्यावधत्तेस्म ॥ ६१ ॥ सैष व्रतं गृहीष्य—त्यस्मान्निरपीति शुश्रुवे जगिनि ॥ पुनरेतदसंभाव्यं । जगज्जयी जयति यत्कामः ॥ ६२ ॥ सूर्या

सोऽनेन यथा । जिग्ये न तु जेष्यते तथा स्फूर्त्या ॥ न हि न हि तदनुचरीभिः । को न युवा जीयते स्त्रीभिः ॥ ६३ ॥ इतरे ते तरलदृशः । प्रशमनिमग्नामिवास्य पश्य दृशम् ॥ आलापानित्यश्रृणो—दीक्षिकपौरीगणस्य वरः ॥ ६४ ॥ त्रिभिर्विशेषकं ॥ हृदि बिभ्रदिष्टमर्थं । तमेव विसृजन्ननिष्टमर्थिजने ॥ स विमानमिव मनोरम—मद्राक्षीन्मंडपं पुरतः ॥ ६५ ॥ त्यज संप्रति दिग्विजयं । यस्ते सहते न नाम सोऽत्रास्ति ॥ इत्याह्वयतीव चलां—चलकेतुकरेण यः कामं ॥ ६६ ॥ रागाब्धेर्लहरीयित—मितस्ततो रक्तवस्त्रभंगीभिः ॥ मदनधनूयितमुच्चै—र्द्वारे मणितोरणैर्यत्र ॥ ६७ ॥ विज्ञाय मानुषीभि—स्तमजय्यं मेलिता इवाप्सरसः ॥ कामेन यत्र भेजुः । स्तंभेषु स्वर्णपंचाल्यः ॥ ६८ ॥ यत्रोपेता मुक्ता । अप्यवचुलेषु बंधनं प्रापुः ॥ चंद्रोदयेषु सत्स्वपि । ववृधे केषां न मोहतमः ॥ ६९ ॥ कुंकुमसलिलैः सिक्ता । भूरपि यत्राजनिष्ट रागमयी ॥ तं मंडपमधिगत्य । द्वारि वरेंद्रः क्षणं तस्थौ ॥ ७० ॥ मामभ्यचर्य भवाब्धौ । क्षेप्तुमना वैरिपाक्षिकी सेयं ॥ अर्धं ददती सुदती । कापीति वितर्किता तेन ॥ ७१ ॥ दीक्षाक्षराणि विधिना । स्वहस्तलिखितानि मार्ष्टुमिव भाले ॥ त्रिस्तमथो च काचन । पस्प-

शीचारदंभेन ॥ ७२ ॥ युगमंथमुशलहस्तां । तां वीक्ष्य प्रोक्षणक्षणे निरतां ॥ अयमेव नटो
विविधा-युधः स्मरस्येति दध्यौ सः ॥ ७३ ॥ अर्पयिता स्मरशत्रो-रचेतनं मां गले निबध्येयं
॥ गलविगलितनीरंग्या—कृष्टः स तयेति हृदि मेने ॥ ७४ ॥ सकषायमोहपुटमिव । गर्त्ता-
ग्निशरावसंपुटं भित्वा ॥ स विवेश मातृभवनं । कर्तुमिवांत्यं नमस्ताभ्यः ॥ ७५॥ स्नपितवि-
लिप्तविभूषित—देहाः पूर्वं निवेशितास्तत्र ॥ लोकत्रयसाधारण—विधिनिर्माणानुचितरूपाः
॥ ७६ ॥ कन्या अनल्परूपाः । ससखीका अष्ट वीक्ष्य सोऽमंस्त ॥ ता एता हि सद्भेदा ।
मम कर्मप्रकृतयो मूर्ताः ॥ ७७ ॥ युग्मम् ॥ नयनशरविसरमवसर—मवाप्य गूढं च तासु
किरतीषु ॥ स्मरसैन्ये बाला अपि । बत योद्धार इतीव स जहास ॥ ७८ ॥ हस्तालेपं विदधे ।
काचित्तेषां निबध्य मदनफलं ॥ न मनः कथमपि लिंपति । ममेयमिति तेन न निषिद्धा
॥ ७९ ॥ समये पुरोहितगिरा । स्वकरेण वधूकरानुपादत्त ॥ सद्रूपः स मोहपंके । मग्नास्ता
उद्दिधीर्षुरिव ॥ ८० ॥ यद्वा प्रणयिन्यो मयि । जाताश्चेत्तत्कृपोचिता एताः ॥ इति शिवसु-
खमिव दातुं । स ददौ दक्षिणकरं तासां ॥ ८१ ॥ तारामेलकपर्वणि । वधूवरदृशो मिथोऽमि-

लन्न पुनः ॥ रक्तिं च विरक्तिं च । स्वन्नावसिद्धाममुंचंत ॥ ७२ ॥ मान्यादपि मातृगृहा—द-
प्येष स्त्रीविरक्तबुद्धिरिति ॥ शंकित इव मंक्षु वधू—वरांचलान् बद्धवान् विप्रः ॥ ७३ ॥ सो-
ऽथ गतो वेदिगृहं । ददर्श कुंडेऽनलं नवज्ज्वलितं ॥ तरसार्धयेव चेतः—कुंडेऽस्य ध्यानमुद-
दीपि ॥ ७४ ॥ परिन्नोजयन्निजवधू—स्ताभिः परिन्नोजितश्च कंसारम् ॥ किं सारं धनयौव-
न—वनितादाविति स विममर्श ॥ ७५ ॥ परितोऽनलं चतस्रः । प्रदक्षिणाः स व्यधाद्वधूस-
हितः ॥ प्रातः प्रदक्षिणयितुं । गणधरमभ्यासनिरत इव ॥ ७६ ॥ श्यालकदेश्यः कश्चि—
त्पादांगुष्टे तदार्षाग्निं दध्रे ॥ दध्यौ स च चेतयती—व मामयं मोहनिद्रालुम् ॥ ७७ ॥ तत्त-
स्य धनं दत्वा । वित्तं करमोक्षणे श्वशुरदत्तम् ॥ सुत्यजमिदमिति जगृहे । स मुक्तदुस्त्यजव-
धूहस्तः ॥ ७८ ॥ जंबूकुमारचेतो—धवलत्वोच्छेदनाय धवलोघम् ॥ विषमिव विषस्यौषध—
मिति नीतिविदो ददुः प्रमदाः ॥ ७९ ॥ कृतकृत्यैरिव मुदितैः । स्वजनैः सहितो वधून्निरन्नि-
रामं ॥ जंबूरथ रथमारु—ह्य निजगृहद्वारमानंच ॥ ८० ॥ तत्र स मातृपितृभ्यां । प्रनर्तितो
नृत्यतिस्म हृष्ट इव ॥ मम पाणिपीडनमहो । व्रतदिक्षो न्यवर्तं दध्येति ॥ ८१ ॥ ज्वलदगुरु-

धूपधूपित—भाजरणज्योतिरूपहततमस्कं ॥ सिंह इव पंजरं वा । स वेश्म प्रविवेश सकल-
त्रः ॥ ए२ ॥ तत्रापि स निश्शङ्का । पद्मासनयंत्रजर्जरितमदनः ॥ जागरतो न हि नीरिति ।
समाधिलीनो जजागार ॥ ए३ ॥ अथ नर्मकर्मचतुरा—भिरूचिरे ताः सखीन्निरस्य दृशम् ॥
साम्यनिमग्नां पश्यत । बत हारितमेव नवतीन्निः ॥ ए४ ॥ नाद्य स्वपिति पतिर्वो । न नर्म कु-
रुते रहः सदास्मान्निः ॥ ध्यायति किंचिदलक्ष्यं । नवरं शिवरंगभूरेषः ॥ ए५ ॥ ता अप्यप-
वार्योचुः । सखीः खलूत्काहलाः प्रियः सोऽयं ॥ अष्टासु पुरस्कुर्वे । कामिति ननु चिंतयन्न-
स्ति ॥ ए६ ॥ अष्टौ बाला अबलाः । पतिताः स्मरसंकटे कटुविपाके ॥ मुक्त्वा कथमिति या-
स्यति । सोऽयं धीरेषु धृतरेखः ॥ ए७ ॥ इदमूचे प्रियनक्त्या । नो चेत्कः क्षोन्नितो न युव-
तीन्निः ॥ अमरा अपि यत्पुरतः । कर्मकराः का कथा नृणां ॥ ए८ ॥ दत्तेऽस्मासु दृशं चे—
ज्जानीमो योगशक्तिमस्य तदा ॥ श्रुत्वेति स तर्जित इव । वीरवरः सावधानोऽनूत् ॥ एए ॥
देहे च ददौ दृष्टिं । तासां सौनाग्यमदमपाकर्तुं ॥ आकबरीक्रममेवं । विरक्तधीर्नावयामास
॥ ३०० ॥ आसामेषा कबरी । लहरी धूमस्य वृत्तधवलिम्नः ॥ नाले मृगमदतिलकः । शिव-

प्रयाणेऽहिरिव कृष्णः ॥ १ ॥ गुणमयकीर्तिपटस्फा--टनाय मन्ये भ्रुवौ च कर्तरिके ॥ नय-
नसमुद्रे तारा—मिषेण विधिना विषं न्यासि ॥ २ ॥ मुष्टाः के नाकुंजिताः । कपोलफलके-
ऽत्र कामकितवेन ॥ श्लेष्मप्रणालिके इव । नासारंध्रे सदा विवृते ॥ ३ ॥ श्रवणे च चर्मव-
ल्यौ । हृद्बंदौ तरुणमीनपलपिंडौ ॥ अस्थिसकलानि दंता । मुखबिलकुहरोरगी रसना ॥४॥
स्वस्थित्यै श्लेष्ममद—स्वेदैः कंठः कृतस्त्रिरेखांकः ॥ पंचांगुलिपाणिदलौ । बाहू एरंडशाखा-
भौ ॥ ५ ॥ हृत्पीनस्तनपिटकं । पट्टतिदृढबद्धकंचुकस्तत्र ॥ तुच्छस्तु मध्यदेश—स्तुच्छत्वं सूच-
यत्यासां ॥ ६ ॥ आसां विधिना जठरो—द्धृतपलपिंडैः प्रपूरितावूरू ॥ नूपुरनिगडितचरणा । एताः
किं भ्रमणशीलत्वात् ॥७॥ स्नानं च मलाविलतां । विभूषणादौ प्रकृत्यशोभनतां ॥ परिधानं नि-
धाना—र्हत्वं वपुषि वक्त्यासां ॥ ८ ॥ तस्मिन्नेवं ध्यायति । सुप्ताखिलपरिजने गृहे तत्र ॥
आगाद्भटशतपंचक—सहितश्चौरप्रभुः प्रभवः ॥ ९ ॥ तालोद्घाटनविद्यो—द्घटितकपाटो
ददावसौ स्वापं ॥ लोकस्य भूषितस्या—वस्वापनविद्यया वीरः ॥ १० ॥ यावत्तदलंकारां—
स्तरोः फलानीव गृह्णते चौराः ॥ नो मा स्पृशत निमंत्रित—जनमिति तावज्जगौ जंबूः ॥११॥

वचसा तेन स्तेन—भाले जाते निरुद्धसर्वांगे ॥ प्रभवः पुरतोऽपश्य—जाग्रतमृषभेभ्यकुलदी-
पम् ॥ १२ ॥ तं नत्वा चौरपति—र्व्यजिज्ञपन्मम गृहाण विद्ये द्वे ॥ देहि स्तंभनमंत्रं । मि-
त्रैकं मास्म विफलोऽभूः ॥ १३ ॥ जंबूरप्यवददहो । स्तंभनविद्यां न वेद सावद्यां ॥ नेछामि
च ते विद्ये । आदास्ये यद्व्रतं प्रातः ॥ १४ ॥ किं कुरुषे चौर्यं त्वं । संदिग्धार्थं सुनिश्चित-
व्यसनं ॥ इति पृष्टस्तेनोचे । प्रभवः प्रभविष्यदुदयोऽथ ॥ १५ ॥ विंध्यगिरौ विंध्यनृपो । ज-
यपुरनगरेऽस्ति तस्य तनयौ द्वौ ॥ आद्यस्तु तयोः प्रभवः । प्रभुरपरः परमबाहुबलः ॥ १६ ॥
दत्ते राज्ञा राज्ये । प्रभवे प्रभवे मयि क्रुधं दधता ॥ न हि केनचिदारचिता । प्रीतिर्वेत्रसा-
पि रुचिरेण ॥ १७ ॥ जनकमनापृच्छ्य ततो । विनिर्गतश्चौर्यवृत्तिमाश्रयम् ॥ स्वापनतालोद्-
घाटन—विद्ये प्रापं भुवि भ्राम्यन् ॥ १८ ॥ अद्येह समायासिष—मायासमृते परिजिघृक्षुः ॥
त्वयि जाग्रति भवति श्रीः । किं नः पुष्णीव कुमुदानां ॥ १९ ॥ अंह्रिस्थभ्रमरा इव । धनलव-
लोभाद्वयं भ्रमेम भुवं ॥ त्वं लब्धं धनमेत—न्मुमुक्षसे किं सुधीमुख्य ॥ २० ॥ दृष्ट्वा चित्र-
स्त्रियमपि । दृशा पिबामः पिपासयेव वयं ॥ एताश्च परिजिहीर्षसि । किं बालाः कामशाला-

स्त्वं ॥ २१ ॥ जंबूरुवाच वाचं । कृतिनोऽयं प्रभव कस्तव विमोहः ॥ धनवनितादिविलासा । रमयंति जनं सुखिनमेव ॥ २२ ॥ न हि दुःखदावदग्धो । देहेऽपि दधाम्यहं स्पृहां वीर ॥ यद्यस्ति कौतुकं त—न्निःशृणु यथा वच्मि निजदुःखं ॥ २३ ॥ सार्थं कंचन मध्या—टव्यां विचरंतमंतरा रुरुधुः ॥ चौराश्बलात्पलायत । नरस्तदा कोऽपि भयविवशः ॥ २४ ॥ रुद्धोऽथ वन्यकरिणा । गंतुं पदमपि पदान्न शक्तोऽसौ ॥ झंपां ददौ पुरःस्थे । महावटे गर्त इव शशकः ॥ २५ ॥ अवटतटनिकटवटविटपि—निर्गतामवटमध्यमायातां ॥ शाखां दुःखसहाया—मालिंगत्प्रेयसीमिव सः ॥ २६ ॥ अपरमिव कूपमजगर—मवटतले प्रसृमरास्यमैक्षत सः ॥ कूपाच्च दिक्षु चतसृषु । फणिनः फूत्कुर्वतश्चतुरः ॥ २७ ॥ आश्रितशाखामूलं । तेन खनंतौ सितासितावाखू ॥ दृष्टौ दृष्टश्च करी । स एव विस्तारयन् शुंडां ॥ २८ ॥ तदलाभान्मत्सरिणा । करिणा परिधूनितेऽथ वटवृक्षे ॥ मधुमंडपादुड्डीनाः । सरघा व्यलगन् वपुषि तस्य ॥ २९ ॥ केचिच्च मधुछत्रा—त्पेतुर्मधुबिंदवो मुखे तस्य ॥ तत्स्वादादापदमपि । तां पुण्यफलामसौ मेने ॥ ३० ॥ अथ कोऽपि चरन्नभसा । खचरस्तं वीक्ष्य दुःस्थमुदितकृपः ॥ ऊचे च वदसि तदा ।

किंचन नगरं नयामि त्वां ॥ ३१ ॥ सोऽप्यूचेऽवशरसनः । पिपतिषुरस्त्येष उपरि मधुबिंदुः ॥
तत्तं पारयामि सखे । वलमानो मां च गृह्णीथाः ॥ ३२ ॥ खचरोऽवगतकृपया । वलितः पुन-
रपि तथैव तेनोचे ॥ उज्झ्य ततः स ययौ । वद स जडः किमथवा विज्ञः ॥ ३३ ॥ जड
एव स यस्तस्या—मापदि मधुबिंदुलोभितो वसति ॥ प्रभवेणेति निगदिते । जगाद जंबूः
शृणु सकर्ण ॥ ३४ ॥ अटवी भवः स पुरुषः । संसारी मृत्युसिंधुरारुद्धः ॥ नृभवावटांतरायुः
—शाखामालंबितस्तस्थौ ॥ ३५ ॥ नरकश्चाजगरोऽधः । क्रोधमुखाः पन्नगाश्च चत्वारः ॥ वि-
लगंत्यो वपुषि रुजः । सरघाः सुखघातिकास्तस्य ॥ ३६ ॥ आयुःशाखा भक्षण—दक्षौ पक्षौ
सितासितावाखू ॥ विषया मधुबिंदव इव । जंतुं प्रीणंति कष्टेऽत्र ॥ ३७ ॥ ईदृगवस्थं मामु-
द्दिधीर्षुरागाद्गुरुः खचारीव ॥ तत्त्वं निषेधयसि किं । न गुरुः पुनरीदृशः सुलभः ॥ ३८ ॥ ध-
नवनिताभोगविधौ । निर्वचनः प्रोचिवानथ प्रभवः ॥ ईदृक्कथं कुटुंबं । जहासि पाषाणसम-
हृदयः ॥ ३९ ॥ केचिदजीवत्स्वजनाः । केचिद्भक्ता विरोधिनः स्वजनैः ॥ स्वजनैर्योगः प्रायो
—ऽसुलभस्तत्ते न मुच्यंते ॥ ४० ॥ जंबूरूचे भ्रात—र्भ्रमता भविना भवेऽत्र संबंधाः ॥ सर्वे-

ऽपि सर्वजीवै—राशास्तत्क्वानुरज्येऽहम् ॥ ४१ ॥ ये भुंजते सह रंना—मारंजनवे तु ढौ-
किते दुःखे ॥ दूरे स्युः कितवा इव । कः स्वजनेष्वादरस्तेषु ॥ ४२ ॥ अत्रापि विसंवादि—
ज्ञातेयं मयि वचनमिव दृष्टं ॥ यदि नो न मन्यसे तद् । ज्ञातेयकथानकं वच्मि ॥ ४३ ॥
अस्त्यत्र पुरी मथुरा । मधुराकृतिभिर्न्यषेवि या कृतिभिः ॥ सेनेव मीनकेतोः । कुबेरसेनात्र
गणिकाभूत् ॥ ४४ ॥ सुषुवे कुबेरदत्तं । कुबेरदत्तां च युग्मरूपेण ॥ स्तन्यं चापीप्यत सा । द-
शाहमक्कानिषिद्धापि ॥ ४५ ॥ न हि सफला पणमहिला । श्लाघ्येत कदाचिदिक्षुयष्टिरिव ॥
यौवनसर्वस्वहृतो—स्तत्किं ते पुत्रयोः स्नेहः ॥ ४६ ॥ इत्थंबोक्त्या पुत्रौ । निजनिजनामांक-
मुद्रया सहितौ ॥ सा निदधौ पेटायां । पेटां च मुमोच यमुनायां ॥ ४७ ॥ युग्मं ॥ माता-
तःपरमनयो—स्त्वमेव निहितौ ततस्तवांक इमौ ॥ मा न्यासनिह्नवं सखि । कार्षीरिति सा
जगौ यमुनां ॥ ४८ ॥ कज्जलकलुषाश्रुभि—रंबु यामुनं शिततरं प्रकुर्वाणा ॥ सा न्यवृत्त धृ-
तदुःखा । पेटापि जगाम सौर्यपुरं ॥ ४९ ॥ ईभ्यौ सरित्तटस्थौ । तरीमतीर्यागतामिवाकृष्य ॥
तामुद्घाट्य शिशुद्वय—मालोक्य विभज्य चाददत्तां ॥ ५० ॥ तौ मुद्रागतनाम्ना । विख्याता-

विन्नयोस्तयोर्न्नुवने ॥ अतिशैशवौ यथार्हा । अध्येयातां कलाः सकलाः ॥ ५१ ॥ कालेनाकलितकुलौ । तावेव विवाहितौ मिथस्ताभ्यां ॥ रममाणौ रतिन्नवने—ऽवातीतरतां युगलिधर्मं ॥ ५२ ॥ अन्येद्युरक्षकेलौ । कुबेरदत्तोऽक्षिपन्निजां मुद्रां ॥ वध्वाः पाणौ सापि च । मुद्रासाम्यं विलोक्योचे ॥ ५३ ॥ मानाभिधानघाटै—रनयोर्ननु मुद्रयोस्तथा समता ॥ मम तापकरं सोदर्य—मावयोः प्राणनाथ यथा ॥ ५४ ॥ क्वचिदावामिन्याभ्या—माभ्यामासौ न चानयोस्तनयौ ॥ एतत्सर्वं सशपथ—मेतावेवाद्य परिपृच्छयौ ॥ ५५ ॥ अथ तौ निजनिजपितरौ । अपृच्छतामवदतां यथावृत्तौ ॥ निश्चितसोदरन्नावौ । निनिंदतुः स्वं ततो दुरितं ॥५६॥ संसारे पशुधर्मो । मनुजानामपि न्नवेद्विना ज्ञानं ॥ इत्यज्ञानविरक्ता । कुबेरमापृच्छ्य पितरौ च ॥ ५७ ॥ दीक्षामादत्त मुदा । कुबेरदत्तांगुलीयकं तच्च ॥ जगृहे सहैव गुप्तं । बंधोर्बोधद्रुबीजमिव ॥ ५८ ॥ युग्मम् ॥ व्यवसायेन धनीयन् । कुबेरदत्तो जगाम मथुरायाम् ॥ कालेन गलितविरागः । पुरुषाः प्रायेण कठिनहृदः ॥ ५९ ॥ तत्राभिगम्य जननीं । कुबेरसेनां गन्नस्तिरिव पूर्वाम् ॥ दधदधिकरागमसौ । सत्यापयतिस्म कौलमतं ॥ ६० ॥ फलमिव न्नवविष-

वह्लेः । कृमिरिव डुरपोहमोहपंकस्य ॥ पल्लव इव पापतरोः । क्रमेण जज्ञे तयोस्तनयः ॥६१॥ विज्ञाय तदसमंजस—मवधिज्ञानात्तपाधना सापि ॥ मथुराममंथरगति—र्महत्तरानुज्ञया प्राप ॥ ६२ ॥ तस्यां वेश्यावेश्मनि । कषोपले सा सुवर्णरेखेव ॥ तं बालं पालनक—स्थितं रुदंतं जगादेति ॥ ६३ ॥ दोधकछंदः—मम पतिसोदर देवर रे । वद किं रोदिषि बाल ॥ एकोदरसंजात इति । भ्रातर्भालविशाल ॥ ६४ ॥ मम च सपत्न्या जात इति । त्वं तनयोऽपि ममासि ॥ अजनि सपत्न्या मम जनक—स्तव पौत्रस्तेनापि ॥ ६५ ॥ मज्जननीप्रियसोदर । हे त्वं मम भवसि पितृव्यः ॥ त्वं मम सोदरतनय इति । भ्रातृव्योऽप्यसि भव्य ॥ ६६ ॥ तव माता मातैव मम । न हि सुंदर संशीतिः ॥ पितामही सा मम जननी—प्राणप्रियजननीति ॥ ६७ ॥ श्वश्रुरपि सा मम सुमते । मत्प्रियजननी येन ॥ मम च सपत्नीसुतदयिता । साथ वधूरपि तेन ॥ ६८ ॥ अजनि जनी मद्भ्रातु—रिति प्रजावती मम सा तु ॥ मम पतिदयिता संप्रति । यत्तेन सपत्न्यपि भ्रातः ॥ ६९ ॥ पितामहो मे स तव पिता । त्वं मम येन पितृव्यः ॥ मज्जननीपतिरिति विदितः । स मम पिता भणितव्यः ॥ ७० ॥ मम तस्य

च न पृथग्जननी । तेन स बंधुरमायः ॥ मत्पतिमातुः पतिरिति स । श्वशुरो मे निरपायः ॥ ७१ ॥ मत्करपीडनपाटवतः । स ममाजनि जर्तापि ॥ स मम सपत्न्या ननु तनय—स्त-नयस्तेन ममापि ॥ ७२ ॥ आर्यावृत्तम्—श्रुत्वेति कु[illegible]ा—मूचे किं साध्वि विसदृशं वद-सि ॥ यदि वा किमुच्यते ते । या त्वं गणिकागृहे वससि ॥ ७३ ॥ पश्यसि परस्य दोषं । स्वं च विचिंतयसि न पुनरित्युक्त्वा ॥ सापि ततस्तस्य करे । तदार्पयन्मुद्रिकारत्नम् ॥ ७४ ॥ मुद्रारत्ने वासर—रत्न इवालोकिते विलीनतमाः ॥ स्वस्य निनिंद स मोहो—पज्ञं पुण्याध्वनो भ्रंशं ॥ ७५ ॥ त्रपमाणः स्वचरित्रेण । पापशुद्ध्यै गृहीतचारित्रः ॥ धीमान् कुबेरदत्तो । ययौ वनं यौवनस्थोऽपि ॥ ७६ ॥ जगृहे गृहिणां धर्मं । विप्लवभीता कुबेरसेनापि ॥ प्रभवेदृशि सं-सारे । ज्ञातेयकथा वृथा सुधियां ॥ ७७ ॥ प्रभवः प्रोचे प्रभवो । भवंत एवात्र वच्मि पुनरेषः ॥ यूयं तावदपुत्राः । कथं गतिः स्यादपुत्राणां ॥ ७८ ॥ जंबूरुवाच पुत्रा । गतिमूलमहं तु ग-तिविरक्तोऽस्मि ॥ यदि पुत्रैः सुगतिः स्या—दस्तु तदा कुक्कुरादीनां ॥ ७९ ॥ कालविवर्त्तेन सुता । अपि शत्रुत्वेन पर्यवस्यंति ॥ यदि न प्रत्येषि तदा । वदामि ते सुतकथां प्रभव ॥८०॥

अत्रास्ति सामलित्ती । पुरी परिता धनाढ्यलोकेन ॥ तत्र महेश्वरदत्तो । बभूव मिथ्यामतिः
श्रेष्ठी ॥ ७१ ॥ कुमतिसरित्पूरप्लुत—शीलतटा नागिला वधूस्तस्य ॥ धावति निरंकुश इव ।
प्रतिपुरुषं यन्मनो द्विरदः ॥ ७२ ॥ स श्राद्धपर्वणि पितुः । कदापि महिषं निहत्य तत्पिशि-
तैः ॥ अंकस्थं निजमंगज—मचोजयत्प्रीतिविस्मेरः ॥ ७३ ॥ तत्रायातः कश्चन । ऋषिर्बभाषे
तदा पितुः पिशितैः ॥ द्विषमंकस्थं पुष्ण—न्नहो जनः श्राद्धमाधत्ते ॥ ७४ ॥ इत्युक्त्वा व-
लितो यति—स्तत् श्रुत्वा सोऽपि कोपितो दध्यौ ॥ मलदिग्धवपुः श्रमणो । मलीमसं कीदृ-
शं वक्ति ॥ ७५ ॥ यद्वा कोपेन कृतं । पृच्छ्यः परमार्थमेष एव मया ॥ इति मुनिमभ्येत्य ज-
गा—विज्ञ्यः किमिदं वदसि साधो ॥ ७६ ॥ तं च प्रबुबोधयिषुः । प्रोचे करुणाखनिर्मुनिव-
रोऽपि ॥ सुंदर कुर्वंति न किं । जीवा मिथ्यात्वहतमनसः ॥ ७७ ॥ अवधीरवधीरिनि—र्ध-
स्त्वमुपपतिं स्वदयितायाः ॥ स च तत्कुक्षौ तत्क्षण—मुक्तेऽवततार निजवीर्ये ॥ ७८ ॥ जातः
स्वक्षेत्रज इति । सोऽयं मेने त्वया स्व एव सुतः ॥ यश्चाद्य हतो महिषः । समुद्रदत्तः स ते
जनकः ॥ ७९ ॥ महिषास्थिभक्षणरता । येयं द्वारे शुनीमिमां विद्धि ॥ बहुलाख्यां निजज-

ननी—मतिवशात्पशुजवमुपेता ॥ ए० ॥ ज्ञानेनैतद्ज्ञात्वा । तव बोधायागमं न चैदयाय ॥
जलदानामिव यतिनां । प्रवृत्तिरन्योपकारबला ॥ ए१ ॥ प्रत्येषि न चेदेत—त्तदिमां सरमां
नय स्वसौधांतः ॥ दर्शयिता प्राग्निहितं । तव धनमेषा निमेषार्धात् ॥ ए२ ॥ तेन ततः सा
सरमा । परमाद्भुतशालिना गृहं नीता ॥ प्राचीकटद्भुवि धनं । विवेकरत्नं च तन्मनसि
॥ ए३ ॥ नैर्ग्रंथीभिरथासौ । कथाप्रथाभिस्तथाजवज्जैनः ॥ न यथा सुरासुरैरपि । धर्माद्भ्रश्ये-
त मेरुरिव ॥ ए४ ॥ एवं गहनेऽत्र जवे । न सुतैर्जनको न तेन ते चापि ॥ प्राप्येरन् गतिम-
नघां । किंतु स्वकृतेन सुकृतेन ॥ ए५ ॥ ऊचे च किंचिदवनत—मुखी सखीप्रेरिता समुद्र-
श्रीः ॥ बाललवनासमुचितः । कदाग्रहस्ते प्रजो कोऽयं ॥ ए६ ॥ क्वेदं सुरजवनसखं । गृहि-
णां वनिताधनोपजोगसुखं ॥ कंटकशाखामर्दन—तुलितं व्रतिनां क चारित्रं ॥ ए७ ॥ प्रातः
प्रदीपकरणं । मंत्रजपादौ विसर्जनावाक्यं ॥ सुतजन्मनीव जलदा—नमनुचितं यौवने हि त-
पः ॥ ए८ ॥ अपराधः कोऽस्माकं । येन सदा स्मरसि मुक्तिमेवैकां ॥ तां बहुरतमरूपा—मगु-
णामपि मन्यसे पश्चात् ॥ एए ॥ तामपि लजसे क्रमशः । शंसंति कापि न त्वरां चतुराः ॥

राजसिकः खलु पुरुषो । विषीदति यथा कुटुंबी सः ॥४००॥ ग्रामे सुसीमनामनि । बभूव
कौटुंबिको जडः कोऽपि ॥ प्रावृषि वपतिस्म स कं—गुकोद्रवप्रायधान्यानि ॥ १ ॥ तस्यानंदे-
न सद्यो—दितेषु धान्येषु जलदसिक्तेषु ॥ स्वजनदिदृक्षुर्मालव—भुवि स ययौ पूरणग्रामम्
॥ २ ॥ तत्र घृतखंडमंडित—मंडकनिवहं सुभोजितः स्वजनैः ॥ दुर्जंग्धिदग्धजठराय । स
स्वदेशाय शपतिस्म ॥ ३ ॥ तुदं स्पृशन्नथोचे । स स्वजनान् यूयमेव भो धन्याः ॥ खर्वीकृता-
मृतरसं । नित्यमिदं भोजनं येषां ॥ ४ ॥ तद्दत्त खंडमंडक—बीजं व्यतनोम्यहं स्वदेशेऽपि ॥
तेऽपि ततस्तस्य ददुः । स्वमिक्षुगोधूमयोर्बीजम् ॥ ५ ॥ ज्ञापितश्च सादरं तै—रिक्षुक्षेत्रारघ-
ट्टकर्मापि ॥ कल्लोलयन् कदाशां । वलितः स्वग्राममाप मुदा ॥ ६ ॥ स निवारितोऽपि तोकै—
र्लोकैश्च सुजातकल्पमपि धान्यं ॥ मंडकरसविवशात्मा । लुलाव सद्योऽपराधीव ॥ ७ ॥ तत्र
स्थूलस्थलभुवि । स प्राच्यधनेन कूपमारेभे ॥ नाविरभूत्तत्र जलं । किंतु दृशोरेव तद्भूयः
॥ ८ ॥ मूढो मंडकबुद्ध्या । यथा लुलानः करस्थमन्नं सः ॥ तेभ्यस्तस्मादपि च । भ्रष्टः परि-
हस्यते जनैः ॥ ९ ॥ त्वमपि तथा मुक्तिकृते । सुखेषु समुपस्थितेषु सद्वेषः ॥ उभयभ्रष्टो भू-

त्वा । यास्यसि जनहास्यतां नाथ ॥ १० ॥ जंबूः कंबूदार—ध्वनिरध्वनि निवृत्तेः प्रवेशयितुं ॥ तामूचे तव चक्रे । वाचामाचार्य्यकं केन ॥ ११ ॥ शृणु गेहिनां सुखं य—त्तज्जन्मजराधिरोगमृत्युहतं ॥ विषमिश्रमिव सितोदक—मग्राह्यं हंत हितकामैः ॥ १२ ॥ यद्यतिनां व्रतदुःखं । तच्च शुभोदर्कमिति न गणयामः ॥ न हि फलति दुःखजीरो—र्व्यवसायकृषिप्रमुखमखिलं ॥ १३ ॥ पृथ्वीपतिप्रसादे । धनार्जने वा निधानलाभे वा ॥ किं कालमकालं वा । कुशलाः कलयंति धर्मे च ॥ १४ ॥ अस्तु शिवश्रीर्यादृ—क्तादृग्यदि मानिता महापुरुषैः ॥ मान्या ममापि तदसौ । पंथा हि महाजनक्षुण्णः ॥ १५ ॥ सप्रमदा॰ प्रमदानां । ये सेवंते वपुः सुरूपमिति ॥ ते जीवितादवश्यं । भ्रश्यंति यथा हि काकोलः ॥ १६ ॥ लघुरिव विंध्यो विंध्याटव्यामासीज्जरी करी कोऽपि ॥ ग्रीष्मे लूकाभिहतो । रेवातीरे व्यपद्यत सः ॥ १७ ॥ तं प्राप्याद्भयनिधिमिव । मुदमधिकामादधौ शृगालकुलं ॥ चक्रे च पलाकर्षै—रपावृतं तद्गुदद्वारं ॥ १८ ॥ गजदेहे निर्जीवे । तेन द्वारेण कोटिशः करटाः ॥ विविशुर्निरगुश्च दिवा । चौरा निर्नाथ इव नगरे ॥ १९ ॥ एवं तेषु गतागत—कारिषु कोऽपि द्विकोऽधिकं गृद्धः ॥ तस्थौ

तत्रैव स्थिर—मंतर्गतमांसनिघसरसः ॥ २० ॥ तस्मिन्नथ मध्यस्थे । मिलिते ग्रीष्मातपैर्गुद-
द्वारे ॥ आगाद्वर्षाकालः । काकोलस्यास्य काल इव ॥ २१ ॥ प्रथमघनवृष्टिवर्धित—पूरमदा
नर्मदा करटिनं तम् ॥ उपलमिव वारिराशौ । वीचिनिचयैर्निचिक्षेप ॥ २२ ॥ स्वकलत्रनर्म-
दानुग—करिदेहविडंबकं रुषेवाब्धिः ॥ निरवासयद् ढिकं तं । विवृत्य सलिलैर्गुदद्वारं ॥ २३ ॥
निःसृत्य वायसः प्रति—दिशं दृशं निक्षिपन्निरैक्षिष्ट ॥ जलमयमिव जगदखिलं । ततोऽमुंच-
ज्जीवितव्याशां ॥ २४ ॥ क्षणमुड्डीय निराशो । निवृत्य तस्थौ पुनः स तत्रैव ॥ पश्यत एवा-
स्याब्धौ । तत्कुणपममज्जि लहरीभिः ॥ २५ ॥ सोऽपि तदाधारत्वा—न्निममज्ज सहैव दैव-
परतंत्रः ॥ स्त्रीतनुगृद्धस्तद्व—न्नाहं मङ्क्ष्यामि भवजलधौ ॥ २६ ॥ पद्मश्रीरवददथ । श्रेयान्
लोभो न मुक्तिविषयोऽपि ॥ सर्वापदापगानां । प्राहुर्लोभं महाशैलं ॥ २७ ॥ अधिकाधिकलो-
भकृतः । कृतिन्नरा हारयंति मूलमपि ॥ तद्बोभगदमहौषध—माकर्ण्य वानरस्य कथां ॥२८॥
अस्त्यापगा त्रिपथगा । विकासिनालीकनयनमालाभिः ॥ या पश्यतीव केलि—कलहं क-
लहंसमिथुनानां ॥ २९ ॥ वानरमिथुनं तत्रा—भवदाभवबद्धरागमन्योन्यं ॥ कृतरतिसरितो

विपिने । घनवानीरेऽथवा तीरे ॥ ३० ॥ आरुह्य तीरवेतस—मेकं निपपात वानरोऽन्येद्युः ॥ हित्वा स विकल्पनर—त्वमयमभून्निर्विकल्पनरः ॥ ३१ ॥ तीर्थस्यास्य महिम्ना । मम भर्ता वानरो नरो जातः ॥ इति तस्माद्वानीरा—त्पतितासीद्वानरी नारी ॥ ३२ ॥ रेमे चिरं वनां-त—स्तद्योनिसंभवं मनुजयुग्मं ॥ दृष्ट्वा तमेव वेतस—मूचे वानरनरोऽन्येद्युः ॥ ३३ ॥ एष नरतां पशोर्मेहि—ममंजुलो वंजुलो यथा दत्ते ॥ दास्यति तथा नराणां । दयिते देवत्वमपि मन्ये ॥ ३४ ॥ एहि पुनर्वानीरा—दतो निपत्यामरौ भवेवावां ॥ न नराणां हि सुराणा—मिव दृष्टं कामचारसुखं ॥ ३५ ॥ मनुजत्वेऽपि न्यूनं । किमस्ति लोभो भृशं च न क्रियते ॥ इति वारितस्तया तां । कातरहृदयेत्यवगणय्य ॥ ३६ ॥ झंपां स ददौ तस्मा—द्वानीराद्वान-रत्वमेवाप ॥ दुःखेन तेन पतितः । पुनर्नरत्वाय न नरोऽभूत् ॥ ३७ ॥ मानुषतां मोचयितुं । चाटूनि चिरं चकार स च तस्याः ॥ न तथा तया वितेने । कः प्राप्तं त्यजति जात्यमणिम् ॥ ३८ ॥ स्मरविरहितरतिरिव सा । गांगे पुलिने कदापि खेलंती ॥ ददृशे भूपनरैस्तै—रादा-यादायि भूपाय ॥ ३९ ॥ पिंडितमिव लावण्यं । संचितमिव सकलसुंदरीसारं ॥ तां हस्तिना-

गपुरपति—रंतःपुरिकेश्वरीं चक्रे ॥ ४० ॥ कपिरपि केनापि धृतो । नरेण नृत्यं च शिक्षितः स तथा ॥ तत्कलया विवशोऽस्मै । यथा जनोऽदत्त भूरिधनं ॥ ४१ ॥ आगात्तदेव नगरं । स नरः स्वकवानरस्य नृत्येन ॥ विस्मापयन् धनाढ्यान् । जगाम भूमिभुजः सदसि ॥ ४२ ॥ तत्र न ननर्त दुर्नट । इव स कपिस्तेन नर्तितोऽपि भृशम् ॥ राज्ञा समासनस्थां । तां राज्ञीं वीक्ष्य पुनररुदत्सः ॥ ४३ ॥ रणभुवि भट इव पुरगे । प्रतिकूले वानरे नृपसभायां ॥ विषसाद यदा भिक्षु—र्भक्षु तदा राजदयितोचे ॥ ४४ ॥ यो भवति यथाकाल—स्तं च तथा वानरेंद्र सेवस्व ॥ किं वंजुलतरुपतितः । पुनः पुनः स्मरसि मानुष्यं ॥ ४५ ॥ राज्ञ्येति बोधितोऽसौ । राजानमरंजयत्प्रनृत्य कपिः ॥ दत्वा सोऽपीष्टधनं । सवानरं तं नरं विससर्ज ॥ ४६ ॥ पप्रछ नृपो राज्ञीं । कोऽयं मंत्रस्त्वया प्रिये पठितः ॥ येनैषकपिरनृत्य—त्ततो जगौ सा निजं चरितं ॥ ४७ ॥ अथ राजाधिकलोभं । दूषणमपि तस्य गुणमिवामंस्त ॥ न हि मनुजे सति तस्मि—न्नभविष्यदमुष्य दयिता मे ॥ ४८ ॥ वानर इव भववासो—चितं सुखं प्राप्य निर्वृत्तिसुखेछुः ॥ मूलादपि मास्म पत—स्तव हितकामा वयं वच्मः ॥ ४९ ॥ जंबूरुवाच वा-

ग्मिनि । शंसंति संतो लोजमपि धर्मे ॥ यन्मुक्तिकामनं खलु । तदौषधं लोजरोगस्य ॥ ५० ॥
यो जातमोहनिद्रः । प्रमद्वरः शिवसुखाय न यतेत ॥ स ज्रष्टमनुजजन्मा । शोचति किल
पुण्यसार इव ॥ ५१ ॥ जोगपुरमस्ति नगरं । गृहनिवहरमापमानितविमानं ॥ तत्र विपरीत-
नामा । कुलपुत्रः पुण्यसारोऽजूत् ॥ ५२ ॥ पितरौ यञ्चरणजया—क्रांताविव शैशवे विपेदाते ॥
यो मातुलैरवर्ध्यत । जनलज्जातो न च स्नेहात् ॥ ५३ ॥ तैरेव च व्यवाह्यत । शीलवतीं क-
न्यकां तदनुरूपां ॥ वृत्तिं प्राप तदोकसि । सदा सदारः स दास्येन ॥ ५४ ॥ संति मणयः
सुघृणयो । विविधा वारांनिधाविति श्रुत्वा ॥ गोष्ठ्यां क्वचन स मूर्खो । हर्षोत्कर्षाज्जगादेति
॥ ५५ ॥ यद्यचिरेण पयोनिधि—मुदंच्य न च संचिनोमि मणिनिचयं ॥ तदहं निरहंकारो ।
वक्तव्यः पापसार इति ॥ ५६ ॥ अथ स निषिध्धः पत्न्या । तां प्रोचे किं विषीदसि वराकि
॥ अब्ध्यानीतै रत्नै—स्तवैव भूषा जविष्यंति ॥ ५७ ॥ मन्ये मुधा न जवतां । गृहदास्यं को-
ऽपि मां विना कुरुते ॥ इत्युल्लंठ इवोचे । स मातुलानपि निषेधयतः ॥ ५८ ॥ अथ कुंडीमा-
दाया—यसीमसौ जलनिधिं ययौ जवनः ॥ किं करकलितकमंडलु—रगस्तिरयमिति जनै-

गपुरपति—रंतःपुरिकेश्वरीं चक्रे ॥ ४० ॥ कपिरपि केनापि धृतो । नरेण नृत्यं च शिक्षितः
स तथा ॥ तत्कलया विवशोऽस्मै । यथा जनोऽदत्त भूरिधनं ॥ ४१ ॥ आगात्तदेव नगरं ।
स नरः स्वकवानरस्य नृत्येन ॥ विस्मापयन् धनाढ्यान् । जगाम भूमिभुजः सदसि ॥ ४२ ॥
तत्र न ननर्त दुर्नट । इव स कपिस्तेन नर्तितोऽपि भृशम् ॥ राज्ञा समासनस्थां । तां राज्ञीं
वीक्ष्य पुनररुदत्सः ॥ ४३ ॥ रणभुवि भट इव पुरगे । प्रतिकूले वानरे नृपसभायां ॥ विषसा-
द यदा भिक्षु—र्भक्षु तदा राजदयितोचे ॥ ४४ ॥ यो भवति यथाकाल—स्तं च तथा वा-
नरेंद्र सेवस्व ॥ किं वंजुलतरुपतितः । पुनः पुनः स्मरसि मानुष्यं ॥ ४५ ॥ राज्ञ्येति बोधितो-
ऽसौ । राजानमरंजयत्प्रनृत्य कपिः ॥ दत्वा सोऽपीष्टधनं । सवानरं तं नरं विससर्ज ॥ ४६ ॥
पप्रच्छ नृपो राज्ञीं । कोऽयं मंत्रस्त्वया प्रिये पठितः ॥ येनैषकपिरनृत्य—त्ततो जगौ सा निजं
चरितं ॥ ४७ ॥ अथ राजाधिकलोभं । दूषणमपि तस्य गुणमिवामंस्त ॥ न हि मनुजे सति
तस्मि—न्नभविष्यदमुष्य दयिता मे ॥ ४८ ॥ वानर इव भववासो—चितं सुखं प्राप्य नि-
र्वृत्तिसुखेप्सुः ॥ मूलादपि मास्म पत—स्तव हितकामा वयं वच्मः ॥ ४९ ॥ जंबूरुवाच वा-

ग्मिनि । शंसंति संतो लोनमपि धर्मे ॥ यन्मुक्तिकामनं खलु । तदौषधं लोजरोगस्य ॥ ५० ॥
यो जातमोहनिद्रः । प्रमद्वरः शिवसुखाय न यतेत ॥ स ज्रष्टमनुजजन्मा । शोचति किल
पुण्यसार इव ॥ ५१ ॥ जोगपुरमस्ति नगरं । गृहनिवहरमाप्रमानितविमानं ॥ तत्र विपरीत-
नामा । कुलपुत्रः पुण्यसारोऽजूत् ॥ ५२ ॥ पितरौ यन्नरणजया—क्रांताविव शैशवे विपेदाते ॥
यो मातुलैरवर्द्ध्यत । जनलज्जातो न च स्नेहात् ॥ ५३ ॥ तैरेव च व्यवाह्यत । शीलवतीं क-
न्यकां तदनुरूपां ॥ वृत्तिं प्राप तदोकसि । सदा सदारः स दास्येन ॥ ५४ ॥ संति मणयः
सुघृणयो । विविधा वारांनिधाविति श्रुत्वा ॥ गोष्ठ्यां क्वचन स मूर्खो । हर्षोत्कर्षाज्जगादेति
॥ ५५ ॥ यद्यचिरेण पयोनिधि—मुदंच्य न च संचिनोमि मणिनिचयं ॥ तदहं निरहंकारो ।
वक्तव्यः पापसार इति ॥ ५६ ॥ अथ स निषिद्धः पत्न्या । तां प्रोचे किं विषीदसि वराकि
॥ अब्ध्यानीतै रत्नै—स्तवैव भूषा जविष्यंति ॥ ५७ ॥ मन्ये मुधा न जवतां । गृहदास्यं को-
ऽपि मां विना कुरुते ॥ इत्युल्लुंठ इवोचे । स मातुलानपि निषेधयतः ॥ ५८ ॥ अथ कुंभीमा-
दाया—यसीमसौ जलनिधिं ययौ जवनः ॥ किं करकलितकमंडलु—रगस्तिरयमिति जनै-

ध्यातः ॥५ए॥ डुर्धरपूरपरःशत—पतयालुसरिज्जलैरपूर्णेभम् ॥ कुंड्या तया तटस्थः । स वा-
रिधिमुदंचितुं लग्नः ॥ ६० ॥ मुंच मणिजालमधुना । विमुच्यते जलपते मया कृपया ॥ इति
तर्जयन् स जलधिं । कैः कैर्न विहस्यते जनैः ॥ ६१ ॥ लोकैरपि स निषिद्धो । जगौ न मे सं-
पदं किमु सहध्वं ॥ तावन्नाहं नवतां । दायादो वा विरोधी वा ॥ ६२ ॥ एवं त्यक्तवान्नोदक
—मत्नम्नमनसं च षड्भिरपि मासैः ॥ तं वीक्ष्य वारिधिपतिः । सुस्थितदेवस्तुतोषतरां ॥६३॥
अपवादनीरुणा तेन । तस्य रत्नाकराज्जलं कृषतः ॥ चिंतारत्नमदर्शयत । दारिद्र्यध्वांतदिनर-
त्नम् ॥ ६४ ॥ जितकासी तद्रत्नं । मलदिग्धपटच्चरांचले बध्ध्वा ॥ वलितः फलितक्लेशः । स
तितर्जयिषुर्निषेद्धजनं ॥ ६५ ॥ क्वचन ग्रामे निक्षा—लब्धान्ननिरस्तचिरतरबुभुक्षः ॥ शिश्ये
निशि निद्रागलि—तचीवरः पांथकुड्यां सः ॥ ६६ ॥ पदलग्नं तद्वसन—ग्रंथिं पथिको ऽप्य-
मुद्ध्यत्कोऽपि ॥ सुररत्नं चालोकत । दुरासदं नाग्यहीनानां ॥ ६७ ॥ तद्बंदिमोक्षमाधाय ।
तत्पदे ग्रावखंरूमाबध्य ॥ यदलिप्सत तद्लेने । स ततः सततं तमभ्यर्च्य ॥ ६८ ॥ जागरि-
तस्तरणिकरैः । सोऽपि दरिद्रो गृहीतनिजवसनः ॥ प्रेरित इव हर्षोर्मिभि-रतीतमार्गो ययौ

स्वगृहम् ॥ ६९ ॥ पत्न्यामेलयदखिलां—स्तत्र स्वजनानुवाच तानेवं ॥ चिंतामणिमहमापं । जलधेर्युष्मन्निषिद्धोऽपि ॥ ७० ॥ अथ तत्पुरतः पश्यति । यावद् ग्रंथिं विमुच्य स वराकः ॥ दारिद्र्यकेलिकंदुक । इवोपलस्तावदाविरभूत् ॥ ७१ ॥ भवदुचितोऽयं चिंता—मणिर्भवत्येव मा श्लथं मुंच ॥ तैरिति हसितः स गलित—जीवित इव किमपि न जजल्प ॥ ७२ ॥ स इव क्लेशाल्लब्धं । नरभवचिंतामणिं भवांभोधौ ॥ न हि मोहनिद्रयाहं । निर्गमयन् हासयिष्येऽहं ॥ ७३ ॥ अवददथ पद्मसेना । प्रिय कार्यः प्राप्तवस्तुना तोषः ॥ उच्चतरुशिरसि नो चेत्फलानि दृष्ट्वा स्फुटति हृदयं ॥ ७४ ॥ यल्लब्धं तन्मुंच— भलब्धमधिकं नरो मृगयमाणः ॥ उभयभ्रष्टो भूत्वा । सीदत्यनु स इव गोमायुः ॥ ७५ ॥ एकः परितः सरितं । मुखविन्यस्तामिषो वने क्वापि ॥ पंकिलभूतललीनं । मीनं प्रददर्श गोमायुः ॥ ७६ ॥ मुक्त्वा स मांसखंडं । दधाव जलचारिणं जिघृक्षुस्तं ॥ निममज्ज तिमिर्धुन्या—मितः शकुन्या पलं जह्रे ॥ ७७ ॥ अथ तं व्यथितं हृदये । क्रंदंतं जंबूकं जगौ कोऽपि ॥ तद्भोगोऽडेकविलो—कनेन कौतुहली पथिकः ॥ ७८ ॥ प्रविहाय मांसपेशीं । वदनगतां धावितस्तिमिं धर्तुं ॥ भ्रष्टस्त्वमामिषादनि—

मिषाच्च किं रोदिसि शृगाल ॥ ६९ ॥ तद्वत्करगतभोगे—ष्वनादरः सादरश्च शिवसौख्ये ॥
कर्मवशेन विघटिते । द्वयेऽपि माभूः परैः शोच्यः ॥ ७० ॥ अथ तां जगाद जंबूः । सुभगे क्षे-
मंकरी मम त्वमसि ॥ उपदिशसि लब्धपालन—मेतत्कस्मै न रोचेत ॥ ७१ ॥ लब्धोऽपि परं
धर्मो । विनाश्यते योषिदुक्तिचौरीभिः ॥ ता अपराजित्याहं । स्यां विद्युन्मालिना न समः
॥ ७२ ॥ अस्ति गिरौ वैताढ्ये । भूरिशुभं गगनवल्लभं नगरं ॥ यत्र मणिभवनभित्तिषु । ज-
नाबिंबेनैव चित्राणि ॥ ७३ ॥ खेचरौ विद्युन्माली । मेघरथश्चात्र सोदरावास्तां ॥ तौ प्रापतुः
कदाचन । मातंगीं नाम वरविद्यां ॥ ७४ ॥ परिणीय श्वपचसुतां । श्वपचस्थाने कृताश्रयैः
सततं ॥ वर्षावधिधृतशीलैः । पुंभिरियं साध्यते विद्या ॥ ७५ ॥ निर्णीयेति मिथस्तौ । खगा-
विव तरोर्गिरेरवातरतां ॥ विहितश्वपाकवेषौ । वसंतपुरपत्तनमगातां ॥ ७६ ॥ गत्वा श्वपाक-
पाटक—मभजेतां तौ श्वपाककुलवृद्धम् ॥ तेनापि कौ युवामिति । पृष्टौ स्पष्टं न्यगदतां च
॥ ७७ ॥ आवां श्वपाकनायक—तनयौ जनकापमानतः खिन्नौ ॥ पाटलिपुत्रादत्रा—जग्मि-
व नाथं निरीक्ष्य त्वां ॥ ७८ ॥ तौ भक्तौ गुणयुक्तौ । स्वसुताभ्यां स व्यवाहयन्मुदितः ॥

अथ मेघरथोऽजिह्म—ब्रह्मधरोऽसाधयद्विद्यां ॥ ७९ ॥ अपरस्तु पिकः काकी—मिव श्वपाकीमकामयत कामं ॥ साधस्त ततो गर्त्ते । घनसिक्ता भूरिवांकूरं ॥ ८० ॥ वर्षेण सिद्धविद्यो । ज्ञात्वैतत्तं जगाद मेघरथः ॥ ॥ सुकुलस्य च सकलस्य च । बांधव तव विप्लवः कोऽयं ॥८१॥ सोऽपि त्रपानतमुखः । प्रोचे भ्रातः क्षमस्व मम मंतुं ॥ अनुनेष्याम्यथ विद्यां । मम चिंतां वर्षतः कुर्याः ॥ ८२ ॥ अथ स गतः सुगत इव । ब्रह्मपदं निजपुरं स्मरविजेता ॥ वर्षांते ववले स्त्री—बंधान्निजबंधुमुद्धर्तुं ॥ ८३ ॥ तत्र स बंधुमपश्य—द्बालं परिलालयंतमंकस्थम् ॥ पुनरपि तां मातंगी—मंगीकृतगर्त्तचारां च ॥ ८४ ॥ मेघरथस्तं न्यगद—द्भ्रातः किं निस्त्रपोऽसि विकलोऽसि ॥ अस्यां नगरस्त्रोतसि । हंस इव त्वं यदनुरक्तः ॥ ८५ ॥ सोऽपि जगौ भ्रातर्मे । खलेषु रेखा तवोपकारिषु च ॥ मामीदृग्दशमपि यो । भूयो भूयः प्रबोधयसि ॥८६॥ व्रज पुनरेयाः साधित—विद्यं वर्षेण मां समुद्धर्तुं ॥ तेनेत्युक्तः स ययौ । ववले संवत्सरेण पुनः ॥ ८७ ॥ बालद्वयपालनरत—मुदरिण्या संगतं च मातंग्या ॥ विद्युन्मालिनमालोक्य । तस्य दोदूयते मनः ॥ ८८ ॥ उज्झ्य ततः स गत—स्तथा यथा न न्यवर्तत भूयः ॥ तद्भ्रा-

रीवशगो । न खेदयिष्ये गुरूनेषः ॥ ४९९ ॥ ऊचेऽथ कनकसेना । मृतोऽतिकामाद्विचित्रवी-
र्यनृपः ॥ अतिकोपात्कौरव्या । अत्यभिमानाद्दशग्रीवः ॥ ५०० ॥ नलभूपोऽतिद्यूता—दतिनै-
स्तृंशाच्च परशुरामोऽपि ॥ अतिलोभाच्च विनंक्ष्यसि । नाथ त्वं शंखधमक इव ॥ १ ॥ शालि-
ग्रामे ग्रामे । बभूव कौटुंबिकः पुरा सुभगः ॥ क्षेत्रं स ररक्ष सदा । शंखध्वनिना मृगादिभ्यः
॥ २ ॥ अन्येद्युः स निशायां । शंखकरो रक्षितुं ययौ क्षेत्रं ॥ तत्र च निशावसाने । दध्मौ
सुप्तोत्थितः शंखम् ॥ ३ ॥ क्षेत्रमभितो व्रजंतः । केचिच्चौरा गृहीतधेनुधनाः ॥ तेन ध्वनिना-
कस्मा—दाघातानारक्षकान् विविदुः ॥ ४ ॥ मुक्त्वा गोधनमखिलं । स्वदेहमपि भारकारि म-
न्वानाः ॥ ते तत्रसुर्दिशोदिशि । धृत्वा ध्वांते वयस्यधियं ॥ ५ ॥ प्राप्तः परितः क्षेत्रं । भ्रमं-
स्तदैक्षिष्ट गोकुलं सकलं ॥ स हली गोपविहीनं । लोकमिव स्वैरसंचारं ॥ ६ ॥ ग्रामं नीता-
त्तस्मा—ल्लेभे स धनं यशश्च लोकेभ्यः ॥ लोभात्ततः स नित्यं । क्षेत्रे धमतिस्म निशि शंखम्
॥ ७ ॥ चौरास्त एव यांत—स्तेनैव पथा कदाचिदात्तधनाः ॥ तत्रैव शंखशब्दं । श्रुत्वा स-
त्वाधिकाः प्रोचुः ॥ ८ ॥ अत्रैव शंखनादः । पुराभवन्मन्महे ततः स्वधिया ॥ अत्रासन्नक्षेत्रे ।

कोऽपि नरः शंखधमकोऽस्ति ॥ ९ ॥ प्रागपि शंखं धमता—मुना वयं त्याजिता ध्रुवं धेनूः ॥
तद्घात्योऽयमिति ध्वनि—मनुसृत्य क्षेत्रमीयुस्ते ॥ १० ॥ तत्र प्रयत्नतः शंख—वादिनं तस्क-
रास्तमालोक्य ॥ भंक्त्वा शंखं चक्रुः । पराङ्मुखरूपं घनाघातैः ॥११॥ चेदकरिष्यद्भोज्जं । न सो-
ऽधिकं तद्व्यपत्स्यत न चैवं ॥ तत्त्वमपि लब्धभोगै—स्तोषं कुरु किं शिवस्पृहया ॥ १२ ॥ श्री-
जंबूरवददथो । न भोगसंतोषयोः प्रिये मेलः ॥ न हि भोगान् भुक्तवतः । स्यात्कस्यापीह
संतोषः ॥ १३ ॥ मंगो यथा यथा स्या—न्मज्जत्यधिकं तथा तथा जंतुः ॥ कपिरपि न किं स
नष्टः । कुर्वन्नधिकाधिकं संगम् ॥ १४ ॥ अस्ति गिरिर्विंध्य इति । क्रीडासदनं समग्रसत्वानां
॥ तत्रैकः कपिरभव—द्यूथपतिर्ग्लपितपरचक्रः ॥ १५ ॥ कोऽपि कपिश्चपलतर—स्तद्दयितावा-
नरीं रहश्चकमे ॥ तद् ज्ञात्वा यूथपति—स्तमधावत्क्रोधनो हंतुं ॥ १६ ॥ सोऽपि कपिः खि-
त्कारं । कुर्वाणो ग्रावगोलकान् वर्षन् ॥ पृष्टस्थापितदयित—स्तमनुदधावे क्रुधाविष्टः ॥ १७ ॥
न समरकेलीः केनापि । शिक्षितौ क्वापि नैव दृष्टचरौ ॥ तौ युयुधातेऽन्योन्यं । सविस्मयं वीक्षि-
तौ व्याधैः ॥ १८ ॥ स जरी यूथाधिपति—र्यून-ऽजय्योजसा जितस्तेन ॥ नश्यन्नातपतापा—

त्पथश्रमाच्चातवत्तृषितः ॥ १९ ॥ विपुलशिलामिलितशिलां—जतुनि मुखमवाहयज्जलधिया
सः ॥ तत्तत्र लग्नमुद्धर्तु—मक्रमः सोऽङ्घ्रिपत्पाणी ॥ २० ॥ तावप्युद्धर्तुमथो । चरणौ चिक्षे-
प तावपि विलग्नौ ॥ स ततः सर्वावयवं । कीलित इव मृत्युमानंच ॥ २१ ॥ गौरेयरसप्रमिता
। भोगास्तेष्वेवमहमपि विलग्नः ॥ तृष्णाकृतमतिमोहो । न विपत्स्ये वत्सले स इव ॥ २२ ॥
एवं प्रियासु चतसृषु । चतुरं प्रतिबोधितासु ननु मेने ॥ श्रीजंबूवीरेण—र्धन्नेदितं कामभ-
टकटकं ॥ २३ ॥ भणतिस्म नभःसेना । प्रिय जाने शिवसुखे धृतानंदं ॥ मुनिवृंदं वीक्ष्य भ-
वा—नपि ताम्यति तन्मनास्तस्मै ॥ २४ ॥ न स्पर्धया कृतं स्या—त्कार्यं परिणामसुंदरं प्रायः ॥
अत्रार्थे जरतीयुग—दृष्टांतमुशंति किल संतः ॥ २५ ॥ नंदिग्रामे सिद्धि—बुद्धिश्चोभे स्त्रियौ
पुराभूतां ॥ जरसा दारिद्र्येण च । युक्तं समभूत्तयोः सख्यं ॥ २६ ॥ आराधितोऽथ सिद्ध्या ।
दारिद्र्यभयार्त्तयानुभावनिधिः ॥ दीनारद्वयमनुदिन—मदान्मुदा भोगिलो यक्षः ॥ २७ ॥ भ-
धुमाधवमाभ्यामिव । दीनाराभ्यां जगत्प्रियाभ्यां सा ॥ भेजे जरती वल्ली—पल्लवितेव श्रियं
परमां ॥ २८ ॥ बुद्धिस्तामप्राक्षी—द्वावां सखि सन्निभे पुराभूव ॥ किं वस्त्राभरणैस्त्वं । संप्रति

परिवर्तितेवासि ॥ २९ ॥ उक्ते तया सरलया । यक्षकृते स्वविभवे ततो बुद्धिः ॥ भक्त्याराराध यक्षं। सिद्धेश्चायाचत द्विगुणं ॥ ३० ॥ प्रत्यक्षो यक्षोऽदा—त्तस्यै चतुरः सदा स दीनारान् सरसीव मृदुसमीरैः । सापि विलासानशिक्ष्यत तैः ॥ ३१ ॥ द्विगुणं ततोऽपि सिद्धि—र्लेभे नित्यं निषेविताद्यक्षात् ॥ आराद्धो बुद्धेरपि । तद् द्विगुणं धनमदाद्यक्षः ॥३२॥ स्त्रीसंकटे निपतितं । विषक्षमिव वीक्ष्य यक्षमथ सिद्धिः ॥ आराध्य बलात्तेन । स्वकमेकमकाणयच्चक्षुः ॥ ३३ ॥ परिचर्य ततो बुद्ध्या । गतबुद्ध्या सिद्धितोऽर्थितो द्विगुणं ॥ तां यक्षश्चक्षुर्युग—विकलां चक्रे विरोधाच्च ॥ ३४ ॥ उपचितपुष्कलविभवा—पि सा ततः प्राप कमपि संतापं॥ त्वमपि शिवेच्छैर्मुनिभि—र्बद्धस्पर्धस्तथाप्नोषि ॥ ३५ ॥ जंबूरुवाच मानिनि । लज्जते तव वचनप्रकृतिः सेयं ॥ उन्मीलति भवनस्त—त्वलोचने पांशुवृष्टितुलं ॥ ३६ ॥ परमपरे मुंचंति । सत्पथं ये भवादृशां वचनैः ॥ नाहं मोक्ष्यामि पुन—स्तं प्राजनकैः स वाजीव ॥ ३७ ॥ अस्ति पुरं साकेतं । संकेतस्थानमखिललक्ष्मीणां ॥ बाह्यांतरारिजेता । जितारिरिति तत्र भूपालः ॥३८॥ तस्य प्रसादसदनं । जिनदासः श्रावकोऽभवत्तत्र ॥ न्यासीकृतं स राज्ञा । हयरत्नमपालयत्प्र-

यतः ॥ ३९ ॥ इभ्यगृहे तस्य हय—स्यांगोपांगेषु वर्धमानेषु ॥ ववृधे नृपस्य संप–द्विपक्ष
वैरिक्षितींद्राणां ॥ ४० ॥ अन्वहमारुह्य हयं । तं सरसि निनाय नीरपानाय ॥ वलमानश्च
जिनगृहे । प्रदक्षिणात्रयमदादिभ्यः ॥ ४१ ॥ स हयस्थ एव देवं । नत्वागान्निजगृहं ततस्तु-
रगः ॥ नान्यं विवेद मार्गं । स्वगृहसरोजिनभवनवर्जं ॥ ४२ ॥ लग्नोपजिह्वमिव नः । किं रा-
ज्यं त्रुटति वैरिभूपालैः ॥ इति पृष्टे निजसंसदि । त्रुवि गूढचराश्चराः प्रोचुः ॥ ४३ ॥ स्व-
प्रभुराज्यरसायन–मरिकुललक्ष्म्याः क्षयामयः स हयः ॥ यावज्जयति जितारेः । कथमुदय-
स्तावदपरेषां ॥ ४४ ॥ अचिरात्तं तुरगमहं । हृत्वा नेष्याम्यदः प्रतिज्ञाय ॥ प्राज्ञंमन्यः क-
श्चि–त्तत्सचिवः प्राप साकेतं ॥ ४५ ॥ कपटश्रावकवेषं । कुर्वंतमशेषजैनबिंबार्चाम् ॥ साध-
र्मिकवात्सल्या–ज्जिनदासस्तमानयत्स्वगृहं ॥ ४६ ॥ तत्राभ्यर्च्य जिनेंद्रान् । भुक्त्वा सोऽलीक-
नियमसंयमितं । जिनदासस्याग्रहतो । निशि तस्थौ धर्मवार्ताभिः ॥ ४७ ॥ केनापि तदा सु-
हृदा । स्वविवाहमहोत्सवे समभ्यर्थ्य ॥ आहूतो जिनदासः । क्षणमासीत्तुरंगचिंतार्त्तः ॥४८॥
तं गोप्याज्ञोप्यतरं । तुरगं तनयादिकेऽप्यविश्वासी ॥ दत्वा कपटश्रावक–स्य रक्षितुं ततः

स चचाल ॥ ४९ ॥ साध्यं सिद्धिं ध्याय—न्नथो निशीथे स गोमुखव्याघ्रः ॥ आरुह्य तं तुरगं । स्वपुरमभि प्रेरयामास ॥ ५० ॥ पूर्वं सरस्ततो जिन—मंदिरमागत्य चतुरंगस्तुरगः ॥ चक्रे प्रदक्षिणात्रय—मथ निजमंदिरमुपेयाय ॥ ५१ ॥ पुनरपि नुन्नस्तेने । तेन हयो भूयसीभ्रमीरेवं ॥ स ननाश तिमिरनाशं । प्रत्यूषेऽश्वं विमुच्य ततः ॥ ५२ ॥ निखिलनिशाभ्रमिजात—क्लेशः प्रविवेश मेदुरामश्वः ॥ पौरैः पृष्टश्चेन्यः । किं निशि वाहस्त्वयावाहि ॥ ५३ ॥ चकितः स लोकवचसा । तत्र गतः श्रांतमश्वमालोक्य ॥ अवगतकितवश्रावक—वृत्तः स्वं सुकृतिनं मेने ॥ ५४ ॥ स्नपयित्वा हर्षाश्रुभि—रथाश्वमिभ्यो विशिष्य सच्चक्रे ॥ स्फुटदृष्टा हि पशोरपि । जायंते गौरवाय गुणाः ॥ ५५ ॥ तद्वद्गुरुणाभिहितां । तां स्वहितां चिद्दर्शनक्रियारूपां ॥ अजहंस्त्रिपथीमहमपि । कस्य न मान्यो भविष्यामि ॥ ५६ ॥ अलपदथो कनकश्रीः । प्राणप्रिय कृषिरपि क्रमात्फलति ॥ पंथाः क्रमशो लंघ्यः । क्रमशः शैलमारोह्यम् ॥ ॥ ५७ ॥ गंतव्यं शिवनगरं । क्रमशः क्रमशो व्रतं गृहीतव्यं ॥ अक्रमकारी त्वरया । परिशोचति पुण्यहीन इव ॥ ५८॥ अस्ति नगरी जयंती । निजश्रिया सुरपुरीमपि जयंती॥ शैशव-

मृतपितृबंधु–स्तत्राभूत्कोऽपि कुलपुत्रः ॥ ५९ ॥ स च मातुलेन निन्ये । निजगेहे तदपि व-
ह्निना देहे ॥ धृतदेहेवालक्ष्मी—स्तेनापि ततोऽयमत्याजि ॥ ६० ॥ स जगाम तामलिप्तीं ।
कस्यचिद्धट्टे स्थितोऽल्पलाभेन ॥ तदपि निशायां पापिषु । परमैः परमोषिभिरमोषि ॥ ६१ ॥
तस्य ततोऽदायि जनै—रन्वर्थं पुण्यहीन इति नाम ॥ दारिद्र्यभिदे तर्या सोंतर्यादःपतिं
विवेश ॥ ६२ ॥ ववले धनलवलाभ—प्रमनाः स मनाक्कदा च खरवातैः ॥ तर ःगान्मलिनं
स्वं । शोध्धुमिवाब्धौ ममज्ज तरी ॥ ६३ ॥ फलकालिंगनतीर्णा–कूपारः पारमाप्य स कथमपि
॥ कांतारं कांतारस—मत्तव्यालं व्यलंघिष्ट ॥ ६४ ॥ द्वीप इवारण्याब्धौ । पुरतो वरतोरणे
महायतने ॥ यक्षं निरीक्ष्य दौःस्थ्यं । दलयितुमनिशं सिषेवे सः ॥ ६५ ॥ भक्तिवशस्तं प्रो-
चे । दयालुहृदयालुनायको यक्षः ॥ एकः केकी नित्यं । नृत्यं पुरतः करिष्यति ते ॥ ६६ ॥
सोवं सौवर्णमसौ । यत्पिच्छं मुंचति व्रजन्नेकम् ॥ वत्स तदादद्यास्त—न्निवहो हि श्रीकरो भ-
वति ॥ ६७ ॥ अथ तेन यक्षवचसा—नुदिनं शिखिपिच्छमेकमाददता ॥ दध्रेऽन्यदा कलापी
। समं समस्तानि तान्याप्तुं ॥ ६८ ॥ तस्याशुचिकरसंकर—मवाप्य केकी स वायसो जातः ॥

आत्तचराण्यपि पिञ्छानि । काकपिञ्छत्वमानंचुः ॥ ६९ ॥ सोऽरिचमूमिव कमला—मन्यायांतीं
निषिद्ध्य सर्वत्र ॥ विधिना विहितं निःस्व—प्राज्ञवमाजवमनुबभूव ॥ ७० ॥ एवं त्वमाश्रमा-
दि—क्रमलोपात्प्रथममेव तपसि रतः ॥ प्राच्यादपि पुण्यचया—च्च्युतश्चिरं लप्स्यसे दुःखं
॥ ७१ ॥ जंबूरुवाच सक्रम—माश्रमविषयं विचारयेच्चतुरे ॥ सौहृदमिव निर्व्याजं । यस्य स्या-
दंतकेन सह ॥ ७२ ॥ ये लब्धां सामग्रीं । परिजनमोहेन हारयंति जनाः ॥ निबिडानुताप-
तस्ते—ऽवश्यं क्लिश्यंति कमठ इव ॥ ७३ ॥ कादंबिन्यस्त्यटवी । पंक्तिशिरःक्ष्माभृदविरलपत्रा-
शा ॥ परितोऽमितद्रुरुद्धा । लंकेवाष्टापदनिवासा ॥ ७४ ॥ एकस्तत्रास्ति नदो । बहुयोजन-
जनविस्तृतः सदासलिलः ॥ यस्य दृढकुट्टिमायित—मूर्ध्वं सेवालपटलेन ॥ ७५ ॥ तस्यांतः
कूर्मोऽभू—त्परिष्कृतः पुत्रपौत्रदौहित्रैः ॥ नदकुहरलीनत्वा—द्विस्मृत इव यो यमस्यापि ॥
॥ ७६ ॥ स कदापि वातदारित—शेवालछिद्रवर्मनोदग्रीवः ॥ शारदमिंदुं वारिद—विरहि-
तमुरुमंडितमपश्यत् ॥ ७७ ॥ तादृशमदृष्टपूर्वी । विस्मयरसनिर्भरं चिरं वीक्ष्य ॥ स्वज्ञातेर्नय-
नोत्सव—माधातुमधोऽगमत्कमठः ॥ ७८ ॥ यावत्परिजनयुक्त—स्तत्रागात्तावदुरुमरुन्मिलि-

तं ॥ शेवालपटलमधत्ता— नुद्घाटकपाटपश्चिमानं ॥ ६९ ॥ आलोकयन्नपि नंदं । नासौ तं श-
शिनमैक्षत वराकः ॥ तद्वत्कुटुंबमोहा—द्गुरुचंद्रमहं न मोक्ष्यामि ॥ ७० ॥ ऊचेऽथ कन-
कवत्या । न मन्यते यो हितां स्वजनवाचां ॥ तस्यासन्ना विपदः । खगस्य मासाहसस्येव ॥७१॥
ददृशे केनापि नरे—णांतर्वनचारिणा हरिः सुप्तः ॥ तत्कालहतद्विरदा—मिषसुहतो व्यात-
मुखकुहरः ॥ ७२ ॥ कोऽपि मा साहस-- मिति निगदन्मांसलेशलोभेन ॥ प्रविशंस्तन्मुख-
कूपं । तेन निषिद्धोऽपि न च तस्थौ ॥७३॥ जागरितोऽथ हरिस्तं । जीवन्स्तं चपेटया चक्रे
॥ तद्वत्तवापि दयिता—हितोक्तिविमुखस्य न हि कुशलं ॥ ७४ ॥ जंबूजंगाद सुभगे । जी-
वोऽयं रक्ष्यते क्रितेर्येन ॥ बंधुः स एव हितकृ— त्किं शेषैरापदि तटस्थैः ॥ ७५ ॥ न वपुर्न
कुटुंबं वा । शरीरिणो रक्षणक्षमं विपदि ॥ अत्रार्थे मित्रत्रय—कथानकं किं न चिंतयसि ॥
॥ ७६ ॥ देशोऽस्ति निरवसानो । भ्रमनिरतानंतजंतुसंतानः ॥ यस्य न लेभे पारः ॥ कैश्चन
बहुनापि कालेन ॥ ७७ ॥ तत्तद्व्यतिरेककीर्णे । तत्रास्ति नरसमुद्रमिति नगरं ॥ यन्नररत्नो-
त्परया । पत्न्या स्तूयेत देवानां ॥ ७८ ॥ तत्रोग्रशासन इति । क्ष्मापो यत्तोषरोषपरतंत्रः ॥

केऽपि लभंते दिव्या—मृद्धिं नरकव्यथां केऽपि ॥ ८९ ॥ आपातालसुरालय—माकुंथुसुरेंद्र-
माजननमरणं ॥ यस्यादेशं बलिनो । लवतोऽपि न लंघते लोकः ॥ ९० ॥ धनदौःस्थ्ययौवन-
जरा—सुखदुःखयशोऽयशःप्रमुखमखिलं ॥ लोकस्य पर्यवस्यति । यस्मिन्नेकप्रज्ञो जगतः ॥९१॥
अमरा अपि नैरयिका—स्तेऽप्यमरा द्विजवराः श्वपाकाश्च ॥ तेऽपि द्विजाः क्रियंते । येन
स्वैरं निजबलेन ॥ ९२ ॥ तस्य सचिवः सचेतन । इति येन स्वप्रभुः प्रभूतधिया ॥ निन्ये वृ-
द्धिमुपायै—स्तैस्तैरारंभसिद्धेन ॥ ९३ ॥ यः स्वर्गनरकसीमां । भ्राम्यति भूमिं प्रभोः प्रसा-
देन ॥ न त्यजति तस्य सेवां । तेनैष सुखेऽपि दुःखेऽपि ॥ ९४ ॥ तस्य बभूव सुरूपः । सुहृ-
दाजन्मोपजातसंयोगः ॥ स्वयमास्ये निक्षिप्तैः । कवलैर्योऽवर्द्धि तेनैव ॥ ९५ ॥ तस्य स्नानवि-
लेपन—विभूषणाभ्यंगभोजनादीनि ॥ स्वसुखायैव सचेतन—सचिवो मेने परप्रीतिः ॥९६॥
व्यवहाराभ्यवहार—स्थितिगतिशयनं स तेन सह चक्रे ॥ तत्तस्य ददे लोकै—रभिधानं नि-
त्यमित्रेति ॥ ९७ ॥ अन्येद्युश्च दयितया । मतिमत्यावसरमाप्य स प्रोचे ॥ जागर्यते हि पुरु-
षः । प्रमद्वरो जात्यजायाभिः ॥ ९८ ॥ योऽयं धव तव सवया । मन्येऽहं स बहिरेव रमणी-

यः ॥ अंतर्मलिनात्मायं । त्वयि मयि विघटिष्यते प्रांते ॥ ५९९ ॥ आसन्नविपदि काले । मि-
त्रेऽस्मिन् विघटिते परः कोऽपि ॥ भावि न तव सखा किं । लग्नेऽग्नौ खन्यते कूपः ॥ ६०० ॥
एकं चक्षुरचक्षु–र्मुखे रथे चक्रमेककमचक्रं ॥ तत्कमपि सुहृदमपरं । कुरु संप्रति यदि हिते-
प्सुरसि ॥ १ ॥ स प्रेरित इति पत्न्या । मित्रं स्वजनाभिधं विधत्तेस्म ॥ प्रीणाति परप्रणयः ।
पर्वणि पर्वणि तमाकार्य ॥ २ ॥ पर्वसुहृदिति प्रथिते । नाम्नि तस्य प्रियावदद्दयितं ॥ पूर्वस्मा-
देष सखा । सुखाय भविता विपत्तौ ते ॥ ३ ॥ अयमपि न पुनः सम्यक् । प्रभविष्यति र-
क्षितुं क्षितिं नाथ ॥ स्वाराधमचलसौहृद–मभ्यर्णं तत्कुरु सखायं ॥ ४ ॥ स च विश्वहितः
श्रीमान् । सुलभः प्रायेण साधुशालासु ॥ इति तद्वचसा चक्रे । तमेव मित्रं महामात्यः ॥५॥
अध्वनि दृष्टं नमति । ध्यायति सद्भावपूर्वकं तं सः ॥ स च तावतापि तुष्यति । भावग्राह्या
हि वरसुहृदः ॥ ६ ॥ स ततः प्रणाममित्रा–ख्यया जनै रोच्यताच्युतस्नेहः ॥ एवं मित्रत्रय-
युग् । निजं स जन्म व्यतीयाय ॥ ७ ॥ स कदाचन यमकल्पे । नृपतौ कुपिते जगाद सह-
मित्रं ॥ मित्र त्वय्येव मया । न्यस्तमभूत्प्रेमसर्वस्वं ॥ ८ ॥ विपदि तदुपस्थितायाः–मस्यां सा-

हाय्यमारचय्य मम ॥ अवदातमजेय यशः । पुनः पुनर्नेदृशोऽवसरः ॥ ९ ॥ श्रुतमप्यश्रुतमि-
व त—दूचनं कृत्वा धृतावहेल इव ॥ तूष्णीको नित्यसुहृद—भ्यपतदचेष्टो महीपीठे ॥१०॥
परिवृत्ते सहमित्रे । म्लानास्यमनोजसं सचिवधुर्यं ॥ अभगतराजविरोध—स्तमवददभ्येत्य प-
र्वसखः ॥ ११ ॥ मित्र विषीदसि कस्मा—द्धनेन देहेन वा यतिष्येऽहं ॥ किं क्रियते भूपोऽयं।
स्वैराचारो दुराराधः ॥ १२ ॥ उपकारास्तव बहव—स्तेषामनृणः कथं भविष्यामि ॥ श्रुत्वेति
नित्यमित्रा—त्पर्वसखममुं स बहुमेने ॥१३॥ तस्मिन्नथ यतमाने । प्रवर्धमाने भये च भूमिपतेः ॥
आगात्प्रणामसवयाः सावष्टंभं जगादेति १४. मित्रागतोऽस्मि सोऽहं । त्वत्पत्न्या प्रेरितोऽद्य मतिम-
त्या ॥ किं शोचसि मयि निकटे । प्रभविष्णुर्विष्णुरपि न स्यात् ॥१५॥ वर्षंति मदादेशा—ज्जल-
दाः सीमां भिनत्ति न च जलधिः ॥ प्रादुर्भवंति निधयः । स्फुरंति मणिमंत्रमहिमानः ॥१६॥
दुःस्था अपि धनवंतः । कुधियोऽपि बुधा मृगा अपि व्याघ्राः ॥ रंका अपि चक्रधरा । मया यथेष्टं
विधीयंते ॥ १७ ॥ माधा मनसि यदस्मै । न चाकरं कंचन कदापि सत्कारं ॥ नाहं भाटक-
वश्यो । वश्योऽहं शुद्धभावानां ॥ १८ ॥ भावस्तवापि शुद्धः । स्यामद्य तवानृणः प्रणामस्य ॥

एह्येहि नयामि त्वां । सदयितमनुपद्रवं स्थानं ॥ १९ ॥ विश्वहितं स्वहितं तं । सोऽपि पुर-
स्कृत्य सप्रियश्चचाल ॥ तस्यादेशाच्चक्रे । वासकममरालये क्वचन ॥ २० ॥ तमचालयत्ततोऽपि
। प्रणतिसखो घनसुखावगाढमपि ॥ न हि राजविरुद्धानां । स्थितिरेकत्रोचिता प्रायः ॥२१॥
पुनरपि पदं रमयितुं । तं मूलपुरं निनाय विश्वहितः ॥ तत्राप्यभुंक्त भोगान् । स चिरं तस्या-
नुभावेन ॥ २२ ॥ माज्ञासीदत्र स्थित—मेतं नृपतिश्चरैरिति वयस्यः ॥ परिवर्तितवेषं तं । प्र-
यतं सार्थेशमुपनिन्ये ॥ २३ ॥ सार्थेशस्तमवादी—द्वत्स सभाग्योऽसि सुहृदेषः ॥ वयमप्य-
स्यैव बला—त्कुप्रभुमेतं मुमुक्षामः ॥ २४ ॥ माभूत्कदापि विमुखो—ऽमुष्यत्याज्यो न जातु
सार्थोऽयं ॥ उत्तिष्ठेते पथि यौ । व्याघ्रौ ताभ्यां न भेतव्यं ॥२५॥ द्रवशैलवंशजाली—गर्ता ग-
त्यंतरायमिह ये स्युः ॥ ते प्रशममर्दवार्जव—संवरमंत्रैः सुखं वार्याः ॥ २६ ॥ न च सह्याये वि-
पिने । स्थेयं जेयं बलेन चौरबलं ॥ लब्धासेऽभिमतपुरं । शिक्षामेतां वहन् वीर ॥ २७ ॥ सोऽ-
पि तदादेशरतः । सरलेन पथा तथा चचालाथ ॥ येनातीतारण्यो । निर्विघ्नं प्राप शिवनगरं
॥ २८ ॥ विश्वहितस्तमवादी—न्मित्र तदेतत्पुरः पुरं पश्य ॥ यत्रोग्रशासननृपा—न्निवसंत्यकु-

तोजया लोकाः ॥ २९ ॥ नित्ययुवा मृत्युञ्जया—तंकविमुक्तः सहानया पत्न्या ॥ कालमनंतमिह त्वं । भुंजीथा निस्तुषं सौख्यं ॥ ३० ॥ अथ तत्र पुरे प्रवरे । प्रवेश्य तं बंधुमनुपधिस्नेहः ॥ विश्वहितोऽचलत यत—स्तस्योद्धार्यं जगन्निखिलं ॥ ३१ ॥ शृणु सुदति कथातत्त्वं । देशोऽयं संसृतिः पुरं नृभवः ॥ राजा कर्मविपाकः । सचिवो जीवः प्रिया बुद्धिः ॥ ३२ ॥ तनुपरिजनधर्माख्यं । क्रमेण मित्रत्रयं यथोद्दिष्टं ॥ नृपकोपो मृत्युदशा—स्तस्यात्राणं न देहेन ॥ ३३ ॥ देहेऽनुपलक्षित इव । निश्चेष्टीभूय मंचकारूढे ॥ समुपैति बंधुवर्गो । धनेन वचनेन यतमानः ॥ ३४ ॥ तदपि प्रवर्धमाने । मृत्युभये चालितः स धर्मेण ॥ वासकमेकं कुरुते । दिवि जीवो नृभवमेति पुनः ॥ ३५ ॥ सार्थो गणस्तदीशः । सुगुरुर्दीक्षा च वेषपरिवर्तः ॥ उपदेशास्तच्छिक्षा । रागद्वेषौ पथि व्याघ्रौ ॥ ३६ ॥ वार्याः प्रशमादीनां । दवादयो येऽत्र ते किल कषायाः ॥ विषयाः सत्रायवनं । परीषहाश्चौरसेना च ॥ ३७ ॥ मोहाऽरण्यं मोक्षः । पुरमिष्टं विद्धि तन्वि तेनाहं ॥ देहकुटुंबस्नेहं । विहाय निषिषेविषे धर्मं ॥ ३८ ॥ ऊचे च ततो जयश्री—रेवमलीकैः स्वचित्तसंकल्पैः ॥ प्रिय ऋजुहृदयाः कस्मा—दस्मान् वंचयसि च-

ट्ट इव ॥ ३९ ॥ ग्रामे कौशिकनामनि । चट्टोऽजनि तापसो महामूर्खः ॥ भस्मोद्धूलननिरत-
स्य । यस्य वाचोऽपि किल रुद्धाः ॥ ४० ॥ मोदकनिकरनिरुद्धं । स्वप्ने स्वमठं निरीक्ष्य बुद्धेन
॥ पशुजित्वरजक्मिानः । प्रातस्तेनोचिरे शिष्याः ॥ ४१ ॥ वत्साः शृणुत जनानां । गृहेषु व-
यमाप्नुमः सदा भिक्षां ॥ न तु सामग्रीन्यूनै—रस्माभिर्नोजितः कोऽपि ॥ ४२ ॥ संजातश-
क्तिरद्य । स्वैरं संतर्प्य लोकमखिलमपि ॥ पंक्तौ निवेषयिष्ये । स्वं बलिकर्णाद्युदाराणां ॥४३॥
तद्रचयत शुचि मंरुप—माह्वयत द्रुतमशेषमपि लोकं ॥ इति तेनोक्ताः शिष्या । वितेनिरे
तत्तथा सर्वं ॥ ४४ ॥ अथ विस्मयादकस्मा—न्मिलिते लोके क्रमान्निषण्णे च ॥ पुरतः स्थाले-
षु निवे—शितेषु शिष्यान् जगौ चट्टः ॥ ४५ ॥ हंहो विमृश्यते किं । मठोदरान्मोदकान् स-
मानयत ॥ तर्पयत कंगुकोद्भव—धान्यरसज्ञं जनमेतं ॥ ४६ ॥ तेऽपि विवृत्य द्वारं । परमोद-
कशून्यमंतरैक्षंत ॥ तं जीर्णकूपमिव मठ—मेतद्गुरवे निजगदुश्च ॥ ४७ ॥ चट्टः सशून्यांगं ।
जगाद रे मूर्खशेखराः स्वपित ॥ येनैतानीक्षध्वे । प्रष्टाः स्वप्ने मयाप्येते ॥ ४८ ॥ श्रुत्वेति ज-
नाः कृत्वा । कलकलमुत्तालतालदानेन ॥ निजसद्म ययुर्मुक्त्वा । मोदकमृद्धिं बुभुजिरे च ॥

॥ ४९ ॥ तं स्वमतिशिल्पिकल्पित—भोजनदानाद्यथा जहास जनः ॥ तद्वद्लीकसुखाशा-
स्तन्वंस्त्वमपि प्रज्ञो माभूः ॥ ५० ॥ जंबूरवदहयिते । किं त्वां कलुषयति विषतृष्णेयं ॥ स्मर-
ति न किं ते गर्त्ता—धकूपवासव्यथा विदुषि ॥ ५१ ॥ त्रस्यंति त्रिदशा अपि । यस्मात्तं ग-
र्त्तकूपमुन्मुच्य ॥ किं तत्र पुनः पिरससि । तुच्छमतिः स इव ललितांगः ॥ ५२ ॥ सुमनःश्रेणी-
सारं । पुरमस्ति वसंतवद्वसंतपुरं ॥ चित्रं यत्र न गोपति—कराः कठोरत्वमभजंत ॥ ५३ ॥
निशितायुधरसिको युधि । शतायुधस्तत्र समभवद्भूपः ॥ तस्य वधूर्नवयौवन—बलदुर्ललिता
ललितदेवी ॥ ५४ ॥ वातायनस्थिता सा । कदाचिदैक्षिष्ट मदनमिव सांगं ॥ ललितांगं नग-
रांतः । समुद्रदत्तेभ्यकुलतिलकं ॥ ५५ ॥ दुर्बलगवीव पंके । तद्दृष्टिस्तस्य वर्ष्मणि निमग्ना ॥
अज्ञायींगितविज्ञा—नचतुरया चतुरिकासख्या ॥ ५६ ॥ सरसां सखायां ता—मालोक्य
चिरं स्थितो युवा सोऽपि ॥ मरुपांथः सरसीव । सहकारलतामिवान्यभृतः ॥ ५७ ॥ वनमा-
नंच कदाचन । विलोकितुं कौमुदीमहं नृपतिः ॥ तस्थौ लब्धावसरा । शिरोर्त्तिदंभेन राज्ञी
च ॥ ५८ ॥ आनीतः सोऽपि युवा । कामप्रतिमाछलेन चतुरिकया ॥ चिरविरहतापममुच—

राज्ञीतनुसरसि रममाणः ॥ ५९ ॥ इति लुलिते ललितांगे—ऽत्र सौविदैः कोविदैर्मनाक् चकितैः ॥ ऊचे कृतवनकेलि—स्तदैव नृपतिः समायातः ॥ ६० ॥ दयिता पतिव्रता ते । वयमपि न बलदृशः प्रजापाल ॥ परमंतःपुरमीक्षितु—मर्हसि ददज्जयमस्मासु ॥ ६१ ॥ निःशब्दं सिंह इवा—ययौ तदांतःपुरं महीनाथः ॥ द्वारे च दत्तदृष्टि—र्न्यवेदयच्चतुरिका राज्यै ॥ ॥ ६२ ॥ गतकामा कामपि श्रिय—मंतर्दधती सखीयुता राज्ञी ॥ चिक्षेप दृशमिवद त—मशुचिकूपे च जालमार्गेण ॥ ६३ ॥ कृमिकुलसंकुलचिकिल—पिच्छलमुत्तालवमनलालौघं ॥ प्राप्तः स कूपगर्त्तं । ययौ तुलामशुचिकीटस्य ॥ ६४ ॥ प्रतिदिवसमसौ राज्ञ्या । भुक्तविमुक्तेन भक्तनीरेण ॥ स्वस्य प्राणाधारं । कुक्कुर इव कल्पयामास ॥ ६५ ॥ भोक्ष्ये भोगानस्मा—न्मलकूपान्निर्गतो न पुनरेषः ॥ विमृशन्निति नारकव—ज्जिजीव स च जीवितोद्विग्नः ॥ ६६ ॥ प्रावृषि जलधरसलिलैः ॥ प्रवाह्य मलकूपतस्ततोऽनायि ॥ कचवर इव नगराद्बहि—रपौरुषः स परिखामध्यं ॥ ६७ ॥ सलिलोच्छूनशरीरः । क्षिप्तः परिखातटे स वीचिभिः ॥ तत्रागतया धात्र्या । ददृशे सत्कर्मदशयेव ॥ ६८ ॥ ज्ञातः स तदैव तया । नीतः स्वगृहं स हंस इव कम-

लं ॥ अन्नवत्पुनर्नवीनः । स्नानाद्यैर्लालितो ललितः ॥ ६९ ॥ तं पुष्टांगं दृष्ट्वा । कदापि राज्ञी स्मरातुरा सैव ॥ यद्याह्वयति तदा किं । युक्तं गंतुं निषेद्धुं वा ॥ ७० ॥ जानाति मंदधीरपि । न तस्य तत्रोचितं पुनर्गमनं ॥ इति ताभिः सममुक्ते । जगाद जंबूः कथातत्वं ॥ ७१ ॥ योऽयं किल ललितांगः । स ज्ञेयो भोगलोलुपः प्राणी ॥ विषयसुखं मुखमधुरं । नृपांगनाभोगसममत्र ॥ ७२ ॥ कूपे वासो गर्भे । स्थितिर्विघसभोजनं च यत्तस्य ॥ जननीभुक्तान्नोदक—रसनिःस्पंदेन सा वृत्तिः ॥ ७३ ॥ यत्कूपतलात्कथमपि । निर्गमनं जन्म तत्परिज्ञेयं ॥ यत्परिखावस्थानं । वासोऽसौ सूतिकाभवने ॥ ७४ ॥ या धात्री सा विश्वो—पष्टंभकरी सुकर्मणां स्फातिः ॥ परिपाल्य यथा क्रियते । जीवोऽयं यौवने सुभगः ॥ ७५ ॥ तन्नामगर्भकूपा—वस्थानविडंबनाः स्मरंस्तास्ताः ॥ विषयोपभोगगृद्धिं । सचेतनः कः पुनः कुरुते ॥ ७६ ॥ सति संयमपीयूषे । विषयेषु रमेत कः सुधीरत्र ॥ क्षारोदकमिव भुक्ता । प्रत्यूत जनयंति ये तृष्णां ॥ ॥ ७७ ॥ तस्माद् व्रतस्य विषय—व्रातस्य विपाकमाकलय्य हृदि ॥ यस्मादायति दक्षं । तदेव सेवध्वमिद्धधियः ॥ ७८ ॥ तेन प्रतिबोधिता इति । ताः प्रोचुः प्रिय जितं जितं भवता ॥ य-

दिवा दिवांधवध्वः । स्पर्धते किं दिनकरेण ॥ ७ए ॥ आश्रीयत यः पंथा—स्त्वयास्माभिरपि हि स श्रेयः ॥ न क्वचन पृथक्पंथाः । शकटस्य शाकटिकानां च ॥ ७० ॥ मुक्त्वास्मानष्टौ द्रुत—मेकामेकांततो वुवूर्षसि यां ॥ तामद्य सपत्नीमपि । वयं दिदृक्षामहे मुक्तिं ॥ ७१ ॥ अबला मंथरगतय—स्त्वामेकं शरणमभ्युपेताः स्मः ॥ तद्ग्राह्याः शिवमार्गे । प्रतीक्ष्य पादाः प्रतीक्ष्य वयं ॥ ७२ ॥ प्रव्रजोऽभ्यधत्त जंबू—कुमार सुकुमार मारसारहर ॥ वीक्ष्येदं तव चरितं । चौरा अपि चमदकुर्म वयं ॥ ७३ ॥ सबला गजस्ततोऽपि । क्षुधा ततः कणगणस्ततोऽपि शीलाः ॥ यत्पुत्रबलादबला—स्तं सकलं शकलयंति किल ॥ ७४ ॥ लोहं ततस्ततोऽग्नि—स्ततोऽपि मेघस्ततोऽपि घनपवनः ॥ तस्माच्च दीर्घजीह्व—स्ततो गुरुत्मांस्ततो विष्णुः ॥ ७५ ॥ तस्माच्चक्री तस्मात् । त्रिदशा इंद्रस्ततस्ततः कामः ॥ तं च जयतस्तव भुज—स्थामोऽपि मिमीमहे केन ॥ ७६ ॥ तव सुरसरितेव गिरा । ममापि खलु विषयतृष्णया गलितं ॥ शांतं च मोहरजसा । सहसा हंसेन मुदितं च ॥ ७७ ॥ अहमपि पृष्ट्वा बंधू—नादास्ये व्रतमितीरयन् प्रभवः ॥ मा प्रतिबंधं कार्षी—रिति तेनोक्तश्च निरियाय ॥७७॥ जंबूरिव मोहज्वरं । हरंस्तमोऽ-

थाहिमांशुरुदियाय ॥ व्रतनिश्चयमज्ञासिषु— रस्य श्वशुराश्च पितरौ च ॥ ७९ ॥ बाल्येऽपि
तद्व्रतास्थां । निरीक्ष्य तेऽपि व्रतार्थमयतंत ॥ न हि वर्त्मैकर्षके स—त्येकस्मिन् दुर्लक्षः सा-
र्थः ॥ ८० ॥ स्नपितस्ततः स रेजे । स्वर्णमयैः स्वर्णसांभृतैः कलशैः ॥ जितमदनत्वाद्भरनट—
जातौ जाताभिषेक इव ॥ ८१ ॥ सबलांतरंगरिपुबल—मस्यैव बले न मम सुजेयमिति ॥
निजदेहं वीरमिव । व्यलेपयच्चंदनेनासौ ॥ ८२ ॥ अंतर्ज्वलतो ध्याना—नलस्य तेजोभिरिव
बहिः स्फुटितैः ॥ भूरिमयैराभरणै—र्भूरिभिरभितो व्यभूष्यत सः ॥ ८३ ॥ कलपरिमलमिल-
दलिकुल—कलकलवाचालमालभारी सः ॥ विरराज सह वहन्निव । जितमन्मथमुक्तश-
स्त्राणि ॥ ८४ ॥ हंतुमिव कटुविपाक—श्वपाकमिव पापपटलमालिन्यं ॥ क्षीरोदधिकल्लोलै—
र्वासोभिरशोभि तस्य वपुः ॥ ८५ ॥ शिवनगरगमनविघ्नं । साधयतो मेऽस्तु मंगलमितीव
॥ आनर्च स जिनराजं । निर्व्याजं तत्तदुपहारैः ॥ ८६ ॥ सर्वैः श्रिया विमुच्येत । तां
च मोक्ष्याम्यहं पुनः प्रसभं ॥ अव्ययदिति धनमखिलं । स दानवीरो नवक्षेत्र्यां ॥ ८७ ॥
शिवगृहसोपानमिवा—नुपमानं याप्ययामनारूढं ॥ तमवेष्टयदेकमनाः । क्षणातिपितृश्वशुरव-

गोंऽपि ॥ ९८ ॥ मूर्तस्येव चरित्रस्य । वामे पार्श्वे धृतासनास्तस्य ॥ अष्टौ प्रवचनमातर । इ-
व व्यराजंत दयितास्ताः ॥ ९९ ॥ मदने जिते तदनुगै—र्घनैः सविद्युद्भिरासिषेवे सः ॥ नी-
तैरिव कांचन-मयदंडश्रीकरीमिषतः ॥ १०० ॥ नाटकपाटप्रकटित—पटुपटहध्वानबधिरित-
दिगंतं ॥ रुक्मुणानाहतनाम्ना । कृतनिःक्रमणोत्सवाभोगः ॥ १ ॥ शुश्रुम वयं पुराणा । न पु-
राणादिष्वपीदृशं क्वचन ॥ इति पौरगिरः शृण्वन् । बंदिभिरभिवर्ण्यकामजयः ॥ २ ॥ कनकै-
रर्थिषु वर्षन् । शृण्वन्नाशीर्वचांसि पौरीणां ॥ तद्वनमवाप जंबू—र्यत्रास्ते श्रीसुधर्मगुरुः ॥३॥
तच्चरित्रं विश्वत्रय—विलक्षणं वीक्ष्य यौवने तस्य ॥ अधुनत सविस्मया इव । मौलीन्मरुदी-
रितास्तरवः ॥ ४ ॥ निजनिजनीडनिलीना—स्तच्चरितं भावयंत इव मनसा ॥ विहगा अपि
मौनजुषः । प्रीत्या ददृशुस्तमायांतं ॥ ५ ॥ निर्मुक्तयाप्ययानः । सपरिकरो व्रतविलंबभीरुरथ ॥
दत्वा प्रदक्षिणात्रय—मभिनम्य गुरुं जगौ जंबूः ॥ ६ ॥ रत्नाकरं भवंतं । दौर्गत्यभयादहं प्र-
पन्नोऽस्मि ॥ चारित्रं चिंतामणि—मिव दत्वा तत्प्रसीद प्रभो ॥ ७ ॥ जिनमतसरसि रसा-
ढ्यं । पिबतः समयामृतं सतृष्णस्य ॥ मम तव पादच्छाया । छायाद्भवसंभवं तापं ॥ ८ ॥ प्रा-

ग्वत्तदापि मुक्ता — भरणं विकचाननं श्रुतार्थरसं ॥ सपरिकरं गुरुरंतः—प्रमदी तमदीक्षयन्मं-
क्षु ॥ ९ ॥ मृतयोः पित्रोर्भक्ताः । सुता अभक्ताश्च जीवतोः प्रायः ॥ स्वस्य शमराज्यहेतुं ।
शशंसतुस्तं ततः पितरौ ॥ १० ॥ प्रायः श्वशुरकुलश्री—सरितां ग्रीष्मा तपो हि जामाता ॥
दत्ते नः शमनिधिमय—मिति स श्वशुरानमोदयत ॥ ११ ॥ भर्ताभरणैर्भार्या । भवोदधौ भा-
रयन्निमज्जयति ॥ तारयते नः पुनरय—मिति जहर्षुस्तस्य पत्न्योऽपि ॥ १२ ॥ सायं दीपद्यु-
तिरिव । घनवृष्टौ वाहिनीप्रवाह इव ॥ वरभुवि वृक्षांकुर इव । तस्य तदाप्यायि संवेगः ॥
॥ १३ ॥ सततमनंगसंगत—माचक्रामोचितं स मोहनृपं ॥ आसीद्गुरुप्रसत्त्या । स हि स-
बलो द्वादशांगेषु ॥ १४ ॥ स चतुर्दशभिः पूर्वैः । रत्नैरिव निधिसमैश्च नवतत्त्वैः ॥ संयुक्तो यु-
क्तमधात् । क्रमाभृतां चक्रवर्तित्वं ॥ १५ ॥ प्रभवः पृष्टस्वजनो—ऽन्यदा प्रवव्राज गणधरमु-
पेत्य ॥ शिष्यत्वेन स तेना—प्यदायि जंबूमुनींद्राय ॥ १६ ॥ श्रीवीरे मोक्षं गते । विंशत्य-
ब्दैः सुधर्मगणराजः ॥ निश्चितमिव शिवश्रिय—मभजद्दत्वा गणं तस्मै ॥ १७ ॥ जंबूरतीत्य
वीर—प्रभुनिर्वाणात्समाश्चतुःषष्टिं ॥ प्रभवं श्रुतकेवलिनं । चक्रे गणभारधौरेयं ॥ १८ ॥ स-

मये त्रिजगज्जनता—पनतांह्नियुगस्य केवलज्ञानं ॥ निर्वृत्तिपथप्रदीयं । तस्योन्नेदे तमोन्नेदि ॥ १ए ॥ सत्यं स्याद्गुणिजां परीक्षणकला जंबूकुमारोऽत्यज—ज्जाया अष्ट मनोहरा अपि बहिर्यन्मुक्तिकांताकृते ॥ चक्रे सापि कृतज्ञतोचितमिदं प्राप्यैकचित्तं वरं । नान्यं कंचन जारतं नरमसौ वव्रे यतस्तद्दिनात् ॥ २० ॥ इति चतुर्थव्रते श्रीजंबूस्वामिकथा समाप्ता. ॥ ननु जवतु दृढहृदयत्वात्पुरुषाणां सौशील्यं, स्त्रियस्तु तुच्छहृदयाश्चपलस्वन्नावाः पुरुषपराधीनाश्च, तासु कथं शीललीलायितमुन्मीलतीत्याशंक्याह—

॥ मूलम् ॥—नारीर्जवि अणेगा । सीलगुणेणं जयम्मि विख्काया ॥ जासिं चरित्तसवणे । मुणिणो विमणे चमक्कंति ॥ ५१ ॥ व्याख्या—नार्यःस्त्रियोऽप्यनेकाः सीताद्रौपद्यादयः शीलगुणेन जगति विख्याताः प्रसिद्धिपात्रं जाताः, यासां दशमुखप्रमुखदुर्दांतपुरुषपातनात्मकस्य चरित्रस्य श्रवणे सत्यास्तां सामान्यलोकः, मुनयोऽनगारिणोऽपि मनसि चमत्क्रियंते, चमत्कारचिह्नं च प्रणामादिकमपि कुर्वंति. यदाहुः—अज्जार्ज बंन्निसुंदरि—राइमईचंदणापमुरकार्ज ॥ कालत्तएवि जार्ज । तार्जवि नमामि नावेणं ॥ १ ॥ इह यद्यपि धर्मः पुरुषप्रन्नवः,

ग्रंथाश्च पुरुषकर्तृका:, पुरुषाणां च स्त्रियः पाशभूता इति व्यवहारनयमवलंमानैः प्रायः परमर्षिभिरपि प्रमदा निंदिता एव, यदाहुः—सोयसरी दुरियदरी। कवडकुडी महिलिया किलेसकरी॥ वइरिविरोअणअरणी। दुक्खखणी सुक्खपडिवक्खा ॥ १॥ तथापि निश्चयनयेन विचार्यमाणे स्तुतिनिंदयोर्न पुरुषत्वं स्त्रीत्वं वा हेतुत्वं प्रपद्यते, सौशील्यदौःशील्ययोरेव तन्निबंधनत्वादित्येतदेवाह—

॥ मूलम् ॥—इत्थिं वा पुरिसं वा। निस्संकं नमसु सीलगुणपुट्ठं॥ इत्थिं वा पुरिसं वा। चयसु लहुं सीलपब्भट्ठं॥ ५६॥ व्याख्या—स्पष्टा.

॥ मूलम् ॥—पंडुत्त पंडत्तं। दोहग्गमरुवया य अबलत्तं। दुस्सीलयालयाए। इणमो कुसुमं फलं नरउ॥ ५७॥ व्याख्या—पांडुत्वं कुष्टं पांडुरोगो वा, पंडत्वं नपुंसकत्वं, शेषं सुबोधं. अथ सौशील्यस्य फलमाह—

॥ मूलम् ॥—आरुग्गं सोहग्गं। संघयणं रूवमाउबलमउलं॥ अन्नंपि किं अदिज्जं। सीलव्वयकप्परुक्खस्स॥ ५८॥ व्याख्या—व्यक्तार्था.

अत्रापि व्रते पंचातिचारा हेयास्तद्यथा—१ इत्वरपरिगृहीतागमनं, २ अपरिगृहीतागमनं, ३ अनंगक्रीडा ४ परविवाहकरणं, ५ कामे तीव्राभिलाषश्च. एषां चायं विषयविभागः—परदारविवज्जिणो पंच। हुंति तिन्नि य सदारसंतुट्ठे॥ इत्थिइ तिन्नि पंच य। भंगविगप्पेहिं अइयारा।१। तत्रेत्वरं स्वल्पकालं परिगृहीता भाटीदानेन स्वीकृता या केनचित्कापि वेश्या तस्यां गमनं परदारवर्जकस्यातिचारः, तस्यास्तदानीमपरायत्तत्वाद्वेश्यामेवैतां सेवेऽहं न परदारानिति स्वाभिप्रायाच्च भंगाभंगरूपत्वात्. अपरिगृहीताऽनाथा कुलांगना तस्यामपि गमनं लोके तस्याः परस्त्रीत्वेन रूढत्वात् स्वभर्त्रादेरभावेन तत्कल्पनयाऽपरदारत्वात्. एतौ च द्वावपि स्वदारसंतोषिणो नातिचारौ, किंतु व्रतभंगावेव, स्वदारान् विना सर्वस्या अपि स्त्रियस्तेन प्रत्याख्यातत्वात्. आवश्यकाभिप्रायश्चैवं-- इत्वरं कियंतमपि कालं परिगृहीता भाटीं दत्वा स्वीकृता वेश्या तस्यां गमनं, अयं चेमां वेश्यामपि द्रव्येण स्वदारीकृत्य भुंजानोऽस्तीति व्रतसापेक्षत्वादित्वरपरिगृहाच्च, वस्तुतोऽस्वदारत्वाद्भंगाभंगरूपः स्वदारसंतोषिणोऽतिचारः. अपरिगृहीता वेश्याऽगृहीतान्यभाटिः कुलांगना वाऽनाथा प्रोषितभर्तृका तस्यां गमनं, अयं चानाभोगादिनातिक्र-

मादिना वा, तस्यैवातिचारः. अथवा या पूर्वं व्रतप्रतिपत्तिकाले भार्याभूत्, पश्चात्परित्यक्ता
गणिकात्वेन वर्तते, सैषा नियमं गृह्णतो मम मुत्कलासीदिति तां गच्छतो ममातिचारः, त-
स्मात्स्वदारसंतुष्टस्यैवैतावतिचारौ, न परदारवर्जिनः. यत इत्वरपरिगृहीतागृहीतयोर्वेश्यात्वे-
नानाथकुलांगनायास्त्वनाथतयैवापरदारत्वात्, शेषास्तु द्वयोरपि. तथा च सूत्रं—' सदार-
संतोसितस्स इमे पंच अइयारा जाणियव्वा न समायरियव्वेत्ति ' अंगं मैथुनापेक्षया योनिर्मे-
हनं च, तद्व्यतिरिक्तान्यंगानि कुचकक्ष्योरुमुखादीनि, तेषु क्रीडानंगक्रीडा, एषा द्वयोऽप्य-
तिचाररूपा. तथाहि—स्वदारसंतोषिणः स्वकलत्रे तदितरस्य वेश्यास्वकलत्रयोरपि यदनंग-
क्रीडनं तत्साक्षादप्रत्याख्यातमपि न कार्यं. यतोऽसौ महापापत्वादब्रह्मसेवां तित्यक्षुरपि यदा
वेदोदयात्तां त्यक्तुं न शक्नोति तदा यापनामात्रार्थं स्वदारसंतोषादि प्रतिपद्यते, मैथुनमात्रे-
ण यापनायाः संभवादनंगरतमर्थतः प्रत्याख्यातमेव. यद्वा सुरतमेव व्रतविषय इति स्वबुद्ध्या
तत्परिहरन् स्वदारसंतोषी वेश्यादौ, परदारवर्जकस्तु परदारेष्वालिंगनस्तनमर्दनाधरदंशना-
दिरूपामनंगक्रीडां कुर्वन् कथंचिदेवातिचरति व्रतं व्रतसापेक्षत्वात्. परेषां स्वापत्यव्यतिरि-

कानां कन्याफललिप्सया स्नेहसंबंधादिना वा विवाहस्य विधानं परविवाहकरणं, अत्र हि करणवत्परविवाहेन मैथुनस्य निरर्थकं प्रवर्तनमपि महापापायेति व्रतभंगत्वाद्विवाह एवायं मया क्रियते न परदारादिषु मैथुनमिति व्रतसापेक्षत्वाच्चातिचारता. कामे कामोदयजन्ये मैथुने तीव्राभिलाषोऽत्यंतगृद्धिः, अयं च व्रतप्रतिपत्तौ साक्षादप्रत्याख्यातोऽप्यनंगक्रीडावदर्थतः प्रत्याख्यात एव, वेदोदययापनामात्रार्थमेव तत्प्रवृत्तेः, यस्तु वाजीकरणादिभिः प्रयोगैरधिकं काममुत्पाद्य सततं सुरतसुखमिच्छति स वस्तुतो व्रतमतिचरति, न हि सकर्णः पामामुत्पाद्य कंडूभवं सुखमिच्छति ततस्तत्करणाद् व्रतसापेक्षत्वाच्चायमतिचारः. स्त्रियास्तु स्वपुरुषसंतोषपरपुरुषवर्जनयोर्न भेदः स्वपुरुषव्यतिरेकेणान्येषां सर्वेषां परपुरुषत्वात्. ततोऽनंगक्रीडादयस्त्रय एवातिचारा स्त्रियाः संभवंति, अथवा पंचापि भवंति. आद्यस्तावद्यदा स्वकीयपतिः स्वपत्न्या वारकदिने परिगृहीतो भवति, तदा सपत्नीवारकमुल्लंघ्य तं परिभुंजानायाः, द्वितीयस्त्वतिक्रमादिना परपुरुषमभिसरंत्या ज्ञेयः, अतिक्रमाद्यर्थस्त्वाधाकर्मवत्. यथा— आहाकम्मामंतण । पडिसुणमाणे अइक्कमो होइ ॥ पयभेयाइ वइक्कमो । गहिए तइएयरो गिलिए ॥ १ ॥

इति गाथानुसारेणेहापि योज्यः, यद्वा द्रौपद्या इव कस्याश्चिद्बहुपतिसंभवे यस्मिन् दिने यः परिगृहीतस्तं परित्यज्यान्यमपरिगृहीतमभिगच्छंत्या द्वितीय इति. अत्र भावनागाथा—चिंतेयव्वं च नमो। तेसिं तिविहेण जेहिमब्बंभं ॥ चत्तं अहम्ममूलं। मूलं भवगब्भवासाणं ॥१॥ उक्तं सदृष्टांतं चतुर्थव्रतं. ॥ अथ पंचमं व्रतमाह—

॥ मूलम् ॥—गेही गेहिमणंतं। परिहरिय परिग्गहे नवविहम्मि ॥ पंचमवए पमाणं। करिज्ज इच्छाणुमाणेणं ॥ ५९ ॥ व्याख्या—पंचमे परिग्रहविरत्याख्ये व्रते गेही गृहस्थोऽनंतां गृद्धिमभिलाषात्मिकां परिहृत्य नवविधेऽपि परिग्रहे प्रमाणमियत्तां कुर्यात्, इदमेतावन्मम मुत्कलमिति. परिग्रहश्च क्षेत्रवास्तुहिरण्यसुवर्णधनधान्यद्विपदचतुष्पदकुप्यभेदान्नवधा, तत्र क्षेत्रं सेतुकेतूभयभेदात् त्रिधा, तत्र सेतुक्षेत्रमरघट्टादिसेक्यं, केतुक्षेत्रं पुनराकाशोदकनिष्पाद्यं, उभयक्षेत्रं तु तदुभयहेतुकमिति. वास्त्वगारं ग्रामनगरादि च, तत्रागारं खातोच्छ्रिततदुभयभेदात् त्रिधा, तत्र खातं भूमिगृहादि, उच्छ्रितं प्रासादादि, तदुभयं भूमिगृहोपरिस्थः प्रासादः. हिरण्यं रजतं, सुवर्णं प्रसिद्धं, धनं गणिमादिभेदाच्चतुर्धा, तत्र गणिमं पूग्यादि,

धरिमं गुडादि, मेयं घृतादि, परिछेद्यं रत्नादि, धान्यं व्रीह्यादि, द्विपदं पुत्रकलत्रदासशुकसारिकादि, चतुष्पदं गावश्वादि, कुप्यमासनशयनकुंतखङ्गस्थालकच्चोलादिगृहोपस्करः. ननु कथं प्रमाणं कुर्यात्? इछानुमानेन स्वकल्पनानुरोधेन, अयं भावः—यदीछानिवृत्तिः स्यात्तदा नियमकरणे यावान् परिग्रहः सत्तायामस्ति ततोऽप्यूनं कुर्यात्, शेषं धर्मपदे नियुंजीत, यद्वा सत्तानुमानेन नियमं गृह्णीयादानंदादिवत्. यदि पुनर्नास्तीछानिरोधस्तदा सत्ताऽप्यधिकं द्विगुणं चतुर्गुणं वा मुत्कलीकृत्य शेषं नियमयेत्. अत्राह परः—नन्वसत्परिग्रहनिषेधेन योऽयं व्रतांगीकारः स प्रस्तमरमरुमरीचिकावारिवीचिभिः स्नानमिव न कस्य हास्यास्पदं स्यादित्यत्रोच्यते, नैवं भाग्ययोगेन कालांतरे इछानुरूपक्षेत्रादिसंपत्तावप्यधिकस्यारंभस्याभावात्, असंपत्तौ वेछानंत्यनिरोधाच्चास्त्येव व्रतस्वीकारः सफलः. यदाह—परिमियसुवसेवंतो । अपरिमियमणंतयं परिहरंतो ॥ पावइ परंमि लोए। अपरिमियमणंतयं सुक्खं ॥१॥ न च वाच्यं—किमनेन परिग्रहपरिमाणेन? इछावधिवस्तुलाभेन स्वयमेवेछा शमिष्यति भोजनेन बुभुक्षावदित्यत्राह—

॥ मूलम् ॥—जह जह लहेइ रिद्धिं । तह तह लोज्ञोवि वड्ढइ बहुज्ञे ॥ लहिऊण दारुज्ञारं । किं अग्गी कहवि विज्झाइ ॥ ६० ॥ व्याख्या—सुगमा. अथ परिग्रहस्य सकलक्लेशमूलतामाह—

॥ मूलम् ॥—सेवंते पहुं लंघं—ति सायरं सायरं जमंति जुवं ॥ विवरं विसंति निवसं—ति पिज्ञवणे परिग्गहे निरया ॥ ६१ ॥ व्याख्या—सेवंते प्रजुं, लंघंते सागरं सादरं यथा जवति, जुवं ज्रमंति, सिद्धरसाद्यर्थं विवरं गिरिकंदरं विशंति, मंत्रादिसिद्धये पितृवने श्मशाने निवसंति परिग्रहे द्रव्यादिसंचये निरताः, यत एवं दुःखहेतुः परिग्रहस्ततः संतोष एव श्रेयानित्याह—

॥ मूलम् ॥—संतोसगुणेण अकिं-चणोवि इंदाहियं सुहं लहइ॥ इंद सवि रिद्धिं पाविऊण जणोच्चिय अतुट्ठो ॥ ६२ ॥ व्याख्या—सुबोधा. अन्यत्राप्युक्तं—ऊर्ध्वमूर्ध्वमवलोकमान इंद्रोऽपि दरिद्रायत इति. अथास्य व्रतस्यानादृतस्यादृतस्य च दृष्टांतगर्जं फलमाह—

॥ मूलम् ॥—आयासजयअवीसास—माइयं बहुपरिग्गहे दुःखं ॥ संतोसम्मि उ अ-

स्कय—सुखं कपिलस्स पच्चक्खं ॥ ६३ ॥ व्याख्या—आयासः कृषिवाणिज्यादिः, भयं राजचौराद्याशंका, अविश्वासो मित्रादीनामप्यप्रत्यय इत्यादिकं आदिशब्दाच्चिंतौत्सुक्यगोत्रकलहादिकं बहु प्रभूतं परिग्रहे सति दुःखं, संतोषे तु तद्विपक्षभूतेऽक्षयमनुपचारितत्वादविनश्वरं सौख्यं भवति, इदं परिग्रहाद् दुःखं संतोषाच्च सौख्यं कपिलस्य प्रत्यक्षं बभूवेति गाथार्थः. भावार्थस्तु कथानकादवसेयस्तच्चेदं—

अस्ति पूः स्वस्तिपुराढ्या । कौशांबीति महीतले ॥ यत्र ध्वजेषु चापल्यं । विन्यस्य श्रीः स्थिराभवत् ॥ १ ॥ अन्वर्थनामा तत्राभू–ज्जितशत्रुर्धराधवः ॥ खड्गधाराजलैर्वृद्धो । यत्प्रतापानलोऽद्भुतः ॥ २ ॥ पुरोधाः काश्यपस्तस्य । विद्यावारिधिमंदरः ॥ शरादिंदुयशा जाया । यशा तस्याकृशा गुणैः ॥ ३ ॥ कपिलस्तनयोऽनस्त–नयोऽभ्यस्तदयोऽनयोः ॥ ययौ यस्मिन् शिशावेव । देवभुवं पुरोहितः ॥ ४ ॥ भूशक्रोऽथ नवं चक्रे । दुर्निरोधः पुरोधसं ॥ तद् ज्ञात्वारुदद्दश्रौघ—प्लुतनेत्रयुगा यशा ॥ ५ ॥ व्यक्तसंज्ञोऽन्यदाप्राक्षी–त्प्रणम्य कपिलो यशां ॥ मातः किमेतदारेभे–ऽनुदिनं रोदनं त्वया ॥ ६ ॥ सापि तं गाढमालिंग्य । भग्गदगद्गदस्वरा ॥

न्धुंबनं वत्स जूयास—मस्याहं वचसस्तव ॥ ७ ॥ जात द्विजातयेऽन्यस्मै । भूपोऽदात्त्वत्पितुः पदं ॥ त्वं च द्विधापि बालोऽसि । निःपुण्याहं ब्रवीमि किं ॥ ८ ॥ हयारूढं श्रिया प्रौढ—ममुं वीक्ष्ये यदा तदा ॥ दुर्निवारोऽश्रुपूरो मे । प्लावयत्येव लोचने ॥ ए ॥ जिहीर्षसि मदाधिं चे—त्तद्गृहाणाखिलाः कलाः ॥ अन्वयं नानुवर्तंते । भूपाला हि कलाप्रियाः ॥ १० ॥ परं पुरोहितस्यास्य । जयान्नाध्यापयिष्यति ॥ इह त्वां कोऽपि तज्जब । श्रावस्तीमचिरात्पुरीं ॥ ॥ ११ ॥ तत्रास्ति त्वत्पितुर्मित्र—मिंद्रदत्ताजिधो द्विजः ॥ स त्वां सत्वाधिकाशेषं । शास्त्रौघं ग्राहयिष्यति ॥ १२ ॥ मातुः शिक्षामिति प्राप्य । मंक्षु बालश्चचाल सः ॥ कदापि यज्ञविष्याणां । न लक्ष्मीर्नापि जारती ॥१३॥ प्राप्तस्तां नगरीमिंद्र—दत्ताय मिलितो मुदा ॥ न्यवेदयदयं सर्वं । स्वात्मागमनकारणं ॥ १४ ॥ सोप्यालिंग्य तमाचष्ट । धीर सुंदरधीरसि ॥ त्वया चिरोत्कंठितो य—त्प्रीणितोऽस्मि स्वदर्शनात् ॥ १५ ॥ एकात्मनोरिवापश्यन् । काश्यपस्य ममापि च ॥ जेदमत्राखिला विद्याः । पठ मा बठरो जव ॥ १६ ॥ संति सर्वे श्रुताम्नायाः । संति मे पुस्तकान्यपि ॥ पुनस्तन्नास्ति यद्वत्स । दीयते जोजनक्षणे ॥ १७ ॥ विना वल्गां प्रगल्जा-

पि। प्रतिभा याति कुंठतां ॥ वारिसेकं विना हंत। कियन्नंदति वल्लरी ॥ १७ ॥ कपिलोऽभि-
दधे वृत्तिं। कल्पिष्ये तात भिक्षया ॥ अनाथानां दरिद्राणां। सा हि कल्पलतायते ॥१९॥
उपाध्यायोऽवदद्वत्स। मुंच मुंचैनमाशयं ॥ किं शास्त्राब्धिः प्रतीर्येत। नीरसैर्दैन्यभोजनैः ॥
॥ २० ॥ एहि येन करोमि त्वां। निश्चिंतं भोजनक्षणे ॥ इत्युक्त्वा तं सहादया। सोऽचाली-
न्निजमंदिरात् ॥ २१ ॥ ईभ्यस्य शालिभद्रस्य। रंगतः सदनं गतः ॥ अपठच्चारिविस्तारि—
ध्वनिर्वैदीऋचः स च ॥ २२ ॥ अथाभिगम्यं तं शालि—भद्रोऽभाषत भक्तिभूः ॥ वद त्व-
मागमश्च त्वं। समागमनकारणं ॥ २३ ॥ दद्या विद्यार्थिनेऽमुष्मै। बटवे भोजनं सदा ॥ ते-
नेत्युक्ते दानशीलः। शालिरोमित्यवोचत ॥ २४ ॥ स चेटीं कांचनोवाच। भीरुर्वेलाविलंबतः
हले भूयास्त्वमेवास्य। भोजनैकप्रयोजना ॥ २५ ॥ इंद्रदत्तस्ततः प्रीत—चित्तः स्वस्थानमा-
गतः ॥ तमध्यापयितुं पुत्र—मिवारेभे शुभेऽहनि ॥ २६ ॥ अधीयानः क्रमाद्विद्या—स्थाना-
नि स्थिरधीर्गुरोः ॥ यथेष्टं कपिलः शाले—रालयेऽभुंक्त संततं ॥ २७ ॥ मुक्त्वा सा सर्वकर्मा-
णि। दासी न्यासीकृतानृता ॥ स्नानभोजनसामग्र्या। सुखयामास तं बटुं ॥ २८ ॥ कदा-

चित्कपिलस्यास्यां । किंकर्यां कर्मदोषतः ॥ मर्यादासेतुमुज्झित्य । ववृधे रागसागरः ॥ २९ ॥ रम्यं रूपं चलं चेतो । विक्रियाहेतुर्यौवनं ॥ एवं तस्य त्रिदोषस्य । स्मरव्याधिर्विजृंभते ॥३०॥ पूर्वं दृष्ट्या ततो हास्ये—नाथ वाक्यैर्विकारिभिः ॥ कायेनापि ततश्चैक्य—मभूद्विप्लुतयोस्तयोः ॥ ३१ ॥ चिरेणागमनाल्लोक—मुखाद् ज्ञाततदिंगितं ॥ गुरुं परीप्सयांचक्रे । कपिलो गुपिलोक्तिभिः ॥ ३२ ॥ गुरूक्तिरज्जुबद्धोऽपि । वंशस्थः शिक्षितोऽपि च ॥ कपिलः कपिलोलात्मा । न स्वं चापलमत्यजत् ॥ ३३ ॥ दासीं वीक्ष्यान्यदा शोक—संतापग्लपिताननां ॥ कांते का तेऽद्य पीडेय—मिति पप्रच्छ काश्यपिः ॥ ३४ ॥ साप्यूचे प्रिय दासीनां । पर्वायास्यति संप्रति ॥ दास्यः सर्वाः सश्रृंगाराः । खेलिष्यंति तदा मुदा ॥ ३५ ॥ खेलंती तासु निःस्वाह—मतादृग्वस्त्रभूषणा ॥ हास्यास्पदं भविष्यामि । स्वामिन् हंसीष्विव ढिंकी ॥ ॥ ३६ ॥ तेनाहमस्मि चिंतार्त्ता । यद्वा किं चिंतया मम ॥ यत्त्वं व्रतीव योगीव । सन्यासीवासि निर्धनः ॥ ३७ ॥ निर्धनत्वं हि साभिख्यं । भिक्षूणां न तु गेहिनां ॥ इत्यभिज्ञोऽपि सुस्थोऽसि । नाथ त्वं कस्य कथ्यते ॥ ३८ ॥ सा दासी तं मुदासीन—मुदासीनमपि क्षणात् ॥

शेन क्लेशेन । लप्स्यसे भूधनाढ्यनं ॥ दास्या दास्यसि तत्सर्व—महो ते निर्विवेकता ॥ ६१ ॥ पर्याप्तं चेद्धनं प्राप्तं । भुक्ता भोगाश्च भूरिशः ॥ मेलितं च कुटुंबं वा । किं तदाप्यधिकं तव ॥ ६२ ॥ अनंतवीर्यविज्ञान—खानिः स्वैरविहार्यपि ॥ चेष्ट्या शटितरज्ज्वेव । किं रे पुन्नाग बध्यसे ॥ ६३ ॥ तदर्थस्य स्वशब्दस्य । धनज्ञातिविवर्जनात् ॥ कुरु तृप्तिं यथा तृप्तिं । लभसे लभसेप्सितां ॥६४॥ एवं स चिंतयन् जाति—स्मरः प्रशमितस्मरः ॥ कुर्वन् लोचमसंकोचः । स्वयंबुद्धोऽभवन्मुनिः ॥६५॥ देवतादत्तनेपथ्यः । पुनरागत्य पर्षदं ॥ धर्मलाभाशिषं तत्र—भित्यौच्यत स भूभुजा ॥ ६६ ॥ द्विजराज किमालोचि । लोचः कोऽयं च मूर्धनि ॥ ततः स्वचित्तचापल्यं । प्रकाशयेति जगाद सः ॥ ६७ ॥ यथा लाभस्तथा लोभो । लाभाल्लोभः प्रवर्धते ॥ स्वर्णमाषद्वयीकार्यं । न मे कोट्यापि निष्ठितं ॥ ६८ ॥ सौवर्णीवर्णकोटीर । कोटीरपि गृहाण तत् ॥ इत्युक्ते सत्यसंगेन । भूधवेन यतिर्जगौ ॥ ६९ ॥ स्वर्णस्फात्या ध्रुवं तृष्णा—नदी याति न दीनतां ॥ तपःस्फारतयैवेयं । कदापि यदि जीर्यते ॥ ७० ॥ ततस्त्वमपि संसार—बीजं मुंचं परिग्रहं ॥ आशास्य काश्यपीनाथ—मेवं प्रास्थित काश्यपिः ॥ ७१ ॥ त्यक्तपाश इव न्यं-

कु—मुक्तशंकुरिव द्रुमः ॥ विहृत्य भुवि षण्मासी—मासीत्केवलभृन्मुनिः ॥ ७२ ॥ श्रावस्ती-
राजगृहयो—रंतरा दुस्तरा तदा ॥ आयाता योजनान्यष्टा—दशास्ते गहनाटवी ॥ ७३ ॥
तस्यामिक्कडदासाख्या—श्चौरपंचशती स्थिताः ॥ बलेन बलभद्राद्या । अमुषन् पथिकान्न का-
न् ॥ ७४ ॥ तान् बोधार्हान् परिज्ञाय । व्रजंस्तेनैव वर्त्मना ॥ स स्तेनैरप्रशस्तैनै—रवेष्ट्य-
त यतीश्वरः ॥ ७५ ॥ तत्किंचन मुनेर्नास्ति । यत्तेषामुपयुज्यते ॥ तथापि शकुनं ग्राह्य—मि-
ति चौरास्तमूचिरे ॥ ७६ ॥ नाट्यं कुरु पुरोऽस्माकं । मनोविस्मापकं मुने ॥ सोऽपि प्रोचे नि-
रातोद्यं । नाट्यं किं क्वापि जायते ॥ ७७ ॥ तेऽथ हास्यरसोत्ताला । व्यधुस्तालाभिवादनं ॥
अप्येकाकी स केकीव । विवेकी नृत्यमातनोत् ॥ ७८ ॥ चपले जलबुद्बुदोपमे । नृभवे कर्म
तदस्ति किंचन ॥ सुसमाचरितायतः पुनः । कुगतिं नैव लभे कदाचन ॥ ७९ ॥ अधिगत्य
मनुष्यजन्म यः । किल चिंतामणिवज्जवोदधौ ॥ गमयत्यफलं प्रमादतो । न हि तस्मादपरोऽ-
स्ति बालिशः ॥ ८० ॥ सुखहेतु समस्तमुत्सृज—न्नबुधो दुःखपदेषु रज्यति ॥ अबुधाचरितं
विहाय त—द्भव रे जीव सुखस्य भाजनं ॥ ८१ ॥ नृत्यन्नित्यादिकाः प्रोचे । ध्रुवाः पंचशता-

व्यधत्त धनचिंतार्त्त । ध्रुवं धृतिभिदः स्त्रियः ॥ ३९ ॥ स जगौ दयिते द्रव्य—मद्रव्योऽहं कुतो लभे ॥ यद्दीपादिव दीपोऽत्र । धनादेव भवेद्धनं ॥ ४० ॥ ऊचे दासी मनोदारु—त्रासी किं प्रिय शोचसि ॥ शोकं कापुरुषाः कुर्यु—र्धीराः पुनरुपक्रमं ॥ ४१ ॥ योऽत्र प्राग्याचते प्रातः । प्रबुद्धं श्रेष्ठिनं धनं ॥ स तस्मै यच्छति स्वर्ण । माषद्वयमसंशयं ॥ ४२ ॥ ततस्त्वमपि याचस्व । धनमेव धनाशया ॥ नायास्यत्युपविष्टस्य । तव लक्ष्मीः स्वयंवरा ॥ ४३ ॥ स तमित्युक्तवांस्तोष—क्षोभान्निद्रामप्राप्नुवन् ॥ मा याचिष्ट धनं कोऽपि । प्रागेवं व्यमृशन्निशि ॥ ॥ ४४ ॥ तृष्णातरलितः सोऽर्ध—रात्रे प्रचलितो गृहात् ॥ प्रतिरथ्यं जागरुकै—स्तलारक्षैर्धृतोंतरा ॥ ४५ ॥ उपस्थितं धनस्थाने । निधनं स्वस्य चिंतयन् ॥ प्रातः प्रसेनजिद्भूप—सभायां तैरनायि सः ॥ ४६ ॥ राज्ञा पृष्टो निजं वृत्त—मादितः स न्यवेदयत ॥ तत् श्रुत्वा हृदि भूपोऽभू—त्कृपया त्रपयाकुलः ॥ ४७ ॥ हहा मयि महीनाथे । कथं लक्ष्मीलवाशया ॥ इयतीं सोढवानेष । वेदनां वेदपारगः ॥ ४८ ॥ यदीदृशेषु दुःस्थेषु । किंचिन्नोपकृतं मया ॥ तत्किं साम्राज्यसंपत्त्ये—ति ध्यात्वाभिदधे नृपः ॥ ४९ ॥ युग्मं ॥ द्विज तुष्टोऽस्मि याचस्व । वांछावधि

ददामि ते ॥ सोऽप्यूचे त्वयि संतुष्टे । नो दूरे सकलाः श्रियः ॥ ५० ॥ परं विना विचारं मे
। याञ्चापि न हि रोचते ॥ ततो राज्ञाभ्यनुज्ञातः । स ययौ निष्कुटं क्षणात् ॥ ५१ ॥ व्य-
चारयच्च तत्रासौ । तावत्तुष्टे नृपे यदि ॥ द्वौ स्वर्णमाषकौ याचे । तत्को मत्तो जडः परः ॥
॥ ५२ ॥ तन्माषकान् शतं याचे । यद्येवं स्वल्पमेव च ॥ वस्त्रभूषणसामग्री । कियती जायते
ततः ॥ ५३ ॥ याचे तेषां सहस्रं त—द्यद्वालं चिंतयानया ॥ रथाश्वहर्म्यनिर्माणे । तदप्यु-
पक्षीयते क्षणात् ॥ ५४ ॥ प्रार्थये माषलक्षं त—च्छक्षमप्यतिसंकटं ॥ रिपुस्वजनसंहारो—
पकारौ तेनापि दुःशकौ ॥ ५५ ॥ कोटिं वा कोटिकोटिं वा । माषाणां मृगयेऽथवा ॥ गृह्णामि
यदि वा राज्य—मेव किं कुविकल्पनैः ॥ ५६ ॥ यावदेवं स बध्ध्वाशु । कुष्यते लोभविद्वि-
षा ॥ तावत्संतोषसुभट—स्तं त्रातुमुदतिष्ठत ॥ ५७ ॥ ततः स दध्यौ रे जीव । किमेवं चिं-
त्यते त्वया ॥ क्व सा माषद्वयस्याशा । क्वायं राज्यमनोरथः ॥ ५८ ॥ यदारक्षैर्धृतो रात्रौ । त-
दानीं यदचिंतयः ॥ संजातजीवितव्यस्य । तत्किं ते विस्मृतिं गतं ॥ ५९ ॥ आयातः शा-
स्त्रपाठार्थ—मभूद्दास्या वशंवदः ॥ तदिदं राज्यकामस्य । तव दास्यमुपस्थितं ॥ ६० ॥ यदीद-

शेन क्लेशेन । लप्स्यसे भूधनाद्धनं ॥ दास्या दास्यसि तत्सर्व—महो ते निर्विवेकता ॥ ६१ ॥
पर्याप्तं चेद्धनं प्राप्तं । भुक्ता भोगाश्च भूरिशः ॥ मेलितं च कुटुंबं वा । किं तदाप्यधिकं तव
॥ ६२ ॥ अनंतवीर्यविज्ञान—खानिः स्वैरविहार्यपि ॥ चेट्या शटितरज्ज्वेव । किं रे पुन्नाग
बध्यसे ॥ ६३ ॥ तदर्थस्य स्वशब्दस्य । धनज्ञातिविवर्जनात् ॥ कुरु तृप्तिं यथा तृप्तिं । लभसे
रमसेप्सितां ॥६४॥ एवं स चिंतयन् जाति—स्मरः प्रशमितस्मरः ॥ कुर्वन् लोचमसंकोचः । स्वयंबु-
द्धोऽभवन्मुनिः ॥६५॥ देवतादत्तनेपथ्यः । पुनरागत्य पर्षदं ॥ धर्मलाभाशिषं तत्र—न्नित्यौच्य-
त स भूभुजा ॥ ६६ ॥ द्विजराज किमालोचि । लोचः कोऽयं च मूर्धनि ॥ ततः स्वचित्तचा-
पल्यं । प्रकाशयेति जगाद सः ॥ ६७ ॥ यथा लाभस्तथा लोभो । लाभाल्लोभः प्रवर्धते ॥ स्व-
र्णमाषद्वयीकार्यं । न मे कोट्यापि निष्ठितं ॥ ६८ ॥ सौवर्णीर्वर्णकोटीर । कोटीरपि गृहाण त-
त् ॥ इत्युक्ते सत्यसंगेन । भूधवेन यतिर्जगौ ॥ ६९ ॥ स्वर्णस्फात्या ध्रुवं तृष्णा—नदी याति
न दीनतां ॥ तपःस्फारतयैवेयं । कदापि यदि जीर्यते ॥ ७० ॥ ततस्त्वमपि संसार—बीजं मुं-
चं परिग्रहं ॥ आशास्य काश्यपीनाथ—मेवं प्रास्थित काश्यपिः ॥ ७१ ॥ त्यक्तपाश इव न्यं-

कु—मुक्तशंकुरिव द्रुपः ॥ विहृत्य भुवि षण्मासी—मासीत्केवलभृन्मुनिः ॥ ७२ ॥ श्रावस्ती-
राजगृहयो—रंतरा दुस्तरा तदा ॥ आयाता योजनान्यष्टा—दशास्ते गहनाटवी ॥ ७३ ॥
तस्यामिक्कडदासाख्या—श्चौरपंचशती स्थिताः ॥ बलेन बलभद्राद्या । अमुषन् पथिकान्न का-
न् ॥ ७४ ॥ तान् बोधार्हान् परिज्ञाय । व्रजंस्तेनैव वर्त्मना ॥ स स्तेनैरप्रशस्तैनै—रवेष्ट्य-
त यतीश्वरः ॥ ७५ ॥ तत्किंचन मुनेर्नास्ति । यत्तेषामुपयुज्यते ॥ तथापि शकुनं ग्राह्य—मि-
ति चौरास्तमूचिरे ॥ ७६ ॥ नाट्यं कुरु पुरोऽस्माकं । मनोविस्मापकं मुने ॥ सोऽपि प्रोचे नि-
रातोद्यं । नाट्यं किं क्वापि जायते ॥ ७७ ॥ तेऽथ हास्यरसोत्ताला । व्यधुस्तालाभिवादनं ॥
अप्येकाकी स केकीव । विवेकी नृत्यमातनोत् ॥ ७८ ॥ चपले जलबुद्बुदोपमे । नृभवे कर्म
तदस्ति किंचन ॥ सुसमाचरिताद्यतः पुनः । कुगतिं नैव लभे कदाचन ॥ ७९ ॥ अधिगत्य
मनुष्यजन्म यः । किल चिंतामणिवज्जवोदधौ ॥ गमयत्यफलं प्रमादतो । न हि तस्मादपरोऽ-
स्ति बालिशः ॥ ८० ॥ सुखहेतु समस्तमुत्सृज—न्नबुधो दुःखपदेषु रज्यति ॥ अबुधाचरितं
विहाय त—द्भव रे जीव सुखस्य भाजनं ॥ ८१ ॥ नृत्यन्नित्यादिकाः प्रोचे । ध्रुवाः पंचशता-

नि सः ॥ कयापि ध्रुवया तासु । कोऽपि चौरो व्यबुध्यत ॥ ७२ ॥ अथ रत्नत्रयं यत्न—प्रातं
हृदि निधीकृतं ॥ समादाय मुनेश्चक्रुः । स्तेनास्ते नाम नानृतं ॥ ७३ ॥ तैः समं विहरन्
ध्यायां । मायामुत्सार्य मोहजां ॥ अवाप सिद्धिसंबंधं । कालेन कियतापि सः ॥ ७४ ॥ अनं-
तसंतोषगुणेन दत्तां । निशम्य साधोः कपिलस्य सिद्धिं ॥ श्रेयःसुखध्वंसकरीमतुच्छां । परिग्र-
हेच्छां कुरुते सुधीः कः ॥ ७५ ॥ इति पंचमे व्रते कपिलर्षिकथा समाप्ता. ॥

अत्रापि व्रते पंचातिचारा वर्ज्याः, तद्यथा—क्षेत्रवास्तुप्रमाणातिक्रमः १, हिरण्यसुवर्ण-
प्रमाणातिक्रमः २, धनधान्यप्रमाणातिक्रमः ३, चतुष्पदप्रमाणातिक्रमः ४, कुप्यप्रमाणातिक्र-
मश्च ५. उक्तं च—खित्ताइ हिरण्णाइ । धणाइ दुपयाइ कुप्पमाणं च ॥ जोयणपयाणबंधण-
कारणजावेहिं नो कुणइ ॥ १ ॥ तत्र क्षेत्रवास्तुनोः प्रागुक्तार्थयोः प्रमाणस्य योजनेन क्षेत्रां-
तरगृहांतरमीलनेनातिक्रमोऽतिचारः, तथाहि—किलैकमेव क्षेत्रं वास्तु वेत्यभिग्रहवतोऽधि-
कतरं तदभिलाषे सति व्रतभंगभयाद् वृत्तिवरंडाद्यपनयेन व्रतसापेक्षत्वात्कथंचिद्विरति बंध-
नाद्वायोऽतिचारः. तथा हिरण्यसुवर्णयोः प्रमाणस्य प्रदानेनातिचारः, यथा—केनापि चातु-

मासाद्यवधिना हिरण्यादिप्रमाणं कृतं, ततस्तेन तुष्टाद्राजादेस्तदधिकं लब्धं, तच्च व्रतभंगभयात् पूर्णेऽवधौ गृहगतहिरण्यादिविक्रये वा गृहीष्यामीति धियान्यस्य ददातीति व्रतसापेक्षत्वादतिचारः. धनधान्ययोः प्रमाणस्य बंधनतोऽतिक्रमोऽतिचारः, यथा किल मासाद्यवधिना कृतधनादिप्रमाणस्य कोऽपि लभ्यमन्यद्वा धनादि ददाति, तच्च व्रतभंगभयात्पूर्णेऽवधौ प्राच्ये धनादौ विक्रीते वा गृहीष्यामीत्येवंरूपेण बंधनेन वाग्नियंत्रणया मूटकादिबंधनेन वा सत्यंकारादिना वा स्वीकृत्य यदा दायकादिगृह एव तद्धरति तदायमतिचारः. द्विपदचतुष्पदयोः प्रमाणस्य कारणेन गर्भविधापनेनातिचारः, यथा—

किल केनापि वर्षाद्यवधिना द्विपदादिप्रमाणं कृतं, तेषां च वर्षमध्य एव प्रसवेऽधिकद्विपदादिभावाद् व्रतभंगः स्यादिति भयात्कियत्यपि काले गते गर्भग्रहणं कारयतो गर्भस्थाधिकद्विपदादिभावेन बहिस्तदभावकल्पनया चातिचारः. कुप्यप्रमाणस्य भावेन पर्यायांतररूपेणातिक्रमोऽतिचारः, यथा—केनापि दशस्थालकरूपं प्रमाणं कृतं, ततः कथंचित्तेषां द्विगुणे सति व्रतभंगभयात्तेषां द्वयेन द्वयेनैकैकं कारयतः परिग्रहवृद्धेः संख्यानतिक्रमाच्चा-

तिचारः. अत्र परिग्रहस्य नवविधत्वादतिचाराणामपि तावत्त्वे यत्पंचसंख्यात्वमुक्तं तत्सुजातीयत्वेन शेषभेदानामत्रैवांतर्भावात्. एते पंचापि सहसाऽनाभोगातिक्रमादिभिरपि भवंति. एवं सर्वव्रतातिचारेष्वपि सहसानाभोगादयो योज्याः. अत्र भावनागाथा—जह जह अप्पो लोभो। जह जह अप्पो परिग्गहारंभो ॥ तह तह सुहं पवड्ढइ। धम्मस्स य होइ संसिद्धि ॥ १ ॥ तम्हा परिग्गहं उज्झि—ऊण मूलमिह सव्वपावाणं ॥ धम्मचरणं पवन्ना। मणेण एवं विचिंतिज्जा ॥ २ ॥ उक्तं सदृष्टांतं पंचमं व्रतं. अथोक्तानि व्रतानि निसमर्थयिषुर्गुणव्रतानि च विवक्षुरिदमाह—

॥ मूलम् ॥—एयाइं पंच अणु—व्वयाइं इत्तो गुणव्वया तिन्नि ॥ तत्थ पढमं दिसिवयं। उड्ढाहोतिरियदिसिमाणं ॥ ६४ ॥ व्याख्या—एतानि प्रागुक्तानि स्थूलप्राणातिपातविरमणादीनि पंचाणूनि महाव्रतापेक्षया लघूनि व्रतानि, यद्वा अणोः साध्वापेक्षयाऽल्पस्य श्रावकस्य व्रतानि अणुव्रतानि, देशनाकाले महाव्रतेभ्योऽनु पश्चात्प्ररूपणादनुव्रतानि वोच्यते. अतःपरं त्रीणि गुणव्रतानि वक्ष्यामीति योगः, एतान्यणुव्रतानां गुणायोपकाराय वर्तंत इति गुण-

व्रतानि, भवंति ह्यणुव्रतानां गुणव्रतेभ्य उपकारो दिक्प्रमाणादिना हिंसादिनिषेधात्. तत्र तेषु गुणव्रतेषु प्रथमं गुणव्रतं दिग्व्रतं नाम, यत्किमित्याह—ऊर्ध्वाधस्तिर्यग्दिशि गमनमाश्रित्य मानं प्रमाणं क्रियते, सर्वास्वपि दिक्षु सर्वेणापि जन्मना मया प्रत्येकमेतावत्येव भूमिराक्रमणीया नाधिकेति. ननु दिक्प्रमाणे कृते को गुण इत्याह—

॥ मूलम् ॥—भुवणक्कमणसमत्थे । लोभसमुद्दे विसक्कमाणंमि ॥ कुणइ दिसापरिमाणं । सुसावओ सेउबंधंव ॥ ६५ ॥ व्याख्या—भुवनाक्रमणसमर्थे त्रिभुवनप्लावनक्षमे लोभसमुद्रे विसर्पति सति सुश्रावको दिक्प्रमाणं तत्पूरप्रतिघातप्रत्यलं सेतुबंधमिव करोति, नियमितक्षेत्रात्परतो महालाभेऽपि गमनाभावादनेन व्रतेन लोभनिग्रहो भवतीत्यर्थः. अथात्र व्रते व्यतिरेकेण दृष्टांतमाह—

॥ मूलम् ॥—करुणावल्लीबीयं । जई कुव्वंतो दिसासु परिमाणं ॥ राया असोगचंदो । नरए नेव निवडंतो ॥ ६६ ॥ व्याख्या—गाथार्थः स्पष्टः, नवरं तप्तायोगोलकल्पस्य गृहिणोऽपरिमितभूमंडलभ्रमणनिषेधेनास्य व्रतस्य करुणावल्लीबीजता भावनीया. भावार्थस्तु कथा-

नकगम्यस्तच्चेदं—

उ५० अस्ति चंपापुरी पाप—रीतिनिर्मुक्तनागरा ॥ अशोकचंद्रभूपोऽभू—त्तत्र श्रीश्रेणिकांग-

।चिंता जः ॥ १ ॥ त्यजितस्यांबया तस्य । यदकूणयदंगुली ॥ बाल्ये कुर्कुव्यतो नाम्ना । कूणिकोऽ

५ए० प्येष उच्यते ॥ २ ॥ तस्य जन्म च वृद्धिश्च । पित्रोर्वैरस्य कारणं ॥ चेटकेन च युद्धादि । वि-

ज्ञेयं श्रुतसागरात् ॥ ३ ॥ अन्यदा तत्र तन्वानः । सम्यक् सुमनसां मुदं ॥ वनं विभूषया-

मास । श्रीमान् वीरो वसंतवत् ॥ ४ ॥ कृते समवसरणे । सूरैः श्रेणिकनंदनः ॥ ननाम का-

मितफल—प्रदौ वीरप्रभोः पदौ ॥ ५ ॥ देशनांते स पप्रच्छ । म्रियंते येऽत्र चक्रिणः ॥ अप-

रित्यक्तभोगास्ते । नाथ गच्छंति कां गतिं ॥ ६ ॥ स्वाम्यूचे स्याज्ञतिस्तेषां । सप्तमी नरका-

वनिः ॥ तर्हि तत्रैव गंतव्यं । मयापीत्यालपन्नृपः ॥ ७ ॥ तावन्न सार्वभौमोऽसि । कृतः सा

तु गतिस्तव ॥ ग्रामं विना वृथा सीम—कल्पनेत्यवदज्जिनः ॥ ८ ॥ चिल्लणानंदनो चक्रि

—मानी मानीश्वरोऽभ्यधात् ॥ अहं न चक्रवर्तीति । दुःश्रद्धेयं जगद्गुरो ॥ ए ॥ हस्त्य-

श्वरथलक्षाणि—भटकोटिनिरुत्कटा ॥ ममाप्यस्ति चमूर्धतु । संहर्तुं वा जगत् क्षमा ॥ १० ॥

परःसहस्राः संबाध—द्रोणखेटपुराकराः ॥ करं ददति मे काले । फलं भूमिरुहा इव ॥११॥
अक्षीणमाणाः सतत—व्यापारेऽपि प्रभो मम ॥ निधयः संति भूयांसः । सुकवेरिव बुद्धयः
॥ १२ ॥ प्रज्ज्वलन् राजवंशेषु । प्रतापो मे दवाग्निवत् ॥ अशेषद्वेषिशलभान् । करोत्यसुल-
भायुषः ॥ १३ ॥ न्यूनं किमस्ति मे येन । भवेयं न हि चक्रभृत् ॥ श्रुत्वेति प्रत्यभाषिष्ट । य-
थावस्थितवाग्जिनः ॥ १४ ॥ राजंश्चक्रादिरत्नौघं । विना चक्रित्वकल्पनां ॥ दरिद्र इव भूपा-
ल—लीलां तन्वन्न शोभसे ॥ १५ ॥ अथैकेंद्रियरत्नानि । कृत्वा लोहमयानि सः ॥ स्त्रीरत्नं
कल्पयामास । प्रियां पद्मावतीं नृपः ॥ १६ ॥ संस्थाप्यैतानि रत्नत्वे । पट्टेभादीनदीनधीः ॥
स प्राच्यादिक्रमाच्चक्रे । देशानादेशवर्तिनः ॥ १७ ॥ असह्यविक्रमाक्रांत—सकलक्ष्मापमंडलः
॥ स वैताढ्यतले प्राप । तमिस्रां नाम कंदरां ॥ १८ ॥ गुहाद्वाराररी तेन । दंडरत्नेन ताडि-
तौ ॥ व्यघटेतां न नीचोक्त्या । सुश्लिष्टौ सुहृदाविव ॥ १९ ॥ कृतमालस्तमालापी—देवस्त-
द्द्वाररक्षकः ॥ रे कोऽसि याहि खात्कारैः । किं कदर्थयसि श्रुती ॥ २० ॥ सोऽप्यूचे भरत-
क्षेत्रे । चक्री विक्रांतदोर्युगः ॥ जातोऽस्म्यशोकचंद्रोऽहं । गुहाद्वारमपावृणु ॥ २१ ॥ देवोऽव-

३५७
चिंता
५०२

ग्नो भवंत्यत्र । क्षेत्रे द्वादश चक्रिणः ॥ तेऽब्रूवंस्तन्न चक्री त्वं । किंतु कोऽप्यसि चाक्रिकः ॥ २२ ॥ भूपोऽप्यधात्कृतः पुण्यै—रहं चक्री त्रयोदशः ॥ किं न जानास्यसंभाव्य—मपि पुण्याद्भवेद् ध्रुवं ॥ २३॥ तन्नो उद्घाटय द्वारं । मा खेदय विलंब्य मां ॥ बलवान् कुपितो नूनं । भवत्यायति दारुणः ॥ २४ ॥ इत्याविष्टमिवानिष्ट—भाषिणं विबुधो व्यधात् ॥ रयाच्चपेटया हत्वा । तं षष्टनरकाध्वगं ॥ २५ ॥ सर्वदिग्गमनमानमुद्यतो—ऽशोकचंद्र इव यः करोति न ॥ ऐहलौकिकमपायमाप्य स । प्रेत्य याति नरकार्त्तिपात्रतां ॥ २६ ॥ इत्यशोकचंद्रनृपति कथा समाप्ता. ॥

अत्रापि व्रते पंचातिचारा वर्ज्याः—ऊर्ध्वाधस्तिर्यग्दिक्प्रमाणातिक्रमाः १–३, क्षेत्रवृद्धिः ४, स्मृत्यंतर्द्धानं ५ चेति. अत्राद्यास्त्रयः सुबोधाः, नवरमूर्ध्वादिदिशां गमनमाश्रित्य प्रमाणातिक्रमोऽनाभोगादिनाऽतिक्रमादिना वा प्रवृत्तस्य दृष्टव्योऽन्यथा भंग एव स्यादित्यर्थः. क्षेत्रवृद्धिस्त्वेवं—यथा किल केनापि पूर्वापरयोः पृथक् पृथग्योजनशतप्रमाणं कृतं, स चोत्पन्ने कार्ये यथैकस्यां दिशि नवति कृत्वा, परस्यां दिशि दशयोजनानि क्षेत्रवृद्धिं कृत्वा दशो-

त्तरं योजनशतं गछति, तदा तस्य व्रतसापेक्षत्वादेकस्यां दिशि क्षेत्रवृद्धेश्चातिचारः. स्मृतिः स्मरणं तस्या अंतर्द्धानं, यथा केनापि पूर्वस्यां दिशि योजनशतप्रमाणं कृतं, गमनकाले चा-तिव्याकुलत्वप्रमादित्वादिना न स्पष्टतया स्मरति, किं शतमुत पंचाशद्वेति, तेन चैवं संश-यवत्त्वेन पंचाशदेव योजनानि यावद्गंतव्यं, तत्परतो गछतोऽतिचारः, शतादपि परेण गछत-स्तु भंगः, अनाभोगादिना प्रमाणातिक्रमे यदा स्मरति तदा निवर्तते. अत्र भावनागाथा—चिंतेयव्वं च नमो। साहूणं जे सया निरारंभा ॥ विहरंति विप्पमुक्का। गामागारमंकियं वसुहं ॥ १ ॥ उक्तं सदृष्टांतं प्रथमं गुणव्रतं. अथ द्वितीयमाह—

॥ मूलम् ॥—भोयणकम्मेहिं दुहा। बीयं भोगोवभोगमाणवयं ॥ भोयणउ सावज्जं। उस्सग्गेणं परिहरइ ॥ ६७ ॥ तह अंतरंतो वज्जइ। बहुसावज्जाइं एस भुज्जाइं ॥ बावीसं अन्नाइवि। जहारिहं नायजिणधम्मो ॥ ६८ ॥ व्याख्या—गुणव्रतेषु द्वितीयं भोगोपभोग-मानव्रतं भोजनकर्मभ्यां द्विधा भवति, तत्र भुज्यते सकृदंतर्वेति भोगोऽन्नकुसुमादिः, पुनः पुनर्बहिर्वा भुज्यते यः स उपभोगः स्त्रीस्वर्णवस्त्रादिः. ननु यद्यन्नस्त्र्यादयो भोगोपभोगशब्द-

वाच्यास्तेषां च प्रमाणमत्र व्रते विधेयं, ततः कर्मेत इदं व्रतं न स्यात्कर्मशब्दस्य क्रियावचनत्वात्क्रियायाश्च भोगोपभोगत्वयोगात्? सत्यं, किंतु कर्मणो वाणिज्यादेर्भोगोपभोगकारणत्वात्, कारणे च कार्योपचारात्, कर्माप्यत्र भोगोपभोगत्वे नोक्तमित्यलं चर्चया, भोगोपभोगयोर्मानेन नियतप्रमाणेन निष्पन्नं व्रतं भोगोपभोगमानव्रतं. तत्र भोजनतः श्रावक उत्सर्गेण मुख्यवृत्त्या सावद्यं सचित्तमनेषणीयं च भोजनं परिहरति, तदशक्तः सचित्तं परिहरतीति स्वयं दृष्टव्यं. ' तह अंतरांतोत्ति ' तथाप्यशक्नुवन्नेष श्रावको ज्ञातजिनधर्मः सन् बहुसावद्यानि भूरिपापानि द्वाविंशतिं भोज्यान्यशनादीनि. यदाहुः—पंचुंबरि महविगई । हिमविसकरगेयसव्वमट्टी य ॥ राइभोअणगं चिय । बहुबीय अणंतसंधाणं ॥ १ ॥ घोलवडा य वाइंगण । अमुणियनामाणि फुल्लफलयाणि ॥ तुच्छफलं चलियरसं । वज्ज अभुज्जाइं बावीसं ॥ २ ॥ तत्रोदुंबरवटप्लक्षपिप्पलकाष्टोदुंबरफलानि पंचोदुंबरी, मद्यमांसमधुनवनीतानि घृतादिविकृत्यपेक्षया महाविकारहेतुत्वान्महाविकृतयश्चतस्रः, हिमविषकरकमृत्तिकारात्रिभोजनानि प्रतीतानि, यत्र भक्षायां मुञ्जा इव बीजान्यव्यवहितानि तत्फलं बहुबीजं पंपेट्टकादि.

अनंतकायिका द्वात्रिंशद्यथा—सव्वाय कंदजाई । सूरणकंदो य वज्जकंदो य ॥ अद्दहलिद्दा य तहा । अद्दं तह अल्लकच्चुरो ॥ १ ॥ सत्तावरी विराली । कुंआरी तह थोहरी गलोइ य ॥ लसणवंसकरिल्ला । गज्जर तह लूणउ लोढो ॥ २ ॥ गिरिकन्नि किसलपत्ता । कासेरुया थेग अलसुब्रा य ॥ तह लूणरुक्खबल्ली । खिल्लहडा अमयवल्ली य ॥ ३ ॥ मूला तह भूमिरुहा । विरुहाइ ढक्कवत्थुलो पढमो ॥ सूयरवल्लो य तहा । पल्लंको कोमलंबिलिया ॥ ४ ॥ आलू तह पिंडालू । बत्तीसं जाणिऊणणंताइं ॥ एआइं बुद्धिमया । परिहरियव्वा पयत्तेणं ॥ ॥ ५ ॥ संधानकं प्रतीतं, घोलवटकान्यामगोरससंपृक्तद्विदलोपलक्षणं, वृंताकानि प्रसिद्धानि, बहुबीजत्वेऽपि वृंताकानां पृथग्ग्रहणमतीवलोकविरूढताज्ञापनार्थं, अज्ञातनामानि पुष्पफलानि, येन जग्धेन तृप्तिरल्पा, आरंभस्तु महांस्तत्तुच्छफलं गंगेटककोमलवर्धकादि, चलितरसं क्वथितधान्यं, एषु पंचोदुंबर्याः संधानकस्य कृमिकुलाकुलत्वात्. यतः—महविग्गईणं मज्झे । महुंमि मंसे नवणीयंमि चउत्थए ॥ उपज्जंति असंखा । तव्वण्णा तत्थ जंतुणो ॥ १ ॥ इत्युक्तबलान्निस्तृंशताहेतुत्वाच्च हिमकरकमृद्बहुबीजानंतकायवृंताकानां बहुजीवमयत्वात्. विषाज्ञा-

तफलानां स्वोपघाताद्रात्रिभोजनस्य सूक्ष्मजीववधात्. घोलवटकानां—जइ मुग्गमासपमुहं। विदलं कच्चंमि गोरसे पडइ ॥ ता तस जुवुप्पत्तिं । भणंति दहिए त्रिदिणउवरिं ॥ १ ॥ इति वचनात्तुच्छफलानामनर्थदंडत्वाच्चलितरसस्य चानंतकायत्वाद्बहुसावद्यता भावनीया. न चैतावंत्येवैतानि, किंतूपलक्षणत्वाद्यथार्हं यथायोग्यमन्यान्यपि दिनद्वयातीतदधिसंसक्तपत्रपुष्पादीनि बहुसावद्यानि वर्जयंति. उक्तं च—पुप्फफलेहिं रसेहि य । बहुतसपाणेहिं अजयणाहाणेहिं ॥ मज्जेहि य मंसेहि य । विरमेज्जा अत्तहियकामो ॥ १ ॥ निरवज्जाहारेणं । निज्जीवेणं परित्तमीसेणं ॥ अत्ताणुसंधणपरा । सुसावया एरिसा हुंति ॥ २ ॥ अल्पसावद्येऽप्योदनादावपि एतावन्मया भोक्तव्यमिति प्रमाणनैयत्यं विधेयं. अत्यंतचेतोगृध्ध्युन्मानादापवादादिजनकं, वस्त्रविभूषणवाहनाद्यं च वर्जयेत्. शेषेऽपि प्रमाणं कार्यं विरतिपरिणतित्वात्तस्य. ननु संसारे शरीरमेव सारं, तच्च यथा तथा वा पोष्यते, किमनया भक्ष्याभक्ष्यकल्पनयेत्याह—

॥ मूलम् ॥—अइपोसियंपि विहडइ । अंते एयं कुमित्तमिव देहं ॥ सावज्जभुज्जपावं । को तस्स कए समायरइ ॥ ६९ ॥ व्याख्या—स्पष्टा. अथ दृष्टांतमाह—

॥मूलम्॥— मंसाईसु नियमं, धीमं पाणच्चयेवि पालंतो। पावइ परंमि भोए, सुरभोए वंकचूलोव्व ॥१०॥ व्याख्या — अक्षरार्थः प्रतीतः व्यासार्थस्तु कथानकादवसेयस्तच्चेदम् — अथ वंकचूल कथा प्रारभ्यते —

अत्रैव भारते वर्षे। विमलोऽभून्नरेश्वरः ॥ न्यायिनो यस्य शास्त्रश्रीरेवानीतिर्न तु प्रजाः ॥१॥ शर्वस्येव प्रिया सर्वमंगलास्य सुमंगला। सा सतीति प्रतिं प्राप, प्राग्भवे तद्विवेऽप्यसौ ॥२॥ तस्यामपत्यमिथुनं। मुग्धविनोदपात्रतां ॥ तयोः पुत्रः पुष्पचूलः। पुष्पचूला च कन्यका ॥३॥ चौर्यादिव्यसनासक्तः। प्रायः कलहकौतुकी ॥ पुष्पचूलो वंकचूल। इत्याख्यां लंभितो जनैः ॥४॥ भूपालस्तदुपालंभव्रातमाकर्ण्य लोकतः ॥ पुरान्मलमिवात्यंत कश्मलं तमदूरयत् ॥५॥ सुरेणेव हरित राज्ञो जामिस्तमनुजग्मुषी ॥ निस्तमापि हि राकेव। सकलंकं निशाकरं ॥६॥ भ्रमन्नयमरण्यानि। मभिमानी भयोज्झितः ॥ ददर्श नाहलैर्दृष्टं, मात्र निर्णीतसाहसः ॥७॥ नीतः स भीतिमुक्तैस्तैः। स्वपल्ल्यां बहुमानतः ॥ चकोरचंचलो वृत्तिं। केवलं चौर्यचर्यया ॥८॥ [illegible] पल्लीपतिपदे। स तैरेव न्यवेशयत ॥ यत्र वा तत्र वा यातु। ने स्वर्णं क्वापि पु-

पित्तलं ॥१९॥ प्राकृत पापवीराऽसौ । सार्थमोषादि कर्मसु ॥ आर्योऽ
पि दूष्यते तत्र किं पुनर्यश्चलात्मकः ॥२०॥ अथ प्रादुरभूद्वर्षा । का
लः पान्थभयंकरः ॥ स्फुरत्प्ररोहसंदोहः । पंक संकुल भूतलः ॥२१॥
वाचंयमै राजहंसः । कलहंसैरिवाश्रितः ॥ चचार नैकषा पल्लीं
श्रीसुस्थितगुरुस्तदा ॥२२॥ भीरुर्नीरस्य संघट्टा- द्विहारं निरतोऽपि
सः ॥ तामेव प्राविशत्पल्लीं । कुलायमिव विष्किरः ॥२३॥ तत्र गोष्ठ्यां समासी
ने । शबरैकपरिच्छिदं ॥ अपश्यद्वंकचूलं स । जीवो राहुमिवोदये ॥२४॥
सूरिं सोऽपि कुलीनत्वा- न्नमति स्म सविस्मयं ॥ हंत हंसोऽद्य यातो। य।
द्विकांतारिति चिंतयन् ॥२५॥ याचितः सूरिणा वंक- चूलो नोरन्ध्रमाश्रयं
॥ जगौ सगौरवं दास्ये । वसतिं भवते प्रभो ॥२६॥ न पुनर्मम सीमायां
। धर्मो वाच्यः कदाचन ॥ धर्मो हि कृपया सत्त्वे । नास्त्ययेन प्रकीर्त्यते ॥
२७॥ तैरेवं जीविकास्माकं । पुण्यं तन्नाद्रियामहे ॥ भूपोऽसि मां न सीमां चे
त्तदद सदनं भज ॥२८॥ एवमुक्तो गुरुस्तेन । स्तेन राजेन तत्र सः
॥ चतुरश्चतुरो मासा- स्तस्थौ स्वाध्यान साधनः ॥२९॥ अ-
थावेष्टन गुरुं भिक्षा । इभ्यं कुग्राहका इव ॥ न पुनः पुण्यपापस्या

उप॰ ददृशुर्वर्णिकामपि ॥२०॥ तपस्यां वाक्समस्यां च। नमस्यां च यथाक्र- चिन्ता
मं ॥ दीक्ष्या भुवनमुनीं द्रेषु। स्नेहला न हल्ला अपि ॥२१॥ गतार्त्तिः कार्तिकस्य
५९९ यान्ते। प्रस्थितः सुस्थितो गुरुः॥ वंकचूलोऽचलच्चास्य भक्तिस्तमनु दुर्मनाः॥
२२॥ कियत्यपि गतो मार्गे। गुरुं नत्वा व्यजिज्ञपत्॥ चिरस्थितमुनिव्रात- नि
वियोगावेगविह्वलः ॥२३॥ इतः परापरे ग्राहि। सीमा भीमा हि शाम्यहि। तत-
स्तु भिक्ष्ये पुनर्दीक्षां। भवताद्भवतां मम ॥२४॥ कटरे तव गांभीर्य महो ते
सत्यसंधता॥ विद्वांश्च चक्रवांश्चापि। यद्धर्मं जातु नाचीवान् ॥२५॥
अस्मासु पापपात्रेषु। यद्वा पुण्य कथा वृथा॥ न कुंजः कुंजशृंगारे। गोष्ठे
गारुत्मतो चितौ ॥२६॥ यदि ते स्वादितेऽसौम्य। किंचिद्धर्मस्तद-
धुना। इत्युक्ते गुरुणा भाणि। भक्तिभूः शबराधिपः ॥२७॥ प्रभोऽनिश-
नृशंसात्मा। जंतुनोऽयमनुग्रह्यतां ॥ तेन केनोपदेशेन। निर्वाह
यस्य पश्यथ ॥२८॥ अथास्मै गुरुरादिक्षद्धृदयं नाविदितं फलं सप्ताष्टौ
वापसर्तव्यं। पदानि प्रोन्निहिंसता ॥२९॥ न सेव्या पट्टदेवी च।
न भक्ष्यं वायसामिषं। सदाप्यभिग्रहा नेता। नेकचेतास्त्वपालय ॥३०॥
जग्राहाभिग्रहान्नम्रस्तांस्ततश्चतुरोऽपि सः॥ गुरुश्चानु विपद्रक्षा। ५९९

दक्षान् प्राहरिकानिव ॥३१॥ सोऽथ स्वस्थानमायातः । कदाचित् त्रुटितेधने
॥ एकं सार्थमुपक्षेप्तु । चंद्रांकुरिवाचलत् ॥३२॥ शकुनाभावतः सार्थस्तस्थौ
स्वस्थान एव सः ॥ नष्टं जगत्यादिफलं । स्वयशाः सर्वा हि तादृशी ॥३३॥ सार्थ
स्यानुपलंभे हि । कृत्नं तस्यापि सार्थता ॥ तेन मोघ प्रयाशोऽसौ । ववले
सार्वत्रैर्थिभिः ॥३४॥ प्राच्ये पथ्यादीने क्षीणे पक्षीन्द्रं सपरिच्छदं ॥
क्रमयामास तु मार्गे । क्षुत्तृषो स्पर्धयेवतं ॥३५॥ अथ तस्य भटैः क्वापि
निकुंजे फलभारितः ॥ प्राणिप्राणि ललुंटाकः । किंपाकतरुरैक्षत ॥३६॥
गोलांगुला इवाद्याय तरोस्तस्य फलानि ते ॥ ददिरे कानिचित् पत्ये ।
अद्धुः कानिचन स्वयं ॥३७॥ वंकचूलेन तन्नाम । ते पृष्टाः स्पष्टमू-
चिरे ॥ यक्षातक्षा भवत्वेषां । नाम किं पृच्छयानया ॥३८॥ आसा-
दितैः परिपाक पेशलैरीदृशैः फलैः ॥ स्वामिन् याहाच्छित्क नाम ज्ञातु
नीतुरनास्ति नः ॥३९॥ नाम यद्दीयते तस्याद्भवतु तदमुन्यपि ॥ नाज्ञा
त फलानीति । नौ निह्नेश चमामुह ॥४०॥ तेषामाख्यामजानानः
स्मरन्नियममात्मनः ॥ क्षुधाक्षामोऽपि नान्यादि । न स निश्चलमानसः ॥४१॥
नाहला फलमत्र पार्श्वे । तरुच्छायास्ववीरत ॥ तथा यथा पथश्रांता इवोऽस्वपन्

ते पुनः ॥ ४२ ॥ मृतेषु तेषु सर्वेषु । विषवृक्षफलाशनात् ॥ अमंस्त नियमं स्वस्य । फलितं
शबरेश्वरः ॥ ४३ ॥ अहो वाचो महर्षीणा—मक्षूणा इति जावयन् ॥ एकाकी मधुक्षन्मल्ली
–मिव पल्लीमियाय सः ॥ ४४ ॥ निशि प्रविष्टः स्वे धाम्नि । दीपोद्योतादलोकत ॥ तल्पे जा-
यां सह स्वस्रा । सुप्तां पुरुषवेषया ॥ ४५ ॥ इयं मे दयिता डुष्ट—वृत्ता सोऽयं नरः परः ॥
कुस्वजावावुजावाशु । घात्यौ चेति व्यचिंतयत् ॥ ४६ ॥ तौ हंतुमेकघातेन । कृपाणं निःकृ-
पोऽकृषत् ॥ यावत्तावद् द्वितीयोऽस्य । नियमः स्मृतिमाययौ ॥ ४७ ॥ अथापसरतस्तस्य । को-
पिनः पदसप्तकं ॥ अनिष्ठुनेव तद्भूत्यां । खड्गेनोपरि चस्खले ॥ ४८ ॥ खड्गखाद्कारतः क्षीण—
निद्रया पुष्पचूलया ॥ जीव वर्षशतं भ्रात—र्वंकचूलेत्यजल्पत ॥ ४९ ॥ ततोऽतिलज्जितः को-
पं । संवृएवन्नसिना सह ॥ आः किमेतदिति भ्रांतः । स तां पप्रछ सोदरीं ॥ ५० ॥ पुष्पचू-
लावदद्भ्रातः । सायमद्य तव द्विषां ॥ त्वां वीक्षितुमिहाजग्मु—र्नटवेषधराश्चराः ॥ ५१ ॥
पल्ल्यां चेद्वंकचूलोऽस्ति । तन्नाद्यं नः प्रपश्यतु ॥ इति तेषु ब्रुवाणेषु । मुग्धाप्यहमचिंतयं
॥ ५२ ॥ शुद्धिं भ्रातुर्न जानेऽहं । ज्ञास्यंते तेऽपि यद्यदः ॥ अनाथेवांगना पल्ली । तदात्तैव

पैरेरियं ॥ ५३ ॥ अत्रात्तनरनेपथ्या । नटीव पटुकैतवा ॥ तानहं कारयामास । नाट्यमध्यास्य
संसदः ॥ ५४ ॥ क्षणात्तेषु विसृष्टेषु । यथार्हं धनदानतः ॥ अपरावृत्तवेषैव । प्रजावत्या सहा-
स्वपं ॥ ५५ ॥ ततः स्वं भगिनीहत्या—पंकोत्तीर्णं विभावयन् ॥ प्रीतो विशिष्य धत्तेस्म । गु-
रोर्गिरि स गौरवं ॥ ५६ ॥ जलवाहो जलायेव । जलराशिं कदाचन ॥ धनाय शबराधीशो ।
ययावुज्जयिनीं पुरीं ॥ ५७ ॥ प्रजापीडनपापात्त—द्रविणानां नियोगिनां ॥ विशोपकार्थं पुत्रे-
ऽपि । कुप्यतां वणिजामपि ॥ ५८ ॥ याचं याचं जनादात्त—श्रीलवानां द्विजात्मनां ॥ लो-
भेन कुट्टिनं कामी—यंतीनां च पणस्त्रियां ॥ ५९ ॥ सद्मान्यतीत्य निष्णातः । क्रीडापद्ममिव
श्रियः ॥ दत्तक्षात्रो विवेशासौ । निशि वेश्मावनीभुजः ॥ ६० ॥ त्रिभिर्विशेषकं ॥ श्रियमिन्दुः
श्रियं मूर्ता—मिव कांचन सद्मविं ॥ पुरः पृथ्वीपतेरग्र—महिषीं स निरैक्षत ॥ ६१ ॥ तया
कस्त्वमिति प्रोक्तः । स प्रोचे तस्करोऽस्म्यहं ॥ किमर्थमत्रायातोऽसि । वांछन्ननिधनं धनं ॥६२॥
ततो मृदुगिरावादि । तया तद्रूपलुब्धया ॥ धनस्य सौम्य का वार्ता । सर्वमेतत्तवैव हि ॥६३॥
किं कंपसे भज स्वास्थ्यं । तुष्टास्ते कुलदेवताः ॥ पट्टदेवी नृदेवस्य । वश्याहमभवं तव ॥६४॥

प्राकृतैः कल्पवल्लीव । याहं स्वप्नेऽपि दुर्लभा ॥ साहं भजामि ते दास्य—महो पुण्योदय-
स्तव ॥ ६५ ॥ पाति रूपातिकंदर्प । सुभटः शरणागतं ॥ मन्मथव्यथितां तन्मां । रक्ष रक्ष
त्वदाश्रयां ॥ ६६ ॥ सुलभौ मयि तुष्टाया-मर्थकामौ शरीरिणां ॥ सुलभौ मयि रुष्टायां । व-
धबंधौ शरीरिणां ॥ ६७ ॥ लोभितः क्षोभितश्चैवं । तया कामग्रहार्त्तया ॥ तृतीयं नियमं ध्या-
य—न्नत्वा तामित्युवाच सः ॥ ६८ ॥ मातस्त्वं मम पूज्यासि । का क्षुद्रे मयि ते क्रुधा ॥ से-
वसे वा किमब्रह्म । का वा वन्ये मयि स्पृहा ॥ ६९ ॥ भूपांभोजेऽभजद्भृंगी—भावं या भ-
वती भुवि ॥ सा कर्कशार्ककुसुम—समे किं मयि रज्यसि ॥ ७० ॥ सा च प्रोवाच वाचाल ।
बाल रे किं न लज्जसे ॥ एवं मयि वृषस्यंत्या—मंबासंबंधबंधनात् ॥ ७१ ॥ पीयूषमारना-
लीयन् । ज्वालीयंश्चंदनद्रवं ॥ कल्पद्रुं नक्तमालीयन् । व्यालीयन् कुसुमस्रजं ॥ ७२ ॥ काम-
धेनुं बिडालीयन् । वेतालीयंस्तथेंदिरां ॥ बालिशः क इवासि त्वं । मामेवमवहीलयन् ॥७३॥
युग्मं ॥ इत्युक्तोऽपि तया याव—न्न चुक्षोभ स साहसी ॥ तावन्नखैर्विदार्य स्वं । तरसा पूच्च-
कार सा ॥ ७४ ॥ एतत्सर्वं नरेंद्रेण । सौधद्वारमुपेयुषा ॥ अररिछिद्रविश्रांत—श्रवसा शुश्रुवे

स्वयं ॥ ७५ ॥ एता नेतरि दासे वा । तुल्यसेवारसाः स्त्रियः ॥ न स्त्रीजवंति कस्यापि । क्ष्मा-
पतिर्ध्यातवानिति ॥ ७६ ॥ तावत्कलकले जाते । जाग्रतः शस्त्रपाणयः ॥ क्रुद्धकालीकटाक्षा-
ज्ञा—स्तलारक्षा दधाविरे ॥ ७७ ॥ कपाटपुटमुत्पाट्य । विशतो वेश्म तान्निशि ॥ मुनीश्वर
इव क्षाम—स्वरं भूमानजाषत ॥ ७८ ॥ अगाढबंधनं कृत्वा । स्तेनमेनमनेनसं ॥ ममानयत
दृग्मार्गं । प्रातरध्यास्तसंसदः ॥ ७९ ॥ राज्ञा स्वमहिषीवृत्त—चिंतासंतप्तचेतसा ॥ त्रियामा
शतयामेव । कथंचिदतिचक्रमे ॥ ८० ॥ प्रातर्नीतस्तलारक्षै—रास्थानं श्लथबंधनः ॥ साक्षेपं
क्ष्मानुजा पृष्टः । स्पष्टमाचष्ट तस्करः ॥ ८१ ॥ राजन्राजननाज्यस्त—स्तैन्यवृत्तिरुपागमं ॥ ध-
नाय निशि ते धाम । रत्नाकरमिवापरं ॥ ८२ ॥ अहं तदा शचीसख्या । महिष्या ते निरी-
क्षितः ॥ ज्योत्स्नयेव गिरा शैत्य—सारया जाषितस्ततः ॥ ८३ ॥ अतः परमजूद्यत्त—न्मम जा-
ग्यविजृंजितं ॥ इत्युक्त्वा सोऽजजन्मौनं । न कुल्याः परदोषिणः ॥ ८४ ॥ विज्ञातवस्तुतत्त्वोऽ-
थ । नृपतिः प्रीतमानसः ॥ सत्कृत्य बंधुवद्भूरि—मुदा तं सस्वजे हृदा ॥ ८५ ॥ ऊचे च
त्वं सुवक्त्रोऽपि । देव्याश्चपलचेतसः ॥ न च प्राचीकटः पाप—महो ते धन्यधीरता ॥ ८६ ॥

यद्वा—जनयति जनशोभां पुष्पमाला सुबद्धा । भवति रतिनिवेशः केशहस्तोऽपि बद्धः ॥ पृथयति दृढबद्धः सिंधुपुरोऽपि शस्यं । श्रियमहह न बंधेऽप्युत्तमानां विकारः ॥८७॥ नृपस्तमथ सामंत—पदेऽवस्थाप्य सुस्थितः ॥ तदन्यर्थनयामुंच—दयितां तां जिघांसतां ॥ ८८ ॥ मंत्री मित्रं जीवितं च । स एवाभून्महीपतेः ॥ कुत्राप्नोति न सन्मानं । देवतेव जितेंद्रियः ॥ ८९ ॥ संजातप्रत्ययो धर्मे । विशिष्यास्थां बबंध सः ॥ न त्यजंति कृतज्ञा हि । कदापि स्वोपकारिणं ॥ ९० ॥ ज्ञात्वा नृपोऽन्यदा काम—रूपभूपं सुदुर्जयं ॥ तंप्रति प्रजिघायामुं । मूर्त्यंतरमिवात्मनः ॥ ९१ ॥ युद्ध्यमानः साभिमानः । समं तेन रणांगणे ॥ वंकचूलोऽभव द्वैरि—भ्रातघातौघजर्जरः ॥ ९२ ॥ मन्यमानः प्रहारांस्ता—नलंकारानिव श्रिये ॥ विजित्य कामरूपेशं । सोऽगादुज्जयिनीं पुरीं ॥ ९३ ॥ प्रहारपीडितो राज्ञा । कारितागमनोत्सवः ॥ वैद्यैश्चिकित्सयांचक्रे । स तातेनेव नंदनः ॥ ९४ ॥ ते तस्य वैरिणां घाता—स्तंत्रज्ञैः संहिता अपि ॥ पुनः पुनर्बिभेदिरे । तै रहः शिक्षिता इव ॥ ९५ ॥ एनमुल्लाघयत वा । चितां प्रविशतास्य वा ॥ अस्मिन् मज्जीविते नष्टे । मा कुरुध्वं जीवितस्पृहां ॥ ९६ ॥ एवं विज्ञीषिता राज्ञा । वै-

ध्याः प्रोचुर्महीपते ॥ एकं गाढप्रहाराणां । वायसामिषमौषधं ॥ ९७ ॥ अपात्र पुण्यपात्रे हि ।
वदतां नस्तदौषधं ॥ भयार्त्तैस्त्वधुना प्रोक्तं । यथोचितमथो कुरु ॥ ९८ ॥ ततः क्षितिपति-
र्गाढ—मालिंग्य गुणगौरवात् ॥ उदश्रुलोचनो वंक—चूलं प्रोचे शुचाकुलः ॥ ९९ ॥ वत्स
त्वदापदं भेत्तुं । कृतास्तास्ताः प्रतिक्रियाः ॥ ममाभाग्यात्पुनः सर्वा । ययुरुषरवृष्टितां ॥ १०० ।
स प्रोचे नाथ मे नास्ति । तृष्णा स्वल्पापि जीविते ॥ एकदास्ति ध्रुवो मृत्यु—र्दैन्यं किं त-
दुपागमे ॥ १ ॥ राजावदन्महासत्व । त्वयि किंचिन्न दुर्घटं ॥ तथापि सुकृदादत्स्व । वायसा-
मिषभेषजं ॥ २ ॥ एवमुक्तोऽपि भूपेन । नासौ नियमनिश्चलः ॥ अभीरुर्मरणाद्भयाद् । विषव-
द्वायसामिषं ॥ ३ ॥ वयस्यं वंकचूलस्य । स सीमाग्रामवर्तिनं । जिनदासं जवाज्जैनं । राजा-
प्याजूहवत्तदा ॥ ४ ॥ पृथिवीपुरुहूतेना—हूतः सोऽपि चलन् पथि ॥ मृगाक्षीद्वयमद्राक्षी-
दद्भुतं रोदनोद्यतं ॥ ५ ॥ के युवां रुदिथः किं वे—त्युक्ते तेनोचतुश्च ते ॥ आवां देव्यौ च्यु-
तो भर्ता—वयोः सौधर्मकल्पतः ॥ ६ ॥ तद्भुवं भूयसीं भ्रांत्वा । चिरं विरहविह्वले ॥ क्षत्रि-
यं वंकचूलाख्यं । प्रेयांसं प्रार्थयावहे ॥ ७ ॥ सोऽद्य त्वदुपरोधेन । नियमं यदि भंक्ष्यति ॥

तदाशु दुर्गतिं गंता । रुदिवस्तेन संप्रति ॥ ८ ॥ मा रोदिष्टं यदिष्टं वा । मया तद्धि करि-
ष्यते ॥ ते इत्याश्वास्य स श्राद्धः । पुरीमुज्जयिनीं ययौ ॥ ९ ॥ प्रणंतं तं नृपोऽवादी—
ज्जिनदास तथा कुरु ॥ यथा प्रियवयस्यस्ते—ऽश्नाति काकामिषौषधं ॥ १० ॥ राजादेशं स-
मासाद्य । स ययौ मित्रमंदिरं ॥ विधाय कुशलप्रश्नं । स्निग्धवाग्भिरभाषत ॥ ११ ॥ किमौष-
धधिया काक—मांसं नाश्नासि बांधव ॥ नियमाः खलु वार्तानां । नार्तानां हि कदाचन ॥१२॥
राजाभियोगाद्भंगेऽपि । नियमानां न दूषणं ॥ जानन् जैनीमिमामाज्ञां । किं करोषि कदाग्रहं
॥ १३ ॥ पटूभूतः पुनः कुर्या—स्तपः पातकघातकं ॥ तत् श्रुत्वा वंकचूलोऽपि । ससूत्कारम-
वोचत ॥ १४ ॥ एष मोहस्वभावार्त्ता । वार्तापि तव दुःश्रवा ॥ दूनोत्ययःशलाकेव । प्रविष्टा
कर्णकोटरं ॥ १५ ॥ यत्स्यान्नियमभंगेन । तेन किं जीवितेन मे ॥ स्खलयज्ज्वालनोत्थेन । प्र-
काशेनेव धीधन ॥ १६ ॥ सखे नियमभंगे मां । युंजता सुहृदापि हा ॥ शेषलोकपदे स्वा-
त्मा । भवताद्य न्यवेश्यत ॥ १७ ॥ यस्य पश्चादपि प्राय—श्चित्तं ग्राह्यं विचक्षणैः ॥ तत्पाप-
मकृतं श्रेयः । किमत्रार्थे विमुह्यसि ॥ १८ ॥ कृपामय मयि स्नेहं । निःसंदेहं दधासि चेत् ॥

तद्देहि विगतालस्यः । प्रांतकालस्य शंबलं ॥ १९ ॥ एवं सुभटतां पुष्ण—न्नतृष्णः स महा-
मनाः ॥ यतिवज्जिनदासेन । क्रियामंत्यामकार्यत ॥ २० ॥ प्रत्याख्याताखिलाहारः । स्मृतपं-
चनमस्क्रियः ॥ निर्वैरः सर्वजीवेषु । चतुःशरणसंगतः ॥ २१ ॥ अमुंचन्नौरसं सत्वं । सत्त्वं
संसृतेः स्मरन् ॥ प्राक्कृतं दुःकृतं निंदन् । सुकृतं चानुमोदयन् ॥ २२ ॥ सुहृदा जिनदासेन ।
चेत्यमानः प्रतिक्षणं ॥ द्वादशं त्रैदशं धाम । विपद्यांते जगाम सः ॥ २३ ॥ त्रिभिर्विशेषकं ॥
निवृत्तो जिनदासोऽथ । पथि ते द्वे अपि स्त्रियौ ॥ रुदत्यौ पूर्ववद्वीक्ष्य । सवैलक्ष्यमवोचत
॥ २४ ॥ जडे जब्नूननेत्राभ्यां । किमत्रैवं विलप्यते ॥ अखंडितव्रतः सोऽभू—द्भवत्योः किं
न वल्लभः ॥ २५ ॥ निःश्वस्यात्रोचतां देव्यौ । किं स्वछाशय पृछसि ॥ स प्रांताराधनाधिक्या-
ज्जगाम स्वर्गमच्युतं ॥ २६ ॥ तत् श्रुत्वा परमानंदं । जिनदासोऽन्वभूत् क्षणात् ॥ ध्यायंश्च
सुहृदो ध्यान—साधनां स्वगृहं ययौ ॥ २७ ॥ स्वल्पोऽप्यभक्ष्यनियमः प्रददादत्यनल्प-सौख्यं
सुपर्वपदमापदि पाल्यमानः ॥ यत्स्वर्गमाप बलिभुक्पिशितोपभोग—त्यागेन मृत्युसमये कि-
ल वंकचूलः ॥ २८ ॥ इति सप्तमव्रते वंकचूलकथा समाप्ता. ॥

भोजनतोऽत्र व्रते पंचातियारा वर्ज्यास्तद्यथा—सचित्ताहारः, सचित्तप्रतिबद्धाहारः, अपक्वदुःपक्वतुच्छौषधिजक्षणं चेति. एते च प्रत्याख्यातसचित्तस्य कृततत्प्रमाणस्य वा. दृष्टव्याः, तत्राद्यस्यानाभोगातिक्रमादिना कंदादि सचित्तं जक्षयत इतरस्य तु प्रत्याख्यानं सचित्तमश्नुतः प्रथमोऽतिचारः. तथा सचित्ते वृक्षादौ प्रतिबद्धं गोंदादि, यद्वा सचित्ते आम्रगोलिकादौ प्रतिबद्धं पक्वत्वगाद्यश्नतो मुखे क्षिप्त्वा कटाहमचित्तं जक्षयिष्यामि, सचित्तं त्वस्थिकं त्यक्ष्यामीति बुद्ध्या व्रतसापेक्षत्वाद् द्वितीयोऽतिचारः. अपक्वाया अग्न्यसंस्कृताया औषधेर्गोधूमादेराहारे तृतीयोऽतिचारः. अयं भावः—अग्न्यसंस्कृतत्वात्संभवत्सचिवायवमपि कणिक्कादिकं पिष्टत्वादचित्तमिदमिति बुद्ध्या यदाश्नाति तदायमतिचारः. दुःपक्वाया अग्निना संस्कृतासंस्कृतस्वरूपत्वेन संभवत्सचित्तावयवाया औषधेः पृथुकादिरूपाया अग्निपक्वत्वादचित्तमिदमिति बुद्ध्या जक्षयतश्चतुर्थोऽतिचारः. तुच्छास्तादृक्तृप्त्यजनकत्वादसारा औषधयः कोमलमुद्गादिफलिकारूपास्तद्भक्षणात्पंचमोऽतिचारः. ननु यद्येताः सचित्तास्तदा तद्भक्षणे आद्य एवातिचारः, अथाचित्तास्तदातिचार एव नास्ति. सत्यं, किंतु योऽत्यंतसावद्यभीरुतया सचि-

त्तं प्रत्याख्याति, तस्या अचित्ता अप्येता न्नक्षयतस्तथाविधतृप्त्यन्नावाल्लौल्यमेवावशिष्यते, अतोऽचित्तीकृता अप्येता न न्नक्ष्यास्तन्नक्षणे च वस्तुतो व्रतविरोधादतिचारः. एवं रात्रिन्नोजनमांसादिव्रतेषु वस्त्रादिपरिन्नोगव्रतेषु वाऽनान्नोगातिक्रमादिना बहवोऽप्यतिचाराः संन्नवंति. ते उपलक्षणत्वात्स्वयमप्यूह्याः. तदेवमुक्तं न्नोजनतो न्नोगोपन्नोगव्रतं. अथ कर्मतस्तदाह—

॥ मूलम् ॥—कम्माउ जइ कम्मं । विणा न तीरेइ निव्वहेउत्तो ॥ पनरसकम्मादाणे । चइए अब्भंपि खरकम्मं ॥ ७१ ॥ व्याख्या—कर्मतः कर्माश्रित्य श्रावकेणोत्सर्गतो न किंचित्सावद्यं कर्म कर्तव्यं, निरारंन्नेणैव न्नाव्यमित्यर्थः. यदि पुनः कर्म विना न निर्वहति तदा पंचदश कर्माण्यादायंते एन्निरिति कर्मादानानि त्यजति, तान्यमूनि—अंगारवनशकटन्नाटकस्फोटककर्माणि दंतलाक्षारसकेशविषवाणिज्यानि यंत्रपीडा निर्लांछनं दवदावं सरोह्रदादिशोषः, असतीपोषणश्चेति. तत्राजीविकार्थमंगारकरणन्नाष्ट्रन्नर्जनकुंन्नकारलोहकारसुवर्णकारत्वेष्टिकादिबह्वारंन्नकरणमंगारकरणमंगारकर्म. १. वृक्षादेः पत्रपुष्पादेर्वा छेदनविक्रयाद्यारंन्नेन जीवनं वनकर्म. २. शकटानां तदंगानां वा घटनेन शाकटिकत्वेन वा जीवनं शकटकर्म

३. स्वशकटवृषनादिना परन्नारवहनात्परेषां वा मूल्येन स्वशकटाद्यर्पणाज्जीवनं नाटककर्म. ४. कुद्दालहलादिन्निर्भूमिविदारणात्पाषाणादिघटनाद्वा जीवनं स्फोटककर्म. ५. जल्पपूर्वंपुलिंद्रादेर्दंतिदंतग्रहणं दंतवाणिज्यं, उपलक्षणं चेदं शंखचर्मचामरादीनां ६. लाक्षयवाणिज्यं प्रतीतं, उपलक्षणं चेदं नीलीमनःशिलादीनां सुलितधान्यादेर्वा ७. सुरामद्यादिविक्रयो रसवाणिज्यं ८. विषवाणिज्यं जीवघातकशस्त्रादयो देवदारुहरितालाद्युपलक्षणं. ९. दासीगवादिविक्रयः केशवाणिज्यं १०. तिलेक्ष्वादीनां यंत्रैः पीडनं यंत्रपीडा ११. गोतुरगादीनां षंढत्वापादननासावेधांकनगोकर्णकंबलादिछेदनं निर्लांछनकर्म १२. तृणादिवृद्ध्यै क्षेत्रादिशोधनाय वाग्नेर्ज्वालनं दवदानं १३. गोधूमादिवापार्थं सरोह्रदादिशोषः प्रतीतः १४. दास्यादिकं संवर्ध्य तत्संबंधे नाटीग्रहणमसतीपोषः, उपलक्षणं चेदं—शुकसारिकाश्वानमार्जारमयूराद्यधर्मप्राणिपोषश्च. १५. एतानि निबिडकर्मबंधनिबंधनत्वात्समयनाषया कर्मादानानीत्युच्यते, न केवलममून्येव त्यजति, अन्यदपि खरं निस्तृंशाध्यवसायसाध्यं कर्म कोट्टपालगुप्तिपालादिकं त्यजति, अल्पसावद्येनैव कर्मणा निर्वहतीत्यर्थः. पुनरपि कर्मविषयं विशेषमाह—

॥ मूलम् ॥—इयरंपि हु सावज्जं । पढमं कम्मं न तं समारजइ ॥ जं दहूण पयट्टइ । आरंजे अवरिउ लोउ ॥ ७२ ॥ व्याख्या—इतरदनिषिद्धमपि तत्सावद्यं गृहारंजग्रामांतरगमनशकटखेटनादिकं कर्म प्रथममितरेन्यः पूर्वं न समारजते श्रावकस्तत्किमित्याह—यत्कर्म क्रियमाणं दृष्ट्वाऽविरतोऽयतनापरो लोक आरंजे तत्र कर्मणि करणे प्रवर्तते, लोकस्य गतानुगतिकत्वात्, यदा तुल्यकार्यकर्तारो बहवः समुदिता जवंति तदानीमयं विधिर्दृष्टव्यः, प्रथमप्रारंजकत्वेन सकलकृतारंजहेतुत्वमस्य नाभूदिति. उक्तं च—कार्ये शुजेऽशुजे वापि । प्रवृत्तियैः कृतादितः ॥ ज्ञेयास्ते तस्य कर्तारः । पश्चादप्युपचारतः ॥ १ ॥ कर्मतश्चात्र व्रते पंचदशातिचारा वर्ज्यास्ते चांगारकर्मादय एव, नन्वंगारकर्मादयः कर्मादानप्रत्याख्याते प्रत्याख्याता एव. ततस्तत्प्रवृत्तौ जंग एव स्यान्नातिचारः. सत्यं, किंत्वाकुट्या कुर्वतो जंगः, अनाजोगातिक्रमादिना त्वतिचार इति. अत्र जावनागाथा—सव्वेसिं साहूणं । नमामि जेहिं अहियंति नाऊणं ॥ तिविहेण कामजोगा । चत्ता एवं विचिंतिज्जा ॥ १ ॥ उक्तं सदृष्टांतं द्वितीयं गुणव्रतं. अथ तृतीयमनर्थदंमविरतिव्रतं प्रस्तूयते—तत्र यः स्वजनशरीरधर्माणामर्था-

यारंभः क्रियते सोऽर्थदंडः शेषस्त्वनर्थदंड इत्येतदेवाह—

॥ मूलम् ॥—दंडिज्जइ जेण जिउ । वज्जिय नियदेहसयणधम्मठं ॥ सो आरंजो केवल—पावफलोऽणत्थदंडत्ति ॥ ७३ ॥ व्याख्या—उक्तार्था, नवरं दंड्यत इव दंड्यते धर्मधनहीनः क्रियते, यद्वानर्थो निःप्रयोजनो दंडो भूतवधोऽस्मिन्नित्यनर्थदंडः, एवमनर्थदंडशब्दार्थमुक्त्वा प्रस्तुतयोजनामाह—

॥ मूलम् ॥—अवझाणपावउवएस—हिंसदाणप्पमायचरिएहिं ॥ जं चउहा सो मुच्चइ । गुणव्वयं तं जवे तइयं ॥ ७४ ॥ व्याख्या—अपकृष्टं ध्यानमपध्यानमार्त्तं रौद्रं च पापहेतुत्वात् १. पापं कृष्यादिकर्म तस्योपदेशो दाक्षिण्यस्थानं विनानुशासनं पापोपदेशः. २. हिंसनशीलं हिंस्रं विषाग्निहलशस्त्रादि, तस्य दानं दाक्षिण्यस्थानं विनाऽसंयताय समर्पणं हिंस्रप्रदानं ३. प्रमादो मद्यादिस्तेन तस्य वा चरितमाचरणं प्रमादाचरितं. यद्वा प्रमादचरितमालस्योपहतत्वं, तच्चास्थगितघृतदध्यादिजाजनधारणादिना सत्त्वोपघातकं, यदेजिर्लक्षणैश्चतुर्धा चतुःप्रकारः सोऽनर्थदंड उच्यते, तत्तृतीयं गुणव्रतमनर्थदंडविरतिनामकं जवेत्. ४. अ-

ता वक्तुं शक्यास्ततो वैरवृद्धिरूपस्य प्रमादाचरितस्य दृष्टांतमाह—

॥ मूलम् ॥—वहंता वेरमणत्थ—दंभिणो जरियदुरियभंभारा ॥ जाया सुभूमरामा । पइठिया अप्पइठाणे ॥ ७९ ॥ व्याख्या—सुबोधा, नवरमप्रतिष्ठानो नाम सप्तमनरके चतुर्दिगवस्थानां कालमहाकालरौरवमहारौरवाख्यानां चतुर्णां नरकावासानां मध्यवर्ती नरकेंद्रकः. सुभूमरामकथा चैवं—

वसंतपुरवास्तव्यो—ऽग्निसंज्ञः कुलपुत्रकः ॥ क्वापि व्रजंश्च्युतः सार्था—दाश्रययौ तापसाश्रमं ॥ १ ॥ तत्राग्निर्जवनिर्विण्णो । यमाख्यस्य तपस्विनः ॥ शिष्यो बभूव तेनासौ । जमदग्निरिति श्रुतः ॥ २ ॥ आशा वासा निराहारो । भस्मोध्धूलितविग्रहः ॥ आतपस्थः तपस्तीव्रं । स चकारोध्र्ध्वबाहुकः ॥३॥ अत्रांतरे वयस्यौ द्वौ । सम्यग्मिथ्यादृशौ मृतौ ॥ गतौ स्वर्गमपि प्राग्व—दास्तां धर्मविवादिनौ ॥ ४॥ जिनो देवो गुरुः साधु—र्यत्र धर्मः कृपामयः ॥ तदार्हतं मतं श्रेष्ट—मिति जैनः सुरोऽभ्यधात् ॥ ५ ॥ अपरस्तु जगौ धर्मो—ऽस्माकं केनोपमीयते ॥ यत्र देवः शिवः शैवो । गुरुर्धर्मः पवित्रता ॥ ६ ॥ एवं तौ धर्मसंवाद—मकुषातां यदा तदा ॥

मिथः स्म कलहायेते । वयस्यावपि वैरिवत् ॥ ७ ॥ जग्मौ स्नेहच्छिदा जग्म—नेव वादेन ते-
न तौ ॥ परीक्ष्यादूहे धर्म—मित्यालोचयतां मिथः ॥ ८ ॥ मिथ्यादृशा बज्ञाषे प्राक् । शै-
वो धर्मः परीक्ष्यतां ॥ अक्षोज्ञः शोज्ञते यत्र । जमदग्निस्तपोधनः ॥ ए ॥ अथावतीर्य तौ
स्वर्गा—च्चटकद्वंद्वरूपिणौ ॥ कुलायं चक्रतुः कूर्चे । जमदग्नेस्तपस्विनः ॥ १० ॥ चटकश्चटिकां
स्माह । यास्याम्येष हिमालयं ॥ स्वपित्रोर्मिलितुं त्वं तु । सुखं तिष्ठेरिह प्रिये ॥ ११ ॥ स प्र-
त्युवाच तत्र त्वं । गतः कृत्वा नवां प्रियां ॥ यदि तिष्ठसि तद्भर्तृ—मुक्ताया मम का गतिः
॥ १२ ॥ चटकः स्माह जीवंत्यां । त्वयि यद्यपरां प्रियां ॥ स्वीकरोमि तदा गृह्ये । दुरितैर्गोव-
धादिज्ञिः ॥ १३ ॥ नामीज्ञिः शपथैर्नेत—श्चेतः प्रत्येति मामकं ॥ तत्त्वां मुंचामि यद्यस्य ।
कृषेः पापं प्रतीछसि ॥ १४ ॥ श्रुत्वेति चटिकावाचं । वाचालः प्रत्युवाच सः ॥ नाहं पापमि-
दं धर्तुं । शक्नोम्यन्यत्पुनर्वद ॥ १५ ॥ तयोर्मिथः कथा एता । निश्चलीभूय शृएवता ॥ विस्मि-
तेनापि कोपेन । जज्वले जमदग्निना ॥ १६ ॥ जीवांतक इव द्वंद्वं । तत्कराज्यां विधृत्य सः ॥
प्रोचे रे मुखरौ ब्रूतं । किं मया दुःकृतं कृतं ॥१७॥ उवाच चटकः कोपं । मुक्त्वा पृछसि चे-

थ चातुर्विध्यमेव विवृणोति—

॥ मूलम् ॥—अनियट्टीपरिणामो । अट्टे रुद्दे इमं अवज्झाणं ॥ दम वसहे कुणसु किसिं । इच्चाइ पावउवएसं ॥ ७२ ॥ जंतहलमुरुलआउह—अग्गिपयाणं च हिंसदाणंति ॥ जलकेलिजीवजोहण—दोलाजूयाइवसणाइं ॥ ७६ ॥ निच्चं चियवरकेवो । वम्महसत्थेसु सव्वनिसिसुअणं ॥ विकहा वेरविवड्ढी । पमायचरियं इय चइए ॥ ७७ ॥ व्याख्या—तिस्रोऽपि सुबोधाः, नवरमार्त्तरौद्रस्वरूपमिदं—राज्योपभोगशयनासनवाहनेषु । स्त्रीगंधमाल्यमणिरत्नविभूषणेषु ॥ इच्छाभिलाषमतिमात्रमुपैति मोहा—द्ध्यानं तदार्त्तमिति संप्रवदंति तद्ज्ञाः ॥१॥ संछेदनैर्दहनभंजनमारणैश्च । बंधप्रहारदमनैर्विनिकृंतनैश्च ॥ यो याति रागमुपयाति च नानुकंपां । ध्यानं तु रौद्रमिति संप्रवदंति तद्ज्ञाः ॥ २ ॥ तत्रार्त्तरौद्रे च ध्याने योऽनिवृत्तिपरिणाम इदमपध्यानमुच्यते, अयं भावः—प्रायो धार्मिकाणामप्यंतरांतरापध्यानं जायत एव, पुनस्ते ज्ञानबलादुन्मार्गगमपि स्वमनः संयम्य पुनः सन्मार्गमानयति, ये तु सातत्येन तत्र प्रवर्तंते तेषां ह्यनर्थदंडः, तथा द्वितीयगाथायां जीवयोधनं विनोदार्थं मल्लकुक्कुटादिभिर्नि-

युद्धादिविधापनं, दोला तरुशाखादिष्वंदोलनं, द्यूतादिव्यसनानीमानि—द्यूतं च मांसं च सुरा च वेश्या । पापर्द्धिचौर्यं परदारसेवा ॥ एतानि सप्त व्यसनानि लोके । पापाधिके पुंसि सदा भवंति ॥ १ ॥ अत्र पापर्द्धिराखेटकः, शेषाणि सुबोधानि. मन्मथशास्त्रेषु वात्स्यायनादिषु नित्यं शेषकार्यपरिहारेण व्याक्षेपो व्यावृतत्वं, सर्वां निशां रोगश्रमादिकं मुक्त्वा स्वपनं, कथा विकथा ताश्च भक्तराज्यदेशस्त्रीकथाभेदाच्चतस्रः, तत्र—विचित्रभक्तसलिलफलादीनां सरसत्वादिसंशनं भक्तकथा १. गौरुसाख्यादिराजानां राजपतिगजपत्यश्वपतित्वयोऊत्वविलासित्वादिश्लाघनं राजकथा २. पूर्वपश्चिमादिदिशां वस्त्रवाजिधनधान्यकनककर्पूरादितत्तदुत्तमवस्तूत्पत्तिप्रथनं देशकथा ३. नानादेशजनारीणां वेषविभ्रमवैदग्ध्यादिवर्णनं स्त्रीकथा ४. एतद्वैपरीत्येन निंदयापि विकथा भवंति, तथा येनापराधः कृतस्तत्पुत्रपौत्राद्यैस्तज्ज्ञात्या वा सह वैरकरणं वैरविवृद्धिः. अथास्यानर्थदंडस्य विशेषत्याज्यतामाह—

॥ मूलम् ॥—पाएण वज्जियव्वो । गिहिणा जहसत्ति अत्थदंडोवि ॥ कह अहिगयपरमत्थो । अणत्थदंडं पउंजेइ ॥ ७७ ॥ व्याख्या—स्पष्टा. न हि सर्वेषामनर्थदंडभेदानां दृष्टां-

ता वक्तुं शक्यास्ततो वैरवृद्धिरूपस्य प्रमादाचरितस्य दृष्टांतमाह—

॥ मूलम् ॥—वड्ढंता वेरमणत्थ—दंरूिणो जरियदुरियजंजारा ॥ जाया सुभूमरामा । पइडिया अप्पइट्ठाणे ॥ ३७ ॥ व्याख्या—सुबोधा, नवरमप्रतिष्ठानो नाम सप्तमनरके चतुर्दिगवस्थानां कालमहाकालरौरवमहारौरवाख्यानां चतुर्णां नरकावासानां मध्यवर्ती नरकेंद्रकः. सुभूमरामकथा चैवं—

वसंतपुरवास्तव्यो—ऽग्निसंज्ञः कुलपुत्रकः ॥ क्वापि व्रजंश्च्युतः सार्था—त्प्रययौ तापसाश्रमं ॥ १ ॥ तत्राग्निर्जवनिर्विण्णो । यमाख्यस्य तपस्विनः ॥ शिष्यो बजूव तेनासौ । जमदग्निरिति श्रुतः ॥ २ ॥ आशा वासा निराहारो । जस्मोध्धूलितविग्रहः ॥ आतपस्थः तपस्तीव्रं । स चकारोध्ध्र्वबाहुकः ॥ ३ ॥ अत्रांतरे वयस्यौ द्वौ । सम्यग्मिथ्यादृशौ मृतौ ॥ गतौ स्वर्गमपि प्राग्व—दास्तां धर्मविवादिनौ ॥ ४ ॥ जिनो देवो गुरुः साधु—र्यत्र धर्मः कृपामयः ॥ तदार्हतं मतं श्रेष्ट—मिति जैनः सुरोऽन्यधात् ॥ ५ ॥ अपरस्तु जगौ धर्मो—ऽस्माकं केनोपमीयते ॥ यत्र देवः शिवः शैवो । गुरुर्धर्मः पवित्रता ॥ ६ ॥ एवं तौ धर्मसंवाद—मकुषातां यदा तदा ॥

मिथः स्म कलहायेते । वयस्यावपि वैरिवत् ॥ ७ ॥ जग्मौ स्नेहच्छिदा त्रस्त—नेव वादेन ते-
न तौ ॥ परीक्ष्याद्दूहे धर्म—मित्यालोचयतां मिथः ॥ ८ ॥ मिथ्यादृशा बजाषे प्राक् । शै-
वो धर्मः परीक्ष्यतां ॥ अक्षोत्रः शोजते यत्र । जमदग्निस्तपोधनः ॥ ए ॥ अथावतीर्य तौ
स्वर्गा—च्चटकद्वंद्वरूपिणौ ॥ कुलायं चक्रतुः कूर्चे । जमदग्नेस्तपस्विनः ॥ १० ॥ चटकश्चटिकां
स्माह । यास्याम्येष हिमालयं ॥ स्वपित्रोर्मिलितुं त्वं तु । सुखं तिष्ठेरिह प्रिये ॥ ११ ॥ स प्र-
त्युवाच तत्र त्वं । गतः कृत्वा नवां प्रियां ॥ यदि तिष्ठसि तद्भर्तृ-मुक्ताया मम का गतिः
॥ १२ ॥ चटकः स्माह जीवंत्यां । त्वयि यद्यपरां प्रियां ॥ स्वीकरोमि तदा गृह्ये । दुरितैर्गोव-
धादिजैः ॥ १३ ॥ नामीजिः शपथैर्नेत—श्चेतः प्रत्येति मामकं ॥ तत्त्वां मुंचामि यद्यस्य ।
ऋषेः पापं प्रतीच्छसि ॥ १४ ॥ श्रुत्वेति चटिकावाचं । वाचालः प्रत्युवाच सः ॥ नाहं पापमि-
दं धर्तुं । शक्नोम्यन्यत्पुनर्वद ॥ १५ ॥ तयोर्मिथः कथा एता । निश्चलीभूय शृण्वता ॥ विस्मि-
तेनापि कोपेन । जज्वले जमदग्निना ॥ १६ ॥ जीवांतक इव द्वंद्वं । तत्कराभ्यां विधृत्य सः ॥
प्रोचे रे मुखरौ ब्रूतं । किं मया दुःकृतं कृतं ॥१७॥ उवाच चटकः कोपं । मुक्त्वा पृच्छसि चे-

न्मुने ॥ तदा वक्ष्यामि तिष्टंति । क्रुधे हि न हिता गिरः ॥ १७॥ ऋषे त्वमनपत्योऽसि । किं दुष्कृतमतःपरं ॥ अपुत्रस्य गतिर्नास्ती—त्यागमोऽप्यत्र साक्ष्यदः ॥ १९ ॥ ततो दध्यौ मुनि-र्नायं । पशुः पशुरहं पुनः ॥ तपस्या मेऽनपत्यस्या—भूद्भस्मनिहुतं हहा ॥ २० ॥ निस्त्रपः स तपस्त्यक्त्वा । दधावे दयिताशया ॥ तिरश्चामपि सुभ्रंशा । वासना हि कुलिंगिनां ॥ २१ ॥ निवृत्तौ तौ ततो देवौ । जातापशकुनाविव ॥ ऋषेर्वार्तां प्रकुर्वाणौ । जग्मतुर्मिथिलां पुरीं ॥२२॥ तत्र पद्मरथो राजा । तदाभिनवबोधिभाक् ॥ चंपांप्रत्यच्चलन्नंतुं । वासुपूज्याभिधं गुरुं ॥२३॥ त्यक्तभक्तपयःपाद्र—पभोगः पदिकः पथि ॥ वंदिष्येऽहं गुरूनेव—मभिजग्राह पार्थिवः ॥२४॥ देवं मिथ्यादृशं प्रोचे । सम्यग्दृष्टिस्तदामरः ॥ वयस्यामुं परीक्षस्व । जिनधर्मनवातिथिं ॥२५॥ ततोऽसौ विदधे वायु—वीचीरभिमुखस्तथा ॥ यथा तृणेव भूपस्य । दुःमुःसारिता चमूः ॥ २६ ॥ किं सेनयानया धर्म—ध्यानरक्ष्यजुषो मम ॥ इति सेनापरिभ्रष्टो—ऽप्यभूद्भूमा-ननाकुलः ॥ २७ ॥ तस्य मर्मणि विध्यंतो । वायुनुन्नाः शरा इव ॥ कर्करा बिभिदुर्देहं । न चुक्षोभ तथापि सः ॥ २८ ॥ कल्पाभ्रपटलेनेव । पांशुवृष्टिं वितन्वता ॥ वपुः कलुषितं तस्य ।

देवेन न पुनर्मनः ॥ २ए ॥ धरां क्रकचधाराव—दंतुरां विबुधो व्यधात् ॥ विदार्यैतेस्म तत्पा-
द—कमलौ कोमलौ यया ॥ ३० ॥ पदे पदे करङ्क—बलाड्रागं वमन्निव ॥ तां भुवं सो-
ऽतिचक्राम । निष्काम इव संस्रातिं ॥ ३१ ॥ द्वादशार्काधिकस्तिग्म—त्विट् तदानीं तपन्नपि ॥
गुरुनक्तिसुधासिक्तं । न तं क्ष्मापमतापयत् ॥ ३२ ॥ पथि भूत्वा पुरः पाणौ । कुर्वन्नुदकमोद-
कान् ॥ देवो भूदेवरूपेण । नरदेवमुपस्थितः ॥ ३३ ॥ तथाप्यक्षुभिते क्षुतृट्—पथपीडाश्च
मृष्यति ॥ क्षितिनर्तरि मिथ्यादृक् । त्रिदशोंतर्विसिष्मिये ॥ ३४ ॥ स मित्रमभ्यधादेतं । य-
द्यथ व्यथयाम्यहं ॥ स्यादेवास्य तदा मृत्यु—र्नायं चलति मेरुवत् ॥ ३५ ॥ गृहिणोऽपीदृशा
यत्र । तद्धन्यं जिनशासनं ॥ तदेवाहं प्रपन्नोऽस्मि । कल्पद्रुमिव दुर्गतः ॥ ३६ ॥ तौ प्रादुर्भू-
य निर्माय । पुष्पवृष्टिं प्रशस्य च ॥ बद्धांजली सुरौ स्वागः । क्षमयामासतुर्नृपं ॥ ३७ ॥ स्व-
पाणिपंकजक्रोडे । मरालीकृत्य भूपतिं ॥ उपचंपं मुमुचतुः । स्वयं च दिवमीयतुः ॥ ३७ ॥ दे-
वानुन्नावतस्तत्रा—गतया सेनया सह ॥ भूपो गुरूनवंदिष्ट । दिष्टत्रयविदो मुदा ॥ ३ए॥ नि-
पीय तद्वचःसार—मसारं चिंतयन् नवं ॥ स तत्रैव समासूत्र्य । राज्यसूत्रमभूद् व्रती ॥४०॥

क्रतुणा क्षोभितः सोऽपि । यमदग्निर्ययौ पुरं ॥ आरण्यकः पशुरिव । नेदिष्टं नेमिकोष्टकं ॥४१॥ श्मशानकीलवत्कोऽयं । समेतीतीक्षितो जनैः ॥ स भूपं भूरिकन्यत्वा—जितशत्रुमुपेयिवान् ॥ ४२ ॥ प्रणम्यागमने हेतु—मनुयुक्तः स भूभुजा ॥ त्वं धन्यकन्यकामेकां । मह्यं देहीत्यवोचत ॥ ४३ ॥ किमेष विकलः ।किं वा । वातकी किं पिशाचकी ॥ यदीदृशदशांगोऽपि । भूपकन्यां समीहते ॥४४॥ दत्ते शापमयं ताव—देवमेव निषेधितः ॥ तत्किं कार्यमिति ध्याय—न्मौनमाशिश्रियन्नृपः ॥४५॥ युग्मं ॥ बह्व्यो बाह्व्यो ध्रुवावश्यो—वाह्याः संति सुतास्तव ॥ आश्वेकस्याः प्रदानेऽपि । किमेवं विमृशन्नसि ॥४६ ॥ तेनेत्युक्ते नृपोऽवादी—न्मुनींद्रैवं किमुच्यते ॥ एते वयममी दारा । इदं राज्यं तवैव यत् ॥४७॥ पुनरेताः सुताः सर्वा । अपि संति स्वयंवराः ॥ त्वं त्वेतदर्थमेवार्थी । चिंताक्रांतं ततो मनः ॥ ४८ ॥ प्रसीद तत्र गत्वा त्वं । ताभ्यः स्वं परिरोचय ॥ तासु कामयते या त्वां । मुने तामुररीकुरु ॥ ४९ ॥ स कन्यांतःपुरं प्राप्या—पश्यत्कन्याः परःशताः ॥ वरं कामयते कामां । युष्मास्वित्यवदत्तथा ॥ ५० ॥ स्वरूपगर्विताः सर्वा—गीर्वाणरणरामासुराः ॥ ता हसंत्योऽजुगुप्संत । तं दौर्भाग्यमिवांगयुक् ॥५१॥

मुनिः क्रुद्धोऽथ शापेन । जमदग्निर्यमाकृतिः ॥ सौभाग्यमदमुच्छेत्तुं । सर्वाः कुब्जीचकार ताः
॥ ५२ ॥ कन्याकुब्जमिति ख्यातिं । ततस्तं नगरं गतं ॥ निर्गच्छन्मुनिरप्येकां । बालामालो-
कतांगणे ॥ ५३ ॥ रेणुना रममाणत्वा—द्रेणुकेति निगद्य सः ॥ मातुलिंगं ददौ तस्यै । सापि
प्रासारयत्करं ॥ ५४ ॥ एषा मामिच्छतीत्युक्त—स्तेन तां तस्य दत्तवान् ॥ उत्तीर्णा शृंखला शृं-
गै—रिति सभ्यान् वदन्नृपः ॥ ५५ ॥ शालीसंबंधतोऽभीकाः । शेषा नृपसुतास्तदा ॥ शाली-
रूपकमस्मभ्यं । देहीति तमवेष्टयन् ॥ ५६ ॥ मयि भस्मधने द्रव्यं । क मिष्टान्न इवोषरे ॥ स-
दैन्यमिति जल्पाकं । कन्यकास्तं बभाषिरे ॥ ५७ ॥ तद्रूपकपदेऽस्माकं । रूपं देहीति तद्गि-
रा ॥ क्षणात्ताः सरलीचक्रे । ऋषिराच्छोट्य वारिणा ॥ ५८ ॥ तां च बालां हृदि न्यस्य । कामी
हारलतामिव ॥ पुनर्वनं मुनिः प्राप । तद्वासभवनं यथा ॥ ५९ ॥ प्रैषयद्गाश्च धात्रीश्च । तां
संवर्धयितुं नृपः ॥ भूयः किंचन जामातु—र्देयमेतावता च किं ॥ ६० ॥ सा बाला पालिता
भेजे । मुनिना वांछितं वयः ॥ निरपायमुपायंस्त । सोऽपि तामग्निसाक्षिकं ॥ ६१ ॥ इवांकग-
णकः कोटे—र्लक्षं पश्चान्निवृत्त्य सः ॥ वानप्रस्थाश्रमाद्भेजे । जमदग्निर्गृहाश्रमं ॥ ६२ ॥ रेणु-

कायामुदर्थाया—मृषिश्चक्रे चरुद्वयं ॥ एकं ब्राह्मं चरुं पत्न्यै । पुत्रं प्राप्तुं द्विजोत्तमं ॥६३॥
अन्यं क्षात्रं चरुं पत्न्या । प्रेरितस्तत्स्वसुः कृते ॥ अनंतवीर्यनृपाल—जायाया हस्तिनापुरे
॥ ६४ ॥ मास्मन्मम पुत्रोऽपि । मद्वदारण्यकः सदा ॥ विचिंत्येति ऋषेः पत्नी । चरुं क्षात्र-
मभक्षयत् ॥ ६५ ॥ द्वितीयं च स्वसुः प्रैषी—ज्जातौ च तनयौ तयोः ॥ रेणुकाया अभूद्रा-
मः । कृतवीर्यश्च तत्स्वसुः ॥ ६६ ॥ तस्मिन्नृषिकुले क्षांते । क्षात्रं तेजः प्रकाशयन् ॥ विद्युत्पुं-
ज इवांभोदे । रामः शैशवमत्यगात् ॥ ६७ ॥ कोऽपि तत्रागतो रोगा—च्च्युतविद्योऽतिसार-
की ॥ अचिकित्स्यत रामेणौ—षधैः स्वैरेव खेचरः ॥ ६८ ॥ स कृतज्ञतया तस्मै । विद्यां पा-
रशवीं ददौ ॥ गत्वा शरवणं सोऽपि । विद्यां तां मंक्ष्वसाधयत् ॥ ६९ ॥ जातपक्ष इव व्या-
लः । स रामो विद्यया तया ॥ प्राप्तः परशुरामाख्यां । कस्य नाभूद्भयंकरः ॥ ७० ॥ स्वसुः स्ने-
हाद्गतान्येद्यू । रेणुका हास्तिनं पुरं ॥ वनवासादिवोद्विग्ना । तस्थौ सुस्थमनाश्चिरं ॥७१॥ अ-
भुक्तानंतवीर्यस्ता—महल्यामिव वासवः ॥ का का आसवमत्तस्य । कृत्याकृत्यविचारणा ॥७२॥
काले तस्या अभूत्पुत्रः । सह पुत्रेण तेन तां ॥ मुनिः स्वाश्रममानैषी—दर्थी दोषं न वीक्षते

॥ ७३ ॥ मातरं सह पुत्रेण । रामः परशुनाच्छिनत् ॥ कणिशे वीक्षिते यष्टि—मिक्षोरिव कृ-
षीवलः ॥ ७४ ॥ तत्स्वस्त्रानंतवीर्यस्य । निजभर्तुर्निवेदितः ॥ स वृत्तांतोंबुधिक्षोभि—मंथाच-
लतुलां दधौ ॥ ७५ ॥ प्रेयस्या प्रेरितः सोऽपि । कोपतश्चलितस्ततः ॥ जमदग्न्याश्रमं गत्वा
। गृह्णातिस्म गवादिकं ॥ ७६ ॥ तापसाक्रंदमाकर्ण्य । रामः संग्रामकौतुकी ॥ धावित्वानंतवी-
र्यस्य । प्राणान् व्याद्रुह पर्शुना ॥ ७७ ॥ सामंतैः कृतवीर्योऽथ । तस्य पट्टे निवेशितः ॥ स्व-
मातुर्मुखतोऽश्रौषी—न्मृत्युव्यतिकरं पितुः ॥ ७८ ॥ सोऽथागत्य क्रुधाकार्षी—ज्जामदग्निं य-
मातिथिं ॥ पितृवैराततो रामः । प्रययौ हस्तिनापुरं ॥ ७९ ॥ सद्यो व्यापाद्य तत्रैव । कृतवी-
र्यमवीर्यवत् ॥ राज्यं जग्राह किं नाम । दुष्करं क्षात्रतेजसः ॥ ८० ॥ सापत्या कृतवीर्यस्य ।
भार्या मुक्त्वा रयात्पुरं ॥ कादंबिनी सनीराद्रि—मिवागात्तापसाश्रमं ॥ ८१ ॥ तां रामाद्वि-
भ्यतीं बालां । सगोत्रा इव तापसाः ॥ भूगृहांतरगोपायन् । सा हि वेला दयावतां ॥ ८२ ॥
सा चतुर्दशसुस्वप्न—सूचितं सुषुवे सुतं ॥ भूमिं सुखेन जग्राह । जातमात्रोऽपि सोऽर्भकः
॥ ८३ ॥ ततस्तैस्तापसैर्दत्त—सुभूमाख्यः स बालकः ॥ स्वधर्म इव चित्तांत—र्भूगृहांतरव-

र्ध्यत ॥ ७४ ॥ अनर्थदंष्ट्रनिर्भीकः । स रामः सकलामपि ॥ भ्रमं भ्रमं भुवं सप्त—कृत्वो निः
क्षत्रियां व्यधात् ॥ ७५ ॥ क्षत्रियो यत्र यत्रासू—त्तत्र तत्रास्य पर्शुधः ॥ ज्वालामालाकुलो
यज्ञै । तृणौघ इव पावकः ॥ ७६ ॥ भ्रमंस्तपोवनेऽन्येद्यु—र्ज्वलता स्वीयपर्शुना ॥ विज्ञाय क्ष-
त्रसद्भावं । रामः पप्रछ तापसान् ॥ ७७ ॥ क्षत्रियास्तापसीभूता । वयमेवात्र संप्रति ॥ एवं
सुभूमभाग्येन । शिक्षितास्ते तमूचिरे ॥ ७८ ॥ क्षुण्णक्षत्रियदंष्ट्राभि—रापूर्य स्थालमन्यदा ॥
मृत्युः कुतो ममास्तीति । दैवज्ञं सोऽनुयुंक्तवान् ॥ ७९ ॥ य एताः पायसीभूता । भोक्ष्यते
स्थालदाढिकाः ॥ स्वस्य तस्माद्वधं विद्धि । गणकेनेत्यगद्यत ॥८०॥ अकारयत्ततो रामः । सत्रा-
गारं पुराद्बहिः ॥ तत्र चास्थापयत्सिंहा—सनं स्थालं च तत्पुरः ॥ ८१ ॥ तदा मेघरथो वि-
द्या—धरो वैताढ्यभूधरे ॥ दद्यां निजांगजां कस्मै—त्यप्राक्षीद्गणकोत्तमं ॥ ८२ ॥ पद्मिनीयं
मुनिवने । सुभूमं भूरुहस्थितं ॥ अभ्रलीनमिवादित्य—मर्हतीति जगाद सा ॥ ८३ ॥ अथ
मेघरथः पुत्रीं । सुभूमेनोदवीवहत् ॥ रवेरिव बुधः प्राय—स्तस्याभ्यासं च नामुचत् ॥ ८४ ॥
किमियानेव लोकोऽय-मिति पृष्टान्यदा प्रसूः ॥ सुभूमेनावदद्बाष्प-पूरप्लावितलोचना ॥८५॥

वत्स व्यूढोऽपि लोकोऽस्ति । रामस्तस्य पुनः प्रभुः ॥ हस्तिनापुरनाथं यो । जघान जनकं तव
॥ ९६ ॥ येन निःक्षत्रिया क्रौर्या—त्सप्तकृत्वः कृता मही ॥ यद्भयेनेह लीनास्मि । साहं म-
त्स्यीव वारिणि ॥ ९७ ॥ तत् श्रुत्वा निर्ययौ हंतु—कामस्तं रामसामजं ॥ सुभूमो भूगृहात्त-
स्मा—त्पौरींद्र इव कंदरात् ॥ ९८ ॥ सत्रागारं गतः सिंहा—सनमाक्रम्य निर्भयं ॥ सोऽभुंक्त
पायसीभूताः । क्षत्रदाढाः क्षुधार्त्तवत् ॥ ९९ ॥ तदासन्नद्विजा योध्धुं । सन्नह्यंतो निजघ्निरे ॥
मेघनादेन सिंहस्य । का वेला मृगमर्दने ॥ १०० ॥ ततः परशुमाबिभ्र—द्दलिदष्ट इवाकुलः ॥
ब्राह्मक्षात्रार्चिषोर्धाम । रामस्तत्राययौ रयात् ॥ १ ॥ क्षत्रौघशलभप्राण—स्तेनस्तेन परश्व-
धः ॥ सुभूमे मुक्तमात्रोऽभू—न्निस्तेजा दीपवत्प्रगे ॥ २ ॥ अनायुधः सुभूमोऽपि । तदैव स्था-
लमुद्दधौ ॥ चक्रत्वं प्राप तत्कालं । स्थालं धूम इवाभ्रतां ॥ ३ ॥ चक्रेण तेन रामस्य । गात्रा-
द्व्यश्लेषि मस्तकं ॥ आममृद्भाजनं चक्रा—दिव सूत्रेण चक्रिणा ॥ ४ ॥ चक्रवर्त्यष्टमः पृ-
थ्व्या—मुपपादीति वादिभिः ॥ तदानीं त्रिदशैः पुष्प—वृष्टिर्व्योम्नो व्यधीयत ॥ ५ ॥ अ-
वाप्य पैतृकं राज्यं । स वारानेकविंशतिं ॥ भुवं निर्ब्राह्मणां चक्रे । रामो निःक्षत्रियामिव ॥६॥

सोऽथ साधितषट्खंड—भरतः पूर्ववैरतः ॥ न वाड्भवोद्भवं सेहे । भीरुर्नानर्थदंभतः ॥ ७ ॥
जेतुकामोंतरद्वीपान् । वार्यमाणोऽपि मंत्रिभिः ॥ सुभूमो न न्यवर्तिष्ट । महदांध्यं हि वैभवं
॥ ८ ॥ स तरीः सुतरीकर्तुं । पयोराशिं परःशताः ॥ असज्जयदजानानः । स्वं मज्जंतं भवो-
दधौ ॥ ९ ॥ न्यास तासु रथाश्वेभ—पदात्यंतःपुरादि सः ॥ ही स्वैरिणां मतिर्लोह—शि-
लेवाखिलमज्जनी ॥ १० ॥ मिथः संघर्षदुःखार्त्तान् । लोकांश्चक्री तरीषु सः ॥ अवासयत्कुक-
र्मेव । निगोदेषु शरीरिणः ॥ ११ ॥ स्वचित्तोद्भवकल्लोलैः । कल्लोलांस्तस्य खर्वयन् ॥ तिमिंगि-
ल इवापारं । चक्री वार्धिं व्यगाहत ॥ १२ ॥ उध्धृतः सागरात्प्रौढ—तरः कोऽपि तदा ति-
मिः ॥ तस्य चक्रे गिरेर्भ्रांतिं । निशि रज्जोरिवोरगः ॥ १३ ॥ तत्पृष्टे सकलं सैन्यं । चक्रवर्त्यु-
दतारयत् ॥ मत्स्योऽपि व्यूढकायत्वा—न्न तद्भारमबुध्यत ॥ १४ ॥ कूर्मपृष्टेऽचलाचक्र—मिव
चक्रेशितुर्बलं ॥ तत्पृष्टेऽवस्थितं गर्भो—त्तीर्णवत्स्वममन्यत ॥ १५ ॥ हयानवीवहन् केऽपि ।
केचित्पट्टकुटीरदुः ॥ चुल्हीर्व्यधुः परे तत्रा—परे वह्निमजीज्वलन् ॥ १६ ॥ इनस्तनूनपात्ता-
पा—न्निरंजतुः स नीरधिं ॥ विवेश सूर्यतापार्त्तः । स्वनीडमिव नीडजः ॥ १७ ॥ द्वाभ्यां य-

क्षसहस्राढ्यां । रक्षितोऽपि स चक्रभृत् ॥ निममज्ज महांभोधौ । गृह्णन् निजपरिछदं ॥ १८ ॥ सुभूमरामावसमाप्तकामौ । वृथा द्विजक्षत्रियजातिवामौ ॥ अवापतां सप्तमनारकार्त्ती—रन-र्थदंमस्य विडंबनातः ॥ १९ ॥

अत्र व्रते पंचातिचारा वर्ज्यास्तद्यथा—१ कंदर्पः, २ कौकुच्यं, ३ मौखर्यं, ४ संयुक्ताधिकरणता, ५ भोगोपभोगातिरेकश्चेति. तत्र कंदर्पः कामस्तद्धेतुत्वाद्रागोद्रेकप्रहासमिश्रो मोहोद्दीपको वाक्प्रयोगोऽपि कंदर्पः, अत्र सामाचारी श्रावकस्याट्टहासो न कल्पते, यदि पुनर्हसति तदिषदेवेति. १. तथापरेषां हसनाय विविधं मुखाक्षिभ्रुवादिविक्रियात्मकं भंडानामिव चेष्टितं कौकुच्यं, श्रावकस्य हि तथा वक्तुं गंतुं स्थातुं वा न कल्पते यथापरो हसति, एतौ च द्वावतिचारौ प्रमादाचरितस्य दृष्टव्यौ तद्रूपत्वात्. २. मौखर्यमसत्यासंबद्धप्रलापित्वं, अयं च पापोपदेशस्यातिचारो मौखर्ये सति पापोपदेशसंभवात्. ३. तथा संयुक्तं प्रगुणीकृतं तच्च तदधिकरणं च धनुस्तूणीरमुशलोदुखलयुगशम्यादिकं संयुक्ताधिकरणं तद्भावः संयुक्ताधिकरणता, श्रावकेण हि संयुक्तं शकटाद्यधिकरणं न धार्यं, प्रगुणं हि तद् दृष्ट्वान्येऽपि याचं-

तेऽयाचितमपि कोऽपि मित्रादि गृह्णाति, अयं हिंस्रप्रदानस्यातिचारः. ४. तथा ज्ञोगोपज्ञोगयोरतिरेक आधिक्यं ज्ञोगोपज्ञोगातिरेकः, इह किल ज्ञोगोपज्ञोगविषयाणि यानि द्रव्याणि स्नाने उष्णोदकोद्वर्तनकादीनि, ज्ञोजनेऽशनपानादीनि, तेषु यदधिकं स्वार्थसिद्धावशिष्यते, तेन हि परेषां खिड्गादीनां दानेन स्नानज्ञोजनादिनानर्थदंमो ज्ञवत्ययं च विषयात्मकत्वात्प्रमादाचरितस्यातिचारः. ५. एते कंदर्पादयः पंचाप्यनाज्ञोगादिना क्रियमाणा अतिचाराः, आकुट्या तु ज्ञंगा एव. अत्र ज्ञावना गाथा—।चिंतेअव्वं च नमो । सुअठगाइंव जेहिं पावाइं ॥ साहूहिं वज्जिआइं । निरठगाइं च सव्वाइं ॥ १ ॥ उक्तं सदृष्टांतं तृतीयं गुणव्रतं, तदुक्तौ च व्याख्यातानि त्रीण्यपि गुणव्रतानि. अथ चतुर्णां शिक्षाव्रतानामवसरः, तत्र शिक्षा पुनः पुनः प्रवृत्तिस्तत्प्रधानानि व्रतानि शिक्षाव्रतानि, यच्चूर्णिः—‘ सिक्खा ’ नाम यथा शिक्षकः पुनः पुनर्विद्यामज्यस्यति, एवं ‘ इमाणि चत्तारि सिक्खावयाणि पुणो पुणो अप्पसिज्जंति, अणुवयगुणव्वयाणि एकंसि गहियाणि चेव ’ त्तीत्येतदेवाह—

॥ मूलम् ॥—अथ चत्तारि सिक्खा—वयाणि वुच्छामि जाइं सड्ढेण ॥ विजाव सिक्ख-

गेण । पुणो पुणो अप्पसिज्जंति ॥ ८० ॥ व्याख्या—उक्तार्था. अथ तानि क्रमेणाह—

॥ मूलम् ॥—सामाइयमिह पढमं । सावज्जे जत्थ वज्जिउं जोगे ॥ समणाणं होइ समो । देसेण देसविरउवि ॥ ८१ ॥ व्याख्या—इहैषु शिक्षाव्रतेषु प्रथमं शिक्षाव्रतं सामायिकं नाम, तत्र समस्य रागद्वेषरहितस्य जीवस्यायो लाभः प्रतिक्षणमक्षयसुखहेतुज्ञानादिभिः समायः स प्रयोजनमस्य क्रियानुष्ठानस्येति सामायिकं, यत्र यस्मिन् सामायिके कृते देशविरतोऽपि श्रमणानां सर्वविरतानां समः सदृशो भवति. कयोपपत्त्येत्याह—सावद्यान् सपापान् योगान् मनोवाक्कायव्यापारान् वर्जयित्वा, उपलक्षणत्वान्निरवद्यान् योगान्निषेव्य च, अनेन सामायिकस्य स्वरूपं प्रोक्तं. तथा चार्षे—'सामाइयं नाम सावज्जजोगपरिवज्जणं निरवज्जजोगमासेवणं च.' ननु कथं श्रमणैः समो भवतीत्याह—देशेन देशोपमया, यथा चंद्रमुखी स्त्री, समुद्रवत्तडाग इति, अन्यथास्त्येव श्रमणश्रावकयोर्भेदः. तथा चागमः—सिक्खा दुविहा गाहा । उववायगइठिइकसाया य ॥ बंधंता वेयंता । पडिवज्जा इक्कमे पंच ॥ १ ॥ अस्या लेशतोऽर्थः—शिक्षा द्विविधा—१ आसेवनाशिक्षा, २ ग्रहणशिक्षा, ते प्रतीत्यानयोर्महान्

भेदः, तथाहि—आसेवनाशिक्षा इष्टाकाराद्या यथा सर्वाः सर्वकालं साधोर्भवति न तथा श्रावकस्य. ग्रहणशिक्षायां साधुरुत्कृष्टतो द्वादशांगीमप्यधीते, श्रावकस्तु षड्जीवनिकाध्ययनमिति. 'गाहत्ति' गाथासूत्रप्रामाण्यादनयोर्भेदः, सा चेयं—सामाइयंमि उकए । समणो इव सावओ हवइ जम्हा ॥ एएण कारणेणं । बहुसो सामाइयं कुज्जा ॥ १ ॥ अयं भावः—अस्यां गाथायामिवशब्दोपादानादेवानयोर्भेदः प्रतीयते, यद्यभेदः स्यात्तदा श्रावकः श्रमण एव स्यादित्यभिदध्यात्. 'उववाइत्ति' उपपातं प्रतीत्य साधुरुत्कृष्टतः सर्वार्थसिद्धेऽप्युत्पद्यते, श्रावकस्त्वच्युतकल्प एव. 'ठिइत्ति' स्थितिस्तत्र साधोस्त्रयस्त्रिंशत्सागरोपमाणि, इतरस्य तु द्वाविंशतिरेव. 'कसायत्ति' कषायाः साधोश्चत्वारः संज्वलना एव, अकषायो वासौ स्यात्, श्रावकस्य तु तेऽष्टौ प्रत्याख्यानावरणाः संज्वलनाश्चेति. 'बंधत्ति' बंधं कर्मणां प्रतीत्य साधुः प्रमत्ताप्रमत्तयोर्गुणस्थानयोः सप्त वाष्टौ वा कर्माणि बध्नाति, तत्रायुर्बंधकालेऽष्ट, शेषकालं तु सप्त, निवृत्यनिवृत्तिबादरयोस्त्वायुर्वर्जानि सप्त, सूक्ष्मसंपराये तु मोहायुर्वर्जं षट्. ततःपरमेकसातवेद्यमेव बध्नाति, अयोगित्वबंधक एव, श्रावकस्त्वायुर्बंधकालेऽष्टौ, शेषकालं सप्त कर्मा-

णि बध्नात्येव. 'वेयंतत्ति' वेदनं प्रतीत्य साधुः सूक्ष्मसंपरायं यावदष्टानां, उपशांतमोहक्षीणमोहयोर्मोहवर्ज सप्तानां, तत ऊर्ध्वं वेद्यायुर्नामगोत्राणां कर्मणां चतुर्णां कर्मणां वेदकः, श्रावकस्तु नियमादष्टानां वेदकः, 'पडिवज्जत्ति' प्रतिपत्तिः पंचानां व्रतानां साधोः समुदितानामेव, श्रावकस्य तु व्यस्तानां समस्तानां वा इच्छानुरोधात्, यद्वा साधोरेकदापि प्रतिपन्नं सामायिकमाजन्मावतिष्ठते, इतरस्तु पुनः पुनस्तत्प्रतिपद्यते. 'अइक्कमत्ति' अतिक्रमं विराधनामाश्रित्य साधोरेकस्मिन् व्रते भग्ने सर्वव्रतभंगः स्यात् परस्परं सापेक्षत्वात्, श्रावकस्य तु न तथा. एवं महत्यपि भेदे सति यदि सामायिके कृते श्रावको देशतोऽपि साधुसादृश्यमंचति, ततः पुनः पुनस्तदनुष्ठेयमिति. ननु केदं विधीयत इत्याह—

॥ मूलम् ॥—जइपासे जिणभवणे । घरे व जत्थ च निराउलो होइ ॥ पंचसमिउ तिगुत्तो । करेइ सामाइयं तत्थ ॥ ७२ ॥ व्याख्या—श्रावकः प्रथमं सामायिकं यतिपार्श्वे साधुसकाशे करोति, तदभावे जिनभवने, अत्र हि नीरंजनत्वाद्योगाः सुप्रणिहिता भवंतीति पूर्वमेतद् ग्रहणं, तत्रापि साधुसन्निधौ धर्मकथाश्रवणादिना विशेषलाभः स्यादिति प्रथमं य-

तिपार्श्वग्रहणं, तयोरभावे गृहे वा तत्करोति, किं बहुना? यत्र क्वचित् क्षेत्रे खले मार्गादौ वा निराकुलः सुस्थमना भवति, पंचसमितस्त्रिगुप्तो भूत्वा तत्र सामायिकं करोति. उक्तं च– 'जत्थ वा वीसमइ अच्छइ वा निव्वावारो सव्वउ करेइ.' यो हि गृहादौ सामायिकं करोति स प्रपन्नसामायिक एव समितिगुप्तिसहितः साधुसमीपमागत्य तत्साक्षिकं सामायिकमुच्चरति. एषोऽनर्द्धिप्राप्तश्रावकस्य विधिः, ऋद्धिप्राप्तस्तु राजादिः कृतसामायिकस्य ममानुधावद्भिर्गजाश्वयोधादिभिर्माभूदधिकरणमित्यकृतसामायिक एव साधुमूलमागत्य सामायिकमनुतिष्टतीत्यलं विस्तरेण. तदर्थिना त्वावश्यकचूर्णिः स्मर्तव्या. अथ सामायिकस्य विधिमाह—

॥ मूलम् ॥—आगमअत्थं पुच्छइ। दिठंते भावए सुपुरिसाणं ॥ कयसामाइउ वज्जइ। विगहानिद्दाइए दोसे ॥ ७३ ॥ व्याख्या—पठितसिद्धा. किंच—

॥ मूलम् ॥—तसथावरजीवेसु। गिही सया तत्तलोहगोलोव्व ॥ मित्तो मुहुत्तमित्तं। सामाइयठिउ भवे तेसु ॥ ७४ ॥ व्याख्या—गृही गृहस्थस्त्रसेषु द्वींद्रियादिषु, स्थावरेषु च पृथ्वीकायिकादिकेषु जीवेषु सदा संतापकत्वात्तप्तलोहगोल इव वर्तते, सामायिकस्थितः पुन-

स्तेषु जीवेषु मुहूर्तमात्रं घटिकाद्वयं यावन्मित्रं भवति निरारंभत्वात्. इह सावद्ययोगप्रत्याख्यानरूपस्य सामायिकस्य मुहूर्तमानता सिद्धांतेऽनुक्तापि प्रतिपत्तव्या, प्रत्याख्यानस्य जघन्यतोऽपि मुहूर्तस्थितिकत्वान्नमस्कारसहितप्रत्याख्यानवत्. अत्र दृष्टांतमाह—

॥ मूलम् ॥—सामाइयवयधारी । सरीरभंगेवि सुद्धपरिणामो ॥ चंदावयंसनिवई । देवत्तं जत्ति संपत्तो ॥ ७५ ॥ व्याख्या—उत्तानार्था, चंद्रावतंसकदृष्टांतस्तु मेतार्यमुनिकथायां भावित एव. अत्रापि व्रते पंचातिचारा वर्ज्यास्तद्यथा—मनोवचःकायदुःप्रणिधानानि १–३, स्मृत्यकरणं ४, सामायिकस्यानवस्थितस्याकरणं ५ चेति. तत्र मनोवचःकायानां दुःप्रणिधानमनाभोगादिना सावद्यचिंतादिषु प्रवर्तनं त्रयोऽतिचाराः. ननु प्रपन्नसामायिकस्य द्विविधत्रिविधेन प्रत्याख्याते सावद्ययोगे दुर्निग्रहस्य मनसो दुःप्रणिधानेन प्रत्याख्यानभंगः स्यादतस्तत्प्रतिपत्तेरप्रतिपत्तिरेव श्रेयसीति. नैवं, मनःस्वास्थ्यस्य सामायिकनिबंधनत्वात्. न हि नानाव्यापारस्य तस्य सामायिकाद्यालंबनं विना भवंती क्वचन मनःशुद्धिर्निरीक्ष्यते. न च सर्वथा प्रत्याख्यानभंगोऽपि शंकनीयः, मनसा दुःप्रणिधानेऽपि वाक्कायकृतपापपरिहारात्, मनो-

डुःकृतस्य मिथ्यादुःकृतमात्रेण शुद्धिन्नावात्. तस्मादीदृशीमालस्योपहतानामुक्तिमवगणय्य कार्यमेव सामायिकं, अकरणे महादोषापत्तेः. यदाह—अविहिकया वरमकयं । उस्सूयवयणं न्नवंति समयन्नू ॥ पायछित्तं जम्हा । अकए गुरुयं कए लहुयं ॥ १ ॥ तथास्यां वेलायां मया सामायिकं कार्यं, कृतं न कृतं वेत्येवंरूपं सारणं स्मृतिस्तस्याः प्रबलप्रमादतयाऽकरणं चतुर्थोऽतिचारो मोक्षानुष्ठानस्य स्मृतिमूलत्वात्. तथाऽनवस्थितसामायिककरणं तदुच्यते यत्कृत्वा तत्क्षणात्पारयति, यथा कथंचिद्वाऽनादृतस्तत्करोति. अत्र न्नावनागाथा—धन्ना जीवे सु दयं । करंति धन्ना सुदिठपरमत्था ॥ जावज्जीवं जयणं । करंति एवं च चिंतिज्जा ॥ १ ॥ उक्तं सदृष्टांतं प्रथमं शिक्षाव्रतं ॥ ए ॥ अथ द्वितीयमाह—

॥ मूलम् ॥—पुव्वं गहिअस्स दिसा—वयस्स सव्ववयाण वाणुदिणं ॥ जो संखेवो देसा—वगासियं तं वयं बिईयं ॥ ७६ ॥ व्याख्या—पूर्वं व्रतप्रतिपत्तिकाले गृहीतस्य जीवितावधित्वान्महतो दिक्प्रमाणस्य, वाथवा सर्वव्रतानां प्राणातिपातविरमणादीनां यः संक्षेपः क्रियते तद्देशावकाशिकं नाम द्वितीयं शिक्षाव्रतं, मुत्कलानां नियमानां देशे संक्षिप्तविन्नागेऽव-

काशोऽवस्थानं देशावकाशस्तेन निर्वृत्तमिति व्युत्पत्तेः. न च वाच्यं देशावकाशिकं दिग्व्रतस्यैव विषय इति दिग्व्रतस्येव शेषव्रतानां दिवसपक्षाद्यवधिना संक्षेपेण व्रतोऽधिकीभावेन द्वादशसंख्याविघटनात्. तथा च चूर्णिः—एवं सव्ववएसु जे पमाणा ठविया ते पुणो पुणो दिवसउ उसारेइ, देवसियाउ रत्तिं उसारेइ, यच्च दिसिवयगहियस्स दिसापरिणामस्स पइदिणं परिमाणकरणं देसावगासियंति मूलसूत्रं. तदुपलक्षणत्वेन व्याख्येयं सूचामात्रकारित्वात्सूत्रस्येत्येतदेवाह—

॥ मूलम् ॥—एगमुहुत्तं दिवसं । राइं पंचाहमेव पक्खं वा ॥ विरइफलं जाणंतो । संखेवइ सव्ववयनियमे ॥ ७७ ॥ व्याख्या—स्पष्टा, एकमुहूर्ताद्यंकसंख्या मुहूर्तद्वयादीनामुपलक्षणतया बोधव्या. अत्र दृष्टांतमाह—

॥ मूलम् ॥—आसन्ननरयवासो । चंकमइ चंडकोसिउ सप्पो ॥ देसावगासिएणं । सुरत्तवणं अट्ठमं नीउ ॥ ७८ ॥ व्याख्या—गाथार्थः सुगमः, भावार्थस्तु कथानकगम्यस्तच्चेदं—

पूर्वमेकत्र गछेऽभू—त्कश्चन क्षपको मुनिः ॥ येन मासोपवासांतः । प्रायोऽगृह्यत नाशनं

॥ १ ॥ वर्षाकालेऽन्यदा मेघ—वृष्टेर्व्युपरमे मुनिः ॥ पक्षीव नीडान्निरगा—त्पारणार्थी नि-
जाश्रयात् ॥२॥ लक्षशो मक्षिकामाना । मंडुकीर्मेघवृष्टिजाः ॥ चिंतयन्नपि तास्वेकां । स म-
र्मर्द तदा पदा ॥ ३ ॥ सहायः क्षुल्लकोऽजल्प—त्पश्य पश्य तपोनिधे ॥ मंडुकीयं त्वयामर्दि ।
तन्मिथ्यादुष्कृतं वद ॥ ४ ॥ क्षपकः क्षोदिता लोकै—र्भेकीः संदर्शयन् पराः ॥ ऊचे हंत
हता एता । अपि रे दुष्ट किं मया ॥ ५ ॥ त्विरश्रासि स्वयं मां च । मासांतेऽप्यशनार्थिनं ॥
न मृष्यसि ततो जातः । पितृव्यां त्वं तु मत्कृते ॥ ६ ॥ तपस्वी क्षुधितो नायं । कोपनीयो
मयाधुना ॥ समये स्मारयिष्यामी—ति मौनं क्षुल्लकोऽभजत् ॥ ७ ॥ तं क्लृप्तपारणं स्वस्थं ।
सायमालोचनाक्षणे ॥ अलीकः क्षुल्लको भेकी—मारमस्मारयन्मुनिं ॥ ८ ॥ सोऽपि ह्रिया त-
दालोच्य । निशि क्षुल्लजिघांसया ॥ धावन् कपाटमुत्पाट्य । स्तंभे चास्फालितोंतरा ॥ ९ ॥
रोषावेषाद्विपद्यासौ । ज्योतिष्केषूदपद्यत ॥ इयमेव गतिः प्रायो । रोषिणां हि तपस्विनां ॥१०॥
इतश्च कनकखले—ऽभवत्कुलपतिर्वने ॥ यो दधार कुलीनत्वं । तपस्विशतपंचके ॥ ११ ॥ ज्यो-
तिर्देवस्ततश्च्युत्वा । प्रपेदे तस्य पुत्रतां ॥ रोषस्याध्यवसायेन । प्राक्संस्कारादनुज्झितः ॥ १२ ॥

गोत्रेण कोशिकश्चंडः । स्वजावेनेति तापसैः ॥ स चंडकौशिकाजिख्यां । प्रापितो ववृधे क्रमा-
त् ॥ १३ ॥ पितर्युपरतेऽधत्त । स तपस्विषु धुर्यतां ॥ अपालयच्च भूपाल । इव देशं वनं च त-
त् ॥ १४ ॥ यस्तपस्वी वने तत्र । पत्रपुष्पाद्यमग्रहीत् ॥ सर्वस्वस्तेनवत्तेन । स लेष्ट्वाद्यैरताड्य-
त ॥ १५ ॥ ततः सर्वेऽपि तेऽन्यत्र । म्रियमाणाः क्षुधा ययुः ॥ न पुनर्गुरुपुत्रत्वा—दमुन्वन्
वयसापि तं ॥ १६ ॥ स एक एव तत्रास्था—च्छार्दूल इव कानने ॥ पांथगोकुलिकानां च ।
मध्यचारं न्यवारयत् ॥ १७ ॥ प्रतिपांथं कलेर्जीरु—रन्यदा परितो वनं ॥ प्राकारान्नां वृत्तिं
कर्तुं । कंटिकार्थं स निर्ययौ ॥ १८ ॥ कुमाराः श्वेतवीशस्य । तद्वनं समदास्तदा ॥ मुक्तं कौ-
शिकासिंहेन । विविशुर्वारणा इव ॥ १९ ॥ गृह्णंतस्ते यथाशक्ति । फलपुष्पादिकं वनात् ॥ क-
लिकौतुकिनिर्गोपैः । कौशिकस्य निवेदिताः ॥ २० ॥ विमुच्य कंटिकां कूर्चे । करं व्यापारयं-
स्ततः ॥ दधावे तान् क्रुधा हंतुं । भूतात्त इव तापसः ॥ २१ ॥ आयांतं वीक्ष्य तं पर्शु—करं
परशुरामवत् ॥ चित्रं नेशुः कुमारास्ते । कुमारादेव बिज्यतः ॥ २२ ॥ स धावन्नंतरा गर्ते ।
पादप्रस्खलितोऽपतत् ॥ तेनैव पर्शुना भिन्नो । ह्यवापच्च पंचतां ॥२३॥ निजाश्रमविले दृष्टि—

विषः सोऽभूद्भुजंगमः ॥ प्राग्भवाभ्यासतस्तत्र । वने चात्यंतमूर्छितः ॥ २४ ॥ निःकौशिकं वनं सर्वे । तापसाः पुनरैयरुः ॥ शांतप्रदीपनं प्रीत्या । स्वगेहमिव गेहिनः ॥ २५ ॥ सोऽथ भोगी वनासन्नं । यद्यत्पद्याद्यमैक्षत ॥ तत्तद्ज्वालयद् दृष्ट्या । नेशुस्ते तापसास्ततः ॥२६॥ निरुद्धापरसंचारं । त्रिःकुर्वन् हिंक्रिमन्वहं ॥ वनं स भुजगोऽरक्ष—त्तलारक्षः पुरं यथा ॥२७॥ छद्मस्थो भगवान् वीर—स्तदानीं विहरन् भुवि ॥ देशाद्दक्षिणवाचाला—च्चचाल श्वेतवींप्रति ॥ २८ ॥ प्रभुस्तस्य वनस्यांतः । प्रस्थितः सरलाध्वना ॥ ऊचे सन्निहितैर्गोपै—र्देवार्यामुं पथं त्यज ॥ २९ ॥ दृग्विषोऽहिर्वनेऽस्त्यस्मि—न्न स कस्यापि बांधवः ॥ तद्वक्रेणापि मार्गेणा—मुना कुशलिना व्रज ॥ ३० ॥ न हि यूकाभिया वस्त्रं । त्यक्तव्यमिति चिंतयन् ॥ बोधं जानन्नहेर्वीर—श्चचाल सरलाध्वना ॥ ३१ ॥ अनर्होऽयं हितोक्तीना—मिति गोपैरुपेक्षितः ॥ प्राविशत्तद्वनं स्वामी । नार्हतः सन्भयाः क्वचित् ॥ ३२ ॥ कृपालुर्भगवानात्म—देहपीडामचिंतयन् ॥ तस्थौ प्रतिमया सर्पो—पकृत्यै तद्बिलांतिके ॥ ३३ ॥ उन्मदिष्णुर्मद्यपाना—दिव मानवगंधतः ॥ जंतुहत्यापातकेने—वातिश्यामां दधत्तनुं ॥ ३४ ॥ फणव्याजाद्धृतच्छत्र । इव क्रू-

राग्रणीरिति ॥ भुजेव यमराजस्य । भुजगो निर्ययौ बिलात् ॥ ३५ ॥ युग्मं ॥ मां वीक्ष्याप्येष निःक्षोभ । इति द्विगुणमत्सरः ॥ फणी तरणिमालोक्य । वीरे व्यापारयद् दृशौ ॥ ३६ ॥ अपि शाद्वलदाहिन्य—स्तच्चाक्षुषविषछटाः ॥ न प्रभोः प्रभवंतिस्म । देहे पीयूषकुंभवत् ॥ ३७ ॥ प्रभुं पुनः पुनः पश्यन् । स दृग्विषमहारयत् ॥ योद्धेव पर्वते कुर्वन् । शरवृष्टिं शरभजं ॥ ३८ ॥ सोऽथ दंष्ट्वा प्रभुं दंश—पदेऽमुंचन्महाविषं ॥ स्वयं चापासरन्मासौ । पतन्मृद्नातु मामिति ॥ ३९ ॥ वज्रस्तंभ इव स्थान—ममुंचति जगत्प्रभौ ॥ पौनःपुन्येन स दंश—न्नासीदाशीविषोज्झितः ॥ ४० ॥ निर्निमेषं प्रभुं पश्यन् । विलक्ष इव पन्नगः ॥ दंशस्थाने क्षरद्रक्तं । ददर्श क्षीरपांडुरं ॥ ४१ ॥ ममापि गरलेनावि—मोहितः श्वेतलोहितः ॥ मनुष्यमात्रसामान्यो । नायमित्युन्निनाय सः ॥ ४२ ॥ तं प्रशांतं प्रबोधार्हं । विज्ञाय त्रिजगद्गुरुः ॥ चंडकौशिक बुध्यस्वे-त्यवदन्मृदुभाषया ॥ ४३ ॥ स्वनामश्रवणोत्पन्न—विममर्शः प्रददर्श सः ॥ जातजातिस्मृतिः कर्म—लाघवात्प्राग्भवत्रयं ॥४४॥ सोऽथ प्रदक्षिणीकृत्य। प्रभुं भक्त्या प्रणम्य च ॥ मनःसमक्षमक्षाम—परिणामो व्यजिज्ञपत् ॥ ४५ ॥ मां जीवयितुमत्रागाः । प्राग्वायु-

स्त्वं च संप्रति ॥ यतो महाबलौ द्वाव—प्यालंबनविवर्जितौ ॥ ४६ ॥ मयि दंशोद्यतेऽपी-
श । मृदुनाषी नवानचूत् ॥ शीतमेव किरत्यंजो । ज्वलत्यपि दवे यतः ॥ ४७ ॥ दृग्न्याम-
ग्निविषं लाला—विषं वक्त्रात्तथा हृदः ॥ हृत्वा रोषविषं त्वं मां । सर्वथा निर्विषं व्यधाः ॥४७॥
मत्तो धर्मस्तवाहारि । येन क्रोधविरोधिना ॥ त्वयि दृष्टेऽद्य पापीयान् । काकनाशे ननाश सः
॥ ४ए ॥ यद्यत्पापं मयाकारि । क्रोधांधेन नवे नवे ॥ तत्र तत्र जगन्मित्र । मिथ्यादुष्कृत-
मस्तु मे ॥ ५० ॥ तथा कुरु जगन्नाथ । यथोल्लंघे नवार्णवं ॥ दुर्गतीस्त्वयि लब्धेऽपि । लप्स्ये
चेद्वंचितोऽस्मि तत् ॥ ५१ ॥ ततस्तस्यैकचित्तस्य । ददावनशनं जिनः ॥ विनयावार्जितशिरः ।
सोऽपि तत्प्रत्यपद्यत ॥ ५२ ॥ बिन्नेयुर्मास्म मद्दृष्ट्या । सत्त्वा इति बिलांतरे ॥ न्यस्य स्वास्य-
मसौ तस्थौ । धृतदेशावगासिकः ॥ ५३ ॥ माभून्मयि गते ध्यान—नंगोऽस्येति जिनेश्वरः ॥
उपदेशामृतैर्वर्ष—स्तस्थौ तत्रैव सकृपः ॥ ५४ ॥ अथाद्भुतांगे श्रीवीरे । विस्मिता गोपदार-
काः ॥ वृक्षैर्व्यवहिता वीक्षां—चक्रुस्तामुरगं स्थिरं ॥ ५५ ॥ ते ह्यविश्वासिनः सर्पं—प्रति लो-
ष्टादि चिक्षिपुः ॥ तथा वीक्ष्य तमक्षोनं । यष्ट्यादिनिरचालयत् ॥ ५६ ॥ तथाप्यचलिते

तस्मिन् । गोपाला जातनिश्चयाः ॥ ऊचिरे तं व्यतिकरं । लोकस्यासन्नवासिनः ॥ ५७॥ लोकोऽप्येत्य प्रभुं नत्वा । तं भुजंगमपूजयत् ॥ तत् श्रुत्वा गोकुलिन्योऽपि । चेलुस्तेनैव वर्त्मना ॥ ५८ ॥ आनंजुर्नवनीतेन । चंदनेनेव ताश्च तं ॥ तद्गंधाद्व्यलगन्नोगे । भौजंगे कीटिकागणः ॥ ५९ ॥ सच्छिद्रीकृत्य मे देह—गेहमेताश्चिरार्जितं ॥ गृह्णंति पापसर्वस्वं । चेत्तद्गृह्णंतु चौरवत् ॥ ६० ॥ मया च निश्चलेनैव । नान्यं येन मयोज्झिताः ॥ एता हरंति तत्सर्व—मपीति विलसन्मतिः ॥ ६१ ॥ पन्नगः प्रभुवाक्पाना—दजानानो व्यथान्तरं ॥ पालितानशनः पक्षं । सहस्रारं दिवं ययौ ॥ ६२ ॥ त्रिभिर्विशेषकं ॥ चंडकौशिकभुजंगमोऽष्टमं । स्वर्गमाप दशमव्रते रतः ॥ श्रावकस्तु नियतं प्रयात्यपि । द्वादशं त्रिदिवमत्र साग्रहः ॥ ६३ ॥ इति दशमव्रते चंडकौशिककथा समाप्ता. ॥

अत्रापि व्रते पंचातिचारा हेयाः, तद्यथा—आनयनप्रयोगः १, प्रेष्यप्रयोगः २, शब्दानुपातः ३, रूपानुपातः ४, बहिः पुद्गलप्रक्षेपश्चेति. ५. तत्र कृतनियतभूम्यवस्थानः परतो व्रतभंगभयात्स्वयमगच्छन्नुत्पन्ने कार्ये विवक्षितवस्त्वानेतुं संदेशदानादिनाऽपरं प्रयुंक्ते त्वमिद-

मानयेत्यानयनप्रयोगः १. तथा नियमितक्षेत्रात्परतस्त्वयेदं तत्र कर्तव्यमित्युक्त्वापरं प्रेषयतः प्रेष्यप्रयोगः २. तथा वृत्तिनित्त्याद्यावृत्तनियमितक्षेत्रात्परतः स्थितं कंचन नरं व्रतभंगभयात्साक्षादाह्वातुमशक्नुवन् कासितादिशब्दश्रवणस्वीयरूपदर्शनव्याजेन तमाकारयति तदा व्रतसापेक्षत्वाच्छब्दानुपातो रूपानुपातश्चातिचारः ३–४. एवं नियमितभुवो बहिः प्रयोजने परेषां स्वं ज्ञापयितुं लेष्ट्वादिकं प्रक्षिपतो बहिः पुद्गलप्रक्षेपोऽतिचारः ५. देशावकाशिकं हि गृह्यते माभूद्गमनागमनाभ्यां प्राण्युपमर्द इत्यभिप्रायेण, स च स्वयं कृतोऽन्येन वा कारित इति न कश्चिद्विशेषः, प्रत्युत स्वयं गमने गुणः, ईर्यापथशुद्धेः परस्य पुनरनिपुणत्वात्कुतस्तच्छुद्धिरिति. इह चाद्यौ द्वावतिचारावव्युत्पन्नस्यानाभोगादिना, शेषास्त्रयो व्याजपरत्वादतिचारा इति. एते चातिचारा दिग्व्रतानुसारितयोक्ताः, मुख्यतोऽस्य व्रतस्य तदनुयायित्वात्. उपलक्षणत्वाच्छेषव्रतसंक्षेपे तदतिचारा अपि तदनुसारेण वाच्याः, यद्वा प्राणातिपातादिसंक्षेपेण बंधादय एवातिचारा घटंते, दिग्व्रतसंक्षेपे तु क्षेत्रस्य संक्षिप्तत्वाच्छब्दानुपातादयोऽपि स्युरिति भेदेनोक्ताः. अत्र भावनागाथा— सव्वे य सव्वसंगेहिं । वज्जिए साहुणो नमंसिज्जा ॥

सव्वेहिं जेहिं सव्वं । सावज्जं सव्वहा चत्तं ॥१॥ उक्तं सदृष्टांतं द्वितीयं शिक्षाव्रतं. अथ तृतीयमाह—

॥ मूलम् ॥—आहारदेहसक्कार—गेहवावारविरइबंभेहिं ॥ पव्वदिणाणुट्ठाणं । तइयं पोसहवयं चउहा ॥ ८९ ॥ व्याख्या—आहारोऽशनादिः, देहसत्कारः स्नानोद्वर्तनविलेपनादिः, गेहव्यापारो गृहकर्माणि, एभ्यो विरतिर्निवृत्तिः. ब्रह्मेति ब्रह्मचर्यं, एभिः प्रकारैश्चतुर्धा यत्पर्वादिनानुष्ठानं तच्छिक्षाव्रतमाश्रित्य तृतीयं पौषधव्रतं भवति, पोषं पुष्टिं प्रक्रमाद्धर्मस्य धत्ते इति पौषधः. अयं च चतुर्विधोऽपि द्विधा—देशतः सर्वतश्चेति. तत्राहारपौषधो देशतो विकृत्यादित्यागः सकृद् द्विर्वा भोजनं, सर्वतस्तु चतुर्विधाहारत्यागः. देहसत्कारगेहव्यापारपौषधौ तु देशतः कस्यापि सत्कारविशेषस्य गेहव्यापारस्याकरणं, सर्वतस्तु सर्वस्य तस्याकरणं. ब्रह्मपौषधस्तु देशतो मैथुनप्रमाणकरणं, सर्वतस्तु सर्वथा ब्रह्मचर्यपालनं. अत्रेयं सामाचारी—'जो देसपोसहं करेइ सो सामाइयं करेइ वा न वा, जो सव्वपोसहं करेइ सो नियमा सामाइयं करेइ, जं न करेइ तो वंचिज्जइ. तं कहं ? चेइघरे साहुमूले घरे वा पोसहसालाए वा उम्मुक्कमणिसुवण्णो पढंतो, पुत्थगं वाचयंतो सुणंतो धमज्झाणं झियाइ.' अथ यदुक्तं पौष-

मानयेत्यानयनप्रयोगः १. तथा नियमितक्षेत्रात्परतस्त्वयेदं तत्र कर्तव्यमित्युक्त्वापरं प्रेषयतः प्रेष्यप्रयोगः २. तथा वृत्तिन्नित्याद्यावृत्तनियमितक्षेत्रात्परतः स्थितं कंचन नरं व्रतभंगभया-त्साक्षादाह्वातुमशक्नुवन् कासितादिशब्दश्रवणस्वीयरूपदर्शनव्याजेन तमाकारयति तदा व्रतसापेक्षत्वाच्छब्दानुपातो रूपानुपातश्चातिचारः ३–४. एवं नियमितभुवो बहिः प्रयोजने प-रेषां स्वं ज्ञापयितुं लेष्ट्वादिकं प्रक्षिपतो बहिः पुद्गलप्रक्षेपोऽतिचारः ५. देशावकाशिकं हि गृह्यते माभूद्गमनागमनाभ्यां प्राण्युपमर्द इत्यभिप्रायेण, स च स्वयं कृतोऽन्येन वा कारित इ-ति न कश्चिद्विशेषः, प्रत्युत स्वयं गमने गुणः, ईर्यापथशुद्धेः परस्य पुनरनिपुणत्वात्कुतस्तच्छु-द्धिरिति. इह चाद्यौ द्वावतिचारावव्युत्पन्नस्यानाभोगादिना, शेषास्त्रयो व्याजपरत्वादतिचा-रा इति. एते चातिचारा दिग्व्रतानुसारितयोक्ताः, मुख्यतोऽस्य व्रतस्य तदनुयायित्वात्. उप-लक्षणत्वाच्छेषव्रतसंक्षेपे तदतिचारा अपि तदनुसारेण वाच्याः, यद्वा प्राणातिपातादिसंक्षेपे-ण बंधादय एवातिचारा घटंते, दिग्व्रतसंक्षेपे तु क्षेत्रस्य संक्षिप्तत्वाच्छब्दानुपातादयोऽपि स्यु-रिति भेदेनोक्ताः. अत्र भावनागाथा— सव्वे य सव्वसंगेहिं । वज्जिए साहुणो नमंसिज्जा ॥

सव्वेहिं जेहिं सव्वं। सावज्जं सव्वहा चत्तं ॥१॥ उक्तं सदृष्टांतं द्वितीयं शिक्षाव्रतं. अथ तृतीयमाह—

॥ मूलम् ॥—आहारदेहसक्कार—गेहवावारविरइबंभेहिं ॥ पव्वदिणाणुट्ठाणं। तइयं पोसहवयं चउहा ॥ ८ए ॥ व्याख्या—आहारोऽशनादिः, देहसत्कारः स्नानोद्वर्तनविलेपनादिः, गेहव्यापारो गृहकर्माणि, एभ्यो विरतिर्निवृत्तिः. ब्रह्मेति ब्रह्मचर्यं, एभिः प्रकारैश्चतुर्धा यत्पर्वादिनानुष्ठानं तच्छिक्षाव्रतमाश्रित्य तृतीयं पौषधव्रतं भवति, पोषं पुष्टिं प्रक्रमाद्धर्मस्य धत्त इति पौषधः. अयं च चतुर्विधोऽपि द्विधा—देशतः सर्वतश्चेति. तत्राहारपौषधो देशतो विकृत्यादित्यागः सकृद् द्विर्वा भोजनं, सर्वतस्तु चतुर्विधाहारत्यागः. देहसत्कारगेहव्यापारपौषधौ तु देशतः कस्यापि सत्कारविशेषस्य गेहव्यापारस्याकरणं, सर्वतस्तु सर्वस्य तस्याकरणं. ब्रह्मपौषधस्तु देशतो मैथुनप्रमाणकरणं, सर्वतस्तु सर्वथा ब्रह्मचर्यपालनं. अत्रेयं सामाचारी—'जो देसपोसहं करेइ सो सामाइयं करेइ वा न वा, जो सव्वपोसहं करेइ सो नियमा सामाइयं करेइ, जं न करेइ तो वंचिज्जइ. तं कहं? चेइघरे साहुमूले घरे वा पोसहसालाए वा उम्मुक्कमणिसुवण्णो पढंतो, पुत्थगं वाचयंतो सुणंतो धमज्झाणं झियाइ.' अथ यदुक्तं पौष-

धः पर्वदिनानुष्ठानमिति, तत्र तावत्पर्वाण्याह—

॥ मूलम् ॥—चउद्दसठ्ठमुद्दिठ—पुण्णिमासीसु चउसु पव्वेसु ॥ उम्मुक्कमणिसुवण्णो । धण्णो चिय पोसहं कुणइ ॥ ९० ॥ व्याख्या—इह मासमध्ये चतुर्दशी कृष्णा शुक्ला च, तथापि नामसाधर्म्यादेकैव विवक्षिता, एवमष्टम्यपि, उद्दिष्टा अमावास्या, पौर्णमासी पूर्णिमा, एतेषु नामतश्चतुर्षु वस्तुतः षट्सु पर्वसून्मुक्तमणिसुवर्णः, उपलक्षणत्वात्त्यक्ताशेषपापाधिकरणो धन्य एव पौषधं करोति. अयं च पौषधस्तत्त्वतस्तपोरूपस्ततस्तप एव व्याचष्टे—

॥ मूलम् ॥—लद्धिणकारणं असिव–वारणं तारणं भवोदहिणो ॥ तवचरणं चिय धीरा । इइ बिंति असेसधम्मेसु ॥ ९१ ॥ व्याख्या—इह धीरा महर्षयोऽशेषेष्वपि दानादिषु धर्मेषु तपश्चरणमेव मुख्यतया लब्धीनां कारणं ब्रुवते. लब्धयश्चैताः—आमोसहि १ विप्पोसहि २ । खेलोसहि ३ जल्लउसहि ४ चेव ॥ सव्वोसहि ५ संभिन्ने ६ । उहि ७ रिउ ८ विउलमइ ९ लद्धी ॥१॥ चारण १० आसीविस ११ केवली य १२ । गणधारिणो १३ य पुव्वधरा १४ ॥ अरिहंत १५ चक्कवट्टीयं १६ । बलदेवा १७ वासुदेवा य १८ ॥ २ ॥ खीरमहुसप्पि-

रासव १९ । कुट्ठगबुद्धि २० पयाणुसारी य २१ ॥ तह बीयबुद्धि २२ तोयग २३ । आहारग २४ सीयलेसा य २५ ॥ ३ ॥ वेउव्वियदेहलद्धी २६ । अक्खीणमहायसी २७ पुलगा २८ य ॥ परिणामतववसेणं । एमाइ हुंति लद्धीउ ॥ ४ ॥ आसां च लेशतो व्याख्या—आमर्षः स्पर्शः, स एव सर्वरोगनिवारकत्वादौषधिर्यस्यां सा आमर्षौषधिः. तथा विप्रुषौ विण्मूत्रे, खेलः श्लेष्मा, जल्लो मलः, सर्वे विप्रुट्खेलजल्लकेशनखादयः, एते सुरज्ञयो व्याधिविध्वंसनसमर्थाश्च यत्र ता विप्रुट्खेलजल्लसर्वौषधयः, संभिन्नान्येकैकशः सर्वविषयग्राहीणि श्रोतांसींद्रियाणि यस्यां सा संभिन्नश्रोताः. अवधिज्ञानलब्धिः प्रतीता. मनःपर्यवज्ञानिनः साधो रुजुः सामान्या घटादिमात्रचिंतावभासिका मतिर्यस्यां सा रुजुमतिः. तस्यैव विपुला विस्तीर्णा घटादेः श्वेतरक्तत्वाद्यशेषग्राहिणी मतिर्यस्यां सा विपुलमतिः. चारणा द्विधा—जंघाचारणा विद्याचारणाश्च, तत्र ये रविकरानप्यवष्टभ्यैकेनोत्पातेन रुचकद्वीपं गछंति, व्यावृताश्च प्रथमेनोत्पातेन नंदीश्वरं, द्वितीयेन तु स्वस्थानमायांति, ऊर्ध्वं त्वेकेनोत्पातेन पांडुकवनं, व्यावृताश्च प्रथमेनोत्पातेन नंदनवनं, द्वितीयेन तु स्वस्थानं प्राप्नुवंति ते जंघाचारणाः. ये च विद्याव-

लात्प्रथमेनोत्पातेन मानुषोत्तरगिरिं, द्वितीयेन नंदीश्वरं प्रयांति, वलमानाश्चैकेनोत्पातेन स्वस्थानमायांति, ऊर्ध्वं तु प्रथमेनोत्पातेन नंदनवनं, द्वितीयेन पांकुकवनं, वलमानाश्चैकेनैव स्वस्थानं लनंते ते विद्याचारणाः. इह तु जंघाचारणैरधिकारस्तद्रूपा लब्धिश्चारणलब्धिः. यया वाङ्मात्रेण शापानुग्रहसामर्थ्यं नवति सा आशीविषलब्धिः. केवलिगणधारिपूर्वधरार्हच्चक्रिबलदेववासुदेवलब्धयः प्रतीताः. कीरं चक्रवर्तिधेनुदुग्धं, मधु शर्करादिद्रव्यं, सर्पिरतिशायिगंधादिघृतं, तद्वद्यया श्रोतृजनाप्यायकवचनं जायते सा कीरमधुसर्पिराश्रवा. यया कोष्टकक्तिधान्यवत्सूत्रार्थौ न परिगलतः सा कोष्टकबुद्धिः. एकेन सूत्रपदेन बहुसूत्रग्राहिणी पदानुसारिणी. एकेनार्थपदेन बह्वार्थावधारिणी बीजबुद्धिः. यया क्रुद्धः साधुः क्रोधविषयीकृतं नगनगरादिकमपि दग्धुं क्षमः स्यात्सा तैजसी. यया आनीतं नक्तं स्वयमेव नुक्तं कीयते न पुनरन्यैः परैर्लक्षैरपि सा अक्षीणमहानसा. यया संघादिप्रत्यनीकं चक्रिणमपि चूर्णयितुं क्षमो नवति सा पुलाकलब्धिः. नवसिद्धियपुरिसाणं । एयाउ हुंति नणियलच्छीउ ॥ नवसिद्धियमहिलाणवि । जित्तिया जा तयं वुछं ॥१॥ अरिहंतचक्किकेसव—बलसंनिन्ने य चा-

रणे पुव्वा ॥ गणहरपुलायआहारगं च । न हु नवियमहिलाणं ॥२॥ अन्नवियपुरिसाणं पुण । दसपुव्विज्ञा उ केवलित्तं च ॥ उज्जुमइविउलमई । तेरस एयाउ न हु हुंति ॥ ३ ॥ अन्नवियमहिलाणंपि हु । एयाउ न हुंति नणियलद्धीउ ॥ न हु खीरासवलद्धी । विनेव सेसाउ अविरुद्धा ॥ ४ ॥ तथा तपश्चरणमेव दुष्टव्यंतरादिकमशिवं कारयतीत्यशिववारणं. यदार्ष— 'संतिनिमित्तं उववासाइ कारविज्जा.' तथा तीर्यतेऽनेनेति तारणं नवोदधेर्निर्जरारूपत्वात्. निर्जरारूपत्वमेव वैयक्त्येनाह—

॥ मूलम् ॥—लोनारंनविमुक्कं । खंतिपहाणं सनाणमनियाणं ॥ अप्पंपि तवं निहेणइ । कम्माइं निकाइयाइंपि ॥ ए२ ॥ व्याख्या—स्पष्टा, नवरं लोनो धनवसनादिलिप्सा, आरंनो गृहव्यापारः, तत्र निर्लोनत्वेऽपि सारंनं, निरारंनत्वेऽपि क्षमारहितत्वं, क्षमाप्रधानेऽपि ज्ञानविकलं सज्ञानत्वेऽपि सनिदानं तपो न डुष्कर्मनिर्मूलनक्षमं स्यादित्येतावतां वेशेषणानामुपादानं. उक्तं च—सव्वाणवि कम्माणं । परिणामवसाउवक्कमो नणिउ ॥ पायं अनिकाइयाणं । तवसाउ निकाइयाणंपि ॥ १ ॥ अथ प्रस्तुतयोजनामाह—

॥ मूलम् ॥—सो य तवो सवासुवि । तिहिसु गिहिणोवि होइ करणिज्जो ॥ तह अ-
तरंतो नियमा । हविज्ज पव्वेसु पोसहिउ ॥ ९३ ॥ व्याख्या—तच्च तपः सर्वास्वपि तिथिषु प्र-
तिपदादिष्वास्तां साधोर्गृहिणोऽपि करणीयं भवति. प्राकृतत्वाल्लिंगव्यत्ययः. तथेति सर्वति-
थिषु तपः कर्तुमशक्नुवन्नियमादसौ पर्वस्वष्टम्यादिषु पौषधिको भूयात्. उक्तं च—सव्वेसु का-
लपव्वेसु । पसत्थो जिणमए तवो जोगो ॥ अठमी पन्नरसीसु य । नियमेण हविज्ज पोसहि-
उ ॥ १ ॥ यद्यपि सर्वाहारत्यागाद् दुष्करोऽयं, तथापि पुण्यफलत्वादनुष्ठेय इत्याह—

॥ मूलम् ॥—रायग्गहरोगाइसु । न लहसि असणाइयं न धम्मंपि ॥ किं पव्वपोसहेणं
। धुवम्मि धम्मे पमाएसि ॥ ९४ ॥ व्याख्या—भो गृहस्थ ! राजग्रहो राजकृतो रोधः, रोगो
मांद्यं, आदिशब्दाद्रणकदुर्भिक्षादयः, एतेषु स्थानेषु न लभसेऽशनादिकं राजभिषगाद्यनु-
रोधात्. आदिशब्दाद्देहसंस्कारादिकं च न धर्ममपि लभसे विरतिपरिणामाभावात्. एवं च
पराधीनत्वे स्वस्योभयभ्रष्टतामालोक्य पर्वसु पौषधेन ध्रुवेऽवश्यंभाविनि धर्मे किं प्रमाद्यसि ?
नात्र प्रमादो युक्तः. अथ दृष्टांतमाह—

॥ मूलम् ॥—सुगइं सागरचंदो । पत्तो नहसेणन्निन्नगत्तोवि ॥ परिपालिऊण पोसह-
मोसहमिव सव्वदुक्खाणं ॥ एए ॥ व्याख्या—सुबोधा, जावार्थः कथानकगम्यस्तच्चेदं—

श्रीमान् सागरचंद्रोऽभूद् । द्वारिकायां पुरा पुरि ॥ पौत्रो रामस्य पुत्रश्च । निषधस्य प्र-
शस्यरुक् ॥ १ ॥ तस्मिन्नुद्यौवने देजे । कमलां कमलाननां ॥ औग्रसेनिः नभःसेनो । धनसे-
नो नृपांगजां ॥ २ ॥ तदा गृहमुपेतोऽपि । नभसा नारदो मुनिः ॥ नववीवाहमत्तेन । नभः-
सेनेन नार्चितः ॥ ३ ॥ अस्योत्तार्यं विवाहांध्य—मिति निश्चित्य नारदः ॥ गृहं सागरचंद्रस्य ।
पक्षीव वियता ययौ ॥ ४ ॥ तत्रासौ पूजितः पृष्टं—श्चित्रं किंचिच्च साग्रहं ॥ सागरेणावद-
द्विश्वे । कमलारूपमद्भुतं ॥ ५ ॥ तस्या रूपविनिर्माणे । जातक्लेशेन वेधसा ॥ श्रांतेनेवाप-
रा नारी । तादृशी नेह निर्ममे ॥ ६ ॥ धनसेनो हि मूर्खो य—न्नभःसेनस्य तामदात् ॥
साररूपां कुरूपस्य । काकस्यैकावलीमिव ॥ ७ ॥ गतोऽथ कमलाधाम । नारदः पूजितस्तया
किंचिच्चित्रं त्वया दृष्ट—मिति पृष्टो मुनिर्जगौ ॥ ८ ॥ जूतलं निखिलं ज्राम्य—न्नपश्यं कौ-
तुकद्वयं ॥ रूपं सागरचंद्रे य—न्नभःसेने विरूपतां ॥ ए ॥ नभःसेने विरक्ता सा । ततोऽर-

ज्यत सागरे ॥ स्त्रीणां सर्वस्वलोपो हि । विरूपवरसंगमे ॥ १० ॥ बालायाः सागरश्रुत्या ।
जागरं रागसागरं ॥ निवेद्य सागरस्याग्रे । न्यवर्तत कलिप्रियः ॥ ११ ॥ नैषधेर्ववृधे स्नेहः ।
संधुक्षित इवानलः ॥ कमलायां ततः सर्वं । तन्मयं पश्यतिस्म सः ॥ १२ ॥ भुंजानस्य शया-
नस्य । स्नपतो लपतोऽपि च ॥ रेमे भृंगीव तस्यास्य—कमले कमलेति गीः ॥ १३ ॥ यथा
यथाभूदासन्नः । पाणिग्रहणवासरः ॥ सागरं कमलां मुक्त्वा । न कोऽहृष्यत्तथा तथा ॥१४॥
निविष्टस्य निजावासे । शांबः प्रकृतिचंचलः ॥ आगत्य पृष्टतो दृष्टी । नैषधेः पिदधेऽन्यदा
॥ १५ ॥ ज्ञातासि कमलामेले । मुंच मुंच ममाक्षिणी ॥ सागरः कमलाध्यान—विचेता इत्यु-
वाच तं ॥ १६ ॥ हसन्नवशजिह्वोऽथ । तं दुर्दांताग्रणीर्जगौ ॥ नाहं सा कमलामेला । कम-
लामेलकः पुनः ॥ १७ ॥ सोऽथ शांबे दृढं लग्नो । भुरङ्ग इव कंबले ॥ उवाच तात सत्यागूः ।
कमलामेलनाद्भव ॥ १८ ॥ तस्यार्त्तिं कृपया वीक्ष्य । बंधुस्नेहेन नारितः ॥ शांबः स्ववचसा
बद्धः । ॐमिति प्रतिपन्नवान् ॥ १९ ॥ शांबरीनिलयः शांबः । चक्रे प्रज्ञप्तिविद्यया ॥ आसन्ने
लग्नसमये । सुरंगां भूमिरंध्रगां ॥ २० ॥ हृत्वा तया कनीं विद्या—धरीभूय पुरो बहिः ॥ स-

बांधवेन शांबेन । सागरः पर्यणाय्यत ॥ २१ ॥ इतश्च नन्नःसेनोऽपि । विहिताखिलमंगलः ॥
प्रतस्थे कमलोद्वाह—हेतुर्यदुपरिच्छदः ॥ २२ ॥ धनसेनगृहे तत्र । स्फुरदुज्वलमंगले ॥ ना-
स्त्यत्र कमलामेले—त्यकस्माद्ध्वनिरुत्थितः ॥ २३ ॥ वीक्षितापि च सर्वत्र । प्रापि सा न य-
दा तदा ॥ धनसेनोग्रसेनाख्यां । विज्ञाप्येत मुरारये ॥२४॥ अथो दिदृक्षुः फलितं । प्रागुप्तं
कलिपादपं ॥ आगतो नारदस्तत्र । समपूज्यत विष्णुना ॥ २५ ॥ ददृशे कमला क्वापी—ति
पृष्टः केशवेन सः ॥ प्रोचे किमवबुध्यंते । स्त्रीवृत्तांतं महर्षयः ॥ २६ ॥ परमागच्छता जात—
नवोद्वाहा मया वने ॥ ददृशे कमलेव स्त्री । काचित्खेचरवेष्टिता ॥ २७ ॥ ततस्तान् खेचरा-
न् जेतुं । प्रैषीद्द्वेषी मधोश्चमूं ॥ मृदं कुलालवच्छन्न—मूर्त्तिः शांबो ममर्द तां ॥ २८ ॥ अ-
थ प्रसह्य संनह्य । प्रस्थिते केशवे स्वयं ॥ शांबो मुख्यं दधौ रूपं । का माया गुरुभिः सह
॥ २९ ॥ सवधूकं पुरस्कृत्य । नैषेधिं नेमुरच्युतं ॥ शांबादयः कुमारास्ते । वृत्तांतं च तमूचि-
रे ॥ ३० ॥ कृतस्य करणं नास्ती—त्युक्त्वाक्षमयदच्युतः ॥ धनसेनोग्रसेनादीन् । कन्यां पौ-
त्राय चार्पयत् ॥ ३१ ॥ सागरः पिप्रिये प्राप्य । कमलां कमलामिव ॥ च्युतफाल इव द्वीपी ।

व्यषीदच्चोग्रसेनभूः ॥ ३१ ॥ तच्छिद्राणि नभःसेनो । वैरशुद्ध्यै व्यलोकयत् ॥ छिद्रं विना न चौरोऽपि । वेष्टुमीष्टे परौकसि ॥ ३३ ॥ सागरोऽपि चिरं भुक्त—भोगः श्रीनेमिशासनात् ॥ समये शांतधीः श्राद्ध—धर्मं शश्वदसेवत ॥ ३४ ॥ निशि पौषधिकोऽन्येद्युः । स कायोत्सर्गमुद्रया ॥ शून्ये गृहे स्थितोऽज्ञायि । नभःसेनेन वैरिणा ॥ ३५ ॥ स लब्धावसरस्तीक्ष्णाः । सागरस्याखिलांगके ॥ अग्निध्माता न्यधाल्लोह—शूची रोमणि रोमणि ॥ ३६ ॥ अन्वशादेवमात्मानं । वेदनार्त्तोऽपि सागरः ॥ आत्मन् दीनोऽधुना माभू—र्न दीनः खलु सागरः ॥३७॥ त्वया यदपचक्रेऽस्य । पीडां तेन तनोत्यसौ ॥ केनचिन्न हि हन्येत । प्रायः सर्पोऽपि निर्विषः ॥ ३८ ॥ सुखेन क्रियते कर्म । पुनः कृच्छ्रेण वेद्यते ॥ अपथ्यभोगः सुकर—स्तद्विपाकस्तु दुःसहः ॥ ३९ ॥ विचारय नभःसेन—मेनं परमबांधवं ॥ यस्त्वां मोचयति द्रुत—मेत्य दुष्कर्मपाशतः ॥ ४० ॥ एवं शुभध्यानबलात्प्रपाल्य । स्वं पोषधं सानशनो विपद्य ॥ सुश्रावकः सागरचंद्रनामा । जगाम धाम त्रिदशालिशालि ॥ ४१ ॥ इति पौषधव्रते सागरचंद्रकथा. ॥

अत्रापि व्रते पंचातिचारा वर्ज्यास्तद्यथा—अप्रत्युपेक्षितदुःप्रत्युपेक्षितशय्यासंस्तारकः १,

अप्रमार्जितदुःप्रमार्जितशय्यासंस्तारकः २, अप्रत्युपेक्षितदुःप्रत्युपेक्षितोच्चारप्रस्रवणभूमी ३, अप्रमार्जितदुःप्रमार्जितोच्चारप्रस्रवणभूमी ४, पौषधोपवासस्य सम्यगननुपालनं ५ चेति पंचापि सुबोधाः. नवरमप्रत्युपेक्षितो दृष्ट्या न वीक्षितः, दुःप्रत्युपेक्षितः प्रमादितया वीक्षितः, अप्रमार्जितो रजोहरणादिना, दुःप्रमार्जितोऽनुपयुक्ततया, शय्या शयनं तदर्थः संस्तारकः शय्यासंस्तारकः, रजोहरणं चौपग्रहिकं साधुसमीपे यदि स्यात्तदा याचते, नो चेद्वस्त्रांचलेन प्रमार्ष्टि. उक्तं च सामायिकावसरे आवश्यकचूर्णौ—'रजोहरणेणं पमज्जइ, साहूणं उग्गहियं रजेहरणमत्थि, तं मग्गई, असइ पुत्तस्स अंतेणंति.' पौषधोपवासस्य सम्यगननुपालनं, आहारादीन्नतः पारणके वा स्वात्मार्थमादरं कारयतः, शरीरे वा शृंगारबुद्ध्या केशरोमादि संमार्जयतो दाहे वा देहं सिंचतः, एवं च गेहव्यापारं, अब्रह्म च मनसा सेवमानस्य दृष्टव्यं, अस्यातिचारता भावतो विरतेर्बाधितत्वात्. अत्र भावनागाथा—उग्गं तप्पंति तवं। जे एएसिं नमो सुसाहूणं ॥ निस्संगा य सरीरे—वि सावज्जं चिंतए मइमं ॥ १ ॥ उक्तं सदृष्टांतं तृतीयं शिक्षाव्रतं. अथ चतुर्थं तदाह—

॥ मूलम् ॥—जं इह अहापवत्तं । रिसिणो असणाइ देइ पारणए ॥ परमविणएण एयं । तुरियमहासंविभागवयं ॥ ए६ ॥ व्याख्या—यदिह गृहस्थो यथाप्रवृत्तं स्वभावनिष्पन्नमशनादि ऋषये निर्ग्रंथाय परमविनयेन नत्वनुकंपादिना पारणके पौषधस्येति गम्यते, ददाति, तत्तुर्यं यथाप्रवृत्तस्याशनादेः संगतं साधुभ्यो विभजनमिति व्युत्पत्त्या यथासंविभागव्रतमुच्यते, केचिदिदं व्रतमतिथिसंविभाग इति पठंति, तत्र तिथिः पर्वाद्युपलक्षितलोकव्यवहाररहिता अतिथयः साधवस्तेषां संविभाग इति व्युत्पत्तेः. अत्रोपयोगित्वात्किंचिच्चूर्णिभणितं लिख्यते—'पोसहं पारंतेणं साहूणं अदाउं न वट्टइ पारेउं, पुव्वं साहूणं दाउं पच्छा पारेयव्वं, काए विहीए दायव्वं? जाहे देसकालो ताहे अप्पणो सव्वं सरीरस्स विभूसं काऊणं साहुपडिस्सयं गउं निमंतेइ, भिक्खं गिह्लहत्ति साहूणं का पडिवत्ती? ताहे अन्नो पडलगं अन्नो भायणं पडिलेहेइ, मा अंतराइयदोसा ठवियगाइदोसा य भविस्संति, सो जइ पढमाए पोरसीए निमंतेइ, अत्थियनमुक्कारइत्ता ताहे घिप्पइ, जइ नत्थि ताहे न घिप्पइ, तं धरियव्वयं होहिइ सो घणं लगिज्जा, ताहे घिप्पइ संचिक्खाविज्जइ, जो

वा उग्घाडपोरसीए पारेइ, पारणगइत्तो अन्नो वा तस्स विसज्जिज्जइ, तेण सावएणं सह गम्मइ. संघाडउ वच्चइ एगो न वट्टइ, साहुपुरउ सावगो पच्छा घरं नेऊण आसणेण निमंतेइ, जइ न निविट्ठो विणउपत्तो ताहे भत्तपाणं सयं देइ, अहवा भायणं धरेइ, भज्जा देइ, अहवा ठिउ अच्छइ, जाव दिन्नं सावसेसं च गिण्हियव्वं, पच्छा कम्माइपरिहरणट्ठदाऊणं वंदित्ता विसज्जेइ, अणुगच्छइ, पच्छा सयं भुंजइ. जइ जं च किर साहूणं न दिन्नं तं सावएण न भुत्तव्वं, जइ पुण साहु नत्थि तत्थ देसकालवेलाए दिसालोउ कायव्वो विसुद्धेणं भावेणं, जइ साहूणो हुंता तो निच्छरिउ होंतोत्ति.' अनेन सदापि सुश्रावकेण साधुभ्यो दानं देयमेव, परमतिथिसंविभागव्रतोच्चारः पर्वपारणके एव भवति. यदाहावश्यकवृत्तिकारः—पौषधातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयौ न प्रतिदिवसानुष्ठेयावित्यलं विस्तरेण. नन्वनेषणीयं ददानस्य गृहिणः को दोष इत्याह—

॥ मूलम् ॥—दित्तो अणेसणिज्जं । सुसाहुणो कुणइ कब्बुरं चरणं ॥ जम्मंतरंमि अप्पा—णयं च अप्पाणमवि पायं ॥ ८७ ॥ व्याख्या—श्रावकोऽनेषणीयमाधाकर्माद्यशुद्धं द-

दानः सुसाधोश्चरणं चारित्रं कर्बुरं मषीखरंटितशुक्लवस्त्रप्रायं करोति, न केवलं साधुमेव कर्बुरचरणं करोति, आत्मानमपि जन्मांतरे प्रायोऽल्पायुषं करोति. तथा च भगवतीसूत्रं—'कह णं भंते जीवा अप्पाउयत्ताए कम्मं पकरंति? गोयमा! पाणे अइवाइत्ता मुसं वइत्ता तहारूवं समणं माहणं वा अफासुएणं अणेसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाभित्ता भवइ.' प्रायो ग्रहणादनिर्वाहेऽशुद्धमपि ददतो न दोषः. उक्तं च—संथरणंमि असुद्धं। दुह्नवि गिह्नंतदिंतयाणहियं॥ आउरदिट्ठंतेणं। तं चेव हियं असंथरणे॥ १॥ अनेन सति निर्वाहे साधोः सर्वथाऽनेषणीयं न देयमित्युक्तं, एषणीयमपि कुपात्रे ददतः न कोऽपि गुण इत्याह—

॥ मूलम् ॥—एवं कुणइ कुपत्ते। असणाइ एसणिज्जमवि दिंतो॥ पावपयडीउ सव्वा। दढबंधा सिथिलबंधावि॥ ९८॥ व्याख्या—सुगमा. अत्र पंचमांगसूत्रं—'समणोवासगस्स णं भंते तहारूवं असंजयं अविरयं अप्पडिहयपच्चक्खायपावकम्मं फासुएण वा अफासुएण वा एसणिज्जेण वा अणेसणिज्जेण वा असणपाणखाइमसाइमेण पडिलाभेमाणस्स किं

किज्जइ? गोयमा! एगंतसो से पावकम्मे कज्जइ, नत्थि य से काचि निज्जरा?' तर्हि श्रावकेण साधुभ्योऽन्यत्र न कापि दानं देयमिति परप्रश्नमाशंक्य पूर्वसूरिकृतां गाथामाह—

॥ मूलम् ॥—जं मुक्खट्ठा दाणं। तं पइ एसो विही समरकाउ ॥ अणुकंपादाणं पुण। जिणेहिं न कयावि पडिसिद्धं ॥ ८८ ॥ व्याख्या—एष कुपात्रदाननिषेधलक्षणः, कर्मनिर्जराविमर्शनमकृत्वा केवलं कृपाप्रेरणया यद्दीयते तदनुकंपादानं पुनर्जिनैर्न कदापि प्रतिषिद्धं. अत एव राजप्रश्न्युपांगे—'मा णं तुमं पएसी पुव्वं रमणिज्जे भवित्ता पच्छा अरमणिज्जे भविज्जासीति.' केशिगणधरोपदेशात्प्रदेशी नरेश्वरो निजं देशं चतुर्धा विभज्यैकेन तदंशेन दीनानाथाद्यर्थं सततं दानशालां प्रवर्तयामास, दानत्यागान्माभूज्जिनमतस्यापभ्राजनेति. यदा हि परमगुरवः श्रावकाणां सर्वत्र दानं नानुमन्येरंस्ततस्तुंगिकानगरीनिवासिश्रावकवर्णनाधिकारे—'विअड्डियपउरभत्तपाणा' इति विशेषणं नोपाददीरन् केवलं साधुप्रदाने प्रचुरान्नछर्दनाभावात्. ततो निर्जरार्थं यद्दानं तत्साधुभ्य एव देयं दयादानं पुनः सर्वेभ्योऽपीति परमार्थः. ननु पात्रदानेऽपि केचिन्न निर्जरां प्राप्नुयुस्तत्र को हेतुरित्याह—

॥ मूलम् ॥—सव्वारंत्नविवित्तं । पत्त दोसेहिं वज्जियं देयं ॥ दाया मायारहिउं । जइ जुइ तो फलं पुन्नं ॥ १०० ॥ व्याख्या—सर्वारंत्नेज्यो विविक्तं पृथग्भूतं पात्रं ग्राहकः, दोषैराधाकर्मादिन्निर्विवर्जितं देयं वस्त्वशनादि, दाता च मायारहितो निश्बद्मनाः, यद्येतत् त्रयं युज्यते, दानद्दणे एकत्र मिलति तदा फलं प्रस्तावाद्दानस्य पूर्णं सम्यग्निर्जरारूपं जायते, नान्यथा. समुदायसाध्ये हि वस्तुन्येकेनापि न्यूनतायां संपूर्णसिद्ध्यभावात्. यद्भगवती— ‘समणोवासगस्स णं न्नंते तहारूवं समणं वा माहणं वा फासुएणं एसणिज्जेणं असणपाणखाइमसाइमेणं पमिलान्नेमाणस्स किं कज्जइ? गोयमा! एगंतसो निज्जरा किज्जइत्ति.’ एतत् त्रयं तु कस्यचिद्धन्यस्यैव संगन्नति. उक्तं च—केसिं च होइ चित्तं । वित्तं अन्नेसिं उन्नयमन्नेसिं ॥ चित्तं वित्तं पत्तं । तिन्निवि जेसिं तु ते धन्ना ॥१॥ अथ पात्रदानस्य विशेषमाह—

॥ मूलम् ॥—करुणाइपरिरकाए । लोन्नेण न्नयेण अमरिसेणं वा ॥ जसपसिणट्ठा दाणं । अरिहंति कयावि न हु मुणिणो ॥ १ ॥ व्याख्या—मम दत्तं विना वराका अमी कथं न्नविष्यंतीति करुणा, श्रूयंते ह्यमी निर्लोन्नास्तद्दीयमानं गृह्णंति वा न वेति परीक्षा, दानात्तत्र

भवे भवांतरे वा भोगादिप्रार्थनं लोभः, असत्कृता अमी शापादि दास्यंति विरूपं जल्पिष्यंतीति भयं. अमुकेनापि दत्तं किमहं ततोऽपि हीनो यन्न ददामीत्यमर्षः. एतैर्हेतुभूतैस्तथा ग्रहीतुरन्यस्य वा मुखादात्मश्लाघा शुश्रूषा यशः, दानोपचारिता एते मया पृष्टं ज्योतिष्कादि वक्ष्यंतीति प्रश्नज्योतिष्कादेस्तदर्थं च मुनयोऽनंतकल्याणिनः दानं नार्हंति, स्वनिस्तारबुद्ध्या भक्तिदानस्यैव तेष्वधिकारात्. अथास्य दानस्य माहात्म्यमाह—

॥ मूलम् ॥—जं कालविसेसेणं । पत्ते भावेण दिज्जए दाणं ॥ तं कप्पडुमचिंता—मणीणमाहप्पमहरेइ ॥ २ ॥ व्याख्या—स्पष्टा, नवरं कालविशेषश्चायं—'पइसंतगिलाणेसु । आगमगहणे य लोयकरणे य ॥ उत्तरपारणगंमि य । दाणं च बहुफलं होइ ॥ १ ॥ अत्र पात्रदाने दृष्टांतमाह—

॥ मूलम्॥—परमन्नं भत्तं साहु—संगमे संगमेण जं दिन्नं ॥ तं दाणप्पभवाए । रिद्धिए पुण कयं पयडं ॥ ३ ॥ व्याख्या—यत्संगमेन गोपालेन भत्तं मातुरप्यपह्नुवता सता साधोः संगमे समागमे सति परमान्नं पायसं दत्तं, तत्तस्य दत्तं दानं दानप्रभवया ऋद्ध्यैव भवांतरे

प्रकटं सर्वस्यापि जगतो विदितं कृतं. अनेनाप्रार्थितापि प्रसिद्धिर्दानात्स्वयमेव जायते, ये पुनः प्रसिद्ध्यर्थमेव दानं ददति तेषां दुर्बुद्धिविलसितमित्यावेदितमिति गाथार्थः. संगमकथा चैवं—

मगधेषु श्रिया शाली । शालिग्रामोऽस्ति विश्रुतः ॥ रक्षायंत्रंति केदारा । यत्र डुर्निक्षर-क्षसः ॥ १ ॥ धन्या धनुर्लतेवाभू—त्स्त्री तत्रोछन्नवंशजा ॥ जहौ वयोविपाकेन । नम्रांग्यपि न या गुणं ॥ २ ॥ अन्नूदभूमिर्दोषाणां । तस्याः संगमकः सुतः ॥ यो बाल्ये वत्सरूपाणि । चारयामास गोचरे ॥ ३ ॥ धन्यापि कुर्वती दास्यं । सततं लोकवेश्मसु ॥ उदजीवयदात्मानं । तनयं च नयांचिता ॥ ४ ॥ पायसं पर्वदिवसे । व्यापृतं प्रतिमंदिरं ॥ दृष्ट्वा स दृष्टश्रृ-क्षालु—र्बालः स्वांबामयाचत ॥ ५ ॥ साप्यूचे पायसं पुत्र । नवति श्रीमतां गृहे ॥ धन्याप्यहमधन्येव । निःश्रीकास्मि करोमि किं ॥ ६ ॥ अशक्तामीप्सितं दातु—मेकस्यापि तनूरुहः ॥ केवलं डुःखदाहार्थ—मेव मां विदधे विधिः ॥ ७ ॥ दौःस्थ्याविज्ञेन बालेन । याच्यमाना पुनः पुनः ॥ शल्यायितधना धन्या । मुक्तकंठं रुरोद सा ॥ ८ ॥ पृष्टासन्नगृहस्त्रीभि-र्डुःखहेतुं जगाद सा ॥ ता ऊचुर्मा सखि क्रंद । नोज्योऽस्मान्निरयं शिशुः ॥ ए ॥ आनमा-

नी पुनर्बालो । न तथा जोक्तुमैहत ॥ सत्यां मातरि कोऽन्यस्त्री–मुखानीक्षेत जोजने ॥१०॥
ततस्तंदुलदुग्धाज्य—सिता उल्लसिताननाः ॥ तास्तस्यै ददिरे सापि । क्षैरेयीं मंक्षु निर्ममे
॥ ११ ॥ स्थाले विशाले पुत्राय । पायसं परिवेष्य सा ॥ जगाम निकटं धाम । बालपुण्यैरि-
वेरिता ॥ १२ ॥ तावत्तत्रायययौ कोऽपि । मुनिर्मासमुपोषितः ॥ संगमो जंगमं पुण्य—मिव तं
वीक्ष्य पिप्रिये ॥ १३ ॥ क्वाहं निःपुण्यकः क्वायं । पुण्यराशिमयो मुनिः ॥ अहो अचिंतितश्चिं-
ता—मणिरेष मयैक्ष्यत ॥ १४ ॥ अद्य मे पायसप्राप्ति—रद्य मे ऋषिसंगमः ॥ यन्न संजा-
य्यते भाग्यो—दयात्तदपि संजवेत् ॥ १५ ॥ कुक्षौ यत्क्षिप्यते मन्ये । जस्मन्येव हुतं हि त-
त् ॥ मुनये दीयतेऽस्मै य—त्तत्कल्पतरुसेचनं ॥ १६ ॥ इति भावनया बालः । स्थालमुध्धृ-
त्य जक्तितः ॥ स्ववासनोज्ज्वलं साधो—र्ढौकयामास पायसं ॥ १७ ॥ तदादत्त मुनींद्रोऽपि ।
तदनुग्रहकाम्यया ॥ ग्रासमात्रं मुनिर्गृह्णन् । कोटिदानाय कल्पते ॥ १८ ॥ गते मुनिपतौ ध-
न्या—जगाम न तु संगमः ॥ अपरुद्धीणमंत्रः स्वं । सुकृतं मातुरप्यवक् ॥ १९ ॥ मंक्षु जु-
क्तमनेनेति । पुनः सा पर्यवेषयत् ॥ पायसं न्यायसंप्राप्तं । सोऽप्याकंठमजुक्त च ॥ २० ॥ स्व-

भावगुरुसद्दान—पुण्यैर्गुरुतरीकृतं ॥ स्वल्पे शिशूदरे युक्तं । जीर्यतिस्म न पायसं ॥ २१ ॥ नो-र्ध्वं नाधश्च तत्कुक्षि—संगभंगभयादिव ॥ प्रयाति पायसे जाता—जीर्णबाधः स दध्यिवान् ॥ २२ ॥ इदं दिनं दिनं मन्ये । यत्राभून्मुनिसंगमः ॥ भक्तमेतद्धि मे तुष्ट्यै । यत्तस्मै समदीयत ॥ २३ ॥ स्वं दानं भावयन्नेव—मनिदानं विपद्य सः ॥ ग्रामावासादिवोद्विग्नः । पुरंप्रत्यचलन्निशि ॥ २४ ॥ अन्वेषकभियेवासौ । गत्वा राजगृहं जवात् ॥ गोभद्रेभ्यवधूभद्राकुक्षौ भ्रमवास्थित ॥ २५ ॥ स हि पुण्यप्रियः पुण्य—दोहदान् मातुरातनोत् ॥ तानिभ्यः पूरयामास । वासवद्भुरिवापरः ॥ २६ ॥ मात्रा न्यभालि शालेयं । तत्र गर्भगते यतः ॥ प्रापितः शालिभद्राख्यां । तज्जातो जनकेन सः ॥ २७ ॥ पालितः पाठितः पित्रा । तारुण्ये परिणाय्य सः ॥ तद्रूपलोभितैरिभ्यै—र्दत्ता द्वात्रिंशतं कनीः ॥ २८ ॥ द्वात्रिंशता मृगाक्षीभिः । करेणुभिरिव द्विपः ॥ विदामास परिक्रीड—माणो वेद्यांतरं न सः ॥ २९ ॥ गोभद्रः प्रवयावीर—प्रभूपांते धृतव्रतः ॥ आहतोग्रतपाः स्वर्गं । साधितानशनो ययौ ॥ ३० ॥ भाग्यैः श्रीशालिभद्रस्य । स्मृतप्राच्यभवः सुरः ॥ स सूनोः सवधूकस्य । दिव्यान् भोगानपूरयत् ॥३१॥

यद्यदंगेऽलगत्तस्य । वासःस्रग्भूषणादिकं ॥ प्रातः पपात निर्माल्य-मिव तन्मलकूपके ॥३२॥
भद्रैव निखिलं गेह—व्यापारं निरवीवहत् ॥ शालिस्तु सततं तस्थौ । सौधमूर्द्धनि सप्रियः
॥ ३३ ॥ कदाचिदेयरुस्तत्र । रक्तकंबलनैगमाः ॥ रत्नानि राजगानीति । ययुस्ते राजमंदिरम्
॥ ३४ ॥ चंद्रांशुभिरिव व्यूतां—स्ते राज्ञे रत्नकंबलान् ॥ संदर्श्य तद्गुणाख्यान—पूर्वं मू-
ल्यमथोचिरे ॥ ३५ ॥ भो अमी कंबला मूल्ये । नाधिका नाधिकारिणः ॥ तदेतेषु वयं ख्या-
ता । गोपाला इति भूतले ॥ ३६ ॥ शीततापहरत्वेन । यदिभ्यैः श्लाघिता अमी ॥ तत्रोपा-
यांतरमपि । प्रायः सुकरमेव नः ॥ ३७ ॥ श्रुत्वेति वणिजो वाचं । राज्ञो राजगृहात्ततः ॥ नि-
र्गता अपि ते भ्रेमु—श्चित्रं राजगृहेऽखिले ॥ ३८ ॥ उक्तस्ते लोकवाणीभि—र्गोभद्रांगरुहो
ययुः ॥ भद्रा भद्राशया तेषां । प्रतिपत्तिं विनिर्ममे ॥ ३९ ॥ स्वार्थे निवेदिते तैश्च । दत्वा
मूल्यं मनीषितं ॥ आदत्त सकलान् रत्न—कंबलानबलापि सा ॥ ४० ॥ यद्यायात पुनस्त-
ज्ज्ञो । आनयेत बहूनिमान् ॥ इत्युक्त्वा सा वधूपादान् । प्रमार्ष्टुं तानखंरूयत् ॥ ४१ ॥ शु-
श्रुवे चेल्लणादेव्या । यद्विदेशादुपागतान् ॥ महीशो मूल्यबाहुल्या—न्नाददे रत्नकंबलान्

॥ ४२ ॥ अथैकं चेल्लणा भूपं । ययाचे रत्नकंबलं ॥ सा हि तस्य समस्तांतः—पुरस्त्रीषु वि-
शिष्यते ॥ ४३ ॥ नृपोऽप्यधत्त देव्येतां । कदाशां मा कृथा वृथा ॥ विज्ञात्यान्नीरन्नार्यैव ।
कुर्वंती कंबलाग्रहं ॥ ४४ ॥ कार्यं ते कंबलस्यास्य । दुकूलैः किं न सिध्यति ॥ निषिद्धैवं नृ-
पेणासौ । प्राविशत्कोपमंदिरं ॥ ४५ ॥ अपि प्रेतग्रहाज्ज्ञानन् । दुर्मोचं महिलाग्रहं ॥ अनि-
च्छुरपि तान् भूमा—नाह्वयद्वणिजः पुनः ॥ ४६ ॥ रत्नकंबलमेकं ते । याचितास्तारमूचिरे ॥
देव ते वणिजो मात्रा । सर्वेऽक्रीयंत कंबलाः ॥ ४७ ॥ राजयोगेऽपि नः कार्यं । न सिद्धं व-
स्त्वविक्रयात् ॥ भद्रयाऽसिद्धि तज्ज्योतिः—शास्त्रस्याहो विपर्ययः ॥ ४८ ॥ भद्राया भुवनं
नृपः । प्रैषीत्स्वपुरुषानथ ॥ यथावद्याचिता रत्न—कंबलं तैर्जगाद सा ॥ ४९ ॥ गृहीता ये-
ऽधुना धौत—वधूचरणमार्ष्टये ॥ ते तेषां पश्यतामेव । कंबलाः शकलीकृताः ॥ ५० ॥ पुराणै-
र्यदि कार्यं त—दादध्वं शतशोऽप्यमून् ॥ न हि भूपः श्रियामेव । जीवितस्यापि स प्रभुः
॥ ५१ ॥ इति तैरुदिते राज्ञः । प्रोचे निःश्वस्य चेल्लणा ॥ पश्यास्माकं च वणिजां । मृन्मणी-
नामिवांतरं ॥ ५२ ॥ शंकाकृत् प्रकटं यानं । स्थानं गर्भगृहे बिले ॥ राज्ञीनां भुजगीनां च ।

भोगिनीत्यभिधा मुधा ॥ ५३ ॥ रामा मनोऽभिरामास्ता । या भोगानिति भुंजते ॥ स्नुषाः सुखीकरोत्येवं । या सा श्वश्रुर्मुदे मम ॥ ५४ ॥ पुंसः किमुच्यते तस्य । यस्य भाग्यानुभावतः ॥ यदस्माकं न कोशोऽपि । तत्तासां न्युंछनं पदोः ॥ ५५ ॥ कुमुद्वती तें दयितावदाता । न तामपि स्मेरयितुं क्षमोऽसि ॥ तथापि धत्से यदि राजनाम । को नाम तद्धारयति मृगांक ॥ ५६ ॥ इति रोषविषाक्तायां । श्रुतायामपि तद्गिरि ॥ न तत्याज क्षमां राजा । स हि ख्यातः क्षमापतिः ॥ ५७ ॥ यस्येदृशः प्रिया सोऽयं । शालिभद्रोऽस्ति कीदृशः ॥ इति कौतूहली भूमा—नमात्यैराजुहव तं ॥ ५८ ॥ भद्राभ्येत्य नृपं प्रोचे । देवो यदि दिदृक्षते ॥ तत्प्रसद्य निजं बंधु—मत्रागत्य निरीक्ष्यतां ॥ ५९ ॥ लभंते तद्वपुःस्पर्शे । भानवीया न भानवः ॥ कलाकरवसुव्रातं । संहृत्यैवापराधिनः ॥ ६० ॥ सन्मध्याधमभेदेन । त्रिविधो लोक उच्यते ॥ इतीव जनसंमर्दं । सहते स हि नोत्तमः ॥ ६१ ॥ चंदनागुरुकस्तूरीः । सर्वसाधारणा इति ॥ सोऽपास्य मानवीर्दिव्यैः । स्वं लिंपति विलेपनैः ॥ ६२ ॥ देव एव स्वपादाभ्यां । मंदिरं तत्पुनातु नः ॥ एवं हि भ्रातरि प्रेम—प्रकर्षो दर्शितो भवेत् ॥ ६३ ॥ भूपस्तस्या वचोऽमंस्त ।

सापि विज्ञा व्यधापयत् ॥ शोजां गोजद्रदेवेन । क्षणेन श्रीपथेऽखिले ॥ ६४ ॥ नाकिनिर्मि-
तसौवर्ण—रत्नमंक्तिमंरूपं ॥ मार्गं व्यतीत्य नूपालः । श्रीशालेर्नवनं ययौ ॥ ६५ ॥ वज्रवैरू-
र्यन्नूपीठं । स्फुटस्फटिकन्नित्तिकं ॥ सारमरकतस्तंन्नं । चंचत्कांचनतोरणं ॥ ६६ ॥ चारुचंद्रो-
दयं व्यक्त— मुक्तास्वस्तिकसंकुलं ॥ किमेतदिति संज्रांत—स्तद्विवेश विशांपतिः ॥ ६७ ॥ यु-
ग्मं ॥ नद्रा सिंहासने तुर्य—जुवि नूपं न्यवीविशत् ॥ स्वयं च सप्तमीं नूमिं । गत्वा शालि-
मवोचत ॥ ६८ ॥ भीरुर्न्नोगवियोगात्त्वं । सोमालश्चासि नंदन ॥ तथापि सकृदुत्तीर्य । पश्य
श्रेणिकमागतं ॥ ६९ ॥ समर्घं वा महर्घं वा । श्रेणिकाख्यं क्रयाणकं ॥ त्वमेव मातरादत्स्व ।
किं मयेति जजल्प सः ॥ ७० ॥ सहासं साज्यधाद्वत्स । श्रेणिको न क्रयाणकं ॥ किंतु यः
पात्यपायेभ्यः । सोऽयं तनय नः प्रजुः ॥ ७१ ॥ स्वामिनामस्तु कर्णांतः । संतप्तत्रपुतां दधौ ॥
स दध्यौ जीवितं धिग्मे । सेव्यो यत्रापरः प्रजुः ॥ ७२ ॥ देहंप्रति प्रजुर्जीवः । कर्म जीवंप्रति
प्रजुः ॥ कर्मप्रति प्रजुर्वीरः । कोऽयमंतर्गरुः प्रजुः ॥ ७२ ॥ तन्ममैन्निरलं न्नोगैः । स्वामिनाम-
कलंकितैः ॥ निःकलंकं गृहीष्यामि । श्रीवीरस्यैव शासनं ॥ ७३ ॥ विरक्तोऽप्यथ निर्देशा—

न्मातुः सोऽवतरन्नधः ॥ बाल्येऽनात्तव्रतं मेने । स्वमधोगामिनं किल ॥ ७४ ॥ व्यवहारेण सो-
ऽनंसी—न्नृपं तेनापि सस्वजे ॥ अंके चारोपयांचक्रे । ज्यायसा बंधुनेव सः ॥ ७५ ॥ उदश्रु-
नयनं वीक्ष्य । शालिं भद्रां नृपोऽभ्यधात् ॥ मातर्दुःखार्त्तवत्प्रीति—पदेऽसौ किमु रोदिति
॥ ७६ ॥ भद्रा व्यजिज्ञपद्देव । देवभूयं गतः पिता ॥ अस्मै ददाति दिव्यस्र—ग्गंधभूषांशु-
कान्यहो ॥ ७७ ॥ अयं मनुष्यगंधेन । रंभास्तंभ इवाग्निना ॥ म्लायत्यतिमृदुर्देव । तदसौ पृ-
थगास्यतां ॥ ७८ ॥ सोऽथ प्राप्य नृपादेशं । निविष्टः पृथगासने ॥ अभूत्प्रहृष्टवदन—श्चार-
कादिव निर्गतः ॥ ७९ ॥ ततो राज्ञानुज्ञातः स । सौधस्याधित्यकां ययौ ॥ नृपश्च स्थापयां-
चक्रे । भोक्तुमभ्यर्थ्य भद्रया ॥ ८० ॥ स्नातः पपात भूपातुः । कराग्रादंगुलीयकं ॥ कूपे भ-
द्रांगभूभूषा—निधाने कुतुकादिव ॥ ८१ ॥ गालितेऽथ जले कौपे । तज्ज्वलाभरणेषु सः ॥ अ-
ङ्गं विङ्गेष्विवापश्य—न्निस्तेजः स्वांगुलीयकं ॥ ८२ ॥ राज्ञा किमेतदित्युक्ता । दास्यूचे देव
पिंकितं ॥ इदं भूषणनिर्माल्यं । शालिभद्रस्य पश्यतां ॥ ८३ ॥ वयं हि भूपाः कूपांबु—गाल-
नान्मुद्रिकामपि ॥ पश्यामः सादरं शाले—रहो लीलायितं नवं ॥ ८४ ॥ इत्यात्तविस्मयो रा-

जा। भद्रयाभोजि भक्तितः ॥ तत्ताहक्प्राभृतैर्दिव्यै—र्मुदितश्च न्यवर्तत ॥ ८५ ॥ धर्मघोष-
गुरुः श्रीमान्। घोषयन् धर्ममंगिषु ॥ तत्रागादन्यदा घोष। इव गोरसपूर्तये ॥ ८६ ॥ अग्रे-
ऽपि भववैराग्य—प्रसन्नं शालिमानसं ॥ प्रसक्तिमधिकां निन्ये। सुहृदुक्तस्तदागमः ॥ ८७ ॥
आरूढः स रथं मूर्त—मिव पुण्यमनोरथं ॥ गुरूनुपेत्य नत्वा च। शृणोतिस्मेति देशनां ॥८८॥
भोगा भंगुरवृत्तयो गिरिसरित्प्रायाश्चरं यौवनं। खद्योतद्युतिसोदरी परिणतिः स्त्रीणां रमाणा-
मपि ॥ मृत्युर्नित्यभयस्ततोऽतिविषमं मुक्त्वा भवं भावतः। स्वीकर्तुं शमराज्यमक्षयसुखं भ-
व्या यतध्वं सदा ॥ ८९ ॥ कथं न स्यात्परः स्वामी—त्युक्तस्तेन गुरुर्जगौ ॥ स्वाधीने हि त-
पोध्याने। येषां ते स्वयमीशते ॥ ९० ॥ ऊर्ध्वं सिद्धिशिलातलादपि तले पातालमूलात्तथा।
तिर्यक् प्रांत्यपयोनिधेः परतटाच्चिंता स्वतंत्रा स्थितिः ॥ योग्यत्वं नरनाकिनायकनतेर्न क्रूर-
चौरद्विषां। भीतिर्नीतिविचारणा मुनिपतेः साम्राज्यमित्यद्भुतं ॥ ९१ ॥ तत्पृष्ट्वा मातरं दी-
क्षां। स्वीकरिष्ये वदन्निति ॥ मास्म मुह्य इति प्रोक्तः। सूरिणा स गृहे ययौ ॥९२॥ प्रणम्य
च जगौ भद्रां। मातः ख्यातनया मया ॥ धर्मघोषगुरोर्धर्म—देशनाश्रावि सांप्रतं ॥ ९३ ॥

अथ भद्रान्यधाहूतस् । तस्यैवासि पितुः सुतः ॥ किं चित्रमत्र यद्धर्मं । शृणोषि च करोषि
च ॥ ९४ ॥ तस्यैवास्मि पितुः पुत्र—स्ततो भोगपराङ्मुखः ॥ दीक्षां मातस्त्वदाज्ञातः । कां-
क्षामीति जगाद सः ॥ ९५ ॥ साप्यूचे तव सौमाल्यं । वपुस्तीव्रतरं व्रतं ॥ न स्यान्नेत्र दुकू-
लेन । खरगोक्षुरबंधनं ॥ ९६ ॥ सोऽवदद्ये महासत्वा । ज्ञाततत्वाश्च निर्ममाः ॥ मातः सं-
जातवैराग्या—स्तेषामीषत्करं व्रतं ॥ ९७ ॥ मृदुर्दृढो दृढोऽपि स्या—न्मृदुरापदि दैवतः ॥
मृदु मृदग्नियोगे स्याद् । दृढिमा तु विनश्यति ॥९८॥ तथापि सहमानस्त्वं । मर्त्यगंधं शनैः
शनैः ॥ आत्मज त्यज भोगांस्ता—निति माता शशंस तं ॥ ९९ ॥ सोऽपि प्रत्यहमेकैकां । तू-
लिकां तरुणीमपि ॥ औज्झन्मृदुतरस्पर्शां । संभोगसुखसाक्षिणीं ॥ १०० ॥ स्वसा श्रीशालि-
भद्रस्य । कनिष्टात्रैव पत्तने ॥ पर्यणीयत धन्येन । धनातिधनदश्रिया ॥ १ ॥ यथा यथा सा
सस्मार । ज्येष्टबंधोर्व्रताग्रहं ॥ व्यदीर्यतेव वै चित्तं । दुःखेनास्यास्तथा तथा ॥ २ ॥ स्नपयं-
ती कदुष्णाश्रु—जलैः स्नानोद्यतं प्रियं ॥ किं रोदिषीति तेनोक्ता । भ्रातृवृत्तं जगाद सा ॥३॥
स्मित्वाथाभिदधे धन्यो । ही भ्राता कातरस्तव ॥ योऽशक्तः सहसा त्यक्तुं । भोगानेवं विलं-

बते ॥ ४ ॥ शेषास्तस्य प्रियाः प्रोचु—र्वातैव सुकरा प्रिय ॥ यद्यस्ति नाम सामर्थ्यं। तत्किं न त्यजसि स्वयं ॥ ५ ॥ धन्योऽथ स्माह धन्योऽस्मि । यद्यूयं विघ्नहेतवः ॥ संप्रेषणमिव व्याघ्रो । ऽतोत्साहं प्रकुर्वते ॥ ६ ॥ नाथ नर्मोक्तिरेवैषा । किमकस्माज्जहासि नः ॥ इति वाग्विशिखैस्तासां । स शैल इव नाक्षुभत् ॥ ७ ॥ पतिमार्गानुगामित्वाद् । व्रतभारं विवक्षुभिः ॥ दयिताभिः समं ताभिः । शिबिकामारुरोह सः ॥ ८ ॥ अकांडे प्रावृषं तन्वन्। धनवृष्ट्यार्थिमंडले ॥ तदायातात्प्रभोर्वीरा—द्दीक्षां भेजे स सप्रियः ॥ ९ ॥ तत् श्रुत्वा शालिभद्रः स्वं । जितं धन्येन मानयन् ॥ स्त्रियस्तूलीश्च संभुक्त—शेषा एकपदेऽत्यजत् ॥ १० ॥ याप्ययानं समारूढः । प्रौढनिःक्रमणोत्सवः ॥ ययौ जिनस्य सोऽभ्यर्णे । तूर्णं च व्रतमाददे ॥ ११ ॥ चरंतौ तौ महीपीठे । संयुक्तौ संयमश्रिया ॥ रेजतुस्तेजसा स्थाम्ना । दृशाविव भुजाविव ॥१२॥ निर्मांसरुधिरौ व्यक्ता—स्थिनसौ तपसोज्ज्वलौ ॥ लेभाते ध्यानदीपस्य । तावभ्रकगृहश्रियं ॥ १३ ॥ अधीतागमसूत्रार्थौ । वर्षैर्द्वादशभिः समं ॥ समं श्रीवर्धमानेन । तौ राजगृहमीयतुः ॥ १४ ॥ मुनी मासोपवासांते । पारणाय कृतोद्यमौ ॥ प्रभुं प्रणम्य भिक्षार्थं । तावनुज्ञा-

मयाचितां ॥ १५ ॥ तवाद्य पारणं मातु—र्हस्तेनेत्युदितेऽर्हता ॥ इच्छामीति वदन् शालि—
मुनिर्धन्यान्वितोऽचलत् ॥ १६ ॥ गतौ भद्रागृहद्वारं । तौ मुनींद्रौ तपःकृशौ ॥ न कोऽपि ल-
क्षयामास । जातजन्मांतराविव ॥ १७ ॥ जिनं सनंदनं धन्यं । नंतुं भद्रापि सत्वरा ॥ त्वर-
यंती वधूर्नेक्षां—चक्रे साधुधियापि तौ ॥ १८ ॥ क्षणं प्रतीक्ष्य विश्वस्य । प्रतीक्ष्य तौ विरे-
मतुः ॥ निरीयतुश्च नगर—प्रतोलीतोऽप्यरोषणौ ॥ १९ ॥ विक्रेतुं दुग्धदध्याज्यं । प्रविशंती
पुरांतरा ॥ प्राग्जन्मजननी शालि—भद्रस्याजनि संमुखी ॥ २० ॥ सा शालिभद्रमालोक्य ।
स्नेहादुत्प्रस्नवस्तनी ॥ दध्ना दधाना रोमांचं । जरती प्रत्यलाभयत् ॥ २१ ॥ उपेत्य त्रिजग-
न्नाथं । तदालोच्य यथाविधि ॥ भद्रेयोऽभिदधे नाथ । पारणा मातृतः कथं ॥ २२ ॥ न वे-
त्सि दधिदात्री ते । प्राच्यजन्मप्रसूरसौ ॥ इत्युक्त्वासौ स्फुटीचक्रे । प्राग्भवं भुवनप्रभुः ॥२३॥
सोऽचिंतयत्ततो हंत । द्वितीयोऽयं भवो मम ॥ आयुर्निगलितायापि । जरती सा तु जीवति
॥ २४ ॥ म्रियंते शिशवोऽप्येके । जीवंत्यन्ये जरातुराः ॥ धिगैंद्रजालिकस्येव । विचित्रा कर्म-
णो गतिः ॥ २५ ॥ यद्दत्तपायसेनेभ्यो—ऽभूवं भूवलयश्रुतः ॥ तदात्तनाथ दध्नाहं । भूयासं

त्नुवनोत्तरः ॥ २६ ॥ अथोपजीव्य तौ दध्ना । ह्यनुज्ञाप्य जगद्गुरुं ॥ आरूढौ सिद्धिसोपान-
मिव वैन्नारपर्वतं ॥ २७ ॥ आदायानशनं तत्र । पादपोपगमान्निधं ॥ शिलातलेऽवतस्थाते ।
तौ शिलाघटिताविव ॥ २८ ॥ नद्रा समवसरणं । गतापृछज्जिनेश्वरं ॥ शालिधन्यौ क्व तौ
साधू । किं नैद्यायापि नागतौ ॥ २९ ॥ उवाच नगवान् नद्रे । जातजामातरौ तव ॥ आ-
व्रतौ क्वापि संधत्ते । न प्रेम क्षेमकांक्षिणौ ॥ ३० ॥ तथापि त्वद्गृहं प्राप्तौ । न ज्ञातौ व्यग्र-
या त्वया ॥ कारितौ पारणं दध्ना । श्रीशालिप्राग्नवांबया ॥ ३१ ॥ इमौ संप्रति वैन्नार—शृं-
गेऽनशनमाहतौ ॥ तत् श्रुत्वा यद्दधौ दुःखं । नद्रा सैव विवेद तत् ॥ ३२ ॥ आरोहन्मगधे-
शेन । सह डुःसहदुःखन्नूः ॥ सा तच्छृंगं हगंन्नोन्निः । कुर्वती पिच्छिलाः शिलाः ॥ ३३ ॥ वी-
क्ष्य तौ केवलप्रस्थ-स्वस्तरौ स्तिमितेक्षणौ ॥ चक्रंद सा प्रतिध्वानैः । क्रंदयंती दरीरपि ॥३४॥
आः वत्स वत्सल स्वछ । यत्तदा पापया मया ॥ न ज्ञातस्त्वं गृहायात—स्तत्क्षमस्व क्षमाक-
र ॥ ३५ ॥ सा धन्या खलु धन्यैव । यया तेऽकारि पारणा ॥ मम नद्रेत्यन्नद्रा या । हंत जा-
ता मुधान्निधा ॥ ३६ ॥ द्वात्रिंशत्तूलिकाशायिन् । द्वात्रिंशद्रमणीप्रिय ॥ अतिडुःस्थे गिरिप्र-

स्थे । कथं तस्थे त्वया वद ॥ ३७ ॥ गिरिस्तल्पं शिला तूली । चंदनं दिनकृत्त्विषः ॥ काकघूकध्वनिर्गीता—मृतं संतोषिणस्तव ॥ ३८ ॥ कदा द्रक्ष्यामि पुत्रस्य । मुखमेष मनोरथः ॥ वत्स स्वदृक्सुधावृष्ट्या । सकृत्किमु न सिंचसि ॥ ३९ ॥ श्रेणिकेनाथ सा प्रोचे । मातर्विलपसीति किं ॥ सीमंतिनीषु सीमासि । यस्या ईदृग्व्रतः सुतः ॥ ४० ॥ अयं वीरावतंसोऽभू—द्यो भोगिषु योगिषु ॥ यस्य वृत्तं चमत्कार—कारि वास्तोष्पतेरपि ॥ ४१ ॥ अस्य साधयतः सिद्धि—मत्र नीरंजने गिरौ ॥ विलापैर्भैरवैरेवं । मास्म विघ्नकरी भव ॥ ४२ ॥ एवं प्रबोधिता राज्ञा । सा जगाम निजं गृहं ॥ पालयामासतुः साधू । विधिनानशनं च तौ ॥ ४३ ॥ मासं प्रपद्यानशनं सधन्यः । श्रीशालिभद्रः श्रमणः स धन्यः ॥ मोक्षस्य शाखापुरमिद्धमानं । सर्वार्थसिद्धं प्रययौ विमानं ॥ ४४ ॥ इति श्रीशालिभद्रस्य कथा समाप्ता.

अत्रापि व्रते पंचातिचारा हेयास्तद्यथा—सचित्तनिक्षेपः १, सचित्तपिधानं २, कालातिक्रमः ३, परव्यपदेशः ४, मत्सरिता चेति ५. तत्र सचित्ते पृथ्व्यादौ देयवस्तुनोऽदानबुद्ध्या निक्षेपः स्थापनं सचित्तनिक्षेपः १. तस्यैव सचित्तेन फलादिना पिधानं स्थगनमाच्छादनं स-

चित्तपिधानं २. कालस्य साधूचितभिक्षासमयस्यातिक्रम उल्लंघनं कालातिक्रमः ३. अयं भावः—काले ऊनेऽधिके वा साधवो न गृहीष्यंति ज्ञास्यंति च यदसौ ददातीति बुद्ध्या निमंत्रणं. स्वकीयेऽपि वस्तुन्यदित्सया परकीयमिदं न ममेति भणनं परव्यपदेशः ४. तेन रंकेणापि दत्तं, किमहं ततोऽपि हीन इत्यमर्षो मत्सरः, सोऽस्यास्तीति मत्सरी, तद्भावो मत्सरिता, यद्वा याचितस्य कोपादानं मत्सरिता. एते पंचाप्यतिचारा एव, न भंगा दानपरिणामस्य च दूषितत्वात्. अत्र भावनागाथा—धन्नो अणुग्गहीउं । संपत्ती जं इमे मया पत्ता ॥ वित्तं पत्तं मइसुऊ—या य एयंति कल्लाणं ॥ १ ॥ इत्युक्तं सदृष्टांतं चतुर्थं शिक्षाव्रतं, तदुक्तौ च व्याख्यातानि सदृष्टांतानि द्वादशापि व्रतानि. अथ निगमनमाह—

॥ मूलम् ॥—इइ बारस धरइ वए । गिही जहासत्ति छसु विभंगेसु ॥ पत्तेयं पत्तेयं । अइयारे पंच मुंचंतो ॥ ४ ॥ व्याख्या—गृही गृहस्थ इत्युक्तरीत्याणुव्रतगुणव्रतशिक्षाव्रतभेदतो द्वादश व्रतानि षट्स्वपि भंगेषु प्रतिपत्तिप्रकारेषु यथाशक्ति धरति स्वं निर्वाहं विचिंत्यैकं द्वे त्रीणि वा समस्तानि वा प्रतिपद्यत इत्यर्थः. भंगकाश्च षण्मी—दुविहं तिविहेण पढमो ।

डुविहं दुविहेण बिइमउ होइ ॥ दुविदं एगविहेणं । एगविहं चेव तिविहेणं ॥ १ ॥ एगविहं दुविहेणं । इक्किकविहेण बहउ होत्ति ॥ तत्र द्विविधं त्रिविधेन हिंसाद्यं न करोति न कारयति मनोवाक्कायैः समुदितैरिति प्रथमः १. द्विविधं द्विविधेन न करोति न कारयति मनोवाग्भ्यां मनःकायाभ्यां वाक्कायाभ्यां वेति द्वितीयः २. द्विविधमेकविधेन न करोति न कारयति मनसा वाचा कायेन चेति तृतीयः ३. एकविधं त्रिविधेन न करोति न कारयति वा मनोवाक्कायैरिति चतुर्थः ४. एकविधं द्विविधेन न करोति न कारयति वा मनोवाग्भ्यां मनःकायाभ्यां वाक्कायाभ्यां वेति पंचमः ५. एकविधमेकविधेन न करोति न कारयति वा मनसा वाचा कायेन वेति षष्ठः. श्रावकाणां प्रायोऽनुमतिनिषेधो नास्तीति तद्भंगका अपि नोदाहृताः. अत्र यावंतो द्वादशानां व्रतानामेककादयो द्वादशांताः संयोगाः. यथा च तदानयनोपायः—यथा च षड्भंग्या प्रतिसंयोगवृद्धिषड्गुणितया संयोगानां गुणनं, गुणिते च सतियदागच्छति तत्सर्वमीलने यत्त्रयोदशकोटीशतानि चतुरशीतिकोटयो द्वादशलक्षाः सप्ताशीतिसहस्रा द्वे शते द्व्यधिके. इत्येवंरूपा श्रावकाणामभिग्रहभेदसंख्या भवति, तत्सर्वं

स्थानांतरादवसेयं. ग्रंथगौरवभयान्नेह प्रतीयत इति. किं कुर्वन्? प्रत्येकं प्रत्येकं व्रतं व्रतंप्रति पंच पंचातीचारान् मुंचन्, अतीचाराश्च प्रतिव्रतं भाविता एव. एषामतीचाराणां पंचत्वसंख्या बाहुल्यमाश्रित्योक्ता, अन्यथा भोगोपभोगव्रते विंशतिरपि ते भवंति. अथ व्रतानां संज्ञाविशेषं शिक्षयन्नाह—

॥ मूलम् ॥—इब्बवया आवकहा । आइमा अह इत्तरा चउरो ॥ तह मूलगुणा पंच । इमाउ उत्तरगुणा सत्त ॥ ५ ॥ व्याख्या—अत्रैतेषु व्रतेष्वादिमान्यष्टौ व्रतानि प्राणातिपातविरमणादीनि यावत्कथितानि, एकदापि प्रतिपन्नानि यावज्जीवं भवंतीत्यर्थः. चत्वारि शिक्षाव्रतानीत्वराण्यल्पकालभावीनि मुहूर्ताद्यवधिना पुनः पुनः प्रतिपत्तेः. तथादिमानि पंच व्रतानि मूलगुणा इत्युच्यंते, धर्मद्रुमस्यैतेषां मूलभूतत्वात्. यद्भाष्यं—सम्यक्त्वसमेतानि महाव्रताणुव्रतानि मूलगुणाः, शेषाणि सप्त दिग्व्रतादीनि धर्मद्रुमस्य शाखाप्रायत्वेनोत्तररूपत्वादणुव्रतानां गुणकरणाच्चोत्तरगुणा इति व्यपदिश्यंते, सर्वत्र लिंगव्यत्ययः प्राकृतत्वात्. अथ द्वारगाथोपन्यस्तं गुणद्वारं विवक्षुः प्रस्तावनामाह—

॥ मूलम् ॥—जेसिं अहिगयधम्मो । हंसाण सरंव होइ अज्ञिगम्मो ॥ जह विष्मा बुज्ञामि । ते गुणा देसविरयाणं ॥ ६ ॥ व्याख्या—अधिगतधर्मः प्राप्तदेशविरतिः पुमान् येषां गुणानां सर इव हंसानामभिगम्याश्रयणीयो ज्ञवति. उत्तरार्धं स्पष्टं. तत्र पूर्वं स्थाननिवासित्वगुणमाह—

॥ मूलम् ॥—बहुगुणआइन्नेवि हु । नगरे गामे व तत्थ न वसेइ ॥ जत्थ न विज्जइ चेइय—साहम्मियसाहुसामग्गी ॥ ७ ॥ व्याख्या—बहवो गुणाः सौराज्यप्राज्यजलेंधनधनार्जनस्वजनदुर्गादयस्तैराकीर्णेऽपि नगरे ग्रामे वा तत्र न वसति श्रावक इति गम्यते. केत्याह—यत्र न विद्यते चैत्यसाधर्मिकसाधुसामग्री, तत्र चैत्यं जिनमंदिरं, साधर्मिकाः समानधर्मिणो गृहस्थाः, साधवो धर्मदेष्टारः, श्रावको हि सर्वेष्वपि गुणेषु धर्मसामग्रीमेव मुख्यतया मन्यते, ततस्तत्रैव वसति यत्र सा स्यादिति ज्ञावः. नगरादौ च वसन् येषां प्रातिवेशिमकतां त्यजति तानाह—

॥ मूलम् ॥—पासंमिपारदारिय—नमनिद्दयरोसणाण पिसुणाण ॥ धुत्तअमित्ताइण य ।

पासे वासं परिहरेइ ॥ ७ ॥ व्याख्या—श्रावको नगरे ग्रामे वा वसन् पाखंमिप्रभृतीनां पार्श्वे वासं परिहरति, तत्र पाखंमिनः कुलिंगिनः, पारदारिकाः कुशीलाः, नटा वंशवरत्रादिभिः खेलकाः, निर्दया जीवघातका व्याधधीवराद्याः, रोषणा अमर्षणाः, पिशुनाः परछिद्रान्वेषिणः, धूर्ता वंचकाः, अमित्रा रिपवः, आदिशब्दाच्चौरकारुद्यूतकारविदूषकादयः. एषां हि पार्श्वे वसतः सम्यक्त्वभ्रंशश्रीविप्लवतरकलाभिलाषनिस्तृंशपरिणामत्वकलहवृद्धिराजदंमाद्यपायधनहानिप्राणप्रहाणादयो दोषा वाच्याः. तथा—

॥ मूलम् ॥—अम्मापिउण भत्तो । कुलसीलसमेहिं विहियवीवाहो ॥ दीणा तिहि साहूणं । पमिवत्तिकरो जहाजुग्गं ॥ ए ॥ व्याख्या—मातापित्रोर्भक्तो भवति श्रावकः, भक्तिश्च न केवलं शरीरशुश्रूषया, किंतु धर्मविधापनेनैव, यदागमः—' संपाउविणएणं केइ पुरिसे अम्मापियरं सयपागसहस्सपागतिल्लेहिं अभंगित्ता, सुरहिणा गंधवट्टएणमुवट्टित्ता, तिहिं उदएहिं मज्जावित्ता, सव्वालंकारविभूसियं करित्ता, मणुन्नं थालिपागसुद्धं अट्ठारसवंजणाउलं भोयणं भोयावित्ता, जावज्जीवं पिट्ठिवमंसयाए परिवहेज्जा. तेणावि तस्स अम्मापिउस्स

डुप्पडियारं जवइ. अह णं से ते अम्मापियरं केवलिपन्नत्ते धम्मे आघवइत्ता पन्नवइत्ता परूवइत्ता ठाणेगवइत्ता तेणामेव तस्स अम्मापिउस्स सुपडियारं जवइ.' तथा कुलमुग्रादि, शीलं धर्म आचारस्ताभ्यामुपलक्षणत्वाद् द्रव्यमहत्त्वाभ्यां च समैरात्मतुल्यैः सह विहितवीवाहः, वीवाहवैषम्ये हि नित्यमुद्वेगाद्धर्महानिः, दीना वनीपकाद्याः, अतिथयः प्राघूर्णकाः, साधवो धर्मगुरवः, तेषां यथायोग्यमौचित्यानतिक्रमेण प्रतिपत्तिं करोतीत्येवंशीलाः, तत्र दीनानां मृडुवाक्पूर्वेणोचितदानेन प्रतिपत्तिः कार्या. यदाह—प्रसन्ना दृग् मनः शुद्धं । ललिता वाग् नतं शिरः ॥ सहजार्थिष्वियं पूजा । विनापि विजवं सतां ॥ १ ॥ अतिथीनां तु स्वागतं प्रश्नादिना. उक्तं च—एह्यागछ समाश्रयासनमिदं प्रीतोऽस्मि ते दर्शना—त्का वार्ता किमु दुर्बलोऽसि कुशलं कस्माच्चिराद् दृश्यसे ॥ इत्येवं गृहमागतं प्रणयिनं ये जाषयंत्यादरा—त्तेषां युक्तमशंकितेन मनसा गेहानि गंतुं सदा ॥ १ ॥ साधूनां चाभ्युत्थानासनदानादिना, यदुक्तं—अभ्युत्तिष्ठेद्गुरौ दृष्टे—ऽजिगछेत्तं तदागमे ॥ उत्तमांगेंजलिं न्यस्य । ढौकयेत्स्वयमासनं ॥ १ ॥ नमस्कुर्यात्ततो जक्त्या । पर्युपासीत चादरात् ॥ तद्याते

त्वनुयायाच्च । क्रमोऽयं गुरुसेवने ॥२॥ एषां हि प्रतिपत्त्यकरणे क्रमान्निर्दयत्वानौचित्याशातनादयो दोषाः. तद्यथा—

॥ मूलम् ॥—परिहरइ जणविरुद्धं । दीहररोसं च गम्मवयणं च ॥ अरणो अरिणोवि पिउ । परतत्तिविवज्जिउ होइ ॥ १० ॥ व्याख्या—जनस्य शिष्टलोकस्य विरुद्धं, उक्तं हि—सव्वस्स चेव निंदा । विसेसउ तह य गुणसमिद्धाणं ॥ उज्जुधम्माणं हसणं । रीढा जणपूयणिज्जाणं ॥ १ ॥ बहुजणविरुद्धसंगो । देसादाचारलंघणं चेव ॥ एमाइयाइं इत्थउ । लोगविरुद्धाइं नेयाइं ॥ २ ॥ इत्येवंरूपं तथा दीर्घं चतुर्मासाधिकावस्थानादायतं रोषं, तथा मर्मवचनं गर्हितजन्मकर्मादिसूचकं परिहरति, तत्र जनविरुद्धकरणेन शेषमपि धर्म्यं कर्मोपहासास्पदं कुर्यात्, दीर्घरोषेण सम्यक्त्वादपि भ्रश्येत्, मर्मवचनेन लज्जितः परो म्रियेत मारयेद्वा. द्वौ चकारौ समुच्चयार्थौ. तथा न विद्यते ऋणमधमर्णं यस्य सोऽऋणः ‘दासत्तं देइ रुणमिति’ वचनात्. तथा प्रशमोपकारादिभिर्गुणैररेः शत्रोरपि प्रियो भवति. को नाम गुणवतः प्रति प्रीतिं न भजते? अनेन श्रावकेण विश्वप्रियेण भाव्यमित्युक्तं, अन्यथा स्वस्य ध-

र्मानुष्ठानमपि परैर्दूषयन् परेषां बोधिभ्रंशहेतुः स्यात्. तथा परतप्तिविवर्जको नवति, परतप्तिं
हि स करोति यस्य स्वतप्तिनिष्ठिता नवति. उक्तं च—आयरइ जइ अकज्जं । अन्नो किं त-
त्थ तुज्झ चिंताए ॥ अप्पाणं चिय चिंतसु । अज्जवि वसगं नवडुहाणं ॥ १ ॥ अन्यच्च—
॥ मूलम् ॥—वच्चइ न कुतित्थेसु । प्रसंगदोषात्. यदाह—वेसागिहेसु गमणं । जहा
विरुद्धं महाकुलवहूणं ॥ जाणाहि तहा सावग । सुसावगाणं कुतित्थेसु ॥ १ ॥ मुज्झइ महि-
मं न ताण दट्ठूण ॥ सुलसावत्. तर्हि किं करोतीत्याह—गीयत्थाणं पासे । सुणेइ धम्मं जि-
णाभिहियं ॥ स्पष्टं. किंच—
॥ मूलम् ॥— सामिं करेइ निउणं । मित्तं सगुणं कलत्तमणुरत्तं ॥ उवरयइ लद्धरिद्धी ।
चेइयदव्वं न नक्खेइ ॥ १२ ॥ व्याख्या—श्रावको यदि स्वामी स्वयं न स्यात्तदा स्वामिनं नि-
पुणं गुणागुणविशेषज्ञं करोति. उक्तं च—कह सो पहु सेविज्जइ । धीरेहिं कुलागएहिं पुरि-
सेहिं ॥ जो वामदाहिणाणं । कराण न हु जाणइ विसेसं ॥ १ ॥ तथा मित्रं सुहृदं सगुणं
प्रांजलत्वविपन्निवारकत्वादिगुणोपेतं करोति. यत उक्तं—मित्तं पयस्स सलिलेण । सहजं न

होइ किं तेण ॥ विउणेइ मिलिज्जंतं । आवट्टइ आवई पढमं ॥ १ ॥ तथा कलत्रमनुरक्तं स्नेहलं करोति. यदाह—छंदे जं न पयट्टइ । पए पए जत्थ संसउ होइ ॥ तं तं परिरियव्वं । कव्वं तुरयं कलत्तं च ॥ १ ॥ एषां वैपरीत्ये क्रमादपायदुर्बुद्धिनित्योद्वेगादयो दोषाः. तथा लब्धर्द्धिः सन् जगदप्युपकुरुते. यतः—परकार्याय पर्याप्तं । वरं भस्म वरं तृणं ॥ परोपकृतिमाधातु—मक्षमो न पुनः पुमान् ॥ १ ॥ तथा निश्राकृतानिश्राकृतादिभेदभिन्नस्य चैत्यस्य निजगृहस्य द्रव्यं न भक्षयति, भक्ष्यमाणं चान्यैरपि नोपेक्षते, तदुपेक्षायाः साधोरप्यनंतसंसारकारणत्वात्. यदार्षं— चेइयदव्वविणासे । इसिघाए पवयणस्स उड्डाहे ॥ संजयचउत्थभंगे । मूलग्गी बोहिलाभस्स ॥ १ ॥ चेइयदव्वविणासे । तद्दव्वविणासणे दुविहभेए ॥ साहु उवेक्खमाणो । अणंतसंसारिउ भणिउ ॥ २ ॥ तथा—

॥ मूलम् ॥—मज्जायमलंघंतो । संकंतो कुणइ सव्वकज्जाइं ॥ उरोहंपि विसंतो । विस्ससणिज्जो सुसीलोत्ति ॥ १३ ॥ व्याख्या—मर्यादां पूर्वपुरुषकृतामुद्धतवेषभाषावर्जनादिव्यवस्थामलंघमानः पदे पदे सशूकतया आः किं कुर्वन्नस्मीति शंकमान एव सर्वाणि कार्याणि

गृहस्थोचितानि करोति श्रावकः, अन्यथा स्वजनद्वेष्यत्वनिर्दयत्वादिदोषापत्तेः. तथावरोधें-तःपुरेऽपि विशन्नेष सुशीलो न क्षोभ्यते विबुधवधूभिरपीति कृत्वा विश्वसनीयः प्रक्रमाद्राज्ञोऽवरोधे हि दृढशीलं विना नान्यः प्रविशतीत्यवरोधग्रहणं. उक्तं च—' वियत्तं तेउर घरदार पवेसत्ति. '' दुःशीलत्वे हि धर्मापभ्राजनादयो दोषाः.

॥ मूलम् ॥—पच्छित्तछिन्नपावो । पच्चक्खाणंमि सुट्ठु आउत्तो ॥ पडिणीअवारउ गुणिरई अगुणेसु मज्झत्थो ॥ १४ ॥ व्याख्या—प्रायश्चित्तेनालोचनादिना छिन्नमल्पीकृतं पापं येन स तथा, अन्यथाऽलूनप्ररूढतृणे क्षेत्रे धान्यमिवाशोधितोपचितपापे ह्यात्मनि न प्रवर्धते धर्म इति. तथा प्रत्याख्याने नमस्कारसहितादौ सुष्ठ्वतिशयेनायुक्त आदृतः प्रत्याख्यानं विना मनुष्यस्यापि पशुत्वापत्तेः. तथा प्रत्यनीकं प्रस्तावाज्जिनप्रवचनस्य प्रतिकूलं सर्वबलेन वारयतीति प्रत्यनिकवारकः, अन्यथा मिथ्यात्वप्रसंगात्. तथा गुणिषु दयादानादिगुणवत्सु रतिरास्था यस्य स गुणरतिः. अगुणेषु गुणहीनेषु मध्यस्थोऽरक्तद्विष्टो भवति, दुष्टानामपि दोषान्न वदतीत्यर्थः. उक्तं च—संतेहिं असंतेहिं । परस्स किं जंपिएहिं दोसेहिं ॥ अत्थो जसो

करेइ पव्वेसु सविसेसं ॥ १० ॥ व्याख्या—एषापि स्पष्टा. भावार्थस्त्वयं—शीलादीनि श्रावकः शश्वदनुतिष्ठेत्, परं पर्वसु विशेषतः, यश्च पर्वस्वपि धर्मानुष्ठानविशेषं न कुर्यात्तस्य किं नाम श्रावकत्वमिति. अथ गुणानेवैकोत्तरवृद्धिविशेषेणाह—

॥ मूलम् ॥—ववहारसुद्धिमेगं । द्दोसु भवेसु हियं च चिंतेइ ॥ साहेइ तिन्नि वग्गो । बाहेइ न भावणा चउरो ॥ १९ ॥ व्याख्या—श्रावकमेकामद्वितीयां व्यवहारशुद्धिं चिंतयति तन्मूलत्वाद् गृहस्थस्य. यतः—आहारस्स विसुद्धी । जत्तेण जईहिं होइ कायव्वा ॥ कूडक्कयाइरहिया । गिहिहिं ववहारसुद्धित्ति ॥ १ ॥ तथा द्वयोर्भवद्भविष्यतोर्भवयोर्हितमायतिसुंदरं चिंतयति. यदाहुः—जाएण जीवलोगे । दो चेव नरेण सिक्खियव्वाइं ॥ कम्मेण जेण जीवइ । जेण मुओ सुग्गइं जाई ॥ १ ॥ तथा त्रीन् वर्गादीन् धर्मार्थकामलक्षणान् परस्परमबाधया साधयति. यदाह—यस्य त्रिवर्गशून्यानि । दिनान्यायांति यांति च ॥ स लोहकारभस्त्रेव । श्वसन्नपि न जीवति ॥ १ ॥ तथा धर्मबाधया नार्थकामौ सेवेत, बीजभोजिनः कुटुंबिन इव नास्त्यधार्मिकस्यायत्यां श्रेयः. एवमर्थबाधया धर्मकामौ सेवमानस्य ऋणाधिकत्वं,

कामबाधया धर्मार्थौ सेवमानस्य गार्हस्थ्यभावः स्यात्. तथा न बाधयति चतस्रो भावना मैत्र्यादिकाः, तल्लक्षणं चेदं—परहितचिंता मैत्री । परदुःखनिवारिणी भवति करुणा ॥ परसुखपुष्टिर्मुदिता । परदोषोपेक्षणमुपेक्षा ॥ १ ॥ तथा—

॥ मूलम् ॥—समरइ पणपरमेट्ठी । रिउछक्कमंतरंगमवरमेइ ॥ अवगणइ सत्तवसणे । बहुमन्नइ अठ बुद्धिगुणे ॥ २० ॥ व्याख्या—पंचपरमेष्ठिनोऽर्हत्सिद्धाचार्योपाध्यायसर्वसाधून् सर्वकार्येषु स्मरति. उक्तं च—भोयणसमए सयणे । विबोहणे य वसणे भये विसमे ॥ पंचनमुक्कारं खलु । समरिज्जा सव्वकज्जेसु ॥ १ ॥ तथा बहिरदर्शनादात्मना सह संबंधत्वाद्बाह्यविपक्षापेक्षयांतरंगं रिपुषट्कमपनयति निगृह्णाति. यदाह—' आयुक्तितः प्रणीताः कामक्रोधलोभमानमदहर्षांतरंगारिषड्वर्ग इति. तत्र परगृहीतास्वनूढासु वा स्त्रीषु दुरभिसंधिः कामः १. परस्य स्वस्य वापायमविचार्य कोपकरणं क्रोधः २. दीनानाथेषु स्वधनाप्रदानं निःकारणं परधनाग्रहणं च लोभः ३. दुरभिनिवेशो युक्तोक्ताग्रहणं वा मानः ४. कुलबलैश्वर्यरूपविद्यादिभिरहंकारकरणं परमहर्षो वा मदः ५. निर्निमित्तं परदुःखोत्पादनेन स्वस्य द्यूतपा-

न लभ्नइ । सो उ अमित्तो कउ होइ ॥ १ ॥ किंच—

॥ मूलम् ॥—कज्जं समारभंतो । हियमहियं वा विमंसए पढमं ॥ (व्यतिरेके दोषानाह)—अविमठकारिणो हुंति । आवयाउ अकित्ती वा ॥ १५ ॥ व्याख्या—स्पष्टा. उक्तं च—सगुणमपगुणं वा कुर्वता कार्यजातं । परिणतिरवधार्या यत्नतः पंमितेन ॥ अतिरजसकृतानां कर्मणामाविपत्ते । नवति हृदयदाही शल्यतुल्यो विपाकः ॥ १ ॥ तथा—

॥ मूलम् ॥—पासत्थाईण फुमं । अहम्मकम्मं निरिक्खए तहवि ॥ सिढिलो होइ न धम्मे । एसो चिय वंचिउत्ति मई ॥ १६ ॥ व्याख्या—श्रमणगुणानां पार्श्वे तिष्टंतीति पार्श्वस्थाः, आदिशब्दादवसन्नकुशीलादिपरिग्रहाः, तेषां स्फुटं प्रत्यक्षमधर्मकर्माब्रह्मसेवादिकं निरीक्ष्यते तथापि धर्मे जिनप्रवचनविषये न किंचिदस्य शासनस्येति कृत्वा शिथिलो न नवति श्रेणिकवत्. तर्हि तदानीं किं चिंतयेदित्याह—'एसो चिय वंचइत्ति मई' एष एव वराको वंचितो दैवेन, य एवंविधमधरितकल्पद्रुमप्रनावमशेषसुखसंतानप्रदानक्षममपारसंसारसागरोत्तारणयानपात्रं चारित्रमवाप्यैवं चेष्टते इति मतिर्यस्य स तथा. तर्हि साधोः स्ख-

लितदर्शने कीदृग्भवतीत्याह—

॥ मूलम् ॥—साहुस्स कहवि खलियं । दहूण न तत्थ होइ निन्नेहो ॥ पुण एगंते अम्मा—पिउव्व स चोयणं देइ ॥ १७ ॥ व्याख्या—स्पष्टा. अनेन श्रावकः साधूनां पितृप्रायो भवेदित्यावेदित्तं. यत्स्थानांगसूत्रं—' चत्तारि समणोवासया पन्नत्ता, तं जहा—१ अम्मापिउसमाणे, २ भाउसमाणे, ३ मित्तसमाणे, ४ सवक्किसमाणे. एतत्स्वरूपवाचिकाश्चैता गाथाः—चिंतइ जइकज्जाइं । न दिहखलिउवि होइ निन्नेहो ॥ एगंतवच्छलो जइ—जणस्स जणणीसमो सड्ढो ॥ १ ॥ हियए ससिणेहो चिय । मुणीण मंदायरो विणयकज्जे ॥ भाउसमो साहूणं । पराभवे होइ सुसहाउ ॥ २ ॥ मित्तसमाणो माणा । इसिं रूसइ अपुच्छिउ कज्जे ॥ मन्नंतो अप्पाणं । मुणीण सयणाउ अप्पहियं ॥ ३॥ थद्धो छिद्दप्पेही । पमायखलियाण निच्चमुच्चरइ ॥ सड्ढो सवक्किकप्पो । साहुजणं तणसमं गणइ ॥ ४ ॥ अथ श्रावकस्य पर्वानुष्ठेयान् गुणानाह—

॥ मूलम् ॥—सीले तवचरणंमि य । आरंभविवज्जणे जिणच्चणए ॥ आवस्सए पयत्तं ।

करेइ पव्वेसु सविसेसं ॥ १७ ॥ व्याख्या—एषापि स्पष्टा. भावार्थस्त्वयं—शीलादीनि श्रावकः शश्वदनुतिष्ठेत्, परं पर्वसु विशेषतः, यश्च पर्वस्वपि धर्मानुष्ठानविशेषं न कुर्यात्तस्य किं नाम श्रावकत्वमिति. अथ गुणानेवैकोत्तरवृद्धिविशेषेणाह—

॥ मूलम् ॥—ववहारसुद्धिमेगं । दोसु भवेसु हियं च चिंतेइ ॥ साहेइ तिन्नि वग्गो । बाहेइ न भावणा चउरो ॥ १९ ॥ व्याख्या—श्रावकमेकामद्वितीयां व्यवहारशुद्धिं चिंतयति तन्मूलत्वाद् गृहस्थस्य. यतः—आहारस्स विसुद्धी । जत्तेण जईहिं होइ कायव्वा ॥ कूडक्कयाइरहिया । गिहिहिं ववहारसुद्धित्ति ॥ १ ॥ तथा द्वयोर्भवन्नविष्यतोर्भवयोर्हितमायतिसुंदरं चिंतयति. यदाहुः—जाएण जीवलोगे । दो चेव नरेण सिक्खियव्वाइं ॥ कम्मेण जेण जीवइ । जेण मुओ सुग्गइं जाई ॥ १ ॥ तथा त्रीन् वर्गादीन् धर्मार्थकामलक्षणान् परस्परमबाधया साधयति. यदाह—यस्य त्रिवर्गशून्यानि । दिनान्यायांति यांति च ॥ स लोहकारभस्त्रेव । श्वसन्नपि न जीवति ॥ १ ॥ तथा धर्मबाधया नार्थकामौ सेवेत, बीजभोजिनः कुटुंबिन इव नास्त्यधार्मिकस्यायत्यां श्रेयः. एवमर्थबाधया धर्मकामौ सेवमानस्य ऋणाधिकत्वं,

कामबाधया धर्मार्थौ सेवमानस्य गार्हस्थ्यभावः स्यात्. तथा न बाधयति चतस्रो भावना मैत्र्यादिकाः, तल्लक्षणं चेदं—परहितचिंता मैत्री । परदुःखनिवारिणी भवति करुणा ॥ परसुखपुष्टिर्मुदिता । परदोषोपेक्षणमुपेक्षा ॥ १ ॥ तथा—

॥ मूलम् ॥—समरइ पणपरमेट्ठी । रिऊक्कमंतरंगमवरमेइ ॥ अवगणइ सत्तवसणे । बहुमन्नइ अठ बुद्धिगुणे ॥ २० ॥ व्याख्या—पंचपरमेष्ठिनोऽर्हत्सिद्धाचार्योपाध्यायसर्वसाधून् सर्वकार्येषु स्मरति. उक्तं च—भोयणसमए सयणे । विबोहणे य वसणे भये विसमे ॥ पंचनमुक्कारं खलु । समरिज्जा सव्वकज्जेसु ॥ १ ॥ तथा बहिरदर्शनादात्मना सह संबंधत्वाद्बाह्यविपक्षापेक्षयांतरंगं रिपुषट्कमपनयति निगृह्णाति. यदाह—' आयुक्तितः प्रणीताः कामक्रोधलोभमानमदहर्षांतरंगारिषड्वर्ग इति. तत्र परगृहीतास्वनूढासु वा स्त्रीषु दुरभिसंधिः कामः १. परस्य स्वस्य वापायमविचार्य कोपकरणं क्रोधः २. दीनानाथेषु स्वधनाप्रदानं निःकारणं परधनाग्रहणं च लोभः ३. दुरभिनिवेशो युक्तोक्ताग्रहणं वा मानः ४. कुलबलैश्वर्यरूपविद्यादिभिरहंकारकरणं परमहर्षो वा मदः ५. निर्निमित्तं परदुःखोत्पादनेन स्वस्य द्यूतपा-

[illegible] वा ममाग्रतो हर्षः ६. एवं च निःश्रेयसं, अपरं [illegible]
श्रुतादीनि प्रागुक्तान्यनन्तयति. पापाधिकत्वान्नासेवेत. अष्टौ बुद्धिगुणान् [illegible]. शुश्रूषा [illegible]
[illegible]— शुश्रूषा श्रवणं चैव । ग्रहणं धारणं तथा ॥ ऊहोऽपोहोऽर्थविज्ञानं । तत्त्वज्ञानं
च धीगुणाः ॥ १ ॥ तत्र शुश्रूषा श्रोतुमिच्छा १, श्रवणमाकर्णनं २, ग्रहणमादानं ३, धारणा-
मविस्मरणं ४, ऊहो युक्तिगम्यस्तर्कः ५, अपोहोऽसत्पक्षनिरासः ६, अर्थस्य यथावस्थिततया
या विज्ञानमर्थविज्ञानं ७, तत्त्वस्य परमार्थस्य ज्ञानं तत्त्वज्ञानमिति ८. शुश्रूषादिगुणान्वितस्य-
ज्ञाप्रकर्षः स्यात् न भवति कदाप्यकल्याणभाजनं.

॥ मूलम् ॥—नवखित्ते ववइ धणं । जसेण जाणिज्जए दसदिसासु ॥ दंसणपयग्गाहीसा ।
इक्कारस फासए पडिमा ॥ २१ ॥ व्याख्या—नवानां क्षेत्राणां समाहारो नवक्षेत्री, तत्र धनं
वपति. जिनभवनं १, जिनप्रतिमा २, तत्प्रतिष्ठा ३, पुस्तकं ४, चतुर्धा संघः ५–८, तीर्थ-
यात्रा ९ चेति नव क्षेत्राणि, तेषूप्तं न्यायोपात्तं वित्तं बीजमिव बहुफलं भवति. यदागमः—
नियदव्वमनुव्वजिणंद—भवणजिणबिंबवरपइट्ठासु ॥ वियरइ पसत्थपुत्थय—[illegible]

यरजत्तासु ॥ १ ॥ एतानि कैश्चित्सत्त्वैवोच्यंते जिनजवनबिंबप्रतिष्ठानामजेदजणनात्. तथापि न विरोधः, वस्तुतोऽव्यजिचारात्. तथा दानोपकारादिजनितं जनैः श्लाघ्यत्वं यशस्ते दशसु दिक्षु पूर्वाद्यासु ज्ञायते. तथा दर्शनव्रतादिनैकादश प्रतिमा अजिग्रहविशेषरूपाः करणद्वारेण स्पृशति. तत्र मासमेकं सम्यक्त्वं दधतः प्रथमा प्रतिमा १, द्वौ मासौ व्रतानि सम्यक्त्वं च दधतो द्वितीया २, त्रीन् मासान् द्विसंध्यं सामायिकं व्रतानि सम्यक्त्वं च दधतस्तृतीया ३, एवं पुरतोऽपि पूर्वप्रतिमानुष्ठानमुत्तरोत्तरास्वनुवर्तेत इति द्रष्टव्यं, यस्तु विशेषः स वद्यते—चतुरो मासान् प्रतिमासं षट्सु पर्वसु चतुर्धा पौषधं कुर्वतश्चतुर्थी ४, पंच मासानस्नातस्य प्रकटजोजिन उत्कच्छपरिधायिनो दिवा ब्रह्मचारिणो रात्रौ तु प्रमाणकृतः पौषधिकत्वे निशि कायोत्सर्गं तन्वतः पंचमी ५, षण्मासान् सर्वथा ब्रह्मचारिणः षष्ठी ६, सप्तमासानचित्तमशनादिजुंजानस्य सप्तमी ७, अष्टौ मासान् स्वयमारंजं त्यजतोऽष्टमी ७, नव मासान् परेणाप्यारंजमकारयतो नवमी ए, दश मासान् क्षुरमुंरूस्य शिखाधारस्य वोद्दिष्टजक्तं त्यजतो दशमी १०, एकादश मासान् लुप्तकेशस्य गृहीतसाधुनेपथ्यस्य साधुवदेषणीयम·

पद्माद्यनर्थसंश्रयेण वा मनःप्रमदो हर्षः ६. एषां च निग्रहणं. अपायहेतुत्वात्सप्तव्यसनानि द्यूतादीनि प्रागुक्तान्यवगणयति, पापाधिकत्वान्नासेवेत. अष्टौ बुद्धिगुणान् बहुमन्यते, बुद्धिगुणाश्चामी— शुश्रूषा श्रवणं चैव । ग्रहणं धारणं तथा ॥ ऊहोऽपोहार्थविज्ञानं । तत्वज्ञानं च धीगुणाः ॥ १ ॥ तत्र शुश्रूषा श्रोतुमिच्छा १, श्रवणमाकर्णनं २, ग्रहणमादानं ३, धारणमविस्मरणं ४, ऊहो युक्तिगम्यस्तर्कः ५, अपोहोऽसत्पक्षनिरासः ६, अर्थस्य यथावस्थिततया विज्ञानमर्थविज्ञानं ७, तत्वस्य परमार्थस्य ज्ञानं तत्वज्ञानमिति ८. शुश्रूषाद्यैर्ह्युपाहितप्रज्ञाप्रकर्षः सन्न भवति कदाप्यकल्याणभाजनं.

॥ मूलम् ॥—नवखित्ते ववइ धणं । जसेण जाणिज्जए दसदिसासु ॥ दंसणवयमाईया । इक्कारस फासए पडिमा ॥ २१ ॥ व्याख्या—नवानां क्षेत्राणां समाहारो नवक्षेत्रं, तत्र धनं वपति. जिनभवनं १, जिनप्रतिमा २, तत्प्रतिष्ठा ३, पुस्तकं ४, चतुर्धा संघः ५–८, तीर्थयात्रा ९ चेति नव क्षेत्राणि, येषूप्तं न्यायोपात्तं वित्तं बीजमिव बहुफलं भवति. यदागमः— नियदव्वमनुव्वजिणंद—भवणजिणबिंबवरपइट्ठासु ॥ वियरइ पसत्थपुत्थय—सुतित्थतित्थ-

यरजत्तासु ॥ १ ॥ एतानि कैश्चित्सत्तैवोच्यंते जिनभवनबिंबप्रतिष्ठानामभेदभणनात्. तथापि न विरोधः, वस्तुतोऽव्यभिचारात्. तथा दानोपकारादिजनितं जनैः श्लाघ्यत्वं यशस्ते दशसु दिक्षु पूर्वाद्यासु ज्ञायते.. तथा दर्शनव्रतादिनैकादश प्रतिमा अभिग्रहविशेषरूपाः करणद्वारेण स्पृशति. तत्र मासमेकं सम्यक्त्वं दधतः प्रथमा प्रतिमा १, द्वौ मासौ व्रतानि सम्यक्त्वं च दधतो द्वितीया २, त्रीन् मासान् द्विसंध्यं सामायिकं व्रतानि सम्यक्त्वं च दधतस्तृतीया ३, एवं पुरतोऽपि पूर्वप्रतिमानुष्ठानमुत्तरोत्तरास्वनुवर्तेत इति द्रष्टव्यं, यस्तु विशेषः स वक्ष्यते—चतुरो मासान् प्रतिमासं षट्सु पर्वसु चतुर्धा पौषधं कुर्वतश्चतुर्थी ४, पंच मासानस्नातस्य प्रकटभोजिन उत्कच्छपरिधायिनो दिवा ब्रह्मचारिणो रात्रौ तु प्रमाणकृतः पौषधिकत्वे निशि कायोत्सर्गं तन्वतः पंचमी ५, षण्मासान् सर्वथा ब्रह्मचारिणः षष्ठी ६, सप्तमासानचित्तमशनादिभुंजानस्य सप्तमी ७, अष्टौ मासान् स्वयमारंभं त्यजतोऽष्टमी ८, नव मासान् परेणाप्यारंभमकारयतो नवमी ए, दश मासान् क्षुरमुंडस्य शिखाधारस्य वोद्दिष्टभक्तं त्यजतो दशमी १०, एकादश मासान् लुप्तकेशस्य गृहीतसाधुनेपथ्यस्य साधुवदेषणीयम-

शनादि गृह्णतोऽस्यापि स्वजनेष्वव्यवच्छिन्नस्नेहस्य गोचरकाले प्रतिमां प्रतिपन्नाय श्रावकाय भिक्षां दत्तेति वदत एकादशी ११. उक्तं च—दंसणवयसामाइय—पोसहपडिमाअबंभस-चित्ते ॥ आरंभपेसउद्दिठं । वज्जए समणभूए य ॥ १ ॥ अत्र पंचमादिप्रतिमासु पौषधिकस्य सर्वां शर्वरीं कायोत्सर्गविधानमैदंयुगीनैर्दुष्करमिति विमृश्य पूर्वसूरयः पाठांतरमप्युपदिशं-ति, यथा—रात्रिभक्तप्रत्याचक्षाणस्य पंचमी. सचित्ताहारं त्यजतः षष्ठी ६. दिवा ब्रह्मचारि-णः सप्तमी ७. सर्वथा ब्रह्मचारिणोऽस्नानादिगुणयुक्तस्याष्टमी ८. आरंभं मुंचंतो नवमी ९. प्रेष्यारंभमपि त्यजतो दशमी १०. श्रमणभूतस्यैकादशीति ११. यदाह—दंसणवयसामाइय—पो-सहनिसिभत्ताचित्तदिणबंभे ॥ राउवि बंभसारंभ—पेसमुणिभूयपाठोवि ॥ एवमेकोत्तरया वृद्ध्या कियंतः श्रावकगुणा उच्यंते ? वाचः क्रमवर्तित्वादायुषः परिमितत्वादत उपसंहारमाह—

॥ मूलम् ॥—एवं परिवढ्ढंती । कायव्वा सावगाण गुणसंखा ॥ जा सीलंगसहस्से । अट्ठा-रस भावए मुणीणं ॥ २२ ॥ व्याख्या—एवमनया दिशा परिवर्धमाना कर्तव्या श्रावकाणां गुणसंख्या, तथाहि—द्वादश व्रतानि विधत्ते, त्रयोदशभिरालस्यादिहेतुभिर्न धर्माद्भ्रश्यति,

चतुर्दशजीवन्नेदान् जानाति, पंचदशकर्मादानानि त्यजतीत्यादि, नन्वेवं गुणान् वर्धयताम-
स्ति क्वचिद्विश्रामस्थानमित्याह—'जा सीलंगत्ति' यावन्मुनीनामष्टादशशीलांगसहस्राणि
न्नावयति, तन्नावना चैवं—जोए करणे सन्ना । इंदियन्नोगाइसमणधम्मे य ॥ अट्ठारसहस-
सीलंग—संजमो होइ नायव्वो ॥ १ ॥ तत्र योगाः करणकारणानुमतिरूपास्त्रयः, करणानि
मनोवाक्कायन्नेदात् त्रीणि, संज्ञा आहारन्नयमैथुनपरिग्रहरूपाश्चतस्रः, इंद्रियाणि श्रोत्रचक्षु-
र्घ्राणजिह्वास्पर्शन्नेदात्पंच, पृथ्व्यप्तेजोवायुवनस्पतिद्वित्रिचतुःपंचेंद्रियजीवन्नेदाद् भूम्यादयो द-
श पदार्थाः, श्रमणधर्मः क्षांतिमार्दवार्जवमुक्तितपःसंयमसत्यशौचाकिंचन्यब्रह्मन्नेदाद्दशधा. ए-
षां पदानामन्निलापद्वारेणैवं चारणिका कार्या, तद्यथा–'जे नो करंति मणसा । निज्जियआहा-
रसन्नसोइंदी ॥ पुढवीकायारंन्नं । खंतिजुया ते मुणी वंदे ॥' अत्र हि पृथ्वीकायपदेन स्थानस्थेन
क्षांत्यादीनां दशानां पदानां परावृत्त्या लब्धा दश न्नेदाः. एवमप्कायादिन्निरपि प्रत्येकं दश
दश न्नेदाः प्राप्यंते, इति जातं शतं. एतच्च यथा श्रोत्रेंद्रियेण स्वस्थानममुंचमानेन लब्धं त-
था चक्षुरादीन्यपि प्रत्येकं शतं शतं लन्नंते, इति जातानि पंचशतानि. यथाहारसंज्ञया ल-

ब्धानि तथा नयादिभिरपि संज्ञाभिर्लभ्यंते, इति जाते द्वे सहस्रे. ते च यथा मनस्करणेन लब्धे तथा वाक्कायावपि लभेते, इति जाताः षट्सहस्राः. एते च स्वयं करणेन लब्धास्तथा कारणानुमताभ्यामपि लभ्यंत, इति जातान्यष्टादशसहस्राणि. गाथाभिलापश्च स्वयमुक्तानुसारेण विधेय इति. स्थापना चास्य रथवद्भवति. यथा तदेवं प्रतिपन्नदेशविरतेः श्रावकस्य ये गुणाः स्वयमुज्जृंभंते तेऽभिहिताः, इति समर्थितं गुणद्वारं. अथ भावना वक्तव्या, यद्वा दानं शीलं तपो भावना चेति चतुर्धा चतुराः श्राद्धधर्ममाहुः, तत्रातिथिसंविभागं भणता दानं, ब्रह्मव्रतं च प्रपंचयता शीलं, पौषधाधिकारे च तपोऽपि साक्षाद्व्याचचक्षे. ततो भावनैवैकावशिष्यते, सा चेह वाच्येति तामेव गाथाचतुष्केनाह—

॥ मूलम् ॥—सेविज्ज सुद्धभावं । आरंभे बहुविहेवि कुणमाणे ॥ तेण विणा गेहिणं । न पातमलसोहणोवाउ ॥ २३ ॥ दाणं झाणं नाणं । अन्नंपि हु धम्मियं अणुठाणं ॥ सव्वंपि वालुयासाप—सन्निहं भावणाहीणं ॥ २४ ॥ दाणं संपत्तीए । सीलं पुण होइ भवविरत्तीए ॥ तवचरणं सत्तीए । साहीणा भावणा नवरं ॥ २५ ॥ कुलमेरापविमुक्को । दवठा विहियना-

क्कयारंभो ॥ जावणवसेण केवल— नाणं पत्तो इलापुत्तो ॥ २६ ॥ व्याख्या—चतस्त्रोऽपि ग-
तार्थाः, नवरमिलापुत्रकथानकमुच्यते, तद्यथा—

अग्निशर्मेति भूदेवो । वसंतपुरपत्तने ॥ ब्रह्मक्रियाया विश्रामा—रामभूमिरजायत ॥१॥
सम्म सोमिलया पत्न्या । मुनींद्रैः प्रतिबोधितः ॥ स भेजे संयमं मोक्ष—भिक्षुः संसारपंजरात्
॥ २ ॥ ब्राह्मण्यां नात्यजत्प्रेम । पूर्वाभ्यासवशादसौ ॥ सापि जातिमदं चित्ते । विधत्तेस्मांतरां-
तरा ॥ ३ ॥ गृहीतानशनौ पुण्य—राशी तौ जीवितक्षये ॥ अनालोच्यैव तत्पापं । प्रापतुः
स्वर्गमादिमं ॥ ४ ॥ च्युत्वा द्विजमुनिस्तस्मा—दिलावर्धनपत्तने ॥ अनपत्यस्य पुत्रार्थं । त-
त्तद्दैवतसेविनः ॥ ५ ॥ धनस्य श्रेष्ठिनः पत्न्याः । धारिण्याः कुक्षिमासदत् ॥ उपयाचिततुष्टा-
या । इलादेव्याः प्रभावतः ॥ ६ ॥ युग्मं ॥ समये तस्य जातस्य । पितृभ्यां नाम निर्ममे ॥
इलापुत्र इति ख्यातं । दत्तोऽयमिलया यतः ॥ ७ ॥ वर्धमानः क्रमात्पित्रो—राशया सह व-
र्ष्मणा ॥ आसादयदसौ सर्व—कलाभिः सह यौवनं ॥ ८ ॥ सोमिलापि च्युता स्वर्गा—द-
भून्नटकुले सुता ॥ पूर्वजन्मकृतस्वात्म—जात्युत्कर्षानुभावतः ॥ ९ ॥ शुक्लपक्षदिनैरिंदु—ले-

ऽथ सकलाः कलाः ॥ आहिता सा नटैः काले । वधूर्वोद्भिन्नयौवना ॥ १० ॥ नृत्यंती स्वेन सा रंग—भूमौ सारंगलोचना ॥ विस्मयाञ्चर्तयामास । प्रेक्षकाणां शिरांस्यपि ॥ ११ ॥ इला-पुत्रः पुरे तत्र । मित्रवर्गयुतोऽन्यदा ॥ नृत्यंतीं नटवृंदांत—रदांतस्तामवैक्षत ॥ १२ ॥ कला-वानप्यसौ तस्यां । तमोमय्यामरज्यत ॥ नाविलक्ष्मा निशीवेंदु—ईरयन्मित्रसंकुलं ॥ १३ ॥ नटीरूपेण निर्वात—कज्जलध्वजनिश्चलः ॥ ऊचे मित्रैरिलापुत्रः । किं शून्य इव वीक्ष्यसे ॥ १४ ॥ स स्माह वच्मि किं नव्या—नया मम मनोऽधुना ॥ अहारि तेन वैकल्य—मेत-च्छ्रोतरि मयि ॥ १५ ॥ तत्तत्कूर्णकसंयुक्ता । दधाना कांचनच्छविः ॥ कुनटी कुरुते चित्रं । सु-नटी किं पुनस्त्वसौ ॥ १६ ॥ आप्नोम्येनां वयस्याश्चे—त्तदा जीवामि नान्यथा ॥ इत्यालपन् पथान्मित्रैः । स मंदिरमनीयत ॥ १७ ॥ वैमनस्याशयं पृष्टः । पित्रा तत्रावदन्न सः ॥ पुनः सचयसस्तस्य । यथातथ्यमवादिषुः ॥ १८ ॥ सोऽबुध्यत ततः पित्रा । वत्स कोऽयं मतिभ्रमः ॥ नातपार्तैरपि छाया । विषवृक्षस्य सेव्यते ॥ १९ ॥ किं न संतीभ्यनंदिन्यो । यदस्यामनुरज्य-से ॥ सुभिक्षे सति कः कंगू—कोद्रवास्वादसादरः ॥ २० ॥ स स्माह तात कस्येयं । दीयते

बुद्धिरुज्ज्वला ॥ असंज्ञीवामनस्कोऽहं । न पश्यामि शृणोमि वा ॥ २१ ॥ लेभेऽहं यदि ता-
मेव । नटीं तातौषधीमिव ॥ तदा मे म्रियमाणस्य । काचिदस्ति प्रतिक्रिया ॥ २२ ॥ अथा-
शक्यप्रतीकारः । पितृभ्यामप्युपेक्षितः ॥ नटेभ्योऽयाचत स्वर्ण—समां स्वर्णबविं स तां ॥२३॥
तेऽप्यूचिरे कदाप्येनां । न विक्रीणिमहे कनीं ॥ किं हेम्ना क्षीयमाणेना—क्षयो निधिरियं
हि नः ॥ २४ ॥ यद्यस्या भवतो लिप्सा—स्माभिः संगबतां तदा ॥ कलामभ्यस्य चास्माकी-
मिमां समुपयबतां ॥ २५ ॥ श्रुत्वेति पेटकां तेषां । स क्षणादस्खलन्मतिः ॥ प्रविवेश द्रुषां
देहं । वर्मोत्तीर्णशरो यथा ॥ २६ ॥ इभ्यस्य सूनुरभ्यस्य । नटीकामः स तत्कलां ॥ अतिच-
क्राम कामार्त्ति—कृशो द्वादशवत्सरीं ॥ २७ ॥ ययौ बेन्नातटं सोऽथ । धनीयन् राजरंजनात् ॥
पल्लविन्यः कलावल्ल्यो । भूपांभोदं विना न यत् ॥ २८ ॥ तत्रारिमर्दनो भूपः । कल्पवल्लीस-
मोऽर्थिषु ॥ तं नूतनकलावंतं । कर्तुं नाटकमादिशत् ॥ २९ ॥ अथावसरमासाद्य । गवाक्ष-
स्थे महीपतौ ॥ मंत्रिसामंतसंघाते । यथास्थानं निषेदुषि ॥ ३० ॥ लोके चान्योन्यसंमर्द—
भीत्योपर्युपरिस्थिते ॥ अभून्नांदीरवो रंग—भूमौ सभ्यप्रमादभित् ॥ ३१ ॥ रंगे वंशमवस्था-

प्य । वरत्राभिर्दृढीकृतं ॥ तस्योपरि नटास्तेनुः । फलकं शंकुसंकुलं ॥ ३२ ॥ वंशोत्तीर्णोऽपि वंशाग्र—मारोहद् धृतपादुकः ॥ श्रैलेयः किल लोकाग्रं । लोकोत्तीर्ण इवासुमान् ॥ ३३ ॥ सप्त पश्चात्पुरः सप्त । तत्र श्रीकरणेरितः ॥ स लोलकरणश्चक्रे । करणानि चतुर्दश ॥ ३४ ॥ ऊर्ध्वस्थः कीलकान् कुर्वन् । पादुकारंध्रगोचरान् ॥ ऐदिधरूनदानेच्छां । कस्य कस्य नटो न सः ॥ ३५ ॥ तदा वंशमवष्टभ्य । शालभंजीमिव स्थितां ॥ नटीं निरीक्ष्य तां प्राप । धैर्यध्वंसं धराधिपः ॥ ३६ ॥ स्वयं वंशान्निपत्योच्चै—र्यद्येष म्रियतेऽधुना ॥ तल्लभेऽहमिमामेवं । ध्यायन्नरपतिर्जगौ ॥ ३७ ॥ तदा व्याक्षिप्तचित्तेन । मया नालोकि ते कला ॥ विधाय तत्पुनर्नृत्यं । नट प्रीणय मद्दृशौ ॥३८॥ ददौ ततः स तावंति । करणानि पुनर्नटः ॥ श्रांतोऽसौ माविषादीति । साशंकं वीक्षितो जनैः ॥ ३९ ॥ पुनर्नृत्यं विधेहीति । नुन्नोऽसौ भूभुजा तथा ॥ करणानि ददौ तृष्णा— तरलः कुरुते न किं ॥ ४० ॥ पुना राज्ञि तथैवोक्ते । पौरव्राते विषीदति ॥ मत्तः किमेष दुष्टो वा—स्तीति स क्ष्मापमैक्षत ॥ ४१ ॥ तद्विकारान्नृपं ज्ञात्वा । नटीलुब्धं स दध्यिवान् ॥ यतोऽहं धनमिच्छामि । निधनं मे स दित्सति ॥ ४२ ॥ इ-

लापतिरयं ताव—द्भिलापुत्रोऽस्म्यहं पुनः ॥ आकांक्षन्मत्प्रियामेष । न्यायधर्मौ विलुंपति ॥ ४३ ॥ यस्याः कृते मया मुक्तौ । पितरौ विरहातुरौ ॥ द्वीपिनेव मृगी सापि । भूपेनानेन जग्रसे ॥ ४४ ॥ नाद्य मे पितरौ नापि । सुहृदो नाप्यसौ प्रिया ॥ अभूतां केवलं पाप—दुष्कीर्ती एव निश्चले ॥ ४५ ॥ आत्ते मन्नाम्नि केनापि । नामव्यत्ययतोऽपि ते ॥ हा हा मोक्ष्यंति सूत्कारान् । श्यामास्याः स्वजना मम ॥ ४६ ॥ इति चिंताकुलश्चक्षु—र्विलक्षं दिक्षु निक्षिपन् ॥ स मुनिद्वंद्वमैक्षिष्ट । कस्यापीभ्यस्य सद्मनि ॥ ४७ ॥ शुद्धान्नं ददतीमिभ्य—सुदतीमभिनिःस्पृहौ ॥ तौ मुनी वीक्ष्य दध्यौ स । भाविज्ञानप्रभोज्ज्वलः ॥ ४८ ॥ धन्या अमी महासत्वा । निर्लेपा कमला इव ॥ स्मेरयंति मुखं येषां । योषा दोषा न च क्वचित् ॥५०॥ मुनीन् मुक्त्वा न के लोके । ययुः स्मरशरव्यतां ॥ चरणौ ये नमंत्येषां । तेषामेषोऽस्मि किंकरः ॥५१॥ एवं भावयतस्तस्य । चरणायैकतानया ॥ भूतः केवलबोधाख्यः । प्रजिघ्ये मुक्तियोषिता ॥ ५२ ॥ तं जातकेवलं देवा । दत्तवेशा ववंदिरे ॥ व्यधुश्च स्वर्णकमलं । वंशस्थाने विशारदाः ॥ ५३ ॥ तत्रासीनः स भगवान् । वितेने धर्मदेशनां ॥ बोधयामास राजानं । त-

त्पत्नीस्तां नटीमपि ॥ ५४ ॥ धाराधिरूढवैराग्या—स्ते सर्वेऽपि धृतव्रताः ॥ केवलज्ञानमासाद्या—ऽजजन्निजगुरोस्तुलां ॥ ५५ ॥ धनं लब्धुं धात्रीधनसदसि तन्वन्निजकला—मसारं संसारं मनसि विमृशन् वीक्ष्य च मुनीन् ॥ चिदानंदास्वादाद्यदलजत मुक्तिं गतमला—मिलापुत्रः सर्वं जयति किल तद्भावललितं ॥ ५६ ॥ इतीलापुत्रकथा समाप्ता. गतं भावनाद्वारं, अथ क्रमायातं श्रावकस्याहोरात्रकृत्यमाह—

॥ मूलम् ॥—रयणीइ अठमंसे। उठंतो भाइऊण परमेठी ॥ अव्वावरुसुद्धमणो। करिज्ज सो धम्मजागरियं ॥२७॥ व्याख्या—रजन्या रात्रेरष्टमेंशे चतुर्घटिकामाने उत्तिष्ठेच्छयनीयात्, उत्थानसमय एव परमेष्टिनो ध्यात्वा पंचपरमेष्टिनमस्कारं स्मृत्वा स श्रावको जागरणं, जागरा सैव जागरिका, धर्मार्था जागरिका धर्मजागरिका, तां कुर्यात्. किंविशिष्टोऽसावित्याह—अव्यापृतस्तत्क्षणं सुप्तोत्थितत्वाद्यापि गृहव्यापारबाह्यः, अत एव शुद्धमना अकलुषचित्तः. कथं धर्मजागरिकां कुर्यादित्याह—

॥ मूलम् ॥—कोहं मे कावत्था। किं च कुलं के व मझ गुणनियमा ॥ किं फासियं च

न खित्तं । किं न सुअं धम्मसत्थं च ॥ २० ॥ व्याख्या—स हि निशि निबिमनिद्रामुद्रित-चेतनस्तदानीं प्रथमोत्थितत्वादद्याप्यजातचेतःपाटवस्तावदेवं पूर्वं ध्यायति—कोऽहं मनुष्यो देवादिर्वा ? तत्र तावन्मनुष्योऽस्मि, तर्हि का मेऽवस्था ? बाल्ययौवनाद्या ? तत्र यूनो मम माभूद्बाल्योचिता चेष्टा, वृद्धस्य वा तारुण्योचितेति. वाथवा किं मम कुलं श्रावकसत्कमि-तरद्वा ? श्रावककुलं चेत्तर्हि के मम गुणाः ? मूलगुणा उत्तरगुणा वा नियमा अभिग्रहविशे-षा वा ? तथा सति विभवे नवसु क्षेत्रेषु किं क्षेत्रं मया न स्पृष्टं ? चः समुच्चये, किं वा धर्म-शास्त्रं दशवैकालिकाद्यं मया न श्रुतं ? ततस्तत्क्षेत्रस्पर्शने तच्छास्त्रश्रवणे च यत्नं करोमीति. श्रावको हि संजातभवनिर्वेदोऽपि केनापि हेतुना गार्हस्थ्यं मोक्तुमक्षमः क्षणमपि दीक्षाध्यानं न मुंचतीति. तदानीमनन्यव्यापारत्वाद्विशेषोल्लसितदीक्षाभिलाषः सन् ध्यायति, तदाह—

॥ मूलम् ॥—अहह मए विउसेणवि । हयास गिहवासपासपडिएण ॥ कह नीणि-जंति मुहा । मणिकोमीडुल्लहा दियहा ॥ २९ ॥ व्याख्या—स्पष्टा, नवरं 'विउसेणत्ति' विदुषा जानतापीत्यर्थः. किंच—

॥ मूलम् ॥—पढमवयंमि वयं जे । गहिऊणं गुरुकुलंमि निवसंति ॥ अमुणियघरवावारे । ते बालमुणी पणिवयामि ॥ ३० ॥ व्याख्या—एषापि सुबोधा, नवरं प्रथमे वयसि षोडशेभ्योऽर्वाक्. दृष्टांतं भावयति—

॥ मूलम् ॥—छम्मासियंपि छकाय—संजयं पणिवयामि जाइसरं ॥ वइरं वयरंगधरं । बालंपि अबालबुद्धिल्लं ॥ ३१ ॥ व्याख्या—उत्तानार्था, नवरं वज्रनामानं मुनिं व्रतरंगधरं बालमप्यबालबुद्धिमंतं. भावार्थस्तु कथानकेनोच्यते, तद्यथा—

सन्निवेशोऽस्त्यवंतीनां । भूषा तुंबवनाभिधः ॥ यत्र जैनालया रत्न—स्तूबका इव रेजिरे ॥ १ ॥ अनूनगिरिस्तत्र । महेभ्यतनयो नयी ॥ चित्ताद्धुत्तारिता येन । न बाल्येऽपि व्रतस्पृहा ॥ २ ॥ युवापि श्रुतसिद्धांतः । कामकामः स नाभवत् ॥ न हि पीतसुधासारो । विषोद्गारान् विमुंचति ॥ ३ ॥ पितृभ्यां विदुषे तस्मै । या याऽयाच्यत कन्यका ॥ स तत्तपितरौ गत्वा । गेहमेवं न्यषेधयत् ॥ ४ ॥ प्रथमं कथयन्नस्मि । पश्चाद्देयं न दूषणं ॥ परिणीतोऽप्यहं दीक्षा—मादास्ये नात्र संशयः ॥५॥ इभ्यस्य धनपालस्य । सुनंदानामनंदनी ॥ भ-

तार्थिनमपि प्रेम—पूर्त्या परिणिनाय तं ॥ ६ ॥ अन्यदा तामृतुस्नाता—मपि जोगपराङ्मु-
खः ॥ जेजे धनगिरिर्जोग्य—फलकर्मवशंवदः ॥ ७ ॥ सामानिकः कुबेरस्य । देवः कोऽपि दि-
वश्च्युतः ॥ सुनंदाकुक्षिकमलं । कलहंस इवाश्रयत् ॥ ८ ॥ मत्वा धनगिरिः पत्नी—मंतर्वत्नी-
मजाषत ॥ अथाहं प्रव्रजिष्यामि । गर्जाधारा त्वमप्यसि ॥ ए ॥ यत्रार्यसमितो मेऽस्ति । शा-
लको व्रतपालकः ॥ गर्जः स्वजः स एवास्तु । शरणं संप्रति प्रिये ॥ १० ॥ इत्यनुज्ञाप्य तां ग-
त्वा । गुरोः सिंहगिरेः पुरः ॥ प्रव्रज्याधीतसूत्रार्थः । समर्थः स तपस्यभूत् ॥ ११ ॥ अतिज्यो-
तिष्पतिज्योति—र्विद्योतितदिगंतरं ॥ सुतं प्रासूत सानंदा । सुनंदा सुंदरे दिने ॥ १२ ॥ शु-
द्धिमाधातुमाजग्मु—स्तदासन्नगृहांगनाः ॥ ता हि सख्यः सुनंदायाः । साक्षिण्यः सुखदुः-
खयोः ॥ १३ ॥ ता लोकलोचनैर्लेह्य—लावण्यं बालमालपन् ॥ हे शिशो कृशपुण्योऽसि ।
तव जन्म यदीदृशं ॥ १४ ॥ पिता ते न तदादास्य—दीक्षां राजसिको यदि ॥ अद्रक्षाम त-
दक्षामा—नद्य त्वज्जननोत्सवान् ॥ १५ ॥ बह्वीजिरपि नारीजि—र्जवेन्न हि महोत्सवः ॥
स्यात्तारकाजिरालोकः । किं लोके सूर्यवर्जिते ॥ १६ ॥ दीक्षानाम तदाकर्ण्य । सकर्णः शैश-

वादपि ॥ ऊहापोहवशाद्बालः । सस्मार प्राग्भवस्य सः ॥ १७ ॥ सोऽहं पूर्वभवेऽभूवं । श्रीदसामानिकः सुरः ॥ तदा च जिनयात्राया—मष्टाह्नं भूयसो मुनीन् ॥ १८ ॥ गतश्चाष्टापदं शैलं । श्रीगौतममनंसिषं ॥ तन्मुखात्पुंडरीकस्या—ध्ययनं च व्यबीभवं ॥ १९ ॥ भद्रं मे जनकायास्तु । यो युवाप्यभजद् व्रतं ॥ पंथाः स एव मे श्रेयान् । पुत्राः पित्रानुगा यतः ॥ २० ॥ परं बालस्य मेऽवश्यं । नाधुना घटते व्रतं ॥ यूनोऽपि जननीस्नेह—बद्धस्य सुलभं न तत् ॥ २१ ॥ तत्तथा करवै माता । यथा मम विरज्यति ॥ ध्यात्वेति रेवतीग्रस्त । इव नित्यं रुरोद सः ॥ २२ ॥ न सस्मितेक्षणैर्नांक—खेलनैर्न चटूक्तिभिः ॥ न दृढालिंगनैः कामं । विरराम स रोदनात् ॥ २३ ॥ देवदोषधिया क्लृप्तै—र्मंत्राद्यैर्न तुतोष सः ॥ जाग्रत्स्वपिति यो धीमान् । सोऽन्यैर्जागर्यते कथं ॥ २४ ॥ जनन्या जनयन् खेदं । रोदनेन दिने दिने ॥ षण्मासानतिचक्राम । दीक्षाकामः स बालकः ॥ २५ ॥ विवेश सन्निवेशं तं । गुरुः सिंहगिरिस्तदा ॥ कर्मेभकुंभनिर्भेदी । सिंहो गिरिगुहामिव ॥ २६ ॥ मुनी धनगिरिश्चार्य—समितश्च विपश्चितौ ॥ युक्तौ गोचरचर्यार्थं । गुरुमापृछतामथ ॥ २७ ॥ अचित्तं वा सचित्तं वा । युवां

यत्किंचिदाप्नुथः ॥ तदद्य मा निषेधिष्टा—मिष्टा यदि गुरूक्तयः ॥ २८ ॥ इति प्राप्य गुरोः शिक्षा—मथ तौ प्रथितोजसौ ॥ ग्रामं क्रमागतं सद्म । सुनंदायाः समीयतुः ॥ २९ ॥ तदा सुनंदां संभूय । प्रातिवेश्मिक्य ऊचिरे ॥ स्वगृहे भुंजते ता हि । तत्तिमन्यस्य कुर्वते ॥ ३० ॥ जामे क्षामेतरैः पुण्यै—रयं भर्ता तवाययौ ॥ अस्मै बालममुं देहि । किं करोति विलोक्यते ॥ ३१ ॥ निशम्य साधुमायांतं । क्रंदंतमधिकाधिकं ॥ बालमादाय पाणिभ्यां । सुनंदा मुनिमालपत् ॥ ३२ ॥ जीवितेश गृहं मुक्त्वा । जीवितोऽसि स्वयं सुखं ॥ विलगय्य ममोत्संग—मंगस्थं भिंनदंत्नतः ॥ ३३ ॥ बालो व्यालोपमो नाथ । मम पृष्टे यदालगत् ॥ तदादि मम देहस्य । पश्याभूदीदृशी दशा ॥ ३४ ॥ सुखं दिवा न भुंक्ताहं । निद्राणा न सुखं निशि ॥ पूर्वपापपरिपाके । बालेऽस्मिन्नित्यरोदिनि ॥ ३५ ॥ भ्राता सुतसुखस्याहं । त्रातासि यदि देहिनां ॥ तदेतं बालमादाय । मां सुखी कुरु संकृप ॥ ३६ ॥ मुनिर्जगाद दत्वाद्य । बालं पश्चाद्गृहीतस्यसे ॥ सावादीत्को विषादी स्या—द्यते जीर्णज्वरे गते ॥ ३७ ॥ तथापि न हि नारीणां । विश्वासो वचने मम ॥ क्रियतां साक्षिणः केचि—दित्यूचे मुनिपुंगवः

॥ ३७ ॥ अदत्त रुषये बालं । साक्षिणोऽपि विधाय सा ॥ स्मरन् गुरुगिरं साधु—रपि ज-
ग्राह तं मुदा ॥ ३९ ॥ बालस्तत्कालमुन्मुक्त । इव संसारबंधनात् ॥ आसन्ननिवृतिर्विश्व—
विदितं रुदितं जहौ ॥ ४० ॥ विन्यस्य पात्रबंधे तं । निवृत्तौ तौ मुनीश्वरौ ॥ ईयतुर्वेणिजो
लब्ध—लाजाविव निजाश्रयं ॥ ४१ ॥ गुरुर्धनगिरेर्बाहुं । नमंतं बालजारतः ॥ दृष्ट्वा ददाव-
वष्टंज—मधस्तान्निजपाणिना ॥ ४२ ॥ तमासेचनकं रूप—संपदानन्यतुल्यया ॥ बालं सू-
रिकरांजोज—मरालं विदधे मुनिः ॥ ४३ ॥ सूरिस्तं वज्रसारत्वा—द्वज्र इत्यनिधानतः ॥
अजिधाय सुधासार—मुच्चैर्वाचमुवाच सः ॥ ४४ ॥ बालो बालार्कवज्जैन—शासनव्योमनि
स्फुरन् ॥ तेजः पारवंक्तिताराणा—मेष निःशेषयिष्यति ॥ ४५ ॥ शासनं श्रीजिनेंद्रस्य । सुध-
र्मास्थानशालि नः ॥ स्फुरतानेन वज्रेण । गतद्युति जविष्यति ॥ ४६ ॥ अयं प्रवचनाधारः ।
सारसौजाग्यजाग्यजूः ॥ पालनीयः प्रयत्नेन । श्रीअर्हद्भक्तिजावितैः ॥ ४७ ॥ इत्युदित्वार्पया-
मास । साध्वीज्यः सूरिरर्जकं ॥ विहारं च स्वयं चक्रे । सिद्धसाध्य इव द्रुतं ॥ ४७ ॥ सा-
ध्व्योऽपि प्रददुः शय्या—तरीज्यः पालनाय तं ॥ स्वात्मेव ता हि साधूनां । विश्वविश्वास-

सौभाग्यसागरे तस्मिन् ।
भाजनं ॥ ४९ ॥ पूर्वमासीज्जनन्येका । तदा ताः सकला अपि ॥ न रोदनादिना
दधिरे जननीधियः ॥ ५० ॥ अंकादंकं नीयमानः । संचरिष्णुः करात्करं ॥ तमेवाखे-
खेदं । सोऽदात्तासां मनागपि ॥ ५१ ॥ तमेवापाययन् स्तन्यं । तमेवाभूषयन्मुदा ॥ गंभीरमानसः ॥
लयन् मुक्त्वा । श्राविकाः स्वसुतानपि ॥ ५२ ॥ शिशुरप्युचितक्रीडा— रंभी गंभीरमानसः ॥
मलमूत्रादिसंज्ञासु । बालिशो न बभूव सः ॥ ५३ ॥ षण्मासिकोऽपि षड्जीव—कायरक्षण-
दक्षिणः ॥ पापाधिकरणं नाभू—द्गुरूणां स धियां निधिः ॥ ५४ ॥ शिशुं निशम्य वार्धिष्णुं ।
स्वीयं यय्यातरीकुले ॥ नुन्ना सन्नालयस्त्रीभिः । सुनंदा तमयाचत ॥ ५५ ॥ प्रवेशं दद्महे
नात्र । चार्भकेणामुना तव ॥ एषोऽस्मासु गुरोर्न्यास । इति तान्निर्निषेधि सा ॥ ५६ ॥ अवा-
प्तच्युतमाणिक्य—मिव दुर्लभमंगजं ॥ ज्ञात्वा तं परितो भ्रांत्वा । ततः सातोषयन्मनः ॥५७॥
ढुलोके स्निग्धया दृष्ट्या । गाढमंगेन सस्वजे ॥ स्तन्यं च पाययांचक्रे । स तत्रैत्य सुनंदया
॥ ५८ ॥ इतश्च मातुलो वज्र—कुमारस्याचलं पुरं ॥ प्राप्ताचार्यपदः प्राप । श्रीआर्यसमितो
मुनिः ॥ ५९ ॥ ते तपोनिधयो विद्यां—बुधयः सिद्धयोगिनः ॥ तत्रत्यश्रावकैर्नत्वा । विज्ञप्यं-

ते सहाग्रहं ॥ ६० ॥ कन्यावेणाभिधे द्वे स्त । इह नद्यौ दुरुत्तरे ॥ केचित्तदंतरं द्वीप—वासि-
नः संति तापसाः ॥६१॥ तेषामेकस्तपःसिद्धः । पदयोर्धृतपादुकः ॥ नदीं स्थलीमिवाक्रम्य ।
पुरीमायाति याति च ॥६२॥ जोः श्रावका न कापीदृक् । सिद्धिरस्त्यार्हते मते ॥ अस्ति चे-
द्दर्श्यतां तर्हि । सोऽस्मानेव व्यतर्कयत् ॥ ६३ ॥ तस्मिन्नद्य तपोराशौ । लोकः सर्वोऽप्यरज्य-
त ॥ नेजुस्तदादिमुख्यं च । श्रावका अपि केचन ॥ ६४ ॥ एवं श्रीजैनधर्माख्ये । प्रासादे प-
तनोन्मुखे ॥ पूज्यपादा अवष्टंजं । दातुमर्हंति संप्रति ॥ ६५ ॥ अथोचुर्गुरवस्तस्य । सिद्धिरे-
खा न तापसी ॥ किंतु लेपकृता कापि । चित्रमात्रफला जने ॥ ६६ ॥ तत्तादृक्परपाखंडि-
प्रजावैः स्फुटमीक्षितैः ॥ न मुह्यति मनो यस्य । सम्यक्त्वं तस्य शस्यते ॥ ६७ ॥ अस्य स्वस-
द्मानीतस्यां—जसा पादौ च पादुके ॥ प्रक्षालयत जो योग—सिद्धिर्याति यथा प्रथा ॥६८॥
अथ संजूय ते श्राद्धाः । क्रांत्वा सरितमागतं ॥ तापसं परमप्रीत्या । जुहुवुः पारणाकृते ॥६९॥
महिमा मम दुर्भेदान् । बिभेद श्रावकानपि ॥ इति साहंकृतिः सोऽपि । धीवंध्योऽमंस्त त-
द्वचः ॥ ७० ॥ ऊर्ध्वीकृतध्वजं दत्त—स्वस्तिकं क्लृप्ततोरणं ॥ तेष्वेकस्याविशद्गेहं । तापसः

प्रीतमानसः ॥ ७१ ॥ इमौ ते पततो यत्र । कमलाकंपदौ पदौ ॥ ध्रुवा तत्र पराभूति-रपूर्व-
श्च शुभोदयः ॥ ७२ ॥ एवं स श्रावको व्याज—स्तुत्या भक्तिं प्रपञ्चयन् ॥ नीरेणानिभृतस्त-
स्य । बलादंह्री अधावत ॥ ७३ ॥ युग्मं ॥ स्वस्वेनाल्पजलस्नायी । तदा भूरिजलव्ययात् ॥
पादौ च पादुके चास्य । निपुणं निरलेपयत् ॥ ७४ ॥ तस्य भक्तिभराज्ञावि—विगोपनभया-
कुलः ॥ भुंजानोऽप्यमृताहारं । स्वादं नाप स तापसः ॥ ७५ ॥ भुक्तोत्थितः सरित्तीरं । स
जगाम जनैर्वृतः ॥ यद्भाव्यं तद्भवत्येवं । ध्यात्वा नद्यां विवेश सः ॥ ७६ ॥ गंडशैल इव स्थू-
ले । तस्मिन् सरिति मज्जति ॥ हा गता कास्य संसिद्धि—रिति लोकोऽहसत्तरां ॥ ७७ ॥ य-
दमुष्य गृहेऽभुंक्त । भक्त्या भक्तानि भूरिशः ॥ तैरस्य स्थगिता सिद्धि—रेवमूचुश्च केचन
॥ ७८ ॥ लोके च तुमुलोत्ताले । द्विधा समयवेदिनः ॥ आययुः सूरयस्तत्र । श्रीआर्यसमि-
ताभिधाः ॥ ७९ ॥ ऊचिरे योगसिद्धास्ते । तीर्थौन्नत्यविधित्सवः ॥ सरितं पुत्रि पंथानं । दे-
हि नः परमिभृतां ॥ ८० ॥ तदैव वाहिनी वर्त्मा—दत्त सुश्राविकेव सा ॥ द्विधा भूते जले
मीन । इवोन्मग्नः स तापसः ॥ ८१ ॥ त्रिजगज्जंतुजीवातु । जैनं जयति शासनं ॥ इति ज-

ष्पत्सु पौरेषु । ब्रह्मद्वीपं ययौ गुरुः ॥ ७२ ॥ तत्पार्श्वे जगृहुर्दीक्षां । बुद्धाः सर्वेऽपि तापसाः ॥
मुनीनामजवद्ब्रह्म—द्वीपशाखा तमन्वये ॥ ७३ ॥ अथ जाते त्रिवर्षीणे । वज्रे वज्रांकित-
क्रमे ॥ साधवो धनगिर्याद्याः । पुनस्तत्र समाययुः ॥ ७४ ॥ तदैवाश्रममागत्य । सुनंदा रुरुधे
मुनीन् ॥ अर्प्यतां स च मे सूनु—रित्युच्चैः पूच्चकार च ॥ ७५ ॥ किं दत्वा याचसे पुत्रं ।
विहिताः संति साक्षिणः ॥ धन्यासि मास्म धृष्टाभू—रित्युक्ते तैर्जगाद सा ॥ ७६ ॥ हास्ये-
नादामहं पुत्रं । तदानापृच्छ्य गोत्रिणः ॥ कृत्वा राजकुले वाद—मप्यादास्ये ततोऽधुना ॥७७॥
अथैकत्र तटेऽभूवन् । संघेन सह साधवः ॥ द्वितीयस्मिन् सुनंदा तु । सह निःशेषनागरैः
॥ ७८ ॥ पक्षद्वयमपि क्ष्माप—सभां वादधिया ययौ ॥ सुनंदास्थाद्भुजे वामे । राज्ञः संघ-
स्तु दक्षिणे ॥ ७९ ॥ स च बोधांबुधिर्बालो । मध्यस्थः पक्षयोर्द्वयोः ॥ शुशुभे पुण्यपापांत—
र्मोक्षतत्वमिव स्थिरः ॥ ८० ॥ आदिं वादस्य विज्ञाय । न्यायविन्नृपतिर्जगौ ॥ आहूतोऽयं य-
मभ्येति । बालस्तस्यापरस्य न ॥ ८१ ॥ तत्रापि गर्भधरणा—न्माता दुष्करकारिणी ॥ ततः
सुनंदया पूर्व—मयमाकार्यतां शिशुः ॥ ८२ ॥ श्रुत्वेत्युल्लसितानंदा । सुनंदा नंदनं निजं ॥

आह्वयंत्पुरतो भूत्वा । ददती करतालिकाः ॥ ९३ ॥ शकटीयमिमौ रथ्यौ । वृषभावश्वका इ-
मे ॥ इमं श्रीदाम चैषु त्वं । वत्स क्वापि करं क्षिप ॥ ९४ ॥ नवरंगः पटश्चाय—मयं हारो-
ऽयमंगदः ॥ चूडारत्नमिदं चैत—दखिलं कल्पितं तव ॥ ९५ ॥ अयमिक्षुरियं द्राक्षा । से-
यं चारुफलावली ॥ इमे च मोदकास्तुभ्य—मेषु किं पुत्र रोचते ॥ ९६ ॥ त्वं राजा राणक-
स्त्वं च । त्वं दुग्धं त्वं च मे दधि ॥ भज वत्स ममोत्संगं । त्वत्तः किं याच्यतेऽपरं ॥ ९७ ॥
अग्रेऽपि प्रेयसा मुक्तां । मां चेत्त्वमपि मुंचसि ॥ निर्वीराया वराक्या मे । भविता का गति-
स्तदा ॥ ९८ ॥ शृण्वन्मातुर्वचांसीति । निःसंशीति मनाव्रते ॥ गर्भयोगीश्वरो वज्र–कुमारो
ह्यचिंतयत् ॥ ९९ ॥ माता तीर्थकृतां मान्या । माता दुःप्रत्युपक्रियाः ॥ ध्यात्वेति चेन्मया
माता । प्रमाणीक्रियतेऽधुना ॥ १०० ॥ तदा दोष्यते सैष । श्रीमान् संघश्चतुर्विधः ॥ संघ-
स्योल्लंघनेऽनंत—संसारित्वं भवेद् ध्रुवं ॥ १ ॥ मयि व्रतिनि मातापि । कदाचिद्व्रजते व्रतं ॥
एवं तस्यां च स्नेहस्य । रहस्यं दर्शितं भवेत् ॥ २ ॥ यदि तिष्ठामि गार्हस्थ्ये । भूत्वा मातृ-
मुखो द्विधा ॥ तदा स्वस्य च तस्याश्च । नरकोऽभिमुखी कृतः ॥ ३ ॥ इत्यस्य ध्यायतो धैर्य-

कवचो न वज्रोमयैः ॥ मातुः शैरः शरीरस्थो । बालस्यापि व्यजेयत ॥ ४ ॥ तदात्तावसरः सा-
धु–रूचे धनगिरिर्गिरं ॥ शृणु सुंदर मे नास्ति । वस्तु किंचन लोजकृत् ॥५॥ यद्याक्रम्य ज्र-
वारण्यं । यियाससि शिवालयं ॥ सहायमश्लथं तर्हि । धर्मध्वजममुं जज ॥ ६ ॥ रजोहरण-
मालोक्य । हृष्यन्नकृतजावतः ॥ उत्थायास्खलितं धावं–स्तस्मिन् स करमक्षिपत् ॥ ७ ॥
गाढग्रहेण हस्तेनो–पात्तधर्मध्वजोऽर्जकः ॥ अत्येतुं मोहजंबालं । दंकालंबीव सोऽशुजत्
॥ ८ ॥ कृतकृत्य इवानृत्य–न्मौलिस्थेनामुनार्जकः ॥ संघोऽपि जितकाशीव । प्रमोदोत्फुल्ल-
लोचनः ॥ ९ ॥ पुत्रप्राप्तिनिराशाथ । सुनंदा स्वं शशास सा ॥ आत्मन् कोऽयं तव स्नेहो ।
निःस्नेहेऽमुत्र पुत्रके ॥ १० ॥ आशैशवादयं बालः । किल दीक्षां जिघृक्षति ॥ कोऽयं हंत
तवाद्यापि । जववासकदाग्रहः ॥ ११ ॥ ज्रातृजर्तृसुतैः क्षुण्णं । किं न वर्त्म प्रपद्यसे ॥ एका-
किन्याः स्त्रियाः स्थातुं । न प्रायेणौचिती यतः ॥ १२ ॥ इत्यात्तनिश्चया प्राप । सुनंदा मंदि-
रं निजं ॥ वज्रं रत्नमिवादाय । मुनयोऽपि स्वमाश्रमं ॥ १३ ॥ मुनयस्तममुंचंत । शावं श्रा-
वकसद्मसु ॥ तेऽपि तं वर्धयामासु–र्द्रुममारामिका इव ॥ १४ ॥ पठ्यमाना समासन्न–सा-

श्वीजिः प्रतिबिंबिता ॥ एकादशांगी तच्चित्ते । वस्तुछायेव दर्पणे ॥ १५ ॥ सूरयः समये दी-
क्षां । सुनंदायां ददुर्मुदा ॥ प्रव्राज्य वज्रमष्टाब्द—देश्यं सह च निर्ययुः ॥ १६ ॥ अन्यदा-
वंतिदेशांतः । श्रीसूरिषु विहारिषु ॥ ववर्ष वारिदो जेतु—मिव मार्गोद्भवं क्रमं ॥ १७ ॥ त-
दा सुरौकसि क्वापि । स्थितान् वाणिज्यकारकाः ॥ आमंत्रयत केऽपि श्री—सूरीन् जक्तादि-
हेतवे ॥ १८ ॥ शांतप्राये पयोवाहे । तेषां श्रद्धाविवर्धये ॥ प्रचचाल स बालर्षि—र्वज्रो गु-
रुनिदेशतः ॥ १९ ॥ साधुर्विराधनाज्जीरुः । सूक्ष्मान् वीक्ष्य पयोलवान् ॥ न्यवृत्त जलदे शां-
ते । पुनः प्रास्थित तैः सह ॥ २० ॥ आकस्मिकोटजालोका—त्पुरतो जातविस्मयः ॥ निर्नि-
मेषे दृशौ तेषां । वीक्ष्य स क्षुल्लकोऽवदत् ॥ २१ ॥ श्राद्धा न मनुजा यूयं । दनुजा सहनाः
पुनः ॥ ऋषीणां कल्पते नैव । जक्ताजक्तादिकं हि वः ॥ २२ ॥ रूपं मौलमथाहृत्य । त्रिदशा-
स्तं बजाषिरे ॥ वयं व्यधाम वृष्ट्याद्य—मिदं ते सत्त्वमीक्षितुं ॥ २३ ॥ अभूम जृंजकाख्या-
स्ते । प्राग्जवे सुहृदो वयं ॥ इत्युक्त्वा वैक्रियां विद्यां । दत्त्वा वज्राय ते ययुः ॥ २४ ॥ वज्रः
प्रत्यागतः किं तै—रादायीति गुरूदितः ॥ जगवन् देवमायेय—मिति गांजीर्यजूर्जगौ ॥२५॥

तैरेव वाणिजीभूतै—र्देवैर्वज्रर्षिरन्यदा ॥ कुष्मांडीफलदानाय । ज्येष्टे मासि न्यमंत्रयत ॥२६॥
वज्रोऽप्यकांडकुष्मांड—फलावलिविलोकनात् ॥ तान्नाकिनः परिज्ञाय । सर्वं तेषां न्यषेधय-
त् ॥ २७ ॥ प्रीतैरथ सुरैस्तस्य । विद्यादायि वियद्गतिः ॥ न हि मोघश्रमः क्वापि । भवेद्भा-
ग्यधनो जनः ॥ २८ ॥ अधीती पूर्वमंगेषु । मुनिभिः प्रेरितोऽपि सः ॥ धातो भोक्तुमिवाध-
त्त । प्रमादं पठितुं सदा ॥ २९ ॥ यद्यन्मुनिमुखात्तेन । श्रुतं पूर्वगतं श्रुतं ॥ तत्तदग्राहि धी-
रा हि । परारंभफलस्पृशः ॥ ३० ॥ अथोचुः साधवः सूरीन् । पूज्या एष लघुर्मुनिः ॥ आ-
लस्यस्यालयः किंचि—दधीतेऽध्यापितोऽपि न ॥ ३१ ॥ प्राप्तेषु पूज्यपादेषु । यद्येष भविता
जडः ॥ अभिलष्यते लोके त—त्किं दरिद्रः सुरद्रुमं ॥ ३२ ॥ भिक्षां गते मुनिव्राते । बहि-
र्भूमिं गते गुरौ ॥ उपधीन् सर्वसाधूनां । वज्रोऽमेलयदन्यदा ॥३३॥ पार्श्वीकृत्य तान् सर्वा-
न् । स्वयमंतर्निविश्य सः ॥ आरेभे देशनां मेघ—गर्जिगंभीरया गिरा ॥ ३४ ॥ आगुः श्री
गुरवस्तावद् । द्वारे श्रुत्वा च तं ध्वनिं ॥ ध्वनेरेवानुमानेन । जज्ञुर्वज्रविजृंभितं ॥ ३५ ॥ ए-
षो माऽक्षुभदस्माभि—र्बहिरेवेत्यवस्थिताः ॥ दध्युस्तदुक्तिपीयूष—प्रीताः श्रीसूरयो हृदि

॥ ३६ ॥ सुधाधारधरो वाचा । सदाचारशिरोमणिः ॥ शिष्यो यत्रास्त्यसौ दक्षो । जीयाज्जद्रः स मे चिरं ॥ ३७ ॥ अहो अस्य वचःस्फूर्ति—रहो अस्यागमज्ञता ॥ अनेन शिष्यरत्नेन । मम रत्नाकरः करः ॥ ३८ ॥ अथ श्रीगुरवस्तार—स्वरं नैषेधिकीं व्यधुः ॥ साधूनामुपधीन् वज्रः । स्वस्वस्थाने व्यमुंचत ॥ ३९ ॥ उत्थायाज्येत्य चरणौ । श्रीगुरूणां प्रमार्ज्य च ॥ शिष्यः स क्षालयामास । सोल्लासः प्रासुकांजसा ॥ ४० ॥ ततोऽस्य बोधं बालर्षे—र्विद्भिः सूरिभिः स्वयं ॥ शेषान् बोधयितुं साधून् । विहर्तुमुपचक्रमे ॥ ४१ ॥ विहारोपस्थितान् सूरीनयाचन् वाचनागुरून् ॥ स्वस्वानुयोगसंसिद्ध्यै । साधवः प्रस्थितेतराः ॥ ४२ ॥ अयं वज्रकुमारः स्ता—द्भवतां वाचनागुरुः ॥ एतद्गुरुवचः सर्वे । ते तथेति प्रपेदिरे ॥ ४३ ॥ श्रीसूरिषु प्रयातेषु । रचयामासुरासनं ॥ ज्यायांसो यतयस्तस्य । लघोरपि गुरोरिव ॥ ४४ ॥ लघुः स गुरुतां निन्ये । तैः संयुक्तैः पुरः स्थितैः ॥ चित्रं किमत्र सर्वत्र । गणस्थानामियं स्थितिः ॥ ४५ ॥ उच्चासनगतः किंचि—द्दधानश्चिन्मयं महः ॥ तेज्यः शुद्धां स सिद्धांत—वाचनां पटुवाग्ददौ ॥ ४६ ॥ दुर्भेदाः संति ये ग्रंथे । ग्रंथयो गहनाः क्वचित् ॥ ते वज्रवीरवाक्पर्शु—

स्पर्शमप्यसहंत न ॥ ४७ ॥ हृद्दरीस्थं न यत्तेषां । सूरिसूरोऽप्यनाशयत् ॥ वज्रवाग्दीपिका-रौत्सी—स्तत्संदेहतमः सुखं ॥ ४८ ॥ दृष्ट्वा तद्वाचनाशक्तिं । ते दध्युरिति साधवः ॥ बालोऽयं श्रुतदेवी किं । किमुत श्रुतकेवली ॥ ४९ ॥ आराध्यमानः सिद्धांतो । यद्यस्मासु प्रसीदति ॥ पूरयंतु बहिः श्राद्ध—श्रद्धां श्रीगुरवस्तदा ॥ ५० ॥ इयता वज्रमहिमा । मुनिज्ञातो भविष्यति ॥ इति व्यावृत्त्य तत्रागुः । श्रीसिंहगिरिसूरयः ॥ ५१ ॥ नमंतोऽनंतया भक्त्या । गुरुभिस्ते महर्षयः ॥ वाचनोदंतमापृष्टा । योजितांजलयो जगुः ॥ ५२ ॥ पूज्या वज्रकुमारेऽस्मिन् । वाचनादानदक्षिणे ॥ एक्षिष्महि परं पारं । श्रुतांभोधेः सुखं वयं ॥ ५३ ॥ बालोऽलसोऽयमित्यस्मि-न्नवज्ञां यदकृष्महि ॥ तस्याज्ञानिकपापस्य । मिथ्यादुःकृतमस्तु नः ॥५४॥ ततो द्विगुणितोत्साहाः । श्रीसिंहगिरिसूरयः ॥ स्वमुखेन ददुर्वज्र—ऋषेरागमवाचनां ॥५५॥ यथा ज्ञातानि पूर्वाणि । गुरवोऽवगमय्य तं ॥ पुरं दशपुरं प्रापु—र्दशदिग्जनतानताः ॥५६॥ गुरवो वज्रमालिंग्य । तत्र सस्नेहमूचिरे ॥ वत्स प्रवचने तत्त्वं । पूर्वाण्येव चतुर्दश ॥ ५७ ॥ तेषामंत्यानि चत्वारि । स्थूलभद्रमुनिद्रुमे ॥ श्रीवीराच्चिरसंचार—श्रांतानीवावलस्थिरे ॥५८॥

कालेऽस्मिन् दशपूर्व्यस्ति । संपूर्णा सा च वर्तते ॥ भद्रगुप्तगुरौ संप्र—त्युज्जयिन्यामवस्थिते
॥ ५९ ॥ गत्वावंतीं गुरोस्तस्मा—द्दशपूर्वीमुरीकुरु ॥ इत्यादेशाद्गुरोरासी—दसौ तत्पठनोन्म-
नाः ॥ ६० ॥ युक्तो द्वाभ्यां मुनींद्राभ्यां । प्रतस्थे प्रत्यवंति सः ॥ मराल इव पक्षाभ्यां । प्र-
तिमानसमुत्सुकः ॥ ६१ ॥ श्रुतलाभाशया पृष्ट—वात्ययेव समीरितः ॥ क्रमादवंतीं स प्रा-
प । बहिरेवावसन्निशि ॥ ६२ ॥ भद्रगुप्तः गुरुस्तस्यां । निशि स्वप्ने व्यलोकत ॥ पीतं सिंह-
किशोरेण । पयःपूर्णं पतद्ग्रहं ॥ ६३ ॥ अप्रमत्तो मुनिर्मत्तो—ऽध्येता पूर्वाणि यो दश ॥ द-
शदिक्प्रथितप्रज्ञः । समेताद्य स कश्चन ॥ ६४ ॥ एवं स्वप्नफलं सूरिः । साधूनां जल्पति प्र-
गे ॥ यावत्तावन्मुनिर्वज्रो ।-द्वारि नैषेधिकीं व्यधात् ॥ ६५ ॥ प्रविशंतं तमालोक्य । लोच-
नानंदनं मुनिं ॥ मत्स्वप्नफलदो ह्येष । स एवेति गुरुर्जगौ ॥ ६६ ॥ सानंदं वंदमानं त—मु-
त्थाप्य प्रणयोज्ज्वलः ॥ रोमहर्षी महर्षीशः । पप्रछ स्वागतादिकं ॥ ६७ ॥ विहारकारणं पृ-
ष्टो । गुरुं वज्रो व्यजिज्ञपत् ॥ गुर्वाज्ञयाहमध्येतुं । दशपूर्वीमिहागमं ॥ ६८ ॥ दृष्ट्वा तस्यादरं
हर्ष—पूरितः सूरिरालपत् ॥ जागर्त्यद्यापि मे भाग्यं । भवादृक्पात्रलाभतः ॥६९॥ अभक्ताः

केऽपि निःप्रज्ञाः । केऽपि केऽपि तथालसाः ॥ शिष्यः सर्वगुणो नाग्यै–रेव संपद्यते गुरोः ॥७०॥ विक्रियाकारि मंदाग्नौ । सुस्निग्धं नोजनं यथा ॥ तथाधिकविकाराय । कुपात्रे निहितं श्रुतं ॥ ७१ ॥ दशपूर्वेऽव्यवच्छित्ति—चिंतासंतापिते हृदि ॥ सुधाश्रोतायते वत्स । त्वदालोकोऽयमद्य मे ॥ ७२ ॥ इति प्रीत्या तमालाप्य । तथा गुरुरपीपठत् ॥ नटीव तन्मनोरंगे । दशपूर्वी यथास्फुरत् ॥ ७३ ॥ सिद्धसाध्यो गुरुं नत्वा । गतो दशपुरं पुनः ॥ वज्रसाधुरवंदिष्ट । श्रीमत्सिंहगिरिं गुरुं ॥ ७४ ॥ पूर्वानुज्ञां ददुर्वज्र—मुनींद्रायाथ सूरयः ॥ अतुच्छानुत्सवांश्चक्रुस्ते जृंनकसुरास्तदा ॥ ७५ ॥ वज्रे गणधरं न्यस्य । गृहीतानशना ययुः ॥ सद्ध्यानादामरं धाम । श्रीसिंहगिरिसूरयः ॥ ७६ ॥ श्रीमान् वज्रगुरुर्युक्तो । यतीनां पंचभिः शतैः ॥ विहरन् नुवि सीमोऽनू—न्नाग्यसौनाग्यशालिनां ॥ ७७ ॥ वज्रो जातु न तत्याज । नुवि नित्यविहारितां ॥ गुणास्तस्य पुनश्चक्रुः । स्थिरवासं नृणां हृदि ॥ ७८ ॥ अतिस्थूलापि तत्कीर्ति—र्बंभ्राम सकलां नुवं ॥ व्योमगामिनिजस्वामि—गुणादिव गतश्रमा ॥ ७९ ॥

इतश्च पाटलीपुत्रे । बभूवेन्यो धनो धनी ॥ सर्वसीमंतिनीसीमा । कन्यासीत्तस्य रु-

क्मिणी ॥ ७० ॥ आसन्नयानशालास्थ—साध्वीनिर्वर्णितोऽनिशं ॥ वज्रस्वामिगुणश्रेणी । रु-
क्मिण्याश्रावि नावतः ॥ ७१ ॥ ग्राहं ग्राहं गुणग्रामं । गुरोः साध्वीजनाननात् ॥ बाला बि-
नाय न गुरु—द्रव्यसंग्रहतोऽपि सा ॥७२॥ ऊचे महासती साथ । मन्मथव्यथिताशया ॥
किं हृतं मन्मनः स्तैन्य—वर्जिना वज्रसूरिणा ॥ ७३ ॥ यद्वा मम पतिर्भावी । सोऽवश्यम-
चिरादपि ॥ स्वामी हरति सर्वस्वं । यदि तत्किमु कथ्यते ॥ ७४ ॥ व्रतिन्यो वीक्ष्य तां जा-
त—कामां कामांतके गुरौ ॥ अनंगरंगभंगाय । प्रगल्भां वाचमूचिरे ॥ ७५ ॥ मुग्धाशये मु-
धा जात—स्तव कोऽयं कदाग्रहः ॥ अजिह्मब्रह्मचारी हि । वज्रः स्त्रीषु पराङ्मुखः ॥ ७६ ॥
नाग्रहीत्परमब्रह्म—लीनमाजन्म तन्मनः ॥ मीनमंभोधिमध्यस्थं । बकोट इव मन्मथः ॥७७॥
इति श्रुत्वाप्यमुंचंती । स्वाभिप्रायमुवाच सा ॥ श्रीवज्रमंतरेणाहं । प्रपद्ये नापरं वरं ॥ ७८ ॥
पितरावपि जामातृ—चिंताजंबालपातिनौ ॥ स्वाभिप्रायप्रथाहस्ता-वलंबेनोद्दधार सा ॥७९॥
अथ वज्रगुरुः श्रीमान् । विहरन्नवनीतले ॥ कदाचन तदेवागा—न्नगरं गरिमावधिः ॥ ८० ॥
पुरीपरिसरायातं । सूरिं श्रुत्वावनीविभुः ॥ अभ्यगाद्वंदनोत्कंठा—कुंठिताध्वपरिश्रमः ॥८१॥

पुरस्तेन पुरस्तेन । जयिनेव स्फुरद्द्युतः ॥ समायांतो व्यलोकयंत । मुनयो गणशः पथि ॥९२॥ सर्वेऽप्यमी स्फुरद्रूप—शोभासंभारभासुराः ॥ अमीषु कतमो वज्र—स्वामी यः प्राक् प्रणम्यते ॥ ९३ ॥ एवं संदेहतः साप—त्रपं तानेव पृच्छति ॥ श्रीवज्रं दर्शयामासु—र्मुनीशा अवनीशितुः ॥ ९४ ॥ अथ यूथेशवद्यूथं । व्रतिव्रातं विहारयन् ॥ वहन्महः सहस्रांशु—मंडलेनाप्यचुंबितं ॥ ९५ ॥ तन्वन्निजपदन्यासैः । स्थलांभोजभ्रमं नृणां ॥ नृपेणावंदि पुरतः । सुनंदानंदनो गुरुः ॥ ९६ ॥ युग्मं ॥ क्षोभः पौरपुरंध्रीणां । मम रूपेण माभवत् ॥ इति स्वं वामनीकृत्य । वज्रो वनमशिश्रियत् ॥ ९७ ॥ तत्र प्रासुकभूभागे । स्थितश्चक्रे स देशनां ॥ सभां निभाल्य भूपादि—भविभिर्निभृतं भृतां ॥ ९८ ॥ तथा प्रथामगुर्वज्र—वचनामृतवीचयः ॥ स्नानं सुरसरस्वत्यां । जनो मेने यथा वृथा ॥ ९९ ॥ दर्शं दर्शं च तद्रूपं । श्रावं श्रावं च तद्वचः ॥ दृशौ खिन्ने श्रुती हृष्टे । न हि कस्य सभासदः ॥ २०० ॥ देशनानंतरं भूमिविभुः स्वभवनं ययौ ॥ पौराः पुरं प्रयांतश्च । प्रोचुरेवं परस्परं ॥ १ ॥ गुणक्षीरोदधौ वज्र—स्वामिन्यत्र समागते ॥ अहो अद्यापि नास्माकं । नेत्रयोस्त्रुटत्तृषा ॥ २ ॥ अगंधं कनकं सां-

कुर्वन् वज्रं कुरूपं च । रत्नद्वेषी ध्रुवं विधिः ॥ ३ ॥ यथा प्रज्ञा
कं । विधुं क्षारं पयोनिधिं ॥ तथा वज्रेऽत्र किं रूपं । विदधे न विधे त्वया ॥ ४ ॥
यथा वाणी । यथाचारो यथा यशः ॥ वज्रस्वामी द्वितीयेऽह्नि । शिश्रिये रूपमाद्मिं
एवमालोक्य लोकस्य । दुःखं निजकुरूपजं ॥ साधुर्मधुरया वाचा । वितेने धर्मदे-
॥ ५ ॥ जातरूपमये जात—रूपः पद्मे निविश्य सः ॥ वंदनोत्कलिकां दध्नु—रंतःपुर-
शनां ॥ ६ ॥ श्रुत्वा भूपमुखाद्वज्र—स्वामिनो गुणसंकथां ॥ वज्रं प्रणम्य तद्वाग्भिः । प्रापुः
पुरंध्रयः ॥ ७ ॥ अथ प्रौढरथारूढा—स्ता नरेशनिदेशतः ॥ तद्रूपं गुरुणाधारि ।
पीयूषपारणां ॥ ८ ॥ रूपं निरीक्ष्य वज्रस्य । मुख्यं लोको व्यचिंतयत् ॥ ऊचे तात-
नूनं स्त्रीक्षोभभीरुणा ॥ ९ ॥ तदा च रुक्मिणी मुक्त्वा । स्वार्थविघ्नकरीं त्रपां ॥ कस्मैचन गुणाब्ध-
मिहायातः । स मे प्राक् प्रार्थितो वरः ॥ १० ॥ देहि मामधुना तस्मै । धनेनाथ सुवर्णौघ—सहिता दु-
ये ॥ न हि कृच्छ्रेण लब्धेऽर्थे । युक्तः कर्तुमनादरः ॥ ११ ॥ ऊचे च प्रांजलीभूय ।
हिता निजा ॥ श्रीवज्रस्वामिनोऽभ्यर्ण—मुपनिन्ये स्वयंवरा ॥ १२ ॥ धनकोटीरिमाः
भगवन् कन्यकामिमां ॥ अंगीकुरु कृपागार । चिरादुत्कंठिता त्वयि ॥ १३ ॥

पाणि—मोचने त्वमवाप्स्यसि ॥ एवं च लब्धधर्मोऽर्थ—कामावप्यधिगच्छसि ॥ १४ ॥ तम-
ज्ञानतया यत्त—द्भव्यं वीक्ष्य गुरुर्जगौ ॥ सविवेकः पुमानेक—भार्ययैव सुखी भवेत् ॥१५॥
प्रागप्येकास्ति मे पत्नी । तदेनामाद्रिये कथं ॥ सा च सर्वगुणैः पूर्णा । नेयं तादृग्गुणालया
॥ १६ ॥ सादायि गुरुणा सिंह—गिरिणात्याग्रहेण मे ॥ महायत्नान्नृपाध्यक्षं । पर्यणायि च
सा मया ॥ १७ ॥ तत्प्रसादादहं प्रापं । दशपूर्वावधि श्रुतं ॥ वैक्रियाद्याश्च सद्धयाः । पूजां
नरसुरेषु च ॥ १८ ॥ औषधिर्विषमव्याधि—मुख्यदुःखौघनाशिनी ॥ सा च स्वर्गादिसौख्या-
नां । दीपिकेव प्रकाशिनी ॥ १९ ॥ परिणीतः पुमान् पत्न्याः । पुण्यैरुदयभाग्भवेत् ॥ इत्या-
गमवचः सौम्य । मयि संगच्छतेऽखिलं ॥ २० ॥ असंस्कारापि सा रम्या । त्यक्तस्नानापि नि-
र्मला ॥ अभूषणापि सश्रीका । पुराणापि मनःप्रिया ॥ २१ ॥ सतीदृशे कलत्रेऽपि । यद्यन्यां
स्वीकरोम्यहं ॥ यशोधर्मप्रतिष्ठाभ्य—स्तदा हीये न संशयः ॥ २२ ॥ तथाप्याशां विधायै-
षा । सुता चेदागता वयं ॥ तस्याः सहचरीभूय । तन्ममाप्यस्तु वल्लभा ॥ २३ ॥ सा किं सु-
भग पार्श्वे ते । दृश्यते नेति जल्पितं ॥ धनं जगाद सूरींदु—र्विद्धि तां संयमश्रियं ॥ २४ ॥

रज्यद्दशा स्पृशामोऽपि । मुनयो न वयं स्त्रियं ॥ सति धर्मधने धीम—न्नान्यदीहामहे धनं
॥ २५ ॥ वत्से तवापि नो भेक—चित्ताया विषयस्पृहा ॥ वरलाया विवेकिन्याः । पंच-
केलिरिवोचिता ॥ २६ ॥ श्रुत्वेति विगलन्मोहा—नुज्ञाप्य पितरौ निजौ ॥ प्रपेदे रुक्मि-
णी पुण्य—स्वन्नावा संयमश्रियं ॥ २७ ॥ लोकं संस्थाप्य धर्मेऽथ । विहरन्नवनौ गुरुः ॥ म-
हापरिज्ञाध्ययना—त्प्राप विद्यां खगामिनीं ॥ २८ ॥ आमानुषोत्तरनगं । याम्यहं विद्ययान-
या ॥ कस्मैचिन्न च देयासौ । शिष्यायाल्पधिये कलौ ॥ २९ ॥ इत्युक्त्वाध्ययनं तच्चा—चा-
रांगादुदसारयत् ॥ दुर्विनीतेषु पुत्रेषु । पिता निधिमिवालयात् ॥ ३० ॥ अन्यदा नगवत्य-
स्मिन् । विचरत्युत्तरां दिशं ॥ नृशं बभूव दुर्भिक्ष—मिव मूर्त्यंतरं कलेः ॥ ३१ ॥ यत्र प्रपंचो
मिथ्येति । पक्षो वेदांतिनां जयी ॥ नित्यवादस्तु संख्यानां । स्वयमेव व्यलीयत ॥ ३२ ॥ आ-
ज्ञांगं प्रनोर्वीक्ष्य । श्रीमतां नोजनक्षणे ॥ यत्र रंकाः कलिं चक्रुः । दुष्कालस्य सुसेवकाः
॥ ३३ ॥ पूर्वं न लेनिरे लब्धं । यत्र कष्टं ततायिरे ॥ रंकेन्यो निक्षवो नैक्ष्यं । विषयेन्य इ-
व व्रतं ॥ ३४ ॥ संघं सीदंतमालोक्य । दुर्भिक्षे वज्रसूरिणा ॥ पटो व्यक्रीयत स्वीय—यशो-

राशिरिवोज्ज्वलः ॥ ३५ ॥ निविष्टस्तत्र सोऽशेष—मृषिसंघमतिष्टपत् ॥ उत्पपात पटः संघ—
भक्त्या सिद्ध इवांबरं ॥ ३६ ॥ तावद्दत्ताभिधः शय्या—तरश्चाद्रुः समागतः ॥ गोचराच्चारि-
मादाय । व्योम्नि तं पटमैक्षत ॥३७॥ शून्यं चाश्रयमालोक्य । ज्ञात्वा दुर्भिक्षहेतुकं ॥ साधु-
प्रस्थानमुत्त्वाय । केशानाकाशदृग्जगौ ॥ ३८ ॥ चिरात्परिचितं श्राद्धं । संप्रत्युत्खातमूर्धजं ॥
मां मुक्त्वेदृशि डुष्काले । स्वामिन् किं गंतुमर्हसि ॥ ३९ ॥ श्रुत्वा तस्य गिरां दीनां । दया-
लुः सूरिपुंगवः ॥ तमप्यारोपयामास । पटं न ह्यत्र संकटं ॥ ४० ॥ ययौ पटः पुरीं नाग—
पुरीमविपरीतरुक् ॥ किंमिडुर्व्योम्नि एतीति । पौरैः साश्चर्यमीक्षितः ॥ ४१ ॥ तीर्त्वा नद्योऽ-
ब्धिमायाता—त्पोतादिव नियामकः ॥ पटात् श्रीसंघमुत्तार्य । तस्थौ तत्र गुरुश्चिरं ॥ ४२ ॥
तत्र बौधप्रियो राजा । नागरा अपि तादृशाः ॥ व्यवदंत प्रतिपदं । पुरापि सममार्हतैः ॥४३॥
तत्तत्कार्येषु तैर्जैना । नानल्पैरप्यधः कृताः ॥ पराजयंति पारींद्रं । किरयो लक्षशोऽपि किं
॥ ४४ ॥ अथ पर्युषणानाम्नि । प्रत्यासीदति पर्वणि ॥ व्यजिज्ञपन्नृपं सर्वे । नागरा द्वेषसा-
गराः ॥ ४५ ॥ गुरुरत्रास्ति जैनानां । पर्व चैषामुपागतं ॥ ततो नामापि बौद्धाना—मुच्छेत्स्यं-

स्युत्सवैरमी ॥ ४६ ॥ पौरा राजाज्ञया माला—कारानित्यालपंस्ततः ॥ जैनानां द्रव्यलोभेऽपि । पुष्पं देयं न केनचित् ॥ ४७ ॥ सर्वे श्याममुखाः क्षाम—सुखा धाम रुषामथ ॥ श्राद्धा विज्ञापयामासुः । श्रीवज्रस्वामिनं मुनिं ॥ ४८ ॥ बौद्धैः पुष्पाण्यवार्यंत । हंत राजबलेन नः ॥ पुष्पैर्विना प्रभो नावि । विरंगं पर्व सर्वथा ॥ ४९ ॥ माणिक्यैः केऽपि सौवर्णैः । पुष्पैः केऽपि जिनार्चनं ॥ कुर्मो न तैरसौरभ्यैः । समाधिः पूर्यते पुनः ॥ ५० ॥ अपुत्रः कृत्रिमैः पुत्रै—रधनः कृत्रिमैर्धनैः ॥ अनेत्रः कृत्रिमैर्नेत्रैः । समाधीयेत कोऽपि किं ॥ ५१ ॥ त्वयि सत्यपि सूरे चे—त्परिभूयामहे परैः ॥ सिंधुरस्कंधमारूढा—स्तदा श्वभिरभिद्रुताः ॥ ५२ ॥ तदार्त्तिसिंधुतः संघं । लब्धिसिद्ध समुद्धर ॥ तैरित्युक्ते गुरुर्गौर—गौरवां वाचमाददे ॥ ५३ ॥ हे समाधत्त मा धत्त । चित्तक्लेशं मनागपि ॥ पुष्पाणि पूरयिष्येऽहं । समं युष्मन्मनोरथैः ॥५४॥ तीर्थोन्नत्यकृता चिंत्या । साधुना न विराधना ॥ विराधनापि सम्यक्त्व—शुद्धैः सा स्यान्निबंधनं ॥५५॥ इत्युदित्वा गुरुर्व्योम्ना—ययौ माहेश्वरीं पुरीं ॥ अधिष्ठितेऽग्निदेवेनो—पवने प्रविवेश च ॥ ५६ ॥ मित्रं धनगिरेस्तत्र । तद्भितो देवसेवकः ॥ वीक्ष्य वज्रं समायात—मभ्यधावत ना-

व्रतः ॥ ५७ ॥ ऊचे च भाग्यवानस्मि । पूज्या युष्मन्निरीक्षणात् ॥ सहसागमने हेतुं । मां
श्रावयत सत्वरं ॥ ५८ ॥ सत्वाढ्य त्वामुपेताः स्म । कुसुमस्पृहया वयं ॥ इत्युक्ते गुरुणावा-
दी—द्भक्तितो योजितांजलिः ॥ ५९ ॥ पुष्पाणां विंशतिर्लक्षाः । प्रत्यक्षा भगवन्नमूः ॥ उच्चि-
ता अग्निपूजार्थं । गृहीत्वानुगृहाण मां ॥ ६० ॥ वीक्ष्य कल्प्यानि पुष्पाणि । प्रीणितात्मा
गुरुर्जगौ ॥ तावत्प्रतीक्ष्यतां याव—द्देश्यो भाजनमानये ॥ ६१ ॥ तद्भक्तिस्य तद्भिद्भ्रांतिं ।
जनयन् गगनाध्वना ॥ ययावथ गुरुः क्षुल्ल—हिमवंतं महीधरं ॥ ६२ ॥ पूर्वापरपयोधिस्पृ-
ग् । योजनान्युच्छ्रितः शतं ॥ यः सहस्रं द्विपंचाश—दधिकं व्यासतः स्मृतः ॥ ६३ ॥ तस्यो-
परि ह्रदः पद्मो—ऽवगाहे दशयोजनः ॥ सहस्रयोजनायाम—स्तदर्धं पृथुलो ध्रुवं ॥ ६४ ॥
तत्र शाश्वतपद्मानां । कोटी लक्षाश्च विंशतिः ॥ पंचाशच्च सहस्राणि । विंशत्याभ्यधिकं शतं
॥ ६५ ॥ तेषु तामरसं मुख्यं । जलाद् द्विक्रोशमुच्छ्रितं ॥ तावत्पिंडं चतुःक्रोश—विष्कंभा-
यामभासुरं ॥ ६६ ॥ द्विक्रोशायामविष्कंभ—कर्णिकोपरिमंदिरं ॥ क्रोशायामार्धविस्तारं ।
तत्रोनं क्रोशमुच्छ्रितं ॥ ६७ ॥ वसंती तत्र देवी श्री—स्तदानीं कृतमज्जना ॥ जिनार्चनार्थमु-

च्चिक्ये । जलजान्यध्रुवाणि सा ॥ ६७ ॥ पद्मा पद्मानना पद्म—हस्ता निरब्धभक्तिभाक् ॥
यांती जिनालयं वज्र—स्वामिनं मुदितानमत् ॥ ६९ ॥ सा जगौ हिमवानेष । प्रभो महि-
मवानभूत् ॥ स्वपदैस्त्वं यमप्राक्षीः । सर्वातिशयशालिभिः ॥ ७० ॥ वज्रेण याचिता पद्मं ।
पद्मा सद्यस्तदार्पयत् ॥ आससाद तदादाय । पुनर्वह्निवनं गुरुः ॥ ७१ ॥ पुष्पाणि पंकजे तत्र ।
न्यस्य पत्राणि मेलयन् ॥ निविष्टस्तदधोभागे । ववले च नभोऽध्वना ॥ ७२ ॥ तत्पुरो जृंभका
देवा । अकुर्वन् केऽपि नाटकं ॥ सलीलं केऽप्यगायंश्च । केचिद्वाद्यानताडयन् ॥ ७३ ॥ किमे-
तदिति साकूतै—र्दृष्टो जानपदैर्जनैः ॥ श्रीवज्रः सपरीवारः । पुरीमाप महापुरीं ॥ ७४ ॥ एष
लेखगणोऽस्माकं । विहारेषु समेत्यहो ॥ शृण्वन्निति स बौद्धोक्तिं । जिनचैत्येष्ववातरत् ॥७५॥
तद् ज्ञात्वा मुक्तदीर्घोष्ण—निःश्वासश्रेणिलूकया ॥ प्रावर्त्यंत निदाघर्तु—र्वर्षाकालेऽपि सौ-
गतैः ॥ ७६ ॥ वज्रादादाय पुष्पाणि । श्राद्धसंघो यथारुचि ॥ जिनपूजाभिलाषं स्वं । सविशे-
षमपूरयत् ॥ ७७ ॥ तमालोक्य चमत्कारं । भूपतिस्त्यक्तमत्सरः ॥ क्षमयित्वा गुरून् जैनी—
माज्ञां मूर्धन्यवतंसयत् ॥ ७८ ॥

इतश्चासीद्दशपुरे । सोमदेव इति द्विजः ॥ रुद्रसोमा च तत्पत्नी । जिनधर्मैककर्मठा
॥ ७९ ॥ तस्याजूतां सुतावार्य—फल्गुरक्षितनामकौ ॥ तौ द्वावपि यथा ज्ञाता । विद्याः सं-
प्रापतुः पितुः ॥ ८० ॥ अग्रजन्माथ निःशेष—विद्याग्रहणकौतुकी ॥ जगाम पाटलीपुत्रं । र-
त्नेब्बुरिव रोहणं ॥ ८१ ॥ सुधीरधीत्य तत्रान—वद्या विद्या चतुर्दश ॥ पुनर्दशपुरं प्राप । किं
दूरमजियोगिनां ॥ ८२ ॥ तं पुरोपवनोपेतं । भूमानन्नियो स्वयं ॥ महद्ध्यां कारयामास ।
तत्प्रवेशमहोत्सवं ॥ ८३ ॥ अथार्यरक्षितस्तात—मायातः स्वालयं नमन् ॥ सविद्योऽतोषय-
न्मेघ । इव नीरजृतो जनं ॥ ८४ ॥ मिलनायागतैः पौरै—श्चक्रे प्राभृतपाणिनिः ॥ विशाल-
मपि तस्योकः । संकीर्णं हृदिव श्रुतेः ॥ ८५ ॥ शांते लोकागमे स्वस्थः । सोऽनंसीज्जननीम-
थ ॥ उदासीनेव तस्मै सा । निविष्टैवाशिषं ददौ ॥ ८६ ॥ वैलक्ष्यं लक्षयन्मातुः । स पप्रच्छ
विचक्षणः ॥ चिराद् दृष्टमपि प्राप्त—सद्विद्ये खिद्यसे च किं ॥ ८७ ॥ यदयं रंजितो राजा ।
यदयं रंजितो जनः ॥ तत्सर्वं फल्गु मन्येऽह—मस्नेहं चेन्मनस्तव ॥ ८८ ॥ सर्वविद्यास्वधी-
तासु । चेद्भक्तिस्ते न शिक्षिता ॥ तदा पठितमूर्खोऽस्मि । लोकैर्गीये मुधा बुधः ॥ ८९ ॥ त-

न्ममादिश तन्मात—र्येन त्वं प्रीयसे हृदि ॥ एवं तस्यादरं दृष्ट्वा । जननी प्रांजलालपत्
॥ ८० ॥ अधीतवान् नवान् वेदान् । शाकिनीमंत्रसोदरान् ॥ संतोष्येऽहं कथं वत्स । तैर्हिं-
साबुद्धिहेतुभिः ॥ ८१ ॥ आप्तरागो यथायाति । कोऽपि देशांतराच्चिरात् ॥ त्वं विनीत तथा-
धीत—कुशास्त्रो मिलितोऽसि मे ॥ ८२ ॥ वह्नौ विशतु सा विद्या । श्वभ्रं सा यातु चातुरी ॥
गुणाः पतंतु ते कूपे । जंतुघातो भवेद्यतः ॥ ८३ ॥ तत्वार्थबहुलं दृष्टि-वादमध्येष्यसे यदा ॥
तदा नंदयसि मां पुत्र । परमप्रीतिशालिनीं ॥ ८४ ॥ कस्तस्याध्यापको मे स्या—दिति तेन
निवेदिते ॥ कुर्वतीं न्युंछनं वक्त्रां—चलेनोच्चे द्विजप्रिया ॥ ८५ ॥ सूरिस्तोसलिपुत्रोऽस्ति ।
तत्रैवेक्षुवणेऽधुना ॥ अधीयिष्यास्ततो दृष्टि—वादमादरतः सुत ॥ ८६ ॥ सोऽतीत्य दिवसं
तत्र । निशि सुप्तो व्यचिंतयत् ॥ दृष्टिवादस्य नामापि । तावत् श्रुतिसुखावहं ॥ ८७ ॥ कदा
विज्ञातं भविता । कदाध्येतास्मि तत् श्रुतं ॥ इति चिंतास्य कांतेव । निद्रासुखमवारयत् ॥८८॥
निशाशेषे समुत्थाय । व्रजन्निक्षुवणंप्रति ॥ पथि कोऽसीति केनापि । पृष्टः स स्वं न्यवेदयत्
॥ ८९ ॥ इक्षुदंडान्नवाध्यर्धान् । ढौकयित्वेत्युवाच सः ॥ शाखापुरात्तव पितु—र्मित्रं त्वां द्र-

७५० ष्टुमागमं ॥ ३०० ॥ अध्येष्ये दृष्टिवादस्य । निःशंकं शकुनादतः ॥ नवसार्धानधिकारान् । वि-
चचारेति रक्षितः ॥ १ ॥ ऊचे च तमिमान्मातु—रुक्त्वा मद्बुद्धिमर्पयेः ॥ अहं कार्ये व्रजन्न-
चिंता- स्मि । ततः सोऽपि तथाकरोत् ॥ २ ॥ मातापि पुत्रवद्दध्यौ । पुत्रस्त्विक्षुवणं गतः ॥ विममर्श
७२७ कथं वंद्या । गुरवोऽमी गुणाब्धयः ॥ ३ ॥ श्राद्धः कोऽप्यत्र यद्येति । तदा तदनुवर्तनात् ॥ म-
येषां क्रियते भक्ति—रित्यसौ तस्थिवान् रहः ॥ ४ ॥ श्राद्धो गाढगिरा प्राप्त—ढड्डराख्यस्त-
दागतः ॥ कृत्वा नैषेधिकीस्तिस्रः । सूरेरभ्यासमासदत् ॥ ५ ॥ स्वरेण ढड्डरेणेर्यां । प्रतिक्रम्य
गुरोः पुरः ॥ प्रदत्तद्वादशावर्त—वंदनः स निविष्टवान् ॥ ६ ॥ संगृह्य स्थिरधीः सर्वं । चेष्टितं
तस्य रक्षितः ॥ गुर्वंतिकं गतो भक्तिं । ढड्डरश्राद्धवद्व्यधात् ॥ ७ ॥ अवंदित्वैव तं श्राद्धं । नि-
विष्टं विष्टरे पुनः ॥ नव्योऽयं श्रावकः कश्चि—न्निश्चिकायेति तं गुरुः ॥ ८ ॥ धर्माप्तिः सौम्य
ते कस्मा—दिति पृच्छति सद्गुरौ ॥ तमेव दर्शयामास । स श्राद्धं ढड्डराभिधं ॥ ९ ॥ अभा-
षत च पूज्या मां । सोमदेवद्विजांगजं ॥ अध्येतुमागतं दृष्टि—वादं भाणयतादृताः ॥ १० ॥
बभाण भागिनेयं तं । सूरिः सुस्निग्धया गिरा ॥ नादीक्षिते वयं वत्स । दृष्टिवादं निदध्महे

॥ ११ ॥ सोऽभ्यधात्तर्हि मे दीक्षां । दत्त प्रचलत द्रुतं ॥ अत्र स्थितस्य मा भूमान् । व्रतवि-
घ्नं करोतु मे ॥ १२ ॥ रक्षितं दीक्षयित्वाथ । विजह्रारान्यतो गुरुः ॥ तदाभूत्प्रथमारंभः ।
शिष्यचौर्यस्य शासने ॥ १३ ॥ अंगान्यधिजगे प्राज्ञो–ऽप्येकादशापि सः ॥ यावद्वेद गुरोर्दृ-
ष्टि—वादमप्यादरी मुनिः ॥ १४ ॥ संपूर्णं दृष्टिवादं सो—ऽधिजिगासुर्धियां निधिः ॥ गुर्वा-
ज्ञयाचलद्वज्र—स्वामिपूतां पुरींप्रति ॥ १५ ॥ अवंतीं प्राप्य सोऽनंसी–द्भद्रगुप्तमुनिंप्रति ॥ पृ-
ष्टस्तेन स्वविहार–कारणं चाभ्यधाद् बुधः ॥ १६ ॥ तमार्यरक्षितं ज्ञात्वा । बाहुभ्यां परिरभ्य
च ॥ गुरुः सगौरवं प्रोचे । पुण्यैस्त्वं मिलितोऽसि मे ॥ १७ ॥ गृहीष्येऽनशनं वत्स । क्षीणजं-
घाबलोऽधुना ॥ कारय त्वमिह स्थित्वा । पर्यंताराधनां मम ॥ १८ ॥ कोटिपात्रसमासेऽव्ये ।
संसारांभोधितारके ॥ ततोऽनशनपोतेऽस्य । स निर्यामकतां ययौ ॥ १९ ॥ त्वं च तत्र गतो
वज्रा–त्स्थितः पृथगुपाश्रये ॥ पठेरित्यन्वशादेवं । गृहीतानशनो गुरुः ॥ २० ॥ ॐमिति प्रति-
पद्यासौ । सौरींद्रौ त्रिदिवं गते ॥ विहारनिरतः प्राप । सायं मुनिवरः पुरीं ॥ २१ ॥ तस्यां
प्रज्ञातप्रायायां । निशि वज्रगुरुः स्वकं ॥ बहुपीतं पयःपात्रं । स्वप्ने केनचिदैक्षत ॥ २२ ॥ स-

७५०
चिंता-
७३०

मेष्यति स कोऽप्यद्य । शिष्यो यः क्षोभवर्जितः ॥ किंचिदूनानि पूर्वाणि । दश मत्तो ग्रही-
ष्यति ॥२३॥ इति जल्पति सूरींद्रे । भिक्षौकःस्थापितोपधिः ॥ रक्षितो हर्षितोऽभ्येत्य । वज्रा-
चार्यमवंदत ॥ २४ ॥ ऊचे चाध्येतुकामोऽहं । दशपूर्वीमिहागमं ॥ अस्थां च भिक्षवसतौ ।
भद्रगुप्तगुरोर्गिरा ॥ २५ ॥ दध्यौ वज्रगुरुः स्वांते । मन्ये बुद्ध्वा महाधियः ॥ यद्भद्रगुप्तसूरींदु-
रस्मै शिक्षामिमामदात् ॥ २६ ॥ यन्मया सह मंडल्यां । भुंक्ते सकृदपीह यः ॥ मत्सौभाग्य-
गुणाकृष्टो । म्रियते स मया सह ॥ २७ ॥ रक्षितो नवपूर्वाणि । वज्राणाथ पृथक् स्थितः ॥
यमकान् दशमस्यापि । यावदध्येतुमुद्यतः ॥ २८ ॥ तावदाह्वानसंदेशाः । पित्रोरीयुः परःशताः
॥ स तैर्यदा न चुक्षोभ । तदागात्फल्गुरक्षितः ॥ २९ ॥ गाढमाकारितस्तेन । स पप्रच्छ गुरुं
रहः ॥ गुरुणापि पठेदानी—मित्युक्त्वारक्षि रक्षितः ॥ ३१ ॥ एकतश्च गुरोराज्ञा—न्यतश्च
स्वजनाग्रहः ॥ एवं दोलाधिरूढात्मा । कियदप्यपठन्मुनिः ॥ ३२ ॥ अन्नाणि फल्गुना भ्रातः ।
केयं निष्ठुरता तव ॥ विलंब्यते यदत्रैवं । पित्रोस्त्वद्दर्शनोत्कयोः ॥ ३३ ॥ दिदृक्षते क्षितेर्भ-
र्ता । त्वां शेषा अपि नागराः ॥ भविता भूयसां दीक्षा—लाभस्तत्रागते त्वयि ॥ ३४ ॥ द-

७५८ शीय प्राक्तवमेवात्र । बंधो तद्वाभवर्णिकां ॥ इत्यार्यरक्षितेनोक्तः । प्राव्राजीत्फल्गुरक्षितः ॥३५॥
क्रियासमभिहारेण । पुनर्नुन्नः कनीयसा ॥ अधीतयमकाध्यायो । गुरुं पप्रच्छ रक्षितः ॥३६॥
पि॰ कियत्पेठेऽस्य पूर्वस्य । किमद्याप्यवशिष्यते ॥ सूरिः प्राह पृषत्पेठे । समुद्रस्त्ववशिष्यते
७३१ ॥ ३७ ॥ अथो दशमपूर्वार्धं । निश्चलीभूय सोऽपठत् ॥ ततःपरं न पाठोऽस्य । हृदि तस्थौ च-
लात्मनः ॥ ३८ ॥ श्रुतज्ञानोपयोगेन । गुरुरेवं व्यचारयत् ॥ मदूर्ध्वं दशपूर्वीय—मशेषा न
प्रवर्त्स्यति ॥ ३९ ॥ जातस्वजनहृल्लेख । एष किं स्थाप्यते वृथा ॥ ध्यात्वेति गुरुणादिष्टः ।
प्रीत्या प्रास्थित रक्षितः ॥ ४० ॥ गतो दशपुरं भूपा—दिभिर्नत्वाभिवंदितः ॥ चकार च-
क्षुरीक्ष्यार्थ—दर्शनीं देशनां मुनिः ॥ ४१ ॥ श्राद्धधर्मं नरेंद्राय । पितृभ्यां च ददौ व्रतं ॥ त-
त्रार्यरक्षितो धर्म—कल्पद्रुरिव जंगमः ॥ ४२ ॥ श्रीवज्रस्त्वन्यदा स्वैरं । विहरन् दक्षिणां
दिशं ॥ शुंठीमानाययामास । जातश्लेष्मान्यसाधुभिः ॥ ४३ ॥ शुंठी तैराहृता कर्ण—मूले
वज्रेण धारिता ॥ आत्ताहारो ग्रहीष्येऽह—मिमामिति मतिस्पृशा ॥ ४४ ॥ विस्मृतं तस्य
भुक्त्वोर्ध्वं । स्मृतं च प्रहरेंतिमे ॥ प्रेरितं मुखपोतेन । पतितं नागरं भुवः ॥ ४५ ॥ प्रमादो-

आबाल्याद्भूमिभर्तुः सदसि रसिकतासारमादृत्य दीक्षा—मीक्षांचक्रे समग्रं श्रुतमपि पटु-धीर्दृष्टिराद्दृष्टिवादं ॥ स्वादं स्वादं तु तस्याहितधृतिचरितं श्रीमतो वज्रसूरे—र्दूरेणोत्सृज्य भोगान् व्रतकृतमतयः संततं संतु संतः ॥ ६७ ॥ इति श्रीवज्रस्वामिकथा समाप्ता. ॥ तदेवं बालऋषीन् वंद्यानुक्त्वा परानपि दृढवैराग्यप्रपन्नचारित्रान् वंद्यत्वेनाह—

॥ मूलम् ॥—पच्छावि जे पवन्ना । इक्किकालंबणेण चारित्तं ॥ पणमामि तेसि पाए । चउन्हपत्तयबुद्धाणं ॥ ३२ ॥ व्याख्या—एकैकेनालंबनेन वृषभाद्यवष्टंभेन पश्चाद्भुक्तभोगोत्तरकालमपि ये चारित्रं प्रपन्नाः, शेषं सुगमं. तत्कथा चैवं—

द्वादशस्यार्हतो जन्म—दीक्षामोक्षैकसाक्षिणी ॥ चंपा शंपोपमा त्यक्त—संपदापदमस्ति पूः ॥ १ ॥ तत्राभूद् भूपतिः शौर्य—स्योदधिर्दधिवाहनः ॥ नारिकीर्तिनदीः सेहे । यत्खड्गवड्वानलः ॥ २ ॥ श्रीचेटककुलांभोधि—पद्मा पद्मावती सती ॥ तस्य प्रिया प्रियालाप-सारिणी समजायत ॥ ३ ॥ गजारूढधृतछत्रा । भर्त्रारामे रमे मुदा ॥ इति दोहदमाधत्त । सान्यदा गर्भसंभवे ॥ ४ ॥ भर्तृभक्त्या ह्रिया वापि । कुलीनत्वान्नियंत्रिता ॥ इदं स्वदोहदं

न्नर्तु–राख्यातु न शशाक सा ॥ ५ ॥ हृदि दोहददौःस्थ्येन । झूना सा राजवल्लना ॥ कैरवि-
ण्यंबुविरहे–नेवान्नूदतिदुर्बला ॥ ६ ॥ महाग्रहान्महीनर्त्रा । पृष्टा दौर्बल्यकारणं ॥ ह्रिया नि-
रुद्धकंगापि । कथंचन जगाद सा ॥ ७ ॥ अस्या दोहद एवायं । वक्त्याधानप्रधानतां ॥ इति
राजापि तुष्टस्त–न्मनोरथमपूरयत् ॥ ८ ॥ आसीनां सिंधुरस्कंधे । धृतछत्रां महीन्नुजा ॥ तां
वीक्ष्य वनिताः पंकती–न्नूता पौर्यो बन्नाषिरे ॥ ए ॥ मन्यामहे महेलासु । मुख्यामेकामिमां
स्त्रियं ॥ केवलं ग्रासमात्रेण । गृहदास्यकृतो वयं ॥ १० ॥ इदं रूपमियं लक्ष्मी–रियं स्वामि-
प्रसन्नता ॥ अत्रैव विदधे धात्रा । किमेषोऽस्मासु मत्सरी ॥ ११ ॥ अथेष्टलान्नतः पश्चा—व-
त्यां मुदितचेतसि ॥ विधिः स्वं विश्ववैलोम्य—व्रतमेवमपालयत् ॥ १२ ॥ तत्कालवृष्टपाथो-
द—पाथःसेकसमुद्भवात् ॥ भूसौरन्नादितो मत्तः । प्रदधावे दिशैकया ॥ १३ ॥ पृष्टानुगैरसं-
प्राप्तो । गजाश्वरथपत्तिन्निः ॥ स राजानं सराज्ञीक—मरण्यानीमिन्नोऽनयत् ॥१४॥ विषादवि-
धुरां राज्ञीं । धीरयन् धीरधीर्नृपः ॥ धम्मिल्लमिव मेदिन्या । व्यलोकत पुरो वटं ॥ १५ ॥
ऊचे च देवि पश्यामुं । तमःश्यामं वटद्रुमं ॥ त्वं शाखामवलंबेथा । अस्याधो याति सिंधुरे

ऽयं महारिष्टं । मयि जाड्यमिवानले ॥ मन्ये ममायुषा क्षीण-मिति वज्रो व्यचिंतयत् ॥४६॥
तत्र देशेऽस्ति दुर्भिक्षं । तदा द्वादशवार्षिकं ॥ ददौ न कोऽपि भिक्षुभ्यो । भैक्ष्यं भारजया-
दिव ॥ ४७ ॥ अन्यदा विद्यया मध्यं—दिने वज्रप्रयुक्तया ॥ यतिनः प्रतिगेहात—सारभ-
क्ता अभुंजत ॥ ४८ ॥ प्रादोषिकप्रतिक्रांतौ । गुरुरूचेऽनगारिणः ॥ आलोचयत भो अद्य ।
विद्यापिंडोपजीवनं ॥ ४९ ॥ विद्यापिंडेन वः पिंड—पोषणं यदि संमतं ॥ आदुर्भिक्षं तदा-
हार—मीदृशं पूरयाम्यहं ॥ ५० ॥ प्रणम्य मुनयः सर्वे । जगदुर्जगदुत्तमाः ॥ पूज्याः प्रा-
णप्रहाणेऽपि । नाकल्प्यं स्वदते हि नः ॥ ५१ ॥ विराध्य चरणं देहं । यैरपोष्यमपोष्यते ॥
तैर्वर्धितोऽवकरकः । कृत्वा चिंतामणिव्ययं ॥ ५२ ॥ तत्कंचनगिरिं गत्वा । श्रयीमोऽनशनं मु-
दा ॥ इतरो नास्ति निस्तारो—पायो दुष्कालवारिधेः ॥ ५३ ॥ परिज्ञाततदुत्साहः । स्वयं
साहसभूर्गुरुः ॥ उद्दिश्य सिद्धिसोपान—मिव शैलं चचाल सः ॥ ५४ ॥ अक्षतं रक्षितुं सा-
धु—बीजं प्रहितवानथ ॥ श्रीवज्रो वज्रसेनाख्यं । शिष्यं देशांतरं तदा ॥ ५५ ॥ संन्यासम-
न्नकीटीऽयं । नार्हतीति स किंचन ॥ प्रातराशमिषात्प्रैषीत् । क्षुल्लकं सह साधुना ॥ ५६ ॥ तं

रथ्यागहने क्षिप्त्वा । व्यावृत्य मुनिरागतः ॥ गणयुक्तेन गुरुणा । सहारोहन्महीधरं ॥५७॥
तं साधुं क्षुल्लकोऽपश्यन् । पश्यन् शून्यमुपाश्रयं ॥ शुश्राव लोकतो वत्तं । प्रपन्नानशनं गिरौ
॥५८॥ मयि दृष्टे गुरुर्माभू—द्बाधामित्युज्झिताशनः ॥ शिशुः शिश्राय सूर्यांशु—तप्तां शै-
लतले शिलां ॥ ५९ ॥ विलीनो लयलीनोऽसौ । तत्र म्रक्षणवत्क्षणात् ॥ वयःस्थेभ्योऽपि सा-
धुभ्यः । पूर्वं स्वर्गं शिशुर्ययौ ॥६०॥ तस्य प्रभावनाहेतु—मायातानां सुपर्वणां ॥ उद्योतं वी-
क्ष्य शृंगस्थाः । पप्रच्छुर्मुनयो गुरुं ॥ ६१ ॥ गदिते क्षुल्लकोदंते । गुरुणा द्विगुणादराः ॥ मुन-
योऽनशनं भेजु—स्ते जन्मोच्छेदनोत्सुकाः ॥ ६२ ॥ श्रावकीभूय मिथ्यात्वि—देवता पर्वता-
श्रितान् ॥ मुनीनामंत्रयामास । मोदकैरुदकैरपि ॥ ६३ ॥ विरुद्धं तं गिरिं मत्वा । गुरुरन्यं
गिरिं ययौ ॥ तत्स्वामिनी मुनीन् सम्य—ग्दृष्टिर्देवी न्यषेवत ॥ ६४ ॥ फलितानशनध्यान-
भास्वरास्ते मुनीश्वराः ॥ अभूवन् समये नाक—सुभ्रूविभ्रमभाजनं ॥ ६५ ॥ गौरव्योऽयं गि-
रिर्वज्र—गुरुर्यत्र स्वयं स्थितः ॥ रथस्थैरिति दिक्पालै—श्चक्रे तस्य प्रदक्षिणाः ॥६६॥ तत्र
तद्रथसंघट्टा—द्भुग्ना भूमिरुहोऽभवन् ॥ रथावर्त्त इति ख्यातिं । ततः स प्राप भूधरः ॥६७॥

आबाल्याद्भूमिन्नतुः सदसि रसिकतासारमादृत्य दीक्षा—मीक्षांचक्रे समग्रं श्रुतमपि पटुः धीर्दृष्टिराद्दृष्टिवादं ॥ स्वादं स्वादं तु तस्याहितधृतिचरितं श्रीमतो वज्रसूरे—र्दूरेणोत्सृज्य नोगान् ऋतकृतमतयः संततं संतु संतः ॥ ६७ ॥ इति श्रीवज्रस्वामिकथा समाप्ता. ॥ तदेवं बालऋषीन् वंद्यानुक्त्वा परानपि दृढवैराग्यप्रपन्नचारित्रान् वंद्यत्वेनाह—

॥ मूलम् ॥—पञ्चावि जे पवन्ना । इक्किकालंबणेण चारित्तं ॥ पणमामि तेसि पाए । चउन्हपत्तयबुद्धाणं ॥ ३१ ॥ व्याख्या—एकैकेनालंबनेन वृषन्नाद्यवष्टंभेन पश्चाद्नुक्तन्नोगोत्तरकालमपि ये चारित्रं प्रपन्नाः, शेषं सुगमं. तत्कथा चैवं—

द्वादशस्यार्हतो जन्म—दीक्षामोक्षैकसाक्षिणी ॥ चंपा शंपोपमा त्यक्त—संपदापदमस्ति पूः ॥ १ ॥ तत्राभूद् भूपतिः शौर्य—स्योदधिर्दधिवाहनः ॥ नारिकीर्तिनदीः सेहे । यत्स्ववक्रवानलः ॥ २ ॥ श्रीचेटककुलांन्नोधि—पद्मा पद्मावती सती ॥ तस्य प्रिया प्रियालापसारिणी समजायत ॥ ३ ॥ गजारूढधृतछत्रा । जत्रारामे रमे मुदा ॥ इति दोहदमाधत्त । सान्यदा गर्न्नसंन्नवे ॥ ४ ॥ नर्तृन्नक्त्या ह्रिया वापि । कुलीनत्वान्नियंत्रिता ॥ इदं स्वदोहदं

ज्ञतुं-राख्यातुं न शशाक सा ॥ ५ ॥ हृदि दोहददौःस्थ्येन । डूना सा राजवल्लभा ॥ कैरवि-
एयंबुविरहे-नेवाभूदतिदुर्बला ॥ ६ ॥ महाग्रहान्महीभर्त्रा । पृष्टा दौर्बल्यकारणं ॥ ह्रिया नि-
रुद्धकंठापि । कथंचन जगाद सा ॥ ७ ॥ अस्या दोहद एवायं । वक्त्याधानप्रधानतां ॥ इति
राजापि तुष्टस्त-न्मनोरथमपूरयत् ॥ ८ ॥ आसीनां सिंधुरस्कंधे । धृतछत्रां महीभुजा ॥ तां
वीक्ष्य वनिताः पंक्ती-भूता पौर्यो बभाषिरे ॥ ९ ॥ मन्यामहे महेलासु । मुख्यामेकामिमां
स्त्रियं ॥ केवलं ग्रासमात्रेण । गृहदास्यकृतो वयं ॥ १० ॥ इदं रूपमियं लक्ष्मी-रियं स्वामि-
प्रसन्नता ॥ अत्रैव विदधे धात्रा । किमेषोऽस्मासु मत्सरी ॥ ११ ॥ अथेष्टलाभतः पद्मा—व-
त्यां मुदितचेतसि ॥ विधिः स्वं विश्ववैलोम्य—व्रतमेवमपालयत् ॥ १२ ॥ तत्कालवृष्टपाथो-
द—पाथःसेकसमुद्भवात् ॥ भूसौरभादितो मत्तः । प्रदधावे दिशैकया ॥ १३ ॥ पृष्टानुगैरसं-
प्राप्तो । गजाश्वरथपत्तिभिः ॥ स राजानं सराज्ञीक—मरण्यानीमिभोऽनयत् ॥१४॥ विषादवि-
धुरां राज्ञीं । धीरयन् धीरधीर्नृपः ॥ धम्मिल्लमिव मेदिन्या । व्यलोकत पुरो वटं ॥ १५ ॥
ऊचे च देवि पश्यामुं । तमःश्यामं वटद्रुमं ॥ त्वं शाखामवलंबेथा । अस्याधो याति सिंधुरे

॥ १६ ॥ एवं राज्ञि वदत्येव । जगाम करटी वटं ॥ पटुर्भेजे स तच्छाखां । नाषां श्राऊ इ-
वार्हती ॥ १७ ॥ चालयंती मनाग् हस्तौ । विहस्ता स्त्रीस्वभावतः ॥ अनीयताग्रतो राज्ञी ।
वातूलेनेव हस्तिना ॥ १८ ॥ धावद्भिः पृष्ठतः सैन्यै—र्मज्जन् दुःखोदधौ नृपः ॥ प्राप्यतेस्म
पुरीं तीर—मिव पोतः सुवायुभिः ॥ १९ ॥ व्यालः काल इव स्वैरं । भ्रमंस्तृष्णातुरः पुरः ॥
सरः सरसनीरौघ—मवागाहत किंचन ॥ २० ॥ जलकेलिकृतस्तस्य । पृष्टात्कष्टादिवांगिनः ॥
उत्तीर्य निर्ययौ पद्मा—वती पल्वलतस्ततः ॥ २१ ॥ पश्यंती सर्वतोऽरण्यं । सा वार्धिमिव दु-
स्तरं ॥ बुद्धिबेर्मामिमामध्या—रुरोह परमार्हती ॥ २२ ॥ क तत्पुरं क तत्सौधं । क स भ-
र्ता क तद्वनं ॥ क्षणिकं क्षणिकोद्योत—मिव धिक् सौख्यमंगिनां ॥ २३ ॥ दर्शयित्वा ति-
रोदध्या—त्तिरोधाय च दर्शयेत् ॥ समस्तवस्तुविस्तार—महो वैज्ञानिको विधिः ॥ २४ ॥
आसतां विपुला भोगाः । काननेऽत्रांतकानने ॥ नास्ति मे जीविताशापि । तत्कुर्वे स्वहितं न
किं ॥ २५ ॥ अर्हंतः शरणं संतु । सिद्धाश्च शरणं मम ॥ साधवः शरणं सर्वे । शरणं धर्म
आर्हतः ॥ २६ ॥ यन्मयात्र भवे प्राच्य—भवेष्वपि विनिर्ममे ॥ निर्ममीभूय तत् त्रेधं । त्रिधा

पापं त्यजाम्यहं ॥ २७ ॥ चतुर्गतिगतो जंतु-र्मया यः कोऽप्यदूयत ॥ तमहं क्षामये सोऽपि । मयि क्षाम्यतु सर्वथा ॥ २८ ॥ यैः प्रायो बहुशः प्राप्तै-रपि प्राणी न तृप्यति ॥ तान् संयोगांस्तथा भोगान् । व्युत्सृजामि त्रिधाप्यहं ॥ २९ ॥ अलं कृत्रिमसंबंधै-र्बंधुभिर्विभवैरपि ॥ मा मामत्र क्षणेऽत्याक्षुः । पंचैव परमेष्ठिनः ॥ ३० ॥ यदा प्राणांतकृत्कश्चि-दुपसर्गो भवेन्मम ॥ तदैव चतुराहार-परिहारोऽस्तु मे त्रिधा ॥३१॥ एवं विहितसाकारा-नशनाव्यसनातुरा ॥ भ्राम्यंती परितः कंचि-त्प्राप सा तापसाश्रमं ॥ ३२ ॥ व्यावृत्तजीविताशा सा—नंसीत्तापसपुंगवं ॥ तेनापि कासि कस्यासि । कुतोऽसीत्यन्वयधीयत ॥ ३३ ॥ सप्रमोदं निजोदंते । तयोक्ते स मुनिर्जगौ ॥ वत्से स्वस्थानमेव त्व—मागतासीति मा क्लम ॥ ३४ ॥ बंधुश्चेटकभूपो मे । ततः स्नेहोऽधिकस्त्वयि ॥ त्यक्तसंगैरपि प्रायो । बंधुस्नेहः सुदुस्त्यजः ॥ ३५ ॥ स पिता चेटको राजा । स भर्ता दधिवाहनः ॥ हंत दैवस्य दौरात्म्यात् । तवेयमधुना दशा ॥ ३६ ॥ पुत्र्येवमेव संसारो । न स्यात्क्लेशमयो यदि ॥ तद्वियासति को मुक्ति—पुरीमतिदवीयसीं ॥ ३७ ॥ ततः सा सत्कृता तेन । तनयेव सुखं स्थिता ॥ दिनैः कतिपयैः

सुस्था । स्वस्थानं गंतुमैहत ॥ ३८ ॥ कियंतमपि भूभागं । नीत्वा तां न्यगदन्मुनिः ॥ अतः-
परं हलैः कृष्टां । नाक्रमामो वयं भुवं ॥ ३९ ॥ त्वमेकापि स्वशीलेन । कृतरक्षा महासति ॥
व्रजंती वर्त्मनानेन । यासि दंतपुरं पुरः ॥ ४० ॥ ततः समर्थसार्थेन । चंपामपि पुरीं व्रजेः ॥
इत्युक्त्वा ववले सीम—बिज्ञागज्ञो मुनीश्वरः ॥ ४१ ॥ सा तदादिष्टमार्गेण । पुरं दंतपुरं ग-
ता ॥ अनन्यनिश्रा विश्रामं । श्रमणीवसतौ व्यधात् ॥ ४२ ॥ प्रवर्तिनी विनीताया—स्तस्या
यद्धर्ममादिशत् ॥ तदंबुदांबुसिक्ते तद्—हृदये बीजतां गतं ॥ ४३ ॥ न दृष्टोपद्रवं मूर्खा ।
अपि वासमुपासते ॥ कथं वसेयं संसारे । निस्सारेऽहं सचेतना ॥४४॥ संसारवारणे दक्षा ।
दीक्षैव कथिता जिनैः ॥ इत्युत्पन्नमतिर्नैजे—ऽनुक्तगर्भैव सा व्रतं ॥ ४५ ॥ वर्धमाने क्रमा-
द्गर्भे । दधतीं पांडुतां मुखे ॥ प्रवर्तिनी व्रतिनीं तां । रहः पप्रच्छ वत्सला ॥४६॥ तादृग्वैराग्य-
रंगेण । दीक्षामादाय सुंदरि ॥ बहूनां बोधिघातीदं । कर्मारभ्यत किं त्वया ॥ ४७ ॥ प्रकृ-
त्या शंकनीया स्त्री । छिद्रेषूत्सुकखलाः खलाः ॥ मृदुलं शासनं जैनं । कथं हा साध्वि तिष्ठसि
॥ ४८ ॥ व्रतविघ्नभियाऽख्यायि । नायं गर्भो मया तदा ॥ इति तांप्रत्यवक् पद्मा— वती नि-

रुद्धमानसा ॥ ४९ ॥ तयाथ स्थापितैकांते । सा काले सुषुवे सुतं ॥ पूर्णिमेंदुमुखं पूर्णं ।
क्षोणिरक्षणलक्षणैः ॥ ५० ॥ नाभूत्पितृगृहं मौल—मिदं तेऽस्त्वधुना मुदे ॥ इति तं बाल-
मालप्य । श्मशाने सात्यजन्निशि ॥ ५१ ॥ मृत एव सुतो जात—स्त्यज्यते विधिवन्मया ॥
इत्यागत्याश्रयं शेष—साध्वीभ्यः सा न्यवेदयत् ॥ ५२ ॥ आवीचीमृत्युना जीवो । म्रियते हि
प्रतिक्षणं ॥ धियानया तयाबंधि । नासत्यप्रत्ययं रजः ॥ ५३ ॥ प्रातः श्मशानपालेन । बालो
ऽयालोकि तत्र सः ॥ पुत्रबुद्ध्या विपुत्राया । निजपत्न्या अदायि च ॥ ५४ ॥ सेवते यो यदे-
काग्रः । स तस्माल्लभते फलं ॥ श्मशानादपि पुत्राप्त्या । तेनेति दृढिता श्रुतिः ॥ ५५ ॥ सा
स्वपाकं श्वपाकौकः—स्थितं ज्ञात्वा महासती ॥ विचचार विचारायो—पश्मशानं दिने दि-
ने ॥ ५६ ॥ आवर्ज्य तां च मातंगी—मालुलोके सदा शिशुं ॥ लब्धं लब्धं रहस्तस्मै । मो-
दकाद्यं च सा ददौ ॥ ५७ ॥ सोऽपि व्यक्तवयाः साध्व्यां । धत्तेस्म जननीधियं ॥ अरातिज्ञा-
तिसंबंधं । वेत्त्यंतःकरणं यतः ॥ ५८ ॥ मातुराहारवैगुण्या—ज्ज्ञातकंडूरवर्धत ॥ अपकर्णित-
नामासौ । बालश्चांडालवेश्मनि ॥ ५९ ॥ राजबीजः पराजय्यः । स क्रीडन् राजलीलया ॥

करकंडूरिति
सामंतिनान्यबालेभ्यो—ऽयाचत्कंडूयनं करं ॥ ६० ॥ स द्वितीयं ततो नाम । करकंडूरिति
स्पृशन् ॥ ययौ प्रेतालयं तातं । निश्चितीकृत्य धिग्विधिं ॥ ६१ ॥ श्मशानसमयान्येद्युः । स-
मयार्थखनी मुनी ॥ व्रजंतौ विपुलां वंश—जालीं वीक्ष्य क्षणं स्थितौ ॥ ६२॥ ज्यायानूचे मु-
निर्वृद्धिं । प्रतीक्ष्य चतुरंगुलां ॥ यो वंशमिममादत्ते । सोऽवश्यं राज्यमश्नुते ॥ ६३ ॥ इति त-
द्वचनं ज्ञान—क्षीरोदधिपृषत्सखं ॥ अपायि तेन बालेन । केनचिच्च द्विजन्मना ॥ ६४ ॥ मु-
खमेषां मृषाभाषा । प्राणांतेऽपि न चुंबति ॥ यथावस्थितवाचो हि । जैना इति विचिंतयन्
॥ ६५ ॥ द्विजातिः क्ष्मातलस्याध—श्चतुरश्चतुरंगुलं ॥ छित्वा जग्राह तं वंशं । चचाल च
पुरंप्रति ॥ ६६ ॥ युग्मं ॥ द्विज मद्भूमिजं वंशं । मुंच मुंचेति जल्पता ॥ सिंहेनेव कुरंगो-
ऽसौ । रुरुधे करकंडूना ॥ ६७ ॥ निन्ये श्रीकरणं तेन । विप्रो वंशमनर्पयन् ॥ तत्र मंत्रिभि-
रुक्तोऽपि । तां यष्टिं न मुमोच सः ॥ ६८ ॥ तेऽथ बालं जगुः कोऽयं । प्रयासो हीनवंश ते ॥
सुवंशोऽयं सुवंशेना—मुना संबंधमंचतु ॥ ६९ ॥ शिशो गृहाण मूल्यं वा—न्यां वा यष्टिं कि-
मेतया ॥ न श्रेयान् कलहो विप्रै—र्माकृथास्तत्कदाग्रहं ॥ ७० ॥ बालोऽवग्भो अवंशोऽहं । युक्तं

वंशोऽन्नियोगवान् ॥ अयं स्वयं सुवंशः किं । तत्संग्रहकदाग्रही ॥ ७१ ॥ अन्यायव्यंजिकां स्वीय-जिह्वां मुंचत मंत्रिणः ॥ तस्याः स्थानेऽहमन्यां वा । मूल्यं वा प्रददामि वः ॥ ७२ ॥ यद्यसावपि विप्रस्त—च्चौरः को नाम कथ्यते ॥ न हि संस्कारमात्रेण । श्रद्दध्मो विप्रतां वयं ॥ ७३ ॥ प्राणांतेऽपि न मुंचामि । यष्टिं राज्यकरीमिमां ॥ श्रुत्वेति मंत्रिणोऽन्योन्यं । स्मयमाना बभाषिरे ॥ ७४ ॥ यष्ट्या राज्यं यदि स्या—त्तज्जोपालाः सकला अपि ॥ भवेयुर्भूमिभ्रोक्तारः । केनचिद्वंचितोऽसि रे ॥ ७५ ॥ यदि त्वं लप्स्यसे राज्यं । दंडेनानेन बालक ॥ देयं तदा वरग्राम—मेकमस्मै द्विजन्मने ॥ ७६ ॥ तथेत्युक्त्वा शिशुर्वंशं । गृहीत्वा स्वमगाद् गृहं ॥ द्विजस्तु तं निहत्यापि । वंशमादित्ससतोत्सुकः ॥ ७७ ॥ मत्सरी मच्छरीरेऽसौ । विप्रस्तत्तात गम्यते ॥ इति यूनोर्गिराचाली—न्निषादः सपरिच्छदः ॥ ७८ ॥ महीमुपक्रमी क्रामन् । स कांचनपुरं गतः ॥ जातश्रमो वनेऽवाप्सी—द्वालपुण्यं स्वजागरीत् ॥ ७९ ॥ तदैव दैवतोऽपुत्रे । मृते राज्ञि महन्नरैः ॥ राज्योपप्लवमालोक्य । वाजी दिव्योऽध्यवास्यत ॥ ८० ॥ पुरतः स्फुरतः क्षत्र—कुमारानस्पृशन् दृशा ॥ पुरं भ्रांत्वा बहिर्बालं । सप्तिस्तं सुप्तमैक्षत ॥८१॥

सामंतिनान्यबालेभ्यो—ऽयाचत्कूयनं करं ॥ ६० ॥ स द्वितीयं ततो नाम । करकंडूरिति
स्पृशन् ॥ ययौ प्रेतालयं तातं । निश्चितीकृत्य धिग्विधिं ॥ ६१ ॥ श्मशानसमयान्येद्युः । स-
मयार्थखनी मुनी ॥ व्रजंतौ विपुलां वंश—जालीं वीक्ष्य क्षणं स्थितौ ॥ ६२ ॥ ज्यायानूचे मु-
निर्वृद्धिं । प्रतीक्ष्य चतुरंगुलां ॥ यो वंशमिममादत्ते । सोऽवश्यं राज्यमश्नुते ॥ ६३ ॥ इति त-
द्वचनं ज्ञान—क्षीरोदधिपृषत्समं ॥ अपायि तेन बालेन । केनचिच्च द्विजन्मना ॥ ६४ ॥ मु-
खमेषां मृषाभाषा । प्राणांतेऽपि न चुंबति ॥ यथावस्थितवाचो हि । जैना इति विचिंतयन्
॥ ६५ ॥ द्विजातिः क्ष्मातलस्याध—श्चतुरश्चतुरंगुलं ॥ छित्वा जग्राह तं वंशं । चचाल च
पुरंप्रति ॥ ६६ ॥ युग्मं ॥ द्विज मद्भूमिजं वंशं । मुंच मुंचेति जल्पता ॥ सिंहेनेव कुरंगो-
ऽसौ । रुरुधे करकंडूना ॥ ६७ ॥ निन्ये श्रीकरणं तेन । विप्रो वंशमनर्पयन् ॥ तत्र मंत्रिभि-
रुक्तोऽपि । तां यष्टिं न मुमोच सः ॥ ६८ ॥ तेऽथ बालं जगुः कोऽयं । प्रयासो हीनवंश ते ॥
सुवंशोऽयं सुवंशेना—मुना संबंधमंचतु ॥ ६९ ॥ शिशो गृहाण मूल्यं वा—न्यां वा यष्टिं कि-
मेतया ॥ न श्रेयान् कलहो विप्रै—र्माकृथास्तत्कदाग्रहं ॥ ७० ॥ बालोऽवग्नो अवंशोऽहं । युक्तं

वंशोऽन्नियोगवान् ॥ अयं स्वयं सुवंशः किं । तत्संग्रहकदाग्रही ॥ ७१ ॥ अन्यायव्यंजिकां स्वी-
य-जिह्वां मुंचत मंत्रिणः ॥ तस्याः स्थानेऽहमन्यां वा । मूल्यं वा प्रददामि वः ॥ ७२ ॥ य-
द्यसावपि विप्रस्त—च्चौरः को नाम कथ्यते ॥ न हि संस्कारमात्रेण । श्रद्दध्मो विप्रतां वयं
॥ ७३ ॥ प्राणांतेऽपि न मुंचामि । यष्टिं राज्यकरीमिमां ॥ श्रुत्वेति मंत्रिणोऽन्योन्यं । स्मयमा-
ना बभाषिरे ॥ ७४ ॥ यष्ट्या राज्यं यदि स्या—त्तन्नोपालाः सकला अपि ॥ भवेयुर्भूमिभ्तो-
क्तारः । केनचिद्वंचितोऽसि रे ॥ ७५ ॥ यदि त्वं लप्स्यसे राज्यं । दंडेनानेन बालक ॥ देयं
तदा वरग्राम—मेकमस्मै द्विजन्मने ॥ ७६ ॥ तथेत्युक्त्वा शिशुर्वंशं । गृहीत्वा स्वमगाद् गृ-
हं ॥ द्विजस्तु तं निहत्यापि । वंशमादित्सतोत्सुकः ॥ ७७ ॥ मत्सरी मच्छरीरेऽसौ । विप्रस्त-
त्ताल गम्यते ॥ इति यूनोर्गिराचाली—न्निषादः सपरिच्छदः ॥ ७८ ॥ महीमुपक्रमी क्रामन् ।
स कांचनपुरं गतः ॥ जातश्रमो वनेऽवाप्सी—द्बालपुण्यं स्वजागरीत् ॥ ७९ ॥ तदैव दैवतो-
ऽपुत्रे । मृते राज्ञि महन्नरैः ॥ राज्योपप्लवमालोक्य । वाजी दिव्योऽध्यवास्यत ॥ ८० ॥ पुर-
तः स्फुरतः छत्र—कुमारानस्पृशन् दृशा ॥ पुरं भ्रांत्वा बहिर्बालं । सतिस्तं सुप्तमैक्षत ॥८१॥

यधेनाहेषि हर्षेण । स्वयं तुर्यैश्च दध्वने ॥ अच्छेणेवातपत्रेण । पप्रथे द्युपथे स्वयं ॥ ७२ ॥ बा-
हयेनाहेषि हर्षेण । स्वयं तुर्यैश्च दध्वने ॥ पौरा मुमुदिरे कामं । सामंतास्तं ववंदिरे ॥७३॥
लस्तदा जजागार । प्रजाप्राग्भारभासुरः ॥ सहेलं हयमारुह्य । प्रतस्थे स पुरंप्रति ॥७४॥
परिधाय प्रधानोप—ढौकिते दिव्यवाससी ॥ तं विशंतं पुरेऽरौत्सी—द्विप्रवर्गो निरर्गलः
तदा ज्ञातिमदात्सोढु—मक्षमो वर्णविप्लवं ॥ तदैव दैवयोगेन । दिद्युते दंकरत्नवत् ॥७६॥
॥ ७५ ॥ स दंकश्चक्रिणेवात्तः । स्वकरे करकंकुना ॥ म्लानमाना द्विजन्मान—स्ते संभूयोपतस्थि-
समन्युर्मन्यते को मां । नेति जल्पति भूपतौ ॥ नृप सूर्योपलस्येव । तदेतद् दु-
रे ॥ ७७ ॥ ऊचुश्चास्माभिरज्ञायि । न ते गूढमिदं महः ॥ राजन् पिता प्रजानां त्वं ।
ष्कृतं कृतं ॥ ७७ ॥ त्वं श्रीवरो विरंचिस्त्वं । त्वं हरस्त्वं पुरंदरः ॥ तैस्तालेना-
त्वं गुरुस्त्वं च दैवतं ॥ ७९ ॥ तैः पद्भ्यां पावकः स्पृष्ट—स्तैर्दंतैश्चर्वितं विषं ॥
हतः सर्पो—ऽवज्ञातो यैर्नरेश्वरः ॥ ८० ॥ अक्षरं नास्ति निर्बीजं । मूलं नास्ति निरौषधं ॥
आत्मा निश्चेतनो नास्ति । नास्ति निर्दैवतो नृपः ॥ ८१ ॥ तावद्वर्षति पर्जन्यः । तावद्धर्मः
प्रवर्त्तते ॥ तावत्प्रजाः समर्यादा । यावज्जयति भूपतिः ॥ ८२ ॥ गुणा एव महत्त्वस्य । का-

૭૫૦ वा वंश्या । केन वा परिणेष्यते ॥ न हि निम्नवरारोपं । रूपमस्यास्तितिक्षते ॥ ૯૦ ॥ तेऽ-
चिंता- प्यूचुर्वनमालास्ति । पत्नी छिमुखभूपतेः ॥ सासूत समये सप्त । सप्तसप्तिद्युतः सुतान् ॥૯૧॥
तेषु भक्तेषु शक्तेषु । भृशं व्यक्तेषु सत्स्वपि ॥ नैकापि मे सुतास्तीति । चित्ते धत्तेस्म सा शुचं
૭૫૧ ॥ ૯૨ ॥ यथा नेत्रं विना तारां । वदनं नासिकां विना ॥ तरुः शाखां विना पुत्रीं । विना-
स्मन्मंदिरं तथा ॥ ૯૩ ॥ ध्यात्वेति मदनं देवं । साभजत्तत्प्रभावतः ॥ सुतां चासूत कल्प-
द्रु—मंजरीस्वप्नसूचितां ॥ ૯૪ ॥ स्वप्नानुसारतः कृत्वा । नाम्ना मदनमंजरीं ॥ पितरौ भूरि-
खेलाभि—स्तामवीवृधतां सुतां ॥ ૯૫ ॥ रूपलावण्यतारुण्य—श्रीणां संगमसद्मनः ॥ अस्या
वेद वरं वेद—गर्भो नास्मादृशाः पराः ॥ ૯૬ ॥ सदैव मालवाधीशः । सदैवहतकस्तदा ॥
मूर्तयेव श्रिया युक्तं । तया व्याकुलतां गतः ॥ ૯૭ ॥ दध्यौ च तदिदं गुप्ति—पदं मेऽस्तु
पुनः पुनः ॥ यूनां नेत्रसुधासत्रं । यत्रस्थेनेयमीक्षिता ॥ ૯૮ ॥ एतां विना वृथा राज्यं । ला-
भोऽस्या भवतान्मम ॥ यद्रूहंशि क पुण्यानि । को वा प्राक्तनकर्मवित् ॥ ૯૯ ॥ अभिप्रायं
परिज्ञाय । तस्यौचित्यविचक्षणः ॥ विमोच्य चारकाच्चारु—सत्कारं तं जगौ नृपः ॥ ૨૦૦ ॥

इमामुद्वह मे कन्यां । नान्यस्त्वदुपमो वरः ॥ कारावासादि यद् दुःखं । तद्धर्णकपदे स्मर ॥ १ ॥ अवंतीपतिना प्रीति—कामः स्वामथ नंदिनीं ॥ द्विमुखो विमुखो नांगी—कृतार्थे पर्यणाययत् ॥ २ ॥ आगतो मौलिभूषार्थे । कन्यां साम्राज्यभूषणां ॥ उपलभ्याधीकं प्रीतः । प्रद्योतः स्वां पुरीं ययौ ॥ ३ ॥ कदापि द्विमुखो राजा । राजपाटिकया व्रजन् ॥ पौरैः शक्रोत्सवे शक्र—ध्वजमुत्थितमैक्षत ॥ ४ ॥ तं पुरः प्रस्फुरद्रूप—मासक्तकुसुमस्रजं ॥ अर्च्यमानं जनव्रातै—र्नृपोऽप्यानर्च भक्तितः ॥ ५ ॥ नृपे स्वस्थानमायाते । व्यतीते च महोत्सवे ॥ ध्वजस्तंभोऽपतद्भूमी—पीठे छिन्न इव द्रुमः ॥ ६ ॥ पुनस्तेन पथा गच्छन् । ध्वजं तमनलंकृतं ॥ लुठंतमशुचौ वीक्ष्य । भूमानेवं व्यभावयत् ॥ ७ ॥ भूषितः पूजितो योऽभू—त्तदा कल्पद्रुमोपमः ॥ असंस्कारो लुठत्यद्य । भूमौ सोऽयं हरिध्वजः ॥ ८ ॥ तच्चारिमा समस्तेषु । नास्ति वस्तुषु वस्तुतः ॥ सारीकृतेषु संस्कारै—स्तेष्वरज्यंत जंतवः ॥ ९ ॥ विधाय कृत्रिमां भूषां । बाह्यैः स्रक्चंदनादिभिः ॥ अहो स्वदेहसौंदर्य—मदान्माद्यंति बालिशाः ॥ १० ॥ अन्नं पर्युषितं यद्वत् । संस्कारैः स्वादुतां भजेत् ॥ तथा स्नानादिसंस्कारै—र्देहोऽयं रमणीय-

तां ॥ ११ ॥ नार्योऽप्येकादशश्रोतः–प्रस्रवन्मलनिर्झराः ॥ संस्कृत्य स्वं वपुर्मोहं । जनयंति मुधा नृणां ॥ १२ ॥ यद्यदौपाधिकं तत्त–द्विनश्यति यथा घटः ॥ औपाधिकाश्च संस्कारा–स्तस्मात्तेऽपि विनश्वराः ॥ १३ ॥ सांसारिकेषु भावेषु । त्यक्तभावास्ततो बुधाः ॥ मोक्षसौख्यमसंस्कार–रम्यं सम्यगुपासते ॥ १४ ॥ एवं विचारवीचीभिः । क्षालिते तस्य चेतसि ॥ प्राग्भवीयं प्रादुरासी–द्बोधिर्नैर्मल्यमंजसा ॥ १५ ॥ तत्कालं देवतादत्त—साधुनेपथ्यधारकः ॥ द्विमुखस्त्यक्तसाम्राज्यो । दधौ प्रत्येकबुद्धतां ॥ १६ ॥ इंद्रस्य केतुं समलंकृतं च । निरीक्ष्य लुप्तं च ततः कदापि ॥ ऋद्धिं त्वऋद्धिं प्रसमीक्ष्य बोधा–त्पंचालराजर्षिरवाप धर्मं ॥ १७ ॥ इति द्विमुखकथा समाप्ता.

अथ तृतीयप्रत्येकबुद्धकथा–अस्त्यवंतीषु विख्यातं । नगरं श्रीसुदर्शनं ॥ यद्योगादखिलो युक्तं । जनो जातः श्रियः प्रियः ॥ १८ ॥ आसीन्मणिरथस्तत्र । नरेंद्रो मंत्रतत्परः ॥ परप्राणैकवृत्तिं यो—ऽधत्त खड्गोरगं करे ॥ १९ ॥ युगबाहुस्तदनुजो । यौवराज्यमधारयत् ॥ राज्ञी मदनरेखास्य । रेखामाप सतीषु या ॥ २० ॥ अभूत्तदंगजूरंग–चशाश्चंद्रयशा इति ॥ आ-

बाल्याद्यो गुणाधारे । द्विधा धर्मे धियं दधौ ॥ २१ ॥ राजा मणिरथः पश्यन् । स्नुषामुख-
सिंतत्विषं ॥ अन्यदा जग्रसे काम—तमसेत्यद्भुतं महत् ॥ २२ ॥ विषमेषुकिराते त—न्म-
नोवनविहारिणि ॥ साशंकाः शशवन्नेशु—र्धैर्यधर्मादयो गुणाः ॥२३॥ स दध्यौ दानमानाभ्यां ।
प्राग्वशीकृत्य नित्यशः ॥ समये रमयिष्येऽहं । बद्धस्नेहामिमां सुखं ॥ २४ ॥ अथो मणिरथो
वस्तु । सारं सारं यदैक्षत ॥ तत्तस्यै प्राहिणोत्सर्वं । चेटीभिश्चटुलाशयः ॥ २५ ॥ ज्येष्ठो गु-
णगरिष्ठोऽसौ । युक्तं चिंतां करोति मे ॥ आदत्तादरणी सर्व—मिति सा सरलाशया ॥२६॥
दत्तं गृह्णाति तद्भक्ता । मयीयमिति भूभुजा ॥ स्वचित्तकल्पितानल्प—विकल्पैर्ननृते रहः
॥ २७ ॥ विमुक्तशीलालंकारः । स्वर्णालंकारमादधत् ॥ बध्वा मंदिरमन्येद्यु—र्नृपो मुक्तत्रपो
ययौ ॥ २८ ॥ दंतद्युतिमिषात्पुण्य—परमाणून् वमन्निव ॥ स जगौ तां दयासारे । मथ मे
मन्मथव्यथां ॥ २९ ॥ उवाच वीरजायातः । हसंती सा महासती ॥ राजन् किं भाषसे का-
म—ग्रहिलो महिलोचितं ॥ ३० ॥ वीरोऽसि किमु वैक्लव्यं । ज्येष्ठोऽसि जडिमा किमु ॥ स-
मुद्रोऽसि च तृष्णा किं । बुधोऽसि किमु दुष्टता ॥ ३१ ॥ राज्यसूत्रं प्रकुर्वाणः । स्वसूत्राच्च्य-

उप० वसे किमु ॥ यस्य न स्ववशो ह्यात्मा । तस्यान्यः स्यात्कथं वशः ॥३२॥ कथं स्थापयसे न्याये । प्रकृ-
तीर्विंकृतः स्वयं ॥ न हि स्वयं ब्रुडन् पोत—स्तारयत्युदधौ परान् ॥३३॥ इंद्रियाख्यान् द्विषः पंच ।
चिंता- पुरस्थान् जेतुमक्षमः ॥ अरीन् जिगीषुर्दूरस्थान् । विबुधैः किं न हन्यसे ॥३४॥ कृते विषयसौ-
५५६ ख्यस्य । क्षामस्य क्षणिकस्य च ॥ उदारं शाश्वतं धर्मं । लुंपन् किं बालिशायसे ॥३५॥ कल्प-
द्रुरिव दुःप्रापो । नृजवो न पुनः पुनः ॥ तमल्पसुखलस्यार्थं । मा धाक्षीः कामवह्निना ॥३६॥
परस्त्रीतत्परः प्राणी । विस्तार्येह स्वदुर्यशः ॥ लजतेऽन्यजवे घोर—घना नरकयातनाः ।३७॥
सा कला तत्कुलीनत्वं । सा प्रतिष्ठा च तद्यशः ॥ किं मोहमदिरापाना—ल्लुंपस्येकपदेऽखि-
लं ॥ ३८ ॥ कदलीवदलीकाशां । तदिमां दमपर्शुना ॥ छिंधि दुर्वृत्तमेतद्धि । माक्षासीत्स त-
वानुजः ॥ ३९ ॥ उपदेशा इमे तस्या । मेघमुक्तजलोज्ज्वलाः ॥ न तच्चित्ततडागेऽस्थुः । स्म-
रगोधेन रंध्रिते ॥ ४० ॥ स दध्यौ मां पतीयंती । धत्ते पत्युरियं जयं ॥ तत्स्वार्थसिद्ध्ये मं-
क्षु । हनिष्याम्यनुजं निजं ॥ ४१ ॥ बिज्यती गोत्रवैरात्त—ज्ज्येष्ठदुश्चेष्टितं न सा ॥ पत्युः
प्रोचे प्रकृत्या हि । गंजीराः कुलयोषितः ॥४२॥ स्वप्ने दृष्ट्वा तदा पूर्णं । विशंतं वदने विधुं ॥

उप० चिंता- ७५७

शुश्राव तत्फलं भर्तुः । सुतं सा भाविभूपतिं ॥ ४३ ॥ सदारो युवराजोऽगा—त्सदारोपित-
धीर्वनं ॥ वासंतीसारमन्येद्यु—र्वासंतीमीक्षितुं श्रियं ॥ ४४ ॥ तत्र रंत्वा दिनं सायं । शि-
श्येऽसौ कदलीगृहे ॥ सवधूकः स्वधाम्नीव । यामिकैः सर्वतो वृतः ॥ ४५ ॥ जिघांसुस्तं सुनि-
स्तृंश—मना निस्तृंशपाणिकः ॥ तदा प्रस्ताववित्प्राप । वनं मणिरथो नृपः ॥ ४६ ॥ सुधा-
पिधानमध्यस्थ—कालकूटघटोपमः ॥ भ्रातः क्वासीति पप्रछ । स वत्सल इवोत्सुकं ॥ ४७ ॥
एकतो वारितः पत्न्या । बंधुप्रीत्येरितोऽन्यतः ॥ रंभागर्भगृहं मुक्त्वा । युगबाहुर्ननाम तं
॥ ४८ ॥ जघान स जघन्यात्मा । समं स्वयशसानुजं ॥ जंतुहत्याभिरुद्भूत—कालिम्ने-
वासियष्टिना ॥ ४९ ॥ जाते कलकले तत्रा—यातैः सोऽनीयतान्यतः ॥ याहि याहीति ज-
ल्पद्भि—र्यामिकैः स्वामिभक्तितः ॥ ५० ॥ हा हा पाणेः कृपाणोऽयं । प्रमादादगलन्मम ॥
पतन् दंभान्निजं भावं । ह्रुवानः सोऽविशत्पुरं ॥ ५१ ॥ तत् श्रुत्वाशु हहेत्युक्तिः । सह दे-
तिचिकित्सकैः ॥ प्रातश्चंद्रयशास्तत्र । वृद्धामात्यैः पुरस्कृतः ॥ ५२ ॥ असाध्ये मर्मघातेऽस्मि-
न् । मर्मज्ञैर्गदिते ततः ॥ आगान्मदनरेखापि । विदुषी ज्येष्ठदौष्टवं ॥ ५३ ॥ धीरा धर्मधु-

रीणा सा । पत्युस्तां वीक्ष्य दुर्दशां ॥ गुरुवत्पुरतो भूत्वा । बभाषे समयोचितं ॥ ५४ ॥ पर-
लोकप्रयाणाय । सन्नद्धोऽसि प्रियाधुना ॥ त्वत्प्रिया पुण्यपाथेयं । ततोऽर्पयति किंचन ॥५५॥
कलत्रं पितरौ पुत्राः । सर्वमत्रैव तिष्ठति ॥ यो भवांतरमन्वेति । स एको धर्म आर्हतः ॥५६॥
ततः कलत्रपुत्रादि—ष्वपास्य प्रेमबंधनं ॥ धीर धर्ममसंबंध—बंधुमाराधयाधुना ॥ ५७ ॥
त्रिलोके यानि बिंबानि । शाश्वताशाश्वतानि च ॥ तानीदानीमशेषाणि । वंदस्वानंदसुंदर
॥ ५८ ॥ ज्ञानदर्शनचारित्र—तपोवीर्यव्यतिक्रमात् ॥ आलोच्य कुरु तच्छुद्धिं । मिथ्यादुःकृ-
तदानतः ॥ ५९ ॥ अर्हन् देवो गुरुः साधु—र्धर्मश्च जिनभाषितः ॥ एतत्तत्त्वत्रयीरूपं । त्रि-
धा सम्यक्त्वमस्तु ते ॥ ६० ॥ जीवहिंसानृतस्तैन्या—ब्रह्मसेवापरिग्रहाः ॥ गुणोदधे पिधे-
हीत—दाश्रवद्वारपंचकं ॥ ६१ ॥ कषाया आश्रवा मिथ्या । माया रत्यरती कलिः ॥ अभ्या-
ख्यानपरीवादौ । पैशुन्यं प्रेम रट् तथा ॥ ६२ ॥ त्यजाष्टादशधा पाप—स्थानान्येतानि सर्व-
था ॥ चरमोच्छ्वासनिःश्वासै—र्देहाहारोपधीनपि ॥ ६३ ॥ युग्मं ॥ द्वादशानित्यतामुख्या ।
भावना भावय प्रिय ॥ ता हि पुण्यतरोरंबु—धारा इव विवर्द्धिकाः ॥ ६४ ॥ चतुर्गतिगतो

जंतु—र्यस्त्वया कोऽप्यहूयत ॥ त्रिधा तं क्षमयेदानीं । सोऽपि च क्षमतां त्वयि ॥ ६५ ॥
प्रहृतोऽसि दृढं यच्च । बंधुना पापसिंधुना ॥ प्राक्कर्मणः फलं ह्येत—त्तस्मिन्नपि च मा क्रुध ॥६६॥
प्राक्कृतं सुकृतं किंचि—ज्जैनमार्गानुयायि यत् ॥ तत्तस्य पुष्टये सर्व—मिदानीमनुमोदय
॥ ६७ ॥ स्वयं परोपदेशाद्वा । यत्त्वया दुःकृतं कृतं ॥ निंदानुतापभूः संप्र—त्यपुनःकरणेन तत्
॥ ६८ ॥ यज्जीवं क्षिपति प्रेम—पाशैर्बध्वा भवावटे ॥ स्वार्थैकरसिके तव । कुटुंबे मा प्रिय
स्निह ॥ ६९ ॥ अर्हंतः शरणं संतु । सिद्धाश्च शरणं तव ॥ साधवः शरणं सर्वे । शरणं धर्म
आर्हतः ॥ ७० ॥ यद्ध्यायिनां दवीयस्यो । न तास्त्रिदिवसंपदः ॥ जपतामधुना पंच—परमे-
ष्ठिनमस्क्रियां ॥ ७१ ॥ आर्त्तरौद्रे त्यज ध्याने । दुर्गतिद्वारकुंचिके ॥ दिव्यश्रीकार्मणं धर्म-
ध्यानमेवैकमाश्रय ॥ ७२ ॥ इमामाराधनां हृद्यां । हृद्यवस्थापय प्रिय ॥ साध्या लग्नघटीवे-
यं । वेला माभूः प्रमादभूः ॥ ७३ ॥ एवं तदुक्तमखिलं । श्रद्दधानः समाधिना ॥ युगबाहुः
परां प्रीतिं । दधानो दिवमीयिवान् ॥ ७४ ॥ वह्नीवाहमियत्कालं । बाढं स्वामिद्रुमाश्रिता ॥
राज्ञा महाबलेनापि । न क्षोभ्येस्माधुना ध्रुवं ॥ ७५ ॥ ममाथ नाथहीनायाः । शीलप्राणान्

उप० चिंता- ७६०

हरिष्यति ॥ भूपोऽसौ भिन्नपक्षायाः । पक्षिण्या इव लुब्धकः ॥ ७६ ॥ स्थानत्यागोऽपि मे श्रे-
यान् । न पुनः शीलहीलना ॥ इति निश्चित्य साचाली—न्मुक्त्वा शोकाकुला कुलं ॥ ७७ ॥
अविज्ञातश्रमा मूल—मार्गं मुक्त्वा मनस्विनी ॥ दूरं जगाम यामिन्याः । सख्या इव बलेन
सा ॥ ७८ ॥ निशाराजवधूर्लुप्त—पथा क्लृप्ततमःप्रथा ॥ क्षीणा हीणेव तां वीक्ष्य । लुप्तमा-
र्गमितामसां ॥ ७९ ॥ तस्याः सत्त्वमिव द्रष्टु—मुदियाय दिवाकरः ॥ ववौ च तत्क्लमं भेत्तु—
मिव प्राभातिको मरुत् ॥ ८० ॥ व्यालमालाश्च तच्छील—रक्षामंत्रनियंत्रिताः ॥ आगताः स्वा-
गतं प्रष्टु—मिव तस्याः पुरः स्थिताः ॥ ८१ ॥ मध्याह्ने चक्रिरे तस्या । आतिथ्यं स्वफलैर्ल-
ताः ॥ ददिरे च क्लमच्छेद—सुखं छायाप्रदानतः ॥ ८२ ॥ अनृत्यन्निव तृप्तायां । तत्रत्या वा-
युधूनिताः ॥ छायावृद्धिं ततः प्रापुः । सतीसंतोषणादिव ॥ ८३ ॥ साकारानशनं कृत्वा । सा-
यं तत्रैव सास्वपीत् ॥ हंसतूलीधियं धूली—ष्वपि संतोषिणी व्यधात् ॥ ८४ ॥ क्लांता कां-
तारचारेण । सूनुमन्यूनतेजसं ॥ मनसैव कृताशेष—जन्मोत्सवमसूत सा ॥ ८५ ॥ पुत्रोत्प-
त्तौ तया रंभा । नर्तक्यो गायिकाः शिवाः ॥ मेनिरे कौशिकध्वानै—रद्रयस्तूर्यवादकाः ॥ ८६ ॥

स्वामिनामांकितां मुद्रा—मतंद्रा परिधाप्य सा ॥ बालं निवेशयामास । कोमले कदलीदले ॥ ७७ ॥ प्रातः सा पल्वलं प्राप । रत्नकंबलसंवृतं ॥ मुक्त्वा तत्रांगजं बाल—मंगजंबालशुद्धये ॥ ७८ ॥ स्नांती सा तत्र मूर्त्तेन । पापेनेवांबुहस्तिना ॥ उदञ्चाल्यत सद्यस्सा । व्योम्नि कंदुकवज्जवात् ॥ ७९ ॥ स्वर्याति किमयं देवी । जेतुं किं वापरं पदं ॥ इति तद्रूपवृत्ताभ्यां । विस्मितो विमृशन् हृदि ॥ ८० ॥ विद्याधरो युवा कश्चि—दपतंतीं प्रगृह्य तां ॥ आरोप्य स्वविमानं च । नीत्वा वैताढ्यमूचिवान् ॥ ८१ ॥ युग्मं ॥ अस्त्यत्र स्वर्गदेशीये । देशे गंधारनामनि ॥ पुरं रत्नावहं रत्ना—करवत्कमलास्पदं ॥ ८२ ॥ तत्र विद्याधराधीशो । मणिचूडस्य नंदनः ॥ जातः कमलवत्याहं । ख्यातो नाम्ना मणिप्रभः ॥ ८३ ॥ न्यस्य श्रेणिद्वयीराज्यं । मवाञ्जीरुः पिता मयि ॥ व्रतमादाय चत्वारि । ज्ञानानि समुपार्जयत् ॥ ८४ ॥ तं नंतुं सांप्रतं भक्त्या—नंदी नंदीश्वरस्थितं ॥ व्रजन् व्योम्ना तथावस्थां । विलोक्य त्वामधारयं ॥ ८५ ॥ गुरुयात्रामपि त्यक्त्वा । ततोऽत्राहमुपागमं ॥ ममोपकारिणो हृत्वा । कामार्त्तिमनृणीभव ॥ ८६ ॥ श्रुत्वा तद्वचनं तस्य । श्रुत्योस्तप्तत्रपूपितं ॥ निंदंती स्वात्मनः कर्म । धर्मज्ञा सा

व्यभावयत् ॥ ९७ ॥ मृत्युः पत्युः परित्यागो । बंधूनां प्रसवो वने ॥ करिणोद्दालनं सूनो—र्वियोगोऽत्र समागमः ॥ ९८ ॥ एतावद्दुःखदानेऽपि । दैवोऽद्यापि न तृप्यति ॥ यदेनं खेचराधीशं । कुरुते मयि विकृतं ॥ ९९ ॥ आम्रस्य भंगाय भवेत्फलाली । कलापशोभा शिखिनो वधाय ॥ ईक्षो रसो यंत्रनिपीडनाय । बंधाय कीरस्य च वाग्विलासः ॥ ३०० ॥ अजस्य चायुस्त्रुटयेंगपुष्टि—र्धुर्यस्य भारोद्वहनाय शक्तिः ॥ धनं कदर्यस्य कुकीर्तये च । नियोगिनो न्यक्कृतये प्रभुत्वं ॥१॥ नखस्य वृद्धिः किल कर्तनाय । छिदे सदैवार्जवमंघ्रिपस्य ॥ यथा तथा रूपगुणो ममाऽयं । प्रायः परेभ्यस्तु पराभवाय ॥२॥ त्रिभिर्विशेषकं ॥ पतंति यत्र मोहांधा । एवं भूचरखेचराः ॥ तदिमं मम धिग्रूप—मंधकूपसहोदरं ॥ ३ ॥ उपदेशा अपि व्यर्था । अस्मिन् विषयविप्लुते ॥ दग्धमूलतरुर्वारि—सेकेनापि न पल्लवी ॥ ४ ॥ तदिमं समये युक्त्या । बोधयिष्यामि कामिनं ॥ इति सा निश्चितस्वांता । बभाषे खेचरेश्वरं ॥ ५ ॥ शृणु सौम्य प्रसूताहं । वनेऽद्य निशि नंदनं ॥ प्रातः स्नांती जलेनेनो—द्दालिता विधृता त्वया ॥ ६ ॥ तस्याभिनवजातस्य । शिशोर्दुःखेन शल्यितां ॥ मां तत्र नय तं वात्रा—नय मानय

मद्वचः ॥ ७ ॥ आस्तां त्वद्वचनं पुत्र—शोकशल्येन कीलिता ॥ सौम्य शक्नोम्यहं धर्तुं । प्रा-
णानपि न संप्रति ॥ ८ ॥ प्रज्ञप्तिविद्यया ज्ञात्वा । सोऽवग्नदे त्वदंगजं ॥ मिथिलेशो वना-
द्वाहा—गतो निन्ये निजं पुरं ॥ ए ॥ तत्प्राग्नंदीश्वरद्वीप—यात्रेबां मम पूरय ॥ पश्चात्ते सा-
धयिष्यामि । हितार्थमिति सावदत् ॥ १० ॥ विमाने स्वर्विमानानां । मानच्छिदि निवेश्य सः ॥
तामथादेशकारीव । निनाय द्वीपमष्टमं ॥ ११ ॥ तत्रांजनमहीध्रेषु । तथा दधिमुखाद्रिषु ॥
स्वगोपनीतपुष्पाद्यै—र्नित्यचैत्यानि सार्चयत् ॥ १२ ॥ सा तादृक्प्रतिमालोका—न्मन्यमाना
स्वमुत्तमं ॥ मणिप्रनयुतानंसी—न्मणिचूरुमहामुनिं ॥ १३ ॥ मन्मथव्यथितं मत्वा । ज्ञाना-
तिशयतः सुतं ॥ चक्रे विषयकालुष्य—नाशिनीं देशनां मुनिः ॥ १४ ॥ अवाप्य मानवीं योनिं ।
बुधो रत्नखनीमिव ॥ कः शीलमणिमुत्सृज्य । गृह्णाति विषयोपलं ॥ १५ ॥ मृगा इवांगिनो
जाता—शंसा संसारधन्वनि ॥ विनश्यंति हहा नोग—कदाशामृगतृष्णया ॥ १६ ॥ पांगु-
पंगुत्वदौर्नाग्य—कुष्टादिकुसुमोत्करं ॥ नरकाख्यं फलं चैषा । सूते दुःशीलतालता ॥ १७ ॥
एवं पितुर्गिरा मुक्त्वा । परस्त्रीसंगमानवं ॥ खगो मदनरेखां तां । ननाम नगिनीधिया ॥ १८ ॥

स्मरवीरः पितुर्वैरा—द्यः सुते घातमातनोत् ॥ वीरमानी मुनिर्गौत्रि—स्ततोऽपि तमदूरयत्
॥ १९ ॥ मुनिस्तां पुत्रदुःखार्त्तां । जगौ किं साध्वि खिद्यसे ॥ यत्र मोचागृहेऽमोचि । बालः
पुण्यसखस्त्वया ॥ २० ॥ विलोमशिक्षिताश्वेन । तत्र पद्मरथो नृपः ॥ मिथिलातः समाया-
तः । प्रीतस्तं बालमाददे ॥ २१ ॥ तं नीत्वा मिथिलां पुष्प—चूलापत्न्यै प्रदाय च ॥ अधुना
विदधानोऽस्ति । तस्य जन्ममहोत्सवं ॥ २२ ॥ को हेतुरेतयोः प्रेम्णि । शंसयानेति सा स-
ती ॥ मुनिनोचेऽनयोः प्रेमा—नवप्राग्भवयोगतः ॥ २३ ॥

तथाहि जंबूद्वीपेऽस्ति । प्राग्विदेहविभूषणे ॥ विजये पुष्कलावत्यां । नगरं मणितोरणं
॥ २४ ॥ तत्रामितयशाश्चक्री । तस्याभूतामुभौ सुतौ ॥ पुष्पसिंहरत्नसिंहौ । राज्ञीपुष्पवतीभ-
वौ ॥ २५ ॥ पितर्युपरते जैन—शासनोपासनोद्यतौ ॥ राज्यं चतुरशीतिं तौ । पूर्वलक्षा वि-
तेनतुः ॥ २६ ॥ प्रांते प्रपद्य चारित्रं । पूर्वलक्षाणि षोडश ॥ द्वादशे त्रिदिवे दैवीं । तावशि-
श्रियतां श्रियं ॥ २७ ॥ ततस्तौ धातकीखंडे । हरिषेणार्धचक्रिणः ॥ पत्न्यां समुद्रदत्तायां ।
भारतेऽभवतां सुतौ ॥ २८ ॥ नाम्ना तौ सागरादेव—दत्तौ परमधार्मिकौ ॥ एकादशार्हतो

दीक्षा—मादत्तां दृढसुव्रतात् ॥ २ए ॥ तौ दीक्षातस्तृतीयेऽह्नि । शंपासंपातपीडितौ ॥ क्ष्मभू
बभूवतुः कल्पे । महाशुक्रे महौजसौ ॥ ३० ॥ जंबूद्वीपे जिनं नेमिं । द्वाविंशं तावपृछतां ॥
अतःपरं क्व नौ जन्म । कथं वा बोधिसंभवः ॥ ३१ ॥ जगदे जगदीशेन । मुख्यो वां मिथि-
लापतेः ॥ तनयो जयसेनस्य । भावी पद्मरथो नृपः ॥ ३२ ॥ सुदर्शनपुरेशस्य । युगबाहोस्त-
नूरुहः ॥ पत्न्यां मदनरेखायां । द्वितीयस्तु भविष्यति ॥ ३३ ॥ क्वचिमं पितृपुत्रत्वं । तत्रा
साद्य महीपती ॥ बुद्धौ प्रव्रज्य लप्स्येथे । मोक्षलक्ष्मीं युवां ध्रुवं ॥ ३४ ॥ श्रुत्वा मुक्तिपुरी-
वास—मासन्नं मुदिताशयौ ॥ अत्यवाहयतामायुः । शेषं तौ लेखशेखरौ ॥ ३५ ॥ एक-
श्च्युत्वा तयोः पद्म—रथोऽभून्मिथिलेशिता ॥ त्वत्कुक्षिमुररीचक्रे । द्वितीयस्तु महासति
॥ ३६ ॥ तेन पद्मरथः प्राच्य—प्रेम्णारज्यत्त्वांगजे ॥ न जीर्यतो यतो राग—रोषौ भवश-
तैरपि ॥ ३७ ॥ पुष्पवृष्टिरभूदत्रा—ददत्रास्मिन् क्षणेऽजितः ॥ विस्मितश्च खगोऽद्राक्षी—द्विमा-
नं गगने पुरः ॥ ३७ ॥ तदैव तस्मादुत्तीर्य । देवः कश्चन तां सतीं ॥ प्रणम्य प्रथमं पश्चा—
त्तं ननाम मुनीश्वरं ॥ ३ए ॥ खगो जगाद देवासी—न्मम मौनव्रतं परं ॥ अयं पुनस्तवा-

चारो । बलात्तत्याजयिष्यति ॥ ४० ॥ देव त्वं सर्वलोकेज्यो । ज्ञानवाजययायवानसि ॥ न वेत्सि क्रमभंगं किं । मुनेः पूर्वं स्त्रियं नमन् ॥ ४१ ॥ यद्यप्येषा सुशीलास्ति । तथापि न हि साधुना ॥ समीभवति वल्लीव । बद्धमूलापि शाखिना ॥ ४२ ॥ तमसा ग्रस्यते दीपो । यदि तत्केन दीप्यते ॥ चेत्त्वं न्यायाद्विपर्येषि । ततः किमुपदिश्यते ॥ ४३ ॥ यथा रोगेऽतिसाराख्या । धर्मराजश्रुतिर्यमे ॥ श्मशाने पितृगेहाह्वा । तथा ते विबुधाभिधा ॥ ४४ ॥ यद्वा विमृश्यते किं ते । वसन्नपि सुरालये ॥ एवं निर्भर्त्सितो विद्या—धरेणोवाच निर्जरः ॥ ४५ ॥ किमेवं भाषसे खेट । परमार्थबहिर्मुख ॥ सर्वेभ्यः पूर्वमेषैव । वंद्या धर्मगुरुर्मम ॥ ४६ ॥ गुरुरेव मुनींद्रोऽसौ । मम त्वेषोपकारिणी ॥ दूरे क्षीरोदधिस्तृष्णां । हंति किं न गलंतिका ॥ ४७ ॥ यां कार्यंस्म क्रियामंत्यां । युगबाहुभवेऽनया ॥ हतपापस्तया प्राप—मिदृशीं त्रैदशीं श्रियं ॥४८॥ स्थापितो येन यो धर्मे । गुरुणाऽगारिणापि वा ॥ स हि धर्मगुरुस्तस्या । भवेद् दुःप्रत्युपक्रियः ॥४९॥ इत्युक्तिबोधिते खेटे । व्यवदेतां क्षणं मिथः ॥ अहंपूर्विकया तस्या । उपकाराय तावुभौ ॥ ५० ॥ निषेध्य खेचरं देव—स्तामूचे योजितांजलिः ॥ महोपकारिणि

बूहि । किं ददामि तवेप्सितं ॥ ५१ ॥ सेंद्रा अपि न यां दातु—मृभवः प्रभविष्णवः ॥ सा-
भीष्टा मुक्तिरेका मे । न कामे न श्रियां मनः ॥ ५२ ॥ परं मे संप्रति प्रीतः । पुत्रं त्रिदश
दर्शय ॥ येन तद्वदनालोक—निवृत्ता व्रतमाश्रये ॥ ५३ ॥ वदंतीमेव तामेवं । मिथिलां त्रि-
दशोऽनयत् ॥ श्रीमल्लिनमिजन्मादि—कल्याणैः पूतभूतलां ॥५४॥ तत्र चैत्यानि नत्वा सा ।
साध्वीनामाश्रयं ययौ ॥ तस्या हि सर्वकार्येषु । धर्मस्यैव पुरस्कृतिः ॥ ५५ ॥ सुरेण सह सा-
भंसी—त्तत्र साध्वीर्यथाक्रमं ॥ अश्रौषीच्च प्रवर्त्तिन्या । व्याख्यां भवनिवर्तिकां ॥ ५६ ॥ स्व-
भ्रराज्योपमा भोगाः । संयोगा अपि न स्थिराः ॥ भंगुराश्च धनाभोगाः । किं भो गार्हस्थ्य-
मिष्यते ॥५७॥ संदेहे संपदः सर्वा । विपदस्तु सुनिश्चिताः ॥ सक्तास्तथापि संसारे । जग्ना
नाविव वाणिजाः ॥ ५८ ॥ उत्तमाः कुर्वते नित्यं । धर्मं विपदि मध्यमाः ॥ न संपत्तौ न चा-
पत्तौ । जघन्याः पुनरंगिनः ॥ ५९ ॥ शृण्वतीति प्रवर्तिन्या । वचो वैराग्यकारि सा ॥ अ-
भ्यर्थ्यतेस्म देवेन । पुत्रं द्रष्टुं पुनः पुनः ॥ ६० ॥ न स्यात्कस्य सुतास्येंदौ । दृष्टे रागादिरुद्भ-
तः ॥ तन्मुक्तिसुखकामायाः । पुत्रप्रेम्णा कृतं मम ॥ ६१ ॥ ध्यात्वेति भवनिर्वेदा—त्तदैवोप-

प्रवर्तिनीं ॥ सा प्रवव्राज देवेन । कृतनिःक्रमणोत्सवा ॥ ६२ ॥ यथागतं गते देवे । यथाव-द्विदितश्रुता ॥ सुव्रतेति श्रुता साध्वी । निःस्पृहा विजहार सा ॥ ६३ ॥ सोऽपि बालोऽवृध-त्पद्म—रथराजस्य सद्मनि ॥ दुर्वारा अपि तद्भाग्या—न्नेमिरे वैरिभूभुजः ॥ ६४ ॥ नमिरित्या-ख्यया मातृ—पितृभ्यां कीर्तितस्ततः ॥ साक्षिमात्रीकृताचार्यः । समये सोऽजजरकलाः ॥६५॥ जपास्य पुष्पचापस्य । सवयः सवयः क्रमात् ॥ कन्या ऐक्ष्वाकवीरष्ट—सहस्रमुपयेमिवान् ॥६६॥ तस्मै पद्मरथो दत्वा । राज्यभारं धृतव्रतः ॥ कर्ममर्माणि निर्मथ्य । नित्यशर्मपदं य-यौ ॥ ६७ ॥ नमिः शमितनिःशेष—द्वेषिदावः प्रजावनीः ॥ घनश्रीर्वर्धयामास । दुर्दिनं द-लयन्नपि ॥ ६८ ॥ विनापि समरायासं । त्रासं यात्यरिमंडले ॥ बभूव तस्य दोर्दंड—कंडूवै-द्यो न कश्चन ॥ ६९ ॥

इतश्च भ्रातरं हत्वा । सुप्तो मणिरथो नृपः ॥ रौद्रध्यानधरोंगुष्टे । दष्टो दुष्टाहिना निशि ॥ ७० ॥ आकृष्टो नरकस्येवा—ह्वानदूतेन भोगिना ॥ स ययौ नरकं तुर्यं । न सुखं क्वापि पापिनां ॥ ७१ ॥ अग्रेऽपि भ्रातरि प्रीति—स्तस्य नाभून्मृतोऽपि तत् ॥ स्वबंधावूर्ध्वगे भेजे ।

स पापीयानधोगतिं ॥ ७१ ॥ कृते तयोर्द्वयोरौर्ध्व— देहिके मंत्रिपुंगवैः ॥ निवेशितश्चंद्र- यशाः । साम्राज्ये यौगबाहवः ॥ ७२ ॥ सोऽपि बाहुबलेनैव । दमयन् दुर्दमानपि ॥ स्वज्ञावे- नाज्ञवद्भूरि—वाहवाहनकौतुकी ॥ ७४ ॥ इतश्च नमिभूपस्य । मदांधः पट्टसिंधुरः ॥ व्य- सनीव श्रुतध्यान—मालानमुदमूलयन् ॥ ७५ ॥ आवासान् भंजता वृक्षा—नस्यता मृद्नता जनान् ॥ अकालेऽकारि कल्पांत-कालो व्यालेन पत्तने ॥ ७६ ॥ खखरक्तापरे पौर—लोके कोलाहलाकुले ॥ नुन्नस्तत्सुकृतेनेव । निर्ययौ नगराद्गजः ॥ ७७ ॥ पवनं पंगुलीकुर्व—स्तरसा- तिरसाकुलः ॥ उल्लंघ्य मिथिलासीमां । विदेहानपि सोऽमुचत् ॥ ७८ ॥ चरन्नवंतीमायातः । सुदर्शनपुरांतिके ॥ स कैश्चिज्जगदे चंद्र—यशसो वाहवाहिनः ॥ ७९ ॥ तुरंगरंगमुत्सृज्य । गजग्रहणसाग्रहः ॥ ततस्तंप्रत्यधाविष्ट । केसरीव नरेश्वरः ॥ ८० ॥ क्षुत्तृषामार्गसंचार—श्रांतं तं दंतिपुंगवं ॥ वशीकृत्य सुखेनैव । नृपः स्वालानमानयत् ॥ ८१ ॥ जनाननात् श्रुतिं प्राप्ते । करिव्यतिकरेऽखिले ॥ श्रीचंद्रयशसे प्रैषीद् । दूतमाप्तं नमिनृपः ॥ ८२ ॥ सदः सुदर्शनपुर— प्रभोः प्राप्य धिया पटुः ॥ दूतोऽभ्यधत्त भूपाल । हितकामस्त्वयि ब्रुवे ॥ ८३ ॥ अजानता

८५०
चिंता-
७७०

त्वयाग्राहि । गजः श्रीनमिभूभुजः ॥ अज्ञानमिति तत्तेन । सोढं सिंधुरमर्पय ॥ ८४ ॥ अमुष्य दक्षमुख्य त्व—मेकस्य करिणः कृते ॥ अनेकानेकपं राज्यं । न हारयितुमर्हसि ॥ ८५ ॥ भूपोऽभ्यधात् क्रुधा ब्रूषे । दूत भूतगृहीत्व किं । गजाश्वाद्यं न कस्यापि । वीरभोज्या वसुंधरा ॥ ८६ ॥ कथं स्वयं समायात—मिमं स्तंबेरमं ददे ॥ शेषानपि गजांस्तस्य । जिघृक्षुरहमस्मि यत् ॥ ८७ ॥ मिषेणानेन युद्धार्थी । स चेत्तत्किमुपैति न ॥ एवं न्यक्कृत्य तं दूतं । नरेंद्रो निरवासयत् ॥ ८८ ॥ श्रुत्वा दूतस्य धिक्कारं । रणरंगकुतूहली ॥ नमिस्तमभ्यमैत्रीणः । प्रत्यचालीच्चमूवृतः ॥ ८९ ॥ देशसीमागतं चंद्र—यशास्तमभिषेणयन् ॥ न्यषेधि शकुनैः पूर्वं । ततश्च सचिवैरपि ॥ ९० ॥ षाड्गुण्यनिपुणस्तिष्ट—न्नृपः स्वपुर एव सः ॥ सज्जीचकार प्राकार—परिखाविशिखादिकं ॥ ९१ ॥ स्वदेशमिव तं देशं । नमिः क्रांत्वा सविक्रमः ॥ सुदर्शनपुरोपांते । निजावासानदापयत् ॥ ९२ ॥ चम्वोर्युद्धमवर्तिष्टां—तरंगबहिरंगयोः ॥ परिखाषाविधिर्व्यर्थो । बाह्यैस्तु बलिभिः कृतः ॥ ९३ ॥ तदा सा सुव्रता साध्वी । श्रुत्वा युद्धं स्वपुत्रयोः ॥ दधानांतर्गतं स्नेह—मन्वाषिष्ट महत्तरां ॥ ९४ ॥ रणाधिकारिणावेतौ । भृत्वा दु-

र्गतिमाप्स्यथः ॥ यूयं यद्यनुमन्यध्वे । तदिमौ शमयाम्यहं ॥ ९५ ॥ तद्दत्तानुमतिः साथ ।
कृपया प्रेरिता सती ॥ बाह्यं कटकमागत्य । नमेरावासमासदत् ॥ ९६ ॥ नमिः प्रणम्य ता-
मूचे । कागतासि महासति ॥ अत्रागमो मुदेऽस्माकं । जटानामेव केवलं ॥ ९७ ॥ साध्वी
जगाविहागबं । रक्षितुं तव विप्लवं ॥ कोऽयं वत्स समारेजे । स्वगोत्रकलहस्त्वया ॥ ९८ ॥
अयं गोत्रकलिः पाप—प्रसवोऽकीर्तिकारणं ॥ संपदः कंपदः सर्व—विपदां चैकमास्पदं ॥९९॥
स्वजातिकुट्टनं लोह—मधमं सर्वधातुषु ॥ स्वजातिवेधकृद्धज्रं । वृद्धीबुः स्त्री दधाति न ॥४००॥
अब्जेनाब्जस्य यल्लक्ष्मी—र्न सेहे लब्धसंपदा ॥ ततस्तारैर्दिवा लब्ध—मार्गैरिव स तत्यजे
॥ १ ॥ स्वशिरःस्फोटनं स्वोकः—प्लोषं स्वपटपाटनं ॥ स्वगोत्रकलहं चापि । विदधीत सुधी-
र्न हि ॥ २ ॥ गोत्रग्रसनमुत्पातो । विना मत्स्योऽनुपन्नगान् ॥ किं वत्स नीतितत्त्वज्ञ । तदेव
क्रियते त्वया ॥ ३ ॥ अयं मतंगजोऽग्राहि । यदि ते ज्येष्ठबंधुना ॥ तदा प्रीतिपदे हंत । किं
कुलीन विषीदसि ॥ ४ ॥ तत् श्रुत्वाथ नमिः प्रोचे । जैना नानृतभाषिणः ॥ त्वमेवं भाषसे
साध्वि । ततः संदेग्धि मे मनः ॥ ५ ॥ पुत्रः पद्मरथस्याहं । युगबाहोरयं पुनः ॥ वद सौदर्य-

संबंधः । संगतः कथमावयोः ॥ ६ ॥ साध्वी जगौ यदि त्यक्त्वा । मत्सरं वत्स पृच्छसि ॥ तर्हि योग्योऽसि निःशेष—रहस्यानां गुणाकरः ॥ ७ ॥ राज्याभिमानिनः केऽपि । न शृण्वंति गुरोर्गिरः ॥ शृण्वंति वा तदा धीर । धृत्वा गजनिमीलिकं ॥ ८ ॥ युगबाहुस्तव पिता । जननीयमहं पुनः ॥ पद्मं च पुष्पचूलां च । विद्धि तौ बालहारकौ ॥ ९ ॥ चंद्रोज्ज्वलयशाश्चांद्र—यशो एष तवाग्रजः ॥ तेन वैरायमाणस्य । नयस्तनय कस्तव ॥ १० ॥ ज्यायसां माननादेव । मान्यः स्यान्मनुजः सतां ॥ यतः पुरस्कृतज्येष्ठो । वैशाखः सुमनःप्रियः ॥ ११ ॥ अथ वृद्धपरिप्रश्ना—न्नाममुद्रानिरीक्षणात् ॥ उल्लासाच्च स्वचित्तस्य । तस्या मेने नमिर्वचः ॥ १२॥ जगौ च गौरवादेत—देव श्रीसदनं दिनं ॥ त्वं तीर्थेभ्यः परं तीर्थं । यत्र माता ममामिलः ॥ १३ ॥ शश्वज्जौरव्य एवायं । भ्राता चंद्रयशा मम ॥ प्रत्यायस्तु कथंकार—मवऋवदनो जनः ॥ १४ ॥ विधाय बंधुसंबंध—मीदृक् समरडंबरात् ॥ निवर्ते चेत्तदावर्ते । मानम्लानैः पताम्यहं ॥ १५ ॥ भिक्षापि स्यादभिक्षायै । याभिमाने न लभ्यते । नवेद्राज्यमपि त्याज्यं । विना मानं मनस्विनां ॥ १६ ॥ भ्राताभ्येति यदि ज्येष्ठः । सप्ताष्टानि पदान्यसौ ॥ तन्मात-

र्नाभिमानस्य । भंगः स्यान्नमतोऽपि मे ॥ १७ ॥ एभिस्तद्वचनैर्भिन्न—हृदया सा महासती ॥
दत्तद्वारेऽपि नगरे—ऽविशद्वारिकया रयात् ॥ १८ ॥ वीक्ष्य चंद्रयशा भूप—स्तामवंदत सं-
मदी ॥ चिरादथ तयोरास—न्मिथः स्वस्वकथाप्रथाः ॥ १९ ॥ मातः क स पितुर्न्यासः । पृ-
ष्टा तेनेति साभ्यधात् ॥ प्रबुद्ध येन रुद्धोऽसि । स एवायं तवानुजः ॥ २० ॥ तदाकर्ण्य सु-
धासिक्त । इवानंदं भजन्नृपः ॥ ममानुजं विना को मां । रुणद्धीति व्यभावयत् ॥ २१ ॥ नि-
र्ययौ नगरादाशु । पदातीभूय भूपतिः ॥ महीपीठे लुठन् प्रीत्या । तमभ्येत्यानमन्नमिः ॥२२॥
हर्षाश्रुदंभतो हृद्य—मातं हर्षं किरन्निव ॥ सस्वजे स्वयमुध्धृत्य । बंधुं चंद्रयशा भृशं ॥२३॥
तयोर्भूमिभृतोः संधौ । स को यो न मुदं दधौ ॥ रणरंगपरिभ्रष्टान् । विना सेनाद्वयीभटा-
न् ॥ २४ ॥ मुहूर्तमिदमेवाहं । यत्र बंधुमवैक्षिषि ॥ तदैवेति नमेर्द त्त—राज्यो राजाभजद्
व्रतं ॥ २५ ॥ कुर्वन् राज्यद्वयं लोक—द्वयार्हस्वार्थसाधकः ॥ अभुंक्त सुखमद्वैतं । मिथिला-
स्थो नमिर्नृपः ॥ २६ ॥ तस्य देहेऽन्यदा दाह—ज्वरः प्राक्कर्मदोषतः ॥ अभून्न भूतले नापि ।
शय्यायां रतिमीयुषः ॥ २७ ॥ ये विद्युदग्निदावाग्नि—भ्राष्ट्राग्निवाडवाग्नयः ॥ ते सर्वे मम दे-

द्दांत—र्निवसंतीत्यमंस्त सः ॥ २७ ॥ वनान्यकदलीकानि । निःपद्मानि सरांसि च ॥ निःपुष्पाश्चक्रिरे वल्ल्यो । वैद्यैस्तद्दाहशांतये ॥ २९ ॥ ईयुः सहस्रशो वैद्या । उपचाराश्च लक्षशः ॥ व्यधीयंत न केनापि । प्रशशाम तदामयः ॥ ३० ॥ षण्मासातिक्रमेऽन्येद्यु—श्चंदनं तत्पुरंध्रयः ॥ भर्तृभक्त्या स्वयं दूरी—कृत्य भृत्यानघर्षयन् ॥ ३१॥ तासां चंदनघर्षे यः । प्रोत्तस्थे कंकणक्वणः ॥ भूभुजा विषवन्मेने । कामिश्रुतिसुधापि सः ॥ ३२ ॥ तद्ज्ञात्वा भर्तृभक्तास्ता । मंगलार्थमधारयन् ॥ आलवालोपमं बाहु—वल्ल्या वलयमेककं ॥ ३३ ॥ अथ ध्वनिमनाकर्ण्य । नमिः पप्रच्छ पार्श्वगान् ॥ तेऽप्यूचुर्वलयैक्येन । देव नोत्तिष्ठति ध्वनिः ॥ ३४ ॥ ततश्चरमदेहत्वा—त्तत्वार्थी स व्याचिंतयत् ॥ तावत्कोलाहलो हंत । यावद्द्विजयते गणः ॥ ३५ ॥ याऽसूयावैरपैशुन्य—प्रमुखा दूषणावली ॥ सा सर्वा समुदायोत्था । न ह्येकः कापि कुप्यति ॥३६॥ ज्वलनो न ज्वलेदेको । नैको युध्येत कुक्कुटः ॥ नदेदेकं न वादित्रं । कलहायेत नैककः ॥३७॥ शब्दायतेस्म भूयोभि—र्युक्तं यत्करकंकणं ॥ एकीभूतं तदेवेदं । मौनमाश्रित्य तिष्ठति ॥ ३८ ॥ जन्म मृत्युः सुखं दुःख—मेकस्यैव शरीरिणः ॥ एक एव गलत्कर्म—जालः प्राप्नोति निर्वृतिं

॥ ३९ ॥ न जन्मवार्द्धकव्याधि—वैधुर्याद्व्यते जनः ॥ भूयोभिरपि संयोगै—स्तत्तेषां संग्रहो वृथा ॥ ४० ॥ ये ज्ञानदर्शने स्वीये । तयोर्भेदधियं दधन् ॥ बाह्यान् पुत्रकलत्रादीन् । जरूः स्वीकृत्य नृत्यति ॥ ४१ ॥ देहे शाम्यति चेद्दाह—स्तत्कैवल्यमहं श्रये ॥ ध्यायन्निति नृपः प्राप । चिराच्चेतःसुखादिकं ॥ ४२ ॥ धर्मध्यानसुधापान—शांताशेषवपुर्व्यथः ॥ स षण्मासप्रवासिन्या । सिषेवे निद्रया निशि ॥ ४३ ॥ आरोहं कुंजरस्थोऽहं । मेरोः शृंगं क्षणादिति ॥ तदा कार्तिकराकायाः । शेषे स्वप्नं ददर्श सः ॥ ४४ ॥ प्रातः प्रातस्त्यपणव—ध्वानैर्जागरितो नृपः ॥ काप्यन्वभूवमीदृक्कं । स्वप्नार्थमिति दध्यिवान् ॥ ४५ ॥ प्राग्भवे शक्रकल्पेऽहं । पुष्पोत्तरविमानतः ॥ देवः सन् मेरुमारोहं । जिनजन्मादिपर्वसु ॥ ४६ ॥ इति जातिं स्मरन् बुद्धः । कंकणैकत्वचिंतनात् ॥ गृहीतचारुचारित्रो । निर्ययौ नगरान्नमिः ॥ ४७ ॥ अनन्यसदृशं तस्य । संवेगं वीक्ष्य विस्मितः ॥ परीक्षामास तं विप्री—भूय प्रथमवासवः ॥ ४८ ॥ बहूक्तिभिरपि क्षोभ—मभजन् जृंभविद्विषा ॥ स्तुतः प्रत्येकबुद्धोऽसौ । विजहार महामुनिः ॥ ४९ ॥ इति श्रीनमितृतीयप्रत्येकबुद्धकथा समाप्ता. ॥

ह्यंत—र्निवसंतीत्यमंस्त सः ॥ २८ ॥ वनान्यकदलीकानि । निःपद्मानि सरांसि च ॥ निःपु-
ष्पाश्चक्रिरे वल्ल्यो । वैद्यैस्तद्दाहशांतये ॥ २९ ॥ ईयुः सहस्रशो वैद्या । उपचाराश्च लक्षशः ॥
व्यधीयंत न केनापि । प्रशशाम तदामयः ॥ ३० ॥ षण्मासातिक्रमेऽन्येद्यु—श्चंदनं तत्पुरं-
ध्रयः ॥ भर्तृभक्त्या स्वयं हूरी—कृत्य भृत्यानघर्षयन् ॥ ३१॥ तासां चंदनघर्षे यः । प्रोत्तस्थे
कंकणक्कणः ॥ भूभुजा विषवन्मेने । कामिश्रुतिसुधापि सः ॥ ३२ ॥ तद्ज्ञात्वा भर्तृभक्तास्ता ।
मंगलार्थमधारयन् ॥ आलवालोपमं बाहु—वल्ल्या वलयमेककं ॥ ३३ ॥ अथ ध्वनिमनाक-
र्ण्य । नमिः पप्रछ पार्श्वगान् ॥ तेऽप्यूचुर्वलयैक्येन । देव नोत्तिष्ठति ध्वनिः ॥ ३४ ॥ ततश्चर-
मदेहत्वा—त्तत्वार्थी स व्याचिंतयत् ॥ तावत्कोलाहलो हंत । यावद्विजयते गणः ॥ ३५ ॥ या-
ऽसूयावैरपैशुन्य—प्रमुखा दूषणावली ॥ सा सर्वा समुदायोत्था । न ह्येकः कापि कुप्यति ॥३६॥
ज्वलनो न ज्वलेदेको । नैको युध्येत कुक्कुटः ॥ नदेदेकं न वादित्रं । कलहायेत नैककः ॥३७॥
शब्दायतेस्म भूयोभि—र्युक्तं यत्करकंकणं ॥ एकीभूतं तदेवेदं । मौनमाश्रित्य तिष्ठति ॥ ३८ ॥
जन्म मृत्युः सुखं दुःख-मेकस्यैव शरीरिणः ॥ एक एव गलत्कर्म—जालः प्राप्नोति निर्वृतिं

॥ ३९ ॥ न जन्मवार्द्धकव्याधि—वैधुर्यार्द्दश्यते जनः ॥ भूयोभिरपि संयोगै—स्तत्तेषां सं-
ग्रहो वृथा ॥ ४० ॥ ये ज्ञानदर्शने स्वीये । तयोर्भेदधियं दधन् ॥ बाह्यान् पुत्रकलत्रादीन् ।
जडः स्वीकृत्य नृत्यति ॥ ४१ ॥ देहे शाम्यति चेद्दाह—स्तत्कैवल्यमहं श्रये ॥ ध्यायन्निति
नृपः प्राप । चिराच्चेतःसुखादिकं ॥ ४२ ॥ धर्मध्यानसुधापान—शांताशेषवपुर्व्यथः ॥ स ष-
ण्मासप्रवासिन्या । सिषेवे निद्रया निशि ॥ ४३ ॥ आरोहं कुंजरस्थोऽहं । मेरोः शृंगं क्षणा-
दिति ॥ तदा कार्तिकराकायाः । शेषे स्वप्नं ददर्श सः ॥ ४४ ॥ प्रातः प्रातस्त्यपणव—ध्वा-
नैर्जागरितो नृपः ॥ काप्यन्वभूवमीदृक्षं । स्वप्नार्थमिति दध्यिवान् ॥ ४५ ॥ प्राग्भवे शक्रक-
ल्पेऽहं । पुष्पोत्तरविमानतः ॥ देवः सन् मेरुमारोहं । जिनजन्मादिपर्वसु ॥ ४६ ॥ इति जा-
तिं स्मरन् बुद्धः । कंकणैकत्वचिंतनात् ॥ गृहीतचारुचारित्रो । निर्ययौ नगरान्नमिः ॥ ४७ ॥
अनन्यसदृशं तस्य । संवेगं वीक्ष्य विस्मितः ॥ परीक्षामास तं विप्री—भूय प्रथमवासवः
॥ ४८ ॥ बहूक्तिभिरपि क्षोभ—मभजन् जृंभविद्विषा ॥ स्तुतः प्रत्येकबुद्धोऽसौ । विजहार
महामुनिः ॥ ४९ ॥ इति श्रीनमितृतीयप्रत्येकबुद्धकथा समाप्ता. ॥

अथ चतुर्थप्रत्येकबुद्धकथा यथा— अस्ति गंधारविषये । पत्तनं पुंड्रवर्धनं । योगपट्टायते वप्रो । यस्य सद्गुणयोगिनः ॥ १ ॥ प्रजा पितेव भूपाल—स्तत्र सिंहरथोऽन्वशात् ॥ कीर्तिवल्ली व्यवर्धिष्ट । यस्य दानांबुधारया ॥ ५१ ॥ समितिस्थायिना येन । सदा सौहार्दधारिणा ॥ अर्थिनः प्रत्यर्थिनो वा । प्रापिताः सुरसंपदं ॥ ५२ ॥ अन्यदा वासवस्येव । तस्यालंकुर्वतः सभां ॥ उत्तराहौ महोत्साहौ । वाहौ केनापि ढौकितौ ॥ ५३ ॥ मौक्तिके वारि कुसुमे । सौरभ्यं भूपतौ नयः ॥ गुरौ क्रिया तरौ छाया । सारमश्वे गतिः पुनः ॥ ५४ ॥ तत्परीक्ष्य गतिं हेतौ । स्वीकार्याविति भूपतिः ॥ आरुरोह तयोरेक—मनोरेकमना हयं ॥५५॥ युग्मं ॥ आचकर्ष प्रकर्षेण । भूपो वल्गां यथा यथा ॥ स विपर्यस्तमभ्यस्त—स्तत्वरेऽश्वस्तथा तथा ॥ ५६ ॥ दधानश्चरणे रंग—मश्वः संगे क्ष्माभृतः ॥ चतुर्गतीरतीत्याप—दुचितां पंचमीं गतिं ॥ ५७ ॥ पदे पदेऽधिकं तेजः । वाजी वादीव दर्शयन् ॥ प्रतिपक्षमिव क्ष्मापं । स्वसाधनमतित्यजत् ॥ ५८ ॥ धावद्भिर्हास्तिकाश्वीयै—रप्यनासादितो हयः ॥ भूयो वर्त्मात्ययेऽरण्य—मध्यं मध्यंदिने ययौ ॥ ५९ ॥ तत्र श्रांते तृषाक्रांते । क्ष्माकांते रश्मिमुज्झति ॥

उज्ञ्झतिं तुरंगोऽपि । स्वं प्राप्त इव मंदिरं ॥ ६० ॥ घासग्रासपयःपान—प्रीतं बध्वा तरौ हयं ॥ भूपः पुष्पफलैः प्राण—वृत्तिं स्वस्याप्यकल्पयत् ॥ ६१ ॥ अंतर्वणं परिभ्राम्यन् । स बली सबलिक्षणे ॥ ददर्श पर्वतं सर्व—श्वापदानां पदं पुरः ॥ ६२ ॥ तमारूढः स तन्मूर्ध्नि । विलुलोके हिरण्मयं ॥ स्वर्विमानमिवोत्तीर्णं । प्रासादं सप्तभूमिकं ॥ ६३ ॥ प्रविष्टः कौतुकी तस्य । मध्ये निध्यायतिस्म सः ॥ कांचिदुद्भिन्नतारुण्यां । कन्यामन्यामिव श्रियं ॥ ६४ ॥ किमेषा रूपसर्वस्वं । मुषित्वा लेखयोषितां ॥ गिरिदुर्गे वसत्यस्मि—न्नित्यंतर्विममर्श सः ॥ ६५ ॥ सोऽनर्घ्यरूपां दत्तार्घां । तामूचे स्निग्धया गिरा ॥ गौरि त्वं कासि कस्यासि । किं वा शैलेऽत्र तिष्ठसि ॥ ६६ ॥ सापि तं चित्तचौरत्वाद् । दृग्बाणैर्निघ्नती जगौ ॥ रविरस्तं प्रयात्येष । प्रक्षालय निक्षालय ॥ ६७ ॥ वेद्यामस्यां समासेन । तन्मां प्रथममुद्वह ॥ आख्यासे तव सुस्थस्य । स्ववृत्तमखिलं ततः ॥ ६८ ॥ उपायंस्त गांधर्व—विधिना तां नरेश्वरः ॥ न परप्रार्थनाभंगं । कुर्वते क्वापि तादृशाः ॥ ६९ ॥ तस्मिन् कैलाशसंकाशे । गिरौ गौर्या तया सह ॥ अभेदं प्राप देहेन । युक्तमेव स ईश्वरः ॥ ७० ॥ जाजागार निजागार । इव तत्र महीपतिः ॥

जाते कोलाहले प्रात—र्बंदिनामिव पक्षिणां ॥ ७१ ॥ स्नातः परिहितश्वेत—पोतः सद्यः समुच्चितैः ॥ पुष्पैर्देवार्चनं कृत्वा । प्रोचे प्रीतमनाश्च तां ॥ ७२ ॥ मयि वैदेशिके पूर्व—म-दृष्टेऽपि सुदृष्टवत् ॥ त्वया नाशंकितं ताव—त्स्वात्मनोऽपि समर्पणे ॥ ७३ ॥ ममापि तन्वि त्वां वीक्ष्य । पुरा परिचितामिव ॥ हसत्युल्लसति द्योति । नृत्यतीवावशं मनः ॥ ७४ ॥ अनुमानेन जाने नौ । स्नेहोऽयं नाल्पकालिकः ॥ तथापि त्वद्गिरा व्यक्तं । श्रोतुमिच्छत्ययं जनः ॥ ७५ ॥ प्रणालीं तन्वती दंत—द्युतिदंभच्छलादथ ॥ सा स्ववाक्सुधया भर्तुः । श्रुतिकुंडे अपूरयत् ॥ ७६ ॥ पुरे क्षितिप्रतिष्ठेऽभू—ज्जितशत्रुर्नराधिपः ॥ नासोढ प्रौढधीः क्वापि । क्षितेर्भर्तापि यः क्षतिं ॥ ७७ ॥ आत्मांशैरिव चैतन्य—सौरैरनलसैश्चरैः ॥ स्वस्थानस्थोऽपि स प्राज्य—राज्यशुद्धिमबुध्यत ॥ ७८ ॥ सोऽन्यदा कंचिदप्राक्षी—द्भूरिभूमिस्पृशं चरं ॥ नास्ते यद्वस्तु मेऽन्येषां । चास्ते चर तदुच्चर ॥ ७९ ॥ जाने सोऽप्याह भूजाने । केनापि न्यूनता न ते ॥ विना चित्रसभामेकां । को वा पूर्णोऽस्ति सर्वथा ॥ ८० ॥ आचीकरत्तदैवाज्ञा—सारश्चित्रकरान्नृपः ॥ न्यूनता निजराज्यस्य । सहंते न हि मानिनः ॥ ८१ ॥ सभां चित्रयत

उप०
चिंता-
७७९

आग्से । तानित्यादिश्य भूपतिः ॥ तेभ्यो विभज्य सर्वेभ्यो । भूमिभागं समं ददौ ॥ ७२ ॥ ते
तथा चित्रयांचक्रुः । सभां भूमिभुजः शुभ्रां ॥ यथा तथापि चेतांसि । चित्रीयंतेस्म पश्यतां
॥ ७३ ॥ तेषु चित्रांगदश्चित्र—करोऽभूज्जरयातुरः ॥ तुल्यमन्यैर्नृपाद्भित्ति—विभागं सोऽप्यवि-
दत ॥ ७४ ॥ तस्यास्ति युवती कन्या । नाम्ना कनकमंजरी ॥ या तादृक्कुलजातापि । कां-
चनाधत्त चातुरीं ॥ ७५ ॥ एहिरेयाहिरामुष्य । वृद्धस्यैकस्य दुःकरा ॥ इति भक्ता पितुर्भक्तं ।
तत्रस्थस्यैव सानयत् ॥७६॥ सान्यदा भक्तमादाय । श्रीपथं यावदाययौ ॥ तावत्तत्र हयारू-
ढो । व्रजन्नस्ति नरेश्वरः ॥ ७७ ॥ स वाजिनं कसाघातै—रकारुण्यं तथानुदत् ॥ यथैष्वदेह-
दौर्बल्या—ल्लोकोऽनश्यन्नितस्ततः ॥ ७८ ॥ सापि क्वापि स्थिता भक्त—विनाशाशंकिनी क-
नी ॥ तुरंगमे गते दूर—माययौ पितुरंतिकं ॥ ७९ ॥ रुजुस्तस्यामुपेतायां । मुक्त्वा चित्रं स
चित्रकृत् ॥ मंदमंदैः पदैर्देह—चिंतार्थं निरगाद्बहिः ॥ ८० ॥ एकांते भक्तमाछाद्य । वर्णकै-
स्तत्र कुट्टिमे ॥ मयूरमालिखत्प्रेक्ष्य—मेकं सा बालपंडिता ॥ ८१ ॥ वाह्यालीविनिवृत्तोऽथ ।
सभायामागतो नृपः ॥ सत्यबर्हधिया तत्र । चित्रबर्हेऽक्षिपत्करं ॥ ८२ ॥ कुट्टिमास्फालनाद्भ-

उप० म—नष्टो मोघमनोरथः ॥ हीणोऽन्यधायि भूपाल—श्चित्रकृत्कन्थया तया ॥ ९३ ॥ सौम्य
मूर्खत्वपट्टे प्राक् । पादाः संपेदिरे त्रयः ॥ विलोकितोऽपि यत्नेन । तुर्यो नासादितः क्वचित्
चिंता- ॥ ९४ ॥ तस्मिन्नप्यधुना लब्धे । पट्टः स्थैर्यमवाप सः ॥ न मोघं भवति प्रायो । दर्शनं हि
७०० भवादृशां ॥ ९५ ॥ के ते त्रयोंह्यः पूर्वं । को वा तुर्योऽधुनाप्यत ॥ इति पृच्छति भूपाले । सा
प्रगल्भमवोचत ॥ ९६ ॥ अनेकसंचरल्लोक—व्याकुले श्रीपथेऽद्य यः ॥ ददर्शे वाहयन्नश्वं ।
सादी पादः स आदिमः ॥ ९७ ॥ द्वितीयस्तु नृपोऽत्रत्यो । यो वृद्धस्यासहायिनः ॥ चित्रा-
र्थमपरैस्तुल्यां । भुवं मत्पितुरप्यदात् ॥ ९८ ॥ मम पिता तृतीयोऽसौ । यो भरुः सरलाश-
यः ॥ सदैव देहचिंतार्थं । याति भक्ते समागते ॥ ९९ ॥ चतुर्थस्तु भवानेव । योऽस्यां भू-
पतिसंसदि ॥ करं क्षिपति कांतार । इव चित्रितचंद्रके ॥ ५०० ॥ दध्यावथ नृपो भंग्यं—
तरेण छेकयानया ॥ त्रिषु पादेषु मूर्खत्व—स्याहमेव नियोजितः ॥ १ ॥ रूपं लोकोत्तरं वा-
चः । प्रगल्भा निर्मलाः कलाः ॥ यथास्यां विदधे धाता । तथा किं न कुलीनतां ॥ २ ॥ सा-
रग्राहैर्बुधैर्ग्राह्यं । किं कुलीनत्वचिंतया ॥ कस्य न प्रेयसी लक्ष्मी—र्जातापि जलराशिना ॥ ३॥

पश्य पंकात्प्रसूतायाः । पद्मिन्याः पतितां व्रजन् ॥ न शंकते दिनेशोऽपि । को वा गुणिनि मत्सरी ॥ ४ ॥ अमर्त्यमर्त्यपश्वादि—व्यवस्था यद्वशंवदा ॥ स चित्रकृत्करो वेधा । न न वेदज्ञो हि सः ॥ ५ ॥ सुतरानंबुधीन् सर्पान् । निर्विषान् स्वाक्रमान्नगान् ॥ कुर्वतश्चित्र-कृत्पाणे—र्धत्ते धातापि नोपमां ॥ ६ ॥ अतीतमपि वृत्तं या । साक्षाद्दर्शयति क्षणात् ॥ मृ-तसंजीवनीं मन्ये । तां चित्रकरतूलिकां ॥ ७ ॥ कुले चित्रकृतां जाता । कन्येयं केन निंद्य-ते ॥ निंद्या वास्तु तथाप्येषो—द्वाह्या वर्णगुरोर्मम ॥ ८ ॥ ध्यात्वेति सोऽन्यतोऽगच्छ—च्छरी-रेणैव केवलं ॥ तल्लावण्योदधौ मग्नं । स्वांतमुद्धर्तुमक्षमः ॥ ९ ॥ कन्यामनन्यचित्तस्तां । सु-गुप्तसचिवेन सः ॥ चित्रांगदमयाचिष्ट । स्मराज्ञा हि बलीयसी ॥ १० ॥ सोऽप्यदित्सुर्निजां पुत्रीं । भूरित्वार्यार्थ भूभुजे ॥ तथैव तात मां यच्छ । भूपायेत्युदसाहयत ॥ ११ ॥ चित्रांगदस्य संमत्या । नृपः परिणिनाय तां ॥ स्वर्णरत्नाकरीकुर्वन् । सर्वतस्तस्य मंदिरं ॥ १२ ॥ व्यवहा-राद्दद्दौ तस्या । आवासं भूमिवासवः ॥ नित्यं स्वहृदि हृद्ये च । तत्वतस्तामवासयत् ॥ १३ ॥ तां चक्रे सर्वशुद्धांत-स्त्रीणामग्रेसरीं नृपः ॥ तत्तत्प्रसाददानेन । प्राचीमिव दिशं रविः ॥१४॥

निदिद्रासति भर्तात्र । रतश्रांतो यदा निशि ॥ तदा सदा कथां प्रष्टे—रिति दासीं शशास सा ॥ १५ ॥ चित्तौद्धत्योपनोदाय । नित्यमुद्वाहवासरात् ॥ मध्याह्ने पैतृके वस्त्रा—भरणे पर्यधत्त सा ॥ १६ ॥ पिधाय विबुधा द्वारं । विधाय च मनः स्थिरं ॥ आत्मानमनुशास्तिस्म योगिनीव सदैव सा ॥ १७ ॥ अन्यदा भूपतिः सायं । जातनिराजनाविधिः ॥ गतेऽमात्यगणे स्वस्व—स्थानं तस्या गृहं ययौ ॥ १८ ॥ नवान्नवाननभ्यस्ता—नपि भावान् विचक्षणवती ॥ उपाचरन्नवोढापि । नृपं प्रौढांगनेव सा ॥ १९ ॥ क्षितिकांते रतश्रांते । दास्या मदनिकाख्यया ॥ रसप्रथां कथां पृष्टा । सा वाचामीश्वरी जगौ ॥ २० ॥ मुहूर्तमास्व मौनेन । यावत्स्वपिति भूपतिः ॥ प्रसुप्ते च हले स्नाहि । मत्कथारंगसागरे ॥ २१ ॥ भूपेऽप्याख्यानिकां श्रोतु—कामे कपटनिद्रया ॥ शयाने सावदद्वेका । हले मदनिके शृणु ॥ २२ ॥ वरुणस्तरुणः श्रेष्टी । पुरे मधुपुरेऽभवत् ॥ नित्यं कल्लोलवल्लोर्ल । धन्यो धनममंस्त यः ॥ २३ ॥ स धनेन यशस्काम्य—न्नेकहस्तं सुरालयं ॥ कारयित्वा चतुर्हस्तं । देवं तत्र न्यवेशयत् ॥ २४ ॥ एकहस्ते मठे माति । कथं देवश्चतुःकरः ॥ एवं मदनिकापृष्टा । प्रोचे कनकमंजरी ॥ २५ ॥ अतीता भूयसी

रात्रि—र्घूर्णयेते निद्रया दृशौ ॥ कथातत्त्वं हले तत्त्वं । पृष्टासि श्वस्तने दिने ॥ २६ ॥ तस्या-
मथ प्रसुप्तायां । कथारसकुतूहली ॥ कल्ये श्रोतव्यमेवेद—मिति ध्यायन्नृपोऽस्वपीत ॥२७॥
द्वितीयेऽह्नि रवेरस्तं । मंक्षु कांक्षन्नृपो निशि ॥ लुप्तवारकमर्याद—स्तस्याः प्रासादमासदत्
॥ २८ ॥ भुक्तभोगेऽथ भूपाले । दंभनिद्रामिलद्दृशि ॥ जगौ मदनिका देवि । संदेहः सोऽ-
पनीयतां ॥ २९ ॥ साप्यधात्त हि देवोऽयं । प्रमाणेन चतुःकरः ॥ तन्मूर्तौ किंतु चत्वारः ।
करा इति चतुःकरः ॥ ३० ॥ अन्यच्च विंध्यशैलेऽस्ति । तापव्यापादने वने ॥ रक्ताशोकतरुर्वा-
यु—नृत्यत्किसलपेशलः ॥ ३१ ॥ पत्रपुष्पफलाढ्योऽपि । छाया तस्मिन्न विद्यते ॥ कथमेतद-
संभाव्य—मेवं मदनिका जगौ ॥ ३२ ॥ निद्रामि संप्रति प्रातः । प्रष्टेरिति कृतोत्तरा ॥ सा
सुष्वाप तृतीयेऽपि । दिने तत्रायतौ नृपः ॥ ३३ ॥ प्राग्वन्निद्राति भूमींद्रे । दास्या पृष्टा जगा-
द सा ॥ तरोस्तले भवेच्छाया । छाया कापि न पादपे ॥ ३४ ॥ अन्यच्च कोऽप्यभूदुष्ट्रो । लं-
बोष्टो मरुमंडले ॥ हसन् समीकरीरादि—ग्रासलुब्धो हयानपि ॥ ३५ ॥ स भ्रमन्नन्यतोऽ-
द्राक्षी—देकं बब्बूलपादपं ॥ व्यधाच्च सरलां ग्रीवां । तत्पल्लवजिघांसया ॥ ३६ ॥ न प्राप

निदिद्रासति जर्तात्र । रतश्रांतो यदा निशि ॥ तदा सदा कथां प्रछे—रिति दासीं शसास
सा ॥ १५ ॥ चित्तौद्धत्योपनोदाय । नित्यमुद्धाह्ववासरात् ॥ मध्याह्ने पैतृके वस्त्रा—जरणे प-
र्यधत्त सा ॥ १६ ॥ पिधाय विबुधा द्वारं । विधाय च मनः स्थिरं ॥ आत्मानमनुशास्तिस्म
योगिनीव सदैव सा ॥ १७ ॥ अन्यदा भूपतिः सायं । जातनिराजनाविधिः ॥ गतेऽमात्यगणे
स्वस्व—स्थानं तस्या गृहं ययौ ॥ १८ ॥ नवान्नवाननन्यस्ता—नपि जावान् विवृएवती ॥ उ-
पाचरन्नवोढापि । नृपं प्रौढांगनेव सा ॥ १९ ॥ क्षितिकांते रतश्रांते । दास्या मदनिकाख्यया ॥
रसप्रथां कथां पृष्टा । सा वाचामीश्वरी जगौ ॥ २० ॥ मुहूर्तमास्व मौनेन । यावत्स्वपिति भू-
पतिः ॥ प्रसुप्ते च हले स्नाहि । मत्कथारंगसागरे ॥ २१ ॥ भूपेऽप्याख्यानिकां श्रोतु—कामे
कपटनिद्रया ॥ शयाने सावदत्तेका । हले मदनिके शृणु ॥ २२ ॥ वरुणस्तरुणः श्रेष्ठी । पुरे
मधुपुरेऽजवत् ॥ नित्यं कल्लोलवल्लोर्ल । धन्यो धनममंस्त यः ॥ २३ ॥ स धनेन यशस्काम्य—
न्नेकहस्तं सुरालयं ॥ कारयित्वा चतुर्हस्तं । देवं तत्र न्यवेशयत् ॥ २४ ॥ एकहस्ते मठे मा-
ति । कथं देवश्चतुःकरः ॥ एवं मदनिकापृष्टा । प्रोचे कनकमंजरी ॥ २५ ॥ अतीता भूयसी

रात्रि—घूर्णयेते निद्रया दृशौ ॥ कथातत्त्वं हले तत्त्वं । पृष्टासि श्वस्तने दिने ॥ २६ ॥ तस्या-
मथ प्रसुप्तायां । कथारसकुतूहली ॥ कल्ये श्रोतव्यमेवेद—मिति ध्यायन्नृपोऽस्वपीत ॥२७॥
द्वितीयेऽह्नि रवेरस्तं । मंक्षु कांक्षन्नृपो निशि ॥ लुप्तवारकमर्याद—स्तस्याः प्रासादमासदत्
॥ २८ ॥ त्रुक्तत्यागेऽथ भूपाले । दंभनिद्रामिलद्दृशि ॥ जगौ मदनिका देवि । संदेहः सोऽ-
पनीयतां ॥ २९ ॥ साप्यधात्र हि देवोऽयं । प्रमाणेन चतुःकरः ॥ तन्मूर्तौ किंतु चत्वारः ।
करा इति चतुःकरः ॥ ३० ॥ अन्यच्च विंध्यशैलेऽस्ति । तापव्यापादने वने ॥ रक्ताशोकतरुर्वा-
यु—नृत्यत्किसलपेशलः ॥ ३१ ॥ पत्रपुष्पफलाढ्योऽपि । छाया तस्मिन्न विद्यते ॥ कथमेतद्-
संभाव्य—मेवं मदनिका जगौ ॥ ३२ ॥ निद्रामि संप्रति प्रातः । प्रब्रेरिति कृतोत्तरा ॥ सा
सुष्वाप तृतीयेऽपि । दिने तत्राययौ नृपः ॥ ३३ ॥ प्राग्वन्निद्राति भूमींद्रे । दास्या पृष्टा जगा-
द सा ॥ तरोस्तले भवेच्छाया । छाया कापि न पादपे ॥ ३४ ॥ अन्यच्च कोऽप्यभूदुष्ट्रो । लं-
बोष्ठो मरुमंडले ॥ हसन् समीकरीरादि—ग्रासलुब्धो हयानपि ॥ ३५ ॥ स भ्रमन्नन्यतोऽ-
द्राक्षी—देकं बब्बूलपादपं ॥ व्यधाच्च सरलां ग्रीवां । तत्पल्लवजिघांसया ॥ ३६ ॥ न प्राप

डुर्गतः संप-ल्लवानिव स पल्लवान् ॥ यदा तदा तरोर्मौलौ । मलं मुक्त्वा ययौ रुषा ॥३७॥
यं यत्नान्नाप तस्य द्रोः । कथं मूर्धन्यहत्त सः ॥ एवं दास्यानुयुक्ता श्वो । वक्ष्यामीति जज-
ल्प सा ॥ ३८ ॥ तुर्येऽहनि नृपे तत्रा—याते प्राग्वडुवाच सा ॥ बब्बूलो बद्धमूलोऽसौ ।
हले कूपोदरेऽजनि ॥ ३९ ॥ अन्यच्च—रराक्ष दक्षिणाशाया । मंक्षनं कुंक्षिनं पुरं ॥ राजारि-
दमनो वैरि—दमनोद्यतदोर्द्वयः ॥ ४० ॥ अभूद् ग्रामाधिपस्तत्रा—र्जुनो जनमनोहरः ॥ अ-
जायंत सुतास्तस्य । पंच पंचाननोपमाः ॥ ४१ ॥ पुत्रेभ्योऽपि प्रियतरी । कन्यासीत्तस्य रो-
हिणी ॥ सा क्रमेण वयोऽलब्ध । लोकलोचनलोभनं ॥ ४२ ॥ अन्यदा कार्यवशतो—ऽर्जुने
ग्रामांतरे गते ॥ वरार्हां वीरसेनाय । माता तत्रैव तां ददौ ॥ ४३ ॥ गतोऽभूदर्जुनो यत्र ।
तत्र ग्रामेशसूनवे ॥ महसेनाय दत्वा स्वां । तनयां सोऽप्यमोदत ॥ ४४ ॥ श्वशुरौकःस्थितो
ज्येष्ठ—भ्राता स्वश्यालकाय तां ॥ अदत्त गुणसेनाय । धिग्दैवस्य विजृंभितं ॥ ४५ ॥ एवं
स्वस्वधिया त्रिभ्न—वरेभ्यो दत्तकन्यकाः ॥ पृथक्स्थानस्थिता एक—मेव लग्नं व्यलोकयन्
॥ ४६ ॥ समं परिजनेनैक—दिने ते यौवनोद्धुराः ॥ वरास्त्रयोऽपि तामेकां । परिणेतुं रुढौ-

किरे ॥ ४७ ॥ युयुत्सुषु मिथस्तेषु । पित्रोरालोक्य दुःस्थतां ॥ दध्यौ कन्या ममाभाग्या—द्विवाहो दाहदोऽजनि ॥ ४८ ॥ मन्निमित्तः कुटुंबेऽपि । कलहोऽयं व्यवर्धत ॥ मुखं यस्योत्सवस्येद—गायतिस्तस्य कीदृशी ॥ ४९ ॥ नास्त्येष मयि जीवंत्यां । सुखमेषां कथंचन ॥ ध्यात्वेति मृत्युमादृत्य । चिताग्नौ प्रविवेश सा ॥ ५० ॥ वीरसेनोऽपि तत्स्पर्श—पूतायामविशच्चितौ ॥ सस्नेहो यो भवेद् दौःस्थ्ये । सौस्थ्ये स्निह्यति नात्र कः ॥ ५१ ॥ महसेनोऽपि तदेह—भूतिमेकत्र पिंडितां ॥ त्यक्तभक्तजलस्थित्यो—पांते तिष्ठन्नतायत ॥ ५२ ॥ गुणसेनस्तु संसार-सुखेषु श्लथिताशयः ॥ भूत्वावधूतनेपथ्यो-ऽचलदेशांतरंप्रति ॥ ५३ ॥ स सुग्रामं गतो ग्रामं । गृहे कस्याश्चन स्त्रियाः ॥ स्वद्रव्यव्ययतो भोक्तुं । यावन्निविविशे सुधीः ॥ ५४ ॥ विहस्तया तया ताव-दाक्रंदन्निजबालकं ॥ शुष्ककाष्ठमिव क्षिप्तो । रंधनाग्नौ महारुषा ॥ ५५ ॥ भस्मीभूतेऽर्भके मुक्त—स्थालो निर्यन् स मंदिरात् ॥ तयोचे किमभुक्त्वैव । विरक्त इव गछसि ॥ ५६ ॥ स प्रोचे त्वं श्वपाकीभ्यो । बालघातान्न हीयसे ॥ दूरेऽस्तु भोजनं नात्र । स्थितिरप्युचिता सतां ॥ ५७ ॥ सा जगौ मा जुगुप्सिष्ठाः । सौम्य बालवधादतः ॥ क्षणाज्जीवंत-

मेवैतं । दर्शयिष्यामि ते शिशुं ॥ ५८ ॥ कथं कथमिति प्रोक्ते । तेन योषिज्जजल्प सा ॥ कोऽपि लिंगी व्रजन् गंगां । ददौ मेऽमृतकुंपकं ॥ ५९ ॥ यदा मां खेदयत्येष । नंदनः क्रंदनादिना ॥ तदा हत्वा पुनः सिक्त्वा । जीवये सुधयानया ॥ ६० ॥ इत्युदित्वा सुधासेका—द्बाले प्रोज्जीविते स्त्रिया ॥ रोहिणीजीवनोपाय—प्राप्तिप्रीतः स सुप्तवान् ॥ ६१ ॥ रात्रौ तदमृतं हृत्वा । गरुत्मानिव सोऽचलत् ॥ यन्नारीनायकं वस्तु । तन्नंदति कियच्चिरं ॥ ६२ ॥ सुरैर्लेभे सुरा वार्धिं । मथित्वा लीलया मया ॥ ध्यायन्निति चितान्तस्म । तत्तया सिक्तवानसौ ॥ ६३ ॥ सुधाप्रभावतः पुंस्त्री—युगलं जीवतिस्म तत् ॥ वह्निप्रवेशतो वर्णा—धिक्यं स्वर्णमिवास्पृशत् ॥ ६४ ॥ किमद्भुतं सुधासेका—त्तज्जिजीवाद्भुतं तु तत् ॥ विना तेन कलिस्तेषां । प्रक्षीणोऽपि जिजीव यत् ॥ ६५ ॥ प्राग्वद्विवदमानास्ते । त्रयो राजकुलं ययुः ॥ श्रुत्वा तेषां कलेर्मूल—मभून्मूढमतिर्नृपः ॥ ६६ ॥ सैव तत्रागता कन्या—भिनत्तं वादमादितः ॥ एवमुक्त्वा कथामर्ध—पथेऽस्वाप्सीन्नृपप्रिया ॥ ६७ ॥ अपरेऽह्नि नृपे तत्रा—याते प्राग्वदुवाच सा ॥ तदाभ्यधायि रोहिण्या । कोऽयं वादो वृथा नृप ॥ ६८ ॥ यो मामजीवय-

देह—दानेन जनकः स मे ॥ यो मया साकमुत्तस्थौ । चित्तांतः स च बांधवः ॥ ६९ ॥ र-
रक्ष मद्धपुर्नस्म । यः स एव वरोऽस्तु मे ॥ इत्यपास्य नृपौ द्वौ तौ । महसेनाय तां ददौ । ७०॥
किंच—शेषस्त्रीशंकया पत्न्यै । भूपतिः कोऽप्यलंकृतीः ॥ दीपध्वस्ततमःपूरे । घटयामास भू-
गृहे ॥ ७१ ॥ कश्चन स्वर्णकृत्तत्र । स्वर्णाध्यक्षस्य पश्यतः ॥ ब्रूतेस्म संध्यासमयं । कथं तद्देस्य-
सौ वद ॥ ७२ ॥ श्वो वक्ष्याम्यहमित्युक्त्वा । निद्राणा सापरेऽहनि ॥ आगते भूपतौ प्रोचे ।
रात्र्यंधो हि स मौष्टिकः ॥ ७३ ॥ अन्यच्च—लोप्त्रहस्तौ नृपः स्तेनौ । प्राप्य केनापि हेतुना ॥
अवध्याविति पेटायां । क्षिप्त्वा तां निररंधयत् ॥ ७४ ॥ पेटावाहि नदीपूरे । गता दूरे च
केनचित् ॥ जलकेलिकृतादायि । रहश्चानायि मंदिरं ॥ ७५ ॥ उद्घाटितायां पेटायां । पु-
मांसौ प्रेक्ष्य सोऽवदत् ॥ पेटानिहितयोरद्य । युवयोः कतिमं दिनं ॥ ७६ ॥ तयोरेकोऽवदत्तु-
र्य—महस्तद्धेत्यसौ कथं ॥ सैवान्येद्युरजाविष्ट । चौरस्तुर्यज्वरी हि सः ॥ ७७ ॥ किंच—यो-
षित्कापि विभूषाभिः । पेटामापूर्य मुद्रितां ॥ अस्थापयद् गृहद्वारे । सपत्नीशंकया सदा ॥७८॥
तां सखीसद्मगां ज्ञात्वा । सपत्नी छिद्रकांक्षिणी ॥ हारं जहार पेटांत—स्तां च प्राग्वदसूत्र-

यत् ॥७९॥ सा च प्रत्यागता दृष्ट्वा । पेटां दूरादबुध्यत ॥ हारो मेऽहारि हा रोषा—त्सपत्न्ये-
ति सचेतना ॥ ८० ॥ पूर्वं मृच्छ्या ततो दिव्य—क्रियया शठया गिरा ॥ अनया याचिता
साऽरं । सारं हारं समार्पयत् ॥ ८१ ॥ अनुद्घाट्यापि पेटां सा—ऽबोधि हारं कथं हृतं ॥
इति पृष्टापि सुष्वाप । सापराह्णे जगाद च ॥ ८२ ॥ सा च काचमयी पेटा । तदंतर्दृश्य-
तेऽखिलं ॥ हले नृपः प्रसुप्तोऽस्ति । पुनस्तथ्यां कथां शृणु ॥ ८३ ॥ आसीत्पुरे धरावासे ।
जितशत्रुर्नरेश्वरः ॥ तस्य प्रशस्यलावण्या । कन्या सौभाग्यमंजरी ॥ ८४॥ तां जह्रे खेचरः क-
श्चि—दूचे नृपस्तु संसदि ॥ यः पुत्रीं वालयत्याशु । तस्मै दास्याम्यमूमहं ॥८५॥ नररत्ना-
नि चत्वारि । तस्य राज्येऽजवन्निति ॥ निमित्तज्ञोऽथ रथकृ—त्साहसी भिषगुत्तमः ॥ ८६ ॥
निमित्तज्ञो निमित्तेन । तदा तद्दिशमादिशत् ॥ कलावान् वर्धकिर्व्योम—पथगं रथमातनोत्
॥ ८७ ॥ तद्बलाद्धियता गत्वा । साहसी स्तमहन्खगं ॥ तेन च म्रियमाणेन । कन्याया लुलुवे
शिरः ॥ ८८ ॥ वैद्याग्रणीः शिरस्तस्याः । कबंधेन च संदधे ॥ चत्वारोऽप्यथ तां कन्या—मु-
द्वोढुं व्यवदंत ते ॥ ८९ ॥ योऽग्निं विशेन्मया साकं । निराकंपः स मे प्रियः ॥ कन्येत्युक्त्वा

उप० चिंता- ७७९

चितां बन्न—सुरंगाग्रे व्यधापयत् ॥९०॥ प्रविशंत्यां प्रगे तस्यां । चिताग्नौ यः सहाविशत् ॥ स एवाभूद्वरस्तस्याः । स कः सखि निगद्यतां ॥ ९१ ॥ निशांतरे जगौ सैव । तस्याः सांवत्सरो वरः ॥ यो प्राग्विवेद नैषाग्निं । प्रविष्टापि विपत्स्यते ॥ ९२ ॥ एवं नवनवैस्तस्या । वचोभिर्लोभिताशयः ॥ स बाल इव भूपाल—स्तत्रैवारंस्त नित्यशः ॥ ९३ ॥ वाणीरसः सर्वरसेषु रेखां । धत्ते किमेतन्न सहेत कोऽपि ॥ यस्या कुरंगा अपि जातरंगाः । प्राणव्ययेऽपि प्रगुणा भवंति ॥ ९४ ॥ सर्वे रसा नीरसतां प्रयांति । वाणीरसोऽयं तु सदैव नव्यः ॥ किमन्यथा पूर्वकथाः सदैव । श्रुता अपि श्रोतुमना जनः स्यात् ॥ ९५ ॥ न पातुमिछा कृतपानकस्य । घ्रातस्य न स्यात्किल भोक्तुमिछा ॥ कथारसात्कापि कदापि कोऽपि । जगाम तृप्तिं यदि तत्प्रजल्प ॥ ९६ ॥ तया तथा वशीचक्रे । भूमिशक्रः कथारसैः ॥ यथा दृशापि पस्पर्श । नावरोधवधूः पराः ॥ ९७ ॥ वाग्वस्त्रस्वर्णदानेन । राज्ञा तस्यां धनायितं ॥ द्रवायितं च शेषासु । दाहदानादनारतं ॥ ९८ ॥ नवोढां प्रेक्ष्य भूपस्य । रागेण स्फुरितं हृदि ॥ रुषा शेषांगनानां च । रागेण स्फुरितं दृशि ॥ ९९ ॥ अवरोधविरोधेन । कारुकन्या कियच्चिरं ॥ नंदि-

ष्यतीति तास्तस्या—श्छिद्राणि विलुलोकिरे ॥ ६०० ॥ दासीमुखेन विज्ञाय । तस्या मध्या-
ह्नचेष्टितं ॥ व्यजिज्ञपन्नृपं सर्वा । अंतःपुरपुरंध्रयः ॥१॥ एषा जपति मध्याह्ने । किंचिद्दत्ता-
ररिः सदा ॥ इति नासूयया वच्मः । किंतु ते हितकाम्यया ॥२॥ एतत्क्षितिपतिः साक्षा-
द्दिदृक्षुस्तद्गृहं गतः ॥ कपाटौ दढितौ वीक्ष्य । तच्छिद्रे न्यदधद्दृशं ॥ ३ ॥ मदच्छिद्रे तदा
वाला । हित्वा भूषां नृपार्पितां ॥ आदाय पैतृकं वेष—मेवमात्मानमन्वशात् ॥ ४ ॥ राज-
दत्तैरलंकारै—रात्मन् माद्यसि किं मुधा ॥ यदभूदियमेवादौ । विभूषा तव वर्ष्मणि ॥ ५ ॥
हीनवंशज संप्राप्य । प्रसादं संप्रति प्रभोः ॥ मावमंस्था महावंश्यं । शेषं सीमंतिनीजनं
॥ ६ ॥ न दृषन्मणितां धत्ते । न काको याति हंसतां ॥ न निंबश्चूततामेति । न खरो भज-
तीभतां ॥ ७ ॥ शाणी नैति दुकूलत्वं । न मृत् प्राप्नोति हेमतां ॥ आदृतोऽपि महीयोभि—
र्नीचो नांचति साधुतां ॥ ८ ॥ युग्मं ॥ उच्छृंखलखलश्रेणि—वाणीवात्या विवर्तितः ॥ राजप्र-
सादप्रासाद—परिभ्रंशो न दूरतः ॥९॥ भक्तिर्भर्तरि निर्दंभा । शीलमाजन्म संचितं ॥ स्वा-
भाविकमनौद्धत्य—मेतन्मंक्ष्नमाश्रय ॥ १० ॥ आत्मानुशासनं तस्या । इत्याकर्ण्य रहः स्वयं ॥

७५० विना मंत्रं विशेषेण । वशीभूतो विशांपतिः ॥ ११ ॥ तामेव सर्वराज्ञीषु । चक्रे गौरवभाजनं ॥
गुणा एव महत्त्वस्य । हेतवो न पुनः कुलं ॥ १२ ॥ अन्यदा विमलाचार्या—स्तत्रोद्यानं व्य-
चिंता- भूषयन् ॥ कल्पद्रुरिव सद्भाय—पात्रपत्रपरिच्छदः ॥ १३ ॥ पीत्वा नृपः सपत्नीकः । तन्मुखें-
७५१ दुसुधां गिरं ॥ गलन्मिथ्यात्वगरलः । श्राद्धधर्मं प्रपन्नवान् ॥ १४ ॥ राज्ञ्या कनकमंजर्या ।
शुभभावनयेव सः ॥ शश्वदुत्साहितो धर्मे । न बभूव प्रमादभूः ॥ १५ ॥ स च चित्रांगद-
श्चित्र—करः पुत्र्या प्रबोधितः ॥ आर्हतं धर्ममाराध्य । प्रांतेऽभूद्व्यंतरः सुरः ॥ १६ ॥ सा भू-
पवल्लभा तत्त्व—धर्मनिर्माणनिर्मला ॥ समाधिमृत्युना देवी—भवं प्राप्य ततश्च्युता ॥ १७ ॥
वैताढ्ये तोरणपुरे । दृढशक्तेः खगेशितुः ॥ पुत्री कनकमालेति । जाताहं जीवितेश्वर ॥१८॥
युग्मं ॥ पीतमोहासवः खेटो । वासवः प्राप्तयौवनां ॥ मां हृत्वात्र गिरौ नव्य—प्रासादेऽ-
स्मिन्नमुंचत ॥ १९ ॥ वेदी नेदीयसी येयं । त्वत्पाणिग्रहसाक्षिणी ॥ एषा तेनैव दुष्टेन । मा-
मुद्वोढुं व्यधीयत ॥२०॥ यावदेष स्मरोल्लेख—धाम मामुपयच्छति ॥ तावन्मद्बंधुरन्वेष्टा । सू-
रतेजाः समाययौ ॥ २१ ॥ जामिजायानुरोधेन । क्रोधेनांधितनेत्रयोः ॥ तयोर्द्वयोरवर्तिष्ट । ख-

उप० चिंता- ७९०

ष्यतीति तास्तस्या—श्छिद्राणि विलुलोकिरे ॥ ६०० ॥ दासीमुखेन विज्ञाय । तस्या मध्या-
ह्नचेष्टितं ॥ व्यजिज्ञपन्नृपं सर्वा । अंतःपुरपुरंध्रयः ॥ १ ॥ एषा जपति मध्याह्ने । किंचिद्दत्ता-
ररिः सदा ॥ इति नासूयया वच्मः । किंतु ते हितकाम्यया ॥ २ ॥ एतत्क्षितिपतिः साक्षा-
द्दिदृक्षुस्तद्गृहं गतः ॥ कपाटौ दृढितौ वीक्ष्य । तच्छिद्रे न्यदधद्दृशं ॥ ३ ॥ मदच्छिदे तदा
बाला । हित्वा भूषां नृपार्पितां ॥ आदाय पैतृकं वेष—मेवमात्मानमन्वशात् ॥ ४ ॥ राज-
दत्तैरलंकारै—रात्मन् माद्यसि किं मुधा ॥ यद्भूदियमेवादौ । विभूषा तव वर्ष्मणि ॥ ५ ॥
हीनवंशज संप्राप्य । प्रसादं संप्रति प्रभोः ॥ मावमंस्था महावंश्यं । शेषं सीमंतिनीजनं
॥ ६ ॥ न दृषन्मणितां धत्ते । न काको याति हंसतां ॥ न निंबश्चूततामेति । न खरो भज-
तीभतां ॥ ७ ॥ शाणी नैति डुकूलत्वं । न मृत् प्राप्नोति हेमतां ॥ आदृतोऽपि महीयोभि-
र्नीचो नांचति साधुतां ॥ ८ ॥ युग्मं ॥ उच्छृंखलखलश्रेणि—वाणीवात्या विवर्तितः ॥ राजप्र-
सादप्रासाद—परिभ्रंशो न दूरतः ॥९॥ भक्तिर्भर्तरि निर्दंभा । शीलमाजन्म संचितं ॥ स्वा-
भाविकमनौद्धत्य—मेतन्मंडनमाश्रय ॥ १० ॥ आत्मानुशासनं तस्या । इत्याकर्ण्य रहः स्वयं ॥

साकं—मनाकुलमना मुनिं ॥ ३३ ॥ ऋषिर्मां वीक्ष्य जीवंतीं । विस्मितोऽप्रच्छदुत्सुकः ॥ मृतां
त्वामहमद्राक्षं । कथं जीवसि संप्रति ॥ ३४ ॥ अन्यधाद्विबुधः साधो । किमियं वेत्ति बा-
लिका ॥ एषा माया मया चक्रे । तत्राकर्णय कारणं ॥ ३५ ॥ पुरे क्षितिप्रतिष्ठेऽहं । चित्र-
कृत्प्राग्नवेऽजवं ॥ एषा मम तदा पुत्री । पर्यणाय महीभुजा ॥३६॥ तयाहं स्थापितो धर्मे ।
प्राप वैयंतरीं श्रियं ॥ देवीत्वांतरिता सेयं । बभूव तव नंदिनी ॥३७॥ इमामिह खगानीतां
। भ्रातुर्मत्यौ शुचातुरां ॥ यावत्पूर्वभवप्रेम्णा । बोधयामि मृदूक्तिभिः ॥३८॥ तावदत्र त्वमा-
यासी—रहं तु स्नेहलालसः ॥ इयं स्वसन्निधौ बाला । कथं स्थाप्येत्यचिंतयत् ॥ ३९ ॥ पुत्रीं
परासुमालोक्य । निराशोऽयं निवर्तते ॥ इति तेऽदर्शयं लून—मौलिमेनां स्वमायया ॥ ४० ॥
यद्विरुद्धं मयाकारि । दुहितुः स्नेहतस्त्वयि ॥ शांतस्वांत समस्तं त—त्क्षंतव्यं संप्रति त्वया
॥ ४१ ॥ उवाच चारणः साधुः । साधु देव त्वया कृतं ॥ तव माया ममायासी । द्रागुणे चा-
रित्रलाभतः ॥४२॥ भवतो धर्मलाभोऽस्तु । मय्यस्तोकोपकारिणः ॥ इत्युक्त्वा व्यचरद्व्योमा—
ध्वना विहगवन्मुनिः ॥ ४३ ॥ प्राग्भवश्रवणाज्जात—जातिस्मृतिरहं तदा ॥ देवं व्यजिज्ञपं

ज्ञाखड्गि क्षणं रणं ॥ २२ ॥ तौ द्वावपि मिथो घात—जातमृत्यू यदैक्षिषि ॥ एकाकिन्यबला बाला । शुष्कयाक्ष्यां तदारुदं ॥ २३ ॥ तावत्पुरः सुरः कोऽपि । प्रादुर्भूय जगाद मां ॥ पुत्रि किं खिद्यसे रक्षा—जनके जनके मयि ॥ २४ ॥ काहं को हंत देवोऽयं । भाषते च किमीदृशं ॥ एषोऽपि व्यंसको माभू—दिति यावदचिंतयं ॥ २५ ॥ तावदन्वेषकोऽत्रागाद् । दृढशक्तिः पिता मम ॥ स स्वपुत्रं च शत्रुं च । नामशेषौ निरैक्षत ॥ २६ ॥ मां चाग्रे लूनमूर्धानां । वीक्ष्य चैवं व्यभावयत् ॥ जघान हन्यमानो मे । पुत्रीपुत्रौ स खेचरः ॥ २७ ॥ विमुच्य पितरं पुत्रं । पूर्वं गृह्णाति ही विधिः ॥ निर्विशेषमतेस्तस्य । न हि ज्येष्ठलघुक्रमः ॥२८॥ यौ प्राणेभ्यः प्रियौ क्वासौ । नंदनः क च नंदनी ॥ क वा स वासवः खेटो । योऽभूद्यौवनदुर्मदः ॥ २९ ॥ अयं शत्रुरिदं मित्रं । ममेति ममतापरं ॥ धिक्क्रीक्रियते काल—रक्षसा भुवनत्रयं ॥ ३० ॥ एवं निरीक्ष्य प्रत्यक्ष—मपत्यक्षयमग्रतः ॥ अध्याप्यात्मन्ननात्मज्ञ । किमु स्वार्थे प्रमाद्यसि ॥ ३१ ॥ इति ध्यानबलात् त्रुट्य—न्मोहजालः पिता मम ॥ स्वयंबुद्धत्वमानंच । स्मृतप्राग्भवसंयमः ॥ ३२ ॥ तं तदात्तव्रतं देव—दत्तवेषमवंदत ॥ त्रिदशः स मया

प्रिये ॥ ५५ ॥ सा जगौ गिरिमार्गेऽस्मिन् । दुःकरं ते गतागतं ॥ प्रिय प्रज्ञप्तिविद्यां तद् ।
गृहाण व्योमगामिनीं ॥ ५६ ॥ प्रियातः प्राप्य तां विद्यां । सद्यो विलंघ्य वेगतः ॥ गतः
स्वनगरं निन्ये । कथंचन चतुर्दिनीं ॥ ५७ ॥ नवोढाया गुणग्रामै—राकृष्टः पंचमेऽहनि ॥
पुनरेत्य नगे तत्र । तस्थौ कत्यपि वासरान् ॥ ५८ ॥ नगे च नगरे चास्य । गतागतकृतः कृतं
॥ नगेऽटतीति नामान्य—न्नगातिरिति नागरैः ॥ ५९ ॥ स नवव्यूहजामाता । व्यंतरेणा-
न्यदोच्यत ॥ प्रीतिस्त्वयि नगे चात्र । मम गुर्वी गरीयसोः ॥ ६० ॥ तत्त्वां याचकवद्याचे ।
प्रांजलीभूय भूपते ॥ कदापि मा कृथाः शून्य—ममुं मम नगोत्तमं ॥ ६१ ॥ अस्यां च मम
नंदिन्यां । मास्मजूर्जातु रोषभूः ॥ येन प्रीतिमना वेत्ति । नेयं मद्विरहव्यथां ॥ ६२ ॥ या-
स्यामि स्वामिनिर्देशा—द्देशांतरमतःपरं ॥ इत्युदित्वा तिरोऽधत्त । स व्यंतरसुरः क्षणात् ॥
॥ ६३ ॥ प्रपन्नार्थसमर्थोऽथ । नगातिपुरनामकं ॥ तस्मिन्नेव नगे चक्रे । नगातिर्नगरं नवं ॥
॥ ६४ ॥ प्रासादैः प्रथिताह्लादै—र्मंदिरैरतिसुंदरैः ॥ वापीसारैश्च कासारै—स्तद्बभौ स्वःपु-
राधिकं ॥ ६५ ॥ स चिरं शुचिधीश्चक्रे । तत्र राज्यं नराधिपः ॥ समं कनकमंजर्या । देहेनैव

तातं । प्राक्पतिं मम मेलय ॥ ४४ ॥ देवोऽन्यधत्त मां वत्से । याञ्चादैन्यं करोषि किं ॥ सति
भाग्ये तवाभीष्ट-फलसंपादनक्षमे ॥ ४५ ॥ जितशत्रुः स ते प्रेयान् । प्राप्य देवभवं च्युतः ॥
राज्ञो दृढरथाख्यस्य । सूनुः सिंहरथोऽजनि ॥ ४६ ॥ पतिर्गंधारदेशस्य । स पुरात्पुंड्रवर्धनात्
॥ हयेनापहृतः शैल—मेनमायास्यति स्वयं ॥ ४७ ॥ स त्वां वेद्यादिसामग्र्या—न्नयैव परि-
णेष्यते ॥ तद्वत्सेऽनुत्सुकाऽत्रैव । तावत्तिष्ठ समाधिना ॥ ४८ ॥ सदा हृदा त्वदाह्वानं । कुर्वत्यह-
मिह स्थिता ॥ गतेऽह्नि स च देवोऽगा—न्मेरुं जिननिनंसया ॥ ४९ ॥ मदाशारज्जुनिर्बद्ध ।
इव तावत्त्वमागतः ॥ शेषोऽशेषोऽपि वृत्तांतः । कांत संविदितस्त्वया ॥ ५० ॥ इति तस्या
मुखांभोज—मकरंदोपमां गिरं ॥ श्रुत्वा सिंहरथोऽपि द्रा—गस्मार्षीत्पूर्वजन्म सः ॥ ५१ ॥
अथ तत्रागतो देवः । सुमेरोर्मरुदध्वना ॥ दृष्ट्वा दुहितरं भर्तु–रंतिके मुमुदेतरां ॥ ५२ ॥ व्यं-
तरेणाहृतैर्गंध—द्रव्यैस्तूर्यत्रयेण च ॥ जिनमभ्यर्च्य मध्याह्ने । सोऽभुंक्त कांतया सह ॥५३॥
तत्र भूवासवोऽतीत्य । मासं वासरलीलया ॥ यियासुः पौररक्षायै । पुरं प्रोचे प्रियामिति ॥
॥ ५४ ॥ मनस्ते यामिकीकृत्य । यामि स्वपुरमेकदा ॥ मामत्रागतमीक्षेथाः । पंचमेऽह्नि पुनः

उत्त० चिंता- ७९७

संयोग—भोगरूपादिसंपदः ॥ उद्दांतपवनभ्रांत—पताकांतपरिप्लवाः ॥ ७८ ॥ शश्वदैश्वर्यदारिद्र्य-सुखदुःखादयोऽखिलाः ॥ पर्यायाः परिवर्तंते । भवस्थानां क्षणे क्षणे ॥ ७९ ॥ अद्यैव यो मया दृष्टः । स्पष्टश्रीश्चूतपादपः ॥ मयि सत्यपि तस्याभू—च्छत्रभंग इवाधुना ॥ ८० ॥ अदृश्यं कुरुते वस्तु—स्तोमं दृष्टमपि क्षणात् ॥ छादयंति विवेकार्क—मियमध्रौव्यधूमरी ॥८१॥ त्रिलोकीवृक्षमारूढा । सेयमध्रुवता लता ॥ किं केनापि निकृत्येत । विना बोधपरश्वधः ॥ ॥८२॥ ध्रुवे हि दर्शनज्ञाने । अध्रुवः शेषडंबरः ॥ ततस्ते एव संग्राह्ये । किमन्यैः फल्गुवल्गनैः ॥ ८३ ॥ एवं चिंतयतस्तस्य । जातजातिस्मृतेः स्वयं ॥ देवतादत्तवेषस्या—भवत्प्रत्येकबुद्धता ॥ ८४ ॥ स बिभ्रदनगारित्वं । सकलत्रो दिवानिशं ॥ आत्तव्रतोऽपि नालुंपत् । प्रार्थनां तस्य नाकिनः ॥८५॥ स चूतवृक्षं सुमनोऽभिरामं । विच्छायमालोक्य ततः क्षणेन ॥ ऋद्धिं स्वऋद्धिं प्रसमीक्ष्य बोधा—द्गंधारराजर्षिरवाप धर्मं ॥ ८६ ॥

करकंडुर्द्विमुखश्च । नमिर्नगगतिश्च सः ॥ अवाप्य युगपद्दीक्षां । विजहुरवनीतले ॥८७॥ चतुःकषायनिर्मुक्ता—श्चतुर्गतिभयोज्झिताः ॥ चत्वारोऽप्यथ ते क्षोणि—प्रतिष्ठपुरमैयरुः ॥ ८८ ॥

दधच्छिदां ॥ ६६ ॥ नगशृंगे निजावास—शिरस्थः स व्यराजत ॥ उच्चैः शिवपुरं गंतुं । प्र-
स्थानं साधयन्निव ॥ ६७ ॥ तस्मिन् राज्यं प्रकुर्वाणे । बाह्या आभ्यंतरा अपि ॥ प्रभूवभूवुर्न
परा—भवितुं नागरान् द्विषः ॥ ६८ ॥ पुरः परिसरोद्यानं । स कदापि मधूत्सवे ॥ गच्छन्मा-
कंदमाकंद—मधिकश्रियमैक्षत ॥ ६९ ॥ नीलैरविरलैः पत्र—पटलैर्दलितातपं ॥ गुंजन्मधुक-
रीमंजु—मंजरीपुंजपिंजरं ॥ ७० ॥ विशालशालमस्तोक—कोकिलाकुलसंकुलं ॥ सहकारं
सदाकारं । तं भृशं प्रशशंस सः ॥७१॥ युग्मं ॥ नृपस्तद्रूपसौरभ्य—लुभ्यदंबकनासिकः ॥ ली-
लया मंजरीमेका—मादाय पुरतोऽचलत् ॥ ७२ ॥ फाल्गुनैरिव दुर्वातैः । सामंताद्यैः समंततः
॥ मंजरीं किसलं पत्रं । तस्य सर्वमलुंठ्यत ॥ ७३ ॥ व्यावृतस्तं व्यलोकिष्ट । काष्टशेषं नरा-
धिपः ॥ स्वभृत्यविहितां तस्य । दुरवस्थामबुध्यत ॥ ७४ ॥ चिरात्तत्संगमातुरो—त्कंठाया
निर्वृतिश्रियः ॥ दूतिकेव तदा भेजे । तमनित्यत्वभावना ॥ ७५ ॥ कोऽपि स्वयं प्रहीयेत ।
कोऽपि लुप्येत चेतरैः ॥ संसारेऽत्र न कस्यापि । संपद् दृश्येत शाश्वती ॥ ७६ ॥ सरित्पूरश-
रत्काला—बुदबुद्बुदविद्युता ॥ जित्वा चपलतागर्वं । लक्ष्मीरेषा विजृंभते ॥ ७७ ॥ एवं यौवन-

उत्त०
चिंता-
७९७

संयोग—जोगरूपादिसंपदः ॥ डुर्दांतपवनभ्रांत—प ।कांतपरिप्लवाः ॥ ७८ ॥ शश्वदैश्व-
र्यदारिद्र्य-सुखदुःखादयोऽखिलाः ॥ पर्यायाः परिवर्तंते । जवस्थानां क्षणे क्षणे ॥ ७९ ॥ अ
द्यैव यो मया दृष्टः । स्पष्टश्रीश्चूतपादपः ॥ मयि सत्यपि तस्याभू—च्छत्रभंग इवाधुना ॥ ८० ॥
अदृश्यं कुरुते वस्तु-स्तोमं दृष्टमपि क्षणात् ॥ छादयंति विवेकार्क-मियमध्रौव्यधूमरी ॥८१॥
त्रिलोकीवृक्षमारूढा । सेयमध्रुवता लता ॥ किं केनापि निकृत्येत । विना बोधपरश्वधः ॥
॥८२॥ ध्रुवे हि दर्शनज्ञाने । अध्रुवः शेषडंबरः ॥ ततस्ते एव संग्राह्ये । किमन्यैः फल्गुवल्ग-
नैः ॥ ८३ ॥ एवं चिंतयतस्तस्य । जातजातिस्मृतेः स्वयं ॥ देवतादत्तवेषस्या-जवत्प्रत्येकबु-
द्धता ॥ ८४ ॥ स बिभ्रदनगारित्वं । सकलत्रो दिवानिशं ॥ आत्तव्रतोऽपि नालुंपत् । प्रार्थनां
तस्य नाकिनः ॥८५॥ स चूतवृक्षं सुमनोऽभिरामं । विच्छायमालोक्य ततः क्षणेन ॥ ऋद्धिं स्व-
ऋद्धिं प्रसमीक्ष्य बोधा-द्गंधारराजर्षिरवाप धर्मं ॥ ८६ ॥

करकंडुर्द्विमुखश्च । नमिर्नग्गतिश्च सः ॥ अवाप्य युगपद्दीक्षां । विजह्रुरवनीतले ॥८७॥
चतुःकषायनिर्मुक्ता-श्चतुर्गतिभयोज्झिताः ॥ चत्वारोऽप्यथ ते क्षोणि-प्रतिष्ठपुरमैयरुः ॥ ८८ ॥

तत्र चारुचतुर्द्वारे । यक्षस्यातने क्वचित् ॥ ते सर्वे प्राविशन्नेक-कालं पूर्वादिदिक्क्रमात् ।८९।
तेषां समानसङ्ख्यान—ज्ञानदांतिदयाजुषां ॥ कर्तुं युगपदातिथ्यं । यक्षोऽभूत्क्षणमाकुलः ॥
॥ ९० ॥ निर्लोन्नमनसामेषां । संमुखीनाव एव मे ॥ आतिथ्यमर्हतीत्यासी—द्यक्षः साक्षा-
च्चतुर्मुखः ॥ ९१ ॥ चतुरस्तान् मुनीन् धर्म—ध्यानन्नेदानिवांगिनः ॥ निध्यायन् युगपद्यक्षो
—ऽस्तुत स्वामनिमेषतां ॥ ९२ ॥ अन्यान्यदेशसंजातै—र्दैवादेकत्र संगतैः ॥ तैस्तद्यक्षगृहं मेने
। प्रियमेलकतीर्थवत् ॥ ९३ ॥ करकंडुस्तदा कंडु—मपनीय शलाकया ॥ संगन्नेस्तां पुनर्येला-
प्रूचे द्विमुखसाधुना ॥ ९४ ॥ यदि राज्यं च राष्ट्रं च । पुरमंतःपुरं च तत् ॥ सर्वं तृणवद्-
त्याक्षी—स्तत्कोऽयं संचयो मुने ॥ ९५ ॥ यावत्प्रत्युत्तरं किंचि—द्दीयते करकंडुना ॥ तावद्
द्विमुखराजर्षि—मूचे नमिमहामुनिः ॥ ९६ ॥ यदि पैतृकराज्यस्य । सुकृतिन् कृत्यमत्यजः ॥
त्यक्त्वा तत्कृत्यमन्येषा—मात्मकृत्यपरो नव ॥ ९७ ॥ यावन्नमेरन्निमुखं । द्विमुखो वक्ति किं-
चन ॥ नगातिरनगारीश—स्तावन्नमिमवोचत ॥ ९८ ॥ यदि सर्वं परित्यज्य । मोक्षाय घटसे
मुने ॥ तत्परं गर्हसे कस्मा—दात्मश्रेयस्करो नव ॥ ९९ ॥ अथावसरमासाद्य । करकंडुमहा-

मुनिः ॥ सर्वसाधारणीं वाच—मुवाचायतिसुंदरां ॥ ७०० ॥ मोक्षमार्गं प्रपन्नेषु । साधुषु ब्रह्मचारिषु ॥ अहितार्थनिषेधुस्त्वं । न दोषं वक्तुमर्हसि ॥ १ ॥ परो रुष्यतु वा मा वा । विषं वा परिवर्ततां ॥ भाषितव्या हिता भाषा । सपक्षगुणकारिका ॥ २ ॥ इदं तेषां वचस्तत्त्वं । स्वादु श्रुतिपटैः पिबन् ॥ सुधाशनत्वं देवानां । यक्षः सत्यममन्यत ॥ ३ ॥ विहरंतोऽथ ते मोक्ष—बद्धलक्षा मुमुक्षवः ॥ काले कैवल्यमासाद्य । भव्यव्रातमबोधयन् ॥ ४ ॥ सहैव पुष्पोत्तरतश्च्युतास्ते । सहैव चारित्रधुरां दधुश्च ॥ सहैव सत्केवलबोधिमापुः । सहैव सिद्धिश्रियमालिलिंगुः ॥ ५ ॥ इति श्रीचतुर्थप्रत्येकबुद्धकथा. ॥

——

एवं निशाशेषे विभाव्य श्रावको यत्करोति तदाह—

॥ मूलम् ॥—इय भाविऊण काउं । भावस्सयमीसि उग्गए सूरे ॥ सुद्धमणदेहवत्थो । पढमं पूएइ गिहपडिमा ॥ ३३ ॥ व्याख्या—इति पूर्वोक्तं स्वमनःसमक्षं भावयित्वा तत आवश्यकमवश्यकृत्यत्वाज्जिनमतप्रसिद्धं सामायिकादिकं कृत्वा, इदं चावश्य-

कं द्विधा लौकिकलोकोत्तरभेदात्, एकैकमपि द्विधा द्रव्यतो भावतश्चेति. तत्र लौकिकं द्र-व्यावश्यकमनुयोगद्वारसूत्रे यथा–' जो इमे राईसरतलवरमाडंबियकोडुंबियमंतिमहामंति-अमच्चगणगदोवारियजावसत्थवाहप्पभिइओ कल्लं पाउप्पभाए रयणीए जाव उट्ठियंमि सूरे मुहधोवणं दंतपक्खालणं जाव तंबोलयाइयाइं दव्वावस्सयाइं करित्ता तओ पच्छा रायकुलं वा जाव उज्जाणं वा गछंति." लौकिकं भावावश्यकं यथा–'पुव्वण्हे भारहं, अवरण्हे रामायणं श्रूयते इति शेषः.' लोकोत्तरं द्रव्यावश्यकं यथा–'जे इमे समणगुणमुक्कजोगा छक्कायनिरणुकंपा हया इव उद्दामा, गया इव निरंकुसा, घट्टा मट्ठा तुप्पोट्ठा पंडुरपडपाउरणा जिणाणमाणाए सछंदं विहरिऊण उभओ कालमावस्सगस्स उवट्ठंति ॥१॥' लोकोत्तरं भावावश्यकं यथा–'जे णं इमे समणा वा समणी वा सावए वा साविया वा तच्चित्ते तम्मणे तल्लेसे तदज्झवसिए तत्तिव्वज्झवसाणे तदट्ठोवउत्ते तदप्पियकरणे तब्भावणाभाविए अन्नत्थ कत्थइ मणं अकरेमाणे उभओ कालमावस्सयं करंति ॥ २ ॥ इदं च मुहूर्तशेषायां रात्राववश्यं श्रावकेण सत्यापयितव्यं, यदागमः–समणेण सावएण य । अवस्स कायव्वयं हवइ जम्हा ॥ अंतो अहोनिसिस्सउ । तम्हा

आवस्सयं नाम ॥ १ ॥ यश्च व्याकुलत्वात् षडावश्यकं कर्तुं न क्षमते सोऽपि नियमादरुणो-
दयक्षणे प्रत्याख्यानावश्यकं यथाशक्ति चिंतयति, ततोऽत्रैकवचननिर्देशः कृतः. तत ईषदुद्-
ते दृश्यार्धबिंबे सूरे सूर्ये सति प्रथमं सर्वकर्तव्येभ्यः पूर्वं गृहप्रतिमा गृहसत्कानि बिंबानि पू-
जयति. पूजाविधिश्च पुरो वक्ष्यते, कथंभूतः सन्नित्याह—शुद्धान्यकलुषाणि मनोदेहवस्त्राणि
यस्य स शुद्धमनोदेहवस्त्रः, तत्र सावद्याध्यवसायवर्जनं मनःशुद्धिः, निर्जीवायां शुषिरकचवरा-
दिरहितायां च भूमावल्पेन वारिणानल्पेन करव्यापारेण सर्वांगं स्नानं देहशुद्धिः. न च वाच्यं
स्नानं विनापि देवपूजापि युज्यत इति, आशातनाप्रसंगात्. यदि नाम निर्मलशरीरनाकिनो-
ऽपि विशेषशुद्ध्यर्थं स्नात्वैव देवपूजायां प्रवर्तेरंस्ततः कथं नवैकादशस्रोतःस्रवदजस्रदुर्गंधमलैर्म-
नुष्यैः स्नानं विना सा क्रियते? अत एव देवपूजाकारिणां सिद्धांते—'ण्हाया कयबलिकम्मे'
त्यादिविशेषणोपादानं कृतं. ननु यतनापराणां श्रावकाणां बह्वारंभत्वात्स्नानमनुचितमिति चेन्न
जलपुष्पधूपादीनामप्यारंभहेतुत्वात्तन्निषेधोऽप्यापद्यते, न चायमिष्टः शिष्टानां, 'अकसिणप-
वत्तयाणं विरयाविरयाण एस खलु जुत्तो' इत्यागमप्रामाण्यादित्यलं विस्तरेण. तथा शुचिश्च-

तानुपहतवस्त्रधरणं वस्त्रशुद्धिः, पूजावसरे नरेण वस्त्रद्वयं धार्यं, नार्या तु वस्त्रत्रयं, न च मिथो वस्त्रविपर्यासः कार्यः, जाते च विपर्यासे जलक्षालनया शुद्धिरिति वृद्धाः. अथ जिनभवनगमनविधिमाह—

॥मूलम्॥—ततो सविड्ढीए । भागहवणिज्जमाणजसपसरो ॥ अन्नेसिंपि हु भावं । जणयंतो जिणहरं जाइ ॥३४॥ व्याख्या—ततो गृहचैत्यपूजानंतरं गृहीतपूजोपकरणः सर्वथा यथासंभवं हस्तिहयरथपदातिपरिजनप्रमुखया ऋद्ध्या युक्त इति गम्यते, मागधवर्ण्यमानयशःप्रसरः, अन्येषामपि दृष्टिणां धन्योऽयं यः पुण्यैः संपदं प्राप्य पुनः पुण्येष्वेव प्रवर्तते, यद्ययमनेकव्यापारव्यग्रोऽपि जिनार्चनादौ यतते ततो विशेषतोऽस्माभिस्तत्र यतितव्यमिति भावं पुण्याभिलाषं जनयन् जिनगृहं याति. श्रावकस्तत्र गतः सन् किं करोति? तदाह—

॥ मूलम् ॥—पढमालोए पणउ । पडिमाउ तत्थ लोमहत्थेण ॥ मोणीकयमुहकोसो । एसो निउणं पमज्जेइ ॥ ३५ ॥ व्याख्या—तत्र जिनभवने नैषेधिकीपूर्वं प्रविष्टः प्रथमालोके प्रथमदर्शने प्रस्तावाज्जिनप्रतिमानामीषन्नमितशिरः संघटितकरकुड्मलो नमो जिणाणमित्यु-

क्तिपूर्वं प्रणतः, प्रणामं कृत्वेत्यर्थः. ततो गर्भगृहं प्रविश्य लोम्नां मयूरपिञ्छानां हस्तः कला-
पो लोमहस्तस्तेनैष श्रावकः प्रतिमा जिनबिंबानि निपुणं सूक्ष्मेक्षिकया प्रमार्ष्टि. कथंभूतः स-
न्नित्याह—मौनीकृतमुखकोशः, पूजाकरणे हि भाषाप्रयत्नोद्भूतनिष्ठ्यूतादिना विवृतवदन-
नासाविवरनिःसरद्भिःश्वासादिना च माभूदासातनेति मौनमष्टपुटं च मुखकोशं विदध्यादि-
त्यर्थः. अथ देवपूजाविधिं षड्भिर्गाथाभिराह—

॥ मूलम् ॥—तो न्हविय सुरहिसलिलेण । गंधकासाइयाइ लूहेइ ॥ चंदणरसेण लिंपेइ
। दूसजुअलं निअंसेइ ॥ ३६ ॥ अच्चेइ पवरगंधेहिं । अह कुणइ मुक्कलाण कुसुमाण ॥ म-
ल्लाण चुस्सवस्सग—वत्थाभरणाणं आरुहणं ॥ ३७ ॥ मुंचइ पलंबमाला । करयलमुक्काइं किरइ
कुसुमाइं ॥ सियतंडुलेहिं अट्ठ-मंगले आलिहइ पुरओ ॥ ३८ ॥ धूवं च देइ तत्तो । अ-
ट्ठसएणं थुणेइ वित्ताणं ॥ सत्तट्ठपए ओसरिय । वाममंचेइ सो जाणुं ॥ ३९ ॥ दाहिणमिला-
इलाइय । नामेइ सिरं महीइ तिक्खुत्तो ॥ ईसिं नमित्तु सीसे । कयंजली भणइ सक्कथुअं
॥ ४० ॥ तो गीयवज्जनट्टं । मणरंगेणं पुणो पयासेइ ॥ चेइयहरस्स चिंतं । कुणइ आसाय-

तानुपहतवस्त्रधरणं वस्त्रशुद्धिः, पूजावसरे नरेण वस्त्रद्वयं धार्यं, नार्या तु वस्त्रत्रयं, न च मिथो वस्त्रविपर्यासः कार्यः, जाते च विपर्यासे जलक्षालनया शुद्धिरिति वृद्धाः. अथ जिनभवनगमनविधिमाह—

॥मूलम्॥—तत्तो सविड्ढीए । मागहवणिज्जमाणजसपसरो ॥ अन्नेसिंपि हु भावं । जणयंतो जिणहरं जाइ ॥३४॥ व्याख्या—ततो गृहचैत्यपूजानंतरं गृहीतपूजोपकरणः सर्वया यथासंभवं हस्तिहयरथपदातिपरिजनप्रमुखया ऋद्ध्या युक्त इति गम्यते, मागधवर्ण्यमानयशःप्रसरः, अन्येषामपि दृष्टिणां धन्योऽयं यः पुण्यैः संपदं प्राप्य पुनः पुण्येष्वेव प्रवर्तते, यद्वायमनेकव्यापारव्यग्रोऽपि जिनार्चनादौ यतते ततो विशेषतोऽस्माभिस्तत्र यतितव्यमिति भावं पुण्यामिलाषं जनयन् जिनगृहं याति. श्रावकस्तत्र गतः सन् किं करोति? तदाह—

॥ मूलम् ॥—पढमालाए पणउं । पडिमाउ तत्थ लोमहत्थेण ॥ मोणीकयमुहकोसो । एसो निउणं पमज्जेइ ॥ ३५ ॥ व्याख्या— तत्र जिनभवने नैषेधिकीपूर्वं प्रविष्टः प्रथमालोके प्रथमदर्शने प्रस्तावाज्जिनप्रतिमानामीषन्नमितशिरः संघटितकरकुड्मलो नमो जिणाणमित्यु-

क्तिपूर्वं प्रणतः, प्रणामं कृत्वेत्यर्थः. ततो गर्भगृहं प्रविश्य लोम्नां मयूरपिच्छानां हस्तः कलापो लोमहस्तस्तेनैष श्रावकः प्रतिमा जिनबिंबानि निपुणं सूक्ष्मेक्षिकया प्रमार्ष्टि. कथंभूतः सन्नित्याह—मौनीकृतमुखकोशः, पूजाकरणे हि भाषाप्रयत्नोध्धूतनिष्ठयूतादिना विवृतवदननासाविवरनिःसरन्निःश्वासादिना च माभूदासातनेति मौनमष्टपुटं च मुखकोशं विदध्यादित्यर्थः. अथ देवपूजाविधिं षड्भिर्गाथाभिराह—

॥ मूलम् ॥—तो ण्हविय सुरहिसलिलेण । गंधकासाइयाइ लूहेइ ॥ चंदणरसेण लिंपेइ । दूसजुअलं निअंसेइ ॥ ३६ ॥ अच्चेइ पवरगंधेहिं । अह कुणइ मुक्कलाण कुसुमाण ॥ मल्लाण चुणवसग—वत्थाभरणाण आरुहणं ॥ ३७ ॥ मुंचइ पलंबमाला । करयलमुक्काइं किरइ कुसुमाइं ॥ सियतंडुलेहिं अठ्ठ-मंगले आलिहइ पुरउ ॥ ३८ ॥ धूवं च देइ तत्तो । अक्खसएणं थुणेइ वित्ताणं ॥ सत्तठ्ठपए उसरिय । वाममंचेइ सो जाणुं ॥ ३९ ॥ दाहिणमिलाइलाइय । नामेइ सिरं महीइ तिक्खुत्तो ॥ ईसिं नमित्तु सीसे । कयंजली भणइ सक्कथुअं ॥ ४० ॥ तो गीयवज्जनट्टं । महारंगेणं पुणो पयासेइ ॥ चेइयहरस्स चिंतं । कुणइ आसाय-

णारहिउं ॥ ४१ ॥ व्याख्या—ततः प्रमार्जनानंतरं प्रतिमाः स्नपयित्वा सुरभिणा घुसृण-घनसारमिश्रेण सलिलेन गंधकषाय्या मृदुलपक्ष्मलवस्त्रेण रूक्षयति निःस्नेहयति. १. ततश्चंदनरसेन लिंपति २. ततो दुष्ययुगलं श्वेतवस्त्रद्वयं निवासयति परिधापयति. प्रतिमायाः शिरसि पर्यस्तिकायां चैकैकं वस्त्रं मुंचतीत्यर्थः. ३. ततश्चंदनादिना दारुजातस्वारप्रवरैः प्रधानैर्गंधैर्वासैरर्चयति ४. अथ वासक्षेपानंतरं मुत्कलानामग्रथितानां कुसुमानां कमलमालतीमल्लिकीकेतकादीनामारोहणं करोति, मुत्कलैः कुसुमैर्जिनप्रतिमाः पूजयतीत्यर्थः. ५. ततो माल्यादीनां पंचानां क्रमादारोहणं करोति, तत्र माल्यानि ग्रथितपुष्पाणि, वर्णकस्त्वारोहितेषु पुष्पेषु विशेषशोभार्थमंतरांतरा चंपकजपापुष्पनीलपत्रादिनिवेशः, रक्तकणवीरतुलसीपत्राणि च जिनपूजायां नाधिकुर्वीत इति वृद्धाः. चूर्णं मृदितकर्पूरादिकं, वस्त्राणि परिधापयति ध्वजपटादीनि, आभरणानि तिलकादीनि ६–१०. ततो जिनस्याग्रतो द्वयोः पार्श्वयोः प्रलंबा माला मुंचति, पुष्पगृहं करोतीत्यर्थः. ११. ततः पुरतः प्रतिमानां करतले धृत्वा मुत्कलानि कुसुमानि किरति पुष्पवृष्टिं करोतीत्यर्थः १२. ततो मौक्तिकैः सौवर्णै राजतैर्वा तदभावे सितै-

रस्फुटितैस्तंदुलैः शाल्यादिभिरष्टाष्टमंगलान्यालिखति, अष्टेति संख्यावचनमष्टमंगलमित्येकैक-स्यापि मंगलस्य संज्ञाष्टाह्निकावत्, यद्वाष्टाष्टेति वीप्सावचनं, तत एकैकं मंगलमष्टौ वारान् लिखतीति मंगलानि च स्वस्तिक १ श्रीवत्स २ नंद्यावर्त्त ३ वर्धमान ४ भद्रासन ५ कलश ६ मत्स्य ७ दर्पण ८ रूपाणि, तेषु भद्रासनं वेत्रासनादि, वर्धमानं शरावसंपुटं पुरुषारूढो पुरुषो वा, शेषाणि प्रतीतानि. १३. ततो धूपकडुच्छुकं गृहीत्वा कर्पूरागुरुमिश्रं धूपं ददाति. १४. ततोऽपुनरुक्तानां नवनवार्थयुक्तानां वृत्तानामष्टोत्तरेण शतेन स्तौति जिनानिति प्रक्रमात्. ततः सप्ताष्टौ पदान्यपसृत्य पश्चाद् भूत्वा स पूजाकृद्वामं जानुमंचति, चतुर्भिरंगुलैर्भूमेरूर्ध्वं करोति, तथा दक्षिणं जानु मिलायां भूमौ लगयित्वा त्रिकृत्वस्त्रीन् वारान् मह्यां शिरो नामयति. तत ईषन्नत्वा शीर्षे कृतांजलियोजितकरसंपुटः सन् शक्रस्तवं प्रणिपातदंडकं भणति, स चायं—'नमुत्थुणं अरहंताणं भगवंताणं आइगराणं तित्थयराणं सयंसंबुद्धाणं पुरिसुत्तमाणं पुरिससीहाणं पुरिसवरपुंडरीयाणं पुरिसवरगंधहत्थीणं लोगुत्तमाणं लोगनाहाणं लोगहियाणं लोगपईवाणं लोगपज्जोअगराणं अभयदयाणं चक्खुदयाणं मग्गदयाणं सरणदयाणं बोहिदयाणं धम्मदयाणं धम्मदेस-

याणं धम्मनायगाणं धम्मसारहीणं धम्मवरचाउरंतचक्कवट्टीणं अप्पडिहयवरनाणदंसणधराणं विअट्टछउमाणं जिणाणं जावयाणं तिन्नाणं तारयाणं बुद्धाणं बोहियाणं मुत्ताणं मोअगाणं सवन्नूणं सवदंसीणं सिवमयलमरुअमणंतमक्खयमवाबाहमपुणरावत्तिसिद्धिगइनामधेयं ठाणं संपत्ताणमिति.' अनेन प्रायो जन्मादिकल्याणकेषु शक्रोऽर्हतं स्तौतीति शक्रस्तव उच्यते. १४. तत शक्रस्तववर्णनानंतरं गीतवाद्यनाट्यानि मनोरंगेण चित्तविलासेन, न तु स्वकहपप्रकर्षपरिज्ञापनाय पुरो जिनानां प्रकाशयति, स्वयं करणादन्यैर्वा कारणात्. तत्र ग्रामस्वरमूर्छनादिविशुद्धं गंधर्वकर्म गीतं, तथा ततं वीणाद्यं, घनं तालाद्यं, अनद्धं मुरजाद्यं, शुषिरं वंशाद्यं चेति चतुर्धा वाद्यं, हल्लीसकलकुटरसाद्यमभिनयात्मकं वा नाट्यं. एते च स्नपनाद्या नाट्यांता गणनया सप्तदश पूजाभेदा बहुष्वागमेषु दृष्टत्वादिह तदनुसारेण निबद्धाः. यद् ज्ञाताधर्मकथासूत्रं —तएणं सा दोवइरायवरकन्नगा एहाया कयबलिकम्मा कयकोउयमंगलपायच्छित्ता सुद्धप्पावेसाइं मंगलाइं वत्थाइं पवरपरिहिया मज्जणघराउ पडिनिक्खमइ, जेणेव जिणहरे तेणेव उवागच्छइ, जिणहरं अणुपविसइ, आलोए पणामं करेइ, पणामं करित्ता लोमहत्थयं परा-

मुसइ. एवं जहा सूरियाज्ञे जिणपमिमाउ अच्चेइ तहेव नाणियव्वं. जाव धूवं महइ, वामं जाणुं अंचेइ, अंचित्ता दाहिणं जाणुं धरणितलंसि निहट्टु तिखुत्तो मुद्धाणं धरणितलंसि नियंसेइ, ईसिं पच्चुप्पन्नमइ करयलजावकट्टु एवं वयासि. नमोत्थुणं अरहंताणं जाव संपत्ताणं वंदइ नमंसइ जिणहराउ पमिनिक्कमइत्ति. राजप्रश्नीयोपांगेऽप्युक्तं—तएणं से सूरियाज्ञे देवे जाव सव्विड्ढीए जाव वाइअरवेणं जेणेव सिद्धाययणे तेणेव उवागच्छइ, उवागच्छित्ता सिद्धायययणं पुरत्थिमिल्लेणं दारेणं अणुपविसइ, अणुपविसित्ता जेणेव देवच्छंदए जेणेव जिणपमिमाउ तेणेव उवागच्छइ, उवागच्छित्ता जिणपमिमाणं आलोए पणामं करेइ, करित्ता लोमहत्थगं परामुसइ, परामुसित्ता लोमहत्थगं गिण्हइ, गिण्हित्ता जिणपमिमाउ लोमहत्थएणं पमज्जइ, पमज्जित्ता जिणपमिमाउ सुरहिणा गंधोदएणं ण्हाणेइ, ण्हाणित्ता सरसेणं गोसीसचंदणेणं गायाइं अणुलिंपइ, अणुलिंपित्ता जिणपमिमाणं अहियाइं देवदूसजुअलाइं निअंसेइ, निअंसित्ता अग्गेहिं वरेहिं गंधेहिं अच्चेइ, अच्चित्ता पुप्फारुहणं मल्लारुहणं वण्णारुहणं चुण्णारुहणं वत्थारुहणं आनरणारुहणं करेइ. करित्ता आसत्तोवसत्तविउलवग्घारियमल्लदाम-

जुप० याणं धम्मनायगाणं धम्मसारहीणं घम्मवरचाउरंतचक्कवट्टीणं अप्पडिहयवरनाणदंसणधराणं विअट्टछउमाणं जिणाणं जावयाणं तिन्नाणं तारयाणं बुद्धाणं बोहियाणं मुत्ताणं मोअगाणं

चिंता- सव्वन्नूणं सव्वदंसीणं सिवमयलमरुअमणंतमक्खयमव्वाबाहमपुणरावत्तिसिद्धिगइनामधेयं ठाणं

७०६ संपत्ताणमिति.' अनेन प्रायो जन्मादिकल्याणकेषु शक्रोऽर्हतं स्तौतीति शक्रस्तव उच्यते. १४. तत शक्रस्तवजणनानंतरं गीतवाद्यनाट्यानि मनोरंगेण चित्तविलासेन, न तु स्वकदपप्रकर्षपरिज्ञापनाय पुरो जिनानां प्रकाशयति, स्वयं करणादन्यैर्वा कारणात्. तत्र ग्रामस्वरमूर्छनादिविशुद्धं गंधर्वकर्म गीतं, तथा ततं वीणाद्यं, घनं तालाद्यं, अनद्धं मुरजाद्यं, शुषिरं वंशाद्यं चेति चतुर्धा वाद्यं, हल्लीसकलकुटरसाद्यमभिनयात्मकं वा नाट्यं. एते च स्नपनाद्या नाट्यांता गणनया सप्तदश पूजाभेदा बहुष्वागमेषु दृष्टत्वादिह तदनुसारेण निबद्धाः. यद् ज्ञाताधर्मकथासूत्रं —तएणं सा दोवइरायवरकन्नगा एहाया कयवलिकम्मा कयकोउयमंगलपायच्छित्ता सुद्धप्पावेसाइ मंगलाइं वत्थाइं पवरपरिहिया मज्जणघराओ पडिनिक्खमइ, जेणेव जिणहरे तेणेव उवागच्छइ, जिणहरं अणुपविसइ, आलोए पणामं करेइ, पणामं करित्ता लोमहत्थयं परा-

मुसइ. एवं जहा सूरियाज्ञे जिणपडिमाउं अच्चेइ तहेव जाणियव्वं. जाव धूवं डहइ, वामं जाणुं अंचेइ, अंचित्ता दाहिणं जाणुं धरणितलंसि निहट्टु तिखुत्तो मुद्धाणं धरणितलंसि नियंसेइ, इसिं पच्चुण्णमइ करयलजावकट्टु एवं वयासि. नमोत्थुणं अरहंताणं जाव संपत्ताणं वंदइ नमंसइ जिणहराउ पडिनिक्खमइत्ति. राजप्रश्नीयोपांगेऽप्युक्तं—तएणं से सूरियाज्ञे देवे जाव सव्विड्ढीए जाव वाइअरवेणं जेणेव सिद्धायय्णे तेणेव उवागच्छइ, उवागच्छित्ता सिद्धाययणं पुरत्थिमिल्लेणं दारेणं अणुपविसइ, अणुपविसित्ता जेणेव देवछंदए जेणेव जिणपडिमाउं तेणेव उवागच्छइ, उवागच्छित्ता जिणपडिमाणं आलोए पणामं करेइ, करित्ता लोमहत्थगं परामुसइ, परामुसित्ता लोमहत्थगं गिण्हइ, गिण्हित्ता जिणपडिमाउं लोमहत्थएणं पमज्जइ, पमज्जित्ता जिणपडिमाउं सुरहिणा गंधोदएणं ण्हाणेइ, ण्हाणित्ता सरसेणं गोसीसचंदणेणं गायाइं अणुलिंपइ, अणुलिंपित्ता जिणपडिमाणं अहियाइं देवदूसजुअलाइं निअंसेइ, निअंसित्ता अग्गेहिं वरेहिं गंधेहिं अच्चेइ, अच्चित्ता पुप्फारुहणं मल्लारुहणं वण्णारुहणं चुण्णारुहणं वत्थारुहणं आभरणारुहणं करेइ. करित्ता आसत्तोसत्तविउलवग्घारियमल्लदाम-

कयग्गाहगहियकरयलपब्भट्ठविप्पमुक्केणं दसद्धवन्नेणं कुसुमेणं मुक्कपुप्फपुंजोवयारकलियं करेइ, करित्ता जाव कयग्गाहगहियकरयलपब्भट्ठविप्पमुक्केणं दसद्धवन्नेणं कुसुमेणं मुक्क-

कलावं करेइ, करित्ता जिणपडिमाणं पुरओ अच्छेहिं सण्हेहिं रययामएहिं अ-
पुप्फपुंजोवयारकलियं करेइ, करित्ता जिणपडिमाणं पुरओ अच्छेहिं सण्हेहिं रययामएहिं अ-
च्छरसातंडुलेहिं अट्ठ मंगले आलिहइ. तं सुत्थिय १ सिरिवच्छ २ नंदियावत्त ३ वद्धमाण
४ वरकलस ५ मच्छ ६ दप्पण ७ भद्दासणे ८. तयाणंतरं च णं चंदप्पभरयणवइरवेरुलियविमल-
दंडं कंचणमणिरयणभत्तिचित्तं कालागुरुपवरकुंदरुक्कतुरुक्कधूवमघमघंतगंधुत्तमाणुविद्धं धूमवट्टिं
विणिम्मुयंतं वेरुलियमयं कडुच्छुयं पग्गहिय पयत्तेण धूवं दाऊण अट्ठसयविसुद्धगंधजुत्तेहिं म-
हावित्तेहिं अत्थजुत्तेहिं अपुणरुत्तेहिं संथुणइ, संथुणित्ता सत्तट्ठपयाइं ओसरइ, ओसरित्ता वामं
जाणुं अंचेइ, अंचित्ता दाहिणं जाणुं धरणितलंसि निहट्टु तिक्खुत्तो मुद्धाणं धरणितलंसि
निवाडेइ, ईसिं पच्चुण्णमइत्ता करयलपरिग्गहियं सिरसावत्तं दसनहं मत्थए अंजलिं कट्टु एवं
वयासी—' नमोत्थुणं अरिहंताणं जाव ठाणं संपत्ताणं ' तिकट्टु वंदइ नमंसइ. तथा जी-
वाभिगमे विजयदेववक्तव्यतायामयमेवालापको विजयदेवाभिलापेन वाच्यः. यद्यप्येष्वाला-
पकेषु गीतादित्रयं साक्षान्नोपनिबद्धं, तथापि न तस्यासंभवो वाच्यः. प्रभावत्यादिपूजावसरे

७५० जिनजन्माभिषेकादौ च बहुशः प्रतिपादितत्वात्, ततः परमोल्लासहेतुकत्वात्परमभावनांग-
त्वादेतद्विवेकिना सस्थापनीयमेव. यदाह—सयं पमज्जणे पुण्णं । सहस्सं च विलेवणे ॥ स-
चिंता- यसाहस्सिया माला । अणंतं गीयवाइयं ॥ १ ॥ इह केचिदाचार्याः सामाचारीं प्रमाणय-
तः—तिन्नि निसीहि य तिन्नि य । पयाहिणा तिन्नि चेव य पणामा ॥ तिविहा पूया य तहा
७०७ । अवत्थतियभावणं चेव ॥ १ ॥ तिदिसनिरिक्खणविरई । भूमीइ पमज्जणं च तिक्खुत्तो ॥ वं-
णातियं च मुद्दा—तियं च तिविहं पणिहाणं ॥ २ ॥ इत्यनेन विधिना श्रावकाणां देवपूजा-
माहुः, तदत्र मध्यस्थदृष्टयः श्रुतधरा एव प्रमाणं. एवं जिनानां पूजां विधाय ततश्चैत्यगृह-
स्य प्रतिमाधारस्थानस्य कपाटोल्लोचसुधाधवलनादिकां चिंतां करोति, चकारात्स्वस्य व्यग्रता-
यामन्यैः कारयति. तथा यावच्चैत्यगृहे तिष्ठति तावदाशातनारहितश्च भवति, आशातनाश्च
तांबूलाद्याः सामान्यतो दश. उक्तं च—तंबोलपाणभोयणु—वाणहथीभोगसुअणनिट्ठुवणे ॥
मुत्तुच्चारं जूयं । वज्जे जिणनाहजगइमज्झे ॥ १ ॥ विस्तरतस्तु चतुरशीतिः, तद्यथा—खेलं के-
लिकली कला कुललयं तंबोलमुग्गालयं । गाली कंगुलीया सरीरधुवणं केसे नहं लोहियं ॥

नत्तेसं तयपित्तवंतदसणे विस्सामणं दामणं । दंतत्थीनहगंरूनासियसिरोसुत्तब्रवीणं मलं ॥
॥१॥ मंतं मीलणलिक्खयं विनजणं नंगारडुत्तासणं। बाणीकप्पऋदालिपप्पऋवऋीविस्सारणं ना-
सणं ॥ अक्कंदं विकहं सरत्थघऋणं तेरिच्छसंठावणं । अग्गीसेवणरंधणं परिखणं निस्सीहि-
या नंजणं ॥ २ ॥ बत्तोवाहणसत्थचामरमणोणेगत्तमप्ज्ञंगणं । सच्चित्ताणमवायत्रायमजिए
दिट्ठीइ नो अंजली ॥ साडे उत्तरसंगनंगमजरूं मोलीसिरोसेहरं। हुड्डा जिरुरुगिड्डियाइरमणं
जोहारनंरुक्किय ॥ ३ ॥ रेकारं धरणं रणं विवरणं बालाण पलहत्थियं । पाउपायपसारणं
पुरुपुरीपंकं रजमेहुणं ॥ जूआजेमणजुरूविज्ञावणिज्जं सिज्जं जलं मज्जणं । एमाइ चुलसीइ
देवनवणे वज्जेइ आसायणा ॥४॥ आसामुपयोगित्वादर्थलेशोऽप्युच्यते—'खेलंति' श्लेष्मोज्झनं १,
केलिरंदोलनं जलादिविषयं २, कलिर्मिथो वाक्कलहः ३, 'कलत्ति' पाठादिकलाग्रहणं ४, 'कुल-
लयं' गरूषं ५, 'तांबूलं' स्वादिमाहारोपलक्षणं ६, 'उग्गालयं' तांबूलनिर्यासरसोज्झनं ७, 'गाली'
असद्वचः ८ 'कंगुलियत्ति' मूत्रपुरीषे ए, 'सरीरधोवणं' जलेन कंठस्नानं १०, 'केसत्ति'
नड्डाकरणं ११, 'नहत्ति' नखसंस्कारः १२, 'लोहियंति' रक्तकर्षणं १३, 'नत्तो' खादिमाहारः

१४, 'तयत्ति' पामादिषु त्वगवयवोज्झनं १५, 'पित्तत्ति' पित्तं छर्दिः १६, 'वांतं' प्रतीतं १७, 'दसणत्ति' पतितदंतोज्झनं १८, विश्रामणं अंगसंवाहनं १९, 'दामनं' पशुसंयमनं २०, दंतेक्षिनखगंडनासिकाशिरःश्रोत्रछवीनां 'मलंति' मलोज्झनं २१–२८, मंत्रोऽधर्म्य आलोचः २९, मीलनं मल्लगणादीनां ३०, लेख्यकं पुस्तकादिलेखनमायव्ययादिचिंतनं वा ३१, विभजनं देयवस्तुनो दायादेर्विभज्यार्पणं ३२, भांडागारं कोशः ३३, दुष्टासनं मंचिकागद्दिकादि ३४, 'छाणत्ति' छगणस्थापनं जलगालनं वा ३५, कर्पटदालिपर्पटवाटिकानां विसारणं ३६–३८, नाशनं नृपादेर्भयात्तस्याश्रयणं ३९, आक्रंदविकथे प्रतीते ४०—४२, 'असरत्थघरूणंति' स्वोपकरणघटनं, चैत्योपकरणघटने न दोषः ४३, तिर्यक्संस्थापनमबद्धचतुष्पदधारणं ४४, अग्निसेवनरंधने प्रतीते ४५–४६, परीक्षणं रलरूप्यकादेः ४७, नैषेधिकीभंजनं चैत्यप्रवेशे नैषेधिक्या अकरणं ४८, छत्रोपानहशस्त्रचामराणां धरणं ४९—५२, मनोऽनेकत्वं व्याकुलचित्तता ५३, अभ्यंजनं तैलादिना ५४, सचित्तानां शिरःस्थपुष्पादीनामत्यागः ५५, त्यागश्चाजीवस्य स्वर्णाभरणादेः ५६, दृष्टे जिनदर्शने 'नो अंजलि' अंजलेरयोजनं ५७, एकशाटकउत्तरासंगभंगः प्रतीतः

उच्चेसं तयपित्तवंतदसणे विस्सामणं दामणं । दंतत्थीनहगंरूनासियसिरोसुत्तछवीणं मलं ॥
उप० ॥१॥ मंतं मीलणलिरकयं विजजणं उंमारडुट्ठासणं । गाणीकप्परूदालिपप्परूवरूीविस्सारणं ना-
चिंता- सणं ॥ अक्कंदं विकहं सरत्थघरूणं तेरिच्छसंठावणं । अग्गीसेवणरंधणं परिखणं निस्सीहि-
८१० या उंजणं ॥ २ ॥ छत्तोवाहणसत्थचामरमणोणेगत्तमप्नंगणं । सच्चित्ताणमचायचायमजिए
दिट्ठीइ नो अंजली ॥ साडे उत्तरसंगउंगमउरूं मोलीसिरोसेहरं । हुड्डाजिमरुगिड्डियाइरमणं
जोहारउंरूक्किय ॥ ३ ॥ रेकारं धरणं रणं विवरणं बालाण पलहत्थियं । पाउपायपसारणं
पुरूपुरूीपंकं रउमेहुणं ॥ जूआजेमणजुरूविज्जावणिजं सिज्जं जलं मज्जणं । एमाइ चुलसीइ
देवउवणे वज्जेइ आसायणा ॥४॥ आसामुपयोगित्वादर्थलेशोऽप्युच्यते—'खेलंति' श्लेष्मोज्झनं १,
केलिरंदोलनं जलादिविषयं २, कलिर्मिथो वाक्कलहः ३, 'कलत्ति' पाठादिकलाग्रहणं ४, 'कुल-
लयं' गंरूषं ५, 'तांबूलं' स्वादिमाहारोपलक्षणं ६, 'उग्गालयं' तांबूलनिर्यासरसोज्झनं ७, 'गाली'
असरूचः ८ 'कंगुलियत्ति' मूत्रपुरीषे ९, 'सरीरधोवणं' जलेन कंठस्नानं १०, 'केसत्ति'
जड्डाकरणं ११, 'नहत्ति' नखसंस्कारः १२, 'लोहियंति' रक्तकर्षणं १३, 'उत्तो' खादिमाहारः

उप०
चिंता-
८११

१४, 'तयत्ति' पामादिषु त्वगवयवोष्ठनं १५, 'पित्तत्ति' पित्तं छर्दिः १६, 'वांतं' प्रतीतं १७, 'दस-णत्ति' पतितदंतोष्ठनं १८, विश्रामणं अंगसंवाहनं १९, 'दामनं' पशुसंयमनं २०, दंतेक्षिनखगंरू-मीलनं मल्ल-नासिकाशिरःश्रोत्रछवीनां 'मलंति' मलोष्ठनं २१—२८, मंत्रोऽधर्म्य आलोचः २९, विभजनं देयवस्तुनो दा-गणादीनां ३०, लेख्यकं पुस्तकादिलेखनमायव्ययादिचिंतनं वा ३१, सादेर्विभज्यार्पणं ३२, भांडागारं कोशः ३३, डुष्टासनं मंचिकागद्दिकादि ३४, 'बाणत्ति' बगणस्थापनं जलगालनं वा ३५, कर्पटदालिपर्पटवाटिकानां विसारणं ३६—३८, नाशनं नी-तस्याश्रयणं ३९, आक्रंदविकथे प्रतीते ४०—४२, 'असरत्थघरूणंति' स्वोपकरणघटनं, चैत्योपकरणघटने न दोषः ४३, तिर्यक्संस्थापनमबद्धचतुष्पदधारणं ४४, अग्निसेवनरंधने प्र-तीते ४५—४६, परीक्षणं रत्नरूप्यकादेः ४७, नैषेधिकीत्त्यजनं चैत्यप्रवेशे नैषेधिक्या अकरणं ४८, छत्रोपानहशस्त्रचामराणां धरणं ४९—५२, मनोऽनेकत्वं व्याकुलचित्तता ५३, अभ्यंजनं तैलादिना ५४, सच्चित्तानां शिरःस्थपुष्पादीनामत्यागः ५५, त्यागश्चाजीवस्य स्वर्णाभरणादेः ५६, दृष्टे जिनदर्शने 'नो अंजलि' अंजलेरयोजनं ५७, एकशाटकउत्तरासंगभंगः प्रतीतः

५८, मुकुटः सौवर्णमौलिः, शिरसि वेषनं वासो शिरःशेखरं पौष्यमेषामत्यजनं ५९—६१, हुंफा प्रतीता ६२, ' जिंकुहगिड्डीयाइरमणं ' कंडुकादिक्रीडा ६३, ' जोहारत्ति ' लौकिको नमस्कारः ६४, जंमक्रियारेकारौ प्रतीतौ ६५–६६, धरणं चौराधमर्णादेः ६७, रणं शस्त्राशस्त्रियुद्धं ६८, विवरणं बालानां सर्वकेशसंस्कारोपलक्षणं ६९, पर्यस्तिका ख्याता ७०, पाडुः काष्ठादिमया ७१, पादप्रसारणं मुखबाह्वादिव्यादानोपलक्षणं ७२, पुरूपुरी कंठ्या ७३, ' पंकंति' पंकापनयनं ७४, रजश्चरणादिरजोमार्जनमार्त्तवश्रावो वा ७५, मैथुनं प्रतीतं ७६, 'जूअत्ति ' यूकाद्यपसारणं ७७, जेमनं भोजनं ७८, युद्धं मल्लयुद्धादि ७९, ' विज्जत्ति ' वैद्यकं ८०, वाणिज्यं व्यापारं प्रसिद्धं ८१, शय्या शयनं ८२, जलं जलपानं ८३, मज्जनं स्नानं ८४. एताश्चतुरशीतिराशातना जिनालये वर्ज्याः. एष महर्द्ध्या चैत्यगमनादिः सर्वोऽपि विधिः रुद्धिप्राप्तं श्रावकमुद्दिश्य दर्शितः, अनृद्धिप्राप्तस्तु चैत्यगमनं पूजाभेदांश्चैत्यचिंतां च यथाशक्ति व्यनक्तीति स्वयं द्रष्टव्यं. एवं देवभक्तिमुपदर्श्याथ गुरुभक्तिमाह—

॥ मूलम् ॥—तो पत्तो गुरुपासे । पच्चक्खाणं करेइ विणयेण ॥ सुच्चा धम्मं तत्तो । वा-

लगिलाणाइ चिंतेइ ॥ ४२ ॥ व्याख्या—'विणयेत्ति' पदं क्रमरुकमणिन्यायेनादावपि संबंध्यते, ततो देवपूजानंतरं विनयेन पंचविधाभिगमात्मकेन, स चैवं—सचित्तानां पत्रपुष्पादीनांत्यागः१, अचित्तानां धनकनकादीनामत्यागः २, एकपुटशाटकेनोत्तरासंगकरणं ३, नैषेधिकीपूर्वं प्रथमालोके शिरस्यंजलियोजनं ४, मनःस्थिराकरणं चेति. ५. ऋद्धिप्राप्तमाश्रित्य खड्गछत्रवाहनमुकुटचामरपरित्यागरूपेण वा विनयेन प्राप्तो गुरुपार्श्वे गुरूणामवग्रहे विनयेनेर्यापथं प्रतिक्रम्य द्वादशावर्त्तवंदनरूपेणोषन्नम्रशिरा मुखाग्ररचितांजलिः प्रत्याख्यानं प्रातः कृतं छिन्नक्तादि करोति, गुरुमुखेनेति गम्यते. ततो विशेषावबोधार्थं गुरुमुखात् 'धम्मंति' धर्मोपदेशं श्रुत्वा बालग्लानादिकं चिंतयति, गुरूणां परिवारे कः साधुर्बालो ग्लानो वा वर्तत इति विचार्य प्रातराशौषधादिदाने यतत इत्यर्थः. तत्राजातश्मश्रूच्छेदोऽजिनवदीक्षितो वा बालः, ग्लान आतुरः, आदिशब्दाद् वृद्धप्राघूर्णकादयो गुरुवंदनायायाताः साधर्मिका वा किंचिल्लिप्सया प्राप्तो दरिद्रश्रावको वा, तेषामपि यथाशक्ति चिंतां करोति. एवं धर्महेतुत्वाद्धनस्यार्जनविधिमाह—

॥ मूलम् ॥—अह धम्ममवाहंतो । हेउं अत्थस्स उज्जमइ सढो ॥ धम्मोवघायजणिया । जं लछी होइ विसवल्ली ॥ ४३ ॥ व्याख्या—सुगमा, नवरं लक्ष्म्या विषवल्लीत्वाध्यारोपः सुबुद्धिभ्रंशनाद्धि नाशहेतुकत्वाच्च, यद्यपि कस्यचित्पापानुबंधिपुण्यवशादिह लोके विनाशो न दृश्यते, तथाप्यायत्यामवश्यं भवत्येव. यदाह—पापेनैवार्थरागांधः । फलमाप्नोति यत्कचित् ॥ बडिशामिषवत्तत्त—मविनाश्य न जीर्यति ॥ १ ॥ नन्वन्यायेनाप्युपार्जितं धनं दानादिपुण्यैः साधुतां लंभयिष्याम इति पराभिप्रायमाशंक्याह—

॥ मूलम् ॥—धम्मोवि जो धणेणं । कारइ ववहारसुद्धिरहिएण ॥ सो न लहइ विच्छारं । तरुव लवणंबुसंसित्तो ॥ ४४ ॥ व्याख्या—सुबोधा, नवरं स धर्मः लवणांबुना क्षारवारिणा संसिक्तस्तरुरिव फलदशायोग्यं विस्तारं न लभते. उक्तं च—ववहारसुद्धी धम्मस्स । मूलं सव्वन्नुभासए ॥ ववहारेण सुद्धेण । अत्थसुद्धी जओ भवे ॥ १ ॥ सुद्धेणं चेव अत्थेणं । आहारो होइ सुद्धओ ॥ आहारेणं तु सुद्धेणं । देहसुद्धी जओ भवे ॥ २ ॥ सुद्धेणं चेव देहेणं । धम्मजुग्गो अ जायइ ॥ जं जं कुणइ किच्चं तु । तं तं से सफलं भवे ॥ ३ ॥ क्वासो

व्यवहारशुद्धिरित्याह—

॥ मूलम् ॥—विसत्थघायपरवं—चणाइकाउं विरुद्धगमणं वा ॥ तक्करसंबंधं वा । जो अत्थो खलु अणत्थो सो ॥४५॥ व्याख्या—विश्वस्तस्य पथिकादेर्गृहागतस्य घातो मारणं; परस्य मुग्धग्राहकादेर्वंचनं विप्रतारणं, तथा विरुद्धगमनतस्करसंबंधौ प्रागतिचारे ख्यातौ. एतानि कृत्वा योऽर्थः प्राप्यते सोऽर्थः परमार्थतोऽनर्थ एव, इहलोके वधबंधनादिहेतुत्वात्, परत्र नरकनिबंधनत्वाच्च. किंच—

॥ मूलम् ॥—कूडतुलमाणनाणय—विभेदरसवत्थुसंकरेहिं च ॥ वुड्ढिं अहिलसमाणे । अहह समूलो विणस्सेइ ॥ ४६ ॥ व्याख्या—कूटतुलामाने प्राग्व्याख्याते, नाणकभेदः सम्यग् नाणकं गृहीत्वा कूटस्य दग्धस्य तस्य समर्पणं, राजाज्ञां विना रहष्टंकशालकरणं वा, रसभेदो घृतादौ तैलादिक्षेपः, वस्तुभेदः सद्वस्तुनि जीर्णासारवस्तुक्षेपात्. एतैः प्रकारैर्वृद्धिमुदयमभिलषन्नहहेति खेदे मूर्खः समूलो विनश्यति; लाभमिच्छतस्तस्य मूलस्यापि नाशो भवतीत्यर्थः. कूटव्यवहारस्यात्युग्रपापकरणत्वात्तस्य चेह विपच्यमानत्वात्पुनर्धनार्जने विशेष-

शिक्षामाह—

॥ मूलम् ॥—पासंडिदेवतड्डण–धणेण खरकम्मनीयकम्मेहिं ॥ जूएण धाउवाए–ण वावि अन्नं न पच्छेइ ॥४७॥ व्याख्या–पाखंड्यादिषु धनशब्दस्य प्रत्येकं संबंधात्पाखंडिधनं देवधनं तड्डनधनं च, तत्र पाखंडिनो भौतिकपरिव्राजकादयस्तेषां धनं, पाखंडिधनं देवो जिनबिंबं तदाधारत्वाच्चैत्यं च, तत्र देवस्य पूजार्थं, चैत्यस्य कर्मस्थापनार्थं यत्संघेन मील्यते तद्देवधनं देवद्रव्यमुच्यते, उपलक्षणं चेदं–सकलज्ञानमसत्यादिधर्मांगाधिकृतधना अत्यंतकृपणास्तेषां धनं तड्डनधनं, एतेनार्थं न प्रार्थयते विद्वान् पाखंड्यादीनां द्रव्येण व्यवसायं न करोतीत्यर्थः. उक्तं च–अन्यायदेवपाखंडि–तड्डनानां धनेन यः ॥ वृद्धिमिच्छति मुग्धोऽसौ। विषमत्ति जिजीविषुः ॥ १ ॥ तथा खरकर्मभिरंगारकर्मादिभिः कोट्टपालगुप्तिपालत्वादिभिर्वा नीचकर्मभिः, रजकसूचिकत्वादिभिश्चार्थं न प्रार्थयते पापबहुलत्वाच्छिष्टविरुद्धत्वाच्च. तथा द्यूतेन धातुवादेन वा, अपिशब्दान्मणिमूलादिभिश्चार्थं न प्रार्थयते. यतः—यो द्यूतधातुवादादि—संबंधाद्धनमीहते ॥ स मषीकूर्चकर्धाम। धवलीकर्तुमिच्छति ॥ १ ॥ अनेन

न्यायोचितव्यवहारवता श्रावकेण नाव्यमित्युक्तं. तदन्नावे इहलोकेऽपि महादोषसंनवा-
दित्येतदेवाह-

॥ मूलम् ॥—जे पावफला जोगा । जे कुलधणजीयवेरिणोणत्था ॥ ते कूडववहाराण । हुंति जह लोहनंदस्स ॥ ४० ॥ व्याख्या—पाठसिद्धा, नवरं 'जे पावफलत्ति' ये केचित्पापफला असत्कर्मबंधहेतवो विरुद्धध्यानन्नाषणकर्तव्यात्मका योगा मनोवाक्कायव्यापाराः. लोन्ननंदकथा चैवं—

नाशिक्यायामन्नूनंद—नामकं वणिजद्वयं ॥ तत्रैको धर्मकारित्वा—द्धर्मनंद इति श्रुतः ॥ १ ॥ द्वितीयस्त्वतिलोन्नेन । व्यवहारमलीमसः ॥ लोन्ननंद इति प्रोचे । लोकैर्लोको हि डुर्धरः ॥ २ ॥ अमात्येनान्यदा प्रौढं । सरो भूमानचीखनत् ॥ पादुरासंश्चिरन्यस्ता । मलदिग्धास्ततः कुशाः ॥ ३ ॥ कुशान् कुशाग्रधीरप्य—मात्यस्तानायसा इति ॥ जानन् मूल्यपदेऽदत्त । खनकेभ्यो दिने दिने ॥ ४ ॥ तदैव हतकाः सर्वे । खनका धनकामिनः ॥ एत्याद्दं धर्मनंदस्या—दीदृशन्नक्कशान् कुशान् ॥ ५ ॥ स परिग्रहन्नीरुस्तान् । जानन्नपि हिर-

एमथान् ॥ न जग्राह जगौ चेति । नामीभिर्मे प्रयोजनं ॥ ६ ॥ अथ ते लोभनंदस्य । लो-
भाब्धेस्तानदर्शयन् ॥ सोऽप्यज्ञासीदमून् हैमान् । परीक्षायां विचक्षणः ॥ ७ ॥ तानादाय
स तेभ्योऽदा—ल्लोहमूल्यं स्पृहाधिकं ॥ जगाद सादरं चेति । दासीध्वं मे सदाप्यमून् ॥
॥ ८ ॥ एवमन्वहमर्थेभ्य—वशीकृत्यंकुशाः कुशाः ॥ खनकैरर्पितास्तेन । समचीयत भूरिशः
॥ ९ ॥ न पुत्रेभ्योऽप्यविश्वासी । कुशमर्मं जगाद सः ॥ अतस्ते चक्रुशुस्तातं । कोऽयं लोहे
तवादरः ॥ १० ॥ त्वं संचिनोषि यद्येषां । स्थाने दारूण्युदारधीः ॥ तदा तव मृतस्यापि ।
तात नात्युपकुर्वते ॥ ११ ॥ तैरित्युक्तोऽपि स स्वार्थ—तत्परः कुशसंचयं ॥ चक्रे सदैव लुब्धो
हि । स्वाभिप्रायं न मुंचति ॥ १२ ॥ अनिच्छुरपि मित्रस्यो—त्सवे ग्रामं समीपगं ॥ पुत्रदत्त-
कुशादान—शिक्षः सोऽगात्कदाचन ॥ १३ ॥ आनीता आपणे तस्य । प्राग्वद्धैननिकैः कुशाः
॥ तत्पुत्रैः क्रोधतः क्षिप्त्वा । दूरे दृशदि चस्खलुः ॥ १४ ॥ अदृश्यंत कुशैस्तत्र । सौवर्णीव-
र्णिका स्विका ॥ सहंते हंत किं तेज—स्विनः परपराभवं ॥ १५ ॥ भूयांस्तत्रामिलल्लोकः
। कुर्वन् कोलाहलं मिथः ॥ तन्निशम्याह्वयतिस्म । सरसः खनकान्नृपः ॥ १६ ॥ यथातथ्येऽथ

वृत्तांते । खनकैरुदितेऽखिले ॥ श्रेष्ठिनं धर्मनंदं तं । स नायामाययन्नृपः ॥ १७ ॥ पप्रच्छ पृथि-
वीशस्तं । त्वं जानन्नपि कोविद ॥ किं नाग्रहीः कुशान् हैमान् । किं वामीन्योऽपि नान्यथाः
॥ १८ ॥ सोऽन्यथादनृतस्तैन्या—धिकवृद्धिनिवृत्तिकृत् ॥ लोहमूल्यात्कथं राज—न्नाददे
कांचनानिमान् ॥ १९ ॥ अमी अविरताः स्वर्ण—लाभात्पापानि कुर्वते ॥ इत्येन्योऽपि न
तन्नाथ । सौवर्णानहमन्यथां ॥ २० ॥ तद्वृत्तविस्मितो भूमा—नेवं सस्नेहमालपत् ॥ अहो
ते न्यायनैपुण्य—महो ते हतलोभता ॥ २१ ॥ मत्वात्र लंकां सौवर्णी—मगस्त्यो दक्षिणां
श्रितः ॥ प्रदक्षिणयति स्वर्णा—चलं सूर्योऽप्यहर्निशं ॥ २२ ॥ महात्मत्यपि धत्तुरे । कनका-
ख्येऽधिकादरः ॥ त्वां विहाय स को योऽत्र । स्वर्णं दृष्ट्वा न मुह्यति ॥ २३ ॥ श्लाधनेन ज-
नेनापि । स एवं प्रस्तुतस्तुतिः ॥ आजगाम निजं धाम । महोत्साहो महोत्सवैः ॥ २४ ॥
लोभनंदस्तदायातो । ज्ञातव्यतिकरो जनात् ॥ अन्यायिनौ ग्रामग्रौ त—त्तैः कुशैः स्वपदा व-
हन् ॥ २५ ॥ सोऽथ बद्धस्तलारक्षै—श्चौरवच्चललोचनः ॥ नीतो राजसभां राज्ञा । क्रुष्टः
स्पष्टक्रुधा गिरा ॥ २६ ॥ अनाबद्धमुखेनाथ । लोकेनापि स निंदितः ॥ नृपेण हृतसर्वस्वः ।

प्राप प्राज्यविडंबनाः ॥ २७ ॥ अकीर्तिकलुषः क्षीण—सुखः पूरितजीवितः ॥ अभूद् दुर्ग-
तिदुःखानां । खानिः परभवेऽपि सः ॥ २८ ॥ लोभनंदचरितं श्रुतिरंध्रे । संक्रमय्य विबुधा
वसुधायां ॥ दुर्यशोदुरितपादपबीजं । दूरयंत्वनुचितं व्यवहारं ॥ २९ ॥ इति लोभनंदकथा.
॥ तदेवमुक्तो वणिजां धर्मोऽर्थार्जनविधिः, राज्ञां पुनरीश्वरदरिद्रयोर्मान्यामान्ययोः सदसतो-
र्मध्यस्थबुद्ध्या न्यायदर्शनादधिककरणाच्च, नियोगिनां तु राजार्थप्रजार्थसाधनादसौ बोधव्यः.
एवं व्यवसायविधिमुक्त्वा भोजनविधिमाह—

॥ मूलम् ॥—भोयणसमए पूइय–जिणंदपडिमाउ दिन्नमुणिदाणो ॥ बुढ्ढाउरातिहीणं
। चउप्पयाणं च कयचिंतो ॥ ४९ ॥ झायंतो नियनियमे । वज्जंतो लोगआगमविरुद्धं ॥ प-
गईए अणुलोमं । भुंजइ सो नाइगिद्धीउ ॥ ५० ॥ व्याख्या—भोजनसमये मध्याह्नरूपे सा-
त्म्यानुरूपे वा जाते श्रावकप्रकृत्या वातिकपैत्तिकादिसात्म्यस्यानुकूलं येन वातादिकं न कु-
प्यति तद्रूस्तु भुंक्ते इति योगः. किं कृत्वा? जिनेंद्रप्रतिमाः पूजयित्वा मध्याह्निकीं देवपूजां
कृत्वेत्यर्थः, ततो दत्तं मुनिभ्यो दानं येन स दत्तमुनिदानः, तथा वृद्धा वयोवृद्धाः, आतुरा

रोगिणः, अतिथयः प्राघूर्णकाश्चतुष्पदा वत्सरूपादयस्तेषां चकाराद्दृरुग्णादीनां च कृता भोजनौषधदानादिका चिंता येन सः, तथा किं कृत्वा भुंक्त इत्याह—निजान्नियमानभिग्रहविशेषान् ध्यायन्, तदध्याने हि नियमितवस्तूपभोगान्नियमभंगः स्यात्तदुपलक्षणत्वात्प्रत्याख्यानं च ध्यायन्, तथा लोकविरुद्धं मृतकभक्तादिकमामदध्यादिकं वा, आगमविरुद्धं संसक्तानंतकायादि, उभयविरुद्धं च मद्यमांसादिकं वर्जयेत्. तथा नातिगृद्धिको नातिलौल्योपेतः, लौल्याद्धि स्वमग्निबलमविमृश्याधिकमपि भुंक्ते, तच्च वमनविरेचनरोगोत्पत्तिमरणादिना न शुभोदर्कं, अतो मितमेव भोक्तव्यं, यो हि मितं भुंक्ते सो बहु भुंक्त इति. अत्र लोकव्यवहारानुपाती भाजनासनादिर्भोजनविधिः, स विवेकविलासादिग्रंथेभ्योऽवसेयः. इह धर्मशास्त्रत्वेन धर्मानुगतस्य विवक्षितत्वात्. अथ भोजनादूर्ध्वविधिमाह—

॥ मूलम् ॥—अह धम्मसत्थपरमत्थ—चिंतणेण य गमित्तु अवरण्हं ॥ आरा अत्थमणाओ । सायं पुण कुणइ जिणपूअं ॥ ५१ ॥ व्याख्या—अथ भोजनानंतरं धर्मशास्त्रपरमार्थचिंतनेन, चकारान्न्यायव्यवसायेन च, अपराह्णं गमयित्वा, अर्वागस्तमनात्सायं संध्यायां

पुनर्जिनपूजां करोति श्रावकः, अयं भावः—तथा देवपूजाकालं तुलयति यथाऽस्ते सूर्ये सा समाप्यते. इह कृतद्विभक्तप्रत्याख्यानश्चतुर्घटीशेषे दिवसे वैकालिकं विधत्ते, इत्यनुक्तमपि द्रष्टव्यं. ननु किमर्थं पुनः पुनर्देवपूजा क्रियत इति चेदुच्यते—

॥ मूलम् ॥—नीसेसरिद्धिजणणी । दुग्गइदालिद्ददुक्खनिद्दलणी ॥ दंसणसुद्धिनिमित्तं । पुणो पुणो कीरए एसा ॥ ५२ ॥ व्याख्या—उत्तानार्था. एवं दिनकृत्यमुक्त्वा रात्रिकृत्यमाह—

॥ मूलम् ॥—तो सुकिरियाइधम्मं । संचिय उचियक्खणे कुणइ निद्दं ॥ परमेठी समरंतो । पायमबंभं परिहरंतो ॥ ५३ ॥ व्याख्या —ततो देवपूजानंतरं सुक्रियया षडावश्यकसत्यापनरूपया धर्मं संचित्य परिजनमपि धर्मविधौ प्रेरयित्वेत्यनुक्तमपि द्रष्टव्यं. उचितक्षणे न्याय्यवेलायां करोति निद्रां श्रावकः, किं कुर्वन्? परमेष्ठिनः स्मरन्, प्रायोऽब्रह्म च परिहरन्, प्रायोग्रहणं ऋतुकाले संतानार्थं वेदयापनार्थं वा स्वपत्न्यां तस्यानियमितत्वात्—अनेन श्रावको नात्यंतं मैथुनलोलुपः स्यादित्युक्तं भवतीति. एतदेव सविशेषमाह—

॥ मूलम् ॥—खणमित्तसुखहेऊ । अणंतदुक्खाण मूलबीयं जं ॥ तं बहुमन्नइ न बुहो ।

मेहुन्नमहन्नजणजोग्गं ॥ ५४ ॥ व्याख्या—स्पष्टा, नवरमधन्याः पापिनो जनास्तेषामेव यो-ग्यमुचितं मैथुनस्य वेदोदयजन्यत्वात्तस्य च पापप्रकृतिरूपत्वात्. एतेन यदर्हदादयो मैथुनं शिषेविरे तदिदं ह्यसत्कर्म नात्युक्तं सत्क्रीयत इति बुद्ध्या. न पुनरितरलोकवदेतदेव संसार-स्य सारं फलमिति कल्पनयेति द्रष्टव्यं. अथासौ सुप्तः सन्नंतरांतरा यदा जागर्ति तदा स्वम-नसो दुःशीलतापनोदाय यत्स्मरति तदाह—

॥ मूलम् ॥—जायइ निद्दाभंगो। जया तया रमणिदेहनेगुण्णं ॥ चरियाइं थूलभद्दा—ईण मुणीणं विभावेइ ॥ ५५ ॥ व्याख्या—जायते निद्राभंगो यदा तदा श्रावको रमणीदेह-नैर्गुण्यं भावयति, यथा–फुल्लेंदीवरमाकुलालितरलं क काविले चक्षुषी। क्वेंदोर्बिंबमुदंशुनिश्रि वदनं क स्त्रीजनस्याशुचि ॥ दंताः कास्थिलवाः क कुंदकलिकोद्भेदा मधूभंधय—स्तेषां तै-रुपमा च नाम धिगहो रागांधदुश्चेष्टितं ॥ १ ॥ तथा स्थूलभद्र आदिर्येषां सुदर्शनजंबूकु-मारादीनां, ते स्थूलभद्रादयो मुनयस्तेषां चरितानि वैराग्यकारणत्वाद्भावयति. अत्र स्थू-लभद्रकथा चैवं—

प्रासादस्वर्णकलश—प्रभापटलपाटलं ॥ पाटलीपुत्रमित्यस्ति । नगरं गोरुमंरुले ॥ १ ॥ कलाभिः कलितः कीर्ति—कौमुदीं दिक्षु विक्षिपन् ॥ नंद इंदुरिव व्योम्नि । भूपतिस्तत्र दिद्युते ॥ २ ॥ मंत्री तस्य सुबुद्धिनां । शकटालः स्फुटालयः ॥ येन पद्मं जलेनेव । नंदराज्यमवर्ध्यत ॥ ३ ॥ तस्य लक्ष्मीवतीकांता—कुक्षिकाननकुंजरौ ॥ अभूतां तनयौ स्थूल—भद्र-श्रीयकसंज्ञकौ ॥ ४ ॥ तत्राभूद्गणिका कोशा । व्याकोशाब्जविलोचना ॥ यत्पुरः काब्धिमत्स्यी श्रीः । का गौरी च गिरेः शिला ॥ ५ ॥ तया नदीनगामिन्या । करेणुरिव रेवया ॥ अरंस्त यौवने स्थूल—भद्रो द्वादशवत्सरीं ॥ ६ ॥ विश्वासाद्भूधनश्चक्रे । श्रीयकं स्वांगरक्षकं ॥ ताभ्यामनंगभूपांग—सेवादायि विभज्य किं ॥ ७ ॥ यद्वा श्रीनंदनं भेजे । स्थूलभद्रो यदग्रजः ॥ श्रीनंदं तेन वर्णोनं । शिषेवे श्रीयकोऽनुजः ॥ ८ ॥ विप्रो वररुचिस्तत्र । प्रातः प्रातर्नरेश्वरं ॥ तुष्टावाष्टशतेनोच्चै—र्नव्यैः काव्यैर्महाकविः ॥ ९ ॥ दित्सुस्तस्मै धनं भूपो । मंत्रिणो मुखमैक्षत ॥ राज्ञां हि मंत्रिणो नेत्रं । त्वन्नेत्र तु मुखश्रिये ॥ १० ॥ मिथ्यादृशं भृशं जैनः । स च न प्रशशंस तं ॥ न हि चूतफलास्वादी । पिचुमंदं प्रशंसति ॥ ११ ॥ तं

निदानमदानस्य । राज्ञो जानन् महाकविः ॥ मंत्रिचित्तद्विपापथं । मंत्रीपत्नीं नुनाव सः ॥
॥ १२ ॥ कामधूक् कल्पवल्ली त्वं । त्वं लक्ष्मीस्त्वं च जारती ॥ त्वं शक्तिरसि कल्याणि ।
शिवादपि बलीयसी ॥ १३ ॥ गिरीशः किल कंठस्ते । कृष्णस्ते चिकुरोत्करः ॥ प्रसादस्तेऽखि-
लार्थानां । धाता किमधिकं स्तुमः ॥ १४ ॥ सेवाहेतुं तया पृष्टः । सोऽवक् सौम्ये तथा कुरु
॥ व्याचष्टे मम काव्यानि । यथा मंत्री नृपाग्रतः ॥ १५ ॥ ॐमित्युक्त्वा तयात्यर्थं । प्रार्थितो
मंत्र्यवोचत ॥ ममालं धर्ममालिन्य–कृता मिथ्यादृगीरया ॥ १६ ॥ पुनर्गाढाग्रहात्तस्याः ।
प्रपेदे तत्तथेति सः ॥ उपाग्निमदनस्येव । दार्ढ्यं नृणामधिस्त्रि किं ॥ १७ ॥ प्रातर्वररुचौ भू-
प—सभायां काव्यभाणिनि ॥ संति काव्यान्यमूनीति । जगौ मंत्री गलात्तवत् ॥ १८ ॥ द-
दौ तदैव दीनारा—ष्टशतं कवये नृपः ॥ का वेलावग्रहोन्मुक्त—वारिवाहस्य वर्षणे ॥ १९ ॥
एवं प्रतिदिनं दाने । दीयमाने महीभुजा ॥ मंत्री प्रोवाच किं कोशं । क्षाप हापयसे वृ-
था ॥ २० ॥ स्वैरं नाहं ददे किंतु । त्वत्कृतात् काव्यवर्णनात् ॥ इति भूमीभुजा प्रोक्ते । ज-
गाद सचिवः सुधीः ॥ २१ ॥ न स्याद्यंतं प्रशंसार्थं । संतीति पदमन्यथा ॥ अन्यथा किंतु

भूपाल। त्यायंतं सत्ववाचकं ॥ २२ ॥ जीवातंकप्रदमता—वस्मिन् दानं न संगतं ॥ एषोऽ-
परकृतैर्वृत्तै-स्त्वां स्तौति त्वं तु वेत्सि न ॥ २३ ॥ एवं तद्वचनं व्यर्थ—मजानन्नन्यधान्नृपः
॥ मंत्रिन्नेतदसंभाव्यं। कथं स्यान्मंत्र्यवोचत ॥ २४ ॥ प्रत्ययश्चेन्न मे वाचि। तत्सत्तापि स्वनं-
दिनीः॥ अनेनोक्तानि काव्यानि। ज्ञापयिष्याम्यहं प्रगे ॥ २५ ॥ यक्षा च यक्षदत्ता च। भू-
तान्या भूतदत्तिका ॥ एणा वेणा च रेणेति। सप्तासंस्तस्य कन्यकाः ॥ २६ ॥ ताः प्रातरुपभू-
पाल-मेकद्वित्र्यादिसंस्तवाः ॥ मंत्री निनाय सप्तांग-राज्यलक्ष्मीरिवांगिनीः ॥ २७ ॥ तदा
संसदमासाद्य। नंदस्यानंदभूर्द्विजः ॥ विकस्वरस्वरोऽपाठीत्। स्वकृतां वृत्तपद्धतिं ॥ २८ ॥
तां च भ्रूसंज्ञया नुन्ना। जनकेन मृदुस्वराः ॥ कन्या अप्यूचुरेकद्वि—त्र्याद्यावृत्तिक्रमेण ताः
॥ २९ ॥ जातारुचिर्वररुचा—वथ कथितधान्यवत् ॥ दानं निवारयामास। कस्य वश्या हि
पार्थिवाः ॥ ३० ॥ अनाप्नुवन्नृपास्थाने। प्रवेशं पटुकैतवः ॥ उपायांतरमारब्ध। जनं रंज-
यितुं द्विजः ॥ ३१ ॥ रचयित्वा वररुचि—र्यंत्रं गंगाजले ततः ॥ कूपादो न्यक्षिपत्तत्र। दी-
नारग्रंथिमन्वहं ॥ ३२ ॥ स्तुत्वापगां प्रगे तस्य। यंत्रं चालयतोंह्रिणा ॥ उत्पत्य न्यपतत्पाणौ

। ग्रंथिः कंचुकवच्च सः ॥ ३३ ॥ नरमात्रं नृपो मादा—न्मम वैदुष्यरंजिता ॥ गंगादेवी धनं
दत्ते । ख्यातिमेवं व्यधत्त सः ॥ ३४ ॥ तत् श्रुत्वा कौतुकोत्ताल । आलपन्मंत्रिणं नृपः ॥ दा-
नान्ययेधयः किं मां । दत्तेऽस्मै स्वं स्वरापगा ॥ ३५ ॥ जानान्नस्तदसंज्ञात्वं । प्रत्यूचे मंत्रि-
पुंगवः ॥ स्वामिन्निरीक्ष्यमाताज्या—मपीदं प्रातरद्भुतं ॥ ३६ ॥ ग्रंथिं सायं द्विजो न्यस्य ।
जलयंत्रे यदा ययौ ॥ मंत्री प्रच्छन्नभृत्येन । तामपाजीहरत्तदा ॥ ३७ ॥ गंगां जगाम सामात्यो
। गजारूढो नृपः प्रगे ॥ भूयांसोऽपि स्वयं पौरा। मिमिलुस्तत्र चित्रतः ॥ ३८ ॥ गंगां तुष्टाव
तान् वीक्ष्य । विशिष्योरुच्छविः कविः ॥ पदृभ्यां चाचालयद्यंत्रं । न पुनर्ग्रंथिमासदत् ॥ ३९ ॥
द्विजेऽथ जलमालोड्य । ग्रंथिं पश्यति मंत्र्यवक् ॥ विशेष एष किं भूप—स्यागतस्य बभूव
नोः ॥ ४० ॥ विश्वासजाजः सुकवेर्द्विजस्य । मुष्णासि किं न्यासममर्त्यसिंधो ॥ अस्यार्पय
स्वं न हि वीक्ष्यसे कि—मन्यायवालं सविधे नृपालं ॥ ४१ ॥ जडजाता जडमयी । जडेश-
स्य च वल्लभा ॥ गंगा दत्ते कथं ते स्वं । द्विज दास्याम्यहं पुनः ॥ ४२ ॥ तं ग्रंथिं तस्य
दत्वाथ । जगौ मंत्र्युपलक्ष्य ॥ त्वयेह न्यासि यः सायं । सोऽयं ग्रंथिर्भवेन्न वा ॥ ४३ ॥ स्व-

गर्वग्रंथिर्जगालास्य । नव्यग्रंथविधायिनः
नृप० ग्रंथौ चटिते पाणौ । दुःखग्रंथौ पुनः हृदि ॥ इत्युक्त्वा मंत्रिधुर्येण । निर्न्येतर्नगरं
॥ ४५ ॥ एवमेव सदैवासौ । देव मोहयति प्रजाः ॥ भुलोके न तु तच्छेन्ने । हरिणो-
चिंता- नृपः ॥ ४५ ॥ ततो दुह्यन्नमात्याय । कविकात्यायनश्बलं ॥ विप्रः पप्रच्छ तच्छेह-
ऽस्य हरेरिव ॥ ४६ ॥ अन्यदा मंत्रिणो दासी—मुदासीनमना इव ॥ तदानीं नंदनूपालं
७४७ स्वरूपमुपचर्य सः ॥ ४७ ॥ साप्युवाच गृहेऽस्माकं । श्रीयकः परिणेष्यते ॥ ललामचामर-
। मंत्री चामंत्रयिष्यते ॥ ४७ ॥ तत्प्राभृतार्थमद्यश्वः । सज्यते हेतिसंहतिः ॥ लो-
छत्र—तनुत्राश्वगजादि च ॥ ४९ ॥ प्राप्य सूचीमुखप्राज्ञः । तच्छिद्रं प्राविशद् द्विजः ॥
न्नयित्वार्भकानेवं । प्रतिरथ्यमपाठयत् ॥ ५० ॥ तज्जानाति न नंदभूपालः । कर्ता यन्मंत्री श-
करालः ॥ नंदमसौ विनिहत्य सुरूपं । नंदनमेव करिष्यति भूपं ॥ ५१ ॥ पितृव्यां बंधुन्नि-
वार्य—माणा अपि पुनः पुनः ॥ रूपकं शिशवः पेठु—रेतत्तैः सह किं बलं ॥ ५२ ॥ तत्
श्रुत्वा कापि नूपाल—श्चिंतयामास चेतसि ॥ एषा ह्यौत्पातिकी भाषा । न मृषा प्रायशो न-
वेत् ॥ ५३ ॥ दूतं मंत्रिगृहोदंतं । विज्ञातुं प्राहिणोन्नृपः ॥ सोऽप्येत्य तत्र सन्नद्धं । छत्रा-

गोत्रदेव्येव
स्त्राद्यं न्यवेदयत् ॥ ५४ ॥ दंड्यो राजा ध्रुवं न स्या—द्धालानामुक्तिरीदृशी ॥ भूपः कोपक-
मामेषां । मुखेनैवमचेतयत् ॥५५॥ अज्ञातपरमार्थः सन् । मंत्री तमनमद्यदा ॥ जगौ च
रालाक्ष—स्तदाज्जनि पराङ्मुखः ॥५६॥ असाध्यक्रोधमाबुध्य । नृपं मंत्री ययौ गृहं ॥ राहुरपि
श्रीयकं वत्स । क्रुद्धोऽद्यास्मासु नृपतिः ॥५७॥ न दशति मंत्रज्ञमहि—र्हीनकलं त्यजति शिरश्छित्वा ।
चंद्रं ॥ सरसं न दहति दहनो । नृपस्तु कुपितोऽखिलं हंति ॥५८॥ ततोऽसिना
मम प्रणमतो नृपं ॥ अकालोपस्थितं दक्ष । रक्ष न्यक्षकुलक्षयं ॥ ५९ ॥ आस्तामन्यः श्वपा-
कोऽपि । कुर्यात्कर्म किमीदृशं ॥ वदन्नूदस्त्रमित्यूचे । श्रीयकस्तेन धीमता ॥ ६० ॥ गृहीतान-
शनो न्यस्य । विषं तालपुटं मुखे ॥ नंस्याम्यहं नृपं तेन । पितृहत्यापि का तव ॥ ६१ ॥
जराजर्जरितस्याद्य—श्चीनमृत्योर्ममात्ययात् ॥ जीवय स्वकुलं नो चे—त्क्वाहं क्व त्वं क्व तत्कुलं
॥६२॥ प्रपद्य तां पितुः शिक्षां । श्रीयकोऽगान्नृपांतिकं ॥ तत्रैत्यामात्यधुर्योऽपि । प्रणनाम नरे-
श्वरं ॥६३॥ अनिच्छति नतिं भूमि—पतौ प्रणमतः पितुः ॥ खड्गेनापातयत्पुत्र—स्तालद्रुफलवच्छिरः
॥६४॥ आः किं पिता त्वयाघाति । सहसैवेति जाषिणं ॥ बजाण श्रीयको नृपं । किमेवं नाथ खि-

ग्रसे ॥ ६५ ॥ देवोऽस्माकं त्वमेवासि । पालनात्पोषणात्पिता ॥ जनकेनापि किं तेन । यस्तवा-
हृद्यंगमः ॥ ६६ ॥ तद्भक्तिरंजितो राजा । कृततातौर्ध्वदेहिकं ॥ श्रीयकं प्रार्थयामास । मं-
त्रिमुद्रामुपासितुं ॥ ६७ ॥ सोऽपि व्यजिज्ञपद्भ्राता । स्थूलभद्रो ममाग्रजः ॥ कोशांकसि चि-
रादस्ति । भोगी भृंग इवांबुजे ॥ ६८ ॥ बंधौ विजयिनि ज्येष्ठे । धौरेय इव बंधुरे ॥ नाहं
व्यापारभारस्या—धिकारी स्यामिवोरणः ॥ ६९ ॥ अथ भूपभटैः स्थूल—भद्रो भद्र इव
द्विपः ॥ कोशागारगिरेर्मध्या—दानिन्ये राजमंदिरं ॥ ७० ॥ पितुर्मुद्रां गृहाणेति । सोऽप्युक्तो
भूभुजाभ्यधात् ॥ मुद्रामंगीकरिष्येऽहं । नानालोच्य कथंचन ॥ ७१ ॥ प्रेषितोऽशोकवनिका
—मालोचाय महीभुजा ॥ दध्यौ मंत्रिसुतस्ताव—न्मुद्रां दत्तेऽद्य मे नृपः ॥ ७२ ॥ मुद्रा-
दानमिदं वक्ति । परलोकं पितुर्मम ॥ दीप्यमाने सहस्रांशौ । कः स्याद्दीपे कृतादरः ॥ ७३ ॥
धिग्मे विषयवैवश्यं । यन्न जज्ञे पितुर्मृतिं ॥ यद्वा निपीतमद्यस्य । कस्योन्मीलति चेतना ॥
॥ ७४ ॥ धर्मार्थकाममोक्षाणां । मुद्रेयं प्रतिपंथिनी ॥ विद्रावयति निद्रेव । मुद्रा कस्य न
चेतनां ॥ ७५ ॥ येषां दृष्टिः परस्वेषु । जिह्वा च परतप्तिषु ॥ परच्छिद्रेषु चित्तं च । धिक्तेषां

जन्म मंत्रिणां ॥ ७६ ॥ निःशेषातुरगालिसंगतिरलंकारागृहः सर्वतो । बंदीभूतजनैः समं
परिचयः पृथ्व्येव शय्या सदा ॥ तास्ता मारविडंबना अथ पराभूतिः परेभ्यो ध्रुवा । व्या-
पारे घटिते तथा विघटितेऽप्येषा स्थितिर्मंत्रिणां ॥ ७७ ॥ प्रकाशजन्मापि हि हस्तलग्ना ।
व्यापारिता पाप्मनि लेखनीयैः ॥ अभूत्मषीश्याममुखी सदैव । मा मां निधा मंत्रिषु तेषु
देव ॥ ७८ ॥ मंत्री खेलयति क्ष्माप—भुजंगं मंत्रपूर्वकं ॥ प्रमत्तोऽसौ पुनस्तस्मा—देव प्रांते
विनश्यति ॥ ७९ ॥ मुद्रा भवतु मौनींद्री । मम किं मुद्रयानया ॥ ध्यात्वेति लोचं निर्मा-
य । निर्मायः सोऽभजद् व्रतं ॥ ८० ॥ रत्नोर्णायुदशाक्लृप्त—रजोहरणभूषणः ॥ स नृपा-
स्थानमागत्य । धर्मलाभाशिषं ददौ ॥ ८१ ॥ राजाप्यूचे महाभाग । लुलोचे किमिदं त्वया
॥ घोरमस्ति प्रतिज्ञातं । निरातंकः प्रपालयेः ॥ ८२ ॥ उमित्युक्त्वा नृपास्थाना—न्निर्गतः
स मुनीश्वरः ॥ श्रीसंभूतगुरोः पार्श्वं । गत्वा शिष्योऽभवद् ध्रुवं ॥ ८३ ॥ विदधे श्रीयको मं-
त्री । बलादप्यथ भूभुजा ॥ अहो योगे नियोगे च । धुर्यं तन्मंत्रिणः कुलं ॥ ८४ ॥ क्षीणे
लक्ष्मीवतीकांत—दीपे विप्रोंतरांतरा ॥ प्रससार नृपास्थाने । सावकाशस्तमिस्रवत् ॥ ८५ ॥

तस्मिन् पंकाकुले वर्षा—कालवन्नोचरं गते ॥ श्रीयकस्योदभूत्तात—दुःखं विषमिवौरगं ॥
॥ ८६ ॥ भ्रातृजायाधिया नित्यं । गच्छंस्तद्गृहमंजसा ॥ अन्यदा श्रीयकः कोशां । न्यगदज्ञ-
ञदस्वरः ॥ ८७ ॥ भर्तुस्ते मे पितुर्भ्रातु—र्वियोगद्रुमवारिदः ॥ अद्यापि सुभगे वित्र—चेतः
खेलत्यसौ खलु ॥ ८८ ॥ तदसावुपकोशाया—स्त्वज्जामेर्गृहगुह्यकः ॥ प्रेम्णा परवशः पाय्यो ।
मद्यमद्य यथातथा ॥ ८९ ॥ साप्यंतःशल्यितस्थूल—भद्रप्रेमाथ तद्वचः ॥ प्रपद्य प्रार्थयामा-
सो—पकोशां तत्र कर्मणि ॥ ९० ॥ तयाप्यसौ निशि स्नेह—गृहिलो गृहमागतः ॥ छात्र-
वत्पंक्तितोऽप्येवं । मिथो गोष्ठ्यामशिक्ष्यत ॥ ९१ ॥ यदागतं वार्द्धिविलोकनेन । यदाहृतं या-
दवनायकेन ॥ यद् द्युम्नदेहद्युतिवर्धनं च । तन्मद्यमुद्यच्छति को निषेद्धुं ॥९२॥ हृदो मृषाश-
व्यनुदैति येन । येन स्वदेहेऽपि ममत्वभंगः ॥ आढ्यं दरिद्रेऽपि ततः समाधि—सुधा बुधा म-
द्यमिदं त्यजंति ॥ ९३ ॥ उक्तं च त्वदागमेऽपि—न मांसभक्षणे दोषो । न मद्ये न च मैथुने ॥
प्रवृत्तिरेषा भूतानां । निवृत्तिस्तु महाफला ॥ ९४ ॥ तदेतन्नज भो नो चे—त्क नो भिन्न-
धियो रतिः ॥ इत्युक्तः स तयाधासी—न्मद्यं च्युतकुलक्रियः ॥ ९५ ॥ पतंति यत्र मोहांधा ।

विबुधाः खेचरा अपि ॥ स्त्रीपाशे पतितस्तत्र । द्विजोऽयं तत्किमद्भुतं ॥ ९६ ॥ अन्यापतो-
पकोशा त—स्कोशायै सापि मंत्रिणे ॥ ययौ वररुचिः स्नातः । प्रातः क्ष्मापतिपर्षदं ॥ ९७ ॥
मंत्री राज्ञस्तदा व्रह्म—सद्मा पद्मान्यढौकयत् ॥ सोऽप्येकैकं सदस्यानां । तेनैवाब्जमदाप-
यत् ॥ ९८ ॥ ददानः पद्ममेकैकं । सभ्यानां शकमालभूः ॥ भावितं मदनफल—निःस्पंदेन
कवेस्त्वदात् ॥ ९९ ॥ पद्माघ्रायिषु सभ्येषु । कविस्तद्गंधबंधुरं ॥ ऊर्ध्वं साधकवद्भूयो—भूयः
श्वासमवाहयत् ॥ १०० ॥ तदा घ्राणान्निशि पितां । चंद्रकांतां सुरां वमन् ॥ मतांतरीव स
क्षीवः । कैः कैर्न निरभत्स्यत ॥ १ ॥ मद्यपानमहापाप—प्रायश्चित्तं द्विजोत्तमाः ॥ अपाययन्
नृपादिष्टा—स्त्रपु तं निस्त्रपं बलात् ॥ २ ॥ तस्मिन् प्राणैः परित्यक्ते । त्रपुतापातुरैरिव ॥ ब-
भार श्रीयको राज्य—व्यापारं छिन्नकंटकः ॥ ३ ॥ गणोपसेवितः सौम्यः । संभूतगुरुरन्यदा
॥ गिरीश इव कैलासं । तदेव पुरमाययौ ॥ ४ ॥ वर्षाकाले समायाते । बीजानीव कुटुंबिनः
॥ साधवोऽभिग्रहान् पुण्य—फललाभाय भेजिरे ॥ ५ ॥ एकः कूपस्य फलके—ऽपरः केसरिकंदरे
॥ दृग्विषाहेर्बिले चैकः । प्रत्यज्ञासीदवस्थितिं ॥ ६ ॥ स्थानेष्वभिगृहीतेषु । साधवस्तेऽव्रत-

स्थिरे ॥ कुतस्तेषां तपोरक्षा— मंत्रणाजां नवेक्षयं ॥ ७ ॥ मुनींद्रः स्थूलभद्रोऽपि । गुरून्न-
त्वा व्यजिज्ञपत् ॥ वर्षावासं विधास्येऽहं । कोशौकसि सुभोजनः ॥ ८ ॥ किमीदृशमसौ व-
क्ति । नूनं झूनः परीषहैः ॥ ईदृक्कुलः किमीदृक् स्या— त्किं कुलं वा चलात्मनः ॥ ९ ॥ ततः
कथमयं बोध्यो । बोधोऽप्यत्र निरर्थकः ॥ एवं विषादिनं वीक्ष्य । गुरुं मुनिवरो जगौ ॥
॥ १० ॥ पूज्या अलं विषादेन । यो जिनेंद्रैर्जितः पुरा ॥ कोशावासनिवेशेन । यश्च संप्रति
हृष्यति ॥ ११ ॥ स्वर्णकोटिव्ययाद्येन । चिरमस्मि विडंबितः ॥ तं कामं काममुच्छेत्तुं । का-
मोऽस्मि त्वदनुज्ञया ॥ १२ ॥ युग्मं ॥ प्रसादाढ्यः प्रतिज्ञेयं । मनाग्मम न दुर्घटा ॥ तरत्युरु-
तरीयोगा— त्किं पंगुरपि नांबुधिं ॥ १३ ॥ दत्तश्रुतोपयोगस्तं । जानन्निश्चलनिश्चयं ॥ वि-
जयीभव वत्सेति । निददेश गुरुर्मुदा ॥ १४ ॥ ततो द्विगुणितोत्साहः । प्रचचाल मुनीश्वरः
॥ षट्त्रिंशता गुणैर्दक्षा— युधैरिव समन्वितः ॥ १५ ॥ मुनौ कोशागृहं प्राप्ते । तद्दासी ताम-
वर्धयत् ॥ जातरागा तमभ्यागा— त्सापि स्मेरमुखांबुजा ॥ १६ ॥ ऊचे च पङ्क्तिभिः पुण्यै—
रद्य दृष्टश्चिरात्प्रिय ॥ इदं देहमिदं गेहं । कृतीश त्वं कृतार्थय ॥ १७ ॥ याचिताऽप्याश्रयं

तेन । कोशाकारकरद्रुया ॥ याश्रयालं जगौ कोशा । सर्वस्वेश स्ववेश्मनि ॥ १७ ॥ पराङ्मु-
तोऽसि किं नाथ । किं वा विस्मृतवानसि ॥ यदन्य इव मां ब्रूषे । चित्रौकः श्रीयतामिदं ॥
॥ १९ ॥ साक्षादिव दिवःखंड—मखंडमणिकुट्टिमं ॥ विचित्रचित्रमुल्लोचं । चंचन्मुक्तावचू-
लकं ॥ २० ॥ पुष्पमालामिलद्भृंगं । ज्वलत्कालागुरूत्कटं ॥ तद्दुर्गमिव कामस्या—क्रम्य त-
स्थौ महामुनिः ॥ २१ ॥ काले च कोशया दत्तैः । सद्भक्ष्यैः पारणं मुनिः ॥ स्मरेण समरारंभे ।
वीरपाणिरिवाकरोत् ॥ २२ ॥ भोजनानंतरं बद्धा—सनः स्तिमितलोचनः ॥ क्षणं तस्थौ मु-
निः काम—चर्यामालोकयन्निव ॥ २३ ॥ चक्रुः स्मरेण संधातुं । कोशासख्यो गतागतं ॥ न
तु मेने मुनींद्रेण । तमाक्रम्य जिघांसुना ॥ २४ ॥ स्वदुर्गाक्रांतनिःशंक—भिक्षुवीक्षणरोषि-
णा ॥ सायं नुन्नेव कामेन । मुनिं कोशाभ्यषेणयत् ॥ २५ ॥ मुनिवीरः पुरः प्रादु—र्भूतामालो-
क्य तां व्यधात् ॥ गुरूपदेशमंत्रेण । स्वांगरक्षामनाकुलः ॥ २६ ॥ सर्वांगीणं च सन्नाह—
ध्यानमेवं सुधीरधात् ॥ श्रुतोक्त्या सस्करः क्षांति—दमाद्यस्त्राण्यसज्जयत् ॥ २७ ॥ दध्यौ च
सेयं पुरतो । नदद्भूषणझिंझिमा ॥ स्तनप्रासादकलशा । सांद्रलोचनपल्लवा ॥ २८ ॥ स्फुरद्भ्रू-

उप० णिध्वजा रोम—राजिरथ्याविराजिनी ॥ जंगमानंगराजस्य । राजधानी निरीक्ष्यते ॥ २९ ॥
युग्मं ॥ अस्याश्च चित्तवप्रांत—रहःसिंहासनाश्रितः ॥ जगद्विजयते सर्वं । सगर्वः कुसुमायु-
चिंता- धः ॥ ३० ॥ मन्मथोऽथ मुनिं प्रोचे । जिद्दो मुंच दृशं मम ॥ रथनेम्यादयः के के । नेशु-
७३६ स्त्वत्पाक्षिका न मत् ॥ ३१ ॥ हरिहरहरिणांका ये च देवा अशेषाः । खचरनरवरेण्या ये च
योधासरेखाः ॥ मम विषमशरस्यादेशतस्तेऽपि दास्यं । विदधति वनितानां हंत कस्त्वं तप-
स्वी ॥ ३२ ॥ गर्जन्निव मुनिः स्माह । कोऽयं ते स्मर डंबरः ॥ रतेर्ददासि वैधव्यं । किमकांडे
व्रज व्रज ॥ ३३ ॥ श्रीवीरस्य प्रभोर्वंशे । भवध्वंसे प्रतापिनः ॥ श्रीसंभूतगुरोः शिष्यं । किं
मां वीरं न बुध्यसे ॥ ३४ ॥ रथनेम्यादिकान् भग्ना—नरे लपसि किं मुहुः ॥ यत्त्वं जितोऽ-
सि तैः पश्चा—त्तत्किं निर्ह्रीक विस्मृतं ॥ ३५ ॥ यदजैषीर्मुकुंदादी—नियता किमु दृप्यसि
॥ सर्वत्रास्खलितं लोहं । वह्निवज्रे न हि प्रभुः ॥ ३६ ॥ श्रीसुदर्शनजंबूभ्यां । वणिग्भ्यामपि
यज्जितः ॥ व्यक्तं त्रपामहे वक्तुं । तदमर्मस्पृशो वयं ॥ ३७ ॥ यस्य शस्त्राणि पुष्पाणि । से-
नाधिष्ठायिकाः स्त्रियः ॥ स्वयं चानंग रे स त्वं । मया वैरायसे कथं ॥३८॥ एवमुक्तवति स्थू-

ल—लड्डे कामस्य शायकाः ॥ विषाक्ता इव कोशायाः । कटाक्षाः कोटिशोऽपतन् ॥ ३९ ॥
त्वया द्वादशभिर्वर्षै—र्योऽत्रैवावर्ध्यत स्मरः ॥ नीतिज्ञ तं समुच्छेत्तुं । सांप्रतं किमु सांप्रतं ॥
॥ ४० ॥ मां चिरात् प्रीणय प्राण—नाथ मुंच व्रताग्रहं ॥ इत्याद्याः शीलसन्नाह—भिदो
वाग्भल्लयोऽपि च ॥ ४१ ॥ तांश्च ताश्चांतरा चूर्णी—चक्रे निर्ग्रंथचक्रिणः ॥ सर्वतोऽपि भ्रमन्
वज्र—मुद्गरो भावनाभिधः ॥ ४२ ॥ इतश्च कामराजस्य । सहायकचिकीः सखा ॥ मलिना-
त्मा घनः प्रादु—रभून्मोहनमादिमं ॥ ४३ ॥ अंबरं दर्शयन् गर्जन् । रुंधन्नंबरमुन्नमन् ॥ ना-
पयन् विद्युदसिना । धाराबाणैर्ववर्ष सः ॥ ४४ ॥ मुनिं वीक्ष्य निजद्वेषि—मरुत्साधनतत्परं ॥
मेघोऽपि मोघतां प्राप । भंगः क किल तादृशां ॥ ४५ ॥ ततः क्षीणबलः कोशा—हृत्प्राकारं
जहौ स्मरः ॥ पृष्टं न विदधे तस्य । नश्यतो न्यायविन्मुनिः ॥ ४६ ॥ कोशाहृन्मंदिरे चारु—
रुचिसिंहासने स्वयं ॥ धर्मोत्साहः शमींद्रेण । नवो राजा न्यवेश्यत ॥ ४७ ॥ अविग्रहग्रहो-
न्मुक्ता । धर्मनिर्मलधीरथ ॥ उद्भूतपुलका कोशा । मुनिमानम्य तुष्टुवे ॥ ४८ ॥ त्वं धन्यः
पुण्यवान् येन । स्तेनः पुण्यश्रियः स्मरः ॥ निवासी मन्मनोदुर्गे । लीलया निरवास्यत ॥ ४९ ॥

जिग्ये जगज्जरात्रीरु—न्नटेनैष त्वया जितः ॥ वाहिन्या वाहितं विश्वं । न पुनः कृष्णचि-
७५० त्रकः ॥ ५० ॥ व्याघ्र्या वक्त्रं प्रविष्टोऽपि । समर्थ व्यथितोऽसि न ॥ विषवल्लीवने लीनो—
चिंता- ऽप्यमूस्त्वं न विचेतनः ॥ ५१ ॥ गतोऽपि ज्वलनज्वालां । न दग्धस्त्वं विदग्धधीः ॥ स्थितो-
पि खड्गधारायां । न छिन्नश्छेकपुंगव ॥ ५२ ॥ पतितोऽपि नदीपूरे । सद्भावप्लावितोऽसि न ॥
८३८ चौरस्थानमपि प्राप्तो । न मुष्टोऽसि महाशय ॥ ५३ ॥ बिले सुप्तोऽपि भौजंगे । दष्टोऽसि न
गुणाकर ॥ यद्वेश्यासद्मगोऽप्येव—मजिह्मब्रह्मचार्यसि ॥ ५४ ॥ प्रायो विज्ञाय वीराणां । व-
र्षर्तुर्विजयश्रियः ॥ वर्षान्तरे त्वयैवाद्य । स्मरवीरो व्यगृह्यत ॥ ५५ ॥ वनं गत्वाशनं हित्वा ।
के के जिग्युर्न मन्मथं ॥ वेश्योकसीदृशाहार—स्त्वमेव जितवानमुं ॥ ५६ ॥ मज्जंतीं मां भवां-
भोधा—वुद्धर्तुं त्वमिहागमः ॥ अन्यथा किं समायांति । वेश्यावेश्मसु साधवः ॥ ५७ ॥ आ-
श्वयत्प्रसन्नचित्ताया—स्तस्या धर्मं महामुनिः ॥ प्राप्यापि सुभगे साधु—सन्निधिं दुर्विधासि किं
॥५८॥ कुवायुनेव सत्क्षेत्रं । ज्वलनेनेव मौक्तिकं ॥ श्रीहेतुरपि दूष्येत । दौःशील्येन नृणां भ-
वः ॥ ५९ ॥ अहार्यं भूषणं शीलं । शीलं रूपमविस्रसं ॥ निधानमक्षयं शीलं । शीलं सुख-

मकृत्रिमं ॥ ६० ॥ तत्रापि प्राप्य मानुष्यं । गणिकाकर्म नोचितं ॥ सरस्यब्जदले लब्धे । कः
स्वं पंकेन लिंपति ॥ ६१ ॥ तन्निशम्य प्रबुद्धा सा । प्रोचेऽहं जीवितावधि ॥ एकं मुक्त्वा नृ-
पादिष्टं । न स्पृहयामि नरं परं ॥६२॥ एवं तस्यां निवृत्तायां । जितकासी यतीश्वरः ॥ छिद्
नंगस्योत्सवमिव । व्यधात्सायंतनं विधिं ॥ ६३ ॥ वैरायमाणः कामोऽसौ । माकार्षीः सौविकं
निशि ॥ इति सन्नद्ध एवर्षिः । क्षपां जाग्रदवाहयत् ॥ ६४ ॥ प्रातः कोशा ववंदे तं । सोऽप्या-
ख्यद्धर्ममार्हतं ॥ प्रपेदे सा च सम्यक्त्व—समग्रां द्वादशव्रतीं ॥ ६५ ॥ ब्रह्मास्त्रं कामवीरस्य
। यत्कृता सापि धार्मिकी ॥ स्थूलभद्रेण तन्नूनं । वीरभोज्या वसुंधरा ॥ ६६ ॥ कोशाया अ-
कृशं पुण्य—कोशमन्वहमर्पयन् ॥ पूर्वस्नेहादिव मुनि—श्चतुर्मासीमतीयिवान् ॥ ६७ ॥ अ-
थ स्वस्वप्रतिज्ञाते । निर्व्यूढे ते महर्षयः ॥ हर्षाद्वर्षात्यये जाते । गुरूपांतं ययुस्त्रयः ॥ ६८ ॥
नेमुषस्तान् गुरुः प्रोचे । भो भो दुष्करकारकाः ॥ स्वागतं भवतामस्ति । स्वस्तिभाजां मुनि-
श्वराः ॥ ६९ ॥ क्षणेन स्थूलभद्रोऽपि । कोशायाः सद्मपंजरात् ॥ निर्गत्य हंसवत्प्राप । गुरुं श्रु-
तसुधोदधिं ॥ ७० ॥ तं पुण्यरुचिमायांतं । गुरुर्विधुमिवोदधिः ॥ अभ्युत्तस्थौ मुदोद्वेलो । ब-

७५० हुवीचीः प्रसारयन् ॥ ७१ ॥ जगौ स गौरवं सिंच—न्निव स्निग्धदृशा गुरुः ॥ दुष्करदुष्कर-
कार । स्वागतं स्वागतं तव ॥ ७२ ॥ तमादरं गुरोर्वीक्ष्य—चिंतयंस्ते त्रयो मिथः ॥ अमा-
चिंता- त्यापत्यमित्येष । गुरुर्निर्मान्यतेऽधिकं ॥ ७३ ॥ वयं सहामहे कष्टं । यशोऽपि न लभामहे ॥
७४० यद्वा नः पक्षहीनानां । क श्लाघा पक्षिणामिव ॥ ७४ ॥ स्थितिश्च चित्रशालायां । बिरुदं च
तदीदृशं ॥ अहो यशसि सुप्रापे । वयं क्लिश्यामहे मुधा ॥ ७५ ॥ एष्यदूर्षे ग्रहीष्यामो—ऽ-
भिग्रहं तदमुं वयं ॥ चिंतयेत्यष्टमासांस्ते । निन्युः प्रबद्धमत्सराः ॥ ७६ ॥ वर्षागमे गुरुं न-
त्वा—ऽभिजग्राह गुहामुनिः ॥ कोशावेश्मन्यवस्थास्ये । चतुर्मासीमिमामहं ॥ ७७ ॥ वक्त्येष
स्पर्द्धया स्थूल—भद्रस्येति विचारयन् ॥ गुरुस्तमन्यधाद्भद्र । मास्मभूरविमृश्यकृत् ॥७८॥ ता-
राकर्षाग्निपानाब्धि—तरणादीद्रलंघनं ॥ सुकरं दुष्करा किंतु । प्रतिज्ञेयं महात्मनां ॥ ७९ ॥
सोऽप्यूचे स्थूलभद्रेण । प्रतिज्ञापालि यद्यसौ ॥ तत्किं ततोऽपि हीनोऽस्मि । यद्वेनापयतेति
मां ॥ ८० ॥ गुरुः प्रोवाच का स्पर्धा । स्थूलभद्रेण ते मुने ॥ खद्योतस्येव सूर्येण । गोष्पद-
स्येव वार्द्धिणा ॥ ८१ ॥ वज्रं वज्रेण नायोभि—र्विद्युताग्निर्न पाणिजैः ॥ पशुना भग्नं च तृणैः ।

सिंहेनेभो न कूरवैः ॥ ८२ ॥ शेषस्तार्क्ष्येण नो दंशै—स्तमोऽर्केण न तारकैः ॥ जयेत तत्र
तेनैव । मनोभूर्न भवादृशैः ॥ ८३ ॥ युग्मं ॥ मागास्तत्र गतः प्राच्या—दपि पुण्यात्पतिष्य-
सि ॥ कोशाया दुःसहं सिंह—कंदरादपि मंदिरं ॥ ८४ ॥ शुभोदर्कां गुरोर्वाच—मवधूयेति
मानतः ॥ धूतांकुशः करीवाशु । स कोशासदनं ययौ ॥ ८५ ॥ तं वीक्ष्य विविदे कोशा । स-
मायातोऽस्त्यसाविह ॥ स्पर्धया स्थूलभद्रस्य । भद्रभस्येव बर्करः ॥ ८६ ॥ तथापि सा ववंदे
तं । सोऽप्ययाचत तामथ ॥ सुलोचने चतुर्मासं । स्थातुमाश्रयमर्पय ॥८७॥ तस्य फेरोरिवा-
दत्त । चित्रसद्म तदेव सा ॥ श्रीस्थूलभद्रपारींद्रो । यत्र गर्जन्निव स्थितः ॥८८॥ जीवंतीव ह-
संतीव । चित्ररूपाणि वीक्ष्य सः ॥ विवशस्तत्र भूताच्च । इवाभ्राम्यदितस्ततः ॥ ८९ ॥ काले
च कोशया दत्तै—राहारैः स्मरजीवनैः ॥ विकृतात्मा स तद्दासी—रपि देवीरिवैक्षत ॥९०॥
कोशा विहितशृंगारो—पतस्थे तं परीक्षितुं ॥ क्षुभितो वीक्ष्य तां चक्रे । स चाटूनि रिरं-
सया ॥ ९१ ॥ सापि प्रोचे महाभाग । भोगाः स्युर्न हि वार्तया ॥ वयं वेश्या विना वित्तं ।
न वश्याः स्मः कथंचन ॥ ९२ ॥ मुनिः स्माह कुतोऽस्मासु । धनं धन्ये तपस्विषु ॥ न विज्ञा-

तमभूयस्त्वं । कठिनेदृग् नविष्यसि ॥ ९३ ॥ सावदद् व्रज नेपालं । नृपालस्तत्र दास्यति ॥ अ
पूर्वातिथये तुभ्यं । लक्षार्घं रत्नकंबलं ॥ ९४ ॥ कुभावनामिवादाय । तस्या आज्ञामथो मु-
निः ॥ संसारमिव नेपाल-विषयं प्रत्यधावत ॥ ९५ ॥ शुभभावानिवाम्रृद्नन् । हरितः सरितः
पुनः ॥ श्रुतोक्तिवदतिक्रामन् । पंके मोह इव स्खलन् ॥ ९६ ॥ कदाशया परिभ्रश्यन् ।
क्वापि मार्गाद् व्रतादिव ॥ भापितः क्वापि विषयै—रिव शार्दूलशब्दितैः ॥ ९७ ॥ मेघधाराः
शरासारा—निवानंगस्य सासहिः ॥ नेपालमगमद्देशं । क्लेशितः स मनोभुवा ॥ ९८ ॥ अ-
भ्यर्थ्य तत्र भूपालं । स लेभे रत्नकंबलं ॥ तं बीजमिव बोधस्य । न्यस्याद्दंशांतरा मुनिः ॥९९॥
वलितश्चौरपल्लीषु । संचरन्नयमैक्ष्यत ॥ शुकेन ज्ञानिना शैल-शिरःपंजरवर्तिना ॥ २०० ॥
ऊचे भिल्लान् शुको लक्षं । याति धावत धावत ॥ ईयुस्तेऽपि मुनिं वीक्ष्या-किंचनं मुमुचुः
पुनः ॥ १ ॥ आजन्माभ्यस्तपैशुन्य । इव कीरे तथैव च ॥ जल्पाके ते पुनर्भिल्ला । मुनिं धृ-
त्वा बभाषिरे ॥ २ ॥ अभयं तव भो ब्रूहि । सत्यं पार्श्वे तवास्ति किं ॥ ज्ञातुं सत्यगिरं कीरं
। पृच्छ्यसे न तु लोभतः ॥ ३ ॥ जल्पन्नथ यथावृत्तं । मुक्तस्तैः कृपया मुनिः ॥ संप्राप्तः पाट-

लिपुत्रं । कोशायाः कंबलं ददौ ॥ ४ ॥ सापि मंक्षु गृहस्रोतो–जंबाले कंबलं न्यधात् ॥ सा-
धुरूचे हहा मुग्धे । किमेतत्कृतवत्यसि ॥ ५ ॥ कोशोचे कंबलं पंके । निमग्नं मूढ शोचसि ॥
मज्जंतं स्त्रीवपुःपंके । न तु स्वं व्रतमुज्ज्वलं ॥६॥ त्रिवेकिनापि मेधावि–न्नधावि विषयेछया ॥
शुक्लपक्षेण ही हंसे–नेव पंकाशया त्वया ॥७॥ ततः संजातचैतन्यः । स्वं निंदन्नवदन्मुनिः ॥ सा-
ध्वि साधु ब्रुवाणासि । बोधदात्री त्वमेव मे ।८। त्वयोध्धृतोऽस्मि नावेव । मज्जन्मोहोदधावहं ॥ त्वया
दीपिकयेवाद्य । सन्मार्गेऽस्मि निवेशितः ।९। त्वया तन्मे कृतं यन्न । कुरुते कोऽपि बांधवः ॥ ज्ञायते
स्थूलभद्रोऽत्र । तस्थौ सुस्थमना मुनिः ॥१०॥ कोशा प्रोचे मया ब्रह्म–धारिण्यापि मुनीश्वर ॥
यत्खेदितोऽसि बोधाय । तत्क्षंतव्यं क्षमाकर ॥११॥ अतःपरं त्वया शील–रत्नं चेतःसमुद्गके
॥ तथा धार्यं यथा नैत–न्मुष्णंतींद्रियतस्कराः ॥१२॥ ॐमिति प्रतिपद्याथा–गमद् गुर्वंतिकं मु-
निः ॥ गुरुं च स्थूलभद्रं च । स्वापराधमविक्षमत् ॥ १३ ॥ गृहीत्वालोचनां सम्य–ग्बोधि-
संशोधितव्रतः ॥ तेपे मुनिर्मनोजन्म––जाड्यभीष्मतपं तपः ॥ १५ ॥ कोशां नृपोऽन्यदा तु-
ष्टो । कस्मैचिद्रथिने ददौ ॥ तमन्नावापि सा भेजे । राजादेशवशंवदा ॥ १५ ॥ गुणेषु स्थूल-

भद्रस्य । तस्यां लीनं सदा मनः ॥ रथी रंजयितुं स्वीय—कलामेवमदीदृशत् ॥ १६ ॥ गवा-
क्षस्थो गृहोद्याने । स लुंबीमाम्रभूरुहः ॥ विव्याध पत्रिणा तस्य । पुंखमन्येन पत्रिणा ॥१७॥
अनुपुंखं शरक्षेपा—त्करग्राह्यां शरावलीं ॥ ज्ञात्वा क्षुरप्रबाणेन । लुंब्या वृंतं स चिच्छिदे ॥
॥ १८ ॥ स बाणगणमाकृष्य । लुंबीं जग्राह पाणिना ॥ मुखं चैक्षिष्ट कोशायाः । स्वं शुश्रू-
षुर्यशस्ततः ॥ १९ ॥ कोशाप्यस्य पुरः स्थाल—मानिन्ये सर्षपैर्भृतं ॥ तदूर्ध्वं सूचिकां न्य-
स्य । तदग्रे प्रननर्त च ॥२०॥ न विद्धा सा तया सूच्या । नाचलत्कोऽपि सर्षपः ॥ तत्साक्षा-
द्वीक्ष्य विज्ञानं । प्रशशंस भृशं रथी ॥२१॥ कोशावदन्महाभाग । कोऽयं ते विस्मयो वृथा ॥
यद्येनाभ्यस्यते कर्म । तत्र स्यात्तस्य कौशलं ॥२२॥ न दुष्करं त्रोटनमाम्रलुंब्या । न दुष्करं शि-
क्षितनर्तनं च ॥ तद्दुष्करं यत्स महानुभावः । शुद्धस्वभावो भुवनेऽत्र तस्थौ ॥२३॥ स एवैको
मुनिरन—न्यस्तकर्मणि कर्मठः ॥ भोगसद्मनि योगस्य । यो गतः परमां कलां ॥२४॥ मन्येऽहं
स्थूलभद्रोऽयं । वज्रसारेण निर्मितः ॥ शेषास्तु स्त्रीसरिद्भूम्याः । पुरुषा वालुकामयाः ॥२५॥
स्थूलभद्रः स को यस्ते । सुशीलोऽपि हृदि स्थितः ॥ इत्युक्ते रथिना साधो—र्मागधीव जगा-

द् सा ॥ २६ ॥ मंत्रिणः शकटालस्य । सूनुर्द्वादशवत्सरीं ॥ भुक्त्वा त्यक्त्वा च मां भेजे ।
स्थूलभद्रो व्रतश्रियं ॥ २७ ॥ सोऽत्रैव चित्रशालायां । चतुर्मासीं पुनः स्थितः ॥ मद्विलासै-
र्न च प्रासै—रिवाद्रिः स्थानतश्च्युतः ॥ २८ ॥ इतरैः कल्पवल्लीव । या ससंभ्रममैक्षिषि ॥ ते-
नैकेनाप्युलोकेऽहं । कोशा कोशातकीव सा ॥ २९ ॥ रथ्यवर्ग्यस्त्वया विद्धे । वर्ण्यते वीर एव
सः ॥ जाता महोपकर्त्री त्वं । तद्वृत्तश्रवणान्मम ॥ ३० ॥ यस्ते तस्थौ हृदि स्थास्या—म्यहं
तच्चरणांतिके ॥ इत्युक्त्वा रथिकः स्थूल—भद्राभ्यर्णेऽभजद्व्रतं ॥ ३१ ॥ त्यक्त्वा भविष्यद्-
दुर्भिक्ष—भयादिव भुवस्तलं ॥ श्रीसंभूतगुरुः पुण्य—रथेन द्यां गतोऽन्यदा ॥ ३२ ॥ अथा-
भूत्तत्र दुर्भिक्षं । भेदो यत्रादिमोऽत्रुटत् ॥ चतुर्भेदस्य पुण्यस्य । तार्तीयिकस्तु पश्चे ॥ ३३ ॥
भक्ता भावात्तदा गच्छे । समुदायेन सीदति ॥ केनापि साधुना क्वापि । स्थित्वानीयत वास-
रः ॥ ३४ ॥ मुनीनामगलच्छास्त्रं । क्षुधाक्षीणौजसां तदा ॥ नांबुमात्रेण शास्त्रद्रु—र्विनान्नेना-
पि शुष्यति ॥ ३५ ॥ दुर्भिक्षोपरमे गच्छो—ऽमिलत्पुष्पपुरेऽखिलः ॥ यद्यस्यैति तदादाये—
कादशांगीममेलयत् ॥ ३६ ॥ अस्मारि दृष्टिवादार्थं । स्थितो नेपालमंडले ॥ भद्रबाहुगुरुः सा-

धु—संघेन श्रुतकेवली ॥ ३७ ॥ प्रैषीद्गुरूनथाह्वातुं । संघस्तत्र मुनिद्वयं ॥ तेन गत्वा समाहूता । एवं श्रीगुरवो जगुः ॥ ३८ ॥ वत्सौ ध्यानं महाप्राण—महं साधोमि सांप्रतं ॥ साध्यते द्वादशाब्द्या त—त्तत्सिद्धावेष्यते मया ॥ ३९ ॥ सिद्धेऽमुष्मिन् महाध्याने—ऽनुलोम प्रतिलोम वा ॥ चतुर्दशापि पूर्वाणि । गण्यंतेंतर्मुहूर्ततः ॥ ४० ॥ ताभ्यामथ निवृत्योक्ते । निखिले गुरुभाषिते ॥ संघेनान्यौ पुनस्तत्रा—नुशिष्य प्रहितौ मुनी ॥ ४१ ॥ तौ गत्वात्रोचतां तत्र । भद्रबाहुगुरुंप्रति ॥ न मानयति संघाज्ञां । यः स कं दंडमर्हति ॥ ४२ ॥ कार्यः स बाह्य इत्युक्ते । गुरुणा तावजल्पतां ॥ तत्संघलंघनाद्भूय—मपि तद्दंडमर्हथ ॥ ४३ ॥ तन्निशम्य गुरुर्भीत्या । कंपमान इवावदत् ॥ किमेवं भगवान् संघो । मह्यं भक्ताय कुप्यति ॥ ४४ ॥ न बिभ्रेमि तथा दावा—द्व बिभ्रेम्युरगात्तथा ॥ यथा बिभ्रेमि श्रीसंघ—कोपाद्भवनिबंधनात् ॥ ४५ ॥ ममागः क्षमतां संघः । प्रसद्य कुरुतादिदं ॥ ये तत्र संति सुप्रज्ञा । विनेया विनयोज्ज्वलाः ॥ ४६ ॥ तानिह प्रहिणोत्वाशु । तेभ्यो दास्याम्यनारतं ॥ वाचनाः सप्त तास्वेका । भिक्षाचर्यात आगतः ॥ ४७ ॥ कालवेलात्रये तिस्र—स्तिस्रः संध्यविधेरनु ॥ एवं गण-

स्य कार्यं स्या—न्मत्कार्यस्यापि न क्षतिः ॥ ४८ ॥ ताज्यामेत्येति कथिते । संघः प्रैषीदरो-
षणः ॥ शतानि स्थूलजद्रादीन् । पंच प्रेक्षावतो मुनीन् ॥ ४९ ॥ जग्मुस्ते तत्र नेमुश्च । ज-
द्रबाहुगुरुं मुदा ॥ गुरुस्तेज्योऽनिशं सप्त । यथोक्ता वाचना ददौ ॥ ५० ॥ ते प्राज्ञा वाचना-
ल्पत्वा—न्निर्वेदं स्वयमैयरुः ॥ नामं नामं गुरून् कोऽपि । कदापि ववले मुनिः ॥ ५१ ॥
स्थूलजद्रस्त्वनिर्विण्ण—चित्तस्तत्रैव तस्थिवान् ॥ अध्यैष्ट चाष्टजिर्वर्षैः । पूर्वाण्यष्टौ शनैः शनैः
॥ ५२ ॥ गुरुस्तं स्माह जानामि । वत्स ते वाचनाल्पिका मा ॥ खिद्यस्व पुनर्ध्यानं । सिद्धप्रा-
यं ममाज्ञनि ॥ ५३ ॥ ततः परं प्रदास्ये ते । वाचनां वांछितावधि ॥ इत्युक्ते गुरुणा हृष्टः ।
स्थूलजद्रो जगाविति ॥ ५४ ॥ तस्थुषः प्रजुपादांते । न मे खेदो मनागपि ॥ का न्यूनता नृ-
णां कल्प—द्रुमच्छायोपसेविनां ॥ ५५ ॥ वाचनाल्पापि मे युष्म— दादिष्टा तुष्टये नृशं ॥
धाराधरांबुधारेव । चातकस्यापि निर्मला ॥ ५६ ॥ ततस्तुष्टेन गुरुणा । ध्यानसिद्धौ प्रयत्नतः
॥ पाठितोऽसौ द्विवस्तून—दशपूर्वी क्रमादभूत् ॥ ५७ ॥ इतश्च श्रीयको मंत्री । जयहे स्वसृ-
जिः सह ॥ व्यापारजारनिर्विण्णो । विश्राममिव संयमं ॥ ५८ ॥ क्रियते यत्र दानाद्यै—श्र-

तुर्भिश्चरणैः स्थिरः ॥ श्रीसंघेनार्हतो धर्म—स्तत्र ज्यायसि पर्वणि ॥ ५९ ॥ बहुक्षुत् श्रीयकः
उप० प्रायः । प्रत्याख्याने निरादरः ॥ कथंचित्कारयांचक्रे । पौरुषीं यक्षयाग्रजः ॥ ६० ॥ सहमान-
।चिंता- स्ततो भ्रात्रा । पूर्वार्धं कारितस्तया ॥ उत्साहितस्ततोऽपार्ध—मुपवासं ततोऽपि च ॥ ६१ ॥
दिनं कथंचनातीत्य । निशि सुप्तः क्षुधार्दितः ॥ विहिताराधनः साधुः । संधमध्यास्त ना-
ठ४७ किनां ॥ ६२ ॥ तद्विज्ञाय प्रगे यक्षा । विषण्णा संघमालपत् ॥ मयाथानशनं ग्राह्य—मृषि-
हत्याविशुद्धये ॥ ६३ ॥ संघोऽन्यधात्त्वयाकारि । तस्येदं हितकाम्यया ॥ ततस्त्वं साध्वि शु-
द्धासि । प्रमाणं भाव एव सः ॥६४॥ लंघनं कारयन् वैद्यो—ऽनवद्यो न ऋणी पुनः ॥ पथ्यं-
श्च विजनं योगी । गीयते न तु कामुकः ॥ ६५ ॥ तूष्णीको निशि जाग्रच्च । मुनिः श्लाघ्यो
न तस्करः ॥ लोके लोकोत्तरे वापि । भाव एव विशिष्यते ॥ ६६ ॥ साबादीदिति मन्येऽहं
। साक्षाचेद्वक्ति केवली ॥ कायोत्सर्गबलेनाथ । संघेनाकारि देवता ॥ ६७ ॥ सा बद्धांजलिरा-
लापी—त्किं स्मृतास्मि करोमि किं ॥ संघोऽवादीदिमां साध्वीं । नय देवि जिनांतिकं ॥६८॥
सोचे निर्विघ्नमत्यै मे । संघोऽस्तूत्सर्गभाक् क्षणं ॥ संघे तथा स्थिते निन्ये । विदेहान् देव-

तापि तां ॥ ६९ ॥ तत्र सा जरतोद्भूत—लोकलोचनगोचरं ॥ श्रीमंधरं प्रभुं नत्वा । पप्रछ
स्वात्मशोधनं ॥ ७० ॥ जिनः प्रोवाच ते किंचि—द्भ्रातुर्घातान्न पातकं ॥ पातकं त्वजवद्गाढं
। साध्वि संघापमाननात् ॥ ७१ ॥ तत्प्रायश्चित्तमादेयं । तत्राचार्यमुखात्त्वया ॥ दृष्टो वयं पु-
नस्तत्र । नृणां स्याद्बुद्धिसंशयः ॥ ७२ ॥ मंस्यते मामिहायाता । संघः कथमतीरिते ॥ स्व-
हस्तशरवत्तस्यै । प्रभुरध्ययनान्यदात् ॥ ७३ ॥ जावना च विमुक्तिश्च । रतिवाक्यं तृतीयकं
॥ तुर्यं विचित्रचर्येति । तेषां नामान्यनुक्रमात् ॥ ७४ ॥ सकृदुक्तान्यपि प्रज्ञा—बलात्तान्य-
वधृत्य सा ॥ स्वस्थानमागतादत्त । संघायोक्त्वा जिनोदितं ॥ ७५ ॥ तेषामध्ययने आद्ये ।
आचारांगस्य चूलिके ॥ अन्ये संघेन चक्राते । दशवैकालिकस्य च ॥ ७६ ॥ प्रायश्चित्तं प्रप-
द्यार्थ । गुरूक्तं सा महासती ॥ समं स्वजामिभिः स्थूल—जद्रोत्कापालयद् व्रतं ॥ ७७ ॥ उ-
पेतः स्थूलजद्राद्यैः । कलत्रैरिव कुंजरः ॥ श्रीजद्रबाहुसूरींद्र—स्तदागात्पुरमन्यदा ॥ ७८ ॥
तस्थिवांस पुरोपांते । यक्षामुख्यास्तपोधनाः ॥ अभ्येत्य गुरुमानेमु—र्ज्येष्ठार्यं ददृशुर्न तु ॥
॥ ७९ ॥ व्यजिज्ञपन्निति गुरुं । गुरुणा गौरवेण ताः ॥ चिराद्दिदृक्षितः पूज्याः । स्थूलजद्रो

मुनेः क सः ॥ ८० ॥ आसन्नेऽस्मिन् देवकुले । पठन्नस्ति महामुनिः ॥ इत्युक्ते गुरुणा प्रीति-
७५० प्रेरितास्ताः प्रतस्थिरे ॥ ८१ ॥ आयांतीः सोदरीर्वीक्ष्य । चिराच्चारित्रशालिनीः ॥ सिंहरूपं मु-
निश्चक्रे । लब्धिं दर्शयितुं निजां ॥ ८२ ॥ आगतास्तत्र ता वीक्ष्य । पुच्छाच्छोटितभूतलं ॥ प्र-
चिंता- सारितास्यकुहरं । हरिं वव्लिरे भिया ॥ ८३ ॥ क्रंदंत्यो गुरुमित्यूचु—र्वयं हंत हता हताः
५० ॥ यन्नृकेसरिणस्तस्य । स्थानेऽस्ति पशुकेसरी ॥ ८४ ॥ गुरुस्ता उपयुज्योचे । यात यात त-
पोधनाः ॥ ज्येष्ठार्यं तत्र वंदध्वं । केसरी नास्त्यलं शुचा ॥ ८५ ॥ विस्मिता आगतास्तत्र ।
स्थूलभद्रं मुनीश्वरं ॥ नत्वोचुः किमिदं सिंह—रूपं पूज्यैरदर्श्यत ॥ ८६ ॥ सोऽवक् पूर्वेषु भू-
यिष्ठा । ईदृश्यः संति लब्धयः ॥ मुक्ता इवांबुधौ कल्प—लता इव सुराचले ॥ ८७ ॥ चिरा-
दुत्कंठितानां वः । परिज्ञाय समागमं ॥ कृत्वा केसरिणो रूपं । चित्रगेवं व्यधामहं ॥ ८८ ॥
तेषामथ मिथः पुण्य—गोष्ठी प्रावर्तत क्षणं ॥ गतासु तासु चाध्येतुं । स्थूलभद्रोऽव्रजद् गुरू-
न् ॥ ८९ ॥ गुरवो न्यगदन् वत्स । पूर्वार्थान्न त्वमर्हसि ॥ घृतपूरानिवाजीर्णी । दुष्टः सूनुर्नि-
धीनिव ॥ ९० ॥ ध्यायन् जन्मावधि स्वागः । स्मृत्वा तात्कालिकं च तत् ॥ हीणोऽक्रमय-

दाचार्या–नपुनःकरणेन सः ॥ ९१ ॥ गुरवोऽजिदधुर्धीर । यदि त्वयि महाकुले ॥ पूर्वार्थी न
हि जीर्णास्त–ज्जरिष्यंति कथं परे ॥ ९२ ॥ एतद्रूनं जयाज्जाड्य–मिदं तरणितस्तमः ॥ एष
शीतत्विषो दाहो । विकारो यद्भवादृशां ॥ ९३ ॥ ततस्त्वं वाचनानर्हे । इत्याकर्ण्यानुतापभूः
॥ प्रसादयितुमाचार्यान् । मुनिः संघममेलयत् ॥ ९४ ॥ संघोऽवादीद् गुरून् पूज्या । वाचना-
मुष्य दीयतां ॥ सहंते मंतुमेकं हि । गुरवः स्वामिनो यथा ॥ ९५ ॥ संघेनाभ्यर्थितो भ-
क्त्या । व्यमृशद्गुरुरागमं ॥ नोक्तोऽहं तत्र किंत्वेष । चरमः श्रुतकेवली ॥ ९६ ॥ भद्रबाहुगुरुः
काले । सर्वपूर्वाब्धिपारगं ॥ तमाचार्यपदे न्यस्य । भेजे त्रिदिवसंपदं ॥ ९७ ॥ तमःस्तोमं ह-
रन्नृणां । विहारेणांशुमानिव ॥ स सूरींद्रोऽन्यदा पादैः । श्रावस्तीमपुनात् पुरीं ॥ ९८ ॥ स-
तृष्णानिव निष्णाता–नायातान्नागरान् प्रति ॥ व्याख्यामिषेण पीयूष–प्रपां तत्रातनिष्ट सः ॥
॥ ३०० ॥ धनदेवद्विजं ज्ञात्वा । बालमित्रमनागतं ॥ गुरुर्जगाम तद्धाम । स्नेहस्तेनापि दु-
स्त्यजः ॥ १ ॥ द्विजपत्न्या धनेश्वर्या । गुरुर्गौरवितो भृशं ॥ बभाषे धनदेवः किं । नेक्ष्यते
नीरुगस्ति किं ॥ २ ॥ सा जगाद त्वयादायि । यदाकिंचन्यमंजसा ॥ अनिष्टोरपि ते सख्यु–

स्तदादि तदढोकन ॥ ३ ॥ न मान्यः कश्चिदप्यर्थ—हीनः कुकविकाव्यवत् ॥ स भ्राम्यति
ज्प० दिशः सर्वा । न तु काव्यश्रुते धनं ॥ ४ ॥ तत् श्रुत्वा प्रिययेवालं । कृपया प्रेरितः प्रभुः ॥
चैता- निधानं तद्गृहे जान—न्नित्यूचे हस्तसंज्ञया ॥ ५ ॥ इदं चेदृक् तच्च तादृक् । पश्य जातं च
कीदृशं ॥ इत्युक्त्वा गुरुस्तस्थौ । विजहारान्यतस्ततः ॥ ६ ॥ समये च समायातं । धनदेवं
८५२ धनेश्वरी ॥ श्रीस्थूलभद्रवृत्तांतं । तमामूलमबोधयत् ॥ ७ ॥ न तस्य ज्ञानिनश्चेष्टा । दृष्टा क-
चन निष्फला ॥ इति तत्करसंज्ञांकं । चखान स्थानकं द्विजः ॥ ८ ॥ कूपादिव जलं स्वर्ण—
पूर्णं प्रादुरभूत्ततः ॥ निधानं तेन स श्रीमा—नभूच्चंद्र इवोदितः ॥ ९ ॥ तत्परंपरया श्रुत्वा
। सूरिराजोऽप्यचिंतयत् ॥ हहा मया मनोमोहा—च्चक्रेऽधिकरणं महत् ॥ १० ॥ यदि प्र-
व्राजयाम्येन—मेनस्तन्मे न वर्धते ॥ ध्यात्वेति भगवान् भूयः । श्रावस्तीं पुरीमाययौ ॥११॥
तेन तेने तथा तत्र । देशना क्लेशनाशिनी ॥ द्विजराजः प्रवव्राज । यथा कृतधनव्ययः ॥
॥ १२ ॥ विहरन्नथ सूरींद्र—श्चंद्रसूर्यौ ग्रहेष्विव ॥ मुख्यौ भूयस्सु शिष्येषु । द्वौ शिष्यौ
[illegible] ॥ १३ ॥ महागिरिसुहस्त्याख्यौ । तो क्रमाद्दशपूर्विणौ ॥ आचार्यौ सूरिराजेन ।

विहितौ महितौजसा ॥ १४ ॥ मोहस्याद्यः प्ररोहो लवणिमलवली कामभूपालकोशः । कोशा यस्योपदेशादजनि जिनमते श्राविका भावकाम्या ॥ स श्रीमान् स्थूलभद्रप्रभुरखिलजगज्जंतुजेगीयमाना—जिह्मब्रह्मावसाने सुविहितविधिना वैबुधं धाम भेजे ॥ १५ ॥ इति श्रीस्थूलभद्रकथा समाप्ता. ॥

तदेवमुक्तः श्रावकस्य समस्तोऽहोरात्रविधिरथ निगमनपूर्वं कृत्यशेषं गाथाद्वयेनाह—

॥ मूलम् ॥—दिवसनिसाविहिमेवं । सेवंतो अह कमेण खीणबलो ॥ बुज्झिय भवंतमुज्झिय । ममत्तमालंबिय दढत्तं ॥ ५६ ॥ आलोइयाइयारो । भावंतो नियमणे नमुक्कारं ॥ मुक्कारंभो अणसण—विहिणा पाणे परिच्चयइ ॥ ५७ ॥ व्याख्या—एवं पूर्वोक्तरीत्या दिवसनिशाविधिमहोरात्रिकृत्यं सेवमानः स श्रावकः क्रमेण कालपर्यायेण क्षीणमल्पीभूतं बलं मनोवाक्कायानां यस्य स क्षीणबलः सन् वैद्याद्युपदेशादिना बुध्वा ज्ञात्वा भवांतमायुःक्षयं, उज्झित्वा त्यक्त्वा ममत्वं स्वजनादौ, आलंब्य दृढत्वं धैर्यं, आ इत्यपराधमर्यादयालोचिता दर्शिताः प्रस्तावाद्गुरोरतिचारा ज्ञानादीनां येन स तथा. यद्वा आलोचिता हेयत्वेन विचा-

रिताः; प्रस्तावात्संलेखनाया इहलोकाशंसापरलोकाशंसाजीविताशंसामरणाशंसाकामभोगाशंसात्मका अतीचारा येन स तथा. भावयन्निजमनसि नमस्कारं, मुक्ता आरंभा सावद्यव्यापारा येन स मुक्तारंभः. अनशनविधिना—जिणभवणे चिइवंदण । गुरुवंदणवियरूणायचउसरणं ॥ दुक्कडगरिहा सुकडाणु—मोयणा वयसमुच्चरणा ॥ १ ॥ सयलाणं जीवाणं । सयणाणं खामणं च संघस्स ॥ असुहाईणं खामण—मासायणदोसपडिक्कमणं ॥ २ ॥ संघो वि काउस्सग्गं । खवगो सक्कत्थयं सुगुरुनमणं ॥ पावट्ठाणाईणं । चाउ गुरुवंदणाणसणं ॥३॥ इत्येवंरूपेण प्राणान् परित्यजति. उक्तार्थोपसंहारमाह—

॥ मूलम् ॥—गहणं अणुवयाणं । सामाइयं सव्वपोसहो पुणो ॥ अणसणमरणं इय सा—वयाण चत्तारि आसासा ॥ ५८ ॥ व्याख्या—स्पष्टा, नवरं निरंतरमनेकारंभ संभवदुरितप्राग्भारभारितानां श्रावकाणां चत्वार्याश्वासा विश्राममूमयः. उक्तं च स्थानांगे—भारं णं वहमाणस्स चत्तारि आसासा पन्नत्ता तंजहा—जत्थ णं अंसाउ अंसं साहरइ १, जत्थ वि य णं उच्चारं पासवणं वा परिठवेइ २, जत्थ वि य णं नागकुमारावासंसि वा सुवन्नकु-

मारवासंसि वा वासं उवेइ ३, जत्थ वि यणं आवकहाए चिठइ ४. एवमेव समणोवासगस्स णं चत्तारि आसासा पन्नत्ता, तं जहा जत्थणं सीलगुणवयवेरमणपच्चखाणपोसहोववासाइं पडिवज्जइ १, जत्थ वि य णं सामाइयं देसावगासियं वा पडिवज्जइ २, जत्थ वि य णं चाउदसट्ठमुदिट्ठपुण्णिमासिणीसु पडिपुण्णं पोसहं सम्मं अणुपालेइ ३, जत्थ वि य णं अपच्छिममारणंतिअसंलेहनाझुसणाझुसिए भत्तपडियाइक्खिए पाओवगए कालं अणवकंखमाणे विहरइ. तदेवं प्रसंगतो देशविरतस्य पर्यंतविधिमप्युक्त्वा सांप्रतं क्रमप्राप्तं फलद्वारमाह—

॥ मूलम् ॥—तो पत्तो देवलोगो । तउ चुउ उअरित्तु सुकुलेसु ॥ धरियवउ धुणियरउ । अपावयं पावए गणं ॥ ८९ ॥ व्याख्या—स्पष्टा, नवरं धृतव्रतः प्रपन्नसर्वविरतिस्ततस्तपोध्यानबलाध्धुतमपसारितं रज इव रजः स्वभावनिर्मलस्यात्मनो मालिन्यकरणादष्टविधं कर्म येन स धुतरजा, अपापकमपापस्थानकं मुक्तिलक्षणं प्राप्नोति. अनेन देशविरतेरनंतरं फलं स्वर्गः परंपरं तु मोक्षोऽपीति प्रतिपादितं. ततः प्रकृष्टफलेयं देशविरतिरिति न तत्र श्रावकैर्निरुद्यमैर्भाव्यमिति. यदाह—साम्राज्यं परिधर्तुमक्षममतिर्ग्रामाधिपः स्यान्न किं। किं कोटिध्वजता-

तामवाप्नुमनलं न स्यात्सहस्रेश्वरः ॥ किं वा कांचनसद्मनामनुचितस्तिष्ठेन्न तार्णालये । यो धत्ते न हि सर्वतः स विरतिं दध्यान्न किं देशतः ॥ १ ॥ पंचाणुव्रतचारिमेंद्रियबलः सम्यक्त्वकुंभस्थल—स्तुल्योजो व्यवहारनिश्चयरदो दानाद्युदारक्रमः ॥ ज्ञानाद्युत्तममंरूनो घनयशोघंटारणत्कारभू—रास्तां श्रावकचित्तसंसदि सदा गार्हस्थधर्मद्विपः ॥ २ ॥ इति श्रीअंचलगच्छाधिराजश्रीमहेंद्रप्रभसूरिशिष्यश्रीजयशेखरसूरिविरचितायां स्वोपज्ञोपदेशचिंतामणिवृत्तौ देशविरत्यधिकारस्तृतीयः समाप्तः. ॥ श्रीरस्तु ॥

॥ समाप्तोऽयं ग्रंथो गुरुश्रीमच्चारित्रविजयसुप्रसादात् ॥

लब्ध्वा यदीयचरणांबुजतारसारं । स्वादच्छटाधरितदिव्यसुधासमूहम् ॥

संसारकाननतटे ह्यटतालिनेव । पीतो मया प्रवरबोधरसप्रवाहः ॥

वंदे मम गुरुं तं च । चारित्रविजयाह्वयं ॥ परोपकारिणां धुर्यं । चित्रं चारित्रमाश्रितम् ॥२॥ युग्मं

---

आ ग्रंथ श्रीजामनगरनिवासि पंडित श्रावक हीरालाल हंसराजे स्वपरना श्रेय माटे पोताना श्रीजैनभास्करोदय छापखानामां छापी प्रसिद्ध कर्यो छे. ॥ श्रीरस्तु ॥

॥ श्रीजिनाय नमः ॥

# ॥ श्रीउपदेशचिंतामणिः भाग ४ ॥

( कर्ता श्रीजयशेखरसूरिः )

छपावी प्रसिद्ध करनार.

पंडित श्रावक हीरालाल हंसराज. (जामनगरवाळा)

वीरसंवत् २४४८. विक्रमसं० १९७८, सने १९२२.

किंमत—रु. ३–८–०

श्री जैनभास्करोदय प्रिन्टिंग प्रेस—जामनगर.

॥ श्रीजिनाय नमः ॥

॥ श्रीचारित्रविजयगुरुभ्यो नमः ॥

# ॥ अथ श्रीउपदेशचिंतामणिः सटीकः प्रारभ्यते ॥

( कर्ता जयशेखरसूरिः )

( चतुर्थो भागः )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज ( जामनगरवाळा )

अथ चतुर्थः सर्वविरत्यधिकारः प्रस्तूयते, तस्य च पूर्वेण सह संबंधगर्भां प्रस्तावनामाह—

॥ मूलम् ॥ इइ देसेणं विरई । भणिया इत्तोवि होइ कमणिज्जा ॥ भव्वाणं सव्वविरई । सरलो मग्गो सिवपुरस्स ॥ १ ॥ व्याख्या—इति पूर्वोक्तरीत्या भणिता प्रतिपादिता मया देशेन विरतिः, इतोऽस्या देशविरतेरपि सर्वविरतिर्भव्यानामासन्नमोक्षाणां कमनीया स्पृहणीया भवति, यत इयासितस्यानंतसुखास्पदस्य शिवपुरस्य सरल ऋजुः पंथाः. यथा हि

सर्वविरतास्तद्भावेऽपि मोक्षं व्रजंति, न तथा देशविरतास्तेषां भवांतरेणैव मोक्षाभिधानादि-
त्यनेन संबंधेनायमधिकारः प्रस्तूयते; अथ सर्वविरतिप्रतिपादिकां द्वारगाथामाह—

॥ मूलम् ॥ वेरग्गं चारित्ते । पडिवत्तिनाणविणयकिरियाउ ॥ संयमभेया मुणिगुण—दि-
णकिच्चफलाइं इह वुच्छं ॥ २ ॥ व्याख्या—न हि वैराग्यं विना सर्वविरतिरुपतिष्ठते, इति प्र-
थमं वैराग्यं, वैराग्ये सत्यपि कोऽपि परीषहादिभीरुतया दीक्षां न प्रपद्यते, ततश्चारित्रे चा-
रित्रविषये प्रतिपत्तिमंगीकारं, ततो यथोत्तरं प्राधान्येन ज्ञानविनयक्रियास्ततः संयमभेदान्
सप्तदश, ततो मुनिनां गुणान्, ततः साधोर्दिनकृत्यं, दिनग्रहणाद्रात्रिरपि ग्राह्या. ततः सु
पालितायाः सर्वविरतेः फलमिह चतुर्थाधिकारे वक्ष्ये इति सर्वत्र योज्यं. तत्र पूर्वं वैराग्य-
स्वरूपमाह—

॥ मूलम् ॥ रोगेण व सोगेण व । दुक्खेण व जं जणाण उल्लसइ ॥ मग्गंति न वेरग्गं ।
तं विबुधा अप्पकालंति ॥ ३ ॥ व्याख्या—रोगेण वा कासश्वासादिना, शोकेन वा पुत्रवियो-
गजन्मना, दुःखेन वा वधबंधादिकेन हेतुना जनानां निर्विवेकानां यद्वैराग्यं, धिगमुं रोग-

शोकाद्यपायबहुलं संसारमसारमिति विमर्शात्मकमुल्लसति, तद्वैराग्यं विबुधा न मार्गयंति, न स्पृहयंति, सर्वविरत्यनर्हत्वात् सर्वविरत्यनर्हत्वं, तस्य कस्मादित्याह—'अल्पकालंति' अल्पकालावस्थायित्वात्; अल्पकालावस्थायित्वं च रोगादिहेतुनिवृत्तौ तस्यापि निवर्तनात्, अत एव नैतद्विबुधानां स्पृहणीयमिति. अथ सर्वविरतियोग्यं वैराग्यमाह—

॥ मूलम् ॥ सुहियस्स व डुहियस्स व । जं वेरग्गं जवे विवेएण ॥ पायं अपच्चवायं । तं चिय चारित्ततरुबीयं ॥ ४ ॥ व्याख्या—सुखितस्य वा दुःखितस्य वा जंतोर्यद्वैराग्यं विवेकेन सम्यक् तत्वावबोधेन हेतुभूतेन जवेत्, तदेवं वैराग्यं प्रायोऽप्रत्यपायमविनश्वरं विवेकमूलतया डुःखादेर्निवृत्तावपि तस्यानिवर्तनादत एवैतत्सम्यक्त्वमूलस्य प्रथमव्रतस्कंधस्य शेषव्रतशाखस्य प्रशमादिप्रशाखस्य सकलक्रियाकलापप्रवालस्य लब्धिकुसुमस्य मोक्षफलस्य चारित्रतरोरुपादकत्वाद्बीजमिव बीजं जवति. स्तुतिकारोऽप्याह—दुःखगर्भे मोहगर्भे । वैराग्ये निष्ठिताः परे ॥ ज्ञानगर्भं तु वैराग्यं । त्वय्येवायततां गतं ॥ १ ॥ प्रायोग्रहणं नंदिषेणादिषु व्यभिचारस्यापि दर्शनात्. ननु जवडुःखार्त्तस्य वैराग्यं सहेतुकत्वात्सुखिनः पुनरिष्टान् शब्दादिवि-

षयानुपभुंजानस्य कथं तत्संभव इत्याह—

॥ मूलम् ॥ जे जे भावा संसार–कारणं हुंति रागवंताणं ॥ ते चेव विरत्ताणं । निव्वुइपहसाहगा भणिया ॥ ५ ॥

व्याख्या–ते ये भावा स्वजनांगधनादयः सरागया बुद्ध्या विचार्यमाणा रागवतां संसारकारणं भवति त एव तावंतो भावा वैराग्यबुद्ध्या विचार्यमाणा विरक्तानां निवृत्तिपथस्य सम्यग्ज्ञानक्रियात्मकस्य साधका भणिता उक्ताः परमर्षिभिः. तथा चागमः–जे जत्तिया य भावा । भवस्स ते चेव तत्तिया मुक्खे ॥ गणणाइया पुणा । दुन्नि लोगा भवे तुल्ला ॥ १ ॥ सोऽयं भावः–इह न किमपि वस्तुतः संसारस्य मोक्षस्य च हेतुमालंबते, राग वैराग्ययोरेव तत्कारणत्वात्, ततस्तस्मिन्नेव वस्तुनि यो ममत्वकारणं रागाध्यवसायः स संसारहेतुकः, यश्च मुमुक्षात्मको वैराग्याध्यवसायः स मोक्षहेतुकः. अथैकस्यैव वस्तुनः संसारमोक्षहेतुतां दृष्टांतपूर्वमाह—

॥ मूलम् ॥ जं भत्तं पाणं वा । सरसं आसाइऊण भुंजेइ ॥ तं मलमुत्तनिमित्तं–ति कस्स न जणेइ वेरग्गं ॥ ६ ॥

व्याख्या–यद्भक्तं शाल्यादि, पानकं वा सरसमास्वाद्य सद्यः

सरागो भोक्ता नृत्यति हर्षप्रकर्षभाग् भवति, तदेव भक्तं पानकं वा परिणामे मलमूत्रनिमित्तमिति बुद्ध्या चिंत्यमानं कस्य मुमुक्षोर्वैराग्यं न जनयति? अपि तु जनयत्येव. तदेवमेकस्य भक्तस्य पानकस्य वा सरसतया मलमूत्रादिनिमित्ततया च विचार्यमाणस्य यथा रागवैराग्यहेतुता दर्शिता तथा सर्वेष्वपि वस्तुषु भावनीया. एतदेवाह—

॥ मूलम् ॥—जेण अलंकारेणं । अलंकिउ होइ रमणीमणइट्ठो ॥ सोवि परमत्थनासत्तिकस्स न जणेइ वेरग्गं ॥ ७ ॥ पासंतो फासंतो । जं रमणिं मन्नए महासुक्खं ॥ सावि कुम्मी कूमाणं—ति कस्स न जणेइ वेरग्गं ॥ ८ ॥ दव्वस्स जस्स कज्जे । नियए पाणे गणेइ तिणरूवे ॥ सोवि खणदिट्ठनट्ठो—त्ति कस्स न जणेइ वेरग्गं ॥ ९ ॥ जं पालियरज्जसिरिं । मन्नइ अमरेसरं व अप्पाणं ॥ स नरयगइनिमित्तं—ति कस्स न जणेइ वेरग्गं ॥ १० ॥ व्याख्या—चतस्रोऽपि गतार्थाः.

॥ मूलम् ॥— एवं सव्वे भावे । भावेमाणो विरत्तिहेऊहिं ॥ को नायरिज्ज कुसलो । परिणामे सुंदरं चरणं ॥ ११ ॥ व्याख्या—एवमुक्तया दिशा सर्वानुक्तव्यतिरिक्तानपि भावान् परि-

णामनिरसत्वाद्विरक्तिजनकैर्हेतुभिर्भावयन् कः कुशलश्चरणं चारित्रं नाद्रियेत? अपि त्वाद्रि-
येतैवेति द्वितीयद्वारपरामर्शः, ननु सर्वभावांतःपातित्वेन चारित्रमपि परिणामविरसं भवि-
ष्यतीत्याह—परिणामे आयतौ वक्ष्यमाणरीत्या सुंदरं प्रधानं, अयमर्थः—इह सर्वेऽपि संसा-
रिकाः शोभना भावा मुखमधुरतया किंपाकफलवदज्ञानानां रागं जनयंति. परिणामदारुण-
त्वाच्च सज्ज्ञानानां वैराग्यमिति. चारित्रं पुनस्तथाविधौषधवदापातकटुकमपि परिणतौ गुण-
कारकत्वात्कुशलानां कमनीयतामेव धत्ते. परिणामसुंदरत्वमेवाह—

॥ मूलम् ॥—नाणस्स लद्धीण य होइ लंभो । जुगत्तमिंदाइय वंदणस्स ॥ पत्ते चरित्ते
न भयं न चिंता । न पुत्तमित्ताइवियोगदुक्खं ॥ १२ ॥ व्याख्या—चारित्रे प्राप्ते ज्ञानानां म-
तिश्रुतादीनां लब्धीनां चामर्षौषध्यादीनां लाभो भवति, तथेंद्रादीनां वंदनस्य योग्यत्वं जा-
यते, कदापि कालदोषादिंद्रादयः साक्षादुपेत्य न वंदंते तथापि तद्वंदनयोग्यता चारित्रि-
णोऽस्त्येवोपरितनगुणस्थानवर्तित्वात्, तथा न राजचौरादिभ्यो भयं प्रादुर्भवति, अकिंचन-
त्वात्, कथमहं निर्वहिष्यामीति चिंताराक्षसी न चेतोग्रस्ते भिक्षाभोजित्वात्, न च पुत्र-

मित्रादिवियोगदुःखं वर्धते निःप्रतिबंधत्वात्. यदुक्तं—नो दुष्कर्मप्रयासो न कुयुवतिसुतस्वामिदुर्वाक्यदुःखं । राजादौ न प्रणामोऽशनवसनधनस्थानचिंता न चैव ॥ ज्ञानातिर्लोकपूजा प्रशमसुखरसः प्रेत्य मोक्षाद्यवाप्तिः । श्रामण्येऽमी गुणाः स्युस्तदिह सुमतयः किं न यत्नं कुरुध्वं ॥ १ ॥ ततः किमित्याह—

॥ मूलम् ॥—जइ चिंतेइ सुहं ता । देवाणहियं दुहं तु जं किंपि ॥ तंपि सुहकारणं ता । उवयारेणं सुहं चेव ॥ १३ ॥ अतः कारणाद्यदि जीवः सद्बोधिसुधाधौतं विवेकलोचनमुद्घाट्य बाह्ये लोचने क्षणं निमील्य चिंतयति तदा चारित्रे प्राप्ते सुखं देवेभ्योऽधिकं वर्तते, अयं भावः—इह नारकाणां तिरश्चां च का चर्चा दुःखमयत्वात्. मनुष्याणां पुनः—न श्रीर्मे विपुला वधूर्न च मता जाताथवा सूनवो । जाता वा न गुणास्पदं न च मुदं दत्ते कुटुंबं मम ॥ क्लिष्टो भूमिपतिः खलाश्च कुदृशो देहं रुगार्त्तं सुतो—द्वाह्यं भूरिऋणं तृणंति गृहिणां चेतांसि चिंता इमाः ॥ १ ॥ ततस्तेऽपि नात्र ग्राह्याः, देवाः पुनर्यद्यपि मुक्तरोगा इष्टावधि प्राप्तसमग्रभोगास्तथापि चिंतार्तिवियोगवत्त्वान्न वस्तुतस्तेऽपि सुखं लभंते. अतश्चारित्रिणां सुखं

देवेभ्योऽप्युत्कृष्टं चिंतादिरहितत्वात्, दुःखं तु यत्कमपि दृश्यते परिषहादिकं तदपि सुखका-
रणत्वादुपचारेण सुखमेव भवति, चकारेण कार्यव्यपदेशः, यथा तंदुलान् वर्षति पर्जन्य
इति. किंच—

॥ मूलम् ॥–कम्मगिरिगरिम असणी । भवरोगाणोसहिव निम्महणी ॥ सिवनयरगम-
णविज्जा । एस चिय होइ पव्वज्जा ॥ १४ ॥ व्याख्या–कर्माण्येव दृढत्वाद्गिरयस्तेषां गरिम्णः
प्रौढताया उच्छेदनेऽशनिर्वज्रं विद्युद्वा, भवा नरनारकाद्यवतारास्त एव दुःखकरत्वाद्रोगास्ते-
षामौषधीव निर्मथनीकरणेन; शेषं स्पष्टं. अथास्य चारित्रस्य व्यक्तस्य फलं पुरो वक्ष्यते,
अव्यक्तस्य त्वत्राह—

॥ मूलम् ॥–करवत्तदारणाइ–दारुणदुक्खं सहंति जस्स कए ॥ अव्वत्तंपि चरित्तं । जं रज्जं
देइ जीवाणं ॥ १५ ॥ व्याख्या–करपत्रदारणमादिर्यस्य भृगुपाताग्निप्रवेशादेस्तत्करपत्रदार-
णादिकं दारुणमपि दुःखं सहंते मिथ्यादृश इति गम्यते, अव्यक्तं तथाविधबोधरहितमपि
चारित्रं कर्तृ तद्राज्यं कर्मतापन्नं जीवेभ्यो ददाति. तथा च श्रूयते–पुरा प्रस्तूते डुर्भिक्षपूरे

बुभुक्षाक्षामकुक्षिः कश्चिद् द्रमकः साधूनां भिक्षाप्राचुर्यमालोक्य प्रवव्राज. स चैकदिवसं पा-
लितव्रतो निशि सूचिकया विपद्य सद्यस्तत्प्रभावादवंत्यां संप्रतिर्नाम नरपतिर्बभूव. इह केऽपि
स्वजनस्नेहग्रहिलहृदया एवंविधामपि प्रव्रज्यांप्रत्यलसायंते तान्प्रत्याह—

॥ मूलम् ॥—तेसिं सयणाण कए । चइए को वच्छलं चरणलच्छिं ॥ जाण सिणेहो असु-
हो । अबहुठिइ विहरूणासीलो ॥ १६ ॥ व्याख्या—तेषां स्वजनानां कृते कः कृती वत्सलां
सकलसुखदायित्वेन तात्विकस्नेहवतीं चरणलक्ष्मीं चारित्रश्रियं त्यजति? तेषां केषामित्या-
ह—येषां स्नेहोऽशुभो दुर्गतिबंधनत्वात्. यदाहुः—अमित्तो मित्तवेसेण । कंठे घित्तूण रोयइ ॥
मा मित्ता सोहगं जाहि । दोवि गच्छामो दोगइं ॥ १ ॥ तथा अबहुस्थितिरल्पकालभाव्येक-
भविकत्वात्. उक्तं च—जहा संझाए रुक्खंमि । मिलंति विहगा बहू ॥ पंथिया पहिआवासे ।
जहा देसांतरागया ॥ १ ॥ पहासे जंति सव्वेवि । अन्नमन्नदिसंतरं ॥ एवं कुडुंबवासेवि । सं-
गया बहवो जिया ॥ २ ॥ कस्सवि कोइ न इठो । इक्कंचिय इठ अप्पणो कज्जं ॥ कज्जाव-
क्खिया संसा—रियाण सव्वेवि संबंधा ॥ १७ ॥ व्याख्या—उत्तानार्थाः. अत्रांतरे कश्चिदाह—न

ह्यस्माकं स्वजनस्नेहश्चारित्रप्रतिबंधकः, किंत्वयमाहतो गृहव्यापारन्नारः कथमर्धपथे मुच्यत इति तंप्रत्याह—

॥ मूलम् ॥—हुंति हु एकघरस्सवि । वावारनरेण वावडा केवि ॥ तं न वहिउं न मुत्तुं । सित्थंव पिपीलिया सत्ता ॥ १८ ॥ व्याख्या—केऽप्यैदंयुगीना वराका एकस्यापि गृहस्य व्यापारन्नरेण व्यापृता व्यग्रा न्नवंति, ते च तं व्यापारन्नरं न वोढुं शक्ताः, कुटुंबस्येच्छाव्धिदुरानाक्रमत्वात्. न च मोक्तुमपि शक्ताः प्रतिबंधबहुलत्वात्, यथा पिपीलिकाः सिक्थं नक्तकणं प्राप्य न्नारवत्त्वान्न तद्वोढुं, लौल्यान्न तन्मोक्तुं शक्नुवंतीति. तर्हि पूर्वे जीवाः कीदृशा आसन्नित्याह—

॥ मूलम् ॥ अवरे वरवसहा इव । पढमं धरिउं समग्गधरणिधुरं ॥ पच्छा खणेण चइऊण । गहियद्दिक्खं गया मुक्खं ॥ १९ ॥ व्याख्या—सुगमा, नवरमपरे श्रीभरतसगरादयः. उक्तं वैराग्यं चरणप्रतिपत्तिश्चेति द्वारद्वयं. अथ ज्ञानद्वारं विवरिषुराह—

॥ मूलम् ॥ मोहखर्जवसमेणं । चरणे पत्ते समुज्जमसु नाणे ॥ जं अंकुसंव उप्पह—गयस्स

व्याख्या-स्पष्टा, नवरं जंति यद्ज्ञानं मुनेर्मनोगजस्योत्पथग-
मुणिणो मणगयस्स ॥ २० ॥ व्याख्या-स्पष्टा, नवरं जंति यद्ज्ञानं मुनेर्मनोगजस्योत्पथग-

तस्यांकुशवत्सन्मार्गानयनक्षममिति. अथ ज्ञानस्य मुख्यां चारित्रांगतामाह—

॥ मूलम् ॥—हियमहियं वा पढमं । जाणंति तउ समायरंति हियं ॥ तम्हा नाणाइ-
त्तं । मुणीण सयलं अणुट्ठाणं ॥ २१ ॥ व्याख्या-सुबोधा, अथ ज्ञानिनोऽज्ञानस्य च मिथो

महदंतरमाह—

॥ मूलम् ॥—मणिपत्थराण पुरिस—कुहूण तह चक्खुमंतअंधाणं ॥ जा होइ इह विसे-
सो । सुच्चिय नाणीण इयराणं ॥ २२ ॥ व्याख्या-योजनिका सुगमा, जावार्थस्त्वयं—यथा
मणिर्द्रव्यलक्षैरपि क्रीत्वा गृहमध्यमानीयते, प्रस्तरस्तु गृहमध्यस्थोऽपि बहिः कृष्यते, पूर्णि-
मा च पूर्णेंदुना दिनायितोद्योतेति सर्वेषामिष्टानिष्टा च तमोमयीत्यमावास्या चक्षुष्मांस्तु स-
र्ववस्तुस्तोमं स्वयं पश्यन् स्वतंत्रोंधश्च पदे पदे परतंत्र इति. तथा ज्ञानी सर्वेषामिष्टः स्वतं-
त्रश्च सर्वविचारेषु, इतरस्त्वनिष्टः परमुखप्रेक्षकश्च विचारावसरे इति. यद्यपि सत्क्रियः साधुः
सर्वेषां मान्यो जवति तथापि ज्ञानाधिकत्वेन विशेषमाह—

॥ मूलम् ॥—पुस्रो ससिव्व फलिउ । तरुव्व जलपूरिउ तलावव्व ॥ सुअसंपुस्रो साहू । ज-
ण कस्स न वल्लहो होइ ॥ २३ ॥ व्याख्या—सुबोधा, ननु ज्ञानवंतोऽपि केचन प्रतिपतंतो दृ-
ष्टास्ततः किमनेन ज्ञानाभियोगेनेत्याह—

॥ मूलम् ॥—जइ असुहकम्मवसउ । जाणंतो कहविलंघए मेरं ॥ न य सव्वहा विण-
स्सइ । तहावि आसाढभूइव्व ॥ २४ ॥ व्याख्या—स्पष्टा—, नवरं 'मेरंति' चारित्रमर्यादां;
न च सर्वथा विनश्यति कदाचिदात्मानं समुद्धरत्येवेति. भावार्थः कथानकगम्यस्तच्चेदं—

मगधेष्वस्ति विस्तार—सारं राजगृहं पुरं ॥ पृथिव्यां प्रथितोऽपासी—त्तसिंहरथपार्थिवः
॥ १ ॥ तत्रान्यदा समाजग्मुः । श्रीधर्मरुचिसूरयः ॥ तच्छिष्यः पर्यटन् मध्ये—नगरं भैक्षहे-
तवे ॥ २ ॥ तपःप्रभावसंपन्न—लब्धिः प्रतिगृहं भ्रमन् ॥ आषाढभूतिनामर्षि—र्विवेश नटसद्म
नि ॥ ३ ॥ तत्रैकं मोदकं प्राप्य । निर्गतः स व्यचिंतयत् ॥ अयं तावद्गुरोर्भावी । भ्रमभूः
क्रम एव मे ॥ ४ ॥ काणीकृत्य ततो नेत्रं । स तत्र प्राविशत्पुनः ॥ प्राप्यैकं मोदकं प्राग्व—
न्निर्गतः कृतकृत्यवत् ॥ ५ ॥ भवितायमुपाध्याय—स्येति कुब्जोबभूव सः ॥ प्रविष्टश्च नटा-

गारं । मोदकं प्राप्य निर्ययौ ॥ ६ ॥ अयं च मे सहायेन । साधुना किल चोक्ष्यते ॥ लाला एव मया धुंट्या–स्तटस्थेन विलोकनात् ॥ ७ ॥ इत्यशेषं परावर्त्य । रूपं वैक्रियशक्तितः ॥ नटौकः प्राविशत्साधु–रहो लोभविडंबना ॥ ८ ॥ गवाक्षस्थो नटः सर्व । तद्वीक्ष्याचिंतयन्मुदा ॥ उचितोऽस्माकमेवायं । क्षत्राणामिव युद्धवित् ॥ ९ ॥ लोला ह्यतीव लोलास्य । तथा हि विवशाः सुखं ॥ पाठिना अपि बध्यन्ते । धीवरैरामिषार्थिनः ॥ १० ॥ अथैत्य मोदकैस्तस्य । नटः पात्रमपूरयत् ॥ भैक्षायात्र सदागच्छे–रिति प्रार्थयतेस्म तं ॥ ११ ॥ अभूद्द्र बुभुक्षितः शंकः । क्षेत्रद्वारं त्वपावृतं ॥ इति न्यायान्नटस्यौकः । साधुर्नित्यमियाय सः ॥ १२ ॥ प्रविशन्ननिशं रिक्तः । पूर्णश्च परमोदकैः ॥ निरगच्छन्नटागारा–त्कूपादिव घटो मुनिः ॥ १३ ॥ रूपगंधध्वनिस्वाद–सौकुमार्यैरमोहयत् ॥ मोदकास्तस्य पंचापि । खानि स्मरशरा इव ॥१४॥ नटोऽन्यदा स्वनंदिन्या–वन्वशादिति सादरं ॥ वत्से सोऽयं युवा क्षोभ्यो । युवाभ्यां जंगमो निधिः ॥ १५ ॥ प्राक्कटाक्षास्ततो नर्म । ततो वक्रोक्तिभंगयः ॥ ताभ्यां मुनेर्मनो जेतुं । व्यापार्यंत शनैः शनैः ॥ १६ ॥ क्रमाद्धैर्यधनं साधो–र्बालाभ्यामप्यलुंट्यत ॥ यद्वा नहि सहाया-

तो । डुर्मोषो बालयोरपि ॥ १७ ॥ तयोर्मृडुगिरोलोल-हशोः सोऽप्यन्वरज्यत ॥ विश्रम्य
चाखिलान् जावां-स्तत्कृतान् बहुमन्यत ॥ १८ ॥ अन्यदा मोदकप्राप्तौ । निर्गच्छन्नटमंदिरा-
त् ॥ क यास्यत्रैव तिष्ठेति । ताज्यामज्यर्थितो मुनिः ॥ १९ ॥ गुर्वायत्तोऽस्म्यहं तत्ता-ननुज्ञा-
प्य सुलोचने ॥ एवमेव करिष्यामी-त्युक्त्वा स स्वाश्रयं ययौ ॥ २० ॥ एवं मनसिजाक्रांत-
मनसं मुनिसंसदि ॥ ज्ञात्वा कथंचिद्गुरवः । कृपार्द्रा इत्यबोधयन् ॥ २१ ॥ विद्वन् विचार-
चक्षुष्मा-नपि किं ज्रश्यसे पथः ॥ श्रुतप्रदीपहस्तोऽपि । किं वा तमसि मज्जसि ॥ २२ ॥
नार्यस्ते हृदये धर्म-ध्यानधौते स्फुरंति किं ॥ तारा हि न विजृंभंते । व्योम्नि सूर्यांशुमा-
लिने ॥ २३ ॥ तत् श्रुतं तत्तपः सा च । क्रिया सा च कुलीनता ॥ नारीशरीरकस्यार्थे । व-
त्स सर्वं किमुज्झसि ॥ २४ ॥ चिरं चारित्रमापाद्य । किं खंडयसि सांप्रतं ॥ बाहुज्यामंबु-
धिं तीर्त्वा । को वा मज्जति गोष्पदे ॥ २५ ॥ इतो गुरुगिरश्चैता-श्चेतो बालामृदूक्तयः ॥ दो-
लारूढमिवाकार्षुः । क्षणं तस्य मुनेर्मनः ॥ २६ ॥ गुरूक्तीरथ निर्धूय । स्मरोत्तालश्चचाल सः ॥
कुंजरो गंजीरवेदी किं । गणयत्यंकुशाहतीः ॥ २७ ॥ पृष्ठदानं गुरोर्माभू-दितिपश्चान्मुखैः पदैः ॥

निर्गछंति गणात्तस्मिन् । गुरुरूचे मुनीनिति ॥ २७ ॥ अस्य वैनयिकादस्मा-ज्ञानीमः श्रमणा वयं ॥ अयं भ्रष्टोऽपि न चिरात् । समुध्धृत्य स्वमेष्यति ॥ २ए ॥ सोऽपि प्राप्तो नटस्योकः । कन्यके परिणीयते ॥ विषयान् बुभुजे सारा-हारानिव बुभुक्षितः ॥ ३० ॥ प्रछन्नमनुशास्तिस्म । नटः स्वतनये इति ॥ अयं भाग्यवशात्ताव-द्भवत्योरभवत्पतिः ॥ ३१ ॥ पुनर्वीक्ष्य डुर्वृत्तं । चित्तमस्य विरंक्ष्यति ॥ सावधानं कुलस्त्रीव-दाराध्यस्तदयं सदा ॥ ३२ ॥ यथा प्राक् श्रुतचारित्र-श्रीभ्यां सह चिखेल सः ॥ विषदाचारसाराभ्यां । नटीभ्यां च तदा तथा ॥ ३३ ॥ अन्यदा कर्तुमस्त्रीकं । नाट्यमाषाढभूतिना ॥ नटपेटकयुक्तेन । भूपास्थानमगम्यत ॥ ३४ ॥ बंधमोक्षादिव प्रीते । तदानीं तस्य वल्लभे ॥ मंक्षु मैरेयमानीया-पिबतां द्रढितारपी ॥ ३५ ॥ जातिस्वभावः किल यस्य योऽस्ति । त्यजत्यसौ तन्न सुशिक्षितोऽपि ॥ नृत्ये नियुक्तापि चिरं बिडाली । श्रुत्वाखु शब्दं स्वलयं भनक्ति ॥ ३६ ॥ नाट्यावसरमप्राप्य । भूपात्कार्यांतराकुलात् ॥ क्षणेनैव न्यवर्तिष्ट । नटैः सह नटाग्रणीः ॥ ३७ ॥ आगतः स्वगृहं द्दष्ट्वा । द्वाःपिधानं स शंकितः ॥ दृशं व्यापारयामास । कपाटछिद्रवर्त्मना ॥ ३८ ॥ अंतरे-

ता भा.४

८७४

अथ ज्ञानभेदानाह—

॥ मूलम् ॥–आभिणिबोहियमाइ । तं पंचविहं सुएण इह पगयं ॥ सेसाइं नाणाइं । न हि गुरुसिक्खं अविक्कंति ॥ २५ ॥ व्याख्या–तत् प्रस्तुतं ज्ञानमाभिनिबोधकादिकं पं-चविधं भवति, तद्यथा–आभिनिबोधिकज्ञानं १, श्रुतज्ञानं २, अवधिज्ञानं ३, मनःप-र्यवज्ञानं ४, केवलज्ञानं ५ चेति. तत्र अभीत्याभिमुख्ये, नीति नैयत्ये, ततो ग्रहणार्हवस्तुना-मभिमुखो नियतः श्रोत्रादींद्रियैः प्रविभक्तो बोधोऽभिनिबोधः, स एवाभिनिबोधिकं, तच्च त-द्ज्ञानं चाभिनिबोधिकज्ञानं. इंद्रियमनोनिमित्तो वस्त्ववबोधो मतिज्ञानमित्यर्थः. श्रवणं श्रु-तं, अभिलापप्लावितार्थोपलब्धिविशेषस्तच्च तद्ज्ञानं च श्रुतज्ञानं २. अवधिर्मर्यादा रूपि-द्रव्यात्मिका तेनावधिनाज्ञानं अवधिज्ञानं. इंद्रियमनोनिरपेक्ष आत्मनः साक्षाद्रूपिद्रव्यग्र-हणात्मको बोधः संज्ञिभिर्जीवैः काययोगेन ३. मनोवर्गणाभ्यो गृहीतानि मनोयोगेन मन-स्त्वेन परिणमितानि वस्तुचिंताहेतूनि द्रव्याणि मनांसीत्युच्यंते, तानि पर्यैत्यवगछतीति म-नःपर्यायं, तच्च तद्ज्ञानं च मनःपर्यायज्ञानं, मनुष्यक्षेत्रांतवर्तिसंज्ञिजीवचिंतितार्थप्रकटनपर

इंद्रियमनोनिरपेक्ष आत्मनः साक्षात्प्रवृत्तो बोधः ४. केवलं संपूर्णज्ञेयग्राहित्वात् संपूर्णं, तच्च तद्ज्ञानं च केवलज्ञानं, रूप्यरूपिद्रव्यग्राहकमिति समासार्थः. व्यासार्थो महाभाष्यादवसेयः. एवं ज्ञानपंचकमुपदर्श्य येन प्रस्तुतोपयोगस्तदाह—इह ज्ञानशिक्षणाधिकारे श्रुतेन श्रुतज्ञानेन प्रकृतं अधिकृतं तस्यैव गुरूपदेशार्हत्वात्, शेषज्ञानानां स्वावारककर्मक्षयक्षयोपशमाभ्यां स्वत एव जायमानत्वादेतदेवाह—"सेसाइं नाणाइंति" उत्तरार्धं स्पष्टं. किं तत् श्रुतज्ञानमित्याह—

॥ मूलम् ॥—अंगपविठ्ठं तह अंग—बाहिरं तं सुयं भवे डुविहं ॥ अंगपविठ्ठं बारस—भेयं इयरं अणेगविहं ॥ २६ ॥ व्याख्या—तत्प्रकृतं श्रुतं द्विविधं भवति, तद्यथा—अंगप्रविष्टं अंगबाह्यं च, तत्र—पायडुगं जंघोरू—गायदुगऊं तु दोय बाहुय ॥ गीवा सीरं च पुरिसो । बारस अंगो सुयविसिठ्ठो ॥ १ ॥'

एवंविधेषु प्रवचनपुरुषस्यांगेषु प्रविष्टं व्यवस्थितमंगप्रविष्टं द्वादशभेदं, तथाहि—प्रवचनपुरुषस्य पादयुगं आचारांगसूत्रकृते, जंघाद्विकं स्थानसमवायौ, ऊरुद्विकं भगवतीज्ञाता-

श्लिष्ट भूतात्ते । इवासंबद्धभाषिके ॥ स मुक्तवसने स्रस्त-रसने वल्लभे उभे ॥ ३९ ॥ तद्दुर्वृत्तं तयोः साक्षा-द्वीक्ष्य दध्यौ स खिन्नधीः ॥ ईदृशीभिः पुरंध्रीभि-र्वंचिता त्रिजगत्यहो ॥ ४० ॥ यद्वाभून्मे स्वजिह्वेव । वैरिण्यागः किमेतयोः ॥ यः स्याद्गृहे लघुरसो । वायुना नीयते बहिः ॥ ४१ ॥ दीक्षा हाहा मयाहारि । दुरापाप्यनयोः कृते ॥ पंकार्थमिव कस्तूरी । काचार्थमिव सन्मणिः ॥ ४२ ॥ गार्हस्थ्यं पंकिलं वीक्ष्य । शुक्लपक्षो विवेकिराट् ॥ स्वगच्छंप्रति सोऽचाली-न्मराल इव मानसं ॥ ४३ ॥ दृशैव तस्य वैराग्यं । जानन् वातायनस्थितः ॥ उपेत्य श्वसुरः स्वीये । तनये इत्यबोधयत् ॥ ४४ ॥ रे रे युष्मत्प्रमादेन । याति कल्पद्रुमो गृहात् ॥ यद्यस्ति कापि शक्तिस्त-दमुं वालयतं द्रुतं ॥ ४५ ॥ अथ ते धाविते सिंह्या-विव तं साधुकुंजरं ॥ रुद्ध्वा चतुर्विहायावां । निःपुत्रे यासि किं प्रिय ॥ ४६ ॥ पूर्वं स्वीकृत्य सद्वृत्त । किं नौ त्यजसि संप्रति ॥ ग्रंथेष्वेव सुवृत्तानां । श्रिये स्यादात्तमुक्तकं ॥ ४७ ॥ विरक्तः सर्वथास्मीति । तेनोक्ते ते अवोचतां ॥ यावज्जीवं जीवनार्हं । तद्देहि धनमावयोः ॥ ४८ ॥ एवं स त्यक्तकामोऽपि । बालाभ्यां वालितो बलात् ॥ चकार राष्ट्रपालाख्यं । नवं भरतनाटकं

॥ ४९ ॥ अविसंवादिनीं भर्तु–र्धीरवीरकुलोद्भवां ॥ स नाट्यार्हामथाचिष्ट । पात्रपंचशतीं नृ-
पात् ॥ ५० ॥ प्राप्य तावंति पात्राणि । नाट्यकौतुकिनो नृपात् ॥ सोऽचिरादभ्याहयामास ।
सर्वाभिनयचातुरीं ॥ ५१ ॥ अथाग्रे भूपमाषाढो–ऽभिनिन्ये दिग्जयादिकं ॥ केवलोत्पादपर्यं-
तं । चरितं भरतेशितुः ॥ ५२ ॥ तुष्टः क्षितिपतिस्तस्मै । धनमिच्छाधिकं ददौ ॥ तत्सर्वं स्व-
गृहे प्रैषि । पत्न्योराषाढभूतिना ॥ ५३ ॥ स्वयं च चिकुराँल्लुंच–नैर्ग्रंथं वेषमादधत् ॥ निर-
गान्निर्मितानंग–रंगभंगः सरंगतः ॥ ५४ ॥ नाट्यमेतन्निवर्तस्व । क यासीति नृपोदितः ॥ सो-
ऽभ्यधाद्देव यस्यैत–न्नाट्यं किं स न्यवर्तत ॥५५॥ मया भरतवन्नाट्य–मन्यथा नाटकं वृथा ॥ स ए-
वमालपन्नेव । सह पात्रैर्गुरून् ययौ ॥ ५६ ॥ सम्यक्पात्राणि पात्राणि । कृत्वा तान्येव सूरि-
भिः ॥ सोऽभ्यनायि रसं शांतं । चित्रमव्यभिचारिणं ॥ ५७ ॥ आषाढभूतिः स्खलितव्रतोऽ-
पि । लेभे पुनः सद्गुरुभिः ससूत्रः ॥ एतत्प्रभावादद्भुतमागमस्य । नश्येत्ससूत्रा न हि सू-
चिकापि ॥ ५८ ॥ इति आषाढभूतिकथा समाप्ता ॥

[illegible] णबोहियमाइ । तं पंचविहं सुएण इह पगयं ॥ सेसाइं नाणाइं । न हि गु[illegible] विकंति ॥ २५ ॥ व्याख्या—तत् प्रस्तुतं ज्ञानमाभिनिबोधकादिकं पंचविधं भवति, तद्यथा—आभिनिबोधिकज्ञानं १, श्रुतज्ञानं २, अवधिज्ञानं ३, मनःपर्यवज्ञानं ४, केवलज्ञानं ५ चेति. तत्र अभीत्याभिमुख्ये, नीति नैयत्ये, ततो गृहणार्हवस्तुनाभिमुखो नियतः श्रोत्रादींद्रियैः प्रविभक्तो बोधोऽभिनिबोधः, स एवाभिनिबोधिकं, तच्च तज्ज्ञानं चाभिनिबोधिकज्ञानं. इंद्रियमनोनिमित्तो वस्त्ववबोधो मतिज्ञानमित्यर्थः. श्रवणं श्रुतं, अभिलापप्लाविताथोंपलब्धिविशेषस्तच्च तद्ज्ञानं च श्रुतज्ञानं २. अवधिर्मर्यादा रूपिद्रव्यात्मिका तेनावधिनाज्ञानं अवधिज्ञानं. इंद्रियमनोनिरपेक्ष आत्मनः साक्षाद्रूपिद्रव्यग्रहणात्मको बोधः संज्ञिभिर्जीवैः काययोगेन ३. मनोवर्गणाभ्यो गृहीतानि मनोयोगेन मनस्त्वेन परिणमितानि वस्तुचिंताहेतूनि द्रव्याणि मनांसीत्युच्यंते, तानि पर्यैत्यवगच्छतीति मनःपर्यायं, तच्च तद्ज्ञानं च मनःपर्यायज्ञानं, मनुष्यक्षेत्रांतवर्तिसंज्ञिजीवचिंतितार्थप्रकटनपर

धर्मकथांगे, गात्रद्विकं पृष्टोदररूपं उपासकांतकृद्दशांगे, बाहुद्विकं अनुत्तरोपपातिकदशाप्रश्नव्याकरणं च, ग्रीवा विपाकश्रुतं, शिरश्च दृष्टिवाद इति, इतरदंगबाह्यं आवश्यकोपांगप्रकीर्णकादिभेदादनेकविधं नानाप्रकारं. अत्रांगप्रविष्टांगबाह्यस्वरूपावबोधाय महाभाष्यगाथा यथा—गणहरथेरकयं वा । आएसामुक्कवागरणउ वा ॥ धुवचलविसेसणाउ । अंगाणंगेसु नाणत्तं ॥ १ ॥ अस्या अर्थः—यद्गणधरैर्गौतमादिभिः कृतं, यच्च आदेशेन 'उपन्नेइ' वेत्यादि पदत्रयरूपेण प्रथमपौरुष्यां निष्पन्नं, यद्ध्रुवं सर्वदा सर्वतीर्थेषु भवति तदंगप्रविष्टं द्वादशांगीरूपं, यत्पुनः स्थविरैर्भद्रबाह्वादिभिः कृतं, यच्च गणधरैरपि मुत्कलव्याकरणरूपतया कृतं, यच्च चलं कदाचिद्भवति कदाचिन्न कस्यापि तीर्थे भवति, कस्यापि न तत्सूत्रमंगबाह्यं आवश्यकाद्यनेकविधमुच्यत इति.

ननु श्रुतज्ञानान्नियोगरूपोऽयमुपदेशोऽशक्यानुष्टानः, सर्वस्य श्रुतस्य सागरस्येव सकलेनापि कालेनास्माभिर्दुरवगाहत्वादित्याह—

॥ मूलम् ॥—अत्थउ सुत्तं समग्गं । एगंपि पयं अमोहमाहंसु ॥ एगपएणं पत्तो । चि-

लाइपुत्तो सहस्सारं ॥ २७ ॥ व्याख्या—अस्तु दूरे समग्रं श्रुतं, एकमपि पदं पद्यचतुर्थांशरूपं भावतो विचार्यमाणं सदमोघं महाफलमाहुर्महर्षयः, उत्तरार्धं स्पष्टं, भावार्थः कथानकगम्यः; अथ चिलातिपुत्रकथा—

क्षितिप्रतिष्ठितपुरे । यज्ञदेवोऽभवद् द्विजः ॥ निर्जित्य वादे श्रमणै—र्जैनद्वेषी स दीक्षितः ॥ १ ॥ व्रतं स्वादं ददौ तस्या—धीयानस्य शनैः शनैः ॥ रसायनोपयुक्तस्य । मिष्टाशनमिवारुचेः ॥ २ ॥ परं मुनीनामस्नानं । प्राक्संस्कारान्निनिंद सः ॥ तेन हीनकुलोत्पाद—वेद्यं कर्म बबंध च ॥ ३ ॥ भिक्षार्थमन्यदा भ्राम्य—न्निजं धाम जगाम सः ॥ तत्पत्नी तं वशीकर्तुं । भक्तांतः कार्मणं ददौ ॥ ४ ॥ स ऋषिर्विषयास्वाद—विमुखः कार्मणात्ततः ॥ क्षणे क्षणे क्षीयमाणः । समये प्राप पंचतां ॥ ५ ॥ स्वर्गं गते मुनौ तस्मिन् । ब्राह्मणी स्वं पुनः पुनः ॥ निनिंद तादृशप्रेयः—साधुघातमलीमसं ॥ ६ ॥ ततश्चारित्रमादाय । सापि स्वर्गं गता रयात् ॥ भर्तारमित्युपालब्धु—मिव यासि क्व मां विना ॥ ७ ॥ च्युत्वा देवभवाद्यज्ञ—देवो राजगृहे पुरे ॥ धनस्य श्रेष्ठिनश्चेट्या—श्चिलायास्तनयोऽभवत् ॥ ८ ॥ चिलातीपुत्र इत्येवा—भिधानं तस्य

पप्रथे ॥ दासीतनुरुहो नाम-करणे कः कुतूहली ॥ ९ ॥ ब्राह्मणी तु च्युता स्वर्गा-द्धर्वे त-
नयपंचकात् ॥ धनस्य पत्न्यां नद्रायां । सुंसुमेति सुताऽनवत् ॥ १० ॥ नियुक्तः पालने त-
स्या-श्चैलातेयो धनेन सः ॥ चपलोऽनूत्स्वनावेन । प्रतिष्टा हि कुलोचिता ॥ ११ ॥ गृहजा-
तोऽप्यसौ डुष्टः । श्रेष्टिना निरवास्यत ॥ लुंपन् कचवरो गेह-शोनां किं नापनीयते ॥ १२ ॥
न्राम्यन् सिंहगुहां पल्लीं । स प्राप्तस्तत्र नाहलैः ॥ निन्ये डुष्टोऽपि डुष्टत्वं । कुपथ्यैरिव डु-
र्ज्वरः ॥ १३ ॥ पल्लीपतौ मृते सर्वैः । स एव विदधेऽधिपः ॥ विषस्य क्रियते कार्यं । किमन्येन
विषं विना ॥ १४ ॥ सुंसमा हंसमानब्नि-ऋमना यौवनं ययौ ॥ यदा तदा स पल्लीशः । प्रो-
चे निजपरिब्रदं ॥ १५ ॥ महाधनमलुंटित्वा । प्रीयेमहि कथं वयं ॥ महाद्रुममविध्वस्य ।
किं पूर्येत गजोदरं ॥ १६ ॥ तन्नो राजगृहं यामो । लुंटामो धनमंदिरं ॥ धनं वः सकलं नू-
यात् । तस्य पुत्री पुनर्मम ॥ १७ ॥ इति व्यवस्थामाधाय । चिलातीनंदनश्चलन् ॥ निन्ये
धनगृहं निल्लान् । मर्मज्ञः खलु डुर्ग्रहः ॥ १८ ॥ विद्रानवसरे तेषु । मुष्णत्स्वपि धनं धनः
॥ गृहकोणे स्थितस्तूष्णीं । निःसंग इव सांगनूः ॥ १९ ॥ धनजीवितसर्वस्व-मिवोपादाय

सुंसमां ॥ लोप्त्रहस्तैः सहस्तेनै-र्वबले स बलेश्वरः ॥ २० ॥ धनं वः सुंसमा मे स्ता-दित्यु-
दित्वा निमंत्रितैः ॥ सहारक्षैः सपुत्रस्त-मन्वधावद्धनोऽप्यथ ॥ २१ ॥ क्रदंतं तं वोधयद्भिः ।
शोधयद्भिः पदात्पदं ॥ आरक्षकैर्निरैक्ष्यंत । पुरतस्ते मलिम्लुचाः ॥ २२ ॥ आरक्षकेषु दृष्टे-
षु । दिवाकरकरेष्विव ॥ आशु नेशुस्तमोनाशं । लोप्त्रमुत्सृज्य तस्कराः ॥ २३ ॥ बालः पो-
लीमिवामुंचं-श्चैलातेयस्तु सुंसमां ॥ समारोप्य निजस्कंधे । प्रविवेश महाटवीं ॥ २४ ॥ न्य-
वर्तत धनं प्राप्य । क्षणादारक्षका अपि ॥ सर्वो हि स्वार्थसंसिद्धौ । परकार्येष्वनादरी ॥२५॥
धनः पुनः स्वतनयैः । सह दुस्सहदोर्बलैः ॥ कन्यां कालमुखात्क्रष्टुं । चिलातीपुत्रमन्वगात्
॥ २६ ॥ स्वमेकाकिनमालोक्य । धनं चोरुपरिच्छदं ॥ खिन्नः खड्गेन पल्लीशः । सुंसमायाः
शिरोऽच्छिनत् ॥ २७ ॥ पतिघातकृतं कर्म । सैवं प्राप्यमवेदयत् ॥ तन्मूर्धानं करे कृत्वा । पि-
शाच इव सोऽचलत् ॥ २८ ॥ पुत्रीं वीक्ष्य धनोऽशीर्षां । लूनपद्मामिवाब्जिनीं ॥ अरोदीन्मु-
क्तसूत्कारं । रोदयन् विहगानपि ॥ २९ ॥ मावधिदेष जवतो-ऽपीत्युक्त्वा स कथंचन ॥ सु-
तानशमयज्जामि-स्नेहात्तमनुधाविनः ॥ ३० ॥ पुत्र्यास्तत्रैव संस्कार्य । वपुः सौवपुरंप्रति ॥

व्यावृत्तोऽश्रुनिरुद्धाक्षो । मार्गभ्रंशमवाप सः ॥ ३१ ॥ घोरकांतारचारेण । क्षुत्तृड्भ्यामपि पीडितः ॥ त्रापितः श्वापदैर्मध्यं–दिने दध्याविदं धनः ॥ ३२ ॥ क सा स्थितिर्निजावासे । केयं वनविहारिता ॥ क पुत्र्या मरणं हंत । विधेः किंचिन्न दुर्घटं ॥ ३३ ॥ न नागैर्न च पुं-नागै–र्न धनैर्न च साधनैः ॥ न शक्त्या न च भक्त्या च । विधिरेष निगृह्यते ॥ ३४ ॥ आ-नयेदपि डुःप्रापं । सुप्रापमपि नाशयेत् ॥ साधयेदपि डुःसाध्यं । सुसाध्यमपि बाधयेत् ॥३५॥ जीवयेन्म्रियमाणं च । जीवंतमपि मारयेत् ॥ कुरुते कौतुकी केली–रेवं दैवेंद्रजालिकः ॥३६॥ युग्मं ॥ एवं विभावयन् श्रेष्ठी । प्राप्तवर्त्मा कथंचन ॥ गृहं गतो विधत्तेस्म । स्वपुत्र्या ऊर्ध्वदे-हिकं ॥ ३७ ॥ विरक्तो व्रतमादाय । श्रीवीरस्वामिसन्निधौ ॥ स दुस्तपं तपस्तप्त्वा । पूर्णा-युस्त्रिदिवं ययौ ॥ ३८ ॥ प्राग्भवप्रेमतः पश्यन् । पुरस्तत्सुंसुमामुखं ॥ अविज्ञातश्रमः पल्ली–शोऽपि याम्यां दिशं ययौ ॥ ३९ ॥ यत्रैकं साधुमालोक्य । कायोत्सर्गस्थितं पुरः ॥ नियत्या प्रेरितः खड्ग–मुद्गीर्येति जगाद सः ॥ ४० ॥ मम निर्मम धर्मस्य । मूलं स्वल्पाक्षरैर्वद ॥ मुनेऽमुनैव खड्गेन । नो चेत्त्वां करवै द्विधा ॥ ४१ ॥ यद्वक्ति तत्करोत्येव । क्रूराणामग्रणीरसौ ॥

मत्तः पृच्छति धर्मं च । न तु मंत्रौषधादिकं ॥ ४२ ॥ बीजं कृष्णत्तुवीवात्र । धर्मो विस्तारमाप्स्यति ॥ व्यचारयदिति ज्ञान-खानिर्मुनिमतल्लिका ॥ ४३ ॥ युग्मं ॥ कार्याः स्वहितकामेन । शमविवेकसंवराः ॥ इत्युदित्वा ययौ व्योम्ना । स चारणमुनिर्द्रुतं ॥ ४४ ॥ पुनः पुनः स्मरन्नंतः । साधूदितपदानि सः ॥ प्राग्नवप्रतिनोल्लासा-च्चौरश्चक्रे विचारणाम् ॥ ४५ ॥ तावन्मुनीश्वरः पूर्वं । दिदेशोपशमं मम ॥ क्रोधादि निग्रहे स स्या-न्निग्रहीतश्च तैरहं ॥ ४६ ॥ अग्नौ हिममिवामुष्मि-न्नासन्ने स्यात्क्षमः किमु ॥ ध्यात्वेति सकृपोऽमुंच-त्कृपाणं स स्वपाणितः ॥ ४७ ॥ हस्तन्यस्तकनीमौले-र्विवेकोऽपि कुतो मम ॥ ध्यायन्निति स तत्याज । सुंसमायाः शिरः करात् ॥ ४८ ॥ क्षुधान्निधाविनो मर्त्य-द्रुमायुः फलपातिनः ॥ कपेरिव क्व वाक्काय-मनोन्निर्मम संवरः ॥ ४९ ॥ विचार्येति चिलातीजू-र्निरुद्धसकलेंद्रियः ॥ तस्थौ प्रतिमया तत्र । सानुमानिव निश्चलः ॥ ५० ॥ तद्देहस्यास्रगार्द्रस्य । गंधेनाकारिता इव ॥ कोटिशः कीटिकाः क्रूराः । समुद्भिन्निदिरे त्तुवम् ॥ ५१ ॥ पदोरधः समुद्भूता । रंध्रयित्वा पदद्वयम् ॥ गत्यंतरमनासाद्य । तास्तस्य विविशुर्वपुः ॥ ५२ ॥ नवश्रोत्रोऽपि देहोऽस्य । ताभिः श्रोत्रशताकु-

लः ॥ दुष्कर्मनिर्गमायेव । निर्ममे निर्ममेशितुः ॥ ५३ ॥ प्रतिलोमाः स्वन्नावेन । प्रतिलोमाभिसारिकाः ॥ दध्यौ सखीधिया सोंग–पीलिकास्ताः पिपीलिकाः ॥ ५४ ॥ कालेन भूयसाऽवद्यमचिर ।तूत्रोटयंति याः ॥ मम दुष्कर्म किं तासु । द्वेषो वा प्रेम वोचितं ॥ ५५ ॥ आत्मन्नत्वमशंकिष्टाः । परेषां खड्गघातने ॥ का शंका तेऽधुना क्षुद्र–कीटिकावदनार्दने ॥ ५६ ॥ स एवं न्नावयन् यामै–र्विंशत्या धुतकल्मषः ॥ सर्वंसहः सहस्त्रारं। सहसार सुरालयं॥ ५७ ॥ एकं पदं साधुगिरा चिलाती–पुत्रस्तथाराधयतिस्म सम्यक् ॥ यथा स भुक्तत्रिदिवोपन्नोगोऽचिरेण गंता पदमेकमेव ॥ ५८ ॥ ॥ इति चिलातीपुत्रकथा ॥

गतं ज्ञानद्वारं, अथ विनयद्वारमाह—

॥ मूलम् ॥—इच्छइ जइ सुपहाणं । नाणं ता आयरे सुगुरुविणयं ॥ विणएण विणा विज्जा । न होइ जइ होइ न फलइ ॥ २८ ॥—व्याख्या—हे साधो! यदि सुप्रधानं ज्ञानमिच्छसि तदा गुरावाचार्यें, विनयत्यष्टप्रकारं कर्मेति विनयः शुश्रुषणोपचारिकन्नेदन्निन्नो भक्तिविशेषस्तं गुरुविनयमाद्रियस्व ? तत्राद्यो यथा—सक्कारब्भुट्ठाणे । सच्चाणासणं अन्निग्गहो तह य ॥

आसण अणुप्पयाणं । कियकम्मं अंजलिगहो य ॥ १ ॥ इंतस्सणुगछणया-ठियस्स तह पज्जुवासणा जणिया ॥ गछंताणुवयणं । एसो सुस्सुसणाविणउ ॥ २ ॥ द्वे अपि सुबोधे, उपचारिकविनयस्तु सप्तधा, तद्यथा-अप्रासत्थण छंदा-णुवत्तणं कयपडिकिई तह य॥ कारियनिमित्तकरणं । दुक्खत्तगवेसणा तह य ॥ १ ॥ तह देसकालजाणण । सव्वत्थेसु तह अणुमई जणिया ॥ उवयारिउ य विणउ । एसो जणिउ समासेणं ॥ २ ॥ व्याख्या-गरोरज्यासे समीपे आसीतव्यं, गुरोश्छंदानुवर्तनं कार्यं, कृतप्रतिकृतिः, कृते जक्तादिनोपचारे प्रसन्ना गुरवः प्रतिकृतिं सूत्रार्थदानतः करिष्यंति, न नाम केवलं मम निर्जरैवेति चिंतनं. तथा कार्यं श्रुतप्रापणादिकं निमित्तं कृत्वा श्रुतं प्रापितोऽहमनेनेति हेतोरित्यर्थः, विशेषेण तस्य विनये वर्तितव्यमिति कार्यनिमित्तकरणं. दुःखार्त्ते गुरौ गवेषणं औषधादेः कार्यं, तथा देशकालज्ञानं अवसरज्ञता, सर्वार्थेष्वनुमतिरानुकुल्यं चेति. ननु विनयं विना विद्याध्ययने को दोष इत्याह-विनयेन विना विद्या तावन्न जवति, गुरोरप्रसन्नत्वात्, जवति वा प्रज्ञादिबलात्तथापि न फलति. तत्र विद्यायाः फलमिह लोके यशःपूजासत्कारादिकं, परलोके तु

सद्गतिगमनं, एतद् द्वयमपि दुर्विनयाध्यायिनो न भवति, कूलवालकादिवत्. अथ विनयहीनस्य विद्या न स्यादिति यदुक्तं तद्व्यक्त्यंतरमाह—

॥ मूलम् ॥—जे अविणीया थद्धा । गारविया गुरुजणंमि मच्छरिणो ॥ न हु ते आलावस्सवि । जुग्गा किर सुत्तसारस्स ॥ २९ ॥ व्याख्या—ये अविनीताः पूर्वोक्तविनयरहिताः, स्तब्धा अनम्राः, तथा ऋद्धिरससातगौरवैर्वयमेव गुरव इति गर्विताः, गुरुजने च शिक्षां ददाने मत्सरिणः कलुषचित्ताः, ते शिष्या आलापस्यापि न योग्याः, गुरूणामिति गम्यते. तर्हि सूत्रसारस्य शास्त्ररहस्यस्य योग्यतायाः किमुच्यते? अथ व्यतिरेकमाह—

॥ मूलम् ॥—बहुमाणजुए बद्धा—यरंमि विणओणए समप्पंति ॥ गुरुणोज्झत्ति सुसीसे । पिउव्व पुत्ते सुयनिहाणं ॥ ३० ॥ व्याख्या—स्पष्टा, नवरं बहुमान आंतरः प्रीतिविशेषः, आदरस्तु बाह्योऽभ्युत्थानासनादिः, यत्स्थानांगसूत्रं—चत्तारि कप्पंति वाइत्तए, तंजहा, विणिए, अविगइपडिबद्धे विउसवियपाहुडे अमाइत्ति ॥ अथ प्रसंगतो न केवलं शिष्य एव, किंतु गुरुरपि गुणवान् एवोपदेशार्हो भवतीति दृष्टांतेनाह—

॥ मूलम् ॥—अणुरूवो आचरिउ। अणुरूवो चेव होइ जइ सीसो ॥ ता उवएसो सहलो। जह मेहमुणिम्मि वीरस्स ॥ ३१ ॥ व्याख्या—यद्याचार्यो गुरुः स्नेहसौभाग्यमृदुभाषित्वादिनिर्गुणैरनुरूपोऽनुगुणः शिष्यस्य भवति, यदि शिष्योऽपि लज्जाभयविनयक्षांत्यादिभिर्गुणैर्गुरोरनुरूप एव भवति तदा उपदेशस्तत्त्वार्थकथनरूपः सफलः स्यात्, तुरगितुरगयोरानुरूप्ये समरसंरंभवत्. अत्र दृष्टांतमाह—यथा वीरस्य श्रीवर्धमानस्वामिन उपदेशो मेघमुनौ सफलो जातः, गुरुशिष्ययोर्द्वयोरप्यनुरूपत्वात्. तत्कथा चैवम्—अथ मेघकुमारकथा—

अस्ति राजगृहं नाम। पुरं मगधमंडले ॥ यत्र राजगृहायंते। पुराणि श्रीमतापि ॥१॥ लोकंपृणगुणश्रेणिः। श्रेणिकस्तत्र भूपतिः॥ लीनो यस्य मनोभृंगः। श्रीवीरचरणांबुजे ॥२॥ तस्याभयकुमारोऽभू—दादिमः पुत्रमंत्रिषु॥ धिया येन जितो जीवो। निशि स्फुरति नो दिवा ॥ ३॥ राज्ञोऽनेकावरोधस्य। धारिणी दयितान्यदा ॥ सितं सप्तकरोत्सेधं। स्वप्ने सिंधुरमैक्षत ॥४॥ श्रुत्वा स्वप्नफलं पुत्रं। भर्तुर्गर्भं बभार सा॥ गर्भानुभावतस्तस्याः। कालेऽभूदिति दोहदः ॥५॥ सेचनं गजमारूढा ! भृशं वर्षति वारिदे ॥ वैभारभूधराभ्यर्णे। ससखीका लक्षाम्यहं ॥ ६ ॥

अजिज्ञपन्न सा भर्तु-स्तमकालाब्ददोहदम् ॥ गरीयसोऽप्यसंजातत्र-याश्चाया लाघवं ध्रुवम् ॥ ७ ॥ दुर्बला दोहदाप्राप्त्या । पृष्टा भूपेन साग्रहम् ॥ सा स्वाभिप्रायमाचख्यौ । त्रपमाणा कथंचन ॥ ८ ॥ अथ पृथ्वीपतिर्दध्यौ । नायं पूर्येत दोहदः ॥ भूयसापि हि जनस्याज्ञा । न ध-नैर्न च साधनैः ॥ ९ ॥ ततोऽभयकुमाराय । तत्स्वरूपं जगौ नृपः ॥ रविरेव कृते मूढे । जने-न स्मर्यते यतः ॥ १० ॥ कृताष्टमतपाः सोऽपि । निलीनो दर्भसंस्तरे ॥ सस्मार पौषधागार-स्थितः प्राक्संगतं सुरम् ॥ ११ ॥ तपसा रज्जुनेवाशु । समाकृष्टः समागतः ॥ सुरस्तस्य पुरः स्थित्वा । किं करोमील्यवोचत ॥ १२ ॥ जानतापि स्वयं सर्वं । किमेतत्परिपृच्छ्यते ॥ तेनेत्यु-क्ते सुरश्चके । व्योम्नि वारिदमंडलम् ॥ १३ ॥ वारिप्लुतधरां धौतां-—वरां विस्तारिनिर्झराम् ॥ विधायाकस्मिकीं वृष्टिं । तिरोधत्त सुरोत्तमः ॥ १४ ॥ अथाभयेन विज्ञप्ता । धारिणी हर्षधा-रिणी ॥ सेचनं द्वीपमारुह्य । ययौ वैभारपर्वतम् ॥ १५ ॥ सरिदंभसि खेलित्वा । जलदेवीव तत्र सा ॥ निवृत्तात्मा निवृत्याशु । निजमंदिरमाययौ ॥ १६ ॥ सा काले सुषुवे पुत्रं । पित्रा कृतमहोत्सवम् ॥ दोहदानुगमान्मेघ-कुमार इति विश्रुतम् ॥ १७ ॥ स क्रमादुदये चंद्र-स्येव

वार्धिरवर्धत ॥ पित्राष्टवर्षदेश्यश्च । पाठितः सकलाः कलाः ॥ १८ ॥ वयो मध्यममध्यास्य । सारसौभाग्यभाग्यभूः ॥ राजवंश्याः कनीरष्टौ । पर्यणैषीन्महेन सः ॥ १९ ॥ स्वर्णकोटीरथाश्वेभ—शय्यासिंहासनादिकान् ॥ लेभे पदार्थानष्टाष्ट । स वधूपाणिमोचने ॥ २० ॥ पितृप्रदत्तसौधेषु । प्रियाभिः सह संततम् ॥ भोगान् पुरः स्फुरत्तूर्य—लयोऽभुंक्त स देववत् ॥ २१ ॥

अन्यदा समवासार्षी—त्तत्रापश्चिमतीर्थकृत् ॥ अंभोद इव निर्भिंदन् । पापतापं वचोऽमृतैः ॥ २२ ॥ तदैव केवलज्ञान—वंतं नंतुं जगद्गुरुं ॥ चेलुः पौराः पुरुश्रद्धाः । आम्रं भोक्तुं द्विजा इव ॥ २३ ॥ मेघः स्वसौधमौलिस्थो । यातस्तानेकया दिशा ॥ वीक्ष्य पप्रच्छ सभृत्या—नूचुस्तेऽपि जिनागमं ॥ २४ ॥ अथ सद्रथमालंब्य । वेगवंतं जगद्विभ्रयः ॥ वैभारगिरिमानं च । मेघो मेघ इवानिलम् ॥ २५ ॥ मुक्त्वा रथं भृशं भक्ति—भारभुग्नशिरोधरः ॥ स त्रिःप्रदक्षिणीकृत्य । जिनराजमवंदत ॥ २६ ॥ शुश्रुषोत्कंठया सर्वान् । सभ्यानुन्मुखयन्नथ ॥ वाण्या योजनयायिन्या । जिनेशो देशनां व्यधात् ॥ २७ ॥ विश्वेऽत्र विश्वेऽपि जनाः सुखेच्छवः । सुखं च मोक्षे विशदं वदंति ॥ तं गंतुकामा रथवच्चजध्वं । सद्ज्ञानसम्यक्त्वहयं चरित्रं ॥२८॥

पीत्वा जैनेश्वरीं वाचं। दृष्ट्वा च श्रेणिकात्मजं ॥ सभ्यैर्मेघोऽत्र कः सम्य-गित्यंतः समसय्य-
त ॥ २९ ॥ प्राप्तशांतरसो मेघः। श्रीवीरक्षीरनीरधेः ॥ पितरौप्रति वाग्धाराः। सद्रूपा इत्यमुं-
चत ॥ ३० ॥ आगर्भवासात्पितरौ। युवाभ्यां पालितोऽस्म्यहं ॥ तन्मां जावारिभिः क्रांतं।
न किं संप्रति रक्षतं ॥ ३१ ॥ तौ ततः प्रोचतुर्वत्स। त्रस्ता किं त्रायते परं ॥ नावाभ्यां र-
क्ष्यते स्वात्मा। तेभ्यस्त्वं रक्ष्यसे कथं ॥ ३२ ॥ मेघोऽवदद्यदि न वां। शक्तिस्तद्रक्षणे त-
तः ॥ आदिशतं येन वीर-स्वामिनं शरणं श्रये ॥ ३३ ॥ यद्वारयति दुर्वारं। वैरिवारं विना-
श्रमं ॥ ततो धत्ते महावीर। इत्याख्यां विदितामसौ ॥ ३४ ॥ जूत्वा श्रीवीरशिष्योऽहं। भा-
वारीन् यज्ञयाम्यथ ॥ पुत्रवत्सलयोर्वस्तु-वृत्त्या स युवयोर्गुणः ॥ ३५ ॥ वचसा तेन वज्रस्य।
निर्घातेनेव पीडितौ ॥ आतुरौ प्रोचतुर्माता—पितरौ गद्गदध्वनी ॥ ३६ ॥ कुमार सुकुमार-
स्त्वं। व्रतं च क्रकचोपमं ॥ अनेन वपुषा वत्स। व्रतेच्छुर्ग्रहिलोऽसि किं ॥ ३७ ॥ सोऽवदद्या-
ति यो जंतु-र्नरकं दुरितेरितः ॥ दारुणाः सहते तत्र। सोमालोऽपि स वेदनाः ॥ ३८ ॥ सो-
ढाभिरपि नो ताभि-र्लाभः कोऽपि चरीरिणां ॥ व्रतकष्टं पुनः स्वल्प-मपि सोढं शुभायति

॥ ३९ ॥ धारिण्यथ पृथक् स्माह । त्वं त्रैलोक्यप्रियोदयः ॥ वत्स मेघोऽपि मे घोरं । संतापं वितनोषि किं ॥ ४० ॥ तव दृष्टौ च ते सूनु-र्यदि संसारसंकटात् ॥ उन्मुच्यते ततो मातः । किं विषादो वृथा तव ॥ ४१ ॥ इत्याद्युक्तिबलात्तस्य । माता जाता निरुत्तरा ॥ एकाहं राज्य-मादत्स्व । वत्सेति तमयाचत ॥ ४२ ॥ सोऽप्येकं दिवसं राज्यं । भेजे पित्रोः समाधये ॥ सा-रसंयमसाम्राज्ये । स्वं निवेश्य मनः पुनः ॥ ४३ ॥ द्वितीयेऽह्न्यथ भूभर्त्रा । निर्मापितमहो-त्सवः ॥ दीक्षां श्रीवीरपादांते । दांतेभ्यः स्वीचकार सः ॥ ४४ ॥ दिनं समाधिनातीत्य । मेघः सर्वलघुर्निशि ॥ प्रस्तरे पादवत्सर्वा-धस्तात्प्रापदवस्थितिं ॥ ४५ ॥ स हंसतूलिकाशायी । सु-प्तः केवलभूतले ॥ अस्पर्शि साधुसंघट्ट-भीतयेव न निद्रया ॥ ४६ ॥ वृषत्सखैस्तीक्ष्णनखै-र्घृष्यमाणो महात्मनां ॥ चरणैश्चरणोद्विग्न-मना एवं स दध्यिवान् ॥ ४७ ॥ आशा बलवती बद्ध-माशयैव जगत्त्रयं ॥ कुर्वंत्याशावशा एव । मुनयोऽप्यादरं नृणां ॥ ४८ ॥ राज्यस्थं मा-ममी पूर्व-मालपन् मुनयो मुदा ॥ आत्तव्रतमिदानीं तु । दारयंति नखैर्यतः ॥ ४९ ॥ अनु-भूतं व्रतं लब्धः । स्वादो भग्नो भ्रमश्च सः ॥ नमोऽस्तु तस्मै चारित्रा-याचा यस्येदृशी निशा

॥ ५० ॥ सोऽहं राजसिको युक्तं । पितृभ्यां वारितस्तदा ॥ सुखावहं कुमारेण । दारणं न पु-
नर्व्रतं ॥ ५१ ॥ क्षिपा यास्यति यद्येषा । तदा स्वं वेषमार्हतः ॥ समर्प्य राज्यसौख्यानि । पु-
नर्ग्रहिष्ये यथारुचि ॥ ५२ ॥ एवं तस्मिन्नपध्यानं । दधाने व्यगलन्निशा ॥ सोऽपि स्वोपधि-
मादाय । ययौ श्रीवीरसंनिधिं ॥ ५३ ॥ पराशयस्फुटीकार-क्षमकेवलसंविदा ॥ प्रविशन्नेव
वीरेण । मृदुवाग्भिरभाणि सः ॥५४॥ क्षामपुण्यपरीणामः । समागच्छसि मेघ किं ॥ मा मुह
प्राक्तनं जन्म । स्मर धीर सुधीरसि ॥ ५५ ॥ इतो भवे तृतीयेऽभू-द्वैताढ्यभूधरं ॥ त्वं
सुमेरुप्रभाख्योऽन्य-करिणां भीषणः करी ॥ ५६ ॥ सहस्रेभप्रभुः सोऽभूत् । हसः सप्तकरोच्छ्र-
यः ॥ श्वेतो दशकरव्यासः । षोडशकरायतः ॥ ५७ ॥ ग्रीष्मर्त्तावन्यदारण्ये । दहत्युग्रे दवा-
नले ॥ त्यक्तयूथः स यूथेशः । पलायत दिशैकया ॥ ५८ ॥ भीमोष्मणा चरणयोः । पार्श्वयो-
र्दावहेतिभिः ॥ मौलौ रविकरैस्तप्तः । सोऽबाध्यत तृषा भृशं ॥ ५९ ॥ इतस्ततो भ्रमन्नीरा-
शयाऽपश्यत्पुरः सरः ॥ अतिस्वल्पपरसं भूरि-पंकं लोकं कलाविव ॥ ६० ॥ जलध्यानाज्जली-
भूतो । विशंस्तत्रापवर्त्मना ॥ निममज्जांतरा पंक-संकटे स जरी करी ॥ ६१ ॥ शुंडादंतादि-

न्निर्देहा-वयवैर्दर्शयन् बलं ॥ तैरेव पंकनिर्मग्नैः । सोऽभूद्योगीव निश्चलः ॥ ६२ ॥ सरस्तदा
तदायात-स्तोयेच्छुस्तद्रिपुर्द्विपः ॥ जघान दंतशुंकाग्रैः । सुखं तं पंककीलितं ॥ ६३ ॥ तत्प्र-
हारव्यथाः सप्त । दिवसाननुभूय सः ॥ आयुः प्रपूर्य विंशत्या-धिकं वर्षशतं मृतः ॥ ६४ ॥
विंध्याटव्यां ततश्चाभू-द्भिभो मेरुप्रनाभिधः ॥ रक्तवर्णश्चतुर्दंतो । दंतिसप्तशतीपतिः ॥ ६५ ॥
अन्यदा वनदावाग्नि-दर्शनात् प्राग्भवं स्मरन् ॥ दवोपद्रवरक्षार्थ-मुपचक्राम सामजः ॥६६॥
पृथग् योजनविस्तार-मकार्षीन्मंरूलत्रयं ॥ कालग्राहीव निर्ग्रंथो । भूमिशुद्धिं विधाय सः ॥
॥ ६७ ॥ आदिमध्यावसानेषु । वर्षर्तावुच्चखान सः ॥ तत्रोत्पन्नांस्तृणांकूराँ-ह्लोचकारी कचा-
निव ॥ ६८ ॥ ज्येष्ठमासि पुनर्लग्ने । दववह्नौ स्वयूथयुक् ॥ दधावे सिंधुराधीशः । प्रति प्रथ-
ममंरूलम् ॥ ६९ ॥ तावत्तन्मंडलं दाव-त्रस्तैः सिंहमृगादिभिः ॥ वनसत्वैः कणैः कोष्टा-गा-
रवत् परिपूर्यत ॥ ७० ॥ तत्रावकाशं सोऽप्रेक्ष्य । द्वितीयं मंरूलं गतः ॥ तस्मिन्नप्यंगिभिः पू-
र्णे । तृतीये प्रविवेश सः ॥ ७१ ॥ तत्रापि जीवकोटीषु । निर्वैरासु स्थितासु सः ॥ ऊर्ध्वस्थो-
ऽराजत गजः । कायोत्सर्गी मुनिर्यथा ॥ ७२ ॥ कायकंडूमपाकर्तु । तस्योरिक्षप्तवतः क्रमं ॥

क्रमस्थाने शशः कोऽपि । निलिल्ये त्रासितः परैः ॥७३॥ तमधो वीक्ष्य संजात–करुणः करिणां प्रभुः ॥ अविलव्यतया भावि–भद्र एवं व्यभावयत् ॥ ७४ ॥ अयं दवाग्निना नुन्नः । प्रविष्ट इहमंडले ॥ इहापि नुन्नः केनापि । लीनो मम पदे शशः ॥ ७५ ॥ मुंचाम्यधः स्वपादं चे–द्रराकस्यास्य तद्ध्रुवं ॥ सर्वेऽपि कुपिता दैव–दवद्दीपिद्विपादयः ॥ ७६ ॥ न तस्मादादधप्लोषं । मया मोच्यः क्रमो भुवि ॥ अनिशद्येति तस्थौ स । गणीव त्रिपदीस्थिरः ॥ ७७ ॥ तदा बहूमनुष्यायुः । शांतेऽह्नोजिस्त्रिभिर्दवे ॥ जंतुजातैः समं याते । शसे सोऽधः पदं ददौ ॥ ७८ ॥ पादमोक्षणे भूमौ । पतितो गिरिवद्गजः ॥ अध्यासामास सद्बुध्ध्या । त्रिपादावस्थितिव्यथां ॥ ७९ ॥ विंशत्या प्रहरैस्त्यक्त–प्राणैर्यूथ्यैरिव द्विपैः ॥ भावादविच्युतः सोऽभू–न्मृत्वा त्वं श्रेणिकांगजः ॥ ८० ॥ अज्ञातोऽपि तदा तिर्य–ग्भवे त्वं तादृशीं व्यथां ॥ कृपालुरतितिक्षिष्ठाः । कथं ते मृदुताधुना ॥ ८१ ॥ बोधिं विनापि विहितः । शमस्तेऽभून्महाफलः ॥ रोषं करोषि तत्किं भो । बोधेरधिगमेऽधुना ॥ ८२ ॥ पार्श्वधारासिधाराद्यैः । पीड्यंते केऽपि निर्दयैः ॥ मन्यस्व धन्यमात्मानं । स्पृष्टस्त्वं साधुभिः पदैः ॥ ८३ ॥

इत्यर्हतो गिरा जाति-स्मरो जातत्रपाभरः ॥ श्रीवर्धमानमानम्य । मेघ एवं व्यजिज्ञपत्
॥ ८४ ॥ व्रतमार्गपरित्यागात् । पापकूपे निपातिनं ॥ स्ववाक्यरश्मिभिः स्वामि-न्नद्य त्वं मा-
मुदक्षिपः ॥ ८५ ॥ भावतस्त्यक्तदीक्षस्य । दीक्षादानात्प्रसीद मे ॥ इत्युक्ते तेन भगवां-स्त-
स्मै दीक्षां ददौ पुनः ॥ ८६ ॥ दृग्वर्जं सकलं देह-मृषिभ्यः परिकल्प्य सः ॥ एकादशांग-
पारीणः । प्रभुमेवं व्यजिज्ञपत् ॥ ८७ ॥ अनधीतोऽपि पूर्वाणि । प्रभो भवदनुज्ञया ॥ इच्छामि
संप्रति यति-प्रतिमाः परिसेवितुं ॥ ८८ ॥ प्रभुरप्रतिमल्लं तं । प्रतिमासु विचारयन् ॥ भजल्प
प्रतिमाकल्प-मित्याशाकल्पपादपः ॥ ८९ ॥ स्युः सप्त प्रतिमा एक-मासाद्या मासवृद्धितः ॥
सप्त रात्रिंदिवा तिस्रो-ऽहोरात्रिक्येकरात्रिकी ॥ ९० ॥ तत्राद्यप्रतिमायां स्या-दुपसर्गसहो मु-
निः ॥ अज्ञातोंछचरो भक्ते-पानेऽप्येकैकदत्तिकः ॥ ९१ ॥ अलिंदं स्वपदोरंतः । कृत्वा दात्री
ददाति चेत् ॥ एकगोचरकालोऽसौ । तद्भिक्ष्यं लाति नान्यथा ॥ ९२ ॥ ज्ञातो निशां वसत्ये-
का-मज्ञातस्तु निशाद्वयं ॥ अतः परं वसन् ग्रामे । स छेदपरिहारभाक् ॥ ९३ ॥ वृक्षे वि-
कटगेहे वा-रामे वा स च तिष्ठति ॥ निलये दह्यमानेऽपि । वह्निना न निरेति च ॥ ९४ ॥

आकर्षति पदादेष । न दृषत्कंटकादिकं ॥ निर्ममोऽपनयत्यद्दणो–र्न हि रेणुतृणाद्यपि ॥९५॥
समे वा विषमे वापि । यत्रास्तं याति भास्करः ॥ रात्रिमास्ते स तत्रैव । पुरः प्राप्तः प्रतिष्टते
॥ ९६ ॥ स न प्रक्षालयत्यंह्रि–मात्रमप्युज्ज्वलो गुणैः ॥ सिंहाश्वादिष्वभियत्सु । धीरो नेर्यां
भिनत्ति च ॥ ९७ ॥ छायात आतपं तस्मा–च्छायां वा स न सर्पति ॥ प्रतिमां साधयत्याद्यां ।
मासं कष्टमिदं चरन् ॥ ९८ ॥ प्रतिमाः सप्तमीं याव–देवं ज्ञेयाः परा अपि ॥ तास्वेकैकोऽ-
धिको मासो । दत्तिश्च परिवर्धते ॥९९॥ सप्तरात्रिंदिवाप्येव–मष्टमी प्रतिमा भवेत् ॥ चतुर्थं
तु तपस्तत्र । नवरं स्यादपानकं ॥ १०० ॥ अंत्ये दिने वहिर्ग्रामा–द्दत्तदृक् प्रासुपुद्गले ॥ ति-
ष्ठत्युत्तानकः पार्श्व–वर्ती नैषधिकोऽथवा ॥ १ ॥ नवमी प्रतिमाप्येयं । दिनेंत्ये तूत्कटासनः ॥
स्थानं लगुडशायी वा । भजेद्दंडायतोऽपि वा ॥ २ ॥ एवं दशम्यपि परं । विशेषश्चासने स हि
॥ गोदोहिकासनी वीरा–सनी वा कुब्जकासनी ॥ ३ ॥ अहोरात्रप्रमाणैव–मेकादश्यपि केवलं
॥ कृतषष्टतपा ध्यानं । लंबमानभुजो भवेत् ॥ ४ ॥ द्वादशी प्रतिमाप्येक–रात्रिक्येवं पुनर्मु-
निः ॥ तस्यां कृताष्टमतपा । ईषत्प्राग्भारविग्रहः ॥ ५ ॥ एकपुद्गलदृग् मुक्त–निमेषः संवृते-

न्द्रियः ॥ लंबमानभुजस्तिष्ट–त्युत्कटाद्यासनोऽपि वा ॥ ६ ॥ युग्मं ॥ एवं श्रीदेवदेवस्य । निपीय वचनामृतं ॥ आरराध सुधीः साधु–प्रतिमाः स यथाविधि ॥ ७ ॥ अधिकाधिकपुण्योत्क–मना मेघमुनिस्ततः ॥ तपः षोमशभिर्मासै–र्गुणरत्नाख्यमातनोत् ॥ ८ ॥ निर्वाह्य द्वादशाब्दानि । व्रतमंते जिनाज्ञया ॥ मासं संलेख्य स तनूं । तन्वीमपि तनुं व्यधात् ॥ ९ ॥ समाधिमृत्या विजय–स्थाने कर्मारिमारणे ॥ स निस्तृंशस्त्रयस्त्रिंशत्–सागरायुरभूत्सुरः ॥१०॥

॥ इति मेघकुमारकथा ॥

गतं विनयद्वारं, अथ क्रियाद्वारं प्रस्तावयन्नाह—

॥ मूलम् ॥—किरियाजुत्तेणं चिय । नाणेण जिणा भणंति फलसिद्धिं ॥ सत्थभम अंधपंगुल–नरित्थिसंजोगदिठ्ठंता ॥ ३२ ॥ व्याख्या—क्रिया यथोक्तानुष्टानाचरणं, तद्युक्तेनैव ज्ञानेन जिनाः केवलज्ञानोपलब्धस्याद्वादमुद्रामुकुलितसकलवस्तुतत्वाः पुण्यानुष्टानफलभूतां सिद्धिं फलसिद्धिं; यद्वा फलसिद्धिं कार्यनिष्पत्तिं निर्जरारूपां भणंति, अथ दृष्टांतत्रयमाह–"सत्थभडेत्यादि" स्पष्टं. दृष्टांतत्रयभावना चैवं—न केवलं तीक्ष्णमपीह शस्त्रं । करोति

ङ्गं दूषतां कदापि ॥ न तेन हीनः प्रबलोऽपि योद्धा । पुनार्द्वयोगे रणसिद्धिरस्ति ॥ १ ॥
तथा—एकस्मिन् विपिने प्रदीप्तदहने दग्धौ दवार्चिष्मता । चक्षुष्मानपि पंगुलो गतिरतोऽप्यं-
धश्च जिन्नाशयौ ॥ अंधो मूर्ध्नि दधाति चेद्चरणं तत्तत्प्रणीताध्वना । धावन्नेष सुखं निरेति
दवतः पंगुश्च तद्योगतः ॥ २ ॥ तथा—अध्वस्तबीजोऽपि पुमान् विधत्ते । स्त्रिया विहीनो नहि
वंशवृद्धिं ॥ विना पुमांसं न तु साप्यवंध्या । योगे द्वयोः स्यात् पुनरिष्टसिद्धिः ॥ ३ ॥ एवं
न क्रियाविहीनेन ज्ञानेन, न च ज्ञानहीनया क्रियया सिद्धिर्जायते, तत्संयोग एव सज्ञा-
वात्, यदाहुः—संजोगसिद्धीइ फलं वयंति । न हु एगचक्केण रहो पयाइ ॥ अंधो य पंगू
अ वणे समिच्चा । तेसिं पउत्ता नगरं पविट्ठा ॥ १ ॥ अथ यः कश्चित्क्रियालालसो ज्ञानेनैव
स्वं कृतकृत्यं मन्यते तंप्रत्याह—

॥ मूलम् ॥—मा जाणसु जीयहिए । जियअहिए किं नयं सुए अहिए ॥ अहिए प-
ऋसि नवोहे । जइ किरियाए पमाएसि ॥ ३३ ॥ व्याख्या—नो आलस्योपहत! मा एवं
ज्ञासीर्यज्जीवानां हिते अहिंसोपदेशकत्वात्, तथा जिता अहिता अज्ञानादयो येन तस्मिन्

जिताहिते, एवंविधे श्रुते आवश्यकादिकेऽधीते मम किं भयं? श्रुतमेव मां तारयिष्यतीति. यदि त्वं क्रियायां चरणकरणरूपायां प्रमाद्यसि, तदाऽधीतश्रुतोऽप्यज्ञानावस्थातोऽधिके भवौघे संसारपूरे पतसि. जानतः प्रमादकरणे प्रभूततरकर्मबंधात्. ॥३३॥ एतदेव विशेषं भावयति—

॥ मूलम् ॥—चउद्दसपुव्वीवि सया । पाविज्जंते पमायपरिवडिया ॥ साहारणेसुऽणंता । असंखया सेसकाएसु ॥ ३४ ॥ व्याख्या—आसतामल्पपाठिनः, चतुर्दशपूर्विणोऽपि प्रमादेन क्रियाशैथिल्येन परिपतिता ज्ञानादिगुणेभ्यो भ्रष्टास्तिर्यग्नारकादिभवपरंपराः स्पृशंतः कदाचिन्निगोदवासमप्यनुभवंति. ते च कालस्यानंत्यात् पिंडिताः संतो यदा विवक्षितक्षणे चिंत्यंते, तदा साधारणेषु सूक्ष्मेषु बादरेषु च निगोदेषु सदा सर्वकालं अनंताः प्राप्यंते, तत्र जीवराशेरनंतत्वात्. शेषेषु स्थानेषु पृथ्व्यप्तेजोवायुप्रत्येकवनस्पतिद्वित्रिचतुःपंचेंद्रियतिर्यग्देवनारकरूपेषु असंख्येयास्ते प्राप्यंते, उक्तराशीनामसंख्यजीवात्मकत्वात्. मनुष्येषु पुनः कदाचित्संख्येयाः कदाचिदसंख्येयाश्चेत्यनुक्तमपि द्रष्टव्यं, मनुष्याणां द्विस्वभावत्वात्. यदाह प्रज्ञापनाकारः—नेरईयाणं भंते केवईया आहारगसमुग्घाया अईया? गोयमा!

असंखिज्जा, केवईया पुरक्कडा? गोयमा! असंखिज्जा, एवं जाव वेमाणियाणं. नवरं वण-स्सइकाइयाणं मणूस्साणं य इमं नाणत्तं, वणस्सइकाइयाणं भंते केवईया आहारगसमुग्घा-या अइया? गोयमा! अणंता. मणुस्साणं भंते केवइया? गोयमा! सिय संखिज्जा सिय असंखि-ज्जा, एवं पुरक्कडावित्ति ॥३५॥ अथ यः क्रियाहीनोऽपि परप्रतिबोधमात्रेण माद्यति, तंप्रत्याह—

॥ मूलम् ॥—नीसारेसि भवाउ । भविए कह अप्पणा न नीसरसि ॥ जं तरइ अ-प्पणावि हु । तारंतो तारउ लोयं ॥ ३६ ॥ व्याख्या—स्पष्टा, पुनरेतदेव दृष्टांतांतरेणाह—

॥ मूलम् ॥—बुज्झसि बोहेसि परं । तेणं किं जइ सयं न उज्जमसि ॥ नाणेणुवएसेण य । अभुंजमाणस्स न हि तुट्ठि ॥ ३७ ॥ व्याख्या—बुध्यसे स्वयं तत्वं, बोधयसि च परमुपदेशद्वारेण, तेन बोधेन बोधनेन च तव किं? न किंचित्कार्यं सिध्यतीत्यर्थः, यदि हे मूर्ख! स्वयं नोद्यच्छसि क्रियायां. यतः स्वयं मोदकादिकमभुंजानस्य स्वादु पुष्टिकृच्चैतदिति ज्ञानेन त्वं भुंद्वेदं, ते तृप्तये भविष्यतीत्याद्युपदेशेन च न हि मनागपि तुष्टिर्जायते. प्रतिप्राणि प्रसिद्धमेतत्. उक्तं च पंचमांगवृत्तौ—क्रियैव फलदा पुंसां । न ज्ञानं फलदं मतं ॥ य-

॥ मूलम् ॥—पाणिवहप्पमुहाणं । पंचह्नं आसवाण जावेण ॥ जं सवविरमणं ते । महव्वया पंचमूलगुणा ॥ ३८ ॥ व्याख्या—आ इति स्वनिमित्तमर्यादया श्रवंत्यशुजं कर्मेत्याश्रवाः प्राणिवधादयः पंच, तेभ्य आश्रवेभ्यः, विभक्तिव्यत्ययः प्राकृतत्वात्, जावेनांतःकरणशुद्ध्या, न तूच्चारमात्रेण, यत्सर्वैः करणकारणानुमतिभेदैर्विरमणं, तानि पंच महाव्रतानि जवंति, एतानि साधूनां मूलगुणा इति व्यपदिश्यंते. ॥ ३८ ॥ अथैतेषां स्वरूपमाह—

॥ मूलम् ॥—तसथावरेवि जीवे । तितिहा न हणेइ जिअसरूवविऊ ॥ हासजयकोहलोहा । अलियंपि न जासए कहवि ॥ ३९ ॥ व्याख्या—साधुस्त्रसान् द्वींद्रियादीन्, स्थावरान् पृथ्व्यादीनपि जीवान् न हंति, न देशविरतवत् त्रसानेव केवलमित्यपिशब्दार्थः. कथं न हंतीत्याह—त्रित्रिधेति, इह हि प्रथमशब्दः करणकारणानुमतिवाची, द्वितीयस्तु मनोवाकायार्थः. ततोऽयमर्थः—मनसा, वाचा, कायेन च स्वयं जीवान्न हंति, न चान्यैर्घातयति, न च घ्नंतमन्यमनुजानातीत्येवंरूपेण एकैकेनैव जंगकेन, कथंभूतः साधुः? जीवस्वरूपवित्, न हि अज्ञातजीवस्वरूपस्तत्पर्यायविनाशदुःखोत्पादश्चित्तसंक्लेशात्मिकां त्रिविधामपि हिं-

सां निषेद्धुमलं. उक्तं च—जो जीवेवि न याणेइ । अजीवेवि न याणई ॥ जीवाजीवे अयाणंतो । कहं सो नाइ संयमं ॥ १ ॥ उक्तं प्रथमं महाव्रतं, अथ द्वितीयमुच्यते, हासेत्यादि: हास्यात् हसनात्, अनेन प्रेमद्वेषकलहाभ्याख्यानादिपरिग्रहः, भयाद्भीतेः, क्रोधादप्रीतेः, लोभादभिष्वंगात्, आद्यंतग्रहणान्मानमायापरिग्रहः, अलीकं मृषावादं प्राणांतेऽपि न भाषंते. तदलीकं चतुर्धा—सद्भावनिषेधः १, असद्भावोद्भावनं २, अर्थांतराभिधानं ३, गर्हावचनं ४ चेति. तत्राद्यं यथा नास्त्यात्मेत्यादि, द्वितीयं यथा श्यामाकतंदुलमात्र आत्मा ललाटस्थो वेत्यादि. तृतीयं तु गामश्वं ब्रुवाणस्य, चतुर्थं तु काणं काणमेव वदतः ॥ ३९ ॥ इत्युक्तं द्वितीयं महाव्रतं, अथ तृतीयचतुर्थे आह—

॥ मूलम् ॥—वज्जेइ जीवकेवली—सामिगुरूहिं अदिन्नमाउत्तो ॥ न य सेवेइ सिवहा । अहारसहावि अबंभं ॥ ४० ॥ व्याख्या—आयुक्त उपयुक्तः सन् साधुर्जीवादिभिरदत्तं वस्तु वर्जयतीति तृतीयं महाव्रतं, तत्र जीवादत्तं सचित्तमुच्यते, तापाय शंकिना जीवेन स्वाश्रितदेहस्यानर्पणात्तद्गृह्णतो जीवादत्तं, यद्वा हठेन प्रव्राज्यमानः शिष्योऽपि जीवादत्तमित्युच्यते.

सां निषेद्धुमलं. उक्तं च—जो जीवेवि न याणेइ । अजीवेवि न याणई ॥ जीवाजीवे अ-
याणंतो । कहं सो नाइ संयमं ॥ १ ॥ उक्तं प्रथमं महाव्रतं, अथ द्वितीयमुच्यते, हासे-
त्यादि: हास्यात् हसनात्, अनेन प्रेमद्वेषकलहाभ्याख्यानादिपरिग्रहः, भयाद्भीतेः, क्रोधाद-
प्रीतेः, लोभादभिष्वंगात्, आद्यंतग्रहणान्मानमायापरिग्रहः, अलीकं मृषावादं प्राणांतेऽपि
न भाषंते. तदलीकं चतुर्धा—सद्भावनिषेधः १, असद्भावोद्भावनं २, अर्थांतराभिधानं ३, गं-
र्हावचनं ४ चेति. तत्राद्यं यथा नास्त्यात्मेत्यादि, द्वितीयं यथा श्यामाकतंदुलमात्र आत्मा
ललाटस्थो वेत्यादि. तृतीयं तु गामश्वं ब्रुवाणस्य, चतुर्थं तु काणं काणमेव वदतः ॥ ३९ ॥
इत्युक्तं द्वितीयं महाव्रतं, अथ तृतीयचतुर्थे आह—

॥ मूलम् ॥—वज्जेइ जीवकेवली–सामिगुरूहिं अदिन्नमाउत्तो ॥ न य सेवेइ सिवहा ।
अट्ठारसहावि अबंभं ॥ ४० ॥ व्याख्या—आयुक्त उपयुक्तः सन् साधुर्जीवादिभिरदत्तं वस्तु
वर्जयतीति तृतीयं महाव्रतं, तत्र जीवादत्तं सचित्तमुच्यते, तापाय शंकिना जीवेन स्वाश्रि-
तदेहस्यानर्पणात्तद्गृह्णतो जीवादत्तं, यद्वा हठेन प्रव्राज्यमानः शिष्योऽपि जीवादत्तमित्युच्यते.

तथा अचित्तमपि यत्केवलिनाऽननुज्ञातं हिरण्यादि; तद्गृह्णतः केवल्यदत्तं, तथा केवलिनाऽनुज्ञातमपि वस्तु स्वामिनाऽदत्तं वसनादि गृह्णतः स्वाम्यदत्तं. तथा स्वामिनाऽनुज्ञातमपि यद्वस्तु केनापि हेतुना गुरुणा निषिद्धं, यथा साधोऽद्य त्वमिदं मा ग्रहीरिति, तद्भोजनादिना गृह्णतो गुर्वदत्तं, गुरोरनालोच्य भक्तादिकं वा भुंजानस्य गुर्वदत्तं भवतीति. तथा शिवार्थं मोक्षार्थमष्टादशधाऽब्रह्म मैथुनं न सेवते, इति चतुर्थं महाव्रतं. तत्रौदारिकं मनुष्यतिर्यक्स्त्रीविषयं मैथुनं मनसा न सेवते, न चान्यान् सेवावयति, सेवमानं चान्यं नानुमन्यते, इति त्रयो भेदाः. एवं च वचसापि त्रयः, कायेनापि त्रयः, सर्वेऽप्यमी नव भेदाः. एवं यथौदारिकेण नव भेदा लब्धास्तथा वैक्रियेणापि देवीविद्याधरीविषयेण मैथुनेन नव भेदा लभ्यंते. सर्वेऽप्यमी अष्टादशेति. ॥ ४० ॥ अथ पंचमं महाव्रतमाह—

॥ मूलम् ॥—उहोवग्गह उवहिसु । दव्वाइसु च चउसुवि ममत्तं ॥ जं नायरेइ तितिहा । महव्वयं पंचमं एयं ॥ ४१ ॥ व्याख्या—ओघेन प्रवाहेण यो गृह्यते, कारणे च भुज्यते स ओघोपधिः, यश्च सति कारणे गृह्यते, कारणे च भुज्यते स उपग्रहोपधिः. उक्तं च–ओहेण

जस्स गहणं । भोगो पुण कारणे स उंहोही ॥ जस्स डुगंपि नियमा । कारणउ सो उवग्ग-
हिउ ॥ १ ॥ तत्र उंघोपधिः स्थविरकल्पानां चतुर्दशधा, तद्यथा—पत्तं पत्ताबंधो । पायठव-
णं च पायकेसरिया ॥ पम्लाइं रयत्ताणं । गुच्छो इय पायनिज्जोगा ॥ १ ॥ तिन्नेव य पछा-
गा । रयहरणं चेव होइ मुहपत्ती ॥ तत्तो य मत्तए खलु । चउदसे चोलपट्टो य ॥ २ ॥
युग्मं ॥ साध्वीनां तु पंचविंशतिधा, तद्यथा–" पत्तं पत्ताबंधो गहा ". तिन्नेव य वत्थागा ।
रयहरणं चेव होइ मुहपत्ती ॥ तत्तो य मत्तए खलु । चउदसमेकमहुए चेव ॥ ३ ॥ उग्गहणं-
तगपट्टो । अद्धोरू चलणिया य बोधव्वा ॥ अप्भंतर बाहिरियं । सणीय तहा कंचुए चेव
॥ ४ ॥ उगरथी वेगरथी । संघाम्ली चेव खंधकरणी य ॥ उंहोवहिम्मि एयं । अज्जाणं पणवीसं
तु ॥ ५ ॥ औपग्रहिकश्च द्वयेषामपि संस्तारोत्तरपट्टादिरनेकधा. एतयोरोघोपग्रहोपध्योर्यन्मुनि-
र्ममत्वं प्रतिबंधं त्रिविधा नाचरत्येतत्पंचमं महाव्रतं. अयं भावः–तणगहणाणलसेवा–निवा-
रणा धम्मसुक्कझाणहा ॥ दिट्ठं कप्पग्गहणं । गिलाणमरणट्ठया चेव ॥ १ ॥ यदार्षं–जंपि व-
त्थं व पायं वा । कंबलं पायपुच्छणं ॥ तंपि संयमलज्जट्ठा । धारंति परिहरंति य ॥ १ ॥ न

सो परिग्गहो वुत्तो । नाइपुत्तेण ताइणा ॥ मुच्छा परिग्गहो वुत्तो । इइ वुत्तं महेसिणा ॥१॥ पुनर्विध्यंतरमाह—अथ द्रव्यादिषु चतुःषु यन्ममत्वं न करोति, तत्र द्रव्यत उपध्यादौ श्राव-कादौ वा; क्षेत्रतो नगरादौ निर्वातवसत्यादौ वा, कालतः शरदादौ दिवसादौ वा, भावतो व-पुरुपचयादौ क्रोधादौ वा. अत्राद्यंतयोर्महाव्रतयोस्त्रिविधत्रिविधभंगकग्रहणात् शेषेष्वपि स एव प्रतिपत्तव्यः. ॥४१॥ एवं सर्वमपि परिग्रहं त्याज्यमुक्त्वार्थविषयस्य तस्य विशेषत्याज्यतामाह—

॥ मूलम् ॥—पडिसिद्धो साहूणं । सव्वोवि परिग्गहो परमगुरुणा ॥ सव्वाणत्थनिमित्तं । विसेसउ अत्थविसउ सो ॥ ४२ ॥ व्याख्या—प्रतिषिद्धस्तावत्साधूनामुपसर्गतः सर्वोऽप्यधि-कोपकरणधरणात्मकः परिग्रहः परमगुरुणार्हता. यदाह—जं वट्टइ उवयारे । उवयरणं तंसि उवगरणं ॥ सेसं अहिगरणं पुण । अजउ अजयं परिहरंतो ॥ १ ॥ अपवादतस्तु कचित् कचिदनुज्ञातोऽपि, यथा पंचकल्पभाष्यं—एगो तित्थयराणं । निक्खममाणाण होइ उवहीउ ॥ तेण परं निरुवहिणो । जावज्जीवाइ तित्थयरा ॥ १ ॥ गणणाइपमाणेणं । उवहिपमाणं दुहा मुणेयव्वं ॥ गणणाइ जिणाणं तु । इक्को दोतिन्नि वाकप्पा ॥ २ ॥ दो रयणीसंकासो ।

सोत्थउवावि होइ आयामो ॥ रुंदो दिवड्ढहत्थं । एयपमाणप्पमाणेणं ॥ ३ ॥ दो खोमियात्त इक्को । थेराणं तिन्नि होंति गणणाए ॥ आयायामपमाणा । दुहत्थमद्धं च वित्थिन्ना ॥ ४ ॥ एसो उ भवे कप्पो । पकप्पऊ गिलाणए गुरुणं च ॥ चउ सत्त वावि पाउणे । माणइरित्तं च धारिज्जा ॥ ५ ॥ परं स परिग्रहोऽर्थविषयः, अर्थमाश्रित्य विशेषतोऽपवादतोऽपि निषिद्ध एव, सर्वानर्थनिमित्तत्वात्. अयं भावः—गृहिणां भवत्वर्थः, क्वापि क्वापि सद्व्ययोपयोगेनार्थकार्येऽपि भवति, साधूनां तु केवलोड्डाहहेतुत्वादनर्थ एव. यदाह—दोससयमूलजालं । पुव्वरिसिविवज्जियं जइवंतं ॥ अत्थं वहसि अणत्थं । कीस निरत्थं तवं चरसि ॥ १ ॥ ४२ ॥ अथ महाव्रतोपयोगित्वात् षष्टं रात्रिभोजनविरमणव्रतमपि साधुभिरवश्यं धार्यमित्याह—

॥ मूलम् ॥—तेसिं परिपालणट्ठा । चउहा चइयव्वमेव निसिभत्तं ॥ न हु ठप्पा अप्पावि हु । वसहीए सन्निही मुणिणा ॥ ४३ ॥ व्याख्या—इह रात्रौ पर्यटनेनेर्यापथाऽशुद्धेराद्यव्रतस्य भंगः. रात्रिबलेनागम्यगमनमपि कृत्वाहं गोचरचर्यां गतोऽभूवमिति कूटोक्त्या गुरुं प्रत्युत्तरयतो द्वितीयस्य. तमिस्रबलात्परस्वं गृह्णतः स्त्रियं वा कामयमानस्य तृतीयचतुर्थयोरपि. त-

भंगे तु पंचमं भग्नमेव. यद्वा रात्रिभुक्तेऽधिकीभूतं भक्ताद्यं पुनः प्रातर्भोक्ष्ये, इति बुद्ध्या स्थापयतः पंचमव्रतभंगो वाच्यः, यत एवं ततस्तेषां महाव्रतानां पालनार्थं मुनिना चतुर्धा निशिभुक्तं रात्रिभोजनं त्यक्तव्यमेव. यद्भाष्यं—जम्हा मूलगुणा चिय । न हुंति तव्विरहियस्स परिपुण्णा ॥ तो मूलगुणग्गहणे । तग्गहणं निच्छओ नेयं ॥ १ ॥ चातुर्विध्यं चास्यैवं—दिवा गृहीतं दिवा भुक्तं १, दिवा गृहीतं रात्रौ भुक्तं २, रात्रौ गृहीतं दिवा भुक्तं ३, रात्रौ गृहीतं रात्रौ भुक्तं ४ इति. अत्र दिवाऽशनाद्यं गृहीत्वा रात्रौ तद्वसतावव्स्थाप्य पुनर्द्वितीयदिने भुंजानस्य प्रथमो भेदः, शेषास्त्रयः सुबोधाः. तथा न चाल्पोऽपि लवणमात्रोऽपि सन्निधिर्वसतौ स्थाप्यः. लिंगव्यत्ययः प्राकृतत्वात्. इह चतुर्विधाहारमध्ये यत्किमपि निशि वसतौ निवसति, स समयभाषया सन्निधिरुच्यते, सोऽपि रात्रिभोजनप्रायत्वादुत्सर्गतस्त्याज्य एव. यदागमः—"संनिहिं च न कुव्विज्जा । अणुमायंपि संजए ॥" इदं च रात्रिभोजनविरमणं महाव्रतानामत्यंतोपकारित्वात् साधूनां मूलगुणः. श्रावकाणां चाहारविरतिमात्रत्वादुत्तरगुणस्तपोवत्. यद्भाष्यं— निसिभत्तविरमणंपि हु । नणु मूलगुणो कहं न गहियं तं ॥

वयधारिणो च्चिय तयं । मूलगुणो सेसयस्सियरो ॥ १ ॥ ४३ ॥

॥ मूलम् ॥—जं अप्पयासगाणे । जं वा अपयासभायणे असणं ॥ तंपि हु राईन्नोयण–सरिसं रिसिणो उवइसंति ॥ ४४ ॥ व्याख्या—यदप्रकाशे स्थानेऽपवरकादौ; यद्वाऽप्रकाशे संकटमुखे न्नाजनेऽशनमन्व्यवहरणं तदपि रात्रिन्नोजनसदृशं ऋषय उपदिशंति, सूक्ष्मजीवानिरीक्षणान्निर्दयपरिणामत्वाच्च. ॥ ४४ ॥ तस्मात्किं कार्यमित्याह—

॥ मूलम् ॥—सपरसमए निसिद्धं । असक्कपरिहारसुहुमजीववहं ॥ पच्चक्कनाणिणंपि हु । वज्जं वज्जेह निसिन्नुत्तं ॥ ४५ ॥ व्याख्या—स्वपरसमये निषिद्धं, स्वसमयनिषेधः प्रतीतोऽन्नक्ष्यांतः पठितत्वात्. परसमये त्वेवं—ब्रह्मादितेजःसंन्नूतं । भानुं वेदविदो विदुः ॥ स्पृष्टं करैस्ततस्तस्य । शुन्नं कर्म समाचरेत् ॥ १ ॥ तथा—नैवाहुतिर्न च स्नानं । न श्राद्धं देवतार्चनं ॥ दानं वा विहितं रात्रौ । न्नोजनं तु विशेषतः ॥ २ ॥ अन्यच्च—मध्याह्ने ऋषिन्निर्भुक्तं । पूर्वाह्णे त्रिदशैस्तथा ॥ अपराह्णे तु पितृन्निः । सायं न्नुंजंति दानवाः ॥ ३ ॥ संध्यायां यक्षरक्षोन्नि–र्भुक्तमेवं यथाक्रमं ॥ सर्ववेलामतिक्रम्य । रात्रौ न्नुक्तमन्नोजनं ॥ ४ ॥ युग्मं ॥ तथाऽ·

भंगे तु पंचमं भग्नमेव. यद्वा रात्रिभुक्तेऽधिकीभूतं भक्ताद्यं पुनः प्रातर्भोक्ष्ये, इति बुध्या स्थापयतः पंचमव्रतभंगो वाच्यः, यत एवं ततस्तेषां महाव्रतानां पालनार्थं मुनिना चतुर्धा निशिभुक्तं रात्रिभोजनं त्यक्तव्यमेव. यद्भाष्यं—जम्हा मूलगुणा चिय । न हुंति तव्विरहियस्स पडिपुन्ना ॥ तो मूलगुणग्गहणे । तग्गहणं निच्छओ नेयं ॥ १ ॥ चातुर्विध्यं चास्यैवं—दिवा गृहीतं दिवा भुक्तं १, दिवा गृहीतं रात्रौ भुक्तं २, रात्रौ गृहीतं दिवा भुक्तं ३, रात्रौ गृहीतं रात्रौ भुक्तं ४ इति. अत्र दिवाऽशनाद्यं गृहीत्वा रात्रौ तद्वसताववस्थाप्य पुनर्द्वितीयदिने भुंजानस्य प्रथमो भेदः, शेषास्त्रयः सुबोधाः. तथा न चाल्पोऽपि लवणमात्रोऽपि सन्निधिर्वसतौ स्थाप्यः. लिंगव्यत्ययः प्राकृतत्वात्. इह चतुर्विधाहारमध्ये यत्किमपि निशि वसतौ निवसति, स समयभाषया सन्निधिरुच्यते, सोऽपि रात्रिभोजनप्रायत्वादुत्सर्गतस्त्याज्य एव. यदागमः—"संनिहिं च न कुव्विज्जा । अणुमायंपि संजए ॥" इदं च रात्रिभोजनविरमणं महाव्रतानामत्यंतोपकारित्वात् साधूनां मूलगुणः. श्रावकाणां चाहारविरतिमात्रत्वादुत्तरगुणस्तपोवत्. यद्भाष्यं— निसिभत्तविरमणंपि हु । नणु मूलगुणो कहं न गहियं तं ॥

वयधारिणो च्चिय तयं । मूलगुणो सेसयस्सियरो ॥ १ ॥ ४३ ॥

॥ मूलम् ॥—जं अप्पयासगाणे । जं वा अपयासभायणे असणं ॥ तंपि हु राईन्नोयण—सरिसं रिसिणो ज्वइसंति ॥ ४४ ॥ व्याख्या—यदप्रकाशे स्थानेऽपवरकादौ; यद्वाऽप्रकाशे संकटमुखे ज्ञाजनेऽशनमज्यवहरणं तदपि रात्रिज्ञोजनसदृशं ऋषय जपदिशंति, सूक्ष्मजीवानिरीक्षणान्निर्दयपरिणामत्वाच्च. ॥ ४४ ॥ तस्मात्किं कार्यमित्याह—

॥ मूलम् ॥—सपरसमए निसिद्धं । असक्कपरिहारसुहुमजीववहं ॥ पच्चक्खनाणिणंपि हु । वज्जं वज्जेह निसिज्जुत्तं ॥ ४५ ॥ व्याख्या—स्वपरसमये निषिद्धं, स्वसमयनिषेधः प्रतीतोऽज्ञक्ष्यांतः पठितत्वात्. परसमये त्वेवं—ब्रह्मादितेजःसंज्ञूतं । भानुं वेदविदो विदुः ॥ स्पृष्टं करैस्ततस्तस्य । शुज्ञं कर्म समाचरेत् ॥ १ ॥ तथा—नैवाहुतिर्न च स्नानं । न श्राद्धं देवतार्चनं ॥ दानं वा विहितं रात्रौ । ज्ञोजनं तु विशेषतः ॥ २ ॥ अन्यच्च—मध्याह्ने ऋषिज्जिर्ज्ञुक्तं । पूर्वाह्णे त्रिदशैस्तथा ॥ अपराह्णे तु पितृज्ञिः । सायं ज्ञुंजंति दानवाः ॥ ३ ॥ संध्यायां यक्षरक्षोज्ञि—र्ज्ञुक्तमेवं यथाक्रमं ॥ सर्ववेलामतिक्रम्य । रात्रौ ज्ञुक्तमज्ञोजनं ॥ ४ ॥ युग्मं ॥ तथाऽ-

शक्यपरिहारः परिहर्तुमशक्यः सूक्ष्मजीवानां कुंथुपनकादीनां वधो यत्र तत्तथा. अत एव प्रत्यक्षज्ञानिनां अवध्यादिज्ञानवतामपि वर्ज्यं, ते हि ज्ञानबलाद्यद्यपि पश्यंति सूक्ष्मजीवान्, तथापि परिहर्तुं न शक्नुवंतीति निशि न भुंजते. यदागमः—जइवि हु फासुयदव्वं । कुंथुपणगा य तहवि दुप्पेसा ॥ पच्चक्खनाणिणोवि हु । राइभत्तं परिहरंति ॥ १ ॥ तत एवंविधं निशि भुक्तं हे साधवो यूयं वर्जयत? चर्मचक्षुषां युष्माकं तत्सर्वथा न युक्तमित्यर्थः. इत्युक्तं पंचमहाव्रतप्रतिपालनं. ॥ ४५ ॥ अथ चतुर्णां कषायाणां निरोधमाह—

॥ मूलम् ॥—भवपुरदुवारभूए । मोहमहाचरटपयक्सामंते ॥ रुंधिज्ज पावपायव—विडवे चत्तारिवि कसाए ॥ ४६ ॥ व्याख्या—कष्यंते कदर्थ्यंते प्राणिनोऽनेनेति कषं कर्म, तस्यायो लाभो येभ्यस्ते कषायाः, यद्वा कष्यंते प्राणिनोऽत्रेति कषः संसारस्तं अयंते गच्छंत्येभिरिति कषायाः क्रोधादयश्चत्वारस्तान् रुंध्यान्मुनिरनुदितानामनुदीरणेनोदयप्राप्तानां वा विफलीकरणेन. शेषं सुगमं, नवरं पादपस्य विटपान् शाखाप्रायान्. ॥ ४६ ॥ अथ कषायाणां सप्रभेदान् भेदानाह—

॥ मूलम् ॥—कोहाई ते चउरो। नेया चत्तारि तेसिं पत्तेयं ॥ अण अप्पच्चक्खाणा। पच्चक्खाणा य संजलणा ॥ ४७ ॥ व्याख्या—ते कषायाः क्रोधादयश्चत्वारो भवंति, क्रोधो, मानो, माया, लोभश्चेति. तेषां च चतुर्णामपि प्रत्येकं प्रत्येकं चत्वारो भेदास्तद्यथा—"अणत्ति" सूचामात्रत्वात्सूत्रस्य, अनंतं भवं भ्रमणीयत्वेनानुबध्नंतीत्यनंतानुबंधिनः क्रोधादयः, येषामुदये जीवः सम्यक्त्वं न लभते, लब्धं वा सम्यक्त्वं वमति. "अप्पच्चक्खाणत्ति" नञः सर्वनिषेधकत्वान्नास्ति सर्वथापि विरतिरूपं प्रत्याख्यानं येषु तेऽप्रत्याख्यानाः, यदुदये प्राप्तसम्यक्त्वानामपि न जायते देशविरतिपरिणामः, जातो वा निर्नाम नश्यति. "पच्चक्खाणत्ति" प्रत्याख्यानं सर्वविरतिरूपमावृण्वंतीति प्रत्याख्यानावरणाः, यदुदये न सर्वविरतिं प्राप्नोति, प्राप्तापि वा सा विलीयते. संज्वलयंति औदयिकभावमानयंति चारित्रिणमपि ये ते संज्वलनाः, यदुदये न भवति यथाख्यातचारित्रं, शेषचारित्रभेदास्तु भवंत्येव. बहुवचनं क्रोधादिषु चतुर्ष्वेषां संबंधार्थं. तद्यथा—अनंतानुबंधी, अप्रत्याख्यानः, प्रत्याख्यानावरणः, संज्वलनः क्रोधः. अनंतानुबंधी, अप्रत्याख्यानः, प्रत्याख्यानावरणः, संज्वलनश्च मानः. एवं माया·

लोन्नयोरपि योजना कार्या. ॥ ४७ ॥ अथ स्थितिगतिभ्यां गुणघातकत्वेन चैषामनंतानुबंध्यादीनां विशेषलक्षणमाह—

॥ मूलम् ॥—जम्म वासं चउमास-मद्धमासं कमा ठिई एसिं ॥ नारयतिरियनरामर-गईसु एसु मया जंति ॥ ४८ ॥ सम्मत्तं गिहिधम्मं । जइधम्मं अणुकमा अहक्खायं ॥ वीसासघायगा इव । वीसत्थाणं हणंति इमे ॥ ४९ ॥ व्याख्या—द्वे अप्युत्तानार्थे, नवरं " एसु मयत्ति " एष्वनंतानुबंध्यादिकषायाध्यवसानेषु मृताः. आह परः—ननु अनंतानुबंध्युदये नरकगतिः, संज्वलनोदये तु देवगतिरिति गतिनियमोऽत्राभिहितस्ततः कथं क्षायिकसम्यग्दृष्टित्वादनंतानुबंधिषु क्षीणेष्वपि श्रेणिकादीनां नरकगमनं? मिथ्यादृष्टित्वात् सत्यप्यनंतानुबंध्युदयेऽभव्यानां च देवगतिगमनमागमे प्रत्यपादीत्यत्रोच्यते—सत्यं, किंत्वत एव वचनबलादेषामनंतानुबंध्यादिभेदानां प्रत्येकं अनंतानुबंध्यादिभेदतुल्यत्वमागमे साक्षादनुक्तमपि युक्तियुक्तत्वात् प्रतिपत्तव्यं, तद्यथा—अनंतानुबंधी क्रोधोऽनंतानुबंधितुल्यः, अप्रत्याख्यानतुल्यः, प्रत्याख्यानावरणतुल्यः, संज्वलनतुल्यश्च. एवमप्रत्याख्यानक्रोधोऽनंतानुबंधितुल्यः,

अप्रत्याख्यानतुल्यः, प्रत्याख्यानावरणतुल्यः, संज्वलनतुल्यश्च. एवं प्रत्याख्यानावरणसंज्वलनावपि क्रोधौ प्रत्येकमनंतानुबंध्यादिभेदचतुष्टयतुल्यौ वाच्यौ. एवं मानमायालोभेष्वपि चतुर्णामप्यनंतानुबंध्यादिभेदानां प्रत्येकं चातुर्विध्यं भावनीयं. ततश्च श्रेणिकादीनामप्रत्याख्याना अपि कषाया अत्यंतदुस्सहतयाऽनंतानुबंधिकल्पाः संभाव्यंते. अभव्यानां चानंतानुबंधिनोऽपि ज्ञानध्यानादिभिः प्रतनुकृताः संज्वलनतुल्याः, तेन तेषां नरकगतिदेवगती न व्यभिचरतः, हेत्वंतरं वा सुधीभिर्विमृश्यं, तत्वस्य केवलिगम्यत्वात् ॥ ४७ ॥ ४९ ॥ अथ कषायाणां सामर्थ्यसीमानमाह—

॥ मूलम् ॥—इक्कारस्स गुणठाण-गस्स सीसंपि जं समारूढो ॥ पाडिज्जइ कसाएहिं । भणाहि को तेसिं वीसंभो ॥ ५० ॥ व्याख्या—एकादशं गुणस्थानकमुपशांतमोहमित्युच्यते. एतच्च यथा श्रेणिक्रमेण भवति तथा प्ररूप्यते. इहोपशमश्रेणिप्रारंभकोऽप्रमत्तसंयतो भवतीति केचित्. अविरतदेशविरतप्रमत्ताप्रमत्तानामन्यतर इत्यन्ये. श्रेणिसमाप्तौ च निवृत्तोऽप्रमत्तगुणस्थाने प्रमत्तगुणस्थाने वावतिष्ठति. कालगतस्तु देवेष्वविरतो वा भवति. उक्तं च—

उवसामगसेढीए । पढवओ अपमत्तविरओ य ॥ पज्जवसाणे सो वा । होइ पमत्तो अविरओ अ ॥ १ ॥ अन्ने नणंति अविरय–देसपमत्तापमत्तविरयाणं ॥ अन्नयरो पडिवज्जइ । दंसणसमणंमि उ नियट्टी ॥ २ ॥ कर्मग्रंथाभिप्रायेण तु प्रतिपतितोऽसौ मिथ्यादृष्टिगुणस्थानमपि यावद्गच्छति. तत्रेत्थमेतामारनतेऽसौ प्रतिपत्ता प्रशस्तेष्वध्यवसायस्थानेषु वर्तमानः प्रथमं युगपदंतर्मुहूर्तेनानंतानुबंधिनः क्रोधमानमायालोजानुपशमयति. ततो मिथ्यात्वमिश्रसम्यक्त्वरूपं दर्शनत्रिकं युगपदंतर्मुहूर्तेनोपशमयति. ततो यदा पुरुषः श्रेणिसमारब्धा स्यात्तदानुदीर्णमपि नपुंसकवेदमंतर्मुहूर्तेनोपशमयति. ततः स्त्रीवेदमंतर्मुहूर्तेन, ततो हास्यरत्यरतिशोकनयजुगुप्सालक्षणं षट्कं युगपदंतर्मुहूर्तेन, ततः पुरुषवेदमंतर्मुहूर्तेनोपशमयति.

अथ स्त्री प्रारंभिका, ततः पूर्वं नपुंसकवेदं, ततः पुरुषवेदं, ततो हास्यादिषट्कं, ततः स्त्रीवेदं. अथ नपुंसकः प्रारब्धा, ततोऽसावनुदीर्णमपि पूर्वं स्त्रीवेदं, ततः पुरुषवेदं, ततो हास्यादिषट्कं, ततो नपुंसकवेदं. अयं नावः—यो वेद उदये वर्तते, तस्माच्छेषस्य वेदद्वयस्य मध्ये यो जघन्यो वेदस्तं प्रथममुपशमयति, ततो द्वितीयं, ततो हास्यषट्कं, ततो य उदये

वर्तते तं वेदमुपशमयतीति क्रमः. अतः परमप्रत्याख्यानप्रत्याख्यानावरणौ क्रोधौ युगपदंतर्मुहूर्तेनोपशमयति. ततः संज्वलनं क्रोधमेकाकिनमेवांतर्मुहूर्तेनोपशमयति. ततोऽनया रीत्याऽप्रत्याख्यानप्रत्याख्यानावरणौ मानौ युगपत्; ततः संज्वलनं मानं, ततोऽप्रत्याख्यानप्रत्याख्यानावरणे माये, ततः संज्वलनां मायां, ततोऽप्रत्याख्यानप्रत्याख्यानावरणौ लोजौ, ततः संज्वलनं लोजं. अमुं चोपशमयंस्त्रिधा कृत्वा द्वौ जागौ युगपदुपशमयति. तृतीयं तु जागं संख्येयानि खंडानि करोति. तान्यपि पृथक्कालजेदेनोपशमयंश्चरमखंडमसंख्येयानि खंडानि करोति. तान्यपि समये समये एकैकमुपशमयन्नंतर्मुहूर्तेन सर्वाण्युपशमयति. इह च दर्शनसप्तके उपशांतेऽपूर्वकरणोऽनिवृत्तिबादरो वाजिधीयते, न पुनस्तत्र किंचिदुपशमयति. तत ऊर्ध्वमनिवृत्तिबादरो यावत् संख्येयखंडानां चरमाख्यखंडनिष्पन्नानि त्वसंख्येयखंडान्युपशमयन् सूक्ष्मसंपरायः, ततः परमंतर्मुहूर्तमुपशांतमोहो जवति. सर्वापि चेयं श्रेणिरारोहतामंतर्मुहूर्तेन समाप्यते.

—अस्याः स्थापना—

अत्र शून्यस्थाने अनंतानुबंधिचतुष्टयादयो ज्ञेयाः. येषामुपशमस्य प्रारंभो निष्टा च समकालं तत्तच्छून्यानि तिर्यक् समतया स्थाप्यंते. अत्र यदि बद्धायुरिमां श्रेणिमारभते, तदा श्रेणेः समाप्तौ वा कालं कृत्वा नियमादनुत्तरसुरेष्वेवोत्पद्यते. उक्तं च— बद्धाऊपडिवन्नो । सेढिगउवा पसंतमोहो वा ॥ कुणइ कोइ कालं । सो वच्चइणुत्तरसुरे य ॥ १ ॥ अबद्धायुः पुनः श्रेणिं संपूर्णीकृत्यांतर्मुहूर्तमुपशांतमोहो भूत्वा कुतश्चिन्निमित्तादुदितकषायः प्रतिपतन्नियमाद्यथारूढस्तथा श्रेणेः पश्चान्मुखं निवर्तते. उक्तं च—अनिबद्धाउ होउ । पसंतमोहो मुहुत्तमित्तं तु ॥ उइयकसाउं नियमा । नियत्तए सेढिपडिलोमं ॥ १ ॥ अथ गाथार्थ उच्यते—इत्युक्तस्वरूपस्य एकादशस्य गुणस्थानस्य शीर्षमग्रविभागमपि समारूढो यदि कषायैः पात्यते, पुनर्मिथ्यात्वमपि नीयते साधुः. ततो

त्रण कस्तेषां सर्वानर्थमूलानां कषायाणां विश्रंभो विश्वासः? सर्वथा नैषां विश्वसितव्यमित्यर्थः. उक्तंच—जइ उवसंतकसाओ। लहइ अणंतं पुणोवि पडिवायं ॥ न हु भे वीससिअव्वं। थोवेवि कसायसेसंमि ॥ १ ॥ ५० ॥ एतत्कषायाणां दौरात्म्यमजानानास्ताननिगृह्य ये धर्मार्थं क्लिश्यंति ते जडा एवेत्याह—

॥ मूलम् ॥—कट्ठकिरियाहिं देहं। दमंति किं ते जडा निरपराहं ॥ मूलं सव्वदुहाणं। जेहिं कसाया न निग्गहिया ॥ ५१ ॥ व्याख्या—स्पष्टा, न वरं कष्टक्रियाभिस्तपोवनवासकायोत्सर्गादिभिर्निरपराधमिति देहस्याचेतनत्वात् ॥ ५१ ॥ अत एव—

॥ मूलम् ॥—तत्तमिणं सारमिणं। दुवालसंगीइ एस भावत्थो ॥ जं भवभमणसहाया। इमे कसाया चइज्जंति ॥५२॥ व्याख्या—मोक्षमार्गप्रकाशिकाया द्वादशांग्या इदं तत्त्वं रहस्यं, इदं सारं दध्न इव नवनीतं. एष च भावार्थस्तात्पर्यार्थः. यद्भवभ्रमणसहाया इमे प्रागुक्तस्वरूपाः कषायास्त्यज्यंते. एभिस्त्यक्तैर्भवभ्रमणमपि त्यक्तमेव, निःसहायत्वात्. ॥ ५२ ॥ एवं सामान्यतः कषायनिग्रहमुपदिश्याथ पृथक् पृथक् तन्निग्रहाय विशेषोपदेशमाह—

॥ मूलम् ॥—एसु दुहनट्टरंगे । मित्तिमहावल्लिमत्तमायंगे ॥ सुविवेयदिसामोहे । रज्जिज्जइ कहसु कह कोहे ॥ ५३ ॥ व्याख्या—एषु कषायेषु वैरव्यसनविग्रहादिदुःखान्येव नानारूपत्वान्नाट्यानि, तेषामभिनयनाय रंगे रंगभूमौ, मैत्री सौहार्दं सैव चिरप्ररूढत्वान्महावल्ली, तस्या मर्दनाय मत्तमातंगे समदहस्तिनि, सुविवेकस्य प्रतिपदं स्खलनाय दिग्मोहे कथय कथमेवंविधे क्रोधे रज्यते, नैव रज्यत इत्यर्थः. ॥ ५३ ॥ अथ श्लिष्टविशेषणगर्भं क्रोधस्य वह्नेरपि वैषम्यमाह—

॥ मूलम् ॥—कट्ठाइं पवड्ढंतो । पज्जलइ जडंमि न हु जलइ नेहे ॥ दिप्पंतो देइ तमं । कोहहुयासो इह अपुव्वो ॥ ५४ ॥ व्याख्या—इह अपूर्व इतराग्निभ्यो विलक्षणः क्रोध एव हुताशः क्रोधहुताशो वर्तते, तद्यथा—क्रोधः कष्टानि स्वशिरउरःकुट्टनादीनि वर्धयन् जडे मंदबुद्धौ जने प्रकर्षेण ज्वलति, न पुनर्ज्वलति स्नेहेऽन्योन्यप्रीतिबंधात्मके, दीप्यमानो ज्वलन् सन् तमः पापं ददाति. अन्यो हि हुताशः काष्ठानि भस्मीकुर्वन् जलेंभसि न ज्वलति. ज्वलति च स्नेहे तैलादौ दीप्यमानः सन् तमोंधकारं नाशयतीति क्रोधहुता-

शस्य युक्तमपूर्वत्वं. ॥ ५४ ॥ यत एवं ततः साधुनिर्यत्कर्तव्यं तदाह—

॥ मूलम् ॥—मा रुसह रोसिल्ले । मा वसह परंमि अहिसवंतंमि ॥ मा पहरह पहरंते । उवसमसारं खु सामण्णं ॥ ५५ ॥ व्याख्या—स्पष्टा, अथ मानस्वरूपमाह—

॥ मूलम् ॥—नासियगुरूवएसं । विज्जा अहलत्तकारणमसेसं ॥ कुग्गहगयआलाणं । को सेवइ सुव्वउ माणं ॥ ५६ ॥ व्याख्या—नाशिता दूरीकृता गुरुपदेशा येन तं तथा, न हि मानेन गजनिर्मीलिकां दधतां गुरवो हितोपदेशं ददतीति भावः. तथा अशेषं पूर्णं विद्यानां प्रज्ञप्त्यादीनां शास्त्राणां वा अफलत्वस्य कारणं. न हि मानवतां विद्याः फलंतीति भावः. कुग्रहोऽसद्ग्रहः, स एव सबलत्वाद्गजस्तस्य स्थिरीकरणायालानं कः सुव्रतः सेवते मानं? ॥ ५६ ॥ अथ मानस्य सांदृष्टिकं फलमाह—

॥ मूलम् ॥—जेणं माणो पाणो । वसाविउ निययहिययठाणंमि ॥ जुत्तं नाणाइगुणा । सुपवित्ता तं न छिप्पंति ॥ ५७ ॥ व्याख्या—येन केनचिन्मान एव पाणो देशीभाषया चंडालः स्वकीयहृदयस्थाने वासितः, युक्तमुचितं ज्ञानादयो गुणास्तं मानचंडालसंसर्गमलिनं न

स्पृशंति. कथंभूता गुणाः? सुष्टु अतिशयेन पवित्राः, सुपवित्रैर्हि आस्तां चंमालस्तत्संपर्ककारी अपि दूरतस्त्यज्यते इत्यर्थः. ॥ ५७ ॥ अथ पारभविकं फलमाह—

॥ मूलम् ॥—पवरकुलजाइबलसुय—तवरूवे सरियलाभगणेसु ॥ जो जेणं इह मच्चइ । मुच्चइ सो परभवे तेणं ॥ ५८ ॥ व्याख्या—प्रवराणि वर्तमानकालापेक्षया प्रधानानि कुलादीनि, तत्र कुलं पैतृकं उग्रादिकं वा, जातिर्मातृकी विप्रादिका वा, बलं शारीरिकं स्थाम, श्रुतं प्रज्ञोन्मेषजन्मशास्त्राधिगमः, तपो विकृष्टतपश्चरणं; रूपं सुसंस्थानत्वं, ऐश्वर्यं गृहादिप्रभुत्वं, लाभो धनाद्याप्तिः. एतेष्वष्टसु मदस्थानेषु यः कश्चिद्येन मदहेतुना माद्यति, अहो अहं कुलीनोऽहं बलवान्, इत्याद्युत्कर्षं धत्ते, स परभवे तेनैव जात्यादिना गुणेन मुच्यते, हीनो भवतीत्यर्थः. ॥ ५८ ॥ अथ मायायाः परिहारमाह—

॥ मूलम् ॥—दुब्बुद्धितिमिरराई । विविहदुरायारवल्लिवणराई ॥ नीसेसदोसमाया । वीजिज्जइ दूरओ माया ॥ ५९ ॥ व्याख्या—दुर्बुद्धयः परवंचनन्यासापहारादिचिंतात्मिकास्ता एव विवेकलोचनाछादकत्वात्तिमिराणि, तेषां समुल्लासाय रात्रिरिव रात्रिः, विविधदुराचारा

विश्वासघातकूटलेखनकूटतुलामानकरणाद्याः, त एव जरूप्रियत्वाद्वल्लयस्तासामवस्थानाय वनराजिरिव वनराजिः, निःशेषाणां दोषाणां पैशुन्यादीनां पोषणाय मातेव माता माया दूरतो वर्ज्यते. ॥ ५ए ॥ यतः—

॥ मूलम् ॥—कुम्लिगई कूरमई । होइ सया चरणवज्जिउ मलिणो ॥ मायाइ नरो ञ्जुयगुव्व । दिठ्ठमित्तोवि ञयजणउ ॥ ६० ॥ व्याख्या—मायया हेतुञूतया नरः पुरुषो ञ्जुजगः सर्प इव दृष्टमात्रोऽपि ञयजनको ञवति, तत एव न कोऽपि तस्य विश्वसितीत्यर्थः. कथंञूतः सः? कुटिला शाठ्यबहुला गतिश्चर्या यस्य सः कुटिलगतिः. क्रूरा डुष्टाध्यवसायवती मतिर्यस्य स क्रूरमतिः. तथा सतामाचरणानि न्यायव्यवहारसत्यञाषणादीनि, तैर्वर्जितः, तथा मलिनः पापबहुलत्वात्, ञ्जुजंगपक्षे कुटिला गोमूत्रिकाकारा गतिर्यस्य सः, तथा क्रूरमतिरिति विशेषणं स्पष्टं. सदा शश्वच्चरणवार्जितो गूढपादत्वात्, मलिनः कालमूर्तित्वात्. ॥ ॥ ६० ॥ अन्यच्च—

॥ मूलम् ॥—हाइ अविससणिज्जो । उवहयकित्ती विरत्तसयणो य ॥ परवंचणं कुणं-

तो । मायिल्लो वंचिउं विहिणा ॥ ६१ ॥ व्याख्या—मायावी पुरुषः परुषहृदयतया परवंचनां कुर्वन् स एव विधिना वंचितो जवति. विधिर्दैवं कर्म चेत्येकार्थाः. यतोऽसौ पूर्वं सर्वेषां विश्वासपात्रं भूत्वा मायया सर्वत्राऽविश्वसनीयो जायते, यशस्वी जूत्वा उपहतकीर्तिर्जायते, स्वजनप्रियो भूत्वा विरक्तस्वजनश्च जायते. ततो यः परं वंचयितुं मायां प्रयुङ्क्ते, वस्तुतः स एव स्वकर्मणा वंच्यते, सर्वस्वार्थभ्रंशादिति तात्पर्यार्थः. ॥ ६१ ॥ अथ लोजमाह—

॥ मूलम् ॥—गुणतिमि तिमिंगिलसमं । सुचारुचारित्तचंदराहुवमं ॥ नयपायवनइउंहं । विबुहो बहुमन्नइ न लोहं ॥ ६२ ॥ व्याख्या—गुणा एव सज्जनहृदयांजोधिजातत्वात्तिमयो मत्स्यास्तेषां ग्रसनाय तिमिंगिलसमं, यथा तिमिंगिलस्तिमीन् ग्रसते, तथा लोजो गुणानिति जावः. यत्परेऽप्याहुः—भूमिस्थोऽपि रथस्थांश्च । पार्थः सर्वधनुर्धरान् ॥ एकोऽपि वारयामास । लोजः सर्वगुणानिव ॥ १ ॥ तथा सुचारित्रमेव निर्मलत्वाच्चंद्रस्तदाछादनाय राहूपमं. नयो न्यायव्यवहारः, स एव जनमनःकमनीयत्वात्पादपो वृक्षस्तस्य ध्वंसनाय नद्योघं सरित्प्रवाहं, एवंविधं लोजं विबुधो विद्वान्न बहु मन्यते. ॥ ६२ ॥ अथास्य सामर्थ्यमाह—

॥ मूलम् ॥—कोहाइणो कसाया । नवमगुणं जंति लोजपरिगहिया ॥ इक्कोवि खंफिउवि हु । वच्चइ दसमं गुणं लोहो ॥ ६३ ॥ व्याख्या—क्रोधादयस्त्रयः कषायाः समर्था अपि लोजपरिगृहीता लोजसहिता एव नवमं गुणस्थानकमनिवृत्तिबादरं यावद्यांति, न परतः, तत्र तेषामुदयस्य सत्तायाश्च व्यवछेदात्. लोजः पुनरेकोऽपरकषायनिरपेक्षोऽपि तथा खंडितः किट्टीकृतोऽपि दशमं गुणस्थानकं सूक्ष्मसंपरायं व्रजति. ततः कथं नाम सामर्थ्यमस्य न प्रशस्यते? यथा चासौ खंफितस्तथोपशमश्रेणिजणने जावितमेव. ॥ ६३ ॥ किंच—

॥ मूलम् ॥—कोहो माणो माया । तिन्निवि लोजं विणा अणाहव ॥ तत्तो कसायसिन्ने । मन्ने अस्सेव सामित्तं ॥ ६५ ॥ व्याख्या—क्रोधो मानो माया चेति त्रयोऽपि कषाया लोजं विना अनाथा इव न कचित्प्रवर्तमाना दृष्टाः, ततोऽहमेवं मन्ये, निजबलनिबिफविफंबितविश्वत्रये सुरासुरपतिभिरप्यप्रतिहतप्रसरेऽस्मिन् कषायसैन्येऽस्यैव लोजस्य स्वामित्वं दृश्यते. हि स्वामिना विना कृता महायोधा अपि न परेज्यः प्रहर्तुमुत्सहंतीति. ॥ ६४ ॥ एवं चतुर्णामपि कषायाणां दौरात्म्यमुक्त्वाथ तन्निग्रहोपायमाह—

॥ मूलम् ॥--कीडियपयत्तमेलिय—धम्मकणाणं दवा इमे चउरो ॥ उवसममद्दवअ्ज्जव-संतोसजलेहिं जिप्पंति ॥ ६५ ॥ व्याख्या—यथा कीटिका शनैः शनैः स्वगात्रोचितप्रयत्नेन नीवारादिकणान् संचिनोति, दवानलस्तु ज्वलन्नेकपदे क्षणेन तान् दहति. तथा प्रमादवहुलत्वाज्जीवैः कीटिकाप्रयत्नेन कथंचिन्मिलिता ये धर्मकणास्तेषां सपदि भस्मीकरणाय दवानलप्राया इमे प्राग् निर्दिष्टाश्चत्वारः क्रोधादयः कषाया उपशममार्दवार्जवसंतोषैरेव जगदानंदकत्वाज्जलैर्मेघोदकैः क्रमाज्जीयंते. ॥ ६५ ॥ अथ कषायत्यागस्य मुख्यं मोक्षांगत्वमाह—

॥ मूलम् ॥—सव्वेसुवि तवेसु । कसायनिग्गहसमं तवो नत्थि ॥ (अत्रोपपत्तिमाह) जं तेण नागदत्तो सिद्धो बहुसोवि भुंजंतो ॥ ६६ ॥ व्याख्या—यद्यस्मात्कारणात्तेन कषायनिग्रहेण नागदत्तो मुनिर्बहुशोऽपि भुंजानः सिद्धः ॥ ६६ ॥ तत्कथा चैवं, अथ नागदत्तमुनिकथा—

क्वापि गच्छे पुरा साधुः । क्षपकोऽभून्महामनाः ॥ सोऽटतिस्म प्रतिगृहं । मासक्षपणपारणे ॥ १ ॥ एका पदा तदामर्दि । मंडूकी तेन वृष्टिजा ॥ प्रमादमाचरंतं च । स्मारितः क्षुल्लं-

केन सः ॥ २ ॥ मंडूकीमर्दिता लोकै-र्दर्शयन्नवदन्मुनिः ॥ किमेता अपि रे दुष्ट । ब्रह्म दृष्टे मया हताः ॥ ३ ॥ सोऽपि कोपं परिज्ञाय । मुनेर्मौनमशिश्रयत् ॥ प्रतिक्रमणकाले च । तं प्रमादमसस्मरत् ॥ ४ ॥ प्रतिक्रांतेरनुक्रुद्धः । कृतांत इव मूर्तिमान् ॥ क्षुल्लकं श्लेष्मपात्रेण । हंतुं साधुरधावत ॥ ५ ॥ अंतरा स्फालितः स्तंभे । साधुः सद्यो व्यपद्यत ॥ क्रोधः स्वाश्रयनाशाय । क्षयव्याधिरिव ध्रुवं ॥ ६ ॥ उदपद्यत सोऽटव्यां । कुले दृग्विषभोगिनां ॥ मूर्त्यातिमलिः क्रोध-मातंगस्येव संगतः ॥ ७ ॥ कुले च तत्र ये सर्पा—स्ते विद्यंतेऽखिला अपि ॥ प्राग्विराधितचारित्रा-ज्जातिस्मरणशालिनः ॥ ८ ॥ मास्मभूज्जंतुसंघात-घातोऽस्माकं दृशा दिवा ॥ इति सर्वे निशि भ्रांत्वा । प्रांशुः प्रासुकमेव वै ॥ ९ ॥ सोऽपि तत्र स्मरन् जातेः । स्वं निनिंद मुहुर्मुहुः ॥ विदधे प्रासुकाहारै-र्वृत्तिं च विचरन्निशि ॥ १० ॥ इतश्च निश्चलस्थामा । श्रीवसंतपुरे पुरे ॥ पुत्रोऽरिदमनक्षोणी-भर्तुर्दष्टोऽहिना मृतः ॥ ११ ॥ कोपकंप्राधरः क्ष्मापो । जातिवैरं वहन्नथ ॥ जघान घातयामास । स्वयमन्यैश्च भोगिनः ॥ १२ ॥ निहत्याहेरवयवं । तस्य यः कोऽप्यदर्शयत् ॥ तस्मै ददौ स दीनारं । भर्मण्यामिव भूपतिः ॥ १३ ॥ तदा गा-

रुल्मिकः कोऽपि । तदेवालोकयन् वनं ॥ भुवि भोजंगमी रेखा । भूयसीर्वीक्ष्य विप्रिये ॥ १४ ॥
तत्र प्रतिबिलद्वार–क्षिप्तौषधबलेन सः ॥ सर्पान् संदंशकेनेवा–चकर्ष निजघान च ॥ १५ ॥
सोऽप्यौषधबलान्मध्ये–बिलं स्थातुमशक्नुवन् ॥ दध्यौ क्षपकजीवाहि–रयं मा सदृग्दृशा मृतः ॥
॥ १६ ॥ निरगच्छत्ततः पुच्छे–नैष सोऽपि च चिच्छिदे ॥ कृष्णेक्षुयष्टिवत्तस्य । निर्गतं निर्गतं
वपुः ॥ १७ ॥ अमुंचन् शमसाम्राज्यं । वेदनाव्याकुलोऽपि सः ॥ समत्यज्यत कुस्थान–वासो-
द्भग्नैरिवासुभिः ॥ १८ ॥ तथा सोऽप्रीणयद्भूपं । हतानादाय भोगिनः ॥ स्वयमेवाभवद्भोगी ।
तद्वत्तद्विर्णैर्यथा ॥ १९ ॥ इतश्च भूपतिं नाग–देवता काप्यवोचत ॥ मावधीः फणिनः सू-
नु–र्भविता तव भूधव ॥ २० ॥ स एव क्षपकात्माथ । भूनाथस्य सुतोऽजनि ॥ चक्रे च ना-
गदत्ताख्या । पितृभ्यां तस्य सान्वया ॥ २१ ॥ तस्याभूत्पयसः शैत्य–मिव स्वाभाविकः शमः ॥
कृपा प्रियसखीवास्य । जातु तत्याज नांतिकं ॥ २२ ॥ सोऽन्यदा श्रमणान् वीक्ष्य । सस्मार
प्राच्यजन्मनः ॥ कथंचित्पितरौ पृष्ट्वो–ररीचक्रे च संयमं ॥ २३ ॥ आभवं प्राग्भवाभ्यासात् ।
क्षुदभूत्तस्य भूयसी ॥ अतःप्रतिदिनं स त्रि–रभुक्त व्रतधार्यपि ॥ २४ ॥ नीरागसंवरानंदी । घ-

नागमधृतोदयः ॥ तन्नागच्चत्तपःस्फातौ । मुनींद्रो श्लाघतिस्म सः ॥ २५ ॥ चतुस्त्रिद्व्येकमासां-
त—क्षुजोऽभूवन्महर्षयः ॥ गछे तत्रैव चत्वारः । पुण्यभेदा इवांगिनः ॥ २६ ॥ तपस्यतः स
तान् वीक्ष्य । दध्यौ बालर्षिरंजसा ॥ धन्या अमी तपःखड्गै—र्ये लुषंत्यांतरद्विषः ॥ २७ ॥ न
पयःपूतरो धान्य—कीटः कुर्वे कदाप्यहं ॥ एकाशनकमप्येषां । वैयावृत्यं करोमि तत् ॥ २८ ॥
तं क्षुल्लमन्यदा नित्य—वैयावृत्यपरायणं ॥ क्षपकर्षीनतिक्रम्य । ववंदे शासनामरी ॥ २९ ॥ प्र-
त्यावृत्तां चतुर्मास—क्षपकस्तामवोचत ॥ वंद्यक्रमं लंघमाना । कासि रे कटपूतने ॥ ३० ॥ ब-
हुमन्ये च पांथानां । श्रेयः प्रत्यूहसूचिकां ॥ त्वत्तस्तां वन्यचटकां । देवीं च व्योमगामपि ॥
॥ ३१ ॥ यदेनं वंदसे बालं । विहायास्मांस्तपस्यतः ॥ ततस्त्वमपि बालासि । तुल्यैः प्रायेण
सौहृदं ॥ ३२ ॥ उवाच देवता साधो । किमेवं कलहायसे ॥ किं द्रव्यक्षपकैर्नात्र—क्षपकेषु
ममादरः ॥ ३३ ॥ यज्जीवितं तपस्याया । यच्च नीवी महात्मनां ॥ वर्तते निष्कषायत्वं ।
तदस्मिन्नपि बालके ॥ ३४ ॥ सुखं घ्नंति नृणामुदग्राः कषाया । वपुः शोष्यते किं तपोभिर्विरा-
कं ॥ नृशंसैर्जगद् ग्रस्यते कृष्णसर्पै—र्विनाश्येत हि गोनसो न्युनसत्वैः ॥३५॥ तपो द्वादशधा तत्र ।

वैयावृत्त्यं विशिष्यते ॥ तस्य अकाग्रहत्वेन । बालोऽप्येषोम हातपाः ॥३६॥ इत्युक्त्वा व्यरमद्देवी ।
सोऽपि क्षुल्लो बुभुक्षितः ॥ प्रातः करंबमानीय । न्यमंत्रयत तंमुनिं ॥ ३७ ॥ आयूनः क्षोभयत्येष ।
किमस्मानिति कोपनः ॥ स तत्पतद्ग्रहे श्लेष्म—स्तबकं मुमुचे रुचिः ॥ ३८ ॥ एवमामंत्रिता-
स्तेन । त्रयः शेषा महर्षयः ॥ चक्रुस्तथैव तेषां हि । न क्रोधः पंक्तिभेदकृत् ॥ ३९ ॥ क्षुल्लो
दध्यौ चनाऽदायि । यत्तेषां कफभाजनं ॥ निष्ठीवंतस्तदस्थाने—ऽप्येते निंद्याःकिमुत्तमाः॥४०॥
क्षुधाहं न तपस्यायां । शक्तः किं क्षोभयाम्यमुं ॥ स्वयं दुर्गतो दैवात् । किं लक्ष्मीवत्सु कु-
प्यति ॥ ४१ ॥ नासंभाव्या किल कफौ—षधिलब्धिस्तपस्विनां ॥ कासोऽयं तन्ममाप्यस्तु ।
कर्मव्याधिविनाशनः ॥ ४२ ॥ एवं विभावयन्नंतः । क्षपकैर्वारितोऽपि तैः ॥ कफं तं तेमनी-
कृत्य । करंमं बुभुजे मुनिः ॥ ४३ ॥ व्यराध्यंत समाधिस्था । यन्मयामी तपस्विनः ॥ अपु-
नःकरणेनैत—न्मिथ्यादुष्कृतमस्तुमे ॥ ४४ ॥ इति ध्यानमहावातो—द्धूतदुष्कर्मशैवले ॥
केवलश्रीमेरालीना—खेलत्तस्यात्मपल्वले ॥ ४५ ॥ तदैव स्वर्णकमलं । समलंकृत्य दैवतं ॥ श-
मद्रुमसुधां चक्रे । साधुचक्री स देशनां ॥ ४६ ॥ नत्वा केवलिनं सैवं । देवता क्षपकान् ज-

गौ ॥ महिमानममानं भो । बालस्यास्यप्रपश्यत ॥ ४७ ॥ विहाय वस्तपोराशीन् । बालेऽस्मिन्ननुरागिणीं ॥ मामिवोपलजध्वे किं । नाधुना केवलश्रियं ॥ ४८ ॥ ते दध्युर्ज्ञानमुत्पेदे । यदेतस्य तपोविना ॥ ततस्तत्प्रशमायत्तं । तं विना वंचिता वयं ॥ ४९ ॥ न कषायात्तचित्तस्य । स्यात्तपोऽपि फलप्रदं ॥ अंतर्वह्नि वसंतोऽपि । किं नु पल्लवति द्रुमं ॥ ५० ॥ एवं ते शममापन्ना । वव्रिरे केवलश्रिया ॥ क्रमादवक्रमानंचु—र्गतिं पंचापि पंचमीं ॥ ५१ ॥ यन्नागदत्तस्य मुनेरनेकदा—श्नतोऽपि तेषां च तपस्यतामपि ॥ इयान् विशेषः किल केवलश्रिया । चक्रे तदेतत्प्रशमस्य जृंभितं ॥ ५२ ॥ इत्युपदेशचिंतामणौ कषायजये नागदत्तमुनिकथा. ॥

तदेवमुक्तः कषायनिग्रहरूपः संयमः. अथ पंचेंद्रियनिग्रहरूपं तं प्रस्तावयन्नाह—

॥ मूलम् ॥—अकसाइत्तं इच्छइ । जइ ता कुण इंदियाण निग्गहणं ॥ मुत्तूण रागदोसे ॥ पंचसु सद्दाइविसएसु ॥ ६७ ॥ व्याख्या—हे चारित्रिन्! यदि त्वमकषायत्वमिच्छसि, तदा कुरु इंद्रियाणां श्रोत्रनेत्रजिह्वाघ्राणस्पर्शानां निग्रहं. कथमित्याह—पंचसु शब्दादिषु शब्दरूपरसगंधस्पर्शेषु तद्विषयेषु रागद्वेषौ मुक्त्वा. अयं भावः—यदा वेणुवीणावनितात्र

लयादीनां शुभं, काककरभघूकघरट्टादीनां त्वशुभं शब्दमाकर्ण्य, विभूषितहयहस्तिहरिणाक्षीणां शुभं, वृद्धकुष्टिकुणपादीनां त्वशुभं रूपं निरीक्ष्य; कर्पूरागुरुचंदनादीनां शुभं, मलमूत्रमृतगात्रादीनां त्वशुभं गंधमाघ्राय, मधुमत्स्यंडीमोदकादीनां शुभं, रूक्षपर्युषितान्नक्षारजलादीनां त्वशुभं रसमास्वाद्य, तरुणीतूलिकादुकूलादीनां शुभं, दृषत्कंटककर्करादीनां त्वशुभं स्पर्शमनुभूयेष्टमेतन्ममेति रागः, अनिष्टमेतन्ममेति द्वेषश्च नोपजायते, तदा क्रमेण श्रोत्रादींद्रियनिग्रहो भवति. एतेषु निगृहीतेषु कषाया निग्रहीता एव, तन्मूलत्वात्कषायाणां. तथाहि—अनिष्टेष्विंद्रियार्थेषु गोचरं गतेषु क्रोधः, प्राप्तसर्वेंद्रियसुखस्य च नान्यो मत्तः सुखीत्यभिमानः, इंद्रियार्थसाधनस्य धनस्य चार्जनाय मायालोभौ प्रादुर्भवतः. जितेंद्रियस्य च निर्हेतुकत्वात्कथं नाम क्रोधादयः प्रवर्तेरन्? ततः कषायजयमिच्छता पूर्वमिंद्रियजयः कार्य इति तत्वं. ॥ ६७ ॥ अथेंद्रियजयस्य दुष्करत्वमाह—

॥ मूलम् ॥—हणइ रणंमि अरिणो । अरिणसेणंपि भुअबलेण भडो ॥ पिंडत्थे पंचरिऊ । निहणेउं सोवि किवुव ॥ ६८ ॥ व्याख्या—कश्चिद्भट्टो भीमभार्गवादिहरिशिखरिशि-

खरानुकारिकरिनिकरां, जलधिकल्लोललोलरंगत्तुरंगसंयतां; चलत्प्रासादप्रतिमपृथुलरथसंमर्दडुःसंचरां, निजबलसमुल्लसत्सुभटकोटिकोलाहलवाचालितसकलदिग्वलयां, निशितेतरवारिपरिघपट्टिशप्रमुखप्रहरणप्रस्थापितपरप्राणामरीणां सेनामपि ज़ुजबलेनारीणोऽखिन्नःसन् हंति, सोऽपि पिंकस्थान् पंचरिपूनिंद्रियलक्षणान्निहंतुं क्लीबः कातर इव चेष्टते. ॥ ६० ॥ अथेंद्रियनिग्रहोपायमाह—

॥ मूलम् ॥—सव्वत्थ अहयदप्पा । इंदियसप्पा न तं परिज्नवंति ॥ हिययम्मि जस्स जग्गइ । इय अणुसिट्ठिमहामंतो ॥ ६९ ॥ व्याख्या—सुगमा, तामेवानुशिष्टिमाह—

॥ मूलम् ॥—परिमियमाउ जुव्वण—मसंठियं वाहिबाहियं देहं ॥ परिणइविरसा विसया । अणुरज्जसि तेसु किं जीव ॥ ७० ॥ व्याख्या—यदा कस्यचित्साधोर्भुक्तज्ञोगस्य पूर्वक्रीमितस्मरणादिना, इतरस्य च कुतूहलीतया इंद्रियाण्युछृंखलीज्नवंति, तदा स एवमात्मानमनुशास्ति. गाथार्थः सुगम एव. ॥ ७० ॥ विषयाणां वैरस्यमेव ज्ञावयति—

॥ मूलम् ॥—धम्मधणवहारिणं । अणेगजवलक्खडुक्खकारिणं ॥ विसयाण अरीणंपि-

व । को मइमं देइ अवयासं ॥ ३१ ॥ व्याख्या—स्पष्टा, न वरं, अवयासंति अवकाशं. ॥ ॥ ३१ ॥ अथ पूर्वानुभूतदिव्यसुखस्मरणं हि करुणेषु (तुच्छेषु) मनुष्यभोगेषु वैराग्यं जनयतीति तद्व्याख्यानमाह—

॥ मूलम् ॥—बहुलद्धधणो तरुणो । चिरागओ सह मणाणुकूलाए ॥ भज्जाए पंचविसए । भुंजंतो जं लहइ सुक्खं ॥ ३२ ॥ तो वंतराण सुक्खं । णंतगुणं भवणवासिणं तत्तो ॥ तो जोइसाण वेमा—णियाण कमसो अणंतगुणं ॥ ३३ ॥ व्याख्या—इह मनुष्यलोके तरुणो युवा पंच विषयान् शब्दादीन् भुंजानो यत्सौख्यं लभते, तरुणस्याप्येकाकिनो न तादृग्मनोविनोदः स्यादित्याह—भार्यया, सापि यदि अयोग्या, तदा कुतो रतिरित्याह—मनोऽनुकूलया, तस्यापि दारिद्र्ये क्व सौख्यमित्याह—लब्धधनः, एवंविधोऽपि सततं गृहावस्थायितया न तादृग्मान्यः स्यादित्याह—चिरागतः. अयं भावः—कश्चिद्युवा देशांतरे षोडश वर्षाणि स्थित्वा तत्रोपार्जितप्रभूतद्रव्यः स्वस्थानमायातः स्नातः सरसलसदशनद्वयभोजनजनिततृप्तिः सुकुमारस्पर्शशयनीये कमनीयरूपसंपन्निर्जितरंभया, भयभ्रांतहरिणानुहारिनेत्रया, सकल-

कामोपचारचतुरया, वयोवेषवचनविन्नासादिगुणग्रामसमग्रया, सर्वांगसंगतसौवर्णशृंगारया, चिरमिलनोत्कंठासंवर्धितस्नेहग्रहिलया महिलया सह स्वेछया पंचविधान् विषयानुपभुंजानो यत्सौख्यमनुभवति, ततस्तस्मात् सौख्याद्विविधं अल्पर्द्धिकमहर्द्धिकादिकमंतरं येषां तेऽव्यंतराः पिशाचादयस्तेषां सौख्यमनंतगुणं, ततस्तस्माद्व्यंतरसौख्याद्भवनेषु बहिर्वृत्तेष्वंतश्चतुरस्रेष्वधः पुष्करकर्णिकासंस्थानेषु वसंतीत्येवंशीला भवनवासिनो नागकुमारादयोऽसुरकुमाराणां प्रायेणावासेष्ववस्थानात्. आवासाश्च कायमानस्थानीया महामंरूपास्तेषां सौख्यमनंतगुणं, ततोऽसुरकुमाराणां सौख्यमनंतगुणमित्यनुक्तमपि बोधव्यं. ततो द्योतयंति स्वशिरोमुकुटाग्रवर्तिभिः स्वमंफलकल्पैश्चंद्रादिचिह्नैर्जगदीति ज्योतिषश्चंद्रादयः, तेषां सौख्यमनंतगुणं, तस्माज्ज्योतिःसौख्याद्विविधं मन्यंते भुज्यंते पुण्यवद्भिरिति विमानानि, तेषु भवा वैमानिकाः कल्पोपपन्नादयस्तेषां सौख्यमनंतगुणं चंद्रप्रज्ञप्त्याद्यागमेषु प्रतिपादितं, तच्च त्वया हे आत्मन्ननंतशोऽनुभूतं. यदागमः—सोहम्मीसाणेसुणं कप्पेसु सव्वे पाणा, सव्वे भूया, सव्वे जीवा, सव्वे सत्ता पुढविकाइयत्ताए जाव वणस्सइकाइयत्ताए देवत्ताए देवित्ताए, आसणसयणजा-

णत्तंभोवगरणत्ताए उववन्नपुव्वा, हंता गोयमा! असइं अदुवा अणंतखुत्तो सेसेसु कप्पेसु, एवं चेव नवरं नो चेवणं देवित्ताए जाव गेविज्जगा अणुत्तरोववाइएसुवि, एवं चेव नो चेवणं देवत्ताए देवित्ताएत्ति. ॥ ७३ ॥ ततश्च—

॥ मूलम् ॥—जाइत्तिएहिं दिव्वेहिं । तुह न जोगेहिं पसमिया तिह्ना ॥ सा कह समिही माणु—सएहिं तुच्छेहिं कलुणेहिं ॥ ७४ ॥ व्याख्या—सुगमा, न वरं तुच्छैः क्षणिकत्वादल्पैः, करुणैर्मानुष्यशरीरिणां मलमूत्रादिमयत्वाज्जुगुप्सनीयैः, उक्तं च स्थानांगे—सिंगारा कामा देवाणं, कलुसा कामा मणुस्साणं, बीभच्छा कामा तिरिक्खजोणीयाणं, रुद्दा कामा नेरईयाणं. सूक्तं चात्र, किंच—

॥ मूलम् ॥—विसएसु सुहं पिच्छसि । न उ नरयं जीव कंडरीउव्व ॥ जह मुच्छाए मच्छो । पिच्छइ मंसं न उण वडिसं ॥ ७५ ॥ व्याख्या—सुगमा, नवरं वडिशं मत्स्यबंधनं गलिकेति प्रसिद्धं. ॥ ७५ ॥ कंडरीककथानकं यथा कंडरीककथा—

पृष्ठचंपा जनादृष्ट—कंपा पूरस्ति भारते ॥ तत्र सालः क्षमापालः । कालः प्रत्यर्थिनाम-

भूत् ॥ १ ॥ तत्रोद्याने सुभूभागे । वर्द्धमानो जिनेश्वरः ॥ अन्यदा पुण्यदानाय । सोल्लासः समवासरत् ॥ २ ॥ प्रभोर्वाक्यामृतैः शांत–भवतापः क्ष्मापतिः ॥ महासालेऽनुजे राज्य–श्रियं सालो न्यधित्सत ॥ ३ ॥ उत्के संयमराज्याय । तस्मिन् राज्यमगृह्णति ॥ आहूयाभास कांपिल्या–द्भागिनेयं स गागलिं ॥ ४ ॥ तस्मै प्रदत्तराज्योऽथ । श्रीवीरचरणांतिके ॥ प्राव्राजीत्सानुजन्मासौ । साध्वाचारमबुद्ध च ॥ ५ ॥ अन्यदा मगधदेशा–द्वंश्चंपापुरींप्रति ॥ ताभ्यां व्यज्ञप्यत स्वीय—ज्ञातीन् वंदयितुं जिनः ॥ ६ ॥ श्रीगौतमं पुरस्कृत्य । जगदीशनिदेशतः ॥ जग्मतुः पृष्टचंपां तौ । महर्षी हर्षशालिनौ ॥ ७ ॥ समं मात्रा यशोमत्या । पित्रा पिठरभूभुजा ॥ गागलिः सपरिवारं । ववंदे गौतमं गुरुं ॥ ८ ॥ श्रीगौतमरवेर्गोभि–र्बोधिताच्चित्तपंकजात् ॥ भवाशाभ्रमरी तेषां । त्रयाणामपि निर्ययौ ॥ ९ ॥ पुत्रप्रदत्तराज्यश्रीः । पितृभ्यां सह दुर्वहां ॥ महाव्रतधुरां वोढुं । नाभवद्गागलिर्गलिः ॥ १० ॥ कलभैरिव यूथेशः । पंचभिस्तैः समन्वितः ॥ कृतकृत्यस्ततो नंतु । श्रीवीरं गौतमोऽचलत् ॥ ११ ॥ धन्या वयममी येषां । संपन्नो गुरुरीदृशः ॥ इति भावनया प्रापु–र्ज्ञानं ते पंच पंचमं ॥ १२ ॥ न गौती-

रा गुरुमपि । स्वं से ज्ञानमजिज्ञपन् ॥ रहो लब्धं निधानं हि । प्रकाशयति कः सुधीः ॥१३॥
प्रासाः समवसरणं । ते सुरासुरपूजितं ॥ प्रभुं प्रदक्षिणीचक्रु-र्नयज्ञा गुरुणा सह ॥ १४ ॥ ते
स्वामिनमनत्वैवा-सीनाः केवलिपर्षदि ॥ नेते नीतिं विदंतीति । गौतमेन वितर्किताः ॥ १५ ॥
जगौ च गौतमो ज्ञान-हीनानां च तपोधनाः ॥ न निःस्वानामिवाढ्येषु । युक्ता केवलिषु
स्थितिः ॥ १६ ॥ जगदे जगदीशेन । गौतमो गोतमोज्जिदा ॥ आशातयसि किं वत्स । केव-
लज्ञानिनो ह्यमून् ॥ १७ ॥ शिष्याणां केवलं श्रुत्वा । चिखिदे यज्ञणाग्रणीः ॥ तद्युक्तं स्वस्व-
भुक्तेन । जनः सर्वोऽपि तृप्यति ॥ १८ ॥ ज्ञानं प्रापुरमी राज्य-भुजः स्वल्पदिनव्रताः ॥ चि-
रव्रतोऽपि नाहं तु । विममर्शेति गौतमः ॥ १९ ॥ सन्नायामादिदेशाथ । नाथस्तस्य समाधये
॥ भूचरोऽष्टापदं गंता । यः स तद्भवसिद्धिभाक् ॥ २० ॥ तत् श्रुत्वा गौतमो व्योम्ना-ऽचा-
लीदष्टापदंप्रति ॥ लूतातंतून् करे धृत्वा । दिनकृत्करपद्य या ॥ २१ ॥ इतश्चाष्टापदोपांते ।
संति काननवासिनः ॥ कोडिन्यदत्तशेवाल-नामानस्तापसास्त्रयः ॥ २२ ॥ एकद्वित्र्युपवासा-
ख्यं । तपस्तेषां यथाक्रमं ॥ पारणं च फलैः शुष्क-दलैर्नीरसशैवलैः ॥ २३ ॥ तापसानां श-

तान्येकै–कस्य पंच परिछदे ॥ शुश्रुवुस्तेऽपि देवेभ्यो । व्योम्नि तद्वीरभाषितं ॥ २४ ॥ शक्तिं
निजामजानाना–स्त्रयस्ते मोक्षकांक्षिणः ॥ तं तुंगशृंगमारोढु–मारभंत गिरीश्वरं ॥ २५ ॥ ए-
कद्वित्रिषु सोपाने–ष्वारूढानां तपोबलात् ॥ तेषां शक्तिः क्रमात् क्षीणा । स्वल्पतैलेव दी-
पिका ॥ २६ ॥ तत्र स्थित्वा गुणस्तोम–हारिणां व्योमचारिणां ॥ ते श्रीगौतममालोक्या—
लोचयांचक्रिरे मिथः ॥ २७ ॥ एष स्थूलः कथं तूल–लीलया प्लवतेंबरे ॥ यद्वा त्रुटिते श-
क्ति—रनेन तपसैव नः ॥ २८ ॥ अमुमेव गुरुं कुर्मो । येन सिद्धिं लभामहे ॥ एवं प्रजल्प-
तां तेषा–मारुरोह गिरिं गुरुः ॥ २९ ॥ त्रिगव्यूतोछ्रये तत्र । चैत्ये भरतकारिते ॥ इंद्रभू-
तिरवंदिष्ट । चतुर्विंशतिमर्हतां ॥ ३० ॥ अशोकपादपस्याधो । दिश्यैशान्यां जिनौकसः ॥
शिलापट्टे विशश्राम । स्वामी तीर्थोपवासकृत् ॥ ३१ ॥ तदा तत्रागतः श्रीदः । सह सामानि-
कैः सुरैः ॥ जिनपूजां तनोतिस्म । भक्त्या शक्त्या च पूर्णया ॥ ३२ ॥ अष्टापदं समारूढं ।
जीवंतं साधुकुंजरं ॥ तं निरीक्ष्य दधच्चित्रं । व्यमृशन्नरवाहनः ॥ ३३ ॥ जिनयात्रार्थमेताना–
मत्र श्रीगौतमेक्षणात् ॥ बभूव द्विगुणो लाभो । व्यवसायं विनापि नः ॥ ३४ ॥ वंदित्वा धन-

दस्याथ । पुरो नक्त्या निषेडुषः ॥ जगौ जगत्रयीवंद्य—स्तत्वमेवं गणाधिपः ॥३५॥ देवः केव-
लसंपदः पदमजिक्षीणोग्ररागाग्रहः । क्षामांगस्तपसागमोदितगुणग्रामाजिरामो गुरुः ॥ धर्मो
दानदयादमादिजिरजिष्टुत्यः समस्तांगिना—मेतच्चेतसि धारयंतु सुधियो रत्नत्रयं वास्तवं ॥३६॥
श्रुत्वा तत्त्वत्रयीमेवं। श्रीदसामानिकाः सुराः ॥ विकल्पतल्पमध्यासा—मासुरेवमनल्पकं ॥३७॥
वदतस्तपसा कार्श्यं । स्थौल्यं देहेऽस्य वीक्ष्यते ॥ विघटंते गुरोर्वाच—श्चेन्नस्तद्दूषणं किमु ॥
॥ ३८ ॥ अयं नादर्शि जुंजानः । प्रकटं येन वच्महे ॥ पिशुनः पुनरस्यायं । कायो मिष्टाशन-
स्य हि ॥ ३९ ॥ त्रिर्जोजनेऽपि शेषाणां । वपुस्तादृग् न पीवरं ॥ यादृगस्य स्वजावेन । यदि-
वासौ गणाधिपः ॥ ४० ॥ एवं तान् शंसयापन्नां—श्चतुर्ज्ञानखनिर्मुनिः ॥ अन्यथा द्विबुधानां
वः । केयं चिंता जमोचिता ॥ ४१ ॥ वर्ण्यंतेस्म तपःकार्श्य—मस्माभिर्व्यवहारतः ॥ परिमाण-
प्रमाणं हि । जवेन्निश्चयतः पुनः ॥ ४२ ॥ पीवरोऽप्यल्पकर्मा स्या—त्कोऽपि क्षामोऽपि नापरः॥
तन्वप्यतिजरं वज्रं । तूलं न स्थूलमप्यहो ॥४३॥ न हेतुः सदसत्कृत्योः । कृषता स्थूलताथ-
वा ॥ अत्रार्थे पुंमरीकस्या—ध्ययनं शृणुतादृताः ॥ ४४ ॥ विजये पुष्कलावत्यां । प्राग्विदे-

हैकमंरूने ॥ नगर्यां पुंरूरीकिण्यां । महापद्मोऽजवन्नृपः ॥ ४५ ॥ पुंरूरीककंरूरीकौ । तस्या-
जूतां सुतावुन्नौ ॥ धुर्याविव स्वराज्यस्य । वर्धितौ तौ महीभुजा ॥ ४६ ॥ व्याख्यां निशम्य
सूरीणां । नलिनीगुल्मसीयुषां ॥ पुत्रप्रदत्तराज्यश्री–र्महापद्मोऽग्रहीद् व्रतं ॥ ४७ ॥ स चतुर्द-
शपूर्वाब्धि–पारदृश्वा तपोनिधिः ॥ उत्पन्नकेवलज्ञानः । स्थानं प्रापापुनर्भवं ॥ ४८ ॥ जिघृक्षुः
कंरूरीकोऽपि । दीक्षां तस्यांतिके गुरोः ॥ पुंरूरीकं महीपालं । स्थिरधीरन्वजिज्ञपत् ॥ ४९ ॥
सोऽन्यधाद्वत्स किं दीक्षां–तरायं करवै तव ॥ धन्योऽसि जनकक्षुण्णं । पंथानं चेत्प्रपद्यसे ॥
॥ ५० ॥ अजय्या विषया लोलं । मनस्तीव्रतरं व्रतं ॥ तथा कुर्या न हृष्यंति । वत्स मत्स-
रिणो यथा ॥ ५१ ॥ अथासौ जगृहे दीक्षां । बंधुना कारितोत्सवः ॥ विहरन् गुरुभिः साक–
मागमज्ञो बभूव च ॥ ५२ ॥ रोगैरंतः समुत्पन्नै–रन्यदा तत्कलेवरं ॥ तपःशुष्कं कृशीचक्रे ।
शमीकाष्ठं घुणैरिव ॥ ५३ ॥ पुनः श्रीसूरयः प्राप्ता । नगरीं पुंरूरीकिणीं ॥ पुंरूरीकेण भूज-
र्ज्ञा–त्येत्य जक्त्या ववंदिरे ॥ ५४ ॥ शशिसोमं मुनिस्तोमं । नामं नामं नरेश्वरः ॥ कंरूरी-
कर्षिं क्षीण–देहं वीक्ष्य गुरून् जगौ ॥ ५५ ॥ पिंरूः किं कंरूरीकस्य । तपसा वा रुजाथ-

वा ॥ कयाचिच्चिंतया यद्वा। भगवन् दृश्यते कृशः ॥५६॥ गुरवोऽथ जगुर्नित्यं । तपः कृत्यं म-
हात्मभिः ॥ कथं तार्यो भवांभोधि-रिति चिंतापि शाश्वती ॥५७॥ पुनरस्य कृषे रोगे-र्जघसे
प्रासुकाशिनः ॥ निरौषधं वपुर्गेह-मनाथमिव तस्करैः ॥ ५८ ॥ पितृप्रायो यतिजन-स्यान्य-
धाद्वसुधाधवः ॥ उपेक्ष्यते प्रज्ञोवह्नि-स्फुलिंग इव नामयः ॥ ५९ ॥ तपस्तावज्जपस्ताव-त्ता-
वद्धर्मो गुणा अपि ॥ यावत्पतति नात्मायं । दुःसाध्यव्याधिसंकटे ॥ ६० ॥ धर्मः स्याद्रक्षिते
देहे । रक्ष्यते तेन तद्बुधैः ॥ तदादिशत येनैवं । साधुमुल्लाघयाम्यहं ॥ ६१ ॥ कंडरीक-
मथादिक्षद् । गुरुराजः सगौरवं ॥ चिकित्सय वपुः साधो । बंधोराशां च पूरय ॥ ६२ ॥ गु-
र्वाज्ञया समं भ्रात्रा । गतोन्तर्नगरं मुनिः ॥ अंतिके राजसौधस्य । तस्थौ सद्मनि पुष्कले ॥
॥ ६३ ॥ अगदैरगदंकारा । आदिष्टा अवनीभुजा ॥ तं लघूल्लाघयांचक्रु-र्गुरवश्चान्यतो ययुः
॥ ६४ ॥ अंतरांतःपुरं तत्त-द्भक्ष्यग्रहणलंपटः ॥ पुष्टो बभूव देहेन । प्रमादेन च स क्रमात्
॥ ६५ ॥ सातगौरवतः क्षीणा-मपि ग्लानिमियेष सः ॥ स्थानवासाय मिष्टान्ना-शनाय प्रति-
भूर्हि सा ॥ ६६ ॥ वचःप्रवयणे राज्ञा । प्रेरितोऽपि गुरून् प्रति ॥ वार्तामपि विहारस्य । अ-

द्धौ गलिवन्न सः ॥ ६७ ॥ तमथो पृथिवीनाथो । बलेनापि व्यहारयत् ॥ श्रावका अंकुशा-
यंते । यतीनां हि प्रमादिनां ॥ ६८ ॥ आसाद्य कंचन ग्राम-माश्रितः स्थपुटां कुटीं ॥ लेने
पर्युषितं रूक्षं । नैक्षं जिक्षाकृणे मुनिः ॥ ६९ ॥ प्रजावतीरसवती-रसग्रसनलालसः ॥ ईक्षु-
कीट इवारिष्टे । जक्के तस्मिन्न सोऽतुषत् ॥ ७० ॥ स दध्यिवान् क तत्सौधं । सस्नेहाः श्रा-
विकाः क्व ताः ॥ क्व सा रसवती सर्वं । डुष्टदैवेन हूरितं ॥ ७१ ॥ यस्मादिह नवे कष्टं । किं
परत्र सुखं ततः ॥ विद्वांसोऽपीति किं तत्र । व्रते रज्यंति जंतवः ॥ ७२ ॥ अलं व्रतेन राज्यां-
श-मादास्येऽहं पुनर्निजं ॥ इति निश्चित्य स व्रात्यो । ववले कव्लेह्रया ॥ ७३ ॥ प्रातः पुर्या
जपवनं । वनपालेन भूपतिं ॥ स्वागमं ज्ञापयामास । कंकरीकः स निस्त्रपः ॥ ७४ ॥ वज्रपात-
मिव श्रुत्वा । बंधोराकस्मिकागमं ॥ तमज्यगान्नृपः साकं । सचिवैः शुचिवेषनाक् ॥ ७५ ॥
जपधिं चौरवद् वृक्ष-शाखायामवलंबितं ॥ लुठंतं शाद्वले तं च । स लुलोके लुलायवत् ॥
॥ ७६ ॥ मन्येऽसौ सर्वथोत्तीर्ण-चेताश्चारित्रपर्वतात् ॥ स्तुत्यस्तथापि स्तुत्या हि । कदाचिं-
न्नजते त्रपां ॥ ७७ ॥

विमृश्येति महीनाथः । संतुष्टाव यथा तथा ॥ सोऽधः श्वभ्रपथं शोध्धु-मिवैक्षत तथा तथा ॥ ७७ ॥ सर्वथाप्यवषणोऽसा-विति मत्वा महीपतिः ॥ तमूचे यदि गृह्णासि । राज्यं तद्ब्रूहि बांधव ॥ ७९ ॥ वार्तयापि तया जातो-ल्लासायास्मै ददौ नृपः ॥ स्ववेषं तस्य वेषं च । स्वेनादाय चचाल सः ॥ ८० ॥ दधानो राजचिह्नानि । सावेशः स विशन् पुरि ॥ अवकीर्णीति नालोकि । लोकैः प्रीतिस्पृशा दृशा ॥ ८१ ॥ असौ नेमे न सामंतैः । सिषेवे न च सेवकैः ॥ न च सिंहासनस्थोऽपि । रेजे भेक इवांबुजे ॥ ८२ ॥ अकुंठोत्कंठयाकंठं । बुभुजे भोजनक्षणे ॥ स नानारसमाहारं । आह्वाहूत इव द्विजः ॥ ८३ ॥ अत्याहारादभूत्तस्य । क्षणान्मूढविसूचिका ॥ अभुक्तश्चापि भुक्तश्चा-हारो हा रोगकारणं ॥ ८४ ॥ विलपंतं तयैवार्त्या । वेल्लंतं शयने भृशं ॥ सविद्या अपि वैद्यास्त-मुपैक्षंत कृतव्रतं ॥ ८५ ॥ नवं प्रवर्तये तैलं । रे वैद्या वैद्यनामकं ॥ चेज्जीवामीति जल्पाकः । प्राणैरपि स तत्यजे ॥ ८६ ॥ अहो कर्मगतिर्घोरा । यत्तादृग् क्षपकोऽपि सः ॥ रौद्रध्यानवशाल्लेभे । सप्तमे नरके स्थितिं ॥८७॥ इतश्च त्यक्तराज्यश्रीः । पुंडरीकः स पिप्रिये ॥ जितप्रत्यर्थिवत्क्षीण-व्याधिवत्तीर्णवार्धिवत् ॥ ८८ ॥ कृताष्टम-

तपाः क्वापि । ग्रामे शीताशनाशनात् ॥ उदरव्यथयालिंगि । स जन्मावधिन्नोगन्नाक् ॥ ७९ ॥
सम्यग्देवगुरुध्यानं । पीडार्त्तोऽपि न सोऽमुचत् ॥ ईक्षुदंडः कटूयेत । किं यंत्रेणापि पीडितः
॥ ८० ॥ गुरून् द्रक्ष्यामि कर्हीति । चिंतया स्वं पवित्रयन् ॥ मिथ्यादुःकृतदानेन । समस्तै-
नांसि शोधयन् ॥ ८१ ॥ कृतार्थं मन्यमानः स्व-मेकाह्निक्यापि दीक्षया ॥ पुंडरीको विपद्या-
न्नू-द्देवः सर्वार्थसिद्धिगः ॥ ८२ ॥ युग्मं ॥ पुष्टोऽपि पुंडरीकोऽन्नू-द्देवः क्षामोऽपि सोऽनुजः ॥
नारकोऽजनि तद्देवा । न्नावस्यैव प्रमाणता ॥ ८३ ॥ श्रुत्वेति जहृषुः सर्वे । श्रीदसामानिकाः
सुराः ॥ तेषु श्रीवज्रजीवस्तु । तदध्ययनमग्रहीत् ॥ ८४ ॥ तत्र रात्रिदिवं स्थित्वा । प्रन्नाते
वलितः प्रन्नुः ॥ नक्तैर्दृष्टोऽद्रिसोपान-स्थितैस्तैस्तापसाधिकैः ॥ ८५ ॥ प्रणम्य प्रार्थितो दी-
क्षां । तैरुत्खातशिरोजकैः ॥ देवतादत्तने पथ्यान् । सर्वान् प्रन्नुरदीक्षयत् ॥८६॥ शिष्याश्चलत
येन श्री-वीरं वंदामहे गुरुं ॥ एवमालाप्य तानिंद्र-न्नूतिः प्रास्थित सुस्थितः ॥ ८७ ॥ अय-
मीदृग्गुणागारं । गुरुश्चास्य स कीदृशः ॥ इति न्नावनया नुन्ना-स्तेऽपि सर्वे तमन्वयुः ॥८८॥
न्नोक्ष्यध्वेऽद्य किमित्युक्ता । गुरुणा ते ययाचिरे ॥ पायसं कायसंतोषि । कदाहारकदर्थिताः

॥ ९९ ॥ संनिकृष्टाद्यो गोष्टात् । प्रभुरेकं पतद्ग्रहं ॥ आनयत्पायसंपूर्णं । दुर्लभं तादृशां
हि किं ॥ १०० ॥ कृष्णचित्र इव क्षिप्ते । पात्रे तत्रेंद्रभूतिना ॥ स्वदक्षिणकरांगुष्ठे । न पाय-
समक्षीयत ॥ १ ॥ शिष्यव्रातं कणेहत्या–ऽबूभुजद्वसुभूतिजः ॥ व्याधाच्च पारणं स्वेन । सा-
वशेषेण तेन सः ॥ २ ॥ ध्यायँल्लब्धिं गुरोर्भुक्त्वा । शेवालः प्राप केवलं ॥ सत्यं लाजकरो
जज्ञे । स हि तस्य गणाधिपः ॥ ३ ॥ प्राकारपुष्पप्रकरा–दिकां वीरजिनेशितुः ॥ श्रियमालो-
क्य दत्तोऽपि । वव्रे केवलसंविदा ॥ ४ ॥ लोकोत्तरस्फुरद्रूपं । साक्षाद्वीक्ष्य जगत्प्रभुं ॥ आ-
नंच पंचमं ज्ञानं । कौडिन्यः सपरिच्छदः ॥ ५ ॥ प्रभुं प्रदक्षिणीकृत्य । यांतः केवलपर्षदं ॥
गौतमेन न्यषेध्यंत । ते सुवत्सलया धिया ॥ ६ ॥ दधानो वनवासित्वा–त्तेषु मुग्धमृगभ्रमं ॥
सोऽज्ञापि प्रभुणा वत्स । किं केवलिषु कुप्यसि ॥ ७ ॥ निशम्य केवलं तेषां । केवलं शोक-
मावहन् ॥ वीरेणोचे स किं जैनी । वाक् तथ्या वितथाथवा ॥ ८ ॥ तथ्या चेत्तर्हि किं ध-
न्य । मद्गिरं नानुमन्यसे ॥ आवामंते भविष्याव–स्तुल्याविति पुरातनीं ॥ ९ ॥ चतुर्धाः स्युः
कटाः शुंब–छिदलाजिनकंबलैः ॥ मयि त्वं कंबलकट–प्रेमा तन्नैषि केवलं ॥ १० ॥ निर्वाणे

मम ते ज्ञान-मिति वीरगिरा गुरुः ॥ गौतमोऽमोदत प्रोक्त-मेतत्सर्वं प्रसंगतः ॥११॥ इतीह दुष्टायति कंडरीक-राजस्य सम्यक् चरितं निशम्य ॥ चिराय चारित्रमवाप्य चारु । को याति मोहं विषयेषु विद्वान् ॥ १२ ॥ इत्युपदेशचिंतामणिटीकायां कंडरीककथा. ॥

तदेवं विषयगृद्धानां नरकनिपातं निध्यायाथ विशेषवैराग्याय तद्दुःखानि विज्ञावयति—

॥ मूलम् ॥—सव्वो पुग्गलकाओ । सव्वं जलनिहिजलं च संमिलियं ॥ न हु नारयाण सक्कइ । खुहं पिवासं जवसमेउं ॥ ७६ ॥ व्याख्या—सर्वस्त्रैलोक्योदरविवरवर्ती घटपटजवनवनादिपरिणामेन परिणतोऽपरिणतो वा पुद्गलकायो मूर्तद्रव्यराशिः संमिलितः समुदितः, तथा सर्वमसंख्येयानां जलनिधीनां जलं च संमिलितं, नैव नारकाणां क्षुधां पिपासां चोपशमयितुं शक्नोति. अयं जावः—यदि कदाचिदसत्कल्पनया नारकाः सर्वं पुद्गलकायं, सर्वं च जलं युगपदज्यवहरंति, तथापि तेषां क्षुत्तृष्णे न शाम्यतः. एवं नाम ते नित्यं क्षुधितास्तृषिताश्च वर्तंते, इति. उक्तं च जीवाजिगमे—इमीसेणं जंते रयणप्पभाए पुढवीए नेरइया केरिसं खुहं पिवासं पच्चुप्ननमाणा विहरंति? गोयमा! एगमेगस्सणं रयणप्पजापुढवी-

नेरइयस्स असप्भावपठ्ठवणाए सवोदही वा सवपुग्गले वा आसगंसि पखिविज्जा, नो चेव णं से रयणप्पभाए पुढवीए नेरईए तित्तेवासिया वितह्वेवासिया परिस्सयणं गोयमा! रयण-प्पभाए पुढवीए नेरइया खुहं पिवासं पच्चणुप्भवमाणा विहरंति. एवं जाव अहे सत्तमाएत्ति. ॥ ७६ ॥ अन्यच्च—

॥ मूलम् ॥—जे उह्वेइया तत्थ। ते य इह लोहगारअगणिंमि ॥ खित्ता चंदणसित्ताव। तावमणिंति सवंपि ॥ ७७ ॥ व्याख्या—तत्र तेषु नरकेषु ये नैरयिका उष्णवेदकाः संति, तत्राद्ये नरकत्रये सर्वेषु नरकावासेषु, चतुर्थे च भूयस्सु नरकावासेषु, पंचमे च स्वल्पेषु तेषु नैरयिकाः शीतयोनावुत्पद्य मुहूर्तात्परत उष्णक्षेत्रं संक्रांता उष्णां वेदनां वेदयंति. ते उष्ण-वेदना नारका असत्कल्पनया तत उध्धृत्य इह मनुष्यलोके लोहकाराणां, उपलक्षणात् कांस्यकृतादीनां चाग्नौ क्षिप्यंते, क्षिप्ताः संतस्तत्क्षणाच्चंदनक्षिप्ता इव, उपलक्षणात् कदलीदलवीज्यमाना इव सर्वमपि प्राक्तनं तापमपनयंति, एवं नाम तत्र तैरुष्णवेदना अनुभूयंते, उक्तं च जीवाभिगमे—असप्भावपठ्ठवणया उसिणवेयणिज्जेहिंतो नरएहिंतो नेरइए उवट्ठिए

समाणे जाइं इमाइं मणुस्सलोए नवंति अयागराणि वा, तंबागराणि वा जाव इट्टयागराणि वा कवेल्लागराणि वा जाव जंतवाडचुल्ली वा, तत्ताइं समजोईभूयाइं फुल्लकिंसुयसमाणाइं जालासहस्साइं पमुच्चमाणाइं अंतो हूहूयमाणाइं चिट्ठंति ताइं पासइ पासइ ताइं उग्गहइ उग्गहइ, सेणं तत्थ उण्हंपि पविणिज्जा, तण्हंपि खुहंपि जरंपि दाहंपि पविणिज्जा निद्दाइज्ज वा पयलाइज्ज वा सइं वा धिइं वा रइं वा मइं वा उवलभिज्जा सीए सीयभूए सायासुखबहुलेयावि विहरिज्जत्ति ॥ ७७ ॥ तथा—

॥ मूलम् ॥—जेसीयनारया ते। इह हिमकुंडम्मि माहरयणीए ॥ सुत्ता निव्वायगिहिव्व। सीयमवणिंति तक्कालं ॥ ७८ ॥ व्याख्या—इह चतुर्थ्यां नरकपृथ्व्यां स्वल्पेषु, पंचम्यां च प्रभूतेषु अधस्तन्योर्नरकपृथ्व्योः सर्वेष्वपि नरकावासेषु नारका उष्णयोनावुत्पद्य मुहूर्तात्परतः शीतक्षेत्रं संक्रांताः शीतवेदनां वेदयंति. ते शीतवेदका नारकास्तत उध्धृत्यासत्कल्पनया इह मनुष्यलोके माघमासस्य रजन्यां रात्रौ हिमकुंडे स्थाप्यंते, ततस्ते तत्र सन्निहितज्वलल्लोहशकटीके दत्तकपाटसंपुटे निर्वातगृह इव सुप्तास्तत्कालं शीतमपनयंति. उ-

क्तं च तत्रैव—गोयमा! असप्नावपन्नवणाए सीयवेयणेहिं तो नेरइएहिंतो नेरइए उक्किट्ठिए समाणे जाइं इमाइं इह मणुस्सलोए नवंति, तं जहा-हिमाणि वा, हिमपुंजाणि वा, हिमपम्लाणि वा; हिमकुंमानि वा, ताइं पासइ पासइ ताइं उग्गहइ उग्गहइ. से णं तत्थ सीअंपि पविणिज्जा, खुहंपि पविणिज्जा, जाव उसिणे उसिणभूए सायासुखबहुलेयावि विहरिज्जत्ति. ॥ ७७ ॥ अथोपसंहारमाह—

॥ मूलम् ॥—किं बहुणा अवरकयं । खित्तनवं नारयाण जं दुक्खं ॥ तं जाणंतोवि जिणो । न सक्कए कहिउमन्नस्स ॥ ७ए ॥ व्याख्या—किं बहुनोक्तेन? स्वल्पाक्षरैरेव तावदुच्यमः, नारकाणामपरैः परमाधार्मिकैः प्राग्नववैरिन्निर्देवनारकादिन्निर्वा कृतं अपरकृतं, तथा क्षेत्रानुनावाद्भवतीति क्षेत्रभवं च यद्दुःखं, तत्रापरकृतं कुंनीपचनन्राष्ट्रनर्जनवैतरण्यवतरणासिपत्रवननयनसर्वलोहरथवाहगृध्रपक्षिनक्षणव्योमोल्लालनत्रिशूलवेधनोष्णवालुकालोलनकरचरणकर्त्तनपट्टिशविदारणविरूपन्नाषणादिकं, क्षेत्रनवं तु कुणपादपि डुर्गंधायां, कुहूरात्रेरपि तमोमय्यां, क्रकचादपि दारुणस्पर्शायां नूमाववस्थानं, परमकालकठिनडुर्गंधदेहत्वं,

नित्यक्षुधित्वं, अनिष्टाहारोच्छ्वासत्वं च. तत्र क्षेत्रजवं सप्तस्वपि नरकपृथ्वीष्वपरकृतं तु षष्ठिमेव यावदत्र परस्परकृता वेदना, तत्वतः परकृतैवेति न पृथगभिहिता. तत्तेषां दुःखं जिनः केवली सर्वज्ञतया जानन्नप्यन्यस्य कथयितुं न शक्नोति. आयुषः परिमितत्वाद्वाचः क्रमवर्तित्वाच्च. ततो यदि जिनोऽपि वक्तुं न शक्तस्ततः कथमस्मादृशैस्तदुच्येतेति गाथार्थः ॥७९॥

अथ प्रकृतमाह—

॥ मूलम् ॥—इय चिंतंतो नारय-दुहाइं तक्कारणेसु विसएसु ॥ अणुरायमबंधंतो । जिइंदिओ नणु मुणि होइ ॥ ८० ॥ व्याख्या—उत्तानार्था. तदेवमुक्त इंद्रियजयरूपः संयमः, संप्रति गुप्तित्रयात्मकं तं विवक्षुराह—

॥ मूलम् ॥—मणवयणकायजोगा । सुसंवुडा तिन्नि हुंति गुत्तीओ ॥ दिंति किर उप्पजुत्ता । एए दुक्खोहमक्खोहं ॥ ८२ ॥ व्याख्या—युज्यंते इति योगा मनोवचनकायलक्षणाः, सुष्टु आगमोक्तविधिना संवृत्ता अकुशलकर्मेभ्यो निवर्तिताः कुशलकर्मणि प्रवर्तिता इत्यर्थः, त्रयो गुप्तयो भवंति. तत्र मनसः सुसंवृतत्वं मनोगुप्तिः, वचनस्य सुसंवृतत्वं वचनगु-

प्तिः, कायस्य सुसंवृतत्वं कायगुप्तिरिति. असंवृतत्वे प्रत्यपायमाह—किलेत्यागमोक्तौ, एते योगा दुःप्रयुक्ताः संतोऽक्षोभं दुर्निरोधं दुःखौघं ददाति. ॥ ७२ ॥ तत्र पूर्वं मनोगुप्तिमभिधित्सुर्मनसः प्राधान्यमाह—

॥ मूलम् ॥—कम्माण बंधमुक्खो । जं अणुयत्तंति मणपरीणामं ॥ तम्हा मणजोगुच्चिय । गुरुउ तिएहंपि जोगाणं ॥ ७३ ॥ व्याख्या—यद्यस्मात्कारणादष्टानामपि कर्मणां बंधमोक्षौ अन्वयव्यतिरेकाभ्यां मनस एव परीणाममनुवर्तते. तथाहि—मायाविनो दुष्टेन मनसा परस्य विश्वासनार्थं वचसामृतमपि किरतः, कायेन विनयादिकमप्याचरतोऽस्त्येव मायाप्रत्ययः कर्मबंधः. इत्यस्य पुनः सुप्रणिहितमनसः सुनृतं वक्तुकामस्य सहसात्कारादिनाऽसत्यमपि वदतो दयापरिणतस्य च सहसात्कारादिना जीवमपि घ्नतो नास्ति तत्प्रत्ययः कर्मबंधः. यदार्ष—उच्चालियंमि पाए । इरियासमियस्स संकमट्ठाए ॥ वावज्जेज्ज कुलिंगी । मरिज्जंतं जोगमासज्ज ॥ १ ॥ न उ तस्स तन्निमित्तो । बंधो सुहुमोवि देसिउ समए ॥ अणवज्जो य पउगेण । सव्वभावेण सो जम्हा ॥ २ ॥ तस्मान्मनोयोग एव त्रिष्वपि योगेषु

गुरुः प्रधानः. उक्तन्यायेन तस्यैव बंधमोक्षौ प्रत्यंगरंगत्वात्. वाक्कायप्रयोगयोस्तु गौणत्वादत एव सुस्थचित्तस्य विषयान् गृह्णतोऽपि नास्ति दोष इत्याह—॥ ८१ ॥

॥ मूलम् ॥—गिह्णंतु इंदियाइं । नियनियविसये न कोइ वारेइ ॥ जइ रागदोसकलुसिय-मेयं चिय होइ नो चित्तं ॥ ८२ ॥ व्याख्या—स्पष्टा, अत्र श्लोकः—न शक्यं रूपमद्रष्टुं । चक्षुर्गोचरमागतं ॥ रागद्वेषौ तु यौ तत्र । तौ बुधः परिवर्जयेत् ॥ १ ॥ ८२ ॥ एतदेवाह—

॥ मूलम् ॥—जो तिव्वो कम्माणं । बंधो सो रागदोसनिम्माउ ॥ मायालोभो रागो । मच्छरमाणा भवे दोसो ॥ ८३ ॥ व्याख्या—इह प्रकृतिप्रदेशस्थित्यनुभागभेदाच्चतुर्धा कर्मणां बंधः, तत्र प्रकृतिबंधः कर्मणां ज्ञानावरणादिस्वभावापादनं (१). प्रदेशबंधः स्वात्मप्रदेशावगाढकर्मवर्गणांतर्गताऽभव्यानंतगुणसिद्धानंतगुणहीनपरमाणुनिष्पन्नानंतकर्मस्कंधग्रहणं (२.) स्थितिबंधः कर्मणामंतर्मुहूर्तादिसप्ततिसागरोपमकोटाकोटिपर्यंतस्थितिविधानं (३). अनुभागबंधः कर्मपरमाणूनां ग्रहणक्षण एव सुखदुःखविपाकहेतुमधुरकटुतिक्तादिरसत्वापादनरूपः (४). एषु यः कश्चित्तीव्रश्चिरस्थितिकतया कटुरसतया च दुःखविपाकहेतुर्दुरपोहश्च कर्मणां

बधः, स रागद्वेषनिर्मितो रागद्वेषोपचये उपचीयते, तदपचये त्वपचीयते इत्यर्थः. यद्यपि मिथ्यात्वाविरतिकषाययोगाः सामान्येन बंधहेतवोऽभिहितास्तथापि स्थितिबंधेऽनुभागबंधे च मुख्यतया कषाया एव व्याप्रियंते, मिथ्यात्वादयस्तु तत्सहकारणानि भवंतीत्यवमुच्यंते. यदागमः—जोगा पयडिपएसं ठिइ अणुभागं कसायाउ कुणइत्ति. ननु यदि कषायाः कर्मणां स्थित्यनुभागबंधहेतवस्ततो रागद्वेषयोः किमायातमित्यत्रोच्यते. नैवं, रागद्वेषयोः कषायात्मकत्वात्. तथा चाह—मायेत्यादि, एषु कषायेषु यौ मायालोभौ तौ राग इति व्यपदिश्येते. यौ च मत्सरमानौ क्रोधाहंकारौ तौ द्वेष इति. अयं भावः—प्रीत्यप्रीती हि रागद्वेषयोर्लक्षणं, ततश्च लोभोऽभिष्वंगात्मकत्वात्प्रीतिरूपः, मायामपि किंचिदभिलषन् प्रयुक्ते, अभिलाषश्च प्रीतिरूप इति, सापि प्रीत्यात्मिका. ततो मायालोभौ प्रीत्यात्मकत्वाद्रागः, तथा क्रोधोऽप्रीत्यात्मकः प्रतीत एव. मानोऽपि परगुणासहनत्वादप्रीत्यात्मकः, ततोऽप्रीत्यात्मकत्वादेतौ द्वावपि द्वेषः. एतत्संग्रहनयमतेनोक्तं. शेषनयविचारस्त्वत्र प्रज्ञापनावृत्तेरवसेयः. ततो रागद्वेषयोः कषायेभ्योऽभिन्नत्वात् कषायकृतौ कर्मणां

स्थित्यनुभागौ रागद्वेषकृतावपि प्रतिपत्तव्यौ. उक्तं च प्रज्ञापनायां–जीवाणं भंते नाणावरणिज्जं कम्मं कइहिं ठाणेहिं बंधंति? गोयमा! दोहिं ठाणेहिं, तं जहा–रागेण य दोसेणय. रागे दुविहे पन्नत्ते, तं जहा–माया य लोभे य. दोसे दुविहे पन्नत्ते, तं जहा–कोहे य माणे य, इच्चे एहिं चउहिं ठाणेहिं वीरियउवग्गहिएहिं एवं खलु जीवा नाणावरणिज्जं कम्मं बंधंति. एवं दंसणावरणिज्जं जाव अंतरायं. ॥ ७३ ॥ अथ रागद्वेषाभिभूतस्य मनसश्चपलाद्भुतमालोक्य विस्मित इव प्राह—

॥ मूलम् ॥—लंघई तरुणो गिरिणो य । लंघए लंघए जलनिहीवि ॥ भमइ सुरासुरठाणे । एसो मणमक्कडो कोइ ॥ ७४ ॥ व्याख्या—एष मनोमर्कटः कोऽप्यपूर्वः, यतो मर्कटस्तरूनेव लंघते, मनश्च न केवलं तरूनेव लंघते, गिरींश्च मेर्वादीन् लंघते जलनिधीन् समुद्रानपि लंघते, भ्राम्यति च सुरासुरस्थानयोः स्वर्गपातालयोः, ततोऽपूर्वमेवास्य किमपि कापेयमितीह सर्वेष्वपि वस्तुषु प्रायो मर्कटश्चपलतरो भवतीति तद्ग्रहणं ॥ ७४ ॥ अत एवेदं दुर्दममित्याह—

बंधः, स रागद्वेषनिर्मितो रागद्वेषोपचये उपचीयते, तदपचये त्वपचीयते इत्यर्थः. यद्यपि मिथ्यात्वाविरतिकषाययोगाः सामान्येन बंधहेतवोऽभिहितास्तथापि स्थितिबंधेऽनुभागबंधे च मुख्यतया कषाया एव व्याप्रियंते, मिथ्यात्वादयस्तु तत्सहकारणानि भवंतीत्यवमुच्यंते. यदागमः—जोगा पयडिपएसं ठिइ अणुभागं कसायाउ कुणइत्ति. ननु यदि कषायाः कर्मणां स्थित्यनुभागबंधहेतवस्ततो रागद्वेषयोः किमायातमित्यत्रोच्यते. नैवं, रागद्वेषयोः कषायात्मकत्वात्. तथा चाह—मायेत्यादि, एषु कषायेषु यौ मायालोभौ तौ राग इति व्यपदिश्येते. यौ च मत्सरमानौ क्रोधाहंकारौ तौ द्वेष इति. अयं भावः—प्रीत्यप्रीती हि रागद्वेषयोर्लक्षणं, ततश्च लोभोऽभिष्वंगात्मकत्वात्प्रीतिरूपः, मायामपि किंचिदभिलषन् प्रयुक्ते, अभिलाषश्च प्रीतिरूप इति, सापि प्रीत्यात्मिका. ततो मायालोभौ प्रीत्यात्मकत्वाद्रागः, तथा क्रोधोऽप्रीत्यात्मकः प्रतीत एव. मानोऽपि परगुणासहनत्वादप्रीत्यात्मकः. ततोऽप्रीत्यात्मकत्वादेतौ द्वावपि द्वेषः. एतत्संग्रहनयमतेनोक्तं. शेषनयविचारस्त्वत्र प्रज्ञापनावृत्तेरवसेयः. ततो रागद्वेषयोः कषायेभ्योऽभिन्नत्वात् कषायकृतौ कर्मणां

ज्ञानादिगुणेभ्य उच्छन्मनःसमाधिं प्राप्नुयात्. ॥ ८८ ॥ अथ अशरणत्वभावनामाह—

॥ मूलम् ॥—पिउमाउभयणिभज्जा-भजाण पच्चक्कमिक्कमाणाणं ॥ जीवं हरेइ म-च्चू । पुण कोइ न होइ से सरणं ॥ ८९ ॥ व्याख्या—स्पष्टा, न वरं मृत्युरिह परभवायुरुदयः, न तु लोकप्रसिद्धो यम इति. एवं मरणाद्यापदि स्वमशरणं भावयन्नजरामरस्थानलाभाय यतते. ॥ ८९ ॥ अथैकत्वभावनामाह—

॥ मूलम् ॥—गमणं आगमणं जम्म-णं च इक्कस्स होइ जीवस्स ॥ इक्को सुही दुही वा । इक्को चिय जाइ परमपयं ॥ ९० ॥ व्याख्या—उत्तानार्था, नवरं गमनं भवांतरंप्रति, आगमनं च पूर्वभवात्. एवं वस्तुवृत्त्या स्वस्य सर्वत्रैकत्वं ध्यायन् धर्ममेवात्मनः सहायं कुर्यात्. ॥ ९० ॥ अथान्यत्वभावनामाह—

॥ मूलम् ॥—चिरलालियंपि देहं । जइ जियमंतंमि नाणुवट्टेइ ॥ ता तंपि होइ अन्नं । धणकणयाईण का वत्ता ॥ ९१ ॥ व्याख्या—पाठसिद्धा, नवरं "नाणुववट्टेइत्ति" नानुवर्तते जीवं गच्छंतं नानुगच्छतीत्यर्थः. एवं तनुधनस्वजनादिष्वन्यत्वं ध्यायन्न तेषु तात्विकं स्नेहं

॥ मूलम् ॥— जिप्पई सुहेण वयणं । जिप्पंति सुहेण कायचिठ्ठाउ ॥ पण डुज्जेयं अवगय । सुयसारस्साविं मणमिणमो ॥ ७५ ॥ व्याख्या—जीयते सुखेनानायासेन वचनं उष्ठपुटमीलनेन स्वाध्यायादिना वा. कायचेष्टा अपि सुखेन जीयंते, आसनबंधेन वैयावृत्त्यादिव्यापृततया वा. पुनरिद साक्षादनुभूयमानं मनोवगतश्रुतसारस्यापि परिशीलितप्रवचनंरहस्यस्यापि मुनेर्डुर्जेयं चपलत्वात्. ॥ ७५ ॥ ततस्तज्जयोपायमाह—

॥ मूलम् ॥—ता तस्स थिरीकरणठ-मायरो जावणासु कायव्वो ॥ ता असुहाउ अणेगा । सुहाउ एत्तं दुआलसहा ॥ ७६ ॥ व्याख्या—उत्तानार्था, ता एवमाह—

॥ मूलम् ॥—अधुवाऽसरणेगत्ता-वरत्तजव असुइ आसवोवाए ॥ संवरनिज्जरधम्मे । लोगं बोहिं च जावेइ ॥ ७७ ॥ व्याख्या—एषा द्वारगाथा व्यक्तार्था. ॥ ७७ ॥ तत्र पूर्वमध्रुमवत्वभावनामाह—

॥ मूलम् ॥—सामित्तणधणजुव्वण-रइरूववलाउइठ्ठसंजोगा ॥ अइलोला वणपवणा-हयपायवपक्कपत्तव्व ॥ ७८ ॥ व्याख्या—सुगमा, एवं समस्तजावानामध्रौव्यं जावयन् ध्रुवेभ्यो

ज्ञानादिगुणेष्य उच्छन्मनःसमाधिं प्राप्नुयात्. ॥ ७७ ॥ अथ अशरणत्वजावनामाह—

॥ मूलम् ॥—पिउजाउजयणिजज्जा-जजाण पच्चक्खमिक्खमाणाणं ॥ जीवं हरेइ मच्चू । पुण कोइ न होइ से सरणं ॥ ७७ ॥ व्याख्या—स्पष्टा, न वरं मृत्युरिह परजवायुरुदयः, न तु लोकप्रसिद्धो यम इति. एवं मरणाद्यापदि स्वमशरणं जावयन्नजरामरस्थानलाजाय यतते. ॥ ७७ ॥ अथैकत्वजावनामाह—

॥ मूलम् ॥—गमणं आगमणं जम्म-णं च इक्कस्स होइ जीवस्स ॥ इक्को सुही डुही वा । इक्को चिय जाइ परमपयं ॥ ७७ ॥ व्याख्या—उत्तानार्था, नवरं गमनं जवांतरंप्रति, आगमनं च पूर्वजवात्. एवं वस्तुवृत्त्या स्वस्य सर्वत्रैकत्वं ध्यायन् धर्ममेवात्मनः सहायं कुर्यात्. ॥ ७० ॥ अथान्यत्वजावनामाह—

॥ मूलम् ॥—चिरलालियंपि देहं । जइ जियमंतंमि नाणुवट्टेइ ॥ ता तंपि होइ अन्नं । धणकणयाईण का वत्ता ॥ ७१ ॥ व्याख्या—पाठसिद्धा, नवरं "नाणुववट्टेइत्ति" नानुवर्तते जीवं गछंतं नानुगछतीत्यर्थः. एवं तनुधनस्वजनादिष्वन्यत्वं ध्यायन्न तेषु तात्विकं स्नेहं

विजृंयात्. ॥ ए१ ॥ अथ जवजावनामाह—

॥ मूलम् ॥—जाइमिगं मुंचंतो । अवरं जाइं तहेव गिह्णंतो ॥ जमइ चिरं अविरामे । जमरोव्व जिउं जवारामे ॥ ए२ ॥ व्याख्या—व्यक्तार्था, नवरं जीवपक्के जातिरेकेंद्रियादिका, ज्रमरपक्के जातिर्मालती, सा हि ज्रमस्य प्रायः प्रियातस्तद्ग्रहणं. उक्तं च—कलियामिसेण उ नेउं । अंगुलिं मालईमहमहियं ॥ वारेइ जा समत्था । मइइंतं महुअरजीवाणं ॥ ॥ १ ॥ एवं हि जवज्रांतीर्जावयन् ज्रमणजीरुस्तासु विरज्येत ॥ए२॥ अथाशुचित्वजावनामाह—

॥ मूलम् ॥—मेयवसरेयमलमुत्त-पूरियं चम्मवेढियं तत्तो ॥ जंगममिव वच्चहरं । कह एयं सुज्झए देहं ॥ ए३ ॥ व्याख्या—सुबोधा, नवरं, मेदः शरीरस्थूलत्वापादकोऽस्थिकृद्धातुः. वसा नलिकांतर्वर्ती स्नेहः. रेतो वीर्यं. एवं शरीरस्य नित्यमशुचित्वं चिंतयन् तत्पावित्र्यं व्यवहारमात्रेण कुर्वाणस्तात्विकयै विशुद्धये जंतुरुद्यच्छेत्. ॥ए३॥ अथाश्रवजावनामाह—

॥ मूलम् ॥—मिथ्यत्ताविरइकसाय-जोगहेऊहिं हेउं अणुरूवं ॥ जं कम्मपुग्गलाणं । गहणं सो आस्रवो होइ ॥ ए४ ॥ व्याख्या—इहाश्रवस्य सामान्यतो मिथ्यात्वाविरतिकषा-

ययोगलक्षणाश्चत्वारो हेतवः, विस्तरतस्तु सप्तपंचाशत, तथाभिग्रहिकानाभिग्रहिकाभिनिवेशिकसांशयिकानाभोगिकभेदात्पंचधा मिथ्यात्वं. षट्कायारंभान्मनइंद्रियासंयमाच्च द्वादशधाऽविरतिः. अनंतानुबंधिक्रोधादयः षोडश प्रागुक्ताः पुंस्त्रीनपुंसकभेदाद्वेदास्त्रयः. हास्यरत्यरतिशोकभयजुगुप्साश्चेति पंचविंशतिः कषायाः. सत्यासत्यसत्यामृषाऽसत्यामृषामनोवचनौदारिकौदारिकमिश्रवैक्रियवैक्रियमिश्राहारकाहारकमिश्रकार्मणभेदात्पंचदश योगाः, सर्वेऽप्यमी सप्तपंचाशदाश्रवहेतवः. पंचेंद्रियचतुष्कषायपंचाव्रतत्रियोगपंचविंशतिक्रियाभेदादमी द्विचत्वारिंशदप्युच्यंते. एतैर्मिथ्यात्वादिभिर्हेतुभिर्हेत्वनुरूपं, हेतुप्राबल्ये प्रबलं, तद्दौर्बल्ये स्वल्पं यत्कर्मपुजलानां ग्रहणमादानं क्रियते, स आश्रवो भवति. एवमाश्रवद्वाराणां कर्मबंधहेतुतां भावयंस्तत्पिधानाय यतेत. ॥ ए४ ॥ अथ संवरभावनामाह—

॥ मूलम् ॥ आसवहेउपिधानं । सम्मत्ताइहिं संवरो नेउ ॥ पिहियासवो हि जीवो । सुतरिव तरेइ भवजलहिं ॥ ए५ ॥ व्याख्या—सम्यक्त्वमादिर्येषां विरतिप्रशमगुप्तीनां, तैः सम्यक्त्वादिभिः प्रकारैर्यत्पूर्वोक्तानामाश्रवहेतूनां मिथ्यात्वादीनां पिधानं स्थगनं स संवरो

ज्ञेयः. संवरस्य फलं साक्षादाह—पिहिताश्रवो हि जीवः सुतरीव तरति भवजलधिं, यथा तरी स्थगितजलप्रवेशद्वारा सुखं जलधिं तरतीति योगः. ॥ ९५ ॥ अथ निर्जराभावनामाह—

॥ मूलम् ॥—कम्माण पुराणाणं । निकंतणं निज्जरा दुवालसहा ॥ विरयाण सा सकामा । तहा अकामा अविरयाणं ॥ ९६ ॥ व्याख्या—पुराणानां प्राग्बद्धानां कर्मणां तपसा निकर्त्तनं छेदनं निर्जरेत्युच्यते. बध्यमानकर्मविषयः संवरः प्राग्बद्धकर्मविषया च निर्जरेत्यनयोर्भेदः. इयं च द्वादशधा. बाह्यस्याभ्यंतरस्य च तपसः षड्भेदत्वात्. तत्र बाह्यं तपः षोढा. यथा—अणसणमुणोयरिया । वित्तीसंखेवणं रसच्चाओ ॥ कायकिलेसो संलीण-या य बज्झो तवो होइ ॥ १ ॥ तत्रानशनमाहारत्यागः, तद् द्विधा, इत्वरं यावत्कथितं च. तत्रेत्वरं चतुर्थादिषण्मासांतं, यावत्कथितं तु पादपोपगमनेंगितमरणभक्तपरिज्ञाभेदात् त्रिधा. तथा ऊनोदरता. बत्तीसं किर कवला । आहारो कुच्छिपूरिओ भणिओ ॥ पुरिसस्स महिलयाए । अट्ठावीसं भवे कवला ॥१॥ इत्येवंरूपस्य स्वाहारमानस्य संक्षेपात्पंचधा, तद्यथा—अप्पाहारादिवड्ढा । दुभागपत्ता तहेव किंचूणा ॥ अट्ठ दुवालस सोलस—चउवीसिगतीसकवलेहिं ॥२॥ तथा वृत्तेर्भिक्षाच-

र्यथाः संक्षेपो द्रव्याद्यभिग्रहविशेषैः संकोचनं वृत्तिसंक्षेपः, तथा रसाः क्षीरादयस्तत्परिहारो रसत्यागः, तथा कायस्यासनबंधेन लोचादिना वा कष्टकरणं कायक्लेशः, स्त्रीपशुपंडकादिवर्जितस्थानेऽवस्थानं संलीनता, एतत्तपः क्रियमाणं लोकेनापि ज्ञायते, कथंचित्कुतीर्थिकैरपि क्रियते, इति बाह्यमुच्यते.

अथाभ्यंतरं षोढा यथा—पायच्छित्तं विणओ । वेयावच्चं तहेव सज्झाओ ॥ झाणं उस्सग्गोवि य । अप्भंतरओ तवो होइ ॥ १ ॥ तत्र प्रायश्चित्तं दशधा, आलोचनाभेदात्, यदाह— आलोयणपडिक्कमणे । मीसविवेगे तहावि उस्सग्गे ॥ तवछेयमूलअणव—ठ्ठिया य पारंचिए चेव ॥ १ ॥ विनयो ज्ञानादिभेदात्सप्तधा, नाणे दंसणचरणे मणवइकाउवयारिउ विणउत्ति, वैयावृत्यं आचार्यादीनामन्नपानादिसंपादनविधौ व्यापृतत्वं, यदाहुः—आयरिय उवज्झाए । थेरतवस्सीगिलाणसेहाणं ॥ साहम्मियकुलगणसंघ—संगयं तमिह कायव्वं ॥ १ ॥ स्वाध्यायो वाचनादिर्वक्ष्यमाणः पंचधा, ध्यानं धर्मं शुक्लं च, तत्स्वरूपं यथा—सूत्रार्थसाधनमहाव्रतधारणेषु । बंधप्रमोक्षगमनागमहेतुचिंता ॥ पंचेंद्रियव्युपरमश्च दया च भूते । ध्यानं तु

धर्म्यमिति संप्रवदंति तदज्ञाः ॥ १ ॥ यस्येंद्रियाणि विषयेषु पराङ्मुखानि । संकल्पकल्पनविकल्पविकारदोषैः ॥ योगैः सदा त्रिनिरहो निभृतांतरात्मा । ध्यानोत्तमं प्रवरशुक्लमिदं वदंति ॥ २ ॥ उत्सर्गो द्रव्यतो गणशरीरोपध्याहारत्यागात्, भावतः क्रोधादित्यागात्. एतत्तपो लोकैरनभिलक्ष्यत्वात्तत्रांतरीयैश्च सम्यगनासेव्यमानत्वान्मोक्षप्राप्त्यंतरंगत्वाच्चाभ्यंतरमित्युच्यते. इयं द्वादशधापि निर्जरा विरतानां विरतिपरिणतानां सकामा, सह कामेनासेवनाभिलाषेण वर्तते इति व्युत्पत्तेः. तथाऽविरतानां विरतिपरिणामरहितानां दारिद्र्यादिहेतुभिः स्वयमेव भवति सा निर्जरा अकामा भवति. निर्जरां हि भावयन् सकामनिर्जराप्रवृत्त्या चिरबद्धान्यपि कर्माणि निर्जीयेदिति. ॥ ए६ ॥ अथ धर्मभावनामाह—

॥ मूलम् ॥—धम्मो जिणेहिं निरुवहि–उवयारपरेहिं सुठु पन्नत्तो ॥ समणाणं समणो वा–सयाण दसहा डुवालसहा ॥ ए७ ॥ व्याख्या—स्पष्टा, नवरं श्रमणानां धर्मो दशधा क्षांत्यादिर्वक्ष्यमाणः. धर्मभावनां हि भावयन् शुभानुबंधि सत्कर्म संचिनुयात्. ॥ ए७ ॥ अथ लोकभावनामाह—

॥ मूलम् ॥—अहमुहगुरुमल्लयठिय–लहुमल्लयजुअलसंठियं लोगं ॥ धम्माइयं च दव्वेहिं । पूरियं मणसि चिंतिज्जा ॥ ५७ ॥ व्याख्या—अधोमुखमवाङ्मुखं गुरु बृहत्प्रमाणं मल्लकं शरावस्तस्योपरिस्थं लघु, अधस्तनमल्लकापेक्षयाऽल्पप्रमाणं मल्लकयुगलं शरावसंपुटं, तद्वत्संस्थितं संस्थानं यस्य तं. अधोमुखगुरुमल्लकस्थितलघुमल्लकयुगलसंस्थितं लोकं मनसि चिंतयेत् इदमुक्तं भवति—अधस्तनलोकतलात् सप्तरज्जुविस्ताराद्रूर्ध्वं शनैः शनैः संकुचन् लोकस्तिर्यग्लोके एकरज्ज्वायतो भवति. ततोऽप्यूर्ध्वं क्रमेण विस्तारं भजन् ब्रह्मलोकतृतीयप्रस्तटे पंचरज्ज्वायतो भवति. ततश्च पुनः शनैः शनैः संक्षेपं भजन् सर्वोपरितने लोकाग्रप्रदेशप्रतरे रज्जुप्रमाणो भवति. ततो भवति यथोक्तसंस्थानो लोकः. कथंभूतं लोकं? धर्मादिभिः पंचभिर्द्रव्यैः पूरितं. तत्र स्वभावतो गतिप्रवृत्तानां जीवपुद्गलानामुपष्टंभकारी मत्स्यानां जलमिव धर्मास्तिकायः. एवं स्थितिरतानां तेषामुपष्टंभदायी पथिकानां छायेवाऽधर्मास्तिकायः. एतौ च द्वावपि लोकालोकव्यवस्थाहेतू प्रदेशतः प्रमाणतश्च लोकाकाशतुल्यौ. तथा एतेषामेव स्थितिगतिप्रवृत्तानामवकाशदानादवगाहनधर्माकाशास्तिकायः. तथा चेतना ल-

क्षणः कर्मणां कर्ता भोक्ता च जीवनधर्मा जीवास्तिकायः. तथा भूभूधराभ्रादिसमस्तवस्तूनां परिणामिकारणं पूरणगलनधर्मा पुद्गलास्तिकायः. एतेष्वाद्याश्चत्वारोऽमूर्ताः, अंत्यस्तु मूर्तः. जीववर्जाः सर्वेऽप्यचेतनाः. एतैः पंचभिर्द्रव्यैः पूरितोऽयं लोकः. न हि स कश्चिदेकोऽपि प्रदेशो लोके विद्यते यत्र धर्माधर्माकाशानामेकैकः प्रदेशो जीवपुद्गलानां चानंताः प्रदेशाः स्वस्वरूपेण नावतिष्ठंत इति. अत्र च मनुष्यक्षेत्रे एव वर्तिष्णुत्वात् षष्टस्य कालद्रव्यस्य ग्रहणं न कृतं. एवं हि लोकस्वरूपं भावयन् धर्मध्याने स्थैर्यं लभते. यदार्ष—खिइवलयदीवसायर—नरयविमाणभवणाइसंठाणं ॥ वासाइपइठाणं । नियय लोगठिइविहाणं ॥ १ ॥ धर्मध्यानी ध्यायेदिति शेषः. ॥ ए७ ॥ अथ बोधिभावनामाह—

॥ मूलम् ॥—पंचिंदियत्तणाइय—सामग्गीसंभवेवि अइदुलहा ॥ तत्तावबोहरूवा । बोही सोहि जियस्स जउ ॥ एए ॥ व्याख्या—प्रकटार्था, नवरं यतो यस्माद्बोधेर्मिथ्यात्वपंककलुषस्य जीवस्य शोधिर्भवति. एवं बोधेर्दुर्लभतां भावयन् धनांगनादिव्यतिरेकेण बोधिलाभमेव प्रार्थयेत्. ॥ एए ॥ अथोपसंहरन्नाह—

॥ मूलम् ॥—जाविज्जंतं इह जा-वणाहिं कल्लाणसाहयं होइ ॥ चलरसचलंपि चित्तं । पसन्नचंदस्सव जईणं ॥ १००॥ व्याख्या—यतीनां मुनीनां प्रसन्नचंद्रस्य राजर्षेरिव चेतश्च-लरसवलमपि पारदवच्चपलमपि, इति पूर्वोक्ताभिर्भावनाभिर्भाव्यमानं सत् कल्याणसाधकं पुण्यानुबंधि भवति. चलरसोऽपि गुरुगम्याभिर्भावनाभिर्भाव्यमानः पीतधातोः साधको भव-तीति संटंकः. ॥ १०० ॥ प्रसन्नचंद्रदृष्टांतस्त्वयं—अथ प्रसन्नचंद्रराजर्षिकथा—

सत्कोटिपात्रमस्त्यत्र । पोतवत्पोतनं पुरं ॥ यत्क्रोडे परिचिक्रीडे । लक्ष्मीरंभोधिसंभवा ॥ १ ॥ भूपस्तत्र बभौ सोम-चंद्रो निस्तंद्रविक्रमः ॥ तस्य शीलद्रुमाराम-धरणी धारिणी प्रिया ॥ २ ॥ प्रसन्नचंद्र इत्यासी-त्तनयः सन्नतिस्तयोः ॥ नालीकस्थोऽपि यः क्वापि । नापुष-त्कलंहंसतां ॥३॥ कदापि कुर्वती वेणी-बंधे भूधवमूर्द्धनि ॥ दृष्ट्वैकं पलितं राज्ञी । बभाषे दूतमागतं ॥४॥ इतस्ततस्ततः पश्य-न्नपश्यन् दूतमग्रतः ॥ धारिण्या भूपतिः प्रोचे । विस्मितः स्मितपूर्वकं ॥५॥ संदेह इव सिद्धांते । शुद्धांते तव किं नृप ॥ दूतो विशति तद्दूतं । पश्यामुं पलिताभिधं ॥६॥ सकर्णः कर्णपार्श्वस्थो । न्यग्भूतो वक्त्यसौ तव ॥ संप्राप्तैव जराधाटी । विरम व्याप पापतः ॥ ७ ॥ वि-

षस्रोऽथ नृपोऽध्याय–दहो मोहादचेतसः ॥ पदं मूर्ध्नि ममाधत्त । पलितछलतो जरा ॥ ८ ॥
यन्मूर्ध्नि कृष्णचिकुरप्रकराब्दगम्या । प्रावृट् न बोधरविरेषु विभाति युक्तं ॥ येषां पुनः प-
लितकाशविकाशसारा । श्रीः शारदी स्फुरति तेष्वधिकं न किं सः ॥ ९ ॥ वैरिणी डुर्निवा-
रेयं । पुत्रमित्रजनैरपि ॥ रूपं विनाशयत्येव । पलितं करिणी जरा ॥ १० ॥ भुक्ता भोगाः
कृतं राज्यं । जातश्च तनयो मम ॥ गततारुण्यपूरस्य । सांप्रतं सांप्रतं व्रतं ॥ ११ ॥ एवं चिं-
तातुरं भूपं । सहास्यं धारिणी जगौ ॥ हृतकोश इव स्वामिन् । किं जरां वीक्ष्य खिद्यसे ॥
॥ १२ ॥ जरानिगूहनोपायं । वच्मि नाथ यथातथं ॥ पलितं भ्रमयित्वैत–त्पुरे घोषय सर्वतः
॥ १३ ॥ लोकाः शृणुत यः कश्चि–देवं धवलमूर्धजं ॥ वक्ष्यति क्षितिपं वृद्धं । स ध्रुवं दंडयि-
ष्यते ॥ १४ ॥ राजदंडभयादेवं । कश्चिदुक्ता न ते जरां ॥ वीतशंकस्ततो भोगान् । भुंजी-
था भूप भूरिशः ॥ १५ ॥ भूपः प्रोचे प्रिये हास्यं । किमकांडे विधीयते ॥ जरां कालक्रमाया-
तां । वीक्ष्य वैलक्ष्यमेति कः ॥ १६ ॥ अदृष्टपलिता एव । पूर्वजाः प्राव्रजन्मम ॥ अहं तु प-
लिते दृष्टे । गृहेऽस्मीति त्रपाकरं ॥ १७ ॥ जगाद धारिणी स्वामि–न्नेषा खेदप्रथा वृथा ॥ स-

मयोऽस्ति समर्थस्या–प्यापि प्रव्रजितुं तव ॥ १७ ॥ अथ राज्ञ्याप्यनुज्ञातः । पुत्रं राज्येऽभि-
षिच्य सः ॥ आदाय तापसीं दीक्षां । प्राप भूपस्तपोवनं ॥ १९ ॥ मा च्योष्ठ मे हृदीशेन ।
सह यानमनोरथः ॥ इत्यज्ञापितगर्भैव । राज्ञी तमनुजग्मुषी ॥ २० ॥ दधतोः सोदरस्नेहं ।
जन्मांतरितयोरिव ॥ जंपतीप्रेम तुत्रोट । तत्रोटजगयोस्तयोः ॥ २१ ॥ तत्रासून सुतं राज्ञी ।
धर्मं बुद्धिरिवोज्ज्वला ॥ प्रसूः प्रसूतिरोगार्त्ता । व्यपद्यत तदैव सा ॥ २२ ॥ अवाप्य चंद्रदे-
वीत्वं । देवी प्रेमवशंवदा ॥ बालं तं सैरिभीभूया–रण्ये स्तन्यमपीप्यत ॥ २३ ॥ तस्य राज-
कुमारस्य । वने वल्कलवाससः ॥ नाम वल्कलचीरीति । रीतिज्ञैस्तापसैर्ददे ॥ २४ ॥ वर्द्धमा-
नः स्वकैः पुण्यै–स्तारं तारुण्यमाप सः ॥ शशी शैत्यमिव ग्रीष्मे । जहौ मौग्ध्यं तदापि न ॥
॥ २५ ॥ स प्रीतः स्वयमानीतै–र्दलैः पुष्पफलैर्जलैः ॥ पितरं तर्पयामास । जरसा जर्जरौजसं
॥ २६ ॥ वनं प्रसन्नचंद्रोऽथ । प्रणंतुं पितरं गतः ॥ अनुजं यौवनोद्भेद–सुभगं तमवैक्षत ॥
॥ २७ ॥ अचिंतयच्च बालोऽयं । सोमलः सहते हहा ॥ वनवासव्यथा ज्येष्ठ–बंधौ राज्यधरे-
मयि ॥ २७ ॥ नेजे पित्रोचितं कीर । दारुणातपसेवनं ॥ बाल्येऽप्यसौ किं कुरुते । दारुणा-

तपसेवनं ॥ २९ ॥ पितुस्तपोनिधेः क्रोडे । पारींद्रस्येव संस्थितं ॥ न सूरोऽप्येनमाक्रष्टु–मीष्टे
कश्चित्करोमि किं ॥ ३० ॥ इत्यंतरुल्लसच्चिंता–धूमरीधूसराननः ॥ पुनः स्वःवनं प्राप । नृपः
कृपणनैपुणः ॥ ३१ ॥ अध्यासीनं सभामध्य–मध्यात्मव्यथयाकुलं ॥ पप्रच्छुर्वारवनिता । विन·
यावनता नृपं ॥ ३२ ॥ देवाद्य किं न ते वश्याः । संति शुद्धांतयोषितः ॥ किं वा कन्या स·
लावण्या । कापि कापि निरीक्षिता ॥ ३३ ॥ प्रोक्ते राज्ञा स्वदुःखेऽथ । ताः प्रोचुर्यौवनोन्म·
दाः ॥ तत्तद्बुद्धिमयीरस्मा–नेवात्रार्थे नृपादिश ॥ ३४ ॥ ग्रहीतुं तास्ततो राजा–ज्ञया वल्क·
लचीरिणं ॥ धूर्तविद्या इवांगिन्यो । रथारूढाः प्रतस्थिरे ॥ ३५ ॥ रथेषु शर्कराखंड–मरसं·
कीमोदकादि च ॥ पीयूषरसनिष्पंदे–नेव निष्पादितं न्यधुः ॥ ३६ ॥ जग्मुश्च तत्र यत्रास्ति ।
सोमचंद्रो महामनाः ॥ नाविशंश्च वनं राज–समाजं सरमा इव ॥ ३७ ॥ प्रतीक्षमाणाः परि·
तो । वनं वल्कलचीरिणं ॥ तस्थुर्मूर्ध्नि तरोर्न्यस्य । चरं ताश्चौरचर्यया ॥ ३८ ॥ त्रस्मापह्नुत
देहश्रु–जटांस्तावदाश्रयौ ॥ फलाभिलाषी बालर्षिः । स मुग्धमृगवद्भ्रमन् ॥ ३९ ॥ कृषी·
मानी मनुष्येषु । स्त्रीपुंसव्यक्तिरिक्तधीः ॥ ताताभिवादयामीति । प्रत्येकं सोऽन्यधत्त ता·

॥ ४० ॥ इत्यलौकिकमालोक्य । विनयं तस्य विस्मिताः ॥ मिथः प्रथितहास्यं ताः । स्वं स्वे-
नैव न्यवारयन् ॥ ४१ ॥ तान्यः फलानि वन्यानि । विनीतः सोऽदुढौकत ॥ वर्ण्यतेऽतिथि-
पूजातो । नान्यत्पुण्यं तपस्विभिः ॥ ४२ ॥ चर्वं चर्वं शठास्तास्ता-न्यरसानीति तत्यजुः ॥ भू-
रिखंडानखंडान-प्यदुस्तस्मै च मोदकान् ॥ ४३ ॥ तानास्वाद्य सुधास्वादून् । व्याचष्ट स
पुनः पुनः ॥ न ऋजुस्तस्य जिह्वा सा । रसज्ञेति श्रुता यतः ॥ ४४ ॥ रसगृद्धः स ताः प्रोचे ।
मुनींद्रा आश्रमः क्व वः ॥ मत्पितुर्जरिणो योग्या । कल्या चेयं फलावली ॥ ४५ ॥ अहो ज-
टा सुललिता । भवतां भाति मूर्द्धसु ॥ सौकुमार्यमकल्केषु । वल्केष्वप्यहहोल्बणं ॥ ४६ ॥
युष्माकमंगरागोऽयं । दिशः सुरभयत्यहो ॥ अहो बालद्रुसेकार्थौ । कलशौ वः स्थितौ हृदि
॥ ४७ ॥ कथं हृदीव मालिन्यं । मुखेऽपि श्मश्रुणा न च ॥ किं वायं वदने रागो । वैरी वै-
राग्यशालिनां ॥ ४८ ॥ पाणिपादश्रवोमूर्ध्नि । स्थितोऽपि न दहत्ययं ॥ यत्कृशानुः प्रदीप्तोऽपि
। तदेतद्धि तपोबलं ॥ ४९ ॥ अथ ता जगदुर्वीणा-क्वाणप्राणहरस्वराः ॥ वयमध्यास्महे
बाल-ऋषे श्रीपोतनाश्रमं ॥ ५० ॥ फलश्रेण्यानया तत्र । नित्यं कल्पितपारणाः ॥ कुर्मः क्र-

मागतं कर्म । कलाकेलिगुरोर्गिरा ॥ ५१ ॥ जटावल्कलरागाद्यं । तत्रेदृग्न च दुर्लभं ॥ वक्ष्य-
त्व वदने रागो-ऽनुरागं त्वयि वीक्षिते ॥ ५२ ॥ आश्रमाः संति भूयांसो । न पुनः पोतनो-
पमाः ॥ ऋषयोऽस्मादृशा यत्र । सरागा अपि निर्वृताः ॥ ५३ ॥ तत्र पुत्र त्वमागच्छेः । का-
र्यमेभिः फलैर्यदि ॥ वेत्ति नानारसान् भूरि-भ्रमिभ्रमरवन्नरः ॥ ५४ ॥ स जगाद तदा गूढं
। द्रुमारूढचरश्च ताः ॥ रेरे श्रीसोमचंद्रर्षि-रेति नश्यत नश्यत ॥ ५५ ॥ ता अनेशन्नृषेर्भी-
ता । निहाका इव विद्युतः ॥ मुक्त्वा बालं रथेनाशु । ततो निर्व्याजवाजिना ॥ ५६ ॥ अ-
वाप्य स्वपुरं जात-जीविताशा नरेश्वरं ॥ ह्रिया भिया च नम्रास्या-स्तत्स्वरूपमजिज्ञपन्
॥ ५७ ॥ ततः शतगुणां पीडां । दधानो वसुधाधवः ॥ मग्नः शोकोदधौ कष्टं । गमयामास
वासरान् ॥ ५८ ॥ स चैकाकी जरी तातः । स च भ्रातोभयच्युतः ॥ खादचक्रे शल्यवत्तस्य ।
शश्वदेतद् द्वयं हृदि ॥ ५९ ॥ सोऽपि बालऋषिर्धावं-स्तज्ञाणिक्यमवाप्नुवन् ॥ बभ्राम कान-
ने यूथ-भ्रष्टभल्लूकवच्चिरं ॥ ६० ॥ पितुर्गृहान्नयन्नारीं । निजग्रामं नरः पुरः ॥ तेनादर्शि र-
थारूढः । कोऽपि निःकोपचेतसा ॥ ६१ ॥ तातान्निवादयामीति । ववंदे दंपती स तौ ॥ ज-

हास कामिनी तस्या–नुचितादुपचारतः ॥ ६२ ॥ ऋषिरेष ऋजुर्वन्यो। न परिहासमर्हति ॥ निषेध्येति नरः पत्नीं। क यासीति मुनिं जगौ ॥ ६३ ॥ पोतनाश्रमपांथोऽह–मित्युक्ते मुनिनोन्मनाः ॥ स जगाद तदेहीति। मयाप्यत्रैव गम्यते ॥ ६४ ॥ ऋषिः पथि रथे वीक्ष्य। वाहवाहनमभ्यधात् ॥ निस्तृंशेनेव वाह्यते। किमेतौ हरिणौ त्वया ॥ ६५ ॥ एषोऽस्मदाश्रमाचार। इत्युक्त्वा मोदकानसौ ॥ सुधासमधिकस्वादां–स्तस्यादाद् दृढसौहृदः ॥ ६६ ॥ तत्स्वादवर्धिताह्लादः। स प्रोचे वेद्म्यहं मुने ॥ फलान्येतानि तान्येव। यानि ते तापसा ददुः ॥ ६७ ॥ पथि प्रादुरभूत्तस्य। चौरः क्रूरतरः पुरः ॥ रथी विजित्य तं तस्या–दत्तार्जितचिरं धनं ॥ ६८ ॥ निरजैषमसज्ञोऽपि। यदेनं स्तेननायकं ॥ महिमा सोऽयमस्यैव। ऋषेरित्युन्निनाय सः ॥६९॥ प्रीतस्तं स्वरथे न्यस्य। स ययावुपपोतनं ॥ गुणक्रीतमिवामुष्मै। स्वर्णखंडमदत्त च ॥ ७० ॥ स्वर्णादग्निधिया त्रस्य–न्मुनिस्तेनाभ्यधीयत ॥ मा भैस्तपोभिरास्माकैः। प्रज्ज्वलत्येष नानलः ॥ ७१ ॥ अमी त्वामाह्वयंतीव। पोतनाश्रमपादपाः ॥ चलद्दलकरैः संध्या–मिलदंडजकूजितैः ॥ ७२ ॥ अत्रामुना विना प्रायो। वासस्थानं न लभ्यते ॥ इत्यस्मै

कांचनं दत्वा । स्वग्रामंप्रति सोऽचलत् ॥ ७३ ॥ परिखाविशिखावप्र–सन्नाशोभां निन्नालयन् ॥
विवेशांतःपुरं सायं । नृपाल इव भूपत्नूः ॥ ७४ ॥ चलध्ध्वजपटव्याजा–न्नृत्यंतीव तदागमे ॥
वेश्यावेश्मानि नगर–प्रवेशे प्रददर्श सः ॥ ७५ ॥ जीवन्नेव तपोन्निः किं । लंन्नितोऽस्मि त्रिवि-
ष्टपं ॥ प्रविशंस्तेषु वेश्मैकं । स मुनिर्दध्यिवानिति ॥ ७६ ॥ गौरांगीर्गणिकास्तत्र । वीक्ष्यान्न-
रणन्नासुराः॥ कृशींस्ताणोंटजावास–दग्धदेहान्निनिंद सः ॥ ७७ ॥ कांचिद्भद्रासनासीनां । सोऽ-
न्निवादनपूर्वकं ॥ दत्वा तत्कांचनं वेश्यां । वासस्थानमयाचत ॥ ७८ ॥ गणिका गणकोक्ता-
य । तस्मै दित्सुर्निजांगजां ॥ विवाहस्याथ सामग्रीं । स्वचेटीन्निरकारयत् ॥ ७९ ॥ निषिध्य-
तोऽपि तस्य स्वं । वेणीदंमं प्रदर्श्य सा ॥ मस्तके विभूणोतिस्म । वटपादोपमां जटां ॥ ८० ॥
स्नानांगरागन्नूषाद्यं । विश्वं वारवधूकृतं ॥ अस्याश्रमस्य कल्पोऽय–मित्यसौ बहुमन्यत ॥८१॥
अरुचिर्विषयव्राता–नन्निज्ञोऽपि व्यवाह्यत ॥ शमी शमीसिवाश्वत्थः । स तान्निर्निजकन्यकां
॥ ८२ ॥ विवाहे तत्र यस्तान्नि–र्वाद्यो लूलुध्वनिः कृतः ॥ जाग्रता बंधुवैधुर्या–न्निशि सोऽ-
श्रावि नृन्नुजा ॥ ८३ ॥ दध्यौ नृपतिरद्यैवं । सपौरे मयि दुःखिनि ॥ कस्यायं श्रीमतः प्री-

ति—संगी संगीतकध्वनिः ॥ ७४ ॥ राज्ञानुज्ञातुमादिष्टो । नृत्यः शब्दानुसारतः ॥ ययौ तदे-
व वेश्यौकः । शब्दवेधीव सायकः ॥ ७५ ॥ गणिकां सोऽन्वयधान्मुग्धे । शुचा दग्धेऽद्य नृपतौ
॥ ज्वलति ज्वलने शैत्य—मिव कोऽयं तवोत्सवः ॥ ७६ ॥ सापि वाचां विशेषज्ञो—वाच तं र-
चितांजलिः ॥ प्राग् जामातृचिंतार्ता । कोऽपि कार्तांतिको जगौ ॥ ७७ ॥ अत्रौपैति शिशुः
सायं । यः कश्चिन्मुग्धतापसः ॥ स्वर्णरेखां कषस्येव । तस्य दद्याः स्वनंदिनीं ॥ ७८ ॥ सोऽद्य
सायं समायासी—दाहूतो मन्मनोरथैः ॥ क्रियमाणोऽस्ति वीवाहे । तस्यास्तदयमुत्सवः ॥७९॥
जानेऽहं भूपतेर्दुःखं । जाने रोषं च भूपतेः ॥ अंतरात्मा तु नापत्य—स्नेहार्त्तो गणयत्यदः ॥
॥ ८० ॥ एतत्सर्वं नरेंद्राय । नत्वा नृत्योऽन्यधत्त सः ॥ स एवायं कदापि स्या—दिति नृपो-
ऽप्यमोदत ॥ ८१ ॥ सूर्ये तदाशयोदस्त । इव प्रातः समुद्गते ॥ यैः कुमारो वने दृष्ट—स्तैरे-
त्यावादि नृपतेः ॥ ८२ ॥ नृप रूपवतीसीमां । वेश्यात्रिः प्राभृतीकृतां ॥ परिणीय कनीम-
त्र । बंधुर्विजयते तव ॥ ८३ ॥ आनानयद्वधूयुक्तं । नृपः संसदि सोदरं ॥ जिष्णुर्विष्णुमिव
प्रीत्या । तमायातं स सस्वजे ॥ ८४ ॥ अशिक्ष्यत विलासौघं । निपुणैः स नृपाज्ञया ॥ अवि-

रात्कलिकोद्भेदं । चूतश्चैत्रदिनैरिव ॥ ९५ ॥ उद्गृढानेकनृपाल-बालाश्चटुलचेतसः ॥ तस्या-
तिचक्रमुर्यामा । इव द्वादश वत्सराः ॥ ९६ ॥ निशाशेषेऽन्यदा दध्यौ । कुमारो धिग्मया व-
ने ॥ एकाकी जोगगृध्नेन । मुक्तस्ततोऽपि वैरिवत् ॥ ९७ ॥ शिष्यो गुरोरिवामुष्य । कः फ-
लान्युपनेष्यते ॥ को जलैः सेक्ष्यते बाला-रामं तत्वमिव श्रुतैः ॥ ९८ ॥ अर्जकानिव विश्व-
स्ता-न्निवारांजलिदानतः ॥ प्रीणयिष्यति को बाल-मृगानुटजचारिणः ॥ ९९ ॥ क तन्मे कुं-
जरस्येव । सुखं वनविहारजं ॥ केदं राजगृहस्थस्य । नारीजंजीरबंधनं ॥ १०० ॥ अथ ना-
स्त्रति तच्चिंता-तमो जेतुमिवोदिते ॥ तातपादाब्जसेवायै । स नरेंद्रं व्यजिज्ञपत् ॥ १ ॥
राजा प्रसन्नचंद्रोऽपि । पितुर्मिलनमुत्सुकः ॥ चचालाल्पपरीवारः । सह वल्कलचीरिणा ॥२॥
इतश्च सोमचंद्रर्षि—स्तदारण्ये भ्रमन् भ्रमन् ॥ अपश्यन्नेत्रपीयूष-सत्रं पुत्रं न्यवर्त्तत ॥ ३ ॥
रोदं रोदं चिरं दुःखा-दंधीभूतेक्षणः क्षणं ॥ वर्षेवक्रमयन्निन्ये । सोऽपि द्वादशवत्सरीं ॥४॥
ततः प्रसन्नचंद्रेण । निस्तंद्रेण सबंधुना ॥ संस्थाप्य परितः सैन्यं । मध्येऽरण्यमगम्यत ॥ ५ ॥
कच्चिन्नारंग रंगस्ते । कृशोऽसि त्वमशोक किं ॥ किं माद्यसि माकंद । स कोदुंबर स्मर ॥

॥ ६ ॥ आलाप्यैवं कुमारेंद्रो । नागरानिव पार्थिवः ॥ हर्षाश्रुधारयासिक्त । पुरापरिचर्यांस्त-
रून् ॥ ७ ॥ पुरस्तौ हविक्रियाशून्यं । सेव्यमानं जरन्मृगैः ॥ हस्तन्यस्ताक्षमालाकं । वृद्धं तात-
मपश्यतां ॥ ८ ॥ समादाय निजं नाम । प्रणामपरयोस्तयोः ॥ संस्पृश्य पाणिना पृष्टं । ददौ
राजर्षिराशिषं ॥ ९ ॥ युवापि बालवत्तातो—त्संगविन्यस्तमस्तकः ॥ स्वमागः क्षमयामास ।
रुदन् वल्कलचीर्यपि ॥ १० ॥ द्वैधीभावमिवच्छेत्तु—मालिंगत्सोऽपि तं मुदा ॥ हर्षाश्रुधौत का-
लुष्यं । चक्षुषोः प्राप पाटवं ॥ ११ ॥ प्रविश्योटजमेकांते । पूर्वाभ्यासवशंवदः ॥ त्वङ्मयान्यु-
त्तरीयाणि । कुमारः प्रममार्ज सः ॥ १२ ॥ एवं प्रमार्जनं क्वापि । कृतपूर्वीणि चिंतया ॥ जा-
तिस्मरः स सस्मार । श्रामण्यं प्राग्भवार्जितं ॥ १३ ॥ घटी यामो दिनं पक्षः । स कदा भवि-
ता यदा ॥ सा मे संगस्यते दीक्षा । वियुक्तस्येव वल्लभा ॥ १४ ॥ इति साक्षिणि तद्ध्या-
ना—नले धर्मः पुरोहितः । व्यवाहयत्कुमारेंद्रं । समं केवलसंपदा ॥ १५ ॥ तदा स भगवा-
न् दिव्य—स्वर्णांभोजकृतस्थितिः ॥ सुरासुरसमज्यायां । निर्ममे धर्मदेशनां ॥ १६ ॥ निश-
म्य तद्वचःश्रेणीं । निःश्रेणीमिव निर्वृतेः ॥ सोमचंद्रोऽभजद्दीक्षां । छिन्नमिथ्यात्वबंधनः ॥१७॥

॥३७॥ समनीनहद्श्वेभ–सुभटान् वीर्यशालिनः ॥ प्राचीचलद्बलं सत्रा । शत्रुव्रातैरयूयुधत् ॥ ३९ ॥ युग्मं ॥ ततः पतच्छरासार–रुद्धवैवस्वतद्युतिः ॥ भिन्नेभकुंभाभिव्यक्त–रक्तपूरतरद्रथः ॥ ४० ॥ मिथः संघर्षदुर्द्धर्ष–खड्गखाट्कारभीषणः ॥ निशितोल्लसितानंत–कुंतप्रोतभटव्रजः ॥ ४१ कृतकेतुस्थितछत्र–दंडदंतुरितक्षितिः ॥ उभयोः सैन्ययोरासी–द्भीरुहृद्दारणो रणः ॥ ४२ ॥ त्रिभिर्विशेषकं ॥ अत्रांतरे ववंदे तं । मुनींद्रं श्रेणिको नृपः ॥ न स वीररसव्यग्रो । धर्मलाभयतिस्म तं ॥ ४३ ॥ अहो महोज्ज्वलं ध्यान–महो निस्संगता मुनेः ॥ वंदमानेऽपि भूपाले । यन्मय्येष तृणीयति ॥ ४४ ॥ न मुक्तिरपि मन्येऽस्य । ध्यानादस्माद्दवीयसी ॥ एवं विभावयन् नृपः । श्रीवीरस्यांतिकं ययौ ॥ ४५ ॥ नत्वा स प्रभुमप्राक्षी–द्यदावंदि मया तदा ॥ कालं प्रसन्नचंद्रश्चे–त्करोत्युत्पद्यते क तत् ॥ ४६ ॥ सप्तमं नरकं याति । राजर्षिः स तदा मृतः ॥ इत्युक्ते प्रभुणा दध्या–वध्यात्मं मगधाधिपः ॥ ४७ ॥ क तद्ध्यानं मुनेस्तस्य । पतनं नरके क च ॥ क राजकेलीकलना । क च वर्चोगृहे स्थितिः ॥ ४७ ॥ जाने जैनेश्वरी वाणी । शुश्रुवे व्यत्ययान्मया ॥ यद्वालं चिंतया नार्हन् । पुनः पृच्छति कुप्यति ॥ ४९ ॥

क्षणाद्राज्ञा पुनः पृष्टो । गतिं तस्यावदत्प्रभुः ॥ विमानं याति सर्वार्थ-सिद्धिं चेन्म्रियतेऽधु-
ना ॥ ५० ॥ युक्तैवासौ प्रभोरुक्ति-रिति क्षितिभुजा पुनः ॥ पृष्टो जिनो जगौ जातः । सां-
प्रतं स च केवली ॥ ५१ ॥ पश्यामी समवसृते-रुत्तिष्टंति प्रमोदिनः ॥ देवा देव्यश्च तस्यैव
। विधातुं केवलोत्सवं ॥ ५२ ॥ राजोवाचैकरूपा हि । देव गंगेव गीस्तव ॥ त्रिपथीभूय सं-
देह-मलं किं मय्यवीवृधत् ॥ ५३ ॥ जिनो जगाद भूपाल । यदावंदि च स त्वया ॥ तदा
दुर्मुखदुर्वाक्य-श्रवणोत्पन्नमत्सरः ॥ ५४ ॥ मनसा निजसाम्राज्य-लंपटोऽरिभटैः समं ॥ युं-
ध्यमानोऽभवत्तेन । तस्योचेऽधोगतिर्मया ॥ ५५ ॥ युग्मं ॥ तीर्णकल्पे रणांभोधौ । क्षीणास्त्रः
स निरैक्षत ॥ आयांतं मकरक्रूर-मेकं तुरगिणं पुरः ॥ ५६ ॥ सर्वं हि दोषमतां शस्त्र-मिति
नीतिं स्मरन्नसौ ॥ करं व्यापारयामास । शिरस्काय तमार्दितुं ॥ ५७ ॥ इव जंगलभूखंड-म
केशं हरितांकुरं ॥ शिरः स्पृष्टवतस्तस्य । चारित्रं स्मृतिमाययौ ॥ ५८ ॥ स दध्यौ ही प्रमा-
दो मे । यदादीयत दुर्धरैः ॥ कषायतस्करैर्ध्यान-धनं हृदि निधीकृतं ॥ ५९ ॥ आसन्ने वी-
रमार्तंडे । चेतःस्थश्रुतदीपके ॥ अपत्यप्रेमतमसा । जनोऽयं हंत बाध्यते ॥ ६० ॥ निभ्रन्नेकें-

प्रसन्नचंद्रे निस्तंद्रे । प्राप्ते श्रावकधूर्यतां ॥ श्रीवीरः शिश्रिये पित्रा । सत्रा वल्कलचीरिणा ॥ १८ ॥ प्रसन्नचंद्रनृपाले । पाति तात इव प्रजाः ॥ कदाचित्पोतनपुरे । श्रीवीरः समवासरत् ॥ १९ ॥ आकर्ण्य कर्णपीयूष—पारणं प्रभुदेशनां ॥ सुतं शिशुमपि न्यस्य । साम्राज्ये प्राव्रजन्नृपः ॥ २० ॥ समं भगवता कुर्वन् । विहारं वसुधातले ॥ प्रसन्नचंद्रराजर्षि—र्ययौ राजगृहं पुरं ॥ २१ ॥ व्याख्यावप्रत्रयाग्रेऽसौ । तस्थौ प्रतिमया मुनिः ॥ अंतरंगद्विषद्भंग—कीर्तिस्तंभ इवार्हतः ॥ २२ ॥ यस्य योगत्रयी जैन—ध्यानमंत्रपवित्रिता ॥ स तदा वंदितुं वीरं । चचाल श्रेणिको नृपः ॥ २३ ॥ अभूतां तस्य नासीरे । सुनासीरेरूतेजसः ॥ सुमुखो दुर्मुखश्चेति । यथार्थौ पुरुषावुभौ ॥ २४ ॥ पिंडस्थमिव सद्ज्ञानं । पदस्थमिव संवरं ॥ रूपस्थमिव चारित्रं । रूपातीतं मनोभुवः ॥ २५ ॥ पथि तं सुमुखो वीक्ष्य । महर्षिं हर्षितो जगौ ॥ त्वमेव मुख्यो धुर्याणां । यस्येयं ध्यानसाधना ॥ २६ ॥ युग्मं ॥ पूर्वं बाह्यास्ततः पिंड—वर्तिनोऽपि विजिग्यिरे ॥ द्विषो येन समं तेन । त्वया कः स्पर्धतां भटः ॥ २७ ॥ अथ तं दुर्मुखः प्रोचे । न त्वं सुमुख बुध्यसे ॥ अस्येक्षुयष्टिवन्नूनं । निःफला संयमक्रिया ॥ २८ ॥ राज्ये न्यवे·

शि योऽनेन । बालः स किल वैरिभिः ॥ वारिभिर्दुर्बलः सेतु–रिवाप्लाव्यत संप्रति ॥ २९ ॥
हास्तिकं जगृहेऽश्वीयं । जहे संजहिरे भटाः ॥ अथारि धेनुकं तत्किं । यन्न चक्रेऽस्य वैरि-
भिः ॥ ३० ॥ नास्य कूर्चं मुखे किंतु । पुच्छं तैरश्वलक्षणं ॥ यो जज्ञे नैतदपि य–द्वाले रा-
ज्यं न दीयते ॥ ३१ ॥ दुर्निवारं लगत्येव । व्रतिनोऽप्यस्य तद्रजः ॥ इत्युक्त्वा सोऽग्रतोऽचा-
ली–दहो दोषदृशः खलाः ॥ ३२ ॥ त्यक्त्वा चंदनपंकमत्र रमते श्लेष्मद्रवे मक्षिका । मु-
क्त्वा पल्वलमध्यवारि महिषः पंके लुठत्यन्वहं ॥ हित्वा सुंदरतिग्मरश्मिदिवसं क्रीडत्युलू-
को निशि ॥ प्रायो दिव्यति दूषणे गुणगणत्यागात्खलानां मतिः ॥ ३३ ॥ एभिस्ताडूचनैः क-
ल्पा–वसानपवनैरिव ॥ स्थिरः क्षमाधरः सारा–कारः साधुरचाल्यत ॥ ३४ ॥ ताम्यतिस्म त-
पस्तस्य । गलितं गुणगौरवं ॥ च्युता चारित्रचिंतापि । विशीर्णं श्रुतपाटवं ॥ ३५ ॥ दध्यौ
स किमहं दृष्टो । जीवन्नपि मृतोऽरिभिः ॥ यज्जिघृक्षति मज्जाता–दहो ते राज्यसंपदं ॥३६॥
मय्युदस्तायुधे योधे । युधि भूरिस्फुरन्मुदे ॥ उच्छुंरु इव मातंगे । केऽपरे पशवः परे ॥३७॥
मुनिर्ध्यात्वेति मनसा । जयढक्कामवीवदत् ॥ आजूहवन्महायोधा–नायुधानप्यचिक्षणवत् ॥

॥३८॥ समनीनहद्भश्चेत्र–सुभटान् वीर्यशालिनः ॥ प्राचीचलद्बलं सत्रा । शत्रुव्रातैरयूयुधत् ॥ ३९ ॥ युग्मं ॥ ततः पतच्छरासार–रुद्धवैवस्वतद्युतिः ॥ भिन्नेभकुंभाभिव्यक्त–रक्तपूरतरद्रथः ॥ ४० ॥ मिथः संघर्षदुद्धर्ष–खड्गखाट्कारभीषणः ॥ निशितोल्लसितानंत–कुंतप्रोतभटव्रजः ॥ ४१ कृतकेतुस्थितछत्र–दंडदंतुरितक्षितिः ॥ उभयोः सैन्ययोरासी–द्भीरुहृद्दारणो रणः ॥ ४२ ॥ त्रिभिर्विशेषकं ॥ अत्रांतरे ववंदे तं । मुनींद्रं श्रेणिको नृपः ॥ न स वीररसव्यग्रो । धर्मलाभयतिस्म तं ॥ ४३ ॥ अहो महोज्ज्वलं ध्यान–महो निस्संगता मुनेः ॥ वंदमानेऽपि भूपाले । यन्मय्येष तृणीयति ॥ ४४ ॥ न मुक्तिरपि मन्येऽस्य । ध्यानादस्माद्दवीयसी ॥ एवं विभावयन् नृपः । श्रीवीरस्यांतिकं ययौ ॥ ४५ ॥ नत्वा स प्रभुमप्राक्षी–द्यदावंदि मया तदा ॥ कालं प्रसन्नचंद्रश्चे–त्करोत्युत्पद्यते क तत् ॥ ४६ ॥ सप्तमं नरकं याति । राजर्षिः स तदा मृतः ॥ इत्युक्ते प्रभुणा दध्या–वध्यात्मं मगधाधिपः ॥ ४७ ॥ क तद्ध्यानं मुनेस्तस्य । पतनं नरके क च ॥ क राजकेलीकलना । क च वर्चोगृहे स्थितिः ॥ ४८ ॥ जाने जैनेश्वरी वाणी । शुश्रुवे व्यत्ययान्मया ॥ यद्वालं चिंतया नार्हन् । पुनः पृच्छति कुप्यति ॥ ४९ ॥

क्षणाज्ज्ञा पुनः पृष्टो । गतिं तस्यावदत्प्रभुः ॥ विमानं याति सर्वार्थ-सिद्धिं चेन्म्रियतेऽधुना ॥ ५० ॥ युक्तैवासौ प्रभोरुक्ति-रिति क्षितिभुजा पुनः ॥ पृष्टो जिनो जगौ जातः । सांप्रतं स च केवली ॥ ५१ ॥ पश्यामी समवसृते-रुत्तिष्ठंति प्रमोदिनः ॥ देवा देव्यश्च तस्यैव । विधातुं केवलोत्सवं ॥ ५२ ॥ राजोवाचैकरूपा हि । देव गंगेव गीस्तव ॥ त्रिपथीभूय संदेह-मलं किं मय्यवीवृधत् ॥ ५३ ॥ जिनो जगाद भूपाल । यदावंदि च स त्वया ॥ तदा दुर्मुखदुर्वाक्य-श्रवणोत्पन्नमत्सरः ॥ ५४ ॥ मनसा निजसाम्राज्य-लंपटोऽरिभटैः समं ॥ युध्यमानोऽभवत्तेन । तस्योच्चैऽधोगतिर्मया ॥ ५५ ॥ युग्मं ॥ तीर्णकल्पे रणांभोधौ । क्षीणास्त्रः स निरैक्षत ॥ आयांतं मकरक्रूर-मेकं तुरगिणं पुरः ॥ ५६ ॥ सर्वं हि दोष्मतां शस्त्र-मिति नीतिं स्मरन्नसौ ॥ करं व्यापारयामास । शिरस्काय तमर्दितुं ॥ ५७ ॥ इत्र जंगलभूखंड-मकेशं हरितांकुरं ॥ शिरः स्पृष्टवतस्तस्य । चारित्रे स्मृतिमाययौ ॥ ५८ ॥ स दध्यौ ही प्रमादो मे । यदादीयत दुर्धरैः ॥ कषायतस्करैर्ध्यान-धनं हृदि निधीकृतं ॥ ५९ ॥ आसन्ने वीः रमार्तंडे । चेतःस्थश्रुतदीपके ॥ अपत्यप्रेमतमसा । जनोऽयं हंत बाध्यते ॥ ६० ॥ निघ्नन्नेकें-

ङ्गियमपि । तपोभिः शुध्यति व्रती ॥ हतहस्तिहयव्रातः । शोत्स्यत्येष जनः कथं ॥ ६१ ॥ भावारिभिर्विभिन्नोऽस्मि । जयन् बाह्यानरीनहं ॥ हहा दग्धं गृहं शैला–नलं शमयतो मम ॥ ६२ ॥ ध्यायत्येवं मुनौ क्ष्माप । त्वया प्रश्नः पुनः कृतः ॥ तदा मृतः स सर्वार्थ–विमानसुखभाग्भवेत् ॥ ६३ ॥ चटत्प्रकर्षवैराग्य–वीचीनिर्धूतकल्मषः ॥ स प्राप केवलज्ञानं । तव प्रश्ने तृतीयके ॥ ६४ ॥ इत्याकर्ण्य प्रभोर्वाचं । दधानो विस्मयं परं ॥ श्रेणिकस्तमवंदिष्ट । मुनिमुन्निद्रभावनः ॥ ६५ ॥ न चापव्यापारः शरविसरसंघट्टविषमो । न ढक्कानिर्घातः समिति न च कश्चिद्विनिहतः ॥ प्रसन्नेंदुः साधुर्नरकगतियोग्योऽजनि पुनः । यतश्चैतच्चेतः प्रशमरुचि कुर्वंतु यतयः ॥ ६६ ॥ इत्युपदेशचिंतामणिवृत्तौ प्रसन्नचंद्रकथा ॥

॥ मूलम् ॥—वयगुत्तीए साधू । पायं मोणेण वट्टए अहवा ॥ सच्चंपि य मणवज्जं । कज्जंमि पजंजए वयणं ॥ १ ॥ व्याख्या—वचसो वचनस्य गुप्तौ चिंत्यमानायां साधुः प्रायो मौनेन भ्रूहस्तादिसंज्ञामपि परिहृत्य तूष्णीभावेन वर्तते. प्रायोग्रहणं स्वाध्यायकरणे योगस्यानुज्ञातत्वात्. ननु एतावता यावज्जीवं यतिना मौनमेव कार्यं. भाषणेऽगुप्तत्वापत्तेरित्याह—

'अहवेत्यादि'. अथवेति वाग्गुप्तेः प्रकारांतरसूचकं साधुर्वचनं प्रयुंक्ते जाषते इत्यर्थः. किं विशिष्टं वचनं? सत्यं, एकलक्षणत्वात्. असत्यामृषमपि इदं यद्वस्तुप्रतिष्ठाशयोच्यते तत्सत्यं, अस्ति जीवः कर्ता जोक्तेत्यादि. यच्च प्रतिष्ठाशां विनोच्यते तदसत्यामृषं. आमंत्रणाज्ञापनादिसत्यमपि प्रियं श्रोतुरिष्टं, अप्रियस्यासत्यप्रायत्वात्तदप्यनवद्यं, स पुनर्हे सखे! त्वं कृषिं कुर्वित्यादि उक्तिवत् सावद्यं. इदं हि सत्यप्रियमप्यसत्यप्रायं जीवघाताद्यारंजरूपत्वात्. अनवद्यमपि कार्ये प्रयोजने, न तु वातूलवद्यथा तथा. एवं च जाषमाणस्याप्यस्य वाग्गुप्तिरेव. यदाहुः—समिर्ज नियमागुत्तो । गुत्तो समियत्तणंमि जइयव्वो ॥ कुसलवयमुदीरंतो । जं चिय गुत्तोवि समिर्जवित्ति ॥ १ ॥ अथ यदुक्तं सत्यमपि प्रियमेव ब्रूयात्तत्समर्थयन्नाह—

॥ मूलम् ॥—निवमंतिइब्नमाई । तहेव सद्देइ न पुण काणाई ॥ न य संदिद्धं कज्जं । जासं उहारिणिं बेइ ॥ २ ॥ व्याख्या—नृपो राजा, मंत्री सचिवः, इज्यः श्रीमान्, ते आद्यो येषां सामंतश्रेष्ठिसार्थवाहादीनां, तथैवेति यथा नृपत्वादि जावेन ते संति, तथैव शब्दयति आह्वयति. अयमर्थः—नृपतिं नृपतिमिति, मंत्रिणं मंत्रिणमिति, इज्यं इभ्यमिति

ड्डियमपि । तपोभिः शुध्यति व्रती ॥ हतहस्तिहयव्रातः । शोत्स्यत्येष जनः कथं ॥ ६१ ॥ भावारिभिर्विभिन्नोऽस्मि । जयन् बाह्यानरीनहं ॥ हहा दग्धं गृहं शैला-नलं शमयतो मम ॥ ६२ ॥ ध्यायत्येवं मुनौ क्ष्माप । त्वया प्रश्नः पुनः कृतः ॥ तदा मृतः स सर्वार्थ-विमानसुखभाग्भवेत् ॥ ६३ ॥ चटत्प्रकर्षवैराग्य-वीचीनिर्धूतकल्मषः ॥ स प्राप केवलज्ञानं । तत्र प्रश्ने तृतीयके ॥ ६४ ॥ इत्याकर्ण्य प्रभोर्वाचं । दधानो विस्मयं परं ॥ श्रेणिकस्तमवंदिष्ट । मुनिमुनिद्भावनः ॥ ६५ ॥ न चापव्यापारः शरविसरसंघट्टविषमो । न ढक्कानिर्घातः समिति न च कश्चिद्विनिहतः ॥ प्रसन्नेंदुः साधुर्नरकगतियोग्योऽजनि पुनः । यतश्चैतच्चेतः प्रशमरुचि कुर्वंतु यतयः ॥ ६६ ॥ इत्युपदेशचिंतामणिवृत्तौ प्रसन्नचंद्रकथा ॥

॥ मूलम् ॥—वयगुत्तीए साधू । पायं मोणेण वट्टए अहवा ॥ सच्चंपि य मणवज्जं । कज्जंमि पउंजए वयणं ॥ १ ॥ व्याख्या—वचसो वचनस्य गुप्तौ चिंत्यमानायां साधुः प्रायो मौनेन भ्रूहस्तादिसंज्ञामपि परिहृत्य तूष्णीभावेन वर्तते. प्रायोग्रहणं स्वाध्यायक्षणे योगस्यानुज्ञातत्वात्. ननु एतावता यावज्जीवं यतिना मौनमेव कार्यं. भाषणेऽगुप्तत्वापत्तेरित्याह—

'अहन्नेत्यादि'. अथवेति वाग्गुप्तेः प्रकारांतरसूचकं साधुर्वचनं प्रयुंक्ते जाषते इत्यर्थः. किं विशिष्टं वचनं? सत्यं, एकलक्षणत्वात्. असत्यामृषमपि इदं यद्वस्तुप्रतिष्ठाशयोच्यते तत्सत्यं, अस्ति जीवः कर्ता जोक्तेत्यादि. यच्च प्रतिष्ठाशां विनोच्यते तदसत्यामृषं. आमंत्रणाज्ञापनादिसत्यमपि प्रियं श्रोतुरिष्टं, अप्रियस्यासत्यप्रायत्वात्तदप्यनवद्यं, स पुनर्हे सखे! त्वं कृषिं कुर्वित्यादि उक्तिवत् सावद्यं. इदं हि सत्यप्रियमप्यसत्यप्रायं जीवघाताद्यारंजरूपत्वात्. अनवद्यमपि कार्ये प्रयोजने, न तु वातूलवद्यथा तथा. एवं च जाषमाणस्याप्यस्य वाग्गुप्तिरेव. यदाहुः—समिउ नियमागुत्तो । गुत्तो समियत्तणंमि जइयव्वो ॥ कुसलवयमुदीरंतो । जं चिय गुत्तोवि समिउविति ॥ १ ॥ अथ यदुक्तं सत्यमपि प्रियमेव ब्रूयात्तत्समर्थयन्नाह—

॥ मूलम् ॥—निवमंतिइब्नमाई । तहेव सद्देइ न पुण काणाई ॥ न य संदिद्धं कज्जो । जासं उहारिणिं वेइ ॥ २ ॥ व्याख्या—नृपो राजा, मंत्री सचिवः, इभ्यः श्रीमान्, ते आदयो येषां सामंतश्रेष्ठिसार्थवाहादीनां, तथैवेति यथा नृपत्वादि जावेन ते संति, तथैव शब्दयति आह्वयति. अयमर्थः—नृपतिं नृपतिमिति, मंत्रिणं मंत्रिणमिति, इभ्यं इभ्यमिति

ब्रूयात्. तथा चाचारांगे—जेयावन्ने तहप्पगारा तहप्पगारेहिं भासाहिं बूआ नो कुप्पंति माणवा तेयावि तहप्पगारा तहप्पगाराहिं भासाहिं अभिकंख भासिज्जत्ति. न च काणादिष्वप्ययं न्यायोऽनुसर्तव्य इत्याह—न पुनः काणादीन् तथैव काणादिनाम्ना शब्दयति, तथा चागमः—तहेव काणं काणत्ति । पंडगं पंडगंति वा ॥ वाहियं वावि रोगित्ति । तेणं चोरेत्ति न वएत्ति ॥ १ ॥ आदिशब्दात्कुष्टिखंजादिपरिग्रहः. तथा न च संदिग्धे संदेहास्पदे च कार्येऽवधारिणीं एवमेवैतदित्येवंरूपां भाषां ब्रूते. ॥ २ ॥ तर्हि किं ब्रूते? इत्याह—

॥ मूलम् ॥—आउस्स न वीसासो । कज्जस्स बहूणि अंतरायाणि ॥ तम्हा साहूणं वट्ट-माणजोगेण ववहारो ॥ ३ ॥ व्याख्या—स्पष्टा, नवरं संदिग्धे कार्ये वर्तमानयोगमेव ब्रूयादित्यर्थः. ॥ ३ ॥ किं च—

॥ मूलम् ॥—दम्मे वसहे खज्जे । फले य थंभाइसमुचिए रुक्खे ॥ गिज्झे अन्ने जणया-इयत्ति सयणेवि न लवेइ ॥ ४ ॥ व्याख्या—वृषभान् कल्होडकान् दम्यान् धुर्यत्वयोग्यान्, फलानि आम्रफलादीनि खाद्यानि भक्षणार्हाणि, वृक्षान् स्तंभादेः समुचितान्, आ·

दिशब्दाद्गारपट्टकपाटपीठतोरणशय्यासनयंत्रादिपरिग्रहः. तथाऽन्नानि शाल्यादीनि ग्राह्याणि लवनयोग्यानीति न लपतीति क्रिया सर्वत्र योज्या. साधुवचसः प्रतीतिपात्रत्वादमी वृषभादयो दमनादिक्रियायाः प्राप्तकाला इति निश्चित्य श्रोतॄणां तत्र तत्र दमनादौ प्रवर्तनेन महारंभसंभवात्. तथा स्वजनान् पितृमातृभ्रातृभगिन्यादीन् हे जनकादय इति न लपति. आदिशब्दात् हे मातर्हे भ्रातर्हे भगिनीत्यादि. साधूनामलौकिकत्वेन लौकिकसंबंधोक्तावनधिकृतत्वात्. ॥ ४ ॥ पुनर्विशेषमाह—

॥ मूलम् ॥—राइसराईहिं कयाइ धीमं । पुट्ठो मुणी कूवतलायकज्जे ॥ अत्थित्ति नत्थिति न बेइ पुण्णं । भवंति जं भूयवहंतराया ॥ ५ ॥ व्याख्या—राजानो मांडलिकाः, ईश्वरा युवराजानः, आदिशब्दाद्ग्रामाध्यक्षादयः, एभिः कदापि कूपतडागयोः, उपलक्षणत्वात्प्रपायागसत्रादीनां च कार्ये, मम कूपादीन् कारयतः पुण्यमस्ति न वेति पृष्टो धीमान् सम्यगागमज्ञो मुनिः कारयेदं कूपादिकमस्त्यत्र महत्पुण्यं; माची करस्त्वमेतन्नास्त्यत्र मनागपि पुण्यमित्युभयथापि न ब्रूयात्. अत्रोपपत्तिमाह—यद्यस्मात्कारणादस्ति पुण्यमिति वदतो भूतवधः

स्यात्; शोषसमये जलाश्रितशेवालाद्यनंतकायिकानां पूतरशंबूकजलूकामत्स्यमंडूकादीनां त्रसानां च प्रत्यक्षं विपत्तिवीक्षणात्, मत्स्यादीनामप्यन्यान्यं जीवभक्षणाच्च. तथा नास्ति पुण्यमिति च वदतोंतरायदोषः स्यात्. बहूनां पशुपक्षिमनुष्याणां तृषार्त्तानां जलपानव्यवच्छेदात्. तस्मान्मौनमेवालंबेत. नेदृशेषु लौकिककार्येष्वस्माकं भाषणाधिकार इति वा वदेत्. यत्सूत्रकृदंगसूत्रं—तहा गिरं समारब्भ । अत्थि पुण्णंति नो वए ॥ अहवा नत्थि पुण्णंति । एवमेयं महब्भयं ॥ १ ॥ दाणट्ठयाइं जे पाणा । हम्मंति तसथावरा ॥ तेसिं सा रक्खणट्ठाए । तम्हा अत्थित्ति नो वए ॥ २ ॥ जेसिं तं उवकप्पेइं । अन्नं पाणं तहाविहं ॥ तेसिं लाभंतरायंति । तम्हा नत्थित्ति नो वए ॥ ३ ॥ जे य दाणं पसंसंति । वहमिच्छंति पाणिणो ॥ जे य णं पडिसेहंति । वित्तिछेयं करंति ते ॥ ४ ॥ दुहउ व न भासंति । अत्थि वा नत्थि वा पुणो ॥ आयंरयस्स हिच्चा । निव्वाणं पाउणंति ते ॥ ५ ॥ अथोपसंहारमाह—

॥ मूलम् ॥—सावज्जणवज्जाणं । वयणाणं जो वियाणइ विसेसं ॥ पावरयेणं न लिप्पइ । कयावि सो कालियज्जोव ॥ ६ ॥ व्याख्या—यः परिशीलितप्रवचनसारः सावद्यानवद्या-

नां वचनानां विशेषं विभागं जानाति, ज्ञात्वा च सावद्यपरिहारेणानवद्यमेव वचनं वक्ति, स-
कदापि कालिकार्य इव पापरजसा न लिप्यते. ॥ ६ ॥ अथ कालिकाचार्यकथा—

पुरी तुरमिणीत्यस्ति । मणीव त्रासवर्जिता ॥ जितशत्रुनृपस्तत्र । सर्वत्र जगति प्रि-
यः ॥ १ ॥ तत्र द्विजप्रिया भद्रा । व्याघ्रवत्क्रूरतास्पदं ॥ प्रसूता तनयं दत्तं । द्यूतमद्यादिसे-
वितं ॥ २ ॥ सेवमानः स राजान—मवाप्तप्रसरः शनैः ॥ सामंतान् भेदयामास । सरित्पूर इव
द्रुमान् ॥ ३ ॥ राज्यं दत्तः समादत्त । बध्ध्वा राजानमन्यदा ॥ प्रायः स्वाश्रयनाशाय । भ-
वेद्बवणवत्खलः ॥ ४ ॥ प्रजापीडनजातेन । स्वजाते नार्चयन् द्विजान् ॥ चक्रे क्रतूनसौ शू-
रा—श्छागेष्वेव हि तादृशाः ॥ ५ ॥ भद्रायाः सोदरोऽन्येद्यु—स्तत्रोद्यानं समागतः ॥ श्रीकालि-
कगुरुः श्राद्धै—र्भेजे भृत्यैरिव प्रभुः ॥ ६ ॥ भद्रयानुदिनं प्रेर्य—माणः शमदमातुलं ॥ मातुलं
तमुपतस्थौ । दत्तोऽप्याह्लादवर्जितः ॥ ७ ॥ सर्वसाधारणं व्याख्या—वचो मेघांबुवद्गुरोः ॥
पीत्वा दत्तोऽवदत्क्रुद्धो । यागानां ब्रूहि किं फलं ॥ ८ ॥ विरोधभीरुणाभाणि । गुरुणागमशालि-
ना वत्स पृछसि धर्मं चे—द्धर्मः स्याज्जीवरक्षया ॥ ९ ॥ ब्रूहि यज्ञफलं ताव—दिति तेनोदिते

पुनः ॥ सूरिरूचे न हिंसा स्यात् । कदाप्यायतिसुंदरा ॥ १० ॥ दत्तोऽथ स्माह साक्षेप-मा-
चार्यं बधिरोऽसि किं ॥ यत्पृष्टः सैंधवं वर्त्म । वक्ति मालवपद्धतिं ॥ ११ ॥ फलं पृछामि या-
गानां । ब्रूषे हिंसामसुंदरां ॥ जानासि तद् द्रुतं ब्रूहि । नो चेत्पाखंरूमुत्सृज ॥ १२ ॥ निज-
प्राणान् पणीकृत्य । धैर्यमालंब्य सूरिणा ॥ अवादि सत्यमेवेति । यज्ञानां नरकाः फलं ॥१३॥
अथ दत्तोऽवदत्कोऽत्र । प्रत्ययः सूरिरालपत् ॥ त्वं श्वभिर्व्यक्षितः कुंभ्यां । पक्ष्यसे सप्तमेऽह-
नि ॥ १४ ॥ कोऽत्रापि प्रत्ययो दत्ते-नेति पृष्टो गुरुर्जगौ ॥ दिने तत्रैव तेऽकस्मा-न्मुखे विष्टा
पतिष्यति ॥ १५ ॥ अथ स्वियल्ललाटेन । रोषारुणदृशा भृशं ॥ दत्तेनावादि सूरींद्रः । कथं
त्वं तु विपत्स्यसे ॥ १६ ॥ समाधिनैव मर्तास्मि । गंतास्मि द्यां मृतोऽप्यहं ॥ इत्युक्ते गुरुणा
दत्तः । समुत्तस्थौ सहुंकृतिः ॥ १७ ॥ रुध्ध्वा निजभटैः सूरिं । दत्तः स्वगृहमागतः ॥ पावयन्न-
गरीरथ्या । निलीयास्थात् समाधिना ॥१८॥ मतिमोहेन मन्वानः । सप्तमं षष्टमप्यहः ॥ कु-
र्वे शांतिकमाचार्या-न्निरघेति निर्ययौ ॥ १९ ॥ दत्तदुर्वृत्तनिर्विण्णै-स्तदानीं मूलमंत्रिभिः ॥
आकृष्य पंजराद्राज्ये । जितशत्रुर्न्यवेश्यत ॥ २० ॥ तदैको मालिकः पुर्यां । विशन् वेगातुरो

व्यधात् ॥ मार्ग एव मलोत्सर्गं । नीतः पुष्पैः व्यधत्त च ॥ २१ ॥ सैव वाजिक्षुरोत्क्षिप्ता । दत्तस्य पथि गच्छतः ॥ विपच्छटा पयःकुंभ-इव विष्टा मुखेऽविशत् ॥ २२ ॥ चमत्कृतस्तदास्त्वा-दा-द्विषादकलुषाननः ॥ विज्ञाय तद्दिनं षष्ठं । दत्तः पश्चान्न्यवर्तत ॥ २३ ॥ अस्मन्मंत्रोऽमुनाद्यापि । नाज्ञायीति स मंत्रिभिः ॥ गृहमप्रविशन्नेव । बध्ध्वा भूमिभुजेऽर्पितः ॥ २४ ॥ भूपः प्रातोदयः सूर्य । इव पापकृपात्यये ॥ दत्तनामतमः कुंभ्यां । गिरिदर्यामिवाक्षिपत् ॥२५॥ अधोऽग्नौ ज्वालिते कुंभ्यां । मुक्ताः श्वानः क्षुधातुराः ॥ दत्तं कदर्थयामासुः । क स्वामिद्रोहिणः सुखं ॥ २६ ॥ अथ श्रीकालिकाचार्यो । जितशत्रुमहीभुजा ॥ पूज्यतेस्म प्रतिदिनं । न ह्यसौ गुणमत्सरी ॥ २७ ॥ कालिकार्यगुरुणा यथा वचः । सत्यमेव जगदे विपद्यपि ॥ तद्वदेव सुकृतार्थिभिः परैः । सुनृतं वचनमुच्यतां सदा ॥ २८ ॥ इत्युपदेशचिंतामणिवृत्तौ कालिकाचार्यकथा ॥ एवं वाग्गुप्तिमुक्त्वाथ कायगुप्तिमाह—

॥ मूलम् ॥—कायं तु निरुंभिज्जा । उस्सग्गेणासणंतरेणं वा ॥ कज्जे व पयट्टंतो । पए पए चिंतए जयणं ॥ ७ ॥ व्याख्या—साधुरुत्सर्गेण कायोत्सर्गेण, आसनांतरेण वा पद्मा-

दिना कायं शरीरं रुंध्यान्निश्चेष्टं कुर्यात्. न हि सर्वकालं निश्चेष्टत्वे निर्वाह इति कायगुप्तेर्विध्यंतरमाह—कार्ये गमनशयनादिके प्रयोजने जाते प्रवर्तयन् शरीरं, पदे पदे मा मम शरीरेण कोऽपि जीवोऽवधीदित्येवंरूपां यतनां चिंतयेत् ॥ ७ ॥ यतनारहितस्य दोषमाह—

॥ मूलम् ॥—गमणट्ठाणनिसीयण–तुयट्टणगहण निसिरणाइसु ॥ कायं असंवरंतो । छह्रंपि विराहउ होइ ॥ ८ ॥ व्याख्या—गमनं प्रतीतं, स्थानं ऊर्ध्वस्थानेन, निषीदनमुपवेशनं, त्वग्वर्त्तनं स्वपनं, ग्रहणं दंडकादेरादानं, सृजनं तस्यैव निक्षेपणं, आदिशब्दाद्भोजनभाषणादिपरिग्रहः. एषु स्थानेषु कायमसंवृण्वन् अयतनया चालयन् षणामपि प्रस्तावाज्जीवनिकायानां विराधको भवति. तत्रायतनया गमनादिकं कुर्वतः सचित्ततृणादिमर्दनात्पृथ्वीकायस्य, जलभाजनलोठनादप्कायस्य, साग्निकमलातं स्पृशतोऽग्निकायस्य 'तेउत्राउसहगउ' इति वचनाद्वायुकायस्य, हरिदादिसंघट्टाद्वनस्य, संसक्तस्थानाद्यवर्जनात्त्रसकायस्यापि विराधनाऽनुपयुक्तस्य भावनीया. ॥ ८ ॥ अथ कायगुप्तौ दृष्टांतमाह—

॥ मूलम् ॥—भरिसं सिरिसंतिजिउ । मइमं वज्जाउहो ठिउ पडिमं ॥ गिरिथंभे थि-

रदेहो । जइज्ज तेणाणुमाणेण ॥ ए ॥ व्याख्या—गाथार्थः स्पष्टः, जावार्थस्त्वयं—स वज्रायुधस्तीर्थंकरजीवत्वाद्विशिष्टबलयुक्तो वर्षं कायोत्सर्गेण तस्थिवान्, न च तथा परे हीनसंहननाः स्थातुं शक्ताः, तथापि तदनुसारेण यतितव्यं. सत्यां शक्तौ प्रत्यहं घटिकां मुहूर्तं वा कायोत्सर्गादिना स्थिरदेहेन जाव्यमित्यर्थः. ॥ ए ॥ वज्रायुधकथा तु लेशतो जाव्यते ॥ अथ वज्रायुधकथा—

जंबूद्वीपे प्राग्विदेह—मंकने श्रीसमुच्चये ॥ विजये मंगलावत्या—मस्ति पू रत्नसंचया ॥ ॥ १ ॥ जगत्क्षेमंकरस्तत्र । राजा क्षेमंकरोऽजनि ॥ जिनस्य जनिता यस्य । नमस्या नाकिभिर्न कैः ॥ २ ॥ तस्याभूद्रत्नमालायां । पत्न्यां वज्रायुधाभिधः ॥ सुतश्चतुर्दशस्वप्न—सूचिताद्भुतवैभवः ॥ ३ ॥ श्रीशांतिनाथजीवत्वा—दत्यद्भुतगुणाकरः ॥ सोऽध्यापितकलः काले । जनकेन व्यवाह्यत ॥ ४ ॥ पुत्रे यूनि क्ष्माजारं । न्यस्य राज्योचितं नृपः ॥ स्वयं दधौ क्ष्माजारं । सर्वज्ञसंयमोचितं ॥ ५ ॥ अचिरात्प्राप्तकैवल्यः । समासाद्यार्हतीं श्रियं ॥ विहरन् बोधयामास । क्षेमंकरजिनो जनान् ॥ ६ ॥ साधिताशेषविजयो । विजयोर्जितदोर्युगः ॥

वज्रायुध इव स्वर्गे । चक्री वज्रायुधोऽभवत् ॥ ७ ॥ अन्यदोद्यानमायांतं । चक्री तं धर्मच-
क्रिणं ॥ ववंदेऽवस्थितं देव-निर्मिते देशनालये ॥ ८ ॥ चक्री चिक्रीषुर्मुक्ति-वध्वा श्रुत-
जिनोदितः ॥ राज्यं न्यवेशयत्पुत्रे । सहस्रायुधनामनि ॥ ९ ॥ चतुःसहस्र्या भूपानां । सप्त-
शत्या तनूरुहां ॥ सहितः स्वहितार्थ्येष । प्रभुपार्श्वेऽग्रहीद्व्रतं ॥ १० ॥ अधीतसूत्रो वसुधा-
वलये विहरन्नसौ ॥ विशिष्टध्यानसंधान-मनाः सिद्धगिरिं ययौ ॥ ११ ॥ तत्र सर्वांगिषु त्य-
क्त-वैरो वैरोचनाभिधे ॥ स्तंभे प्रतिमया तस्थौ । महर्षिर्वर्षमानया ॥ १२ ॥ इतश्चास्य भग-
वतो-ऽवतारेऽमिततेजसः ॥ त्रिपृष्ठस्यालकस्यासी-दश्वग्रीवो महारिपुः ॥ १३ ॥ तस्याभूतां
मणिकुंभ-मणिकेतू तनूरुहौ ॥ तौ भवान् भूरिशो भ्रांत्वा । तपोऽज्ञानं वितेनतुः ॥ १४ ॥
प्राप्तौ तेनासुरीं योनिं । पर्वते तत्र तं मुनिं ॥ प्रतिमास्थितमालोक्य । प्राग्वैरोल्लासमापतुः ॥
॥ १५ ॥ ततस्तावस्तकारुण्यौ । परमाधार्मिकाविव ॥ सिंहेभफणिनां रूपै-रुपदुद्रुवतुर्मुनिं ॥१६॥
अक्षोभं वीक्ष्य तं रक्षो-रूपं कृत्वाट्टहासिनौ ॥ निर्यज्ज्वालाकरालास्य-क्रोधौ भापयतःस्म तौ
॥ १७ ॥ तथाप्यव्यथिते तस्मि-न्नृषौ निष्कारणद्विषौ ॥ उपसर्गांतरं कर्तुं । यावत्प्रावर्तता-

मिभौ ॥ १८ ॥ तावत्त्रिदशराजस्य। वध्वः क्षेमंकरं जिनं ॥ वंदित्वा वलितास्तेन। पथाद्यो-
कंत तं मुनिं ॥ १९ ॥ निजनैश्चलयतः शैल-स्तंभं स प्रतिपक्षयन् ॥ जवच्छिदे जवत्येव। मु-
निरेष नमस्कृतः ॥ २० ॥ एवं विभावयंत्यस्ता। दिव्याभरणभासुराः ॥ मुनिमानंतुमानंदा-
च्छिरेमौलावचातरन् ॥ २१ ॥ वीक्ष्य ता अकृतालोका। आयांतीर्दीपिका इव ॥ नेशतुर्ध्वा-
तनाशंतौ। दैत्यौ सम्यग्दृगप्रियौ ॥ २२ ॥ प्रीत्या प्रणम्य क्षुभित-देहाश्चापलता इव ॥ ऋ-
षेः पुरः पुरुहूत-प्रिया नाट्यं वितेनिरे ॥ २३ ॥ योजितांजलयः सर्वाः। स्तुत्वा सत्वाधिकं
मुनिं ॥ पुण्याढ्यं मन्यमानाः स्वं। ताः स्वस्थानं प्रपेदिरे ॥ २४ ॥ वज्रायुधोऽपि जगवान्। न-
गमूर्ध्नि वत्सरं ॥ स्थित्वा पूर्णप्रतिज्ञोऽथ। विजह्रे वसुधातले ॥ २५ ॥ यदि मृदुलशरीरो
वत्सरं वज्रसाधुः। शिखरिशिरसि कायोत्सर्गमेवं व्यधत्त ॥ तदिह बहुलसत्वाः साधवोऽन्ये-
ऽपि दूरी-कृतदुरितसमूहे तत्र तन्वंतु यत्नं ॥ २६ ॥ इत्युपदेशचिंतामणिवृत्तौ वज्रायुधक-
था ॥ तदेवमुक्ता कायगुप्तिः, तदुक्तौ चोक्तास्तिस्रोऽपि गुप्तयः, तद्भणने च जणिताः सप्तद-
शापि संयमभेदाः ॥ अथ प्राप्तसर्वविरतिर्येषामाश्रयणीयो जवति, तान् गुणानाह—

॥ मूलम् ॥—चिट्ठंति गुरुकुले गुरु—जणंमि न हु चोइयावि कुप्पंति ॥ ऊस्सासाइं मुत्तुं । करंति गुरुसक्खियं सव्वं ॥ १० ॥ व्याख्या—इह साधव इति कर्तृपदं सर्वत्राप्रयुक्तमपि गम्यते. बहुवचनं च गच्छवासित्वेन आचार्योपाध्यायादिवैचित्र्यज्ञापनार्थं. तेनैते गुणाः प्रायः स्थविरकल्पापेक्षा इति प्रतिपत्तव्यं. साधवो गुरूणां कुलं साधुसंतानरूपं तत्र तिष्ठंति. ज्ञानादिलाभहेतुत्वात्, उक्तं च विशेषावश्यके—नाणस्स होइ भागी । थिरयरओ दंसणे चरित्ते य ॥ धन्ना आवकहाए । गुरुकुलवासं न मुंचंति ॥ १ ॥ तीक्ष्णवचनादिना नोदिता अपि गुरुजने न कुप्यंति. यदाह—गुरवस्तारुयन्तोऽपि । भवंति हितहेतवः ॥ घर्षयन्नपि रत्नस्य । तेजसे मणिकारकः ॥ १ ॥ तथोच्छ्वासादिकं मुक्त्वा सर्वं कर्तव्यं गुरुसाक्षिकं कुर्वंति. आदिग्रहणादन्याप्युच्छ्वासतुल्यं मेषोन्मेषादिकमल्पकार्यं गुर्वादेशं विनापि कुर्वंतीति भावः. ननु ये साधवो गुरुभ्यो दूरदेशस्थास्ते कथं सर्वं गुरुसाक्षिकं कुर्वंतीत्युच्यते. तेऽपि गुरुं स्थापयित्वा तत्पुरः सामाचारीं प्रयुंजते. उक्तं चौघनिर्युक्तौ—संविग्गसन्निभद्दग—अहप्पहाणेसु भोइयघरेसु ॥ ठवणा आयरियस्सउ । सामायारीपउंजणया ॥ १ ॥

मुनयो हि दंडिकादिकमप्याचार्यं कल्पयंति, निराबाधप्रदेशोऽयं ममाचार्य इति, तस्य चाग्रतः सकलां चक्रवालसामाचारीं प्रयुंक्त इति. तथा—

॥ मूलम् ॥—पासत्थपरिचयं परि-च्चयंति वज्जंति तह अणाययणं ॥ न चयंति य अहिगरणं । अज्जियलाभं न भुंजंति ॥ ११ ॥ व्याख्या—ज्ञानादिगुणेभ्यः पार्श्वे पृथक् तिष्ठंतीति पार्श्वस्थाः, एकग्रहणे तज्जातीयस्यापि ग्रहणमिति न्यायादवसन्नादयोऽप्यत्र ग्राह्याः. तत्रावसीदंतिस्म क्रियाशैथिल्यान्मोक्षमार्गश्रांता इवावसन्नाः. तथा कुत्सितं ज्ञानादित्रयविराधकं शीलं स्वभावो येषां ते कुशीलाः. तथा संविग्नासंविग्नसंसर्गाद्गुणैर्दोषैश्च तद्भावे संसजंतिस्मेति संसक्ताः. तथा यथा यथाकथंचिदागमनिरपेक्षः सर्वकार्येषु छंदोऽभिप्रायो येषां ते यथाछंदाः. एतैः सह परिचयमालापादिकं संस्तवं परित्यजंति. उक्तं च—आलावो संवासो । विसंतो संथवो पसंगोय ॥ हीणायारेहिं समं । सव्वजिणिंदेहिं पडिकुट्ठो ॥ १ ॥ अपवादस्तु पर्यायादिभिः कारणैः पार्श्वस्थादिभिरपि सहालापादिकं कुर्वतामपि न दोषः, यदागमः—वायाइनमुक्कारो । हत्थुस्सेहो य सीसनमणं च ॥ संपुछणत्थणं थोज्ज वंदणं वंदणं वा-

वि ॥ १ ॥ परियाय पसिपुरिसं । खित्तं कालं च आगमं नाउं ॥ कारणजाए जाए । जहा-रिहं जस्स जं जोग्गं ॥ २ ॥ तथा नञः कुत्सार्थत्वात् कुत्सितमायतनं पार्श्वस्थादिप्रतिबद्धं स्त्रीपश्वादियुक्तं वा स्थानं परतीर्थं वा, यत्र स्थितानां ज्ञानादयो गुणा हीयंते तद्वर्जयंति. अपवादतस्तु अन्यस्थानकालाभे तत्रापि यतनया तिष्ठंतीति. तथाधिकः क्रियते संसारोऽनेनेत्यधिकरणं, उपशमितकलहवर्धनं वचो न वदंति, चकारान्न वादयंत्यपि. उक्तं च—"जेणं परं पज्जोसवणाउ अहिगरणं वयइ, से णं निज्जूहियव्वे सिया". तथार्यिकाणां साध्वीनां लाभं तदानीतमशनादीत्यर्थः, न भुंजते, तासु दानस्यैवानुज्ञातत्वात्. अनेन ऋतुभंगी सूचिता. यत्पंचकल्पभाष्यं—संविग्गसंजयाणं । दिज्जइ घीप्पइय पढमभंगो य ॥ सज्जइवग्गे दिज्जइ । नवि घिप्पइ कारणे बीउं ॥ १ ॥ गिहिअन्नतित्थियाणं । नवि दिज्जइ घिप्पइ य नवरं च ॥ नवि दिज्जइ नवि घिप्पइ । पासत्थाईण सव्वेवि ॥ २ ॥ अपवादस्तु ग्लानत्वादौ कार्यें साधुपरिकराभावे आर्यिका लाभमपि भुंजतेऽन्निकापुत्रवत् ॥ ११ ॥ तथा—

॥ मूलम् ॥—सीयंति नाव्वयासु । अव्वयासं दिंति न हु पमायस्स ॥ विम्हाविंति न

अत्तं । कुक्कुयकंदप्पहासेहिं ॥ १२ ॥ व्याख्या—आपत्सु रोगात्रजदुर्भिक्षादिषु, हा अथ कथं निर्वहिष्याम इति न सीदंति न ग्लायंति: तथा प्रमादस्यानुपयुक्ततारूपस्यावकाशं न ददति. तथा कौकुच्यं भांडचेष्टा, कंदर्पानुविद्धाः कथा अपि कंदर्पः, हास्यव्यंजिकाश्च कथा अपि हास्यं, एतैरन्यं श्रोतारं न विस्मापयंति, यथा श्रुतया श्रोतॄणां कंदर्पः प्रसर्पति, हास्यं च समुन्मीलति, तां कथां न कथयंतीत्यर्थः. उक्तं च–कंदप्पकुक्कुयाहिं । तह सीलसहावहसणविगहाहिं ॥ विम्हावंतो य परं । कंदप्पजावणं कुणइ ॥ १ ॥ १२ ॥ किंच—

॥ मूलम् ॥—पावसूयाणि न सिक्खंति । जाणमाणावि नो पउंजंति ॥ तेइत्थजोइजोइस–रसअंजणमंततंताइं ॥ १३ ॥ व्याख्या—पापश्रुतान्येकोनत्रिंशद्भेदानि, उक्तं च–अट्ठनिमित्तंगाइं । दिव्वुपायंतलिक्खभोमं च ॥ अंगं सरलक्खणवंज–णं च तिविहं पुणेक्किक्कं ॥१॥ सुत्तं वित्ती तह वित्तियं च । पावसुयमिउणतीसविहं ॥ गंधव्वनट्टवत्थु । आउंधणवेयसंजुत्तं ॥ २ ॥ एतानि न शिक्षंते नाभ्यस्यंते. अपवादतस्तु संघकार्ये शिक्षंते. तथा जानंतोऽपि न प्रयुंजंते चैकित्स्यादिकं. तत्र चिकित्सायाः कर्म चैकित्स्यं वैद्यकं. योगाः पादलेपाद्याः,

ज्योतिषं निमित्तं, रसः पीतादिधातुः, अंजनं अदृश्यीकरणादि, मंत्रा गारुडाद्याः, तंत्राणि कार्मणादीनि, आदिशब्दात्कौतुकभूतिकर्मादयः. उक्तं च—जोइसनिमित्तअरकर—रकोत्र य आएसभूइकम्मेहिं ॥ करणाणुमोयणेहिं य । साहुस्स तवरकउ होइ ॥ १ ॥ अपवादतस्तु तीर्थप्रजावनार्थं प्रयुंजाना अपि प्रजावका एव श्रीकालिकार्यवत्. ॥ १३ ॥ अन्यच्च —

॥ सूत्रम् ॥—सोहंति वत्थसिज्जाइ । दूसणे न य विही विरुज्कंति ॥ निच्चं संविग्गमणा । वज्जंति अकालसज्जायं ॥१४॥ व्याख्या—वस्त्रशय्यादिदूषणानि शोधयंति टालयंतीत्यर्थः. इह वस्त्रं त्रिधा, एकेंडियविकलेंडियपंचेंडियावयवत्वात्. तत्राद्यं कार्पासिकादि, द्वितीयं कौशेयकादि, तृतीय तूर्णादिमयं. एतेषु कौशेयकादिकं कारण एव ग्राह्यं. एतदपि जघन्यमध्यमोत्कृष्टभेदात्प्रत्येकं त्रिधा. तत्र जघन्यं मुखपोतिकाद्यं, मध्यमं चोलपट्टाद्यं, उत्कृष्टं प्रच्छदादि. एतदपि पुनः प्रत्येकं यथाकृताल्पबहुपरिकर्मभेदात्त्रिधा. एषु आद्याद्याभावेऽग्रेतनमग्रेतनं ग्राह्यं. वस्त्रस्य च दूषणानि प्राय आहारदूषणतुल्यानि, आहारदोषाश्च पुरतो वक्ष्यंते, ततस्तद्दोषा अपि ततोऽवसेयाः. सामान्यतस्तु—जं न तयट्ठा कीयं । नेव बुअं नेव गहियमन्नेहिं ॥ आहडपामिच्चं व—ज्जिऊण जं

कप्पए वत्थं ॥ १ ॥ किंच-वर्षाकाले वस्त्रं न ग्राह्यं, वर्षानंतरं च तत्र क्षेत्रे मासद्वयं यावत्, यत्पंचकल्पभाष्यं-वत्थाईणं गहणं । नाणुन्नायं तु होइ वासासु ॥ वासाईण परेणं । दुमासे अन्नेसु गिह्णंति ॥ १ ॥ शय्या वसतिः, सापि दोषरहितैव ग्राह्या, यदाह-मूलुत्तरगुणसुद्धं । थीपसुपंडगविवज्जियं वसहिं ॥ सेविज्ज सव्वकालं । विवज्जिउ हुंति दोसाउ ॥ १ ॥ तत्रामी मूलगुणाः-पिट्ठीवंसं दो धा-रणाउ चत्तारि मूलवेलीउ ॥ मूलगुणे हुववेया । एसाउ अहा-गडा वसही ॥ १ ॥ व्याख्या--पृष्टवंशो मध्यवलकः, द्वे धारिण्यौ बृहद्वल्यौ, यत्प्रतिष्टोऽसा-वेव, चतस्रो मूलवल्यौ, याश्चतुर्षु गृहपार्श्वेषु ध्रियते. एते सप्तापि मूलगुणाः, शेषाः स्तंभ-भित्यादय उत्तरगुणाः, एतैः शुद्धा वसतिर्ग्राह्या. अन्ये चामी वसतिदोषाः-कालाइक्कं तु व-ट्ठाणा-आभिकंत अणभिकंता य॥ वज्जाय महावज्जा। सावज्ज महप्प किरिया य ॥१॥ (कालाति-क्रांता, उपस्थापना, अभिक्रांता, अनभिक्रांता, वर्ज्या, महावर्ज्या, सावद्या, महासावद्या, अल्पक्रिया चेति नव वसतिदोषाः.) ऋतुबद्धे वर्षासु वा यत्र वसतौ स्थितास्तत्रैव मासे चातुर्मासिके वा पूर्णेऽपि तिष्टतां कालातिक्रांता १. ऋतुबद्धे यत्र मासकल्पः कृतस्तत्रैव द्वौ

मासौ वर्षासु यत्र चातुर्मासीं स्थितास्तत्र चाष्टौ मासानपरिहृत्य पुनः समागछतामुपस्थाना २. यावदर्थिकार्थं कृता शय्या, सा यद्यन्यैश्चरकादिपाखंडिभिर्गृहस्थैर्वा भुक्ता भवति, तदनंतरं च संयता आयांति तदाभिक्रांता ३. सैवान्यैरपरिभुक्ता सती साधुभिः सेव्यमानाऽनभिक्रांता ४. तथा आत्मार्थं कृता साधुभ्यो दत्वा स्वार्थमन्यां कुर्वतो गृहस्थस्य वर्ज्येति ५. तथा पाखंडिनामर्थाय कृता महावर्ज्या ६. पंचानां श्रमणानामर्थाय कृता सावद्या ७. साधूनामेवार्थाय कृता महासावद्या ८. या पुनरेतद्दोषाष्टकवर्जिता साल्पक्रिया शुद्धेत्यर्थः ९. आदिशब्दात्पात्रकादिपरिग्रहः. पात्रमप्येकेंद्रियविकलेंद्रियपंचेंद्रियभेदात् त्रिधा. तत्रैकेंद्रियावयवजं तुंबकादि, विकलेंद्रियदेहजं शंखशुक्त्यादि, पंचेंद्रियदेहजं कुतुपदंतशृंगपात्रादि. अत्रौघतः प्रथममेव ग्राह्यं. तदपि तुंबकदारुमृत्तिकारूपत्वात् त्रिधा. तदपि प्रत्येकं जघन्यादिभेदात् त्रिधा. तत्र जघन्यमुदंचकादि, मध्यमं मात्रकं, उत्कृष्टं पतद्ग्रहः. पुनरप्येकैकं त्रिधा, यथाकृताल्पबहुपरिकर्मभेदात्. पूर्वपूर्वभावे चेहोत्तरं ग्राह्यं. द्वितीयपदे शुद्धाऽलाभेऽशुद्धमपि पंचकपरिहान्या गृह्णंति. उक्तं च– "सोहंतो य इमे तह जइज्जा सव्वत्थ पणगहाणीएत्ति" तथा न च मिथः परस्परं विरुध्यंः

ते कलहायंते प्रीत्या निर्वहतीत्यर्थः. यदागमः—जइ इक्कभाणजिमिया । गिहिणोवि यदीह मित्तिया हुंति ॥ जिणवयणबहिप्फुया । धम्मं पुणं अयाणंता ॥ १ ॥ किं पुण जगजीवसुहा—वहेण संभुंजिऊण समणेणं ॥ सक्काइ इक्कुमिक्को । वीउं विवरक्किउं देहो ॥ २ ॥ तथा नित्यं संविग्नमनसो मोक्षाभिलाषिणो विरक्तत्वात् यो यस्य श्रुतस्य पठनपरावर्त्तनादियोग्यः कालः. यथा कालिकस्योत्तराध्ययनादेरस्वाध्यायिकवर्जं दिवसनिशाप्रथमचरमपौरुष्यौ, उत्कालिकस्य तु दशवैकालिकादेः "संजमघाउ १ प्पाए २ । सादिव्वे ३ वग्गुहे य ४ सारीरे ५" इति पंचविधास्वाध्यायिकवर्जं कालवेलावर्जं च सर्वमप्यहोरात्रं पठितुं कालः, तद्व्यतिरिक्तस्त्वताद्यः, तस्मिन्नकाले स्वाध्यायं वर्जयंति. ॥ १४ ॥ तथा—

॥ मूलम् ॥—वज्जंति निच्चवासं । सिज्जायरराय नियय पिंडे उ ॥ उसग्गाववायविऊ । अणहे दिक्कंतिन कयावि ॥ १५ ॥ व्याख्या—एकक्षेत्रे नित्यवासं वर्जयंति, उक्तं च—पडिबंधो लहुअत्तं । न जणुवयारो न देसविन्नाण ॥ नाणाईण अवुड्ढी । दोसा अविहारपक्कंमि ॥ १ ॥ जो गाउयं समत्थो । सूरादारम्भ जिक्कवेलं जा ॥ विहरउ एसो सपर—क्कमो य नो

विहरइ तेण परं ॥ २ ॥ अपवादतस्तु यतनया चिरमप्येकक्षेत्रे वसतां न दोषः. यदाह—पंचसमिया तिगुत्ता । उज्जुत्ता संयमे तवे चरणे ॥ वाससयंपि वसंता । मुणिणो आराहगा भणिया ॥ १ ॥ तथा पिंडशब्दस्य सर्वत्र संबंधात् शय्यातरपिंडं, राजपिंडं, नियतपिंडं च वर्जयंति. तत्र शय्याया आश्रयदानेन तरति संसाराब्धिमिति शय्यातर उपाश्रयदाता गृहस्थः, तस्य पिंडः शय्यातरपिंडः. तत्रेयं सामाचारी—यस्मिन्नाश्रये स्थिताः साधवस्तस्य यद्येकः प्रभुस्तदा तमेव, बहवश्च चेत्प्रभवस्तदा सति निर्वाहे सर्वानपि, अनिर्वाहे तु परिपाट्या एकैकं वर्जयंति, तद्दत्तमशनादिद्वादशकं न गृह्णंतीत्यर्थः. यदाह—असणाइया चउरो । पाउंछणवत्थपत्तकंबलयं ॥ सूइच्छुरं कन्नसोहण—नहरणिया सागरियपिंडो ॥ १ ॥ तृणादिकं तु गृह्णंत्येव. यदाह—तणडगलछारमल्लग—सिज्जासंथारपीढलेवाई ॥ सिज्जायरस्स पिंडो । न होइ सेहो य सोवहिउ ॥ १ ॥ यदा चालयसंकीर्णतया भिन्नोपाश्रयेषु वसंति, तदापि सर्वान् वर्जयितुमक्षमा आचार्याः शय्यातरं वर्जयंत्येव. स च शय्यातरो लिंगमात्रधारिणोऽपि वर्ज्यः. अर्हन्निषिद्धतादिदोषदुष्टत्वात्. यदाह—लिंगत्थस्स उ वज्जो । तं परिहरउव भुंजउ वावि ॥

जुत्तस्स अजुत्तस्स व । रत्नासणो तत्थ दिठंतो ॥ १ ॥ अयं च प्रातरावश्यके कृते स्वापे वा विहिते नवति, नान्यथा. उक्तं च—जइ जग्गंति सुविहिया । करंति आवस्सयं च अन्नत्थ ॥ सिज्जायरो न होई । सुत्ते व कएव सो होइ ॥ १ ॥ निर्गमनकालादेकदिनातिक्रमे शय्यातरो नवति, "चुत्थे वज्जंतहोरत्तं" इति वचनात्. विशेषश्चात्र—सूरत्थमणे दिए नि–ग्गयाण सूरोदये अ सागरिउ ॥ अत्थमियनिग्गयाणं । वारलजामाउ सागरिउ ॥ १ ॥ द्वितीयपदे तु ग्लानाद्यालंबनैः शय्यातरपिंममपि यतनया गह्नतां न दोषः. उक्तं च—डुविहे गिलाणंमि । निमंतणे दुवदुल्लहे असिवे ॥ उमोअरिय पउसे । नये अ गहणं अणुन्नायं ॥ १ ॥ यतना चेयं–तिक्खुत्तो अ सखित्ते । चउदिसिं मग्गिऊण गीयत्थो ॥ दवंमि दुल्लनंमि । सिज्जायरसंतिए गहणं ॥ १ ॥ तथा राज्ञो मूर्द्धाभिषिक्तस्य पिंमो राजपिंमः, स चाष्टधा—असणाइया चउरो । वत्थं पायं च कंबलं चेव ॥ पाउंठणगं च तहा । अठविहो रायपिंमो उ ॥१॥ अयं च पूर्वपश्चिमजिनसाधूनां निषिद्धो व्याघातादिदोषसंनवत्वात्. ॥१६॥ तथाहि—

॥ मूलम् ॥—ईसरपन्निईहिं तहिं । वाघाउ खद्धलो हु दाराणं ॥ दंसणसंगो गरहा ।

इयरेसिं न अप्पमायाउ ॥ १७ ॥ व्याख्या—ईश्वरादिभिः प्रविशद्भिर्निर्यद्भिश्च तत्र राजभवने साधोर्व्याघातः स्खलना स्यात्, अमंगलबुद्ध्या हननं वा स्यात्. संमर्दात्पात्रभंगश्च. 'खद्धत्ति' प्रचुरान्नादिलाभे लोभश्च स्यात्. उदाराणां पुंस्त्र्यादीनां दर्शने संगोऽभिष्वंगः स्यात्. तथाहो राजप्रतिग्रहमप्येते न त्यजंतीति. गर्हा स्यात्. इतरेषां मध्यमजिनसाधूनां नैते दोषाः, कुतः? अप्रमादात्. तथा इदमेतावन्मात्रमहं तुभ्यं दास्यामीत्युक्तवतो गृहस्थस्याग्रोऽशनादिलाभः स नित्यपिंडः, वर्ज्यश्चायमाधाकर्मादिदोषसंभवात्. यद्दशवैकालिकचूर्णिः—"नियागं नाम नियथंति वुत्तं भवइ, तं तु यदा आयरेण आमंतिउ भवइ, जहा भयवं तुम्हेहिं मम दिणे दिणे अणुग्गहो कायव्वो, तदा तस्स अब्भुवगच्छंतस्स नियागं भवइ, न तु जत्थ अहाभावेणं दिणे दिणे भिक्खा लब्भइत्ति". तथोत्सर्गापवादविदः, तत्र सामान्येनोक्तो विधिरुत्सर्गः, यथा—"वासावासं पज्जोसवियस्स निच्चभत्तस्स भिक्खुयस्स कप्पइएगं गोयरकालं गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा." तद्बाधनाय कारणापेक्षो विशेषोक्तो विधिरपवादः. यथा—"आयरियवेयावच्चेण वा, उवज्झायवेयावच्चेण वा, तवस्सिगिलाणवे-

यावच्चेण वा, खुड्डुएण वा, खुड्डियाए वा अवंजण जायएणंति ". एतद्‌ द्वयं सम्यग् ज्ञात्वा उत्सर्गे उत्सर्गं, अपवादे च प्राप्तेऽपवादं, एवं उत्सर्गं वापवादं सेवमानो गीतार्थ आराधकश्च. यदाहुः—उस्सग्गे अववायं । आयरमाणो विराहउ होइ ॥ अववाए पुण पत्ते । उस्सग्गनिसेवउ हवइ ॥ १ ॥ अनेकांतवादस्वरूपं हि जिनप्रवचनं. उत्सर्गेणापवादेन वा यथाधिको लाभस्तथैव प्रवर्तति. उक्तं च—तम्हा सव्वाणुन्ना । सव्वनिसेहो य पवयणे नत्थि ॥ आयं वयं तुलिज्जा । लाहाकंखिव्व वाणिउ ॥ १ ॥ उत्सर्गापवादविधिश्च साधुगुणेषु यथास्थानं भावित एव. तथाऽनलानयोग्यान्न कदाचिद्दीक्षयंति. यदाह—अट्ठारस पुरिसेसु । वीसं इत्थिसु दस नपुंसेसु ॥ पव्वावणा अणरिहा । इय अणला आहिया सुत्ते ॥ १ ॥ तत्र दीक्षानर्हाः पुरुषा अष्टादश, तद्यथा—बाले वुड्ढे नपुंसे य । जडे कीवे य वाहिए ॥ तेणे रायावगारी य । उम्मत्ते य अदंसणे ॥ १ ॥ दासे दुट्ठे य मूढे य । अणत्ते जुंगिएइ य ॥ उब्बद्धए य भयए । सेहनिप्फेडिएइ य ॥ २ ॥ तत्र सप्ताष्टौ वर्षाणि यावद्बालः, षष्टेः सप्ततेर्वा वर्षेभ्य उपरि वृद्धः. न स्त्री वा पुमान्नपुंसकः. यः स्त्रीभिर्निमंत्रितोऽसंवृत्तां वा स्त्रियं दृष्ट्वा सं-

जातकामाभिलाषो वेदोदयमधिसोढुं न शक्नोति स क्लीबः. जडस्तु त्रिधा, भाषया शरीरेण क्रियया च. भाषाजडोऽपि त्रिधा, जलमूकः, मन्मनमूकः, एलकमूकश्च. यो जलमग्न इव बुडबुडायमानो वक्ति स जलमूकः. यस्य तु वदतः खच्यमानमिव वचः स्खलति स मन्मनमूकः. य स्त्वेलक इवाव्यक्तं मूकतया शब्दमात्रमिव करोति, स एलकमूकः. पथि भिक्षाटने वंदनादिषु चातिस्थूलतयाऽशक्तः शरीरजडः. क्रियां प्रतिक्रमणप्रत्युपेक्षणादिकां पुनः पुनरुपदिश्यमानामपि जडतया यो ग्रहीतुं न शक्तः स क्रियाजडः. कुष्टभगंदरादिरोगैर्ग्रस्तो व्याधितः. क्षात्रखननमार्गपातनादिचौर्यनिरतः स्तेनः. श्रीगृहांतःपुरनृपदेहतत्पुत्रादिद्रोहकृद्राजापकारी. यक्षादिना महामोहेन वा वैकल्यं नीत उन्मत्तः. अंधस्त्यानर्धिनिद्रोदयवांश्चादर्शनः. दासेत्ति, गृहदास्या जातोऽर्थादिना वा क्रीतः, ऋणाद्यर्थं वा धृतो दासः. दुष्टो द्विधा, कषायदुष्टो विषयदुष्टश्च. तत्र सर्षपभर्जिकाभिनिविष्टसाध्वादिवदुत्कटकषायः कषायदुष्टः. अतीवयोषिदादिषु गृद्धो विषयदुष्टः. अज्ञानाद्हृदयशून्यो मूढः. ऋणार्त्तः प्रतीतः. जातिकर्मशरीरादिभिर्दूषितो जुंगितः. तत्र मातंगकोलिकसूचिकादयोऽस्पृश्या जातिजुंगिताः.

नखक्षालनशौकरिकवागुरिकत्वादिनिंद्यकर्मकारिणः कर्मजुंगिताः. करचरणकर्णादिवर्जिताः शरीरजुंगिताः. अर्थार्थं विद्यार्थं वा इयंति दिनानि त्वदीयोऽहमित्येवं येनात्मनः परायत्तता कृता स्यात् सोऽवबद्धः. रूपकादिमात्रया भृत्यो धनिनामादेशकरणाय प्रवृत्तो भृतकः. शिष्यस्य दीक्षितुमिष्टस्य निस्फेटिकाऽपहरणं शिष्यनिस्फेटिका. उपलक्षणमिदं, मातृपित्रादिभिरप्यननुज्ञातस्य. इत्यष्टादशपुरुषेषु दीक्षाऽनर्हा. एतान् दीक्षयतः शासनोड्डाहसंयमात्मविराधनादयो दोषाः. कारणे तु केषांचिदेषु दीक्षानुज्ञातैव वैरस्वाम्यादिवत्. एत एव दोषाः स्त्रीणामपि वाच्याः. गुर्विणी बालवत्सा चेति द्वौ पुनरधिकौ, तेन तासां विंशतिर्दोषाः, उक्तं च—इय अट्ठारस भेया । पुरिसस्स तहित्थियाए तह चेव ॥ गुव्विणी बालवच्छा । दुन्नि इमे हुंति अन्नेवि ॥ १ ॥ नपुंसकस्य तु षोडश भेदा आगमेऽभिहिताः, तेषु दश सर्वथा दीक्षाऽनर्हा अतिसंक्लिष्टत्वात्. ते चामी—पंडए वाइए कीवे । कुंभी ईसालुयत्तिय ॥ सउणी तक्कम्मसेवी य । पक्खियापक्खिएइया ॥ १ ॥ सोगंधिए य आसत्तो । दस एए नपुंसया ॥ संकिलिट्ठत्ति साहूणं । पव्वावेउं अकप्पिया ॥ २ ॥ एषां स्वरूपं निशीथचूर्ण्यादवसेयं. षंढ

पुनः प्रव्राज्याः, तद्यथा–विद्धिए चिप्पिए चेव। मंतउसहिउवहए ॥ इसिसत्ते देवसत्ते । पव्वाविज्ज नपुंसए ॥ १ ॥ आयत्यां राजांतःपुररक्षार्थं बाल्येऽपि छेदं दत्वा यस्य मुष्कौ गाल्येते स वर्धितकः १. यस्य तु जातमात्रस्यांगुष्ठांगुलीनिर्मृद्दित्वा मुष्कौ द्राव्येते स चिप्पितः २. एवं च कृते एतौ नपुंसकवेदोदयं प्राप्नुतः. कोऽपि मंत्रेण, कोऽप्यौषध्या. अन्यस्तु ऋषेः शापाद्देवशापाच्च तदुदयं लभते, इत्येते षडपि प्राव्राज्याः. ॥ १५ ॥ तथा—

॥ मूलम् ॥—होउ छिकारो मा वा । पुण नारीणं न वीससंति जउ ॥ संते अवसंते वा । विसंमि को विससइ अहिणो ॥ १६ ॥ व्याख्या—स्पष्टा, अन्यच्च—

॥ मूलम् ॥—अठमछठचउत्थं । करंति वरिसचउमासपक्खेसु ॥ संजमजत्ताहेउं । भुंजंति न रूवबलहेउं ॥ १७ ॥ व्याख्या—वर्षसमापको दिवसोऽपि वर्षं ज्येष्टपर्व, तत्राष्टममुपवासत्रयं. चतुर्माससमापको दिवसोऽपि चतुर्मासकं चातुर्मासिकं पर्व. तत्र षष्ठमुपवासद्वयं. पक्षसमापको दिवसोऽपि पक्षः पाक्षिकं, तत्र चतुर्थमेकमुपवासं कुर्वंति. एतत्प्रायिकीं वृत्तिमाश्रित्योक्तं, अन्यथा सत्यां शक्तौ अधिकमपि तपः सेवंते, अशक्तौ तु हीनमपि. यदपरेषु दिवसे-

षु भुंजंते, तदपि संयमयात्राहेतुं. ईर्याशुद्धिस्वाध्यायवैयावृत्यादिक्रिया न ग्रासमात्रं विना निर्वहतीति बुद्ध्या, न पुना रूपबलहेतुं, यात्राशब्दोऽत्र निर्वाहार्थः. ॥ १७ ॥ तथा—

॥ मूलम् ॥—वसहिं सया विवित्तं। संयमजुग्गं अदूसियं खित्तं ॥ गीयत्थं च सहायं। इछंतुवहिं अबहुमुल्लं ॥१८॥ व्याख्या—इछंतीति क्रियायाः सर्वत्र संबंधात्, वसतिं शय्यां सदा विविक्तां स्त्रीपशुपंडकादिरहितां इछंति. क्षेत्रं नगरग्रामाद्यं संयमयोग्यं अदूषितं च पार्श्वस्थादिभिरिछंति. संयमयोग्यता च क्षेमादिगुणयुक्तस्यैव क्षेत्रस्य भवति. यदाह—खेमो सिवो सुभिरको। अप्पप्पाणो उवस्सयमणुन्नो ॥ एसो उ खित्तकप्पो। गामनगरपट्टणाइन्नो ॥१॥ खेमो डमरविरहिउं। रोगासिवविरहिउं सिवो होइ ॥ पउरन्नपाणदेसो। होइ सुभिरको मुणेअव्वो ॥२॥ जलुगासंखगसूइग। पिसुगमसगाईविरहिउं जो उ ॥ सो होइ अप्पपाणो। अप्पअभावंमि थोवे वा ॥ ३ ॥ समभूमिरेणुवज्जिय—रिउक्कमावस्सयामणुन्नायु ॥ गामनगराविय बहू—पाउगा मासकप्पस्स ॥ ४ ॥ सज्जनजणो उ भद्दो। जहियं च मणुन्न साहुजोणीउं। तारिसउ खित्तंमि। समणुन्नाउ विहारो उ ॥ ५ ॥ तथा सहायं गीतार्थमागमज्ञमिछंति. उक्तं च—गीयं

सुत्तं भणइ । अत्थो पुण होइ तस्स वक्खाणं ॥ गीएण य अत्थेण य । गीयत्थो होइ नायव्वो ॥ १ ॥ इदमत्र तत्त्वं—यदि सर्वेऽपि विहारिणो गीतार्था भवंति तदा सम्यग्पक्षः, तदभावेऽपि यं पुरस्कृत्य विहारः क्रियते स गीतार्थ एव विलोक्यः, मुग्धमृगकुले कृष्णसारवत्. यदार्ष—गीयत्थो य विहारो । बीओ गीअत्थमिस्सओ भणिओ ॥ इत्तो तइय विहारो । नाणुन्नाओ जिणवरेहिं ॥ १ ॥ तथोपधिं भोग्यवस्त्रपात्ररूपं अबहुमूल्यं अमहद्दर्घ्यं भवंति, अन्यथा उपघातसंभवात्. ॥ १७ ॥ किंच—

॥ मूलम् ॥—पाएण लूहवित्ती । नवकप्पविहारिणोवि पाएण ॥ पाएण अणेगचारी । निप्पडिकम्माविं पाएण ॥ १९ ॥ व्याख्या—प्रायेण भूम्ना रूक्षेण निःस्नेहाशनेन वृत्तिः प्राणधारणा येषां ते रूक्षवृत्तयः, "अभिक्खणं निव्विगइं गया य त्ति" वचनात्. गुरुग्लानक्षपकबालासहादीनां स्निग्धाहारेऽपि न दोष इति प्रायोग्रहणं. तथा प्रायेण नवभिः कल्पैर्विहरंतीत्येवंशीला नवकल्पविहारिणः. तत्र ऋतुबद्धकाले मासातिक्रमे, वर्षासु च चातुर्मासातिक्रमे विहरंतीति नवविहारकल्पाः. साधूनां प्रायोग्रहणादपूर्वज्ञानाद्यर्थं क्षीणजंघाबल-

त्वेन वा चिरमपि स्थातुं कल्पते. परं तदापि स्वाश्रितं क्षेत्रं नवभिर्भागैर्विभज्य प्रतिप्रतिमासमेकैकभागे विहरंतो वर्षावासं नवमे भागे कुर्वंतीति रीतिः. तथा प्रायेणानेके समुदिताः संतश्चरंतीत्यनेकचारिणः. यदुक्तं—एगाणियस्स दोसा । इत्थीसाणे तहेव पडिणीए ॥ भिक्खविसोहि महव्वय । तम्हा स वि इज्जाए गमणं ॥१॥ पंचकल्पेऽप्युक्तं— सच्छंदठाणनिवेसणस्स । सच्छंदगहियभिक्खस्स ॥ सच्छंदजंपिरस्स य । मा मे सत्तूवि एगागी ॥१॥ प्रायोग्रहणान्निर्विकारस्य गुर्वादेशादेकाकिनोऽपि कल्पते विहर्तुं. यत्स्थानांगं—अठहिं ठाणेहिं संपन्ने अणगारे अरिहइ एगल्लविहारपडिमं उवसंपज्जित्ताणं विहरित्तए. तं जहा—सड्ढीपुरिसजाए १, सच्चेपुरिसजाए २, मेहावीपुरिसजाए ३, बहुस्सुए पुरिसजाए४, सत्तिमं५, अप्पाहिगरणे६, धिइमं७, वीरियसंपन्ने ८. इति. तथा प्रायेण निःप्रतिकर्माणः स्नानादिशुश्रूषारहिताः, प्रायोग्रहणं गुरुबालग्लानादीनां यतनया करचरणादिधावनस्यानुज्ञातत्वात्. ॥ १९ ॥ तथा—

॥ मूलम् ॥—निच्चमचंचलनयणा । पसंतवयणा पसिद्धगुणरयणा ॥ जियमयणा मिउवयणा । सव्वत्थवि सन्निहियजयणा ॥२०॥ व्याख्या—नित्यमचंचलनयना जितेंद्रियत्वात्. शेषाणि

विशेषणानि पठितसिद्धानि. ॥२०॥ तथानेकगुणधारत्वेव साधूनामनेकोपमानयोग्यतामाह—

॥ मूलम् ॥—विरया सुइरयणजुत्ता । महियमया तारवत्त सुबहुदया ॥ ससिमेहनयरहा इव । रेहंते सायरसहाया ॥ २१ ॥ व्याख्या—इह प्रथमद्वितीयतुरीयपदैरधिकारायाताः साधव उपमेयाः तृतीयपदेन तेषामुपमानानि चंद्रादीनि ज्ञेयानि. 'रेहंतेत्ति' शोभंते. कीदृशा इत्याह—विरमंतिस्म सावद्ययोगेभ्य इति विरताः, शुचीनि पवित्राणि, 'तत्थ यतिरयणविणिउगमइयमिति' स्वमतालंबनात्, "न्यवेशि रत्नत्रितये जिनेन यः" इति परमताभिप्रायाच्च, रत्नानि ज्ञानदर्शनचारित्राणि तैर्युता युक्ताः. तथा मथितो विलोकितोऽष्टरूपोऽपि मदो यैस्ते मथितमदाः. तथा तारं निर्मलं वृत्तं चारित्रं येषां ते तारवृत्ताः. रत्नत्रयांतःसंगृहीतमपि यत्पुनश्चारित्रमुपात्तं, तद्रत्नत्रयेऽपि चारित्रप्राधान्यख्यापनार्थं. ज्ञानदर्शनवतामपि चारित्रमंतरेण मोक्षानभ्युपगमात्. तथा सुबहुर्दया सर्वजीवेषु हितचिंतनरूपा येषां ते सुबहुदयाः; ततः कर्मधारयः. इह अहिंसाप्रमुखमहाव्रतरूपे चारित्रे गृहीतेऽपि यत्पुनर्दयाग्रणं तच्चारित्रेऽपि दयासारत्वज्ञापनार्थं. तथा सादरः सोपक्रमो महत्यपि संकटे यथोचि-

तानुष्टानकारी स्वभावो येषां ते सादरस्वभावाः. न तु माताशब्दज्ञापकपुरुषवद्हास्योपहताः, इत्येकोऽर्थः. ॥ १ ॥

के इव? शशिन इव, बहुवचनमत्र सर्वज्ञतत्वज्ञहृदयानंदकं, कथंभूताः? उः हरः, इः स्मरः, उश्च इश्च विः, तत्र रता विरताः, हरशिरःस्थानात् स्मरसहचरत्वात्. तथा सुदेः स्वेतपक्षस्य रचनं, तेन युताः सुदिरचनयुताः, शशिप्रभयैव शुक्लपक्षप्रतिष्टानात्. तथा मकारोऽलाक्षणिकः, आभकाः कामुकास्तेषां मता इष्टा अभिमताः, चंद्रकरस्पर्शेन तेषां शृंगाररसस्योद्दीपनात्. तथा तारास्वश्विन्यादिनक्षत्रेषु व्यक्तः सुबहुरुदयो येषां ते. तथा सागरः सहायो येषां ते सागरसहायाः, समुद्र एव हि विधोर्वृद्धिं त्रुटिं वानुसरतीति द्वितीयोऽर्थः. ॥ २ ॥

पुनः साधुपक्षः प्रस्तूयते–किं विशिष्टाः साधवः? विगतं रतं ग्राम्यधर्मो येभ्यस्ते विरता ब्रह्मचारिण इत्यर्थः. तथा जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते इति वृद्धवादात्. श्रुतिरत्नं प्रधानशास्त्रं अंगप्रविष्टाद्यं तेन युताः श्रुतिरत्नयुताः. तथा महितं पूजितं मतं शासनमेषां ते महितमताः. तारमतिशयेन व्यक्तेषु विद्वत्सु सुबहुरुदयो येषां ते तारव्यक्तसुब-

हृदयाः. तथा सातं सुखं रांति ददतीति सातराः सहायाः संयमिनामिति गम्यते. अन्ये सहाया हितचिंतका अपि परमार्थतो दुःखदा एव, न तथा साधवः, यदार्षं—"असयाए सहायत्तं । करंतिमे संयमे चरंतस्स" इति तृतीयोऽर्थः ॥ ३ ॥

के इव? मेघा इव, कीदृशा मेघाः? इत्याह—विशिष्टो रयो जलप्रवाहो येभ्यस्ते. तथा "सुइरत्ति" स्वपनशीलानि अनांसि शकटानि यत्र, एवंविधो युगः कालविशेषो येषु ते. तथा पंकाकुलत्वेन तदा तेषां निर्व्यापारत्वात्. महामहिषास्तैरितः प्राप्तो मदो येषु ते महेतमदाः, वर्षासु माहिषं माद्यतीति प्रत्यक्षगम्यं. तारं वृत्तः सुवहानां प्रधाननदीनां उदयो येभ्यस्ते. तथा सादं खेदं रांति ददतीति सादराः शफाः खुरा यासां ताः सादरशफा अजाश्छाग्यो येभ्यस्ते सादरशफाजाः. वर्षति हि वारिदे वारिणा शटत्सु शफेषु छागीनां खेदो जायते. इति चतुर्थार्थः. ॥ ४ ॥

पुनः साधुपक्षे विरजसो बध्यमानकर्मरहिताः. तथा "यथा वाचा निशा गिरा" इति वचनदर्शनात् सुगिरा मधुरवचना ये जना ऋषयस्तैर्युताः सुगिराजनयुताः, न तूद्भटखल-

जनव्यासंगकलुषिता इत्यर्थः. मकारस्यालाक्षणिकत्वात्. अधिको विशिष्टज्ञानादिलाभेन मदो हर्षो येषां ते. तथा तारां निर्मलां वृत्तां वृत्ताकारां सुष्टु प्राधान्यं, नित्यत्वाकृतकत्वादिनान्यवनितादिभ्यो विलक्षणां वधूं सिद्धिलक्षणां दयंते ददति ये ते तारवृत्तसुवधूदयाः. "दीर्घह्रस्वौ मिथोवृत्तौ" इति पदेन वधूशब्दस्य ह्रस्वः. एवं सर्वत्र दीर्घस्य ह्रस्वीकरणे ह्रस्वस्य च दीर्घीकरणेऽयमेव न्यायोऽनुसर्तव्यः. हायनं हायः परित्यागः, शाकरसस्य हाया येषु ते शाकरसहायाः सर्वेष्वपि रसेषु प्रायः शाकरसो दुस्त्यजोऽतस्तद्ग्रहणं, उपलक्षणं वा शेषरसाणां. इति पंचमोऽर्थः. ॥ ५ ॥

अथ नगः पर्वतस्तत्पक्षः—विशिष्टा रदा दंतका गिरेर्बहिर्निर्गतास्तिर्यक्प्रदेशा येषु ते विरदाः. तथा सुकिरणानि महासूकरणानि वनानि वृक्षसमूहास्तैर्युताः सुकिरवनयुताः. तथा महमुत्सवं इताः प्राप्ता महेता निरुपद्रवत्वात्, मृगा अरण्यकाः पशवो गजविशेषा वा येषु ते महेतमृगाः. तारं रौप्यं, शेषधातूनामुपलक्षणं, वृत्तं निष्पन्नं येषु ते तारवृत्ताः. सुष्टुवहानां नदीनामुदयो येभ्यस्ते सुवहोदयाः. पर्वतजा हि नद्य इति रूढिः, ततः कर्मधार-

यः· तथा रः कामस्तस्येहा रेहा तदंतकरत्वात् रेहांता ऋषयस्तेषामेष इभा येषु ते रेहांतैषाः, मुक्तकामा हि मुनयो महीध्रमध्य मध्यासते. तथाऽतरसां दुर्बलानां सखायो 'राजन् सखीति' अद्प्रत्ययेऽतरःसखा अगा वृक्षा येषु तेऽतरःसखागाः, रणतुमुलत्रस्तानां हितकातराणां गिरिद्रुमा एव शरणं. यद्वा न विद्यते करो राजदेयो भागो येषां तेऽकरा भिल्लादयस्तत्सखा अगा द्रुमा येषां ते, तथा कर्मधारयः. इति षष्ठोऽर्थः. ॥ ६ ॥

पुनः साधुपक्षः—विशिष्टो रवो व्याख्यानध्वनिर्येषां ते विरवाः. श्रुतिं आगमश्रवणं राति ददातीति श्रुतिरो यो गणो गच्छस्तेन युताः, आगमावगमाय गच्छवासमाश्रिता इत्यर्थः. मखिनां याज्ञिकानां यज्ञनिषेधकत्वेन अमता अनिष्टा मख्यमताः. ता लक्ष्मीः, रः कामस्तत्र वृत्तिर्व्यापारो येषां ते तारवृत्तयो लक्ष्मीलुब्धाः कामगृद्धाश्च, तैरसुवह उदयः शीलांगरूपो येषां ते तारवृत्त्यसुवहोदयाः. तथा सादं खेदं रांतीति सादराः प्रत्यनीकास्तान् प्रति सहः क्षम आत्मा येषां ते सादरसहात्मानः, प्रत्यनीककृतव्यलीकानां सोढार इत्यर्थः. इति सप्तमोऽर्थः ७.

अथ नगशब्दस्य द्व्यर्थत्वान्नगस्तरुस्तत्पक्षे—विरतासोर्गतप्राणस्य एः कामस्य रवणं श-

दनं तेन युता विरताखिरवणयुताः. वृक्षा हि स्निग्धछायतया त्रिनयननयनानलज्वलकितमपि मदनमुज्जीवयंति. भूम्यंतर्गतमूलत्वेन महिं पृथ्वीं भ्रमंति गछंति मह्यमकाः. तथा ताराणि कीटाद्यैरदूषितानि पत्राणि दलानि येषां ते तारपत्राः. सुबहुरतिमहत्वमापन्नो दवो दहनं येभ्यस्ते सुबहुदवाः, ततः कर्मधारयः. तथा स्वापरसस्य भावो भवनं येभ्यस्ते स्वापरसभावाः, पांथा हि वृक्षतलमासाद्य सद्यः शेरत इति. इत्यष्टमोऽर्थः. ॥ ८ ॥

पुनः साधुपक्षः, विरता निवृत्ता आशा धनांगनादिस्पृहा येषां ते विरताशाः. भः ईश्वरस्तद्वत् एः कामस्य विलेखनं, तेन युतास्ततः कर्मधारयः. महः सर्वभावाविर्भावकं ज्योतिस्तेन इतं प्राप्तं मतं मननं ज्ञापनमेषां ते महइतमताः. तथा तारो निर्मलो व्यक्तः प्रकटः सुपक्षो ज्ञानदर्शनचारित्रात्मको मार्गस्तेन भत् ऊर्ध्वं मोक्षाभिमुखमयंते गछंतीति तारव्यक्तसुपथोदयाः. तथा रे इत्यामंत्रणं अघस्य पापस्य अंताय ईशते ते अघांतेशाः. अरसेषु निःस्वादेषु प्रस्तावाद्भक्तपानेषु भावो येषां तेऽरसभावाः, न तु सरसरसवत्यास्वादस्वादश इत्यर्थः. इति नवमोऽर्थः. ॥ ९ ॥

नगशब्देन मात्राच्युतगत्या नागोऽपि सूच्यते, ततस्तत्पक्षः—विशिष्टा रदा मुखांतर्गता दंता येषां ते विरदाः विशिष्टत्वं वान्यसत्वापेक्षया काष्टादिकमपि त्रोटितुं क्षमत्वात्. तथा शुचि श्वेतं रदनयुगं मुखाद्बहिर्निर्गतं दंतद्वयं येषां ते शुचिरदनयुगाः. तथा मृधार्थं युद्धार्थं इतः प्राप्तो मदो दानजलं यैस्ते मृधेतमदाः. ताराणि मौक्तिकानि तैर्वृत्ता वृत्तलक्षणया आदृतास्तारवृत्ताः. यन्नामकोषः—"वृत्ते तु वृतवान् वृत्तौ". कुंभिकुंभेषु हि संभवंति मुक्ताः. सुबहुर्द्रवो गमनं येषां ते सुबहुद्रवाः, शीघ्रगतयः, ततः कर्मधारयः. तथा 'रेहंतत्ति', रेखमाणा गर्जिशब्दं कुर्वाणाः, ईशानां राज्ञां अदरां निर्भयां सत्रां यांतीति ईशादरसभायास्ततः समासः. इति दशमोऽर्थः. ॥ १० ॥.

पुनः साधुपक्षः—विशिष्टा रतिश्चारित्रे विद्यते एषामत्राादित्वात् अप्रत्यये विरताः. शुचिः सूर्यस्तद्वत् रयणं गमनं तेन युताः. यथा एकत्र राशौ वासरेशस्तथा यतयोऽप्येकत्र ग्रामादौ मासमेव तिष्ठंति. आमेषु प्रस्तावादारोग्येषु हितं पथ्यं मतं शासनमेषां आमाहितमतास्ततः पूर्वपदेन कर्मधारयः. तथा तारा निर्मलाः. अकारविश्लेषात् अवृत्तोजानोऽसूनां

प्राणिप्राणानां वधाय उदयो येषां तेऽवृत्तासुवधोदयास्ततः कर्मधारयः. इहासुमतो वधायोगादसुग्रहणं. तथा रः पादपूरणे, ईहाया अंतकरत्वात् ईहांता निर्ममास्तेषु ईशाः स्वामिन ईहांतेशाः. अरसो मुक्तकामत्वेन निरास्वादो हावः स्त्रीणां द्वितीयोंगजालंकारो येषु तेऽरसहावाः, तुलायष्टिवन्मध्यग्रहणे आद्यंतयोरपि ग्रहणं, नवतीनावहले अप्यत्र ग्राह्ये. इत्येकादशार्थः. ॥ ११ ॥

न य शब्देन प्राकृतशैल्या नदा उच्यंते, ते चेह अल्पजला नदा अगाधजला हृदा इत्यवांतरभेदानाश्रयणात् पद्महृदादयस्ततस्तत्पक्षः—'उहरत्ति' उदयनशीला विशिष्टा रताशा रमणाभिलाषो येषु तानि उदित्वरविरताशानि वनानि जलानि तैर्युताः. तत्र हि शीतला जललहरीर्निरीक्ष्य संजातरमणरणकाः सुराः खेचराश्च परितः क्रीडंति. अत्र प्राकृतत्वाद्विशेष्यं पूर्वनिपतितं. यन्नाममाला—पात्रं तदंतरमिति. तथा सुबहुर्द्रवो नीरस्पंदो येभ्यस्ते सुबहुद्रवाः. गंगासिंधुमुख्याः सिंधवो हि तेषां स्पंदः. तथा स्वादप्रधानो रसः स्वादरसः सुस्वादुजलं, तस्य भावः स्वयमेवोत्पत्तिर्येभ्यस्ते स्वादरसभावाः. न हि तेषु पर्जन्यजन्यं जलं,

किंतु विश्रसापरिणामेन ते ते पुद्गला जलरूपतया स्वयमेव परिणमंतीति भावः. इति द्वादशार्थः ॥ १२ ॥

पुनः साधुपक्षः—विगतो रः कामो येभ्यस्ते विराः, स्वार्थे को विरकाः. श्रुतेः शास्त्रस्य रेण शब्देन वित्ताः श्रुतिरणास्तैर्युक्ताः, शास्त्रज्ञसंगतिकृत इति भावः. तथा मथितो निवारितो मदो मद्यपानजन्मा समग्रप्रमादानामादिभूतो यैस्ते मथितमदाः. तथा ताराणां वार्तानां पूर्वपुरुषकथानां सुबहुश उदयो येभ्यस्ते तारवार्तासुबहूदयाः. तथा शातास्तक्षिता रसानां नाट्यप्रसिद्धानां अष्टानां शृंगारादीनां भावाः स्थायिनो रत्यादयो व्यभिचारिणश्च धृत्यादयो यैस्ते शातरसभावाः. इति त्रयोदशार्थः. ॥ १३ ॥

अथ रथपक्षः—विशिष्टो रयो वेगो येषां ते विरयाः. तथा शुचिरचनं यथास्थाननिवेशनात् पवित्रघटनं युगं कुबरं येषां ते शुचिरचनयुगाः. मखितं गमनं तत्र मता अभीष्टाः. तारमतिशयेन वर्त्मनि मार्गे सुष्ठु प्रधानेन वहेन वृषभस्कंधेन उदयो येषां ते तारवर्त्मसुबहोदयाः. तथा 'रेइंतत्ति, राजमाने ईषे इव ईषे उभयपार्श्ववर्तिनो काष्ठे येषां ते राजमा-

नेषाः. अरेषु सहं समर्थं अयो लोहं येषु तेऽरसहायसः. लोहबद्धारको हि रथः स्थपुटेऽपि पथि संचरन्न भज्यते. इति चतुर्दशार्थः. ॥ १४ ॥

पुनः साधुपक्षः—विगतो रजो द्वितीयगुणः, उपलक्षणत्वात्तमोऽपि येषां ते विरजसः सात्विका इत्यर्थः. आसुतिर्मद्यसंधानं, रः कामः, "अणत्ति" ऋणं, अकारप्रश्लेषात्तैरयुता रहिताः आसुतिरृणायुताः, मद्यव्यसनिनः कामिनः ऋणिनश्चारित्रनिषेधात्. तथा प्रेत्यं बोधिप्राप्त्या महितमिव महितं मृतं मरणं येषां ते महीतमृता उत्सवप्रायमरणा इत्यर्थः; यतः—संचिततपोधनानां । नित्यं व्रतनियमसंयमरतानां ॥ उत्सवभूतं मन्ये । मरणमनपराधवृत्तीनां ॥ १ ॥ तथा तारं उच्चैरुच्यत इति तारवाक्, तस्य भावस्तारवाक्त्वं, तत्र सुवहृवन्महापूरवदुदयो येषां ते तारवाक्त्व सुवहोदयाः. यथा हि प्रथमप्रावृषि पूर्वं प्रेरणवा प्रसर्पन् पानीयपूरो न केनापि रोध्धुं शक्यस्तथा व्याख्याक्षणे मुमुक्षवोऽपि तथा स्व आत्मीयः, अपरश्च तद्व्यतिरिक्तस्तत्र समानो विशेषरहितो भावोऽभिप्रायो येषां ते स्वापरस्वभावाः सम मित्रशत्रव इत्यर्थः. ॥ इति पंचदशोऽर्थः. ॥ १५ ॥

अथ "नयरहत्ती" त्युपमानपदं प्राकृतबलाद्भंक्त्वाऽन्यथा व्याख्यायते—नगरं पुरं, खश्च सूर्यः, खो रवौ इत्यमरवचनात्. तत्र पूर्वं नगरपक्षः—विशिष्टो रवः कलकलो येषु तानि विरवाणि, घरट्टघोषजनरववाद्यध्वनिभिः शब्दमयत्वात्. "सुइरन्ति" शुकवंति यानि वनानि, तैर्युतानि शुकवद्वनयुतानि. वनखंडैरेव नगरगोचरं सश्रीकं. महितानि, तारकादिभ्य इत् इति इत्प्रत्यये उत्सवयुक्तानि. अत एव मतान्यभिष्टानि. तथा तारा उज्ज्वला वार्ता आजीविका व्यवसायरूपा यत्र तानि तारवार्तानि. सुबहवो द्रवा द्यूतादिकाः केलयो येषु तानि सुबहुद्रवाणि, ततः कर्मधारयः. तथा रे इति संभाषणे, खांतेन आकाशप्रांतेन ईर्ष्यां स्पर्धां कुर्वंतीति खांतेर्ष्याकराः, सद्मा आवासास्तासां श्रया इव श्रया इष्टदेवा इत्यर्थः. खांतेर्ष्याकरसद्माया निरुपद्रवत्वेन नगरेष्वावासानामभंगुरत्वात्. अत्र सर्वत्र प्राकृतत्वाल्लिंगव्यत्ययः.

॥ इति षोडशोऽर्थः. ॥ १६ ॥

पुनः साधुपक्षः—द्वयोः स्वपरकार्ययो रता द्विरताः, बुद्धत्वाद्बोधकत्वाच्च. तथा एकाकिभिर्न विहर्तव्यं, द्विहस्तांतरितैर्निशि प्रस्वप्तव्यं, न नित्यवासैर्भाव्यमित्येवं शुचिरवदाता

रचना येषां ते शुचिरचना युवानस्तरुणश्रमणा येषु ते शुचिरचनयुवानः. तथा महीनामनदी, शेषमहानदीनामुपलक्षणं, अमताऽवगाह्यत्वेनानिष्टा येषां ते मह्यमताः, यत्स्थानांगे—"नो कप्पइ निग्गंथाण वा निग्गंथीण वा इमाउ उद्दिट्ठाउ गणियाउ वंजियाउ पंचमहस्सवाउ महानइउ अंतोमासस्स डुक्खुत्तो वा तिक्खुत्तो वा उत्तरित्तए वा संतरित्तए वा, तं जहा—गंगा, जउणा, सरउ, एरवइ, मही". तथा ताराणि परतीर्थिकापेक्षया निर्मलानि पात्राणि ज्ञानादिगुणानां, अत एव सुबहुभिर्दृता आद्दताः सुबहुद्दताः. तथा रेखा आयुःकर्मदलिका पद्धतिः. तथा च लोकेऽपि वक्तारो भवंति, यथास्य कर्मरेखा डुर्बला सबला वेति तस्या रेखाया अंते आयुःसमाप्तावित्यर्थः. स परोक्ष इति वचनात् सांपरोक्ष्यं अजराणां नित्यतरुणत्वेन देवानां वयोविभागव्यतीतत्वेन सिद्धानां वा सत्रां स्थानं गच्छतीति साजरसभागाः. उपरता हि मुनयः स्वर्गं मुक्तिं वा यांतीति निश्चयः. यदार्षं—निव्वाणसुहं पावइ साहू सव्वसिद्धिं वा. इति सप्तदशोऽर्थः. ॥ १७ ॥

अथ सूर्यपक्षः—वौ पक्षिणि चक्रवाके रता विरंतास्तद्बंधुत्वात्. शुचौ आषाढमासे रा

इव अग्नय इव तापकत्वात् शुचिरा गणा अष्टादश माठराद्यास्तैर्युताः, ततः कर्मधारयः. मथितं शोषितं अमृतं जलं यैस्ते मथितामृताः. तारं प्रधानं वार्त्तमारोग्यं येभ्यस्ते तारवार्त्ताः. आरोग्यं भास्करादिति वचनात्. सुबहुः शेषग्रहापेक्षया उदयो येषां ते सुबहूदयाः. यदुक्तं—रवेरेवोदयः श्लाघ्यः । कोऽन्येषामुदयग्रहः ॥ न तमांसि न तेजांसि । यस्मिन्नभ्युदिते सति ॥ १ ॥ यद्वा तारावर्त्म आकाशं, तदेव समत्वाद्विशालत्वाच्च सुपथस्तत्रोदयो येषां ते तारवर्त्मसुबहूदयाः. रे इत्यालापे, भानामुडूनां अंते प्रभाभंगे सातरसा तीक्ष्णरसा या भा प्रभा तां यांति प्राप्नुवंति शातरसभायाः, बहुवचनं जिनमतापेक्षं. इत्यष्टादशार्थः. १७.

पुनः साधुपक्षः—सलीलगत्या गंभीरप्रकृत्या च द्विरदाः. न चैतदुपमानमनुपपन्नं, तीर्थंकृतामपि पुरुषवरगंधहस्तित्वेन पठितत्वात्. तथा श्रुती कर्णौ राति ददाति श्रुतिरं, अयनं दक्षिणोत्तरायनरूपं, युगं च पंचवर्षात्मकं येषां ते श्रुतिरायनयुगाः. मुनींद्रमुखात् अशीत्यधिके मंडलशते दिनकरसंचरणरूपं अयनं, तथा श्रावणासितप्रतिपत् प्रथमारंभं चंद्र, चंद्र, अभिवर्द्धित, चंद्र, अभिवर्द्धितवर्षनिष्पन्नं युगं च सम्यग् निशम्य अकर्णा अपि सकर्ण-

त्वं नजंते इति नावः. मृधं संग्रामं कुर्वंति तत्करोतीति ततः क्लीबे क्त इति क्तप्रत्यये मृधितं संग्रामकरणं, तत्र स्वनावनीरुत्वेन मृगा इव मृगाः, तारं अत्यर्थं वार्तानां फल्गूनां पाखंडिनामित्यर्थः, सुबहुर्द्रवः पलायनं येभ्यस्ते तारवार्तासुबहुद्रवाः, प्रवचनज्ञान्निरीक्ष्य पाखंडिनः पलायंते इति स्फुटमेव. तथा स्वात्मन्येव रसनावो येषां ते स्वात्मरसनावाः. बाह्यव्यापारपरित्यागेन परमात्मस्वरूपेण रसिका हि परममुनयः. इत्येकोनविंशत्तमोऽर्थः. ॥ १९ ॥

अथ गाथांतरनुक्तान्यपि परमऋषीणां गांनीर्याद्धर्मरथाधिकृतत्वान्निरुपलेपत्वात्पुरुषोत्तमत्वाच्च वारिधिचक्रकमलवासुदेवानामप्युपमानानि संगछंते. ततस्तत्पक्षा अपि प्रपच्यंते—तत्र पूर्वं समुद्रपक्षः—विरजसो रेणुरहिताः सर्वतो जलमयत्वात्, शुचीनां रत्नानां कर्केतनादीनां अयुतानि दशसहस्रा येषु ते, तथा अयुतमिति बहुत्वख्यापनार्थं, न तु नियमार्थं, यथा शतायुर्वै पुरुष इति. मथितेषु अमृतं जातमेषु मथितामृताः. ता लक्ष्मीस्तस्या रवेण शब्देन आर्त्तानां धनलुब्धानामित्यर्थः, सुबहु दयंते इति तारवार्तासुबहुदयाः. व्यवसायिनो हि समुद्रं श्रिताः शतगुणं लानं लभंते. तथा सुष्टु प्रधाना आकरा मणिमुक्ताप्रवालानां ये-

षु ते स्वाकराः. सह ह्रादेन घोषेण वर्तते इति सह्रादाः, ततः समासः. इति त्रिंशत्तमोऽर्थः ३०.
अथ चक्रपक्षः—विशिष्टो रवश्चीत्कार एषां तानि विरवाणि, शुचिरचनया प्रधानघट-
नया युतानि. महिताः पूजिताश्चक्रादयस्तेषां मतानि इष्टानि महितमतानि. तारं वृत्तानि
परिमंडलाकारत्वात्. सुबहुद्रवानि शीघ्रगतीनि क्वाप्यस्खलितत्वात्. तथा सादं खेदं रांती-
ति सादरा वनादयस्तानपस्यति अंतयति घातः प्रहारो येषां तानि सादरलघानि. इत्येक-
त्रिंशत्तमोऽर्थः. ॥ ३१ ॥
अथ कमलपक्षः—विशिष्टं रजः परागो येषु तानि विरजांसि. शुचिना सूर्येण रचनं
व्याकोशतायाः करणं, तेन युतानि शुचिरचनयुतानि. महनं महितं देवानां पूजनं तत्र म-
तानि इष्टानि. तार उच्चैर्ध्वनिर्वक्त्रेषु येषां ते तारवक्त्राः. प्रस्तावाद्भ्रमरमरालादयस्तेषां सु-
बहुर्द्रवः केलिरेषु तानि तारवक्त्रसुबहुद्रवाणि. तथा सादः पंको रसश्च जलं ताभ्यां जा-
तानि शोभितानि सादरसजातानि, पंकजातत्वाज्जलसंवर्धितत्वाच्च. इति द्वात्रिंशत्तमोऽर्थः. ३२.
अथ वासुदेवपक्षः—विना गरुडेन रयो वेगो येषां ते विरयाः, गरुडवाहनत्वात्. वि-

शिष्टं रज एषां विरजसो वा रजोगुणे हि स्थितो विष्णुर्विश्वं पालयतीति लौकिकाः. शुचिरत्नैश्चक्रादिभिर्युताः शुचिरत्नयुताः. यत्संग्रहणिः—चक्कं खग्गं च धणू । मणी य माला तहा गया संखो ॥ एए उ सत्तरयणा । सव्वेसिं वासुदेवाणं ॥ १ ॥ मथितो मयो नाम दैत्यः, सर्वदैत्यानामुपलक्षणं, यैस्ते मथितमयाः. तारवक्त्रा उज्ज्वलमुखाः सुवध्वः सत्यभामारुक्मिण्यादयस्ताभिः सह द्रवः केलिर्येषां ते तारवक्त्रसुवधुद्रवाः. तथा सादराः सोपक्रमाः सहाया बलदेवादयो येषां ते सादरसहायाः. ॥ इति त्रयोविंशत्तमोऽर्थः. ॥ २३ ॥ एवमस्या बह्वर्थाया गाथायाः कियंतोऽर्था लिखितुं पार्यंते? ते च धीमता स्वयमुन्नेया इति. ॥ २१ ॥ अथ साधुगुणानेव एकोत्तरवृद्धिविशिष्टानाह—

॥ मूलम् ॥—नाणे दंसणचरणे । सामण्णेगहा न हायंति ॥ दुविहं वहंति सिक्खं । बज्झंति न गारवेहिं तेहिं ॥ २२ ॥ व्याख्या—अंतर्गर्भितनिःशेषविशेषेण सामान्येन एकविधे ज्ञाने तत्वावबोधरूपे, दर्शने तत्वार्थश्रद्धानात्मके, चरणे जिनोक्तानुष्ठानलक्षणे, न हीयंते, न हीना भवंति, अप्रमत्तत्वात्. तथा द्विविधां ग्रहणासेवनाभेदात् शिक्षामनुशास्ति

गुरोरिति गम्यते, वहंति. तत्र साधूनाश्रित्य योगोद्वहनपूर्वा पूर्वादिसिद्धांताधीतिर्ग्रहणशिक्षा. साध्वीराश्रित्य पुनरेकादशांगाध्ययनं ग्रहणशिक्षा. यद्भाष्यं—तुच्छा गारवबहुला । चलिंदिया दुब्बला धिईए य ॥ इय अइसेसज्झयणा । भूयावाउ य नो थीणं ॥ १ ॥ आसेवनाशिक्षा तु द्वयेषामपि दशविधसामाचारीरूपा. उपलक्षणत्वाच्छेषापि गमनभोजनप्रत्युपेक्षणादि साधुव्यवहारप्रवृत्तिः. यदाह—सा पुण दुविहा सिक्खा । गहणे आसेवणे य नायव्वा ॥ गहणे सुत्ताहिज्जण । आसवणा तप्पकप्पाइ ॥ १ ॥ तथा त्रिभिर्गौरवैः ऋद्धिरससातलक्षणैर्न बध्यंते न स्ववशीक्रियंते. तत्र वस्त्रपात्रशयनाशनश्रावकादिऋद्ध्या चित्तोत्कर्षं ऋद्धिगौरवं, दायकबाहुल्येनान्वहं नवनवरसवतीलाभाद्युन्मादो रसगौरवं. शरीरसौख्यार्थं सुकोमलशय्यादिकरणं सातगौरवमिति. ॥ २२ ॥

॥ मूलम् ॥—चउहाभिग्गहधारी । सज्झायं पंचहा विभावंति ॥ छज्जीवनिकायहिया । मुणंति सत्तविहमागाढं ॥ २३ ॥ व्याख्या—चतुर्धा द्रव्यक्षेत्रकालभावभेदात् अभिग्रहान् धरंतीत्येवंशीला अभिग्रहधारिणः. तत्र लेपकृदलेपकृदेवं वा द्रव्यं मया ग्राह्यमिति

द्रव्याभिग्रहः, द्रव्यप्रमाणकरणं वा. (१). क्षेत्रत एकद्विच्यादिष्वेव गृहेषु. (२). कालतः पूर्वाह्णमध्याह्नादावेव मया पर्यटनीयमिति क्षेत्राभिग्रहः कालाभिग्रहश्च. (३) हसतो रुदतो गायतो वा निषण्णादेर्वा हस्तेन भिक्षाग्रहणं भावाभिग्रहः (४). एवमभिग्रहचातुर्विध्यं सर्वत्र भावनीयं. तथा पंचधा वाचनापृच्छनापरावर्तनानुप्रेक्षाधर्मकथाभेदात् स्वाध्यायं विशेषेण भावयंति. विशेषश्च स्वाध्यायस्य प्राधान्यख्यापनार्थः, तन्मूलत्वात्सर्वाचरणानां. उक्तं च— बारसविहंमि तवे । अभ्भितरबाहिरे कुसलदिठे ॥ नवि अत्थि नवि होही । सज्झायसमं तवोकम्मं ॥ १ ॥ तत्रानधीतस्य सूत्रस्य ग्रहणं वाचना (१). ततः संदेहे सति पृछना पृछा. (२). निश्चितस्य सूत्रस्य अविस्मरणार्थं गुणनं परिवर्त्तना (३). सूत्रवदर्थस्यापि चिंतनमनुप्रेक्षा. (४). अभ्यस्तसूत्रार्थस्य परंप्रत्युपदेशदानं धर्मकथेति. (५). तथा षण्णां जीवनिकायानां पृथ्व्यप्तेजोवायुवनस्पतित्रसानां हिताः संरंभसमारंभारंभविवर्जनात्. तत्र—संकप्पो संरंभो । परितावकरो भवे समारंभो ॥ आरंभो उद्दवओ । सुद्धनयाणं च सवेसिं ॥ १ ॥ तथा अपवादालंबनाय आ सामस्त्येन गाढं बलीयः कारणं आगाढमित्युच्यते. द्रव्यक्षेत्रका-

लजावपुरुषचिकित्सासहायभेदात्सप्तविधं जानंति. तत्राध्वकालादौ द्रव्यदुर्लभतां विमृश्य विधिना खर्जूरादिद्रव्यं संगृह्णतो द्रव्यागाढं. तथाविधक्षेत्रांतराभावे एकत्रापि क्षेत्रे तिष्ठतः क्षेत्रागाढं. विहारायोग्ये काले सुचिरमप्यवतिष्ठमानस्य कालागाढं. अत्युत्कटे संकटे निषिद्धमप्याददानस्य भावागाढं. यस्मिन्विनष्टे गच्छस्य विनाशस्तस्य पुरुषस्य कृतेऽशुद्धमपि गृह्णतः पुरुषागाढं. प्रासुकौषधोपदेशविदुषो वैद्यस्यालाभे सावद्यामपि चिकित्सां कारयतश्चिकित्सागाढं. सहायाभावे विहारादिकमकुर्वतः सहायागाढं. उक्तं च पंचकल्पे—दव्वे खित्ते काले । भावे पुरिसे तिगिछ असहाए ॥ एएहिं कारणेहिं । सत्तविहं होइ आगाढं ॥ १ ॥ जावंति पवयणंमि । पडिसेवा मूलउत्तरगुणेसु ॥ ता सत्तसु सुद्धेसु । सुद्धमसुद्धा असुद्धेसु ॥२॥२३॥ तथा—

॥ मूलम् ॥—पेहंति अट्ठसुहुमे । अनवनियाणा नायदसधम्मा ॥ तिगुणिक्कारसअट्ठ्या—सणुज्झिया बारसतवस्सी ॥ २४ ॥ व्याख्या—अष्टौ सूक्ष्माणि सूक्ष्मत्वाद्दुर्लक्ष्याणि प्रेक्षंते प्रयत्नेन पश्यंति, प्रेक्ष्य च परिहरंतीत्यर्थः. यदार्षं—सिणेहं पुप्फसुहुमं च । पाणुत्तिगं तहेव य ॥ पणगं बीयं हरियं च । अंडसुहुमं च अट्ठमं ॥ १ ॥ तत्र स्नेहसूक्ष्मं अ-

वश्यायादि १. पुष्पसूक्ष्मं वटपुष्पादि २. प्राणसूक्ष्मं कुंथ्वादि ३. उत्तिंगसूक्ष्मं कीटिकानगरादि ४. पनकसूक्ष्मं पंचवर्णफुल्ली ५. बीजसूक्ष्मं शाल्यादि ६. बीजस्य मुखे यल्लोके तुषकणिकेत्युच्यते. हरितसूक्ष्मं किशलयादि ७. अंडसूक्ष्मं कीटिकांडादि ८. तथा "अनवनियाणत्ति" न विद्यंते नवसंख्यानि निदानानि राज्यादिप्रार्थनारूपाणि येषां तेऽनवनिदानाः, तत्र देवानामदृश्यत्वाद्राज्यस्यैव प्रार्थनं प्रथमं, राज्ञोऽपि चिंताक्रांतत्वेन दुःखित्वादुग्रादित्वप्रार्थनं द्वितीयं, पुरुषाणां बहुव्यापारवत्वात्संग्रामादिदुःखकारित्वाच्च स्त्रीत्वप्रार्थनं तृतीयं, स्त्रीणां नीरुत्वाच्छंकनीयत्वाच्च पुरुषप्रार्थनं चतुर्थं, मनुष्याणामशुचयो नोगा इति सुरते देवत्वप्रार्थनं पंचमं, अत्यंतकामलौल्याद्दुरतदेवत्वप्रार्थनं षष्ठं. एतेषु षट्सु तपसा तत्तद्भावत्वं प्राप्तस्य न नवति बोधिलाभः. भोगनिर्विण्णत्वादरतदेवत्वप्रार्थनं सप्तमं, अस्मिंश्च देवनवानंतरं प्राप्तमानुष्यस्य सम्यक्त्वलाभः स्यात्, न पुनर्देशविरतिः. तथा धर्मश्रद्धालुत्वाद्भोगानिर्विण्णत्वात् श्रावकत्वप्रार्थनं अष्टमं, अस्मिंश्च देशविरतिर्नवति, न पुनर्यतिधर्मः. तथा कामनोगनिर्विण्णस्य दारिद्र्ये सति गृहवासः सुत्यजः स्यादिति दारिद्र्यप्रार्थनं नवमं. अयं हि प्राप्त-

असौ हतवान् हंति हनिष्यतीति छिद्रसर्पादेर्हिंसनं हिंसाक्रिया ३, लक्ष्यार्थं बाणं मुंचतोंऽतरागतस्य पक्ष्यादेर्हननमकस्मात्क्रिया ४, निरपराधस्याप्यपराधभ्रमात्ताडनं दृष्टिविपर्यासक्रिया ५, असत्यवचनं मृषाक्रिया ६, अदत्तादानक्रिया प्रतीता ७, मनसा दुःकर्मचिंतनमध्यात्मक्रिया ८, जात्यादिमत्तस्यापरहीलनं मानक्रिया ९, स्तोकेऽप्यपराधे प्रचंडदंडकरणं मित्रद्वेषक्रिया १०, मायाक्रिया ११, लोभक्रिया च प्रतीता १२, यथाख्यातचारित्रिणः सूक्ष्मनेषोन्मेषादिचेष्टाहेतुका सामायिकसातावेदनीयबंधरूपा ऐर्यापथिकीक्रिया चेति १३. ॥ तथा चतुर्दशजीवभेदान् जानंति तन्मूलत्वात्संयमस्य, तद्यथा—एकेंद्रिया द्विधा, सूक्ष्मा बादराश्च. तत्र सर्वलोकव्यापिनोऽसंक्रांतशस्त्रा अंतर्मुहूर्तायुश्चर्मचक्षुरविषयाः सूक्ष्माः. नियतस्थानस्थाः शस्त्रोपहता जघन्यतोंतर्मुहूर्तमुत्कृष्टतो द्वाविंशतिवर्षसहस्रान् यावज्जीवनशीलाश्चक्षुर्ग्राह्यपरिणामा बादराः. तथा द्वींद्रियास्त्रींद्रियाश्चतुरिंद्रियाश्च प्रतीताः. पंचेंद्रियास्तु द्विधा, संज्ञिनोऽसंज्ञिनश्च. तत्र गर्भजास्त्रिवेदा मनोलब्धिमंतः संज्ञिनः. संमूर्छिमाः केवलक्लीबवेदा अमनस्काश्चासंज्ञिनः. एते सप्तापि जीवभेदाः पर्याप्तापर्याप्तत्वेन द्विधा भवंतीति चतुर्दश.

पर्याप्तयश्चाहारशरीरेंद्रियानपानभाषामनोभेदात् षोढा. एतासु एकेंद्रियाणामाद्याश्चतस्रः, द्वित्रिचतुरिंद्रिया संज्ञिनां पंच, संज्ञिनां च षट्. तत्र ये स्वोचिताः पर्याप्तीः समर्थ्य म्रियंते, ते पर्याप्ताः, ये पुनर्यथोक्ताः पर्याप्तीरसमाप्य म्रियंते तेऽपर्याप्ताः. यद्यप्यपर्याप्ता अप्याद्येन पर्याप्तित्रयेण पर्याप्ता एव म्रियंते, तथापि स्वोचितपर्याप्त्यसंपूरणात्तेऽपर्याप्ता एव व्यपदिश्यंते.

तथा पंचदशभेदान् सिद्धान् स्तुवंति–धन्या अमी ये सकलक्लेशकारणं कर्मजालमुध्धृत्य नित्यनिरुपमसुखमपवर्गं गता न विक्षिप्यंते संसारसागरवीचिभिरिति. सिद्धभेदाश्चामी– गिहि परलिंगसिद्धा । थी नर कीवा य एगणेगाय ॥ तित्थंकर तित्थेयर । सय पत्त य बुद्धबोहीअ ॥ १ ॥ तत्र ग्रहिलिंगसिद्धा मरुदेवीप्रभृतयः १, परलिंगसिद्धाश्चरकपरिव्राजकादिलिंगसिद्धाः २, यदान्यलिंगिनोऽपि भावसम्यक्त्वोत्पन्नकेवलज्ञानास्तत्कालं सिध्ध्यंति तदामी द्रष्टव्याः, नो चेद्यदि दीर्घायुष्कं स्वं जानंति, तदा तेऽपि साधुलिंगमेव भजंतीति. स्वलिंगेन रजोहरणादिना सिद्धाः स्वलिंगसिद्धाः ३, स्त्रीलिंगेन योषिदाकारेण सिद्धाः स्त्रीलिंगसिद्धाः ४, एवं पुरुषलिंगसिद्धाः ५, नपुंसकलिंगसिद्धाश्च ६, एकाकिनः संतो ये सिद्धास्ते एकसि-

द्धाः ७, इत्यादिना अष्टशतांतेन समुदयेन सिद्धास्तेऽनेकसिद्धाः ८, तत्स्वरूपप्ररूपकं चेदं गाथाद्वयं—बत्तीसा अडयाला । सट्ठी बावत्तरी य बोधव्वा ॥ चुलसीइ छन्नुवइ । डुरहियमट्ठुत्तरसयं च ॥ १ ॥ अट्ठ य सत्त य छ पंच । चेव चत्तारि तिन्नि दो इक्को ॥ बत्तीसाइसु समया । निरंतरं अंतरं उवरिं ॥ २ ॥ एकादयो द्वात्रिंशदंता एकसमयेन सिध्यंतो निरंतरमष्टावेव समयान् यावत् सिध्यंति, तत ऊर्ध्वमवश्यमंतरं जवतीति. त्रयस्त्रिंशदादयोऽष्टचत्वारिंशदंता एकसमयेन सिध्यंतो निरंतरं सप्तैव समयान् यावत्सिध्यंति, ततोंतरं जवत्येव. एकोनपंचाशदादयः षष्ट्यंता एकसमयेन सिध्यंतः षट्समयान् यावत् सिध्यंति. ततः परमंतरं जवत्येव. एवं तावद्यावदष्टशतमेकसमयेन सिध्यंतः समयाद्रूर्ध्वमवश्यमंतरं कुर्वंत्येव. तीर्थंकराः संतो ये सिद्धास्ते तीर्थंकरसिद्धाः ए, अतीर्थंकरसिद्धाः सामान्यकेवलिनः १०, तीर्थे सति ये सिद्धास्ते तीर्थसिद्धा जंबूस्वाम्यादिवत् ११, तीर्थोच्छेदे तीर्थाजावे ये सिद्धास्तेऽतीर्थसिद्धाः, श्रूयते य सुविध्यादिजिनानां सप्तस्वंतरेषु तीर्थोच्छेदे केचिज्जातिस्मरणादिना प्राप्तरत्नत्रयाः सिध्यंतिस्म, तीर्थाजावे च सिद्धा मरुदेव्यादयः १२, तथा स्व-

यं गुरुनिरपेक्षतया बुद्धाः संतो ये सिद्धास्ते स्वयंबुद्धसिद्धाः १३, प्रतीत्यैकं कंचिद्वृषभा-
दिकं बोधकारणं ये बुद्धास्ते प्रत्येकबुद्धाः, तथा च ये सिध्धास्ते प्रत्येकबुद्धसिद्धाः १४. स्व-
यंबुद्धानां प्रत्येकबुद्धानां च बोध्युपधिश्रुतलिंगकृतो भेदः, तथाहि—स्वयंबुद्धानां बाह्यनि-
मित्तं विनापि बोधिर्भवति, प्रत्येकबुद्धानां तु तदपेक्षा एव. उपधिः स्वयंबुद्धानां मात्रकचो-
लपट्टवर्जः पात्रादिद्वादशविधः. प्रत्येकबुद्धानां जघन्येन रजोहरणमुखपोतिकारूपो द्विविधः,
उत्कृष्टतस्तु चोलपट्टमात्रककल्पत्रिकवर्जो नवविध इति. स्वयंबुद्धानां पूर्वाधीतं श्रुतं स्याद्वा
न वा, प्रत्येकबुद्धानां पुनस्तन्नियमाद्भवत्येव, जघन्येनैकादशांगानि, उत्कृष्टतो द्वादशपूर्वा-
णीति. स्वयंबुद्धानां यदि पूर्वाधीतं श्रुतं नास्ति, तदा नियमाद्गुरुसमीपे लिंगं प्रपद्यंते, ग-
च्छे च विहरंति. अथ श्रुतं भवति तदा देवता लिंगं ददाति गुरुर्वा. यदिवा एकाकिविहार-
योग्यता इच्छा चास्ति, तत एकाकिनो विहरंति, अन्यथा गच्छे एव आसते इति, प्रत्येकबु-
द्धानां तु लिंगं देवता एव दत्ते, लिंगवर्जिता वा भवंति. यदाह—"रुप्पं पत्तेहबुद्दत्ति", त-
था बुध्धैराचार्यादिभिर्बोधिताः संतो ये सिद्धास्ते बुद्धबोधितसिद्धाः १५.

तथा दीक्षां षोडशधा षोडशप्रकारां जल्पंति, तद्यथा—छंदा रोसा परिजुष्णा । सुविणा य पडिस्सुया ॥ सारणिया रोगिणिया । अणाढिया देवसन्नत्ति ॥ १ ॥ वत्थाणुबंधिया जणिय–कसिया बहुजणस्स समुइआ ॥ अक्खाया संगारा । वेयाकरणी सयंबुद्धा ॥ २ ॥ तत्र छंदात् स्वकीयादभिप्रायाद्गोविंदवाचकस्येव परकीयाद्वा भ्रातृवशभवदत्तस्येव या दीक्षा सा छंदा १. मात्रादितिरस्कारजाताद्रोषाच्छिवभूतेरिव या सा रोषा २. परिद्यूनाद्दारिद्र्यात् काष्टहारकस्येव या सा परिद्यूना ३. स्वप्नात्पुष्पचूलाया इव या सा स्वप्ना ४. प्रतिश्रुतात्प्रतिज्ञाताद्या सा प्रतिश्रुता, शालिभद्रभगिनींप्रति कृतप्रतिज्ञस्येव ५. स्मरणाद्या सा स्मारणिका, श्रीमल्लिस्मारितजन्मांतराणां प्रतिबुद्ध्यादिभूपानामिव ६. रोगं आलंबनं विद्यते यस्यां सा रोगिणी सनत्कुमारस्येव ७. स्वजनाद्यैरनादृतस्य या सा अनादृता, नंदिषेणस्येव ८. देवसंज्ञप्तेर्देवप्रतिबोधनाद्या सा देवसंज्ञप्तिर्मेतार्यस्येव ९. वत्सः पुत्रोऽनुबंधो यस्यां सा वत्सानुबंधिका वज्रस्वामिमातुरिव, उपलक्षणत्वात् पित्राद्यनुबंधिकापि मनकादेरिव १०. कन्यया जनितस्य या सा जनितकन्यका केशिकुमारस्येव, उपलक्षणमिदं अन्येषामपि गर्हितजन्मनां

यं गुरुनिरपेक्षतया बुद्धाः संतो ये सिद्धास्ते स्वयंबुद्धसिद्धाः १३, प्रतीत्यैकं कंचिद्वृषभा-दिकं बोधकारणं ये बुद्धास्ते प्रत्येकबुद्धाः, तथा च ये सिध्धास्ते प्रत्येकबुद्धसिद्धाः १४. स्व-यंबुद्धानां प्रत्येकबुद्धानां च बोध्युपधिश्रुतलिंगकृतो भेदः, तथाहि—स्वयंबुद्धानां बाह्यनि-मित्तं विनापि बोधिर्भवति, प्रत्येकबुद्धानां तु तदपेक्ष एव. उपधिः स्वयंबुद्धानां मात्रकचो-लपट्टवर्जः पात्रादिर्द्वादशविधः. प्रत्येकबुद्धानां जघन्येन रजोहरणमुखपोतिकारूपो द्विविधः, उत्कृष्टतस्तु चोलपट्टमात्रककल्पत्रिकवर्जो नवविध इति. स्वयंबुद्धानां पूर्वाधीतं श्रुतं स्याद्वा न वा, प्रत्येकबुद्धानां पुनस्तन्नियमाद्भवत्येव, जघन्येनैकादशांगानि, उत्कृष्टतो द्वादशपूर्वा-णीति. स्वयंबुद्धानां यदि पूर्वाधीतं श्रुतं नास्ति, तदा नियमाद्गुरुसमीपे लिंगं प्रपद्यंते, ग-च्छे च विहरंति. अथ श्रुतं भवति तदा देवता लिंगं ददाति गुरुर्वा. यदिवा एकाकिविहार-योग्यता इच्छा चास्ति, तत एकाकिनो विहरंति, अन्यथा गच्छे एव आसते इति, प्रत्येकबु-द्धानां तु लिंगं देवता एव दत्ते, लिंगवर्जिता वा भवंति. यदाह—"रुप्पं पत्तेहबुद्धत्ति", त-था बुध्धैराचार्यादिभिर्बोधिताः संतो ये सिद्धास्ते बुद्धबोधितसिद्धाः १५.

तथा दीक्षां षोमशधा षोमशप्रकारां जल्पंति, तद्यथा—छंदा रोसा परिजुष्णा । सुविणा य पमिस्सुया ॥ सारणिया रोगिणिया । अणाढिया देवसन्नत्ति ॥ १ ॥ वत्थाणुवंधिया जणिय–कम्मिया वहुजणस्स समुइआ ॥ अक्काया संगारा । वेयाकरणी सयंबुद्धा ॥ २ ॥ तत्र छंदात् स्वकीयादभिप्रायाद्गोविंदवाचकस्येव परकीयाद्वा भ्रातृवशजवदत्तस्येव या दीक्षा सा छंदा १. मात्रादितिरस्कारजाताद्रोषाच्छिवभूतेरिव या सा रोषा २. परिद्यूनाद्दारिद्र्यात् काष्टहारकस्येव या सा परिद्यूना ३. स्वप्नात्पुष्पचूलाया इव या सा स्वप्ना ४. प्रतिश्रुतात्प्रतिज्ञाताद्या सा प्रतिश्रुता, शालिभद्रभगिनींप्रति कृतप्रतिज्ञस्येव ५. स्मरणाद्या सा स्मारणिका, श्रीमल्लिस्मारितजन्मांतराणां प्रतिबुद्ध्यादिनृपानामिव ६. रोगं आलंबनं विद्यते यस्यां सा रोगिणी सनत्कुमारस्येव ७. स्वजनाद्यैरनादृतस्य या सा अनादृता, नंदिषेणस्येव ८. देवसंज्ञप्तेर्देवप्रतिबोधनाद्या सा देवसंज्ञप्तिर्मेतार्यस्येव ए. वत्सः पुत्रोऽनुबंधो यस्यां सा वत्सानुबंधिका वज्रस्वामिमातुरिव, उपलक्षणत्वात् पित्राद्यनुबंधिकापि मनकादेरिव १०. कन्यया जनितस्य या सा जनितकन्यका केशिकुमारस्येव, उपलक्षणमिदं अन्येषामपि गर्हितजन्मनां

दीक्षायाः ११. बहुजनस्य संमुदिता प्रमोदहेतुर्या सा जंबूस्वामिन इव १२. परेणाख्यातं धर्मं श्रुत्वा या सा आख्याता प्रभवस्येव १३. प्राग्भवकृतेन. संगरेण संकेतेन या गृह्यते सा संगरा, इषुकाराध्ययनोक्तपुरोहितपुत्रयोरिव १४. संदिग्धेऽर्थे जिनादिना व्याकृते या सा वैयाकरणी गौतमस्येव १५. स्वयंबुद्धा प्रतीता तीर्थकृतामिव १६. ॥ २५ ॥ ननु एवं अनेकगुणरत्नरत्नाकराणां परममुनीनां कियंतो गुणाः संख्यायंते? तत उपसंहरन्नाह—

॥ मूलम् ॥—एवं गुणवुड्ढीए । एगुत्तरियाइ ताव नेयव्वा ॥ अट्ठारसहससिलांग-संगया जा मुणी हुंति ॥ २६ ॥ व्याख्या—उत्तानार्था, तदेवं व्याख्यातं श्रवणगुणद्वारं, अथाहोरात्रकृतं बिभणिषुराह ॥ २६ ॥

॥ मूलम् ॥—साहू निसाइचरिमे । जामे वेरत्तियं गहियकालं ॥ सज्झायं कुणइ तहा । असंजया जह न जग्गंति ॥ २७ ॥ व्याख्या—साधुर्निशायाश्चरमे यामे चतुर्थांशलक्षणे विगता रात्रिर्विरात्रिस्तस्यां भवं वैरात्रिकं कालं गृहीत्वा मंदस्वरेण तथा स्वाध्यायं सूत्रार्थपरिवर्तनादिरूपं करोति, यथाऽसंयता गृहगोधादयो महिषादयो वा न जाग्रति. एतेन सं-

यतान् जागरयतोऽपि न दोष इत्युक्तं. कालग्रहणविधिश्च यथासंप्रदायमवसेयः. ॥ २७ ॥

॥ मूलम् ॥—तो पडिक्कमित्तु कालस्स । तस्स पाभाइयं च गहिऊण ॥ पहरस्स चउत्थंसे । छव्विहमावस्सयं कुणइ ॥ २८ ॥ व्याख्या—ततः स्वाध्यायकरणानंतरं "तस्सत्ति" पंचम्यर्थे षष्ठी प्राकृतत्वात्. तस्माद्वैरात्रिकात्कालात्प्रतिक्रम्य प्रभाते नवं प्राभातिकं कालं गृहीत्वा तस्यैव प्रहरस्य चतुर्थांशे सावशेषे सति षड्विधमावश्यकं करोति. तत्करणविधिः—पढमं चिय सामाइअं कड्ढिऊण चरित्तविसुद्धिनिमित्तं पणवीसूसासपरिमाणं काउसग्गं करंति, तओ नमुक्कारेण पारित्ता दंसणविसुद्धिनिमित्तं चउवीसत्थयं पढंति. पणवीसूसासपरिमाणमेव काउसग्गं करंति. तओ नमुक्कारेण पारित्ता सुअनाणविसुद्धिनिमित्तं सुअनाणथुइं करंति काउसग्गं च तस्सुद्धिनिमित्तं करंति. तत्थ य पाओसियथुइमाइयं अहिगयकाउसग्गपज्जंतमइयारं चिंतंति. तओ नमुक्कारेण पारित्ता सिद्धाण थुइं काऊण उक्कुडुअ निविट्ठा मुहणत्तयं पडिलेहित्ता स सीसोवरियं कायं पमज्जंति. तओ वंदित्ता आलोयंति. तओ सामाइयपुव्वयं पडिक्कमंति, तओ वंदणपुव्वयं खामंति. तओ कयकिइकम्मा सामाइयपुव्वयं काउस्स-

दीक्षायाः ११. बहुजनस्य संमुदिता प्रमोदहेतुर्या सा जंबूस्वामिन इव १२. परेणाख्यातं धर्मं श्रुत्वा या सा आख्याता प्रभवस्येव १३. प्राग्भवकृतेन. संगरेण संकेतेन या गृह्यते सा संगरा, इषुकाराध्ययनोक्तपुरोहितपुत्रयोरिव १४. संदिग्धेऽर्थे जिनादिना व्याकृते या सा वैयाकरणी गौतमस्येव १५. स्वयंबुद्धा प्रतीता तीर्थकृतामिव १६. ॥ २५ ॥ ननु एवं अनेक-गुणरत्नरत्नाकराणां परममुनीनां कियंतो गुणाः संख्यायंते? तत उपसंहरन्नाह—

॥ मूलम् ॥—एवं गुणवुड्ढीए । एगुत्तरियाइ ताव नेयव्वा ॥ अट्ठारसहस्ससिलांग—संगया जा मुणी हुंति ॥ २६ ॥ व्याख्या—उत्तानार्था, तदेवं व्याख्यातं श्रवणगुणद्वारं, अथाहोरात्रकृतं बिभणिषुराह ॥ २६ ॥

॥ मूलम् ॥—साहू निसाइचरिमे । जामे वेरत्तियं गहियकालं ॥ सज्झायं कुणइ तहा । असंजया जह न जग्गंति ॥ २७ ॥ व्याख्या—साधुर्निशायाश्चरमे यामे चतुर्थांशलक्षणे विगता रात्रिर्विरात्रिस्तस्यां भवं वैरात्रिकं कालं गृहीत्वा मंदस्वरेण तथा स्वाध्यायं सूत्रार्थ-परिवर्तनादिरूपं करोति, यथाऽसंयता गृहगोधादयो महिषादयो वा न जाग्रति. एतेन सं-

यतान् जागरयतोऽपि न दोष इत्युक्तं. कालग्रहणविधिश्च यथासंप्रदायमवसेयः. ॥ २७ ॥
॥ मूलम् ॥—तो पडिक्कमित्तु कालस्स । तस्स पाभाइयं च गहिऊण ॥ पहरस्स चउ·
त्थंसे । छव्विहमावस्सयं कुणइ ॥ २८ ॥ व्याख्या—ततः स्वाध्यायकरणानंतरं "तस्सत्ति"
पंचम्यर्थे षष्ठी प्राकृतत्वात्. तस्माद्वैरात्रिकात्कालात्प्रतिक्रम्य प्रभाते नवं प्राभातिकं कालं
गृहीत्वा तस्यैव प्रहरस्य चतुर्थांशे सावशेषे सति षड्विधमावश्यकं करोति. तत्करणविधिः—
पढमं चिय सामाइअं कड्ढिऊण चरित्तविसुद्धिनिमित्तं पणवीसूसासपरिमाणं काउसग्गं करं·
ति, तउ नमुक्कारेण पारित्ता दंसणविसुद्धिनिमित्तं चउवीसत्थयं पढंति. पणवीसूसासपरि·
माणमेव काउसग्गं करंति. तउ नमुक्कारेण पारित्ता सुअनाणविसुद्धिनिमित्तं सुअनाणथुइं
करंति काउसग्गं च तस्सुद्धिनिमित्तं करंति. तत्थ य पाउसियथुइमाइयं अहिगयकाउस·
ग्गपज्जंतमइयारं चिंतंति. तउ नमुक्कारेण पारित्ता सिद्धाण थुइं काऊण उक्कुडुअ निविट्ठा
मुहणंतयं पडिलेहित्ता स सीसोवरियं कायं पमज्जंति. तउ वंदित्ता आलोयंति. तउ सामा·
इयपुव्वयं पडिक्कमंति, तउ वंदणपुव्वयं खामंति. तउ कयकिइकम्मा सामाइयपुव्वयं काउस्स·

ग्गं करंति, तत्थ य चिंतंति कस्स निउगे निउत्ता वयं, गुरुहिं तो तारिसं तवं पवज्जामो जारिसेण तस्स हाणीन जवइ. तओ चिंतंति छम्मासखमणं करेमो. एगदिवसेण ऊणं तहावि न सक्केमो तउ बत्तीसइमं तीसइमं जाव चउत्थं आयंबिलं एगठाणं एगासणं पुरिमड्ढं निविगइं पोरिसिं नमुक्कारसहियं त्ति. एवं जं समत्था तत्र काउं तमसढभावाहिं य ए करंति. पछा वंदित्ता गुरुसक्खियं पवज्जंति. सव्वे नमुक्कारइत्तगा समगं उट्ठंति वोसरावंति निसीयंति य. एवं पोरिसिमाइसु विन्नासा. तउ तिन्नि थुईओ अप्पसद्दगं दिंति, जहा घरकोइलाइसत्ता न उट्ठंति. तउ बहुवेलं संदिसावंति, जइ चेईयाइं अत्थितो वंदंति, एवं च पडिक्कमणकालं तुलंति, जहा पडिक्कंताणं सूरे अवसाणे चेव पडिलेहणा जवइत्ति. ॥ २८ ॥

॥ मूलम् ॥—तो सव्वदोसमुक्कं । अचलमणणोवगउगमुक्कुडुउ ॥ अंगोवहिपडिलेहं । करेइ तो सोहए वसहिं ॥ २९ ॥ व्याख्या—तत आवश्यकानंतरं उत्कुटकः पुतास्पृष्टभूतलः सन् अंगोपधेः शरीरपरिभोग्यानां मुखपोतिकाद्युपकरणानां प्रतिलेखनां करोति. ननु कः प्रतिलेखनायाः प्रारंभकालः? उच्यते—स्तुतिभणनानंतरं—मुहणत्तय रयहरणे । दु निसि-

ज्जा चोलपट्टकप्पतिए ॥ संथारुत्तरपट्टे । इक्कारसमे तहा दंडे ॥ १ ॥ इत्येतावत्सूपकरणेषु यथा सूर्य उदेति, तथा प्रतिलेखना प्रारब्धव्या. एतेन ये पाणिरेखानिरीक्षणे प्रतिलेखनाक्षण इति मन्यंते ते निरस्ताः, सप्रकाशाप्रकाशोपाश्रयभेदेन पाणिरेखानिरीक्षणस्यानैकांतिकत्वात्. उक्तं च—अरुणावासगपुव्वं परुप्परं पाणिपडिलेहा एए उ अणाएसत्ति. पंचकल्पेऽप्युक्तं—सूरोदये जिणाणं । पडिलेहणियाइ आढवणकालो ॥ थेराणणुग्गयंमि । उवहिणा सो तुलेयव्वो ॥ १ ॥ कथं प्रतिलेखनां करोतीत्याह—सव्वदोसमुक्कमित्यादि त्रीण्यपि क्रियाविशेषणानि, सर्वैः प्रतिलेखनादोषैर्मुक्तं यथा भवत्येवं ते च षट्, यदाह—आरभडा सम्मद्दा । वज्जेयव्वा य मोसली तइया ॥ पप्फोडणा चउत्थी । विक्खित्ता वेइया छठा ॥१॥ तत्र विपरीतकरणात्त्वरितं वान्यवस्त्रग्रहणादारभटा प्रतिलेखना १. वस्त्रांतः कोणसंवलनेनोपधेरुपरि निविश्य प्रतिलेखनाकरणेन वा संमर्दा २. तिर्यगूर्ध्वं अधो वा वस्त्रेण कुड्यादिसंघट्टनादामोसलित्ति प्राकृतत्वादामर्शवती ३. रेणुगुंडितस्य वस्त्रस्य गृहस्थवत्प्रकर्षेण धूननात्प्रस्फोटिका ४. प्रत्युपेक्षितस्य वस्त्रस्याप्रत्युपेक्षिते क्षेपणाद्वस्त्रांचलानां वा ऊर्ध्वं विक्षेपणाद्विक्षि-

ग्गं करंति, तत्थ य चिंतंति कस्स निउंगे निउत्ता वयं, गुरुहिं तो तारिसं तवं पवज्जामो जारिसेण तस्स हाणीन जवइ. तओ चिंतंति छम्मासखमणं करेमो. एगदिवसेण ऊणं तहावि न सक्केमो तउ बत्तीसइमं तीसइमं जाव चउत्थं आयंबिलं एगठाणं एगासणं पुरिमड्ढं निविगइं पोरिसिं नमुक्कारसहियं च्चत्ति. एवं जं समत्था तत्रं काउं तमसढभावाहिं य ए करंति. पच्छा वंदित्ता गुरुसक्खियं पवज्जंति. सव्वे नमुक्कारइत्तगा समगं उट्ठंति वोसरावंति निसीयंति य. एवं पोरिसिमाइसु विन्नासा. तउ तिन्नि थुईओ अप्पसद्दगं दिंति, जहा घरकोइलाइसत्ता न उट्ठंति. तउ बहुवेलं संदिसावंति, जइ चेईयाइं अत्थितो वंदंति, एवं च पडिक्कमणकालं तुलंति, जहा पडिक्कंताणं थूइ अवसाणे चेव पडिलेहणा जवइत्ति. ॥ २७ ॥

॥ मूलम् ॥—तो सव्वदोसमुक्कं । अचलमणोवगउंगमुक्कुडुउ ॥ अंगोवहिपडिलेहं । करेइ तो सोहए वसहिं ॥ २८ ॥ व्याख्या—तत आवश्यकानंतरं उत्कुटकः पुतास्पृष्टभूतलः सन् अंगोपधेः शरीरपरिभोग्यानां मुखपोतिकाद्युपकरणानां प्रतिलेखनां करोति. ननु कः प्रतिलेखनायाः प्रारंभकालः? उच्यते—स्तुतिभणनानंतरं—मुहणंतय रयहरणे । दु निसि-

ज्जा चोलपट्टकप्पतिए ॥ संथारुत्तरपट्टे । इक्कारसमे तहा दंडे ॥ १ ॥ इत्येतावत्सूपकरणेषु यथा सूर्य उदेति, तथा प्रतिलेखना प्रारब्धव्या. एतेन ये पाणिरेखानिरीक्षणे प्रतिलेखनाक्षण इति मन्यंते ते निरस्ताः, सप्रकाशाप्रकाशोपाश्रयभेदेन पाणिरेखानिरीक्षणस्यानैकांतिकत्वात्. उक्तं च—अरुणावासगपुव्वं परुप्परं पाणिपडिलेहा एए उ अणाएसत्ति. पंचकल्पेऽप्युक्तं—सूरोदये जिणाणं । पडिलेहणियाइ आढवणकालो ॥ थेराणणुग्गयंमि । उवहिणा सो तुलेयव्वो ॥ १ ॥ कथं प्रतिलेखनां करोतीत्याह—सव्वदोसमुक्कमित्यादि त्रीण्यपि क्रियाविशेषणानि, सर्वैः प्रतिलेखनादोषैर्मुक्तं यथा भवत्येवं ते च षट्, यदाह—आरभडा सम्मद्दा । वज्जेयव्वा य मोसली तइया ॥ पप्फोडणा चउत्थी । विक्खित्ता वेइया छट्ठा ॥१॥ तत्र विपरीतकरणात्त्वरितं वान्यवस्त्रग्रहणादारभटा प्रतिलेखना १. वस्त्रांतः कोणसंवलनेनोपधेरुपरि निविश्य प्रतिलेखनाकरणेन वा संमर्दा २. तिर्यगूर्ध्वं अधो वा वस्त्रेण कुड्यादिसंघट्टनादामोसलित्ति प्राकृतत्वादामर्शवती ३. रेणुगुंडितस्य वस्त्रस्य गृहस्थवत्प्रकर्षेण धूननात्प्रस्फोटिका ४. प्रत्युपेक्षितस्य वस्त्रस्याप्रत्युपेक्षिते क्षेपणाद्वस्त्रांचलानां वा ऊर्ध्वं विक्षेपणाद्विक्षि-

सा ५. षष्ठी वेदिका, अत्र संप्रदायः—"वेइया पंचविहा पन्नत्ता, तं जहा—उड्ढवेइया १, अहोवेइया २, तिरियवेइया ३, दुहओ वेइया ४ एगओ वेइया च ५. तत्थ उड्ढवेइया उवरि जाणुगाणं हत्थे काऊण पडिलेहेइ. अहोवेइया अहोजाणुगाणं हत्थे काऊण पडिलेहेइ. तिरियवेइया संडासयाणं मज्झेणं हत्थे नेऊण पडिलेहेइ. दुहओ वेइया बाहाणं अंतरा दोवि जाणुगा काऊण पडिलेहेइ. एगओ वेइया एगं जाणुगं बाहाणं अंतरे काऊण पडिलेहेइत्ति. इमे दोषाः प्रतिलेखनायां त्याज्याः. अन्येऽपि—पसिढिलपलंबलोला । एगामोसा अणेगरूवधूणा ॥ कुणइ पमाणे पमायं । संकिए गणणोवयं कुज्जा ॥ १ ॥ अदृढं वस्त्रं गृह्णतः प्रशिथिला, विषमग्रहणेन वस्त्रांचलानां प्रलंबनात्प्रलंबा, भूमौ पाणौ वा प्रत्युपेक्ष्यमाणवस्त्रस्य लालनाल्लोला, मध्ये गृहीत्वा हस्ताभ्यां वस्त्रं घर्षयंस्त्रिभागशेषं करोतीत्येकामर्शा. संख्यातिक्रमेण आस्फोटादिकरणाद्युगपदनेकवस्त्रप्रत्युपेक्षणाद्वानेकरूपधूनना, प्रमाणे प्रस्फोटादिसंख्यायां प्रमादं करोति, शंकिते संदेहे सति गणनांगुलिरेखास्पर्शनादिना द्वित्रिसंख्यात्मिका तामुपगच्छति गणनोपगमं यथा जत्रत्येवं प्रस्फोटादिकं कुर्वतो दोषः. कथं तर्हि प्रति-

उप चिं- लेखनां कुर्यादित्याह–'अचलंति' अचलं दृढं यथा जवत्येवं. अचलग्रहणेन शेषा अपि
वा भा.४ तद्गुणाः सूचिताः, तद्यथा—उड्ढं थिरं अतुरियं । सव्वं तावत्थमेव पडिलेहे ॥ तो बीयं
१०३८ पप्फोडे । तइयं च पुणो पमज्जिज्जा ॥ १ ॥ अणच्चावियं अवलियं । अणाणुबंधि अमोसलिं
चेव ॥ छप्पुरिमानवखोडा । पाणीपाणपमज्जणं चेव ॥ २ ॥ अनयोर्व्याख्या—तत्र ऊर्ध्वं
कायतो वस्त्रतश्च. कायत उत्कुटिको वस्त्रतस्तिर्यक् प्रसारितवस्त्रः, न तु कायत उत्थाय व-
स्त्रं वा ऊर्ध्वीकृत्य प्रत्युपेक्ष्यते, तथा संप्रदायत्वात्. स्थिरं दृढहस्ततया गृहीतं, अत्वरितं
अद्रुतं यथा जवत्येवं सर्वं वस्त्रं तावत्प्रत्युपेक्षेत निरीक्षेत, न तु प्रस्फोटयेत्. तत्र च यदि
जंतून् पश्यति ततो यतनयान्यत्र संक्रमयति, तददर्शनेन ततो द्वितीयमिदं कुर्यात्. यदुत
प्रस्फोटयेत्. तृतीयं च पुनरिदं कुर्याद्यदुत प्रमृज्यात्, कथं पुनः प्रस्फोटयेत् प्रमृज्याद्वेत्याह–
अनर्तितं यथा वपुषो वस्त्रस्य वा नर्त्तनं न जवति. अवलितं यथात्मनो वस्त्रस्य वा वलनं
मोटनं न भवति. अननुबंधि न निर्व्यवच्छेदं, किंतु लक्ष्यमाणप्रस्फोटनादिविज्ञागं. 'आमो-
सलित्ति' तिर्यगूर्ध्वमधश्च कुड्यादौ परामर्शरहितं यथा जवत्येवं, किमित्याह–'पुरिमत्ति'

ता ५. षष्ठी वेदिका, अत्र संप्रदायः—"वेइया पंचविहा पन्नत्ता, तं जहा—उड्ढवेइया १, अहोवेइया २, तिरियवेइया ३, दुहओ वेइया ४ एगओ वेइया च ५. तत्थ उड्ढवेइया उवरि जाणुगाणं हत्थे काऊण पडिलेहेइ. अहोवेइया अहोजाणुगाणं हत्थे काऊण पडिलेहेइ. तिरियवेइया संडासयाणं मज्झेणं हत्थे नेऊण पडिलेहेइ. दुहओ वेइया बाहाणं अंतरा दोवि जाणुगा काऊण पडिलेहेइ. एगओ वेइया एगं जाणुगं बाहाणं अंतरे काऊण पडिलेहेइत्ति. इमे दोषाः प्रतिलेखनायां त्याज्याः. अन्येऽपि—पसिढिलपलंबलोला। एगामोसा अणेगरूवधूणा ॥ कुणइ पमाणे पमायं। संकिए गणणोवयं कुज्जा ॥ १ ॥ अदृढं वस्त्रं गृह्णतः प्रशिथिला, विषमग्रहणेन वस्त्रांचलानां प्रलंबनात्प्रलंबा, भूमौ पाणौ वा प्रत्युपेक्ष्यमाणवस्त्रस्य लालनाल्लोला, मध्ये गृहीत्वा हस्ताभ्यां वस्त्रं घर्षयंस्त्रिभागशेषं करोतीत्येकामर्शा. संख्यातिक्रमेण आस्फोटादिकरणाद्युगपदनेकवस्त्रप्रत्युपेक्षणाद्वानेकरूपधूनना, प्रमाणे प्रस्फोटादिसंख्यायां प्रमादं करोति, शंकिते संदेहे सति गणनांगुलिरेखास्पर्शनादिना द्वित्रिसंख्यात्मिका तामुपगच्छति गणनोपगमं यथा भवत्येवं प्रस्फोटादिकं कुर्वतो दोषः. कथं तर्हि प्रति-

लेखनां कुर्यादित्याह–'अचलंति' अचलं दृढं यथा जवत्येवं. अचलग्रहणेन शेषा अपि तद्गुणाः सूचिताः, तद्यथा—उड्ढं थिरं अतुरियं । सव्वं तावत्थमेव पडिलेहे ॥ तो बीयं पप्फोडे । तइयं च पुणो पमज्जिज्जा ॥ १ ॥ अणच्चावियं अवलियं । अणाणुबंधि अमोसलिं चेव ॥ छप्पुरिमानवखोडा । पाणीपाणपमज्जणं चेव ॥ २ ॥ अनयोर्व्याख्या—तत्र ऊर्ध्वं कायतो वस्त्रतश्च. कायत उत्कुटिको वस्त्रतस्तिर्यक् प्रसारितवस्त्रः, न तु कायत उत्थाय वस्त्रं वा ऊर्ध्वीकृत्य प्रत्युपेक्ष्यते, तथा संप्रदायत्वात्. स्थिरं दृढहस्ततया गृहीतं, अत्वरितं अद्रुतं यथा जवत्येवं सर्वं वस्त्रं तावत्प्रत्युपेक्षेत निरीक्षेत, न तु प्रस्फोटयेत्. तत्र च यदि जंतून् पश्यति ततो यतनयान्यत्र संक्रमयति, तददर्शनेन ततो द्वितीयमिदं कुर्यात्. यदुत प्रस्फोटयेत्. तृतीयं च पुनरिदं कुर्याद्यदुत प्रमृज्यात्, कथं पुनः प्रस्फोटयेत् प्रमृज्याद्वेत्याह–अनर्तितं यथा वपुषो वस्त्रस्य वा नर्त्तनं न जवति. अवलितं यथात्मनो वस्त्रस्य वा वलनं मोटनं न भवति. अननुबंधि न निर्व्यवच्छेदं, किंतु लक्ष्यमाणप्रस्फोटनादिविनागं. 'आमोसलित्ति' तिर्यगूर्ध्वमधश्च कुड्यादौ परामर्षरहितं यथा जवत्येवं, किमित्याह–'पुरिमत्ति'

षट् पूर्वाः, पूर्वं क्रियमाणतया तिर्यक्कृतवस्त्रप्रस्फोटात्मकाः क्रियाविशेषा येषां ते षट्पूर्वाः, ततो नवाखोटकाः प्रस्फोटनरूपाः कर्त्तव्याः. पाणो प्राणिनां कुंथ्वादीनां प्रमार्जनं प्रस्फोटनत्रिकत्रिकोत्तरकालं त्रिसंख्यं प्राणिप्राणप्रमार्जनं कर्तव्यमिति गाथार्थः. तथा "अणण्णोवउत्तंगत्ति" अनन्योपयोगं प्रतिलेखनाव्यतिरिक्तोपयोगरहितं यथा जवत्येवं. यदाह—पडिलेहणं कुणंतो । मिहो कहं कुणइ जणवयकहं वा ॥ देइव पच्चक्खाणं । वाएइ सयं पडिव्छइ वा ॥ १ ॥ पुढवीआउक्काए । तेऊवाऊवणस्सइतसाणं ॥ पडिलेहणापमत्तो । बएहंपि विराहगो होइ ॥ २ ॥ एवं प्रातस्त्यां प्रतिलेखनां कृत्वा प्रतिलेखनासमाप्तिसमकालं चोद्गते सूर्ये वसतिं शोधयति प्रमार्जयति. "तउ वसहिं पमज्जियकालं निवेयंति. अन्ने जणंति थुइसमणंतरमेव कालं निवेयंती" त्यनुक्तमपि द्रष्टव्यं. ॥ २७ ॥

॥ मूलम् ॥—अह वंदिऊण सूरी । पुव्छइ कायव्वमज्ज किं जंते ॥ गुरु आएसेण कुणइ । वेयावच्चं च सज्झायं ॥ ३० ॥ व्याख्या—अथ वंदित्वा सूरिमाचार्यं, उपलक्षणत्वादन्यमपि पुरस्कृतमुपाध्यायादिकं पृच्छति, यत्पृच्छति तदाह—हे जदंत! अद्य मया किं कर्त्तव्य-

ततः
मिति. ततस्तस्य योग्यतां विज्ञाय वक्ति, जो वैयावृत्यं कुरु? स्वाध्यायं वा अधीष्वेति. ततः
स साधुर्गुर्वादेशेन करोति वैयावृत्यं स्वाध्यायं वा, न पुनः स्वबुद्ध्या किंचित्कुर्यात्, यदाह—
छट्ठट्ठमदसमदुवा—लसेहिं मासद्धमासखमणेहिं ॥ अकरंता गुरुवयणं । अणंतसंसारिया
भणिया ॥ १ ॥ ३० ॥ ततश्च—

॥ मूलम् ॥—किंचूणपोरसीए । अपडिक्कंतो य चरमकालस्स ॥ सुत्तविहिणा आसी-
णो । पडिलेहइ पत्तनिज्जोगं ॥ ३१ ॥ व्याख्या—इह चतुर्भागविभक्तस्य नभसो यदा प्रथमं
भागं किंचिन्न्यूनं सूर्यः प्राप्तो भवति तदा किंचिदूना पोरुषी. अस्याश्च परिज्ञानाय—आ-
साढे मासे दोपया । पोसे मासे चउप्पया ॥ चित्तासोएसु मासेसु । तिपया हवइ पोरिसी
॥ १ ॥ अंगुलं सत्तरत्तेणं । पक्खेण य दुअंगुलं ॥ वड्ढए हायए वावि । मासे मासे चउ अंगु-
लं ॥ २ ॥ जिट्ठामूले आसाढ–सावणे छहिं अंगुलेहिं पडिलेहा ॥ अट्ठहिं बीयतीयंमि । त-
इए दस अट्ठहिं चउत्थे ॥ ३ ॥ इत्येतद्गाथात्रयं स्पष्टं, सुप्रसिद्धत्वाच्च न व्याख्यातं, नवरं
सत्तरत्तेणंति सप्ताहोरात्रेण, एतच्च तिथिपातपक्षापेक्षयोक्तं. अन्यथा सप्तरात्रेण सार्द्धेनेति

षट् पूर्वाः, पूर्वं क्रियमाणतया तिर्यक्कृतवस्त्रप्रस्फोटात्मकाः क्रियाविशेषा येषां ते षट्पूर्वाः, ततो नवाखोटकाः प्रस्फोटनरूपाः कर्त्तव्याः, पाणौ प्राणिनां कुंथ्वादीनां प्रमार्जनं प्रस्फोटनत्रिकत्रिकोत्तरकालं त्रिसंख्यं प्राणिप्राणप्रमार्जनं कर्तव्यमिति गाथार्थः. तथा "अणण्णोवउत्तगत्ति" अनन्योपयोगं प्रतिलेखनाव्यतिरिक्तोपयोगरहितं यथा नवत्येवं. यदाह—पडिलेहणं कुणंतो । मिहो कहं कुणइ जणवयकहं वा ॥ देइव्व पच्चक्खाणं । वाएइ सयं पडिच्छइ वा ॥ १ ॥ पुढवीआउक्काए । तेऊवाऊवणस्सइतसाणं ॥ पडिलेहणापमत्तो । छण्हंपि विराहगो होइ ॥ २ ॥ एवं प्रातस्त्यां प्रतिलेखनां कृत्वा प्रतिलेखनासमाप्तिसमकालं चोद्गते सूर्ये वसतिं शोधयति प्रमार्जयति. "तउ वसहिं पमज्जियकालं निवेयंति. अन्ने जणंति थुइसमणंतरमेव कालं निवेयंती" त्यनुक्तमपि द्रष्टव्यं. ॥ २९ ॥

॥ मूलम् ॥—अह वंदिऊण सूरी । पुच्छइ कायव्वमज्ज किं भंते ॥ गुरु आएसेण कुणइ । वेयावच्चं च सज्झायं ॥ ३० ॥ व्याख्या—अथ वंदित्वा सूरिमाचार्यं, उपलक्षणत्वादन्यमपि पुरस्कृतमुपाध्यायादिकं पृच्छति, यत्पृच्छति तदाह—हे भदंत! अद्य मया किं कर्त्तव्य-

मिति. ततस्तस्य योग्यतां विज्ञाय वक्ति, नो वैयावृत्त्यं कुरु? स्वाध्यायं वा अधीष्वेति. ततः स साधुर्गुर्वादेशेन करोति वैयावृत्त्यं स्वाध्यायं वा, न पुनः स्वबुद्ध्या किंचित्कुर्यात्, यदाह—छठ्ठमदसमडुवा—लसेहिं मासद्धमासखमणेहिं ॥ अकरंता गुरुवयणं । अणंतसंसारिया जणिया ॥ १ ॥ ३० ॥ ततश्च—

॥ मूलम् ॥—किंचूणपोरसीए । अपम्क्किंतो य चरमकालस्स ॥ सुअविहिणा आसीणो । पम्क्लेहइ पत्तनिज्जोगं ॥ ३१ ॥ व्याख्या—इह चतुर्जागविनक्तस्य नजसो यदा प्रथमं जागं किंचिन्न्यूनं सूर्यः प्राप्तो जवति तदा किंचिदूना पौरुषी. अस्याश्च परिज्ञानाय—आसाढे मासे दोपया । पोसे मासे चजप्पया ॥ चित्तासोएसु मासेसु । तिपया हवइ पोरिसी ॥ १ ॥ अंगुलं सत्तरत्तेण । पक्खेण य दुअंगुलं ॥ वड्ढए हायए वावि । मासे मासे चज अंगुलं ॥ २ ॥ जिठ्ठामूले आसाढ-सावणे छहिं अंगुलेहिं पडिलेहा ॥ अट्ठहिं बीयतीयंमि । तइए दस अट्ठहिं चजत्थे ॥ ३ ॥ इत्येतद्गाथात्रयं सर्वं, सुप्रसिद्धत्वाच्च न व्याख्यातं, नवरं सत्तरत्तेणंति सप्ताहोरात्रेण, एतच्च तिथिपातपक्षापेक्षयोक्तं, अन्यथा सप्तरात्रेण सार्द्धेनेति

द्रष्टव्यं. तस्यां च किंचिदूनपौरुष्यां चरमकालस्य प्राभातिकस्य, तदभावे वैरात्रिकस्याप्यप्रतिक्रांतेश्चतुर्थपौरुष्यां तद्बलेन स्वाध्यायमानत्वात्. यच्चूर्णिः—वेयत्तियपाभाइया दिवसद्धा घितव्वा चेव, आसीन उपविष्टः. पुव्वह्णे अवरह्णे मुहपत्तियमाइ पडिलेहा, इति वचनान्मुखपोतिकां प्रत्युपेक्ष्य ततः पात्रनियोगं वा पात्रप्रतिबद्धोपकरणजातं प्रत्युपेक्षते, कथं? श्रुतविधिना आगमोक्तरीत्या, श्रुतविधिश्चायं—पायस्स पायबंधो सोया भत्तत्तो तह्वेसो मुहुणंतएण गुबंगुलइयं गुलीभ पम्हलाणि भक्कुरुयभाणवत्थे पलिमंथाइसु तन्न भवे ॥ ३१ ॥ अथ द्वितीयपौरुषीकर्तव्यमाह—

॥ मूलम् ॥—बीयाइए पोरसीए । अणुपेहइ पुव्वगहियसुत्तमत्थं ॥ भिक्खाकालंमि मुणी । गुरुपुरउ करइ भवजेगं ॥ ३२ ॥ व्याख्या—द्वितीयायामर्धपौरुष्यां प्राप्तायां पूर्वगृहीतस्य श्रुतस्यार्थमनुप्रेक्षते स्मरति, ततो भिक्षाकाले प्राप्ते, भिक्षाकालश्चोत्सर्गतस्तृतीयपौरुषीरूपः स्थविरकल्पिकानां, यत्र लोको यदा भुंक्ते तत्र तदानीं वा एतेन अकालचर्या निषिद्धा, यदार्षं—अकाले चरसि भिक्खू ! कालं नो पडिलेहसि ॥ अप्पाणं च किलामेसि । स-

तत्तं परिणमइ चित्तंमि ॥ ५२ ॥ व्याख्या—ये जीवा एवंविधा जवंति, कीदृशा इत्याह—परीत्तः तथा जव्यत्वपरिपाकवशात्स्वल्पीभूतः संसारो येषां ते परीत्तसंसाराः, क्तांतस्य परतो निपातः प्राकृतत्वात्. तथा गुरुषु धर्मोपदेष्टृषु जक्ता विनीताः, तथा गुणेषु क्षांतिमार्दवार्जवादिषु आयुक्ता आदृताः, तेषामेव चित्ते जिनोक्तं तत्वं उपदेशरहस्यं परिणमति स्थिरीजवति. ॥ ५२ ॥ अथ व्यतिरेकमाह—

॥ मूलम् ॥—जे उण चरणे अलसा । कम्मवसा पवयणे अपत्तरसा ॥ तेसिं ऊसरवुठिव । निप्फला होइ जिणवाणी ॥ ५३ ॥ व्याख्या—जिनानां जगवतां वाणी तेषु श्रोतृषु ऊषरक्षेत्रेषु वृष्टिरिव निःफला जवति. तेषु केष्वित्याह—" जे उणेत्यादि " पुनः शब्दः पूर्वेज्यो व्यतिरेकज्ञापनार्थः. ये चरणे साधुश्राद्धक्रियायामलसाः प्रमादिनः, तथा कर्मणां प्रस्तावादशुजानां मिथ्यात्वाज्ञानादीनां वशा आयत्ताः, अत एव प्रवचने द्वादशांगीरूपे पीयूषरसप्रायेऽपि अप्राप्तरसा अलब्धस्वादाः, यो हि यत्रालब्धस्वादः स स्वाद्वन्यपि तत्र वस्तुनि न रज्यते, इति प्रतीतमेव. ॥ ५४ ॥ यत एवं ततः—

॥ मूलम् ॥—निच्चमिमे उवएसा । सुपुरिसपरिस्साइ च्चिअ धरणिज्जा ॥ मा निवडंतु कुपत्ते ॥ कयावि दुद्धंव सोवीरे ॥ ५५ ॥ व्याख्या—इमे प्रागुक्ता उपदेशा विनयविवेकवैराग्यादिगुणग्रामाभिरामतया सुष्टु शोभनाः पुरुषाः सुपुरुषाः, तेषां परिषद् घटा तस्या एव धरणीयाः संग्रहणोचिताः. मा कदापि सौवीरे दुग्धमिव कुपात्रे तिंतिणिकत्वादिदोषदुष्टे निपतंतु. यथा हि स्निग्धमधुरमपि दुग्धं सौवीरे कांजिके पतितमात्रमेव स्निग्धत्वमधुरत्वादिस्वस्वरूपापाङ्क्ष्यति, दधिघृताद्युत्तरकरणस्य चायोग्यीभवति, तथा सरसा अपि गुरूपदेशाः कुपात्रे निपतितमात्रा एवास्मरणादिना विनश्यंति, सम्यक्त्वदेशविरत्यादिस्वकार्यस्यायोग्यीभवंति. यदाह—आमे घडे निहित्तं । जहा जलं तं घडं विणासेइ ॥ इय सिद्धंतरहस्सं । अप्पाहारं विणासेइ ॥ १ ॥ ततोऽमी सुपुरुषपरिषदैव धार्याः, यथा न लभंते कदाचिदपि दुर्जनसंकटमिति गाथार्थः. ॥ ५५ ॥ अथ सहृदयहृदयं प्राप्तानामेषां फलातिशयमभिलष्यन्निदमाह—

॥ मूलम् ॥–एसा उवएसाली । सालीव विबुहहिययछोणेसु ॥ सुहभावसलिलसित्ता ।

फलेउ मणवंछियफलेण ॥ ५६ ॥ व्याख्या—एषा प्राग्निर्दिष्टा उपदेशाली उपदेशश्रेणिरुज्ज्वलत्वान्मंगल्यत्वाच्च शालिरिव विबुधानां विदुषां हृदयान्येव सुसंवृतत्वाद्विस्तारहेतुत्वाच्च स्थानानि केदारभूमयस्तेषु निहिता, ततः शुभो भावो मनःपरिणामः, स एव निर्मलत्वात् सलिलं तेन सिक्ता सती मनोवांछितफलेन ऐहिकपारत्रिकसुखप्राप्तिलक्षणेन फलतु. शालिर्हि केदारेषूप्तो जलेन सिक्तः कर्षुकमनोवांछितेन फलेन फलतीत्युपमार्थः सुबोधः. ॥५६॥ अथ प्रकरणकारो भंग्यंतरेण निजाभिधानमभिदधानः स्वस्य गुंफश्रमस्याफलतादोषं परिहरन्नाह—

॥ मूलम् ॥—कुंजरनयरविसेसा—हवसरसपसूणवरिसमज्झाए ॥ सरिसखरनामेणं । रइयमियं सपरबोहट्ठा ॥ ५७ ॥ व्याख्या—कुंजर नयर विसेस आहव सरस पसुण वरिस इत्येते शब्दाः प्राकृतरूपा एव समश्रेण्या उत्तराधर्येण संस्थाप्यंते, ततश्च एषां ये मध्यवर्णा भवंति, तत्सदृशाक्षरं प्राकृतभाषया नाम यस्य, तेन रचितं गुंफितमिदं प्रकरणं, किमर्थं? स्वपरबोधार्थं, स्व आत्मा, परे स्वव्यतिरिक्ताः साधुश्रावकास्तेषां बोधः स्वस्वाचारकौशलं, तदर्थं. ॥ ५७ ॥ अथास्य सुवर्णार्थसंबंधबंधुरस्य निरस्तसमस्तदौर्गत्यक्लेशस्य परमनिधानदे-

श्यस्य उपदेशचिंतामणिप्रकरणस्यायतौ स्थिरावस्थायित्वमाशंसुरिदमाह—

॥ मूलम् ॥—जाव सिरिवीरतित्थं । ताव इमा पंक्तियाण हिययंमि ॥ तह रयणा रयणावलि—सरिसा सिरिसाहणी होउ ॥ ५७ ॥ व्याख्या—यावदिह श्रीवीरस्य वर्धमानस्वामिनः श्रेयःश्रेणिविश्राणनसमर्थं तीर्थं शासनं विजयते, तावदियं मम रचना धर्माधिकारक्रमोपन्यासरूपा पंक्तितानां धीमतां हृदयेंतःकरणे स्थिता सती श्रियो वांछिताः संपदः साध्यंतेऽनयेति श्रीसाधनी संपत्संपादयित्री जवतु. कथंभूता रचना? सुसंहतत्वेन सद्गुणत्वेन निर्मलत्वेन च रत्नावलीसदृशी. रत्नावली हि हृदये वक्षसि धृता श्रियं सौजाग्यशोजां साधयतीति. ॥ ५७ ॥

अथ ग्रंथकारप्रशस्तिः—वंशे वीरविज्ञोरभूदिति वहन् वीरत्वमत्यूर्जितं । मिथ्यात्वादिविपक्षवारणविधौ धर्मोद्यमे चोत्तमे ॥ जातः पूर्वमिहार्यरक्षितगुरुश्चक्रेश्वरीदेवतां । साक्षात्कृत्य तपोजिरंचलगणं विस्तारयन् भूतले ॥ १ ॥ मौलिं धुनातिस्म विलोक्य यस्य । निःसंगतां विस्मितचित्तवृत्तिः ॥ श्रीसिद्धराजः स्वसमाजमध्ये । सोऽभूत्ततः श्रीजयसिंहसूरिः ॥ २ ॥

तत्पट्टपंकेरुहराजहंसः । सदा सदाचारकृतप्रशंसः ॥ गुरुर्निरस्तान्यमतप्रघोषः । श्रीधर्मघोषः स्वगणं पुपोष ॥ ३ ॥ येनाज्ञानतमोघ्नवाक्यकिरणैर्दूरागतश्रावक-स्वांतांभोरुहतश्चतुर्भिरधिकाशीतिः सुबद्धा अपि ॥ रोलंबा इव दूरिताः प्रथमकालोकेऽप्यहो संशयाः । श्रीमानेष महेंद्रसिंहसुगुरुर्भ्रेजे ततो भानुवत् ॥ ४ ॥ सिंहप्रभो गुरुरथ प्रथितस्ततोऽपि । रेजे जगत्यजितसिंहगुरुर्गुणाब्धिः ॥ पापद्विपक्षपणसिंहसमानशक्ति-र्देवेन्द्रसिंहगुरुरभ्युदयाय तस्मात् ॥ ५ ॥ भावारिनिष्कृपतपःकरवालशाली । धर्मप्रभः सुगुरुराज इतो रराज ॥ पीयूषबिंदुसहशाक्षरवाग्विलासः । श्रीसूरिसिंहतिलकश्च ततः प्रतीतः ॥ ६ ॥ तत्पट्टनंदनवन-कल्पद्रुमसमश्रियः ॥ जयंति सांप्रतं श्रीम-न्महेन्द्रप्रभसूरयः ॥ ७ ॥ यत्पाणिमाहुः कृतिनः श्रियश्च । गिरश्च मैत्री घटनैकतीर्थं ॥ संपर्कतस्तस्य जनो विनीतः । श्रीमांश्च धीमांश्च किमन्यथा स्यात् ॥ ८ ॥ येषां कीर्तिभरे भरेण धवलीकर्तुं जगत्प्रोद्यते । नाभूरकोऽपि स यो ददाति तमसस्त्रस्तस्य शश्वत्पदं ॥ भ्रमाशस्य च तस्य निर्जितचरैर्दुर्वादिवृंदैः स्फुरत्-कारुण्यैरिव वासभूमिरचला स्वीये सुखेऽदीयत ॥ ९ ॥ तेषां शिष्याः श्रीम-न्मुनिशेखरसूरयो नयोपेताः ॥

श्रीजयशेखरसूरिः । श्रीसूरिमेरुतुंगश्च ॥ १० ॥ एतेषु शिष्यः खलु मध्यमोऽहं । मोहं कु-
बोधप्रभवं विहाय ॥ गुरूपदेशादुपदेशचिंता-मणिश्रुतं सूत्रतया व्यगुंफं ॥ ११ ॥ व्यधां च
तस्य स्वयमव्यलीकां । टीकां कथासारविचारहृद्यां ॥ दंतायुधांभोनिधिचंद्रसंख्ये ( १४३६ ) ।
वर्षे पुरे श्रीनृसमुद्रनाम्नि ॥ १२ ॥ अनुजश्च सतीर्थ्यश्चा-स्माकं टीकामिमां मुदा ॥ लिलेख
प्रथमादर्शे । मानतुंगगणिर्गुणी ॥ १३ ॥ प्रत्यक्षरं निरूप्यास्यां । ग्रंथमानं विनिश्चितं ॥ सह-
स्रा द्वादश श्लोका-श्चतुःषष्ट्यधिका इति ॥ १४ ॥ कालोऽसौ कलिरुत्कटः किल पटुप्रज्ञो-
ज्झितोऽयं जनः । श्रेयःकार्यमवार्यविघ्नविवशं विद्वत्सभा दुर्लभा ॥ एवं सत्यपि सिद्ध्यतिस्म
यदयं गुंफप्रयासो मम । श्रीमद्देवगुरुप्रसादमहिमा मन्ये तदत्यद्भुतः ॥ १५ ॥ वक्तुः कोऽपि
विशेष एष महिमा जैनागमस्योक्तयः । श्रूयंते बहुशः श्रुता अपि जनैरुत्कैरपूर्वा इव ॥ गो-
धूमाः खलु ते तदेव च घृतं सैवेह खंडावली । संस्कर्तुः कलयाश्चतोऽभिनवतां किंत्वत्र धत्ते
रसः ॥ १६ ॥ अपार्थमुत्सूत्रमपप्रयोगं । मया यदासूत्रितमत्र किंचित् ॥ परोपकारैकरसैरखि-
न्नै-स्तच्छोध्यमेवाशु बुधैः प्रसद्य ॥ १७ ॥ उन्मीलन्नीलचूलः प्रवरकरलुठत्कंठिकः स्वर्णकांति-

र्नानारत्नोपमानोरुगणकटिगुणः प्रोल्लसत्कंदरास्यः ॥ यावन्मेरुः कुमारो वसति वसुमतीमातुरंके सलीलं । तावद्वृत्तिः शुभेयं जगति विजयतां वाच्यमाना मुनींद्रैः ॥ १७ ॥ इति श्रीमदंचलगच्छाधीश्वरमहाकविश्रीजयशेखरसूरिभिर्विरचितायां श्रीमदुपदेशचिंतामणिटीकायां चतुर्थो भागः समाप्तः ॥ तत्समाप्तौ च समाप्तोऽयं ग्रंथो गुरुश्रीमच्चारित्रविजयसुप्रसादात् ॥

आ महान् ग्रंथ छापी प्रसिद्ध करवामाटे तेनी लखेली प्रति आदिक मेळवी आपवामां वर्तमानकाळे विचरता, तथा श्रीमदंचलगच्छनो उद्योत करनारा त्यागी वैराग्यवान् महासंवेगी मुनिमहाराज श्रीगौतमसागरजी महाराज तथा तेमना प्रशिष्य श्रीधर्मसागरजी महाराजे घणी सहाय आपेली छे, अने तेथी तेमनी सहायथी स्वपरना श्रेयमाटे आ ग्रंथ श्रीजामनगरनिवासी पंडित श्रावक हीरालाल हंसराजे पोताना श्री जैनभास्करोदय छापखानामां छापी प्रसिद्ध कर्यो छे. ॥ श्रीरस्तु ॥



॥ इति श्रीउपदेशचिंतामणिः समाप्ता ॥